परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलित-सकलक्लेशं ज्ञेयं शान्तं स्व-संवेद्यम् ॥ ४९ ॥
तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन् ।
उत्सन्न-कर्मबन्धो ब्रह्मत्वमिहैव चाप्नोति ॥ ५० ॥
रागद्वेषविमुक्ताः सत्याचारा मृषारहिताः ।
सर्वत्र निर्विशेषा भवन्ति चिद्ब्रह्मसंस्पर्शात् ॥ ५१ ॥

---

तदेव विशिनष्टि, परमेति ।—परमानन्दे एव एकः केवलः रसः अनुरागो यस्य तत् आनन्दघनं नित्यानन्दमयमित्यर्थः, परमम् अनादि ज्योतिःस्वभावं स्वप्रकाशस्वरूपम् अविकल्पं नास्ति विकल्पः इदं वा इदं वा इत्यादिरूपः वितर्कः यस्मिन् तत् ज्ञातृज्ञेयादिविभागशून्यं विशेष्यविशेषणसम्बन्धरहितञ्च ब्रह्मात्मैकात्मविषयकमखण्डाकारकमेकविषयकज्ञानस्वरूपं, विगलितः खण्डितः सकलः क्लेशः यस्मिन् तत्, यस्मिन् प्राप्ते सर्वदुःखविनिवृत्तिः इत्यर्थः, ज्ञेयं ज्ञानगम्यं शान्तं शमगुणयुक्तं स्वसंवेद्यं स्वस्मिन् आत्मनि एव संवेद्यम् अनुभवनीयम् । एवम्भूतं परं ज्योतिरिति पूर्वेण सम्बन्धः ॥ ४९ ॥

इहैव मुक्तिभाक्त्वं प्रदर्शयति, तस्मिन्निति ।—तस्मिन् तथाभूते ज्योतिर्मये ब्रह्मणि मनः चित्तम् आधाय निविश्य जगत् इदं विश्वं स्फुरत् प्रकाशमानम् अखिलं समग्रं वस्तु यत्र तत् तथाभूतं, चिन्मयं ज्ञानस्वरूपं ब्रह्ममयं पश्यन् "सत्यं ज्ञानमानन्दं ब्रह्म" "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतेः ; उत्सन्नः विच्छिन्नः कर्मबन्धः शुभाशुभकर्मजनितबन्धनं यस्य तथाभूतः विमुक्तकर्मपाशः सन् इहैव अस्मिन्नेव संसारे, स्थितः इति शेषः, ब्रह्मत्वं ब्रह्मस्वरूपं जीवन्मुक्तत्वम् आप्नोति लभते ॥ ५० ॥

लब्धब्रह्मभावस्य समदर्शित्वमाह, रागेति ।—चिद्ब्रह्मसंस्पर्शात् ज्ञानस्वरूपब्रह्मसायुज्यलाभात् रागद्वेषाभ्याम् आसक्त्यनासक्तिभ्यां विमुक्ताः सत्याचाराः सद्भ्यः हितमिति सत्यं तदाचाराः साधुविहितानुष्ठानतत्पराः मृषारहिताः मिथ्याविवर्जिताः सन्तः सर्वत्र सर्वेष्वेव वस्तुषु निर्विशेषाः भेदज्ञानविरहिताः भवन्ति । यदुक्तं गीतायां—"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥" इति । सर्वभूतानि आत्मवत् पश्यतीत्यर्थः ॥ ५१ ॥

तिष्ठन्त्यणिमादियुता विलसद्देहाः सदोदितानन्दाः ।
ब्रह्मस्वभावममृतं सम्प्राप्ताश्चैव कृतकृत्याः ॥ ५२ ॥
आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ? ॥ ५३ ॥
प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम् ।
अदृष्टविग्रहं देवं कथं ज्ञास्यति चिन्मयम् ? ॥ ५४ ॥

---

ब्रह्मज्ञानिन औत्कर्ष्यमाह, तिष्ठन्तीति ।—अमृतं सुधास्वरूपं परब्रह्मरूपं वा जन्ममरणादेरविषयं वा ब्रह्मस्वभावं ब्रह्मत्वं जीवन्मुक्तत्वमिति यावत्, सम्प्राप्ताः आश्रिताः, जीवाः इति शेषः, अणिमादिभिः "अणिमा लघिमा प्राप्तिः प्राकाम्य महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥" इत्यष्टैश्वर्य्यैः युताः उपेताः विलसद्देहाः दीप्तशरीराः ज्योतिर्मयदेहाः इत्यर्थः, सदा नित्यम् उदितः प्रकाशितः आनन्दः ब्रह्मोपलब्धिजनितसुखं येषां ते तथाभूताः नित्यानन्दमयाः, अत एव कृतं सम्पन्नं कृत्यम् अनुष्ठेयकार्य्यं येषां ते तथाभूताश्च मोक्षलाभात् अवसितसर्वप्रयोजनाश्च सन्तः तिष्ठन्ति । जीवन्मुक्तैर्न किमपि अनासादितमिति भावः ॥ ५२ ॥

स्थिरशरीरस्य सर्वसम्पन्मूलकत्वमाह, आयतनमिति ।—अत्र यदिति पदमध्याहार्य्यम् । यत् खलु विद्यानां श्रुतिस्मृत्यादिषु ज्ञानानां तत्त्वसाक्षात्कारहेतुभूतानां, यदुक्तं श्रुतौ—"विद्ययाऽमृतमश्नुते" इति । आयतनम् अधिष्ठानं तथा धर्मार्थकाममोक्षाणां मूलं चतुर्वर्गलाभस्य हेतुभूतं तत् तादृशम् एकं मुख्यम् अजरामरं जरामृत्युविवर्ज्जितं शरीरं विहाय त्यक्त्वा अन्यत् अपरं परम् उत्कृष्टं श्रेयः शिवं मङ्गलायतनमित्यर्थः, किम् ? अस्तीति शेषः, न किमपीत्यर्थः । अजरामरशरीरेण सुबहुकालं ध्यानादिसाधनद्वारा सर्वश्रेयोनिदानभूतं तत्त्वसाक्षात्कारं चतुर्वर्गफलञ्च यथा लभते, अल्पस्थायिशरीरेण तु न तथा इति भावः ॥ ५३ ॥

रसमाहात्म्याज्ञाने दोषमाह, प्रत्यक्षेणेति ।—यः प्रत्यक्षेण प्रमाणेन देहस्थैर्य्यादिकारणरूपाक्षिगोचरीभूतप्रमाणेन, सूतकं पारदं न जानाति, स न दृष्टं प्रत्यक्षीकृतं विग्रहं शरीरं यस्य तथाविधं स्थूलदृष्टेरविषयीभूतं निराकारं वा चिन्मयं ज्ञानस्वरूपं देवं ब्रह्म कथं ज्ञास्यति ? प्रत्यक्षप्रमाणसिद्धवस्तुज्ञानासमर्थस्य अप्रत्यक्षानुमेयब्रह्मज्ञानमसम्भवमेवेति भावः ॥ ५४ ॥

यज्जरया जर्जरितं कास-श्वासादिदुःखविवशञ्च ।
योग्यं तन्न समाधौ प्रतिहत-बुद्धीन्द्रियप्रसरम् ॥ ५५ ॥
बालः षोड़शवर्षो विषयरसास्वाद-लम्पटः परतः ।
यातविवेको वृद्धो मर्त्त्यः कथमाप्नुयान्मुक्तिम् ? ॥ ५६ ॥

---

ब्रह्मज्ञानलाभानुपयोगिदेहं विवृणोति, यदिति ।—यत्, शरीरमिति शेषः, जरया जर्जरितं जीर्णं कासश्वासादिदुःखेन तत्तद्व्याधिजनितसुखाभावेन, अथवा—दुःखयतीति दुःखं व्याधिः, कासश्वासादिव्याधिना विवशम् अस्वाधीनञ्च विकलमिति यावत्, अत एव प्रतिहतः निरुद्धः बुद्धीन्द्रियाणां चक्षुरादीनां ज्ञानेन्द्रियाणां प्रसरः वेगः स्वस्वविषयाभिगमनशक्तिः यस्मिन् तादृशं तत् शरीरं समाधौ परमात्मनि एकाग्रतया चित्तसन्निवेशरूपध्याने योग्यम् उपयुक्तं न, भवतीति शेषः, जराव्याधिक्लिष्टे देहे परमात्मनि एकाग्रतया मनःसमाधानासमर्थत्वादिति तात्पर्य्यम् ॥ ५५ ॥

दीर्घजीवनं विना मुक्तिलाभस्य असम्भावनामाह, बाल इति ।—षोडशवर्षः षोडशवर्षीयः षोडशवर्षं यावत् इत्यर्थः, मर्त्त्यः मानवः बालः शिशुः, बालावस्था मोक्षोपयोगिसाधनानर्हा इति भावः । परतः षोडशादूर्द्धं सप्ततिं यावत् मध्यवयाः इत्यर्थः, विषयाः स्रक्चन्दनवनितादयः एव रसाः आस्वाद्याः उपभोग्यवस्तूनीत्यर्थः, तेषाम् आस्वादे उपभोगे रसानुभवे इत्यर्थः, लम्पटः आसक्तः विषयासक्तचित्ते तत्त्वज्ञानोदयानवकाशत्वात् मध्यावस्थाऽपि न मोक्षार्हा, यदुक्तं श्रीमद्भागवते—"विषयासक्तचित्तानां कृष्णावेशः सुदुस्तरः । वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात् ?" ॥ इति । अत्र परतः-शब्दः उभयत्रापि उन्नेयः ; परतः सप्ततिवर्षादूर्द्धं वृद्धः स्थविरः यातः अपगतः विवेकः याथार्थ्येन वस्तुस्वरूपावधारणसामर्थ्यं यस्य तथाभूतः, वृद्धस्य जराव्याधिजीर्णदेहत्वात् ज्ञानेन्द्रियाणां शक्तिवैकल्याच्च साऽवस्थाऽपि न मुक्तिसाधनार्हा इति भावः ; यद्वा—यातः प्राप्तः विवेकः यस्य स तथाभूतः, यदा विवेकवान् तदा वृद्धः, वृद्धस्य आयुषोऽल्पावशेषत्वात् जरादिजीर्णत्वात् इन्द्रियापाटवाच्च साऽप्यवस्था तदनर्हा इति भावः ; "जातविवेकः" इति पाठे तु—जातः उत्पन्नः सञ्जातविवेकः । कथं केन प्रकारेण मुक्तिम् आप्नुयात् प्राप्नुयात् ? न केनापीत्यर्थः । षोड़शवर्षादीनां बालादित्वे प्रमाणमाह ऋषिः,—"आ षोड़शाद्भवेद्बालः पञ्चविंशो युवा नरः । मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते ॥" इति । बाल्ययौवनयोश्चित्तविक्षेपकरत्वात् न मुक्तिसाधनयोग्यता, वार्द्धक्यस्य

अस्मिन्नेव शरीरे येषां परमात्मनो न संवेदः।
देहत्यागादूर्द्ध्वं तेषां तद्ब्रह्म दूरतरम्॥ ५७॥
ब्रह्मादयो यतन्ते तस्मिन् दिव्यां तनुं समाश्रित्य।
जीवन्मुक्तास्ताश्चान्ये कल्पान्तस्थायिनो मुनयः॥ ५८॥
तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम्।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्॥ ५९॥

तु चित्तस्थैर्यकरत्वेन मुक्तिसाधनाङ्गत्वेऽपि जराद्याक्रमणेन मनःक्षोभात् न मोक्षसाधनोपयोगित्वम्, अतो यथा जरा नाक्रामेत् वार्द्धक्यागमनात् प्रागेव तथा यतितव्यमित्याशयः॥ ५६॥

तत्त्वज्ञानमेव मुक्तिहारमित्याशयेनाह, अस्मिन्निति।—अस्मिन्नेव शरीरे परिदृश्यमानस्थूलशरीरे एव येषां परमात्मनः "आत्माऽस्य जगतो यस्मात् सर्वोत्कर्षाश्रयो मतः। परमात्मा परं ब्रह्म तेन वेदे प्रकीर्त्तितः॥" इत्युक्तस्वरूपस्य परब्रह्मणः संवेदः सम्यक् ज्ञानं न, भवेदिति शेषः, तेषाम् अनात्मज्ञानां देहत्यागादूर्द्ध्वं मरणानन्तरं तत् ब्रह्म दूरतरम् अतिशयेन दूरे वर्त्तते, वर्त्तमानदेहे साधनादिना ब्रह्मज्ञानानुदये मरणान्तरं साधनानुपयोगिदेहे तत्प्राप्तिसम्भावना सुदूरपराहता एव इत्यर्थः॥ ५७॥

अस्तु, ब्रह्माप्राप्तौ का क्षतिः? इत्याशङ्क्याह, ब्रह्मादय इति।—ब्रह्मादयः तथा अन्ये च कल्पान्तस्थायिनः आ प्रलयवर्त्तिनः जीवन्मुक्ताः कृतात्मसाक्षात्काराः प्रारब्धकर्मक्षयपर्य्यन्तं सुषुप्तिवत् व्यवहर्त्तारः आत्मज्ञाः इति यावत्, मुनयः दिव्यां ज्योतिष्मतीं तनुं देहं समाश्रित्य अवलम्ब्य धृत्वा इत्यर्थः, रससेवनेन इति भावः, तस्मिन् ब्रह्मणि यतन्ते तद्ब्रह्मलाभार्थम् आयस्यन्ते इत्यर्थः। आत्मज्ञा ब्रह्मादयोऽपि यस्य महिमानं ज्ञातुमशक्नुवन्तः रससेवनेन सुचिरमायुर्लब्ध्वा यल्लाभार्थं यतन्ते तज्ज्ञानलाभार्थं मानवैरवश्यमेव प्रयत्नो विधेयः इति तात्पर्य्यम्॥ ५८॥

फलितमाह, तस्मादिति।—तस्मात् ब्रह्मादीनामपि आयासलभ्यत्वात् जीवन्मुक्तिं कर्त्तृत्वभोक्तृत्वादिबन्धात् जीवत एव बन्धनिवृत्तिं समीहमानेन अभिलषता तल्लाभार्थं चेष्टमानेनेत्यर्थः, जीवेनेति शेषः, योगिना सुखदुःखादिषु सर्वभूतेषु च समदर्शिना सता प्रथमम् आदावेव हरगौर्य्योः शिवयोः ये सृष्टी सृज्येते त्यज्येते इति सृष्टी शुक्रशोणिते इत्यर्थः, यद्वा—सृज्यते निर्मीयते उत्पद्यते

अथ रसोत्पत्तिवर्णनम् ।—

शैलेऽस्मिन् शिवयोः प्रीत्या परस्परजिगीषया ।
सम्प्रवृत्ते च सम्भोगे त्रिलोकीक्षोभकारिणि ॥ ६० ॥
विनिवारयितुं वह्निः सम्भोगं प्रेषितः सुरैः ।
काङ्क्षमाणैस्तयोः पुत्रं तारकासुरमारकम् ॥ ६१ ॥
कपोतरूपिणं प्राप्तं हिमवत्कन्दरेऽनलम् ।
अपक्षिभावसङ्क्षुब्धं स्मरलीलाविलोकिनम् ॥ ६२ ॥

इत्यर्थः, आभ्यामिति व्युत्पत्त्या सृष्टिशब्देन जीवसृष्टिकारणं शुक्रशोणितमुच्यते, तच्च रसगन्धकरूपम्; यदुक्तं—"पारदं शिववीर्यञ्च दुर्गाबीजञ्च गन्धकम्" इति । तयोः संयोगात् मूर्च्छनात् सम्मेलनादित्यर्थः, रसगन्धकयोर्मेलनजनितौषधविशेषभक्षणादिति भावः, दिव्या ज्योतिर्मयी अजरामररूपा तनुः देहः विधेया करणीया । आदौ रसादिसेवनेन देहस्थैर्य्यं विधाय पश्चात् मुक्तिलाभार्थं यतितव्यमिति भावः ॥ ५९ ॥

रसोत्पत्तिं वर्णयितुं हरगौरीसम्भोगं प्रदर्शयति पञ्चभिः श्लोकैः, शैले इत्यादिभिः ।—अस्मिन् शैले हिमाचले शिवयोः हरपार्वत्योः प्रीत्या प्रीतिवशेन, न तु विद्वेषेण इति भावः, परस्परजिगीषया अन्योऽन्यं जेतुमिच्छया त्रिलोकीक्षोभकारिणि त्रिलोक्याः त्रिभुवनस्य क्षोभकारिणि चाञ्चल्यविधायिनि सम्भोगे निधुवनव्यापारे सम्प्रवृत्ते प्रारब्धे सति, तारकासुरमारकं तदाख्यदैत्यविनाशनं तयोः उमामहेश्वरयोः पुत्रं काङ्क्षमाणैः अभिलषद्भिः सुरैः देवैः सम्भोगं विनिवारयितुं प्रतिषेधयितुं, वह्निः प्रेषितः प्रेरितः । पुरा तारकासुरपीड्यमाना देवाः तद्विनाशकं शिवयोः पुत्रमेकं काङ्क्षन्तः आतिष्ठन्; ततश्च परस्परजिगीषाप्रवृत्तयोस्तयोः सम्भोगसमाप्तिविलम्बहेतुकपुत्रोत्पत्तिविलम्बमाशङ्कमानाः सन्तः, सत्वरं सम्भोगसमापनमभिसन्धाय हुताशनं प्रेषितवन्तः इत्यर्थः ॥ ६०।६१ ॥

कपोतेति ।—कपोतरूपिणं पारावतरूपधारिणं हिमवत्कन्दरे हिमाचलगुहायां प्राप्तं समागतम् अपक्षिभावसङ्क्षुब्धं न पक्षिभावेन तिर्य्यग्योनिजस्वभावत्वेन सङ्क्षुब्धः सङ्क्षोभः सङ्कोचः यस्य तम्; संपूर्व-क्षुभधातोर्भावविहित-"त"-प्रत्ययेन निपातने सिद्धत्वात् सङ्क्षुब्धशब्देन सङ्क्षोभः गम्यते; यद्वा—अपक्षिभावेन पक्षिभावादन्यत्वेन देवभावत्वेन सङ्क्षुब्धं स्मरव्यापारं दृष्ट्वा सङ्कुचितं सञ्जातचाञ्चल्यं वा

तं दृष्ट्वा लज्जितः शम्भुर्विरतः सुरतात्तदा ।
प्रच्युतश्चरमो धातुर्गृहीतः शूलपाणिना ॥ ६३ ॥
प्रक्षिप्तो वदने वह्नेर्गङ्गायामपि सोऽपतत् ।
वहिः क्षिप्तस्तया सोऽपि परिदन्दह्यमानया ॥ ६४ ॥
सञ्जातास्तन्मलान्नानाधातवः सिद्धिहेतवः ।
यावदग्निमुखाद्रेतो न्यपतद्भूरिसारतः ॥ ६५ ॥
शतयोजनगम्भीरान् कृत्वा कूपांस्तु पञ्च च ।
तदाप्रभृति कूपस्थं तद्रेतः पञ्चधाऽभवत् ॥ ६६ ॥

अथ रसस्य पञ्चविधत्वकथनम् ।—

रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा ।
इति पञ्चविधो जातः क्षेत्रभेदेन शम्भुजः ॥ ६७ ॥

स्मरलीलाविलोकिनं कामक्रीड़ादर्शिनं तम् अनलं दृष्ट्वा, शम्भुः लज्जितः सन् सुरतात् विरतः प्रतिनिवृत्तः अभूत् । तदा सुरतविरतिसमये प्रच्युतः क्षरितः चरमो धातुः रसादिसप्तधातुमध्ये अन्त्यधातुः शुक्रम् इति यावत्, शूलपाणिना शङ्करेण गृहीतः धृतः, ततः वह्नेः वदने प्रक्षिप्तः निक्षिप्तः अपि, शूलपाणिना इति शेषः, सः धातुः गङ्गायां गङ्गातीरे अपतत्, वह्निमुखाद्भ्रष्टः सन् इति भावः । तया गङ्गया अपि परि सर्वतोभावेन दन्दह्यमानया दाहेन पीड्यमानया सत्या, तस्य शिवतेजस्त्वात् ; सः वहिः तटदेशे इत्यर्थः, क्षिप्तः त्यक्तः ॥ ६२—६४ ॥

रसोत्पत्तिं तथा तस्य पञ्चधाभवने हेतुमाह, सञ्जाताः इति ।—तस्य रेतसः मलात् मलभागात् सिद्धिहेतवः ऐहस्थैर्यरूपसिद्धिप्रदाः नानाधातवः रसादयः सञ्जाताः उत्पन्नाः । रेतः शिववीर्य्यम् अग्निमुखात् यावत् यदैव न्यपतत् अभ्रश्यत् तदाप्रभृति तदारभ्य भूरिसारतः प्रभूतस्थिरांशत्वात् गुरुभारत्वादित्यर्थः, शत-योजनगम्भीरान् चतुःशतक्रोशगभीरान् पञ्च कूपान् कृत्वा तत् रेतः कूपस्थं पूर्वोक्तपञ्चकूपमध्ये अवस्थितं सत् पञ्चधा कूपपञ्चकेषु अवस्थानवशात् पञ्चप्रकारम् अभवत् । यथा किञ्चित् गुरुभारं वस्तु उच्चस्थलात् वेगेन पतत् भूमौ गाढ़लीनं सत् तिष्ठति, तथा अग्निमुखभ्रष्टं पञ्चधा विभक्तं रेतः गुरुत्वात् भूमौ पञ्च गभीरकूपान् कृत्वा तदान्तर्लीनमतिष्ठत् इत्यर्थः ॥ ६५।६६ ॥

रसभेदं विवृणोति, रसः इति ।—शम्भुजः शिवाङ्गभवः शिववीर्य्यमिति तात्पर्य्यं,

अथ रसादीनां लक्षणानि ।—

रसो रक्तो विनिर्मुक्तः सर्वदोषै रसायनः ।
सञ्जातास्त्रिदशास्तेन नीरुजा निर्जरामराः ॥ ६८ ॥
रसेन्द्रो दोषनिर्मुक्तः श्यावो रूक्षोऽतिनिर्मलः ।
रसायनोऽभवंस्तेन नागा मृत्युजरोज्झिताः ॥ ६९ ॥

---

जीवभेदेन अधिष्ठानभूमिगुणप्रभेदेन रसः रसेन्द्रः सूतः पारदः तथा मिश्रक इति पञ्चविधः पञ्चप्रकारः जातः ॥ ६७ ॥

तत्र आदौ रसस्य लक्षणं गुणांश्चाह, रसः इति ।—रसः पञ्चधा विभक्तस्य रेतसः रसनामको भेदः रक्तः रक्तवर्णः सर्वदोषैः नागवङ्गादिभिः नैसर्गिकदोषैः विनिर्मुक्तः विवर्ज्जितः तथा रसायनः रसानां प्रथमरसादिधातूनाम् अयनं प्राप्तिः यस्मात् सः तथाभूतः ; आद्यधातुत्वात् रसस्य प्राधान्येन तद्ग्रहणादेव रसायनशब्देन रक्तादीनामपि अयनं बोध्यम्। रसायनलक्षणं यथा चरकचिकित्सिते—"यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्।" अन्यत्र—"स्वस्थस्योजस्करं यत्तु तद्वृष्यं तद्रसायनम्" इति। तेन च दीर्घायुष्ट्वादिलाभः। अन्यदपि लक्षणं यथा वैद्यकसङ्ग्रहे द्वितीयाध्याये —"देहस्येन्द्रियदन्तानां दृढीकरणमेव च। वलीपलितखालित्यवर्जनेऽपि च या क्रिया। पूर्ववैद्यप्रणीतं हि तद्रसायनमुच्यते॥" इति। तत्फलं यथा सौश्रुतसूत्रे— "वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च" इति। तेन तद्रससेवनेन त्रिदशाः तिस्रः दशाः अवस्थाः बाल्यकैशोरयौवनरूपाः येषां ते तथाभूताः देवाः नीरुजाः व्याधिरहिताः तथा निर्जरामराः जरामृत्युविवर्ज्जिताः सञ्जाताः अभवन्नित्यर्थः। रससेवनेनैव देवाः त्रिदशनिर्ज्जरामरादिसंज्ञां लेभिरे इति तात्पर्य्यम् ॥ ६८ ॥

क्रमप्राप्तस्य रसेन्द्रस्य लक्षणादिकमाह, रसेन्द्र इति।—रसेन्द्रः पूर्ववत् रसेन्द्रनामको भेदः दोषनिर्मुक्तः नागवङ्गादिदोषविवर्ज्जितः श्यावः सद्गुणवर्णः श्याकवर्णं इति लोके, रूक्षः स्नेहविवर्ज्जितः अति अतिशयेन निर्मलः शुद्धः मालिन्यविवर्ज्जितः रसायनश्च। तेन रसेन्द्रसेवनेन नागाः नागवासुकितक्षककर्कोटकुलिकशङ्खपालकुलिकप्रभृतयः सर्पाः मृत्युजराभ्याम् उज्झिताः त्यक्ताः जरामृत्युपरिशून्या इत्यर्थः, अभवन्।" रससेवनेन इन्द्रादयो देवाः तथा रसेन्द्रसेवनेन वासुक्यादयो नागाः निर्जरामरा अभवन् इति फलितम् ॥ ६९ ॥

देवैर्नागैश्च तौ कूपौ पूरितौ मृद्भिरश्मभिः।
तदाप्रभृति लोकानां तौ जातावतिदुर्लभौ ॥ ७० ॥
ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतकः।
दशाष्टसंस्कृतैः सिद्धो देहं लोहं करोति सः ॥ ७१ ॥
अथान्यकूपजः सोऽपि चञ्चलः श्वेतवर्णवान्।
पारदो विविधैर्योगैः सर्वरोगहरः स हि ॥ ७२ ॥

रसरसेन्द्रयोर्दुष्प्राप्यतामाह, देवैरिति।—देवैः इन्द्रादिभिः नागैः वासुकी-प्रभृतिभिश्च तौ कूपौ रसरसेन्द्रपूर्णकूपौ मृद्भिः मृत्तिकाभिः तथा अश्मभिः प्रस्तरखण्डैः पूरितौ परिपूर्णौ कृतौ भूसमीकृतौ इत्यर्थः, मनुष्यकर्तृकग्रहणाशङ्कया इति भावः। तदाप्रभृति तौ रसरसेन्द्रौ लोकानां मर्त्त्यवासिनामित्यर्थः, अतिदुर्लभौ एकान्तदुष्प्रापौ जातौ। रसरसेन्द्रौ सुप्राप्यौ चेत् मानवास्तत्सेवनेन देवनागसदृशाः भविष्यन्तीत्याशङ्कया देवनागैः तत्कूपौ रुद्धौ इति भावः ॥ ७० ॥

पूर्वरीत्या सूतकस्य लक्षणं गुणांश्चाह, ईषदिति।—सूतकः पञ्चप्रकारस्य रसस्य सूतनामकभेदविशेषः ईषत् पीतः अल्पहरिद्राभः रूक्षाङ्गः निःस्नेहावयवः तथा दोषयुक्तश्च नागवङ्गादिदोषयुतः; रसदोषा यथा रसेन्द्रसारसङ्ग्रहे—"नागो वङ्गो मलो वह्नि-श्चाञ्चल्यञ्च विषं गिरिः। असह्याग्निर्महादोषा निसर्गाः पारदे स्थिताः॥" इति। सः इत्थम्भूतः सूतकः दशाष्टसंस्कृतैः स्वेदनाद्यष्टादशसंस्कारैः सिद्धः निष्पन्नः कर्मोपयोगि-गुणसम्पन्नः सन् इत्यर्थः; अष्टादशसंस्कारा यथा रसेन्द्रचिन्तामणौ—"स्वेदनमर्दन-मूर्च्छनोत्थापन-पातनबोधननियमन-दीपनानुवासनगगनादिग्रासप्रमाणचारणगर्भद्रुति-बाह्यद्रुतियोगजारणरञ्जनसारणक्रामणवेधभक्षणानीति।" यद्यपि स्वेदनादिभक्षणान्ते-रेतैरूनविंशतिसंस्कारा भवन्ति, तथाऽपि गर्भद्रुतिबाह्यद्रुत्योः द्रुतित्वसामान्यात् एकत्वं परिगणय्यात्र संस्काराणाम् अष्टादशविधत्वं निर्द्दिष्टम्। देहं लोहं लोहवत् स्थिर-मित्यर्थः, करोति स्वेदनादिकर्मसंशुद्धसूतसेवया देहः लोहवदक्षयो भवतीत्यर्थः ॥७१॥

क्रमप्राप्तपारदस्य लक्षणादिकमाह, अथेति।—अथशब्दोऽत्र सूचनार्थकः वाक्य-प्रारम्भे इत्यर्थः, अन्यकूपजः भेदभेदेन पञ्चधा विभक्तत्वात् कूपान्तरावस्थितः सः प्रभुक्तः पारदोऽपि पारदः पुनः चञ्चलः द्रवत्वादस्थिरः श्वेतवर्णवान् शुभ्रवर्णविशिष्टः। स हि पारदः विविधैः योगैः नानाविधौषधसंयोगैः अष्टादशसंस्काररूपोपायैर्वा सर्वरोगहरः निखिलव्याधिनाशनः, भवतीति शेषः ॥ ७२ ॥

मयूरचन्द्रिकाच्छाय: स रसो मिश्रको मत: ।
सोऽप्यष्टादशसंस्कार-युक्तश्चातीव सिद्धिद: ॥ ७३ ॥
त्रय: सूतादय: सूता: सर्वसिद्धिकरा अपि ।
निजकर्म-विनिर्माणै: शक्तिमन्तोऽतिमात्रया ॥ ७४ ॥
एतां रससमुत्पत्तिं यो जानाति स धार्मिक: ।
आयुरारोग्य-सन्तानं रससिद्धिञ्च विन्दति ॥ ७५ ॥

अथ रसादीनां निरुक्ति: ।—

रसनात् सर्वधातूनां रस इत्यभिधीयते ।
जरारुङ्मृत्युनाशाय रस्यते वा रसो मत: ॥ ७६ ॥

अन्त्यस्य मिश्रकस्य लक्षणं गुणांश्चाह, मयूरेति ।—मयूरस्य चन्द्रिका मेचक: पुच्छस्थनानावर्णविशिष्टचन्द्राकृतिपदार्थविशेष: सा इव छाया कान्ति: यस्य स: तथाभूत: स: पूर्वोक्त: रस: शिववीर्य्यं मिश्रक: मिश्रकनामा भेद: मत: कथित: इत्यर्थ:, सोऽपि अष्टादशसंस्कारयुक्त: पूर्वोक्ताष्टादशसंस्कारसंस्कृत: सन् अतीव सिद्धिद: देहस्थैर्य्यादिसिद्धिप्रद:, भवतीति शेष: ॥ ७३ ॥

सूतादीनां सिद्धिप्रदत्वमाह, त्रय: इति ।—सूतादय: त्रय: सूतपारदमिश्रकाख्या: त्रिविधा: सूता: रसा: अपि, ( यद्यपि सूतशब्द: वेवभेदेन पञ्चधा विभक्तस्य शिवरेतस: अन्यतमभेदविशेषार्थक:, तथाऽपि सर्वेषामेव तज्जातीयानां सामान्यत: देहस्थैर्य्यरूप-सिद्धिप्रसूत्वेन सूतसंज्ञा न विरुध्यते, यथा तृणशब्द: तृणविशेषे तृणजातौ च वर्त्तते तद्वदिहापि बोध्यम् ) निजकर्मविनिर्माणै: निजस्य स्वस्य यत् कर्म स्वेदनाद्यष्टादश-संस्काररूपं तस्य विनिर्माणै: करणसौष्ठवैरित्यर्थ:, अतिमात्रया शक्तिमन्त: प्रभूतवीर्य्य-शालिन: सन्त:, सर्वसिद्धिकरा: सर्वविधसिद्धिप्रदा:, भवन्तीति शेष: । ते स्वेदनादि-कर्मणा एव अधिककार्मुका: सिद्धिप्रदाश्च स्युरित्यर्थ: ॥ ७४ ॥

रसोत्पत्तिज्ञाने फलमाह, एतामिति ।—य: जन: एताम् उक्तरूपां रससमुत्-पत्तिं रसप्रादुर्भावं जानाति, स: जन: धार्मिक: आयुष: आरोग्यस्य च सन्तानं विस्तारं दीर्घायु: दीर्घारोग्यञ्च तथा रससिद्धिं रसशोधनादिविषये साफल्यञ्च विन्दति लभते ॥ ७५ ॥

रसस्य निरुक्तिमाह, रसनादिति ।—सर्वेषां धातूनां स्वर्णादीनां रसनात् द्रवीकरणात् वीर्य्याधानात् वा, "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस:"

रसोपरसराजत्वाद्रसेन्द्र इति कीर्त्तितः।
देहलोहमयीं सिद्धिं सूते सूतस्ततः स्मृतः॥ ७७॥
रोग-पङ्काब्धिमग्नानां पारदानाच्च पारदः।
सर्वधातुगतं तेजो मिश्रितं यत्र तिष्ठति।
तस्मात् स मिश्रकः प्रोक्तो नानारूपफलप्रदः॥ ७८॥

इत्यमरोक्तेः रसयति द्रवीकरोति वीर्य्यमापादयति वा इति व्युत्पत्त्या रस इति अभिधीयते; अथवा—जराव्यमृत्युनाशाय जरारोगमरणनिवारणाय रस्यते समर्थेन भुज्यते इति हेतोः रसः मतः कथितः। रसशब्दस्य निरुक्तिरन्यत्रापि उक्ता, यथा रसेश्वरदर्शने—"मम देहरसो यस्माद्रसस्तेनायमुच्यते" इति॥ ७६॥

रसेन्द्रसूतयोः निरुक्तिमाह, रसेति।—रसेषु अभ्रादिषु अष्टमहारसेषु तथा उपरसेषु गन्धादिषु अष्टसु च राजते इति तथाभूतत्वात् श्रेष्ठत्वात् रसेन्द्रः रसश्रेष्ठः इति कीर्त्तितः कथितः। रसेन्द्रस्य कर्म यथा रसेश्वरदर्शने—"अजरामरीकरणसमर्थश्च रसेन्द्र एव तदाह—एकोऽसौ रसराजः शरीरमजरामरं कुरुते" इति। • अभ्रादीनां महारसत्वं गन्धादीनामुपरसत्वञ्च इहैवाग्रे वक्ष्यति। देहस्य लोहमयीं लोहवत् दृढीकरणरूपां सिद्धिं साफल्यं सूते जनयति यतः ततः सूतः स्मृतः कथितः। तथा च रसेश्वरदर्शने—"लोहवेधस्त्वया देव! यद्दत्तं परमीश्वरः!। तद्देहवेधमाचक्ष्व येन स्यात् खेचरी गतिः॥ यथा लोहे तथा देहे कर्त्तव्यः सूतकः सता। समानं कुरुते देवि! प्रत्ययं देहलोहयोः। पूर्वं लोहे परीक्षेत पश्चाद्देहे प्रयोजयेत्॥" इति॥ ७७॥

पारदमिश्रकयोर्निरुक्तिमाह, रोगेति।—रोगाः एव पङ्काब्धयः कर्दमसागराः दुस्तरणीयत्वात्, तत्र मग्नानां दुस्तरव्याधिसागरे निमज्जितानां लोकानां पारदानात् व्याध्युत्तरणरूपकूलाश्रयप्रदायकत्वात् पारदः, कीर्त्तित इति शेषः। रसेश्वरदर्शनेऽपि उक्तं यथा—"रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन, तदुक्तं—'संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः। पारदो गदितो यस्मात् परार्थं साधकोत्तमैः। सुप्तोऽयं मत्समो देवि! मम प्रत्यङ्गसम्भवः॥' इति।" यत्र यस्मिन् रसे सर्वधातुगतं सर्वधातुस्थितं तेजः वीर्य्यं मिश्रितं मिलितम् एकीभूतं सदिति यावत्, तिष्ठति, नानारूपफलप्रदः बहुविधरोगनाशनः सः तस्मात् सर्वधातवतेजःसम्मेलनात् मिश्रकः मिश्रीभूतः प्रोक्तः सर्वेषां धातूनां सारः मिश्रके तिष्ठतीत्यर्थः॥ ७८॥

एवम्भूतस्य सूतस्य मर्त्यमृत्युगदच्छिदः ।
प्रभावान्मानुषा जाता देवतुल्यबलायुषः ॥ ७९ ॥

अथ रससंस्कारकारणम् ।—

तान् दृष्ट्वाऽभ्यर्थितैः रुद्रैः शक्रेण तदनन्तरम् ।
दोषैश्च कञ्चुकाभिश्च रसराजो नियोजितः ॥
तदाप्रभृति सूतोऽसौ नैव सिध्यत्यसंस्कृतः ॥ ८० ॥
जलगो जलरूपेण त्वरितो हंसगो भवेत् ।
मलगो मलरूपेण सधूमो धूमगो भवेत् ॥ ८१ ॥
अन्या जीवगतिर्दैवी जीवोऽण्डादिव निष्क्रमेत् ।
स तांश्च जीवयेज्जीवांस्तेन जीवो रसः स्मृतः ॥ ८२ ॥

---

इदानीं सर्वेषां सूतजातीयानां सामान्यतो गुणमाह, एवमिति ।—मर्त्यानां मानुषाणां मृत्युरेव गदः तं मरणरूपव्याधिं, यद्वा—मृत्युगदौ मृत्युज्वरादिरोगौ छिनत्तीति मृत्युगदच्छित् तस्य मर्त्यमृत्युगदच्छिदः एवम्भूतस्य उक्तलक्षणस्य सूतस्य पारदसामान्यस्य प्रभावात् सामर्थ्यात् मानुषाः देवानां तुल्ये सदृशे. बलायुषी शक्तिजीवनकालौ येषां तादृशाः जरामृत्युविवर्जिता इत्यर्थः, जाताः ॥ ७९ ॥

पारदस्य दोषयोगकारणमाह, तानिति ।—तदनन्तर सम्भोगविरतिकाले शुक्रप्रच्यवनानन्तरं रसरसेन्द्रपूर्णकूपयोः निरोधानन्तरं वा तान् सूतादीन् वीन् सूतस्य तथाभूतगुणान् वा दृष्ट्वा शक्रेण इन्द्रेण अभ्यर्थितेन अभि सर्वतोभावेन अर्थितेन प्रार्थितेन अनायाससेव्यश्चेदसौ सर्वे एव मर्त्याः एतत्सेवनेन जरामरणविवर्जिताः देवोपमा भविष्यन्ति देवनरयोर्न कोऽपि भेदो वर्त्तिष्यते अतोऽमुं तथा कुरु यथा आयाससेव्यो भवेदित्येवंरूपेण शक्रकर्तृकयाचितेन रुद्रेण शङ्करेण रसराजः पारदः दोषैः नागवङ्गादिभिरष्टभिर्दोषैः कञ्चुकाभिः पर्पट्यादिभिः सप्तभिः दोषविशेषैः करणैः नियोजितः संयोजितः सङ्गमित इत्यर्थः । कञ्चुका यथा—"पर्पटी पाटली भेदी द्रावी मलकरी तथा । अन्धकारी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः ॥" इति । तदेति ।—तदाप्रभृति तदारभ्य असौ सूतः असंस्कृतः मूर्च्छनादिभिः संस्कारैः अशोधितश्चेत् नैव सिध्यति कार्यसिद्धिं प्रददाति ॥ ८० ॥

रसस्य पञ्चविधगतिमाह, जलग इति ।—जलरूपेण द्रवत्वेन, जलगः जलीय

चतस्रो गतयो दृश्या अदृश्या पञ्चमी गतिः।
मन्त्रध्यानादिना तस्य रुध्यते पञ्चमी गतिः॥ ८३॥
इति भिन्नगतित्वाच्च सूतराजस्य दुर्लभः।
संस्कारस्तस्य भिषजा निपुणेन तु रक्षयेत्॥ ८४॥

सह गमनशीलः भवेत्, रसस्य चूर्णप्रायोऽतिसूक्ष्मांश इति भावः; त्वरितः चञ्चलः चाञ्चल्यादित्यर्थः, हंसगः हंसवद्गमनशीलः भवेत्, मलरूपेण मलवत्त्वात् मलगः मलेन सह मिश्रितः दोषसंश्लिष्टः भवेत्, सधूमः वह्निदग्धत्वात् धूमगः धूमेन सह गमनशीलः उड्डयनस्वभावः भवेत्, अन्या अपरा पञ्चमीत्यर्थः, दैवी अदृश्यरूपा जीवस्य रसस्य गतिः गमनम्, अस्तीति शेषः; तया गत्या अङ्गात् देहरूपकोषात् जीवः आत्मा इव निष्क्रमेत्, रस इति भावः; केन पथा देहात् जीवो निर्गच्छति तत् यथा न दृश्यते तथा पारदस्य पञ्चमी गतिरपि न ज्ञातुं शक्यते इत्यर्थः। पूर्वश्लोके जीवगतिशब्देन रसगतिरिति प्रदर्शितं, जीवशब्दस्य रसार्थत्वे हेतुमाह, स इति।—सः रसः तान् जीवान् जीवयेत् जरामरणादिविनाशनद्वारा दीर्घजीवनं प्रदापयेत् तेन हेतुना रसः जीवः जीवयतीति व्युत्पत्त्या जीवनदायकः सूतः कथितः॥ ८१।८२॥

पञ्चमगतिरोधनप्रकारमाह, चतस्र इति।—चतस्रः जलग-हंसग-मलग-धूमग-रूपाः गतयः दृश्याः द्रष्टुं शक्याः पञ्चमी अङ्गाज्जीवगतिरिव गतिः अदृश्या द्रष्टुमनर्हा चतुर्विधगमनं नेत्रविषयीभूतं पञ्चमगतिस्तु न शक्या चक्षुषा द्रष्टुमित्यर्थः। तस्य सूतस्य पञ्चमी गतिः मन्त्रध्यानादिना रसरक्षामन्त्र-रसध्यानादिना कर्मणा रुध्यते संयम्यते निवार्यते इत्यर्थः। रसरक्षामन्त्रो यथा रसेन्द्रसारसङ्ग्रहे—"ओम् अघोरेभ्योऽथ घोरेभ्यः घोराघोरतरेभ्यश्च। सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपिभ्यः॥" इति। ध्यानप्रकारो यथा रसेन्द्रचिन्तामणौ—"हृद्योमकर्णिकाऽन्तःस्थं रसेन्द्रं परमेश्वरि!। स्मरन् विमुच्यते पापैः सद्यो जन्मान्तरार्जितैः॥" इति॥ ८३॥

इतीति।—इति उक्तप्रकारेण, भिन्नगतित्वात् पृथक् पृथक् गतिविशिष्टत्वात् तस्य सूतराजस्य संस्कारः मूर्च्छनादिना गुणाधानविशेषः निपुणेन कुशलिना अभिज्ञेनेति यावत्, भिषजा तु भिषजा अपि दुर्लभः दुःखेन लब्धुं साधयितुमित्यर्थः, शक्यः दुःसाध्यः इत्यर्थः, अतः रक्षयेत् पालयेत्, भिषक् तमिति शेषः, बहुविधगतिमत्त्व-स्वभावत्वात् तत्संस्कारस्य दुःसाध्यतया अभिज्ञेन भिषजा यत्नतः स संस्कारः परिपालनीय इत्यर्थः॥ ८४॥

अथ रसस्य स्थानान्तरगतिवर्णनम् ।—

प्रथमे रजसि स्नातां हयारूढां स्वलङ्कृताम् ।
वीक्षमाणां वधूं दृष्ट्वा जिघृक्षुः कूपगो रसः ॥ ८५ ॥
उद्गच्छति जवात् साऽपि तं दृष्ट्वा याति वेगतः ।
अनुगच्छति तां सूतः सीमानं योजनोन्मितम् ॥ ८६ ॥
प्रत्यायाति ततः कूपं वेगतः शिवसम्भवः ।
मार्गनिर्मितगर्त्तेषु स्थितं गृह्णन्ति पारदम् ॥ ८७ ॥

अथ हिङ्गुलोत्पत्तिः ।—

पतितो दरदे देशे गौरवाद्वह्निवक्त्रतः ।
स रसो भूतले लीनस्तत्तद्देशनिवासिनः ॥
तां मृदं पातनायन्त्रे क्षिप्त्वा सूतं हरन्ति च ॥ ८८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये रसोत्पत्तिर्नाम
प्रथमोऽध्यायः ॥ १ ॥

पारदस्य स्थानान्तरगमनमाह, प्रथमे इति ।—कूपगः कूपस्थः रसः प्रथमे रजसि स्नाताम् आद्यऋतुस्नातां हयारूढाम् अश्वारूढां स्वलङ्कृतां वस्त्रालङ्कारादिविभूषणां वीक्षमाणां कौतुकवशेन सुमुखं पारदं पश्यन्तीं वधूं काञ्चन पर्वतवासिनीं स्त्रियं दृष्ट्वा जिघृक्षुः तां गृहीतुमिच्छुः सन् जवात् वेगात् उद्गच्छति ऊर्द्धम् उत्तिष्ठति; सा वधूरपि तं रसं दृष्ट्वा वेगतः वेगेन याति पलायते इत्यर्थः । सूतः योजनोन्मितं सीमानं क्रोशचतुष्टयपरिमितभूमिं तां वधूम् अनुगच्छति अनुयाति तत्पश्चात् धावतीत्यर्थः । ततः तस्याः पलायनानन्तरं शिवसम्भवः शिवात्मजः सूत इत्यर्थः, वेगतः कूपं प्रत्यायाति स्वाधिष्ठानकूपं प्रति आगच्छति, यावदिति शेषः, तावत् मार्गे पथि निर्मितगर्त्तेषु तद्देशवासिभिः कृतगर्त्तेषु स्थितं पतितमित्यर्थः, पारदं गृह्णन्ति, जना इति शेषः ॥ ८५—८७ ॥

हिङ्गुलोत्पत्तिप्रकारमाह, पतित इति ।—गौरवात् भूरिभारात् वह्निवक्त्रतः अग्निमुखात्; अग्निमुखे गमनप्रकारश्च प्राक् प्रदर्शितः; दरदे तन्नामके देशे पतितः स रसः भूतले लीनः अन्तर्निहितः सन्, तिष्ठतीति शेषः । तत्तद्देशनिवासिनः दरदवासिनः

तस्मिन्निहितदेशवासिनश्च जनाः तां मृदं मृत्तिकां पातनायन्त्रे विद्याधराख्योर्द्ध्व-पातनायन्त्रे क्षिप्त्वा निक्षिप्य सूतं पारदं हरन्ति आहरन्ति दरदाद्रसमाकृष्य गृह्णन्ति इत्यर्थः ॥ ८८ ॥

इति रसरत्नसमुच्चयबोधिन्यां प्रथमाध्यायः समाप्तः ॥१॥

---

# अथ द्वितीयोऽध्यायः ।

अथ महारसाः ।—

अभ्रवैक्रान्तमाक्षीकविमलाद्रिजसस्यकम् ।
चपलो रसकश्चेति ज्ञात्वाऽष्टौ सङ्ग्रहेद्रसान् ॥ १ ॥

अथ रसोत्पत्तिविवरणानन्तरं महारसान् विवरीतुमाह, अभ्रेति ।—वैक्रान्तं स्वनामख्यातमणिविशेषः, चुनीति लोके, तच्च श्वेतरक्तनीलभेदेन त्रिधा । तस्य निरुक्ति-र्यथा—"वज्राकारतयैव प्रसह्य हरणाच्च सर्वरोगाणाम् । यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥" इति । गुणाः यथा—"रसवीर्य्यविपाकेषु वज्रसमं क्षयकुष्ठविषघ्नं पुष्टिकरं रसायनञ्च" इति । माक्षिकं स्वर्णरौप्यभेदेन द्विविध, तदुक्तं रसेन्द्रसार-सङ्ग्रहे—"माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् । भिन्नवर्णविशेषत्वाद्रस-वीर्य्यादिकं पृथक् ॥" इति । विमला माक्षिकविशेषः । अद्रिजः शिलाजतु । तल्लक्षणादिकं यथा भावप्रकाशपूर्वखण्डे—"निदाघे घर्मसन्तप्ता धातुसारं धराधराः । निर्य्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् ॥ सौवर्णं राजतं ताम्रमायसं तच्चतुर्विधम् । शिलाजं कटुतिक्तोष्णं कटुपाकं रसायनम् ॥ छेदि योगवहं हन्ति कफमेदोऽश्मशर्कराः । मूत्रकृच्छ्रं क्षयं श्वासं वाताशांसि च पाण्डुताम् ॥ अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रिमीन् । सौवर्णं तु जपापुष्प-वर्णं भवति तद्गमात् ॥ मधुरं कटु तिक्तञ्च शीतलं कटुपाकि च । राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च ॥ ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णं च जायते । लौहं जटायुपक्षाभं तत्तिक्तं लवणं भवेत ॥ विपाके कटुकं शीतं स्वल्पश्रेष्ठमुदाहृतम् ॥" इति । सस्यकं तुत्थकम्; तच्च

अथ गन्धाभ्रयोः स्वरूपम् ।—

देव्या रजो भवेद्गन्धो धातुः शुक्रं तथाऽभ्रकम् । *

अथ अभ्रकगुणाः ।—

गौरीतेजः परममसृतं वातपित्तक्षयघ्नं
प्रज्ञाबोधि प्रशमितरुजं वृष्यमायुष्यमग्र्यम् ।
बल्यं स्निग्धं रुचिदमकफं दीपनं शीतवीर्य्यं
तत्तद्योगैः सकलगदहृद्व्योम सूतेन्द्रबन्धि ॥ २ ॥
राजहस्तादधस्ताद्यत् समानीतं घनं खनेः ।
भवेत्तदुक्तफलदं निःसत्त्वं निष्फलं परम् ॥ ३ ॥

---

ताम्रोपधातुः; उक्तञ्च—"तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत् ॥ तुत्थं कटु कषायोष्णं स्निग्धनेत्रामयापहम् । विषदोषेषु सर्वेषु प्रशस्तं शान्तिकारकम् ॥" इति । चपलः यशदविशेषः "दस्ता" इति लोके । "यशदं वङ्गसदृशं रीतिहेतुश्च तन्मतम् । यशद तुवरं तिक्तं शीतलं कफपित्तहृत् ॥ चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत् ॥" रसकः खर्परः; तद्यथा भावप्रकाशपूर्वखण्डे—"खर्परीतुत्थकं तुत्थादन्यत्तद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः ॥" अन्यच्च—"खर्परं कटु क्षारं कषायं वामकं लघु लेखनं भेदनं शीतलं चक्षुष्यं रक्तपित्तहरं विषाश्मरी-कुष्ठकण्डूघ्नञ्च" इति ॥ १ ॥

अभ्रकगुणमाह, गौरीति ।—गौरीतेजः देव्याः शुक्रम् अभ्रकमित्यर्थः । प्रज्ञाबोधि प्रज्ञां बुद्धिं बोधयति जागरयति उद्दीपयतीति यावत्, बुद्धेरुन्मेषकम् इत्यर्थः । अकफं न कफो यस्मात् तत् कफक्षयकरमित्यर्थः । तत्तद्योगैः यस्मिन् गदे तत् प्रयोज्यं तत्तद्रोगनाशकद्रव्यसंयोगैः । व्योम अभ्रम् । सूतेन्द्रबन्धि सूतेन्द्रं रसराजं पारदमिति यावत्, बध्नाति नियच्छतीति तत् पारदनियामकमित्यर्थः । किंविधमभ्रकं गुणकारकमित्याह, राजहस्तादिति ।—घनम् अभ्रम् । खनेः आकरात् । निःसत्त्वं साररहितम् । परं राजहस्तादुपरिस्थम् ॥ २।३ ॥

---

* गन्धाभ्रयोः स्वरूपमाह, देव्याः इति ।—रजः आर्त्तवशोणितम् । अभ्रकं शुक्रं धातुः देव्याः शुक्रमभ्रकमित्यर्थः । श्लोकार्द्धोऽयं प्रक्षिप्तः इति केचित् ।

अथ अभ्रभेदाः।—

पिनाकं नागमण्डूकं वज्रमित्यभ्रकं मतम्।
श्वेतादिवर्णभेदेन प्रत्येकं तच्चतुर्विधम्॥ ४॥

अथ पिनाकादीनां लक्षणानि।—

पिनाकं पावकोत्तप्तं विमुञ्चति दलोच्चयम्।
तत् सेवितं मलं बद्ध्वा मारयत्येव मानवम्॥ ५॥
नागाभ्रं नागवत् कुर्य्यात् ध्वनिं पावकसंस्थितम्।
तद्भुक्तं कुरुते कुष्ठं मण्डलाख्यं न संशयः॥ ६॥
उत्प्लुत्योत्प्लुत्य मण्डूकं ध्मातं पतति चाभ्रकम्।
तत् कुर्य्यादश्मरीरोगमसाध्यं शस्त्रतोऽन्यथा॥ ७॥
वज्राभ्रं वह्निसन्तप्तं निर्मुक्ताशेषवैकृतम्।
देहलोहकरं तच्च सर्वरोगहरं परम्॥ ८॥

'अभ्रकस्य भेदानाह, पिनाकमिति।—प्रत्येकं पिनाक-नाग-मण्डूक-वज्रभेदेन चतुर्द्धा भिन्नं तत् अभ्रं पिनाकादिचतुर्विधमभ्रं प्रत्येकं श्वेतरक्तपीतकृष्णभेदेन चतुःप्रकारमित्यर्थः। रसरत्नाकरेऽप्युक्तं—"कृष्णं पीतं सितं रक्तं योज्यं योगे रसायने। पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्॥ पिनाकाद्यास्त्रयो वर्ज्या वज्रं यत्नात् समाहरेत्॥" इति॥ ४॥

तत्र पिनाकादीनां लक्षणमाह, पिनाकमिति।—पावकोत्तप्तम् अग्निसन्तप्तम्। दलोच्चयम् उपर्य्यधोविन्यस्तपत्रवत् अंशसमूहम्। मलं बद्ध्वा विट्सङ्गं कृत्वा। नागवत् सर्पवत् ध्वनिं फुत्कारशब्दम्। उत्प्लुत्य उत्प्लुत्य उल्लम्फ्य उल्लम्फ्य। ध्मातं वह्निसंयुक्तं, मण्डूकाभ्रं वह्निसम्बन्धात् मण्डूकवत् पुनः पुनरूर्द्ध्वमुल्लम्फ्योल्लम्फ्य पततीत्यर्थः। असाध्य-मित्यादि।—शस्त्रचिकित्सां विहाय असाध्यं स्यात् शस्त्रेणैव सा साध्या, न त्वन्ये-नेत्यर्थः। निर्मुक्तम् अपगतम् अशेषं कृत्स्नं वैकृतं विकृतिः यस्य तत् सर्वदोषरहितं वह्निस्थितं न कामपि विकृतिं व्रजेदित्यर्थः। देहं लौहवत् लौहमिव करोतीति तत् देहलोहकरं लौहवत् स्थिरसारदेहप्रदम्। रसरत्नाकरेऽपि पिनाकादीनां लक्षणा-न्युक्तानि, तत् यथा—"मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकं दलसञ्चयम्। अज्ञानाद्भक्षणात्तस्य महाकुष्ठप्रदायकम्॥ दर्दुरं निहितं अग्नौ कुरुते दार्दुरध्वनिम्। नागश्चाग्निगतं

अथ श्वेतादिवर्णस्याभ्रस्य क्रियाविषयः।—

श्वेतं रक्तञ्च पीतञ्च कृष्णमेवं चतुर्विधम्।
श्वेतं श्वेतक्रियासूक्तं रक्ताभं रक्तकर्मणि॥
पीताभमभ्रकं यत्तु श्रेष्ठं तत् पीतकर्मणि॥ ९॥
चतुर्विधं वरं व्योम यद्यप्युक्तं रसायने।
तथाऽपि कृष्णवर्णाभ्रं कोटिकोटिगुणाधिकम्॥ १०॥

अथ प्रशस्ताभ्रलक्षणम्।—

स्निग्धं पृथद्दलं वर्ण-संयुक्तं भारतोऽधिकम्।
सुखनिर्मोच्यपत्रञ्च तदभ्रं शस्तमीरितम्॥ ११॥

---

शब्दं फुत्कारञ्च विमुञ्चति॥ तच्च देहगतं नित्यं व्याधिं कुर्य्यात् भगन्दरम्। वज्राभ्रकं वह्निसंस्थं न किञ्चित विकृतिं व्रजेत। तस्मात् वज्राभ्रकं योज्यं व्याधिवार्द्धक्य-मृत्युजित्॥" इति। रसेन्द्रसारसङ्ग्रहे वज्राभ्रलक्षणमुक्तं यथा—"सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम्। यन्न शब्दायते वह्नौ नैवोच्छून भवेदपि। मदाकरसमुद्भूतं वज्रेति प्रथितं घनम्॥" इति। रसेन्द्रचिन्तामणावपि—"यदञ्जननिभं क्षिप्तं न वह्नौ विकृतिं व्रजेत। वज्रसंज्ञं हि तत् योज्यमभ्रं सर्वत्र नेतरत्॥" इति॥ ५—८॥

श्वेतादिवर्णभेदेन तस्य क्रियाविशेषे अधिकारमाह, श्वेतमिति।—श्वेतक्रियासु रजतादिशुभ्रवस्तुमारणक्रियासु श्वित्रनाशनक्रियासु वा अथवा दाहादिना कृष्णीभूत-प्रदेशस्य श्वेतीकरणक्रियासु। रक्तकर्मणि हिङ्गुलादिरक्तवस्तुशोधनक्रियायां रक्त-प्रसादनक्रियायां वा। पीतकर्मणि स्वर्णादिपीतवस्तुमारणादिकर्मणि अथवा देहस्य पीतत्वापादकपाण्डुरोगादिकर्मणि। इदानीं कृष्णाभ्रस्य गुणाधिक्यमाह, चतुर्विधमिति।—चतुर्विधं पिनाकादिचतुष्टयम्। वरं श्रेष्ठम्। तन्त्रान्तरेऽपि उक्तं यथा—"प्रशस्यते सितं तारे रक्तं तत्तु रसायने। पीतं हेमनि कृष्णन्तु गदेषु भूतयेऽपि च॥" इति। किञ्च अन्यस्मिन् तन्त्रे कृष्णाभ्रस्यैव चतुर्विधः भेदो दृश्यते, तद्यथा—"अभ्रकं चतुर्विधं—श्वेतरक्तपीतनीलभेदात् भिन्नभिन्नक्रियायां युज्यते। यथा—श्वेतं तारे पीतरक्तौ काञ्चने नीलञ्च व्याधौ प्रयोज्यं यथोत्तरं गुणाढ्यञ्च। तेषु नीलाभं दर्दुरनागपिनाक-वज्रभेदेन चतुर्विधम्" इति॥ ९।१०॥

प्रशस्ताभ्रलक्षणमाह, स्निग्धमिति।—पृथुदलं स्थूलपत्रविशिष्टम्। वर्णसंयुक्तं

अथ ग्रासायोग्याभ्रम्।—

सचन्द्रिकञ्च किट्टाभं व्योम न ग्रासयेद्रसः।
ग्रसितञ्च नियोज्य तत् लोहे चैव रसायने ॥ १२ ॥

अथ निश्चन्द्रसचन्द्राभ्रयोर्गुणदोषौ।—

निश्चन्द्रिकं मृतं व्योम सेव्यं सर्वगदेषु च।
सेवितं चन्द्रिकायुक्तं मेहं मन्दानलं चरेत् ॥ १३ ॥

अशुद्धाभ्रस्य दोषः।—

यैरुक्तं युक्तिनिर्मुक्तैः पत्राभ्रकरसायनम्।
तैर्दृष्टं कालकूटाख्यं विषं जीवनहेतवे ॥ १४ ॥
सत्त्वार्थं सेवनार्थञ्च योजयेच्छोधिताभ्रकम्।
अन्यथा त्वगुणं कृत्वा विकरोत्येव निश्चितम् ॥ १५ ॥

---

प्रशस्तवर्णविशिष्टम्। भारतोऽधिकं गुरुभारवत्। सुखनिर्मोच्यपत्रं सुखेन अनायासेन निर्मोच्यम् उन्मोचनीयं पृथक्करणीयमिति यावत्, पत्रं दलं यस्य तथाभूतम्। शस्तं प्रशस्तम् ॥ ११ ॥

ग्रासायोग्याभ्रकमाह, सचन्द्रिकमिति।—सचन्द्रिकं चन्द्रिकाविशिष्टम्। किट्टाभं किट्टं लौहमलं तद्वदाभाविशिष्टं मण्डूरवत् परिदृश्यमानम्। ग्रासयेदिति स्वार्थे णिच् ग्रसेतेत्यर्थः। ग्रसितं प्राप्तग्रासं, रसेनेति शेषः ॥ १२ ॥

निश्चन्द्र-सचन्द्राभ्रयोर्गुणदोषावाह, निश्चन्द्रिकमिति।—मृतं भस्मीभूतम्। रसेन्द्र-सारेऽप्युक्तं—"निश्चन्द्रमारितं व्योम रूपं वीर्य्यं दृढं तनुम्। कुरुते नाशयेन्मृत्युं जरारोग-कदम्बकम् ॥" इति ॥ १३ ॥

अशोधिताभ्रस्य दोषमाह, यैरिति।—युक्तिनिर्मुक्तैः युक्तिबहिष्कृतैः अज्ञैः युक्ति-मनादृत्येत्यर्थः। पत्राभ्रकरसायनं पत्राभ्रकेण अपृथक्कृतदलाभ्रेण अशोधितामारिताभ्रे-णेत्यर्थः, रसायनं रसायनगुणलाभः, भवेदिति इति शेषः। विषमित्यत्र अपीति शेषः; सपत्राभ्रकं प्रयुज्यमानं कालकूटवत् जीवनं हन्तीत्यर्थः। सत्त्वार्थं सारग्रहणार्थं, यदुक्तं—"धातव निर्गतः सारः सत्त्वमित्यभिधीयते" इति। अन्यथा अशुद्धाभ्रम्। अगुणं विरुद्धगुणं दोषमित्यर्थः। विकरोति विकारं करोतीत्यर्थः। तथा च रसेन्द्र-सारसङ्ग्रहे—"अशुद्धाभ्रं निहन्त्यायुः वर्द्धयेन्मारुतं कफम्। अत्यं [illegible] मन्दाग्निक्रिमिवर्द्धनम् ॥" इति ॥ १४।१५ ॥

अथाभ्रशोधनमारणे ।—

प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम् ।
निर्दोषं जायते नूनं प्रक्षिप्तं वाऽपि गोजले ॥ १६ ॥
त्रिफलाक्वथिते चापि गवां दुग्धे विशेषतः ।
ततो धान्याभ्रकं कृत्वा पिष्ट्वा मत्स्याक्षिकारसैः ॥ १७ ॥
चक्रीं कृत्वा विशोष्याथ पुटेदर्द्धेभके पुटे ।
पुटेदेवं हि षड्वारं पौनर्नवरसैः सह ॥ १८ ॥
कलांशटङ्कणेनापि सम्मर्द्य कृतचक्रिकम् ।
अर्द्धेभाख्यपुटैस्तद्वत् सप्तवारं पुटेत् खलु ॥ १९ ॥
एवं वासारसेनापि तण्डुलीयरसेन च ।
प्रपुटेत् सप्तवाराणि पूर्वप्रोक्तविधानतः ॥
एवं सिद्धं हृतं सर्वयोगेषु विनियोजयेत् ॥ २० ॥

अथ धान्याभ्रलक्षणम् ।—

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्धस्ताद्धान्याभ्रमिति कथ्यते ॥ २१ ॥

---

अभ्रशोधनमारणमाह, प्रतप्तमिति ।—प्रतप्तं, वह्नौ इति शेषः । गोजले गोमूत्रे । धान्याभ्रकम् अभ्रमारणार्थं प्रक्रियाविशेषः, तच्चाग्रे वक्ष्यमाणम् । मत्स्याक्षिका हिलमोचिका गण्डदूर्वा वा । अर्द्धेभके पुटे अर्द्धगजपुटे गजपुटापेक्षया अर्द्धपुटे इत्यर्थः । पौनर्नवरसैः पुनर्नवारसैः । कलांशटङ्कणेन अभ्रापेक्षया षोड़शभागैक-भागटङ्कणचूर्णेन । तण्डुलीयः अल्पमारिषः “काँटानटे” इति भाषा । पूर्वप्रोक्त-विधानतः अर्द्धेभाख्यपुटे इत्यर्थः । हृतं मृतं भस्मीभूतमित्यर्थः । अभ्रकं वह्नौ प्रतप्य काञ्जिकादिषु निषिञ्चेत् एवं सप्तशः कृत्वा वक्ष्यमाणविधिना धान्याभ्रकं विधाय मत्स्याक्ष्यादीनां रसैः पिष्ट्वा चक्रिकां विधाय अर्द्धगजपुटे यथानिर्देशं पुटेदित्यर्थः ॥ १६—२० ॥

धान्याभ्रविधिमाह, चूर्णाभ्रमिति ।—चूर्णाभ्रम् अभ्रचूर्णं शालिसंयुक्तम् ; यद्यप्यत्र शालिपरिमाणं नोक्तं तथाऽपि तन्त्रान्तरानुसरणात् पादमितशालि-धान्यसहितं बोद्धव्यम् ; तथा च रसेन्द्रसारसङ्ग्रहे—“पादांशं शालिसंयुक्तमभ्रकं

अथ धान्याभ्रमारणम्।—

धान्याभ्रं कासमर्दस्य रसेन परिमर्दितम्।
पुटितं दशवारेण म्रियते नात्र संशयः॥
तद्वन्मुस्तारसेनापि तण्डुलीयरसेन च॥ २२॥

अथ अभ्रमारणम्।—

पीतामलकसौभाग्य-पिष्टं चक्रीकृताभ्रकम्।
पुटितं षष्टिवाराणि सिन्दूराभं प्रजायते।
क्षयाद्यखिलरोगघ्नं भवेद्रोगानुपानतः॥ २३॥

मतान्तरम्।—

वटमूलत्वचः क्वाथैस्ताम्बूलीपत्रसारतः।
वासामत्स्याक्षिकाभ्यां वा मीनाक्ष्या मकठिल्लया॥ २४॥
पयसा वटवृक्षस्य मर्दितं पुटितं घनम्।
भवेद्विंशतिवारेण सिन्दूरसदृशप्रभम्॥ २५॥

---

कम्बलोदरे। "चिरात्तं स्थापयेन्नीरे ततः क्लिन्नं मर्दयेद्दृढम्॥ कम्बलाद्गलितं श्लक्ष्णं वालुकारहितञ्च यत्। तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये॥" इति। निर्यातं निर्गतम्। अभ्रं चूर्णितं कृत्वा पादांशशालिधान्येन सह स्थूलवस्त्रे बद्धा काञ्जिके तावन्मर्द्दनीयं यावत् वस्त्रच्छिद्रात् श्लक्ष्णं वालुकारहितं सत् निर्याति तद्धान्याभ्रं स्मृतम्॥ २१॥

धान्याभ्रमारणमाह, धान्याभ्रमिति।—कासमर्दः "कालकासन्दा" इति लोके॥ २२॥

अभ्रमारणमाह, पीतेति।—पीतामलकसौभाग्यैः हरिद्राऽऽमलकटङ्कणैः सह मर्दितम्। यद्यप्यत्र सौभाग्यस्य भागो नोक्तः तथाऽपि तन्त्रान्तरसंवादात् द्विगुणो बोध्यः, यथा रसेन्द्रसारसङ्ग्रहे—"धान्याभ्रकस्य भागैकं भागौ द्वौ टङ्कणस्य च" इति। एवञ्च हरिद्राऽऽमलकरसाभ्यां द्विगुणेन टङ्कणचूर्णेन च सह धान्याभ्रं पिष्ट्वा चक्रीकृत्य षष्टिपुटं दद्यात्। रोगानुपानतः यस्मिन् व्याधौ प्रयुञ्जीत तत्तद्व्याधिविनाशकानुपानयोगादित्यर्थः॥ २३॥

प्रकारान्तरमाह, वटमूलेति।—वटमूलत्वक्क्वाथैर्विमर्द्दनम्, अथवा ताम्बूलीपत्रसारतः पर्णपत्ररसेन, अथवा वासामत्स्याक्षिकाभ्या वासारस-हिलमोचिकारसाभ्याम्,

अथ सत्त्वपातनम् ।—

पादांशटङ्कणोपेतं मुसलीरसमर्दितम् ।
रुन्ध्यात् कोष्ठ्यां दृढं ध्मातं सत्त्वरूपं भवेद्घनम् ॥ २६ ॥

प्रकारान्तरम् ।—

कासमर्दघनाधान्यवासानाञ्च पुनर्भुवः ।
मत्स्याक्ष्याः काण्डवल्ल्याश्च हंसपाद्या रसैः पृथक् ॥ २७ ॥
पिष्ट्वा पिष्ट्वा प्रयत्नेन शोषयेद्घर्मयोगतः ।
पलं गोधूमचूर्णस्य क्षुद्रमत्स्याश्च टङ्कणम् ॥ २८ ॥
प्रत्येकमष्टमांशेन दत्त्वा दत्त्वा विमर्दयेत् ।
मर्दने मर्दने सम्यक् शोषयेद्रविरश्मिभिः ॥ २९ ॥
पञ्चाजं पञ्चगव्यं वा पञ्चमाहिषमेव वा ।
क्षिप्त्वा गोलान् प्रकुर्वीत किञ्चित्तिन्दुकतोऽधिकान् ॥३०॥
पयो दधि घृतं मूत्रं सविट्कञ्चाजमुच्यते ।
अधःपातनकोष्ठ्यां हि ध्मात्वा सत्त्वं निपातयेत् ॥ ३१ ॥

---

अथवा सकाठिल्लया मीनाक्ष्या काठिल्लः कर्कटः "जनकाँकरोल" इति भाषा, मीनाक्षी गण्डदूर्वा ब्राह्मी वा, अथवा वटवृक्षस्य पयसा वटक्षीरेण, एषां पञ्चानामेकतमरसेन मर्दयित्वा विंशतिपुटः देयः ॥ २४।२५ ॥

सत्त्वपातनमाह, पादांशेति ।—पादांशटङ्कणोपेतं चतुर्थांशटङ्कणसंयुक्तम् । मुषली तालमूली । कोष्ठ्यां कोष्ठिकायन्त्रे ; तल्लक्षणमविसंहितायां यथा—"षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् । धातुसत्त्वनिपातार्थं कोष्ठिकं परिकीर्त्तितम् ॥ परिपूर्णं दृढाङ्गारैरधो वातेन कोष्ठके । मात्रया ज्वालमार्गेण ज्वालयेच्च हुताशनम् ॥" इति । ध्मातं वह्निसंयोगात्तप्तम् । सत्त्वरूपं "ध्मातश्च निर्गतः सारः सत्त्वमित्यभिधीयते" इत्युक्तलक्षणं निर्गतसारम् ॥ २६ ॥

सत्त्वपातने प्रकारान्तरमाह, कासमर्देति ।—घना गुडूची । पुनर्भूः पुनर्नवा । काण्डवल्ली कारवेल्लकः । हंसपादी गोधापदी "गोयालिलता" इति भाषा । घर्मयोगतः आतपसंयोगात् । पञ्चाजं छाग्याः पयोदधिघृतमूत्रपुरीषपञ्चकम् । पञ्चगव्यं पूर्ववत् गोसम्बन्धि क्षीरादिपञ्चकम् । पञ्चमाहिषं माहिष्या अपि पूर्ववत् पञ्चकम् ।

अथ किट्टात् सत्त्वग्रहणम्।—

कोष्ठ्यां किट्टं समाहृत्य विचूर्ण्यावकरान् हरेत्।
तत् किट्टं खल्वटङ्केन गोमयेन विमर्द्य च ॥ ३२ ॥
गोलान् विधाय संशोष्य धमेत् भूयोऽपि पूर्ववत्।
भूयः किट्टं समाहृत्य मृदित्वा सत्त्वमाहरेत् ॥ ३३ ॥

अथ सत्त्वशोधनम्।—

अथ सत्त्वकणांस्तांस्तु क्वाथयित्वाऽम्लकाञ्जिकैः।
शोधनीयगणोपेतं मूषामध्ये निरुध्य च ॥ ३४ ॥
सम्यक् द्रुतं समाहृत्य द्विवारं प्रधमेद्घनम्।
इति शुद्धं भवेत् सत्त्वं योज्यं रसरसायने ॥ ३५ ॥

अथ सत्त्वानां मृदूकरणम्।—

मधुतैलवसाऽऽज्येषु द्रावितं परिवापितम्।
मृदु स्यादश्मवारिणा सत्त्वं लौहादिकं खरम् ॥ ३६ ॥

तिन्दुकतः कर्षमानात् किञ्चिदधिकान् पादपरिमिताधिकान् सपादकर्षमानानित्यर्थः। अधःपातनकोष्ठ्याम् अधःपातनार्थकोष्ठिकायन्त्रे। अयमर्थः,—कासमर्दादीनामष्टानां रसेन पृथक् पृथक् सम्मर्द्य आतपे संशोष्य च गोधूमचूर्णादीन् पृथक् पृथक् दत्त्वा दत्त्वा पुनः मर्दयेत् शोषयेच्च, ततः अजायाः गोः महिष्या वा क्षीरादिपञ्चकेन गोलककरण-योग्येन सम्मिश्र्य सपादकर्षमितान् गोलान् विधाय अधःपातनार्थकोष्ठिकायन्त्रे ध्मात्वा सत्त्व गृह्णीयादिति ॥ २७—३१ ॥

किट्टात् सत्त्वग्रहणमाह, कोष्ठ्यामिति।—कोष्ठ्यां किट्टं धमनवशेन कोष्ठिकालग्नम् अभ्रमलम्। अवकरान् रजांसि चूर्णानीति यावत्। "रवकान्" इति पाठान्तरम्। भूयः पुनरपि। किट्टं धमनवशेन यत् किट्टं निर्गतं तदित्यर्थः ॥ ३२।३३ ॥

सत्त्वशोधनमाह, अथेति।—सत्त्वकणान् धमनैःसृतसारकणचूर्णानि। शोधनीयगणोपेतं शोधनार्थत्रिफलादिगणसंयुतम्। द्रुतं गलितम्। रसरसायने रसे रसायने च ॥ ३४।३५ ॥

सत्त्वानां मृदूकरणमाह, मध्विति।—द्रावितं पूर्वप्रक्रियया प्रापितद्रवीभाव-

अथाभ्रमारणम् ।—

पट्टचूर्णं विधायाथ गोघृतेन परिप्लुतम् ।
भर्जयेत् सप्तवाराणि चुल्लीसंस्थितखर्परे ॥ ३७ ॥
अग्निवर्णं भवेद्यावद्वारं वारं विचूर्णयेत् ।
तप्तं क्षिप्त्वा दृहेद्यावत्तावद्वा भर्जनं चरेत् ॥ ३८ ॥
ततः सगन्धकं पिष्ट्वा वटमूलकषायतः ।
पुटेद्विंशतिवारेण वाराहेण पुटेन हि ॥ ३९ ॥
पुनर्विंशतिवाराणि त्रिफलोत्थकषायतः ।
त्रिफलामुण्डिकाभृङ्ग-पत्रपथ्याऽक्षमूलकैः ॥ ४० ॥
भावयित्वा प्रयोक्तव्यं सर्वरोगेषु मात्रया ।
सत्त्वाभ्रात् किञ्चिदपरं निर्विकारं गुणाधिकम् ॥ ४१ ॥
एवं चेच्छतवाराणि पुटपाकेन साधितम् ।
गुणवज्जायतेऽत्यर्थं परं पाचनदीपनम् ॥ ४२ ॥

मारणे प्रकारान्तरम् ।—

गन्धर्वपत्रतोयेन गुडेन सह भावितम् ।
अधोर्ध्वं वटपत्राणि निश्चन्द्रं त्रिपुटैः खगम् ॥ ४३ ॥
क्षुधं करोति चात्यर्थं गुञ्जार्द्धमितिसेवया ।
तत्तद्रोगहरैर्योगैः सर्वरोगहरं परम् ॥ ४४ ॥

---

मित्यर्थः । परिवापितं प्रक्षिप्तम् । खरं कठिनम् ; मध्वादिषु दशवारप्रक्षेपेण द्रवीभूतं खरलोहादिसत्त्वं मृदु भवेदित्यर्थः ॥ ३६ ॥

अभ्रमारणमाह, पट्टचूर्णमिति ।—पट्टचूर्णं पट्टे शिलापट्टे चूर्णं वस्त्रक्षालित-चूर्णमित्यर्थो वा । विधाय कृत्वा । परिप्लुतमित्यत्र अभ्रमिति शेषः । सगन्धकमित्यत्र पूर्वोक्तभृष्टाभ्रमिति शेषः । वाराहेण पुटेन "अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते" इति भावप्रकाशोक्तलक्षणकपुटविशेषेण । मुण्डिका मुण्डिरी । भृङ्गपत्र भृङ्गराजपत्रम् । अक्षं विभीतकः । एवं पट्टचूर्णं विधायाथ इत्याद्युक्तविधानेनेत्यर्थः ॥ ३७—४२ ॥

अभ्रमारणे प्रकारान्तरमाह, गन्धर्वेति ।—गन्धर्वपत्रतोयेन एरण्डपत्ररसेन । वटपत्राणीत्यत्र दत्त्वा इति शेषः । खगम् अभ्रम् ॥ ४३।४४ ॥

अथ सत्त्वस्य शोधनमारणे।—

मत्त्वस्य गोलकं ध्मातं शस्यसंयुक्तकाञ्जिके।
निर्वाप्य तत्क्षणेनैव कुट्टयेल्लोहपारया॥ ४५॥
सम्प्रताप्य घनस्थूलकणान् क्षिप्त्वाऽथ काञ्जिके।
तत्क्षणेन समाहृत्य कुट्टयित्वा रजश्चरेत्॥ ४६॥
गोघृतेन च तच्चूर्णं भर्जयेत् पूर्ववत् त्रिधा।
धात्रीफलरसैस्तद्वद्वासापत्ररसेन वा॥ ४७॥
भर्जने भर्जने कार्य्यं शिलापट्टेन पेषणम्।
ततः पुनर्नवावासा-रसैः काञ्जिकमिश्रितैः॥ ४८॥
प्रपुटेद्दशवाराणि दशवाराणि गन्धकैः।
एवं संशोधितं व्योमसत्त्वं सर्वगुणोत्तरम्॥
यथेष्टं विनियोक्तव्यं जारणे च रसायने॥ ४९॥

अथ अभ्रद्रावणागुक्तेः कारणम्।—

द्रुतयो नैव निर्दिष्टाः शास्त्रे दृष्टा अपि दृढम्।
विना शम्भोः प्रसादेन न सिध्यन्ति कदाचन॥ ५०॥

अथ अभ्रप्रयोगः।—

वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं
दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकुष्ठामयम्।
जूर्त्तिं श्वासगदं प्रमेहमरुचिं कासामयं दुर्द्धरं
मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान्॥ ५१।

[ इत्यभ्राधिकारः ]।

---

मतान्तरे अभ्रसत्त्वस्य शोधनमारणमाह, सत्त्वस्येति।—शस्यसंयुक्तकाञ्जिके धान्यकाञ्जिके धान्यकाञ्जिके इत्यर्थः। लोहपारया लौहमुषलेन। रजः चूर्णम्। पूर्ववत् चुल्लीसंस्थितखर्परे पट्टचूर्णवच्चूर्णं विधायेत्यर्थः॥ ४५—४९॥

अभ्रद्रावणानुक्तेः कारणमाह, द्रुतय इति।—सुगमम्॥ ५०॥

एवं मारिताभ्रस्य गुणमाह, वेल्लेति।—वेल्लव्योषसमन्वितं विडङ्गकटुत्रयसंयुक्तम्;

## अथ वैक्रान्तः ।—

### अथ वैक्रान्तस्वरूपम् ।—

अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ ५२ ॥

### अथ वैक्रान्तस्य वर्णभेदाः ।—

श्वेतो रक्तश्च पीतश्च नीलः पारावतच्छविः ।
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ॥ ५३ ॥

### अथ वैक्रान्तस्य गुणाः ।—

आयुष्प्रदश्च बलवर्णकरोऽतिवृष्यः
प्रज्ञाप्रदः सकलदोषगदापहारी ।
दीप्ताग्निकृत् पविसमानगुणस्तरस्वी
वैक्रान्तकः खलु वपुर्बललोहकारी ॥ ५४ ॥
रसायनेषु सर्वेषु पूर्वगण्यः प्रतापवान् ।
वज्रस्थाने नियोक्तव्यो वैक्रान्तः सर्वदोषहा ॥ ५५ ॥

---

अत्र वल्लादीनां मानानुक्तत्वेऽपि अभ्रमानसाहचर्यात् वैक्रान्तव्योषयोः प्रत्येकं वल्लमानं बोध्यम् । वल्लः द्विगुञ्जा, गुञ्जात्रयमिति लीलावती सार्द्धगुञ्जेति राजनिघण्टुः । जूर्त्तिं जरां ज्वरं वा ॥ ५१ ॥

वैक्रान्तस्वरूपमाह, अष्टास्र इति ।—अष्टास्रः अष्टकोणः । अष्टफलकः अष्टास्रत्वादेव फलकाकाराष्टरेखाविशिष्टः । षट्कोण इत्यत्र वा-शब्द ऊहनीयः तेन अष्टकोणः षट्कोणो वा बोध्यः ॥ ५२ ॥

वर्णभेदेन तस्याष्टधात्वमाह, श्वेत इति ।—पारावतच्छविः धूम्रवर्ण इत्यर्थः । कर्बुरः स्वर्णवर्ण इत्यर्थः, विचित्रवर्ण इत्यर्थो वा ॥ ५३ ॥

वैक्रान्तस्य गुणमाह, आयुष्प्रद इति ।—पविसमानगुणः हीरकसदृशगुणविशिष्टः । तरस्वी वीर्य्यवान्, यद्वा—तरः मांसं मांसवद्रूप इत्यर्थः, विद्यतेऽस्मिन्निति व्युत्पत्त्या मांसवान्, मांसवत् गुणसम्पन्नः मांसवर्द्धक इत्यर्थः । वपुरिति ।—वपुः देहं बलं मनोबलं, बलवर्णकर इति प्रागुक्तत्वात्, लोहं रक्तं तानि करोतीति देहवर्द्धनः मनोबलवर्द्धनः रक्तवर्द्धनश्च इत्यर्थः । पूर्वगण्यः प्राधान्येन गणनीयः । प्रतापवान् प्रभाव-

अथ वैक्रान्तोत्पत्तिः।—

दैत्येन्द्रो माहिषः सिद्धः सहदेवसमुद्भवः।
दुर्गा भगवती देवी तं शूलेन व्यमर्दयत्॥ ५६॥
तस्य रक्तं तु पतितं यत्र यत्र स्थितं भुवि।
तत्र तत्र तु वैक्रान्तं वज्राकारं महारसम्॥ ५७॥

अथ वैक्रान्तस्य अवस्थितिस्थानं निरुक्तिश्च।—

विन्ध्यस्य दक्षिणे भागे ह्युत्तरे चास्ति सर्वतः।
विक्रान्तयति लोहानि तेन वैक्रान्तकः स्मृतः॥ ५८॥

मतान्तरे वर्णभेदकथनम्।—

श्वेतः पीतस्तथा रक्तो नीलः पारावतप्रभः।
मयूरकण्ठसदृशश्चान्यो मरकतप्रभः॥ ५९॥

सम्पन्नः। वज्रस्थाने हीरकप्रयोगयोग्यस्थाने। तन्त्रान्तरेऽपि वज्रवैक्रान्तयोः समानगुणत्वमुक्तं तद्यथा—"रसवीर्य्यविपाकेषु वज्रसमं क्षयकुष्ठविषघ्नं पुष्टिकरं रसायनञ्च। अपि च—वैक्रान्तं वज्रसदृशं वज्रवद्रसवीर्य्यकम्। तथाऽस्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम्॥" इति॥ ५४।५५॥

वैक्रान्तस्य उत्पत्तिमाह, दैत्येन्द्र इति।—सिद्धः शङ्करवरेण सिद्धिप्राप्तः। सहदेवसमुद्भवः सह देवैः समुद्भवः उत्पत्तिः यस्य तथाभूतः देवताभिः सह समकालोत्पन्नः। "सर्वदेवसमुद्भवा" इति पाठे तु—सर्वेभ्यः देवेभ्यः समुद्भवः उत्पत्तिः आविर्भावः यस्याः सा इति दुर्गायाः विशेषणं, तस्याः सर्व-देव-तेजः-समुत्पन्नत्वात्। तत्प्रमाणञ्च मार्कण्डेयचण्ड्यां द्रष्टव्यम्। श्लोकाविमौ ग्रन्थान्तरादुद्धृतौ इति कश्चित्॥ ५६।५७॥

वैक्रान्तस्य स्थानं निरुक्तिञ्चाह,—विन्ध्यस्येति। विक्रान्तयतीति।—विक्रान्तयति विशेषेण छेदयति गुणैः पराजयते इत्यर्थः, स्वर्णादिसर्वलोहेभ्यो गुणाधिकः इति भावः। "विक्रामयति" इति पाठे तु—विक्रमं कारयतीत्यर्थः, वैक्रान्तयोगेन सर्वलोहानां वीर्य्याधिक्यं भवतीति भावः। अयमेव पाठः साधीयान् इति मन्यते विपूर्व-क्रमतेः वैक्रान्तपदासिद्धेः। "विक्रन्तयति" "विक्रान्तयति" इति पाठान्तरावपि कुत्रचित् दृश्येते। तन्त्रान्तरे तु वैक्रान्तशब्दस्यान्यथा निरुक्तिरुक्ता, सा तु एतदध्यायस्य प्रथमश्लोकव्याख्यावसरे एवास्माभिः प्रदर्शिता॥ ५८॥

मतान्तरे वर्णभेदमाह, श्वेत इति।—सुगमम्॥ ५९॥

वर्णभेदेन कार्य्यभेदकथनम् ।—

देहसिद्धिकरं कृष्णं पीते पीतं सिते सितम् ।
सर्वार्थसिद्धिदं रक्तं तथा मरकतप्रभम् ॥
श्रेषे द्वे निष्फले वर्ज्ये वैक्रान्तमिति सप्तधा ॥ ६० ॥

अथाऽऽहरणविधिः ।—

यत्र क्षेत्रे स्थितश्चैव वैक्रान्तं तत्र भैरवम् ।
विनायकञ्च सम्पूज्य गृह्णीयाच्छुद्धमानसः ॥ ६१ ॥

गुणान्तरम् ।—

वैक्रान्तो वज्रसदृशो देहलोहकरो मतः ।
विषघ्नो रसराजस्य ज्वरकुष्ठक्षयप्रणुत् ॥ ६२ ॥

अथ शोधनम् ।—

वैक्रान्तकाः स्युस्त्रिदिनं विशुद्धाः संस्वेदिताः क्षारपटूनि दत्त्वा ।
अम्लेषु मूत्रेषु कुलत्थरम्भा-नीरेऽथवा कोद्रववारिपक्वाः ॥ ६३ ॥

मतान्तरे शोधनमारणम् ।—

कुलत्थक्वाथसंस्विन्नो वैक्रान्तः परिशुध्यति ।
म्रियतेऽष्टपुटैर्गन्ध-निम्बुकद्रवसंयुतः ॥ ६४ ॥

---

वर्णभेदेन कार्य्यभेदमाह, देहेति ।—देहसिद्धिकरं देहस्य स्थैर्य्यरूपसिद्धिप्रदम् । शेषे द्वे पारावताभ-मयूरकण्ठाभे ॥ ६० ॥

वैक्रान्तग्रहणविधिमाह, यत्रेति ।—सुगमम् ॥ ६१ ॥

गुणान्तरमाह, वैक्रान्त इति ।—सुगमम् ॥ ६२ ॥

शोधनमाह, वैक्रान्तका इति ।—क्षारपटूनि यवक्षारपञ्चलवणानि । अम्लेषु अम्लवर्गरसे । कुलत्थरम्भानीरे कुलत्थक्वाथे कदलीकन्दरसे च । कोद्रवेति ।—कोद्रवः "कोदो" इति प्रसिद्धक्षुद्रधान्यविशेषः तस्य वारिणि क्वाथे पक्वाः ॥ ६३ ॥

मतान्तरे शोधनं मारणञ्चाह, कुलत्थेति ।—कुलत्थक्वाथेन सह दोलायन्त्रे संस्वेद्य पश्चात् समपरिमितगन्धकं जम्बीररसञ्च दत्त्वा अष्टपुटं देयम्, एवं वैक्रान्तो म्रियते इत्यर्थः ॥ ६४ ॥

मतान्तरम्।—

वैक्रान्तेषु च तप्तेषु हयमूत्रं विनिक्षिपेत्।
पौनःपुन्येन वा कुर्याद्द्रवं दत्त्वा पुटं त्वनु॥
भस्मीभूतन्तु वैक्रान्तं वज्रस्थाने नियोजयेत्॥ ६५॥

अथ सत्त्वपातनम्।—

मोच-मोरट-पालाशक्षार-गोमूत्रभावितम्।
वज्रकन्द-निशाकल्क-फलचूर्णसमन्वितम्॥ ६६॥
तत्कल्कं टङ्कणं लाक्षा-चूर्णं वैक्रान्तसम्भवम्।
नरसारसमायुक्तं मेषशृङ्गीद्रवान्वितम्॥ ६७॥
पिण्डितं मूकमूषस्थं ध्मापितञ्च हठाग्निना।
तत्रैव पतते सत्त्वं वैक्रान्तस्य न संशयः॥ ६८॥

मतान्तरम्।—

सत्त्वपातनयोगेन मर्दितश्च वटीकृतः।
मूषास्थो घटिकाध्मातो वैक्रान्तः सत्त्वमुत्सृजेत्॥ ६९॥

---

मतान्तरमाह, वैक्रान्तेष्विति।—पौनःपुन्येन एकविंशतिवारमित्यर्थः, तथा च रसेन्द्रसारसङ्ग्रहे—"हयमूत्रेण तत् सेच्यं तप्तं तप्तं त्रिसप्तधा" इति। द्रवं हयमूत्रमित्यर्थः। अनु पश्चात् पुटं कुर्य्यात् यावत् भस्मतां व्रजेत्॥ ६५॥

सत्त्वपातनमाह, मोचेति।—मोचः रम्भातरुः तस्य कन्दोऽत्र ग्राह्यः। मोरटम् इक्षुमूलम् अनयोः रसौ ग्राह्यः। पालाशक्षारः पलाशक्षारोदकम्। वज्रकन्दः वन्यशूरणकन्दः। निशाकल्कः हरिद्राचूर्णम्। फलचूर्णं त्रिफलाचूर्णम्। नरसारः "निशादल" इति ख्यातः। मेषशृङ्गी "मेड़ाशिङ्गे" इति भाषा, तदभावे कर्कटशृङ्गी ग्राह्या। मूकमूषा अन्धमूषेत्यर्थः, महामूषा वा सत्त्वपातनकर्मणि तस्या एवोपयोगित्वात्; तल्लक्षणञ्चाग्रे वक्ष्यमाणम्। हठाग्निना भस्त्राग्निना। अयमर्थः,—मोचादीनां रसेन वैक्रान्तं सम्भाव्य वज्रकन्दादीनां चूर्णेन नरसारचूर्णेन च संसृज्य मेषशृङ्गीद्रवेण सह मर्दयित्वा मूकमूषायां संस्थाप्य भस्त्राग्निना ध्मापितं कृत्वा सत्त्वमाहरेदिति॥ ६६—६८॥

मतान्तरमाह, सत्त्वेति।—सत्त्वपातनयोगेन सत्त्वपातनार्थद्रव्यसंयोगेन, तानि चोक्तानि रसेन्द्रचिन्तामणौ यथा—"गुडः पुरस्तथा लाक्षा पिण्याकं टङ्कणं तथा।

मृतवैक्रान्तस्य प्रयोगविधिर्गुणाश्च ।—

भस्मत्वं समुपागतो विकृतको हेम्ना मृतेनान्वितः
पादांशेन कणाऽऽज्यवेल्लसहितो गुञ्जामितः सेवितः ।
यक्ष्माणं जरणञ्च पाण्डुगुदजं श्वासञ्च कासामयं
दुष्टाञ्च ग्रहणीमुरःक्षतमुखान् रोगान् जयेद्देहकृत् ॥ ७० ॥

प्रयोगान्तरम् ।—

सूतभस्मार्द्धसंयुक्तं नीलवैक्रान्तभस्मकम् ।
मृताभ्रसत्त्वमुभयोस्तुलितं परिमर्दितम् ॥ ७१ ॥
क्षौद्राज्यसंयुतं प्रातर्गुञ्जामात्रं निषेवितम् ।
निहन्ति सकलान् रोगान् दुर्जयानन्यभेषजैः ॥
त्रिःसप्तदिवसैर्नॄणां गङ्गाम्भ इव पातकम् ॥ ७२ ॥

[ इति वैक्रान्ताधिकारः ] ।

## अथ माक्षिकम् ।—

अथ माक्षिकोत्पत्तिस्थाननिर्देशः ।—

सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः ।
ताप्यां किरातचीनेषु यवनेषु च निर्मितः ।
ताप्यः सूर्यांशुसन्तप्तो माधवे मासि दृश्यते ॥ ७३ ॥

---

ऊर्णा सर्ज्जरसश्चैव क्षुद्रमीनसमन्वितम् ॥ एतत् सर्वन्तु सञ्चूर्ण्य छागीदुग्धेन पिण्डिकाः ।
कृता ध्माताः खराङ्गारैः सत्त्वं मुञ्चति नान्यथा ॥" इति । घटिका षष्टिपलात्मक-
दण्डरूपः कालः ॥ ६९ ॥

वैक्रान्तस्य प्रयोगविधिं गुणांश्चाह, भस्मत्वमिति ।—विकृतकः वैक्रान्तः । पादांशेन
वैक्रान्तापेक्षया चतुर्थांशेन भस्मसुवर्णेन । कणाऽऽज्यवेल्लसहितः पिप्पलीविडङ्ग-
घृतसंयुक्तः, कणादीनाञ्च मात्रा यथायोग्यं बोध्या । गुञ्जामित इत्यस्य मृतहेमान्वित-
विकृतक इत्यनेन सम्बन्धः । जरणं जराम् । "जरणम्" इत्यत्र "जठरम्" इति पाठः
समीचीनः ॥ ७० ॥

प्रयोगान्तरमाह, सूतेति ।—सूतभस्म रससिन्दूरः ॥ ७१।७२ ॥

माक्षिकस्योत्पत्तिस्थानमाह, सुवर्णेति ।—काञ्चनः स्वर्णाभ इत्यर्थः । ताप्यां

अथ माक्षिकस्य गुणाः।—

मधुरः काञ्चनाभासः साम्लो रजतसन्निभः।
किञ्चित् कषायमधुरः शीतः पाके कटुर्लघुः॥
तत्सेवनाज्जराव्याधि-विषैर्न परिभूयते॥ ७४॥

अथ माक्षिकस्य द्वैविध्यं परिचयश्च।—

माक्षिको द्विविधो हेम-माक्षिकस्तारमाक्षिकः।
तत्राऽऽद्यं माक्षिकं कान्य-कुब्जोत्थं स्वर्णसन्निभम्॥७५॥
तपतीतीरसम्भूतं पञ्चवर्णसुवर्णवत्।
पाषाणबहुलः प्रोक्तस्ताराख्योऽल्पगुणात्मकः॥ ७६॥

गुणान्तरम्।—

माक्षीकधातुः सकलामयघ्नः प्रोक्तो रसेन्द्रस्य परं हि वृष्यः।
दुर्मेललोहद्वयमेलनश्च गुणोत्तरः सर्वरसायनाग्र्यः॥ ७७॥

तापीनदीतीरे। ताप्यः तापीनदीसमुद्भवः माक्षिक इति यावत्। माधवे वैशाखे॥ ७३॥

माक्षिकस्य गुणमाह, मधुर इति।—काञ्चनाभासः स्वर्णप्रभः, माक्षिक इति शेषः, स्वर्णमाक्षिक इत्यर्थः, साम्लमधुरः। रजतसन्निभः रौप्यमाक्षिकः किञ्चित् कषायमधुरः॥ ७४॥

माक्षिकस्य भेदादिकमाह, माक्षिक इति।—तारमाक्षिकः रौप्यमाक्षिकः। आद्यं माक्षिकं स्वर्णमाक्षिकम्। पाषाणबहुलः इत्यस्य ताराख्येन सम्बन्धः। योगरत्नाकरे स्वर्णमाक्षिकस्य लक्षणमुक्तं यथा—"भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः। बहुदर्पो इति ख्यातो माक्षिकोऽत्र प्रशस्यते॥" इति। किञ्च स्वर्णसाहित्यात् अस्य स्वर्णमाक्षिक इत्यभिधानं, तथा च—"किञ्चित्सुवर्णसाहित्यात् स्वर्णमाक्षिकमुच्यते" इति। अन्यत्र—"उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम्। तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम्॥" इति॥ ७५।७६॥

अस्य गुणान्तरमाह, माक्षीकधातुरिति।—प्रोक्तो रसेन्द्रस्य पारदस्य वीर्योत्कर्षजनक इत्यर्थः। दुर्मेलेति।—दुःखेन मिश्रणीयलोहद्वयस्य ऐक्यसम्पादकः। गुणोत्तरः महागुणः॥ ७७॥

अथ शोधनानि।—

एरण्डतैललुङ्गाम्बु-सिद्धं शुध्यति माक्षिकम्।
सिद्धं वा कदलीकन्द-तोयेन घटिकाद्वयम्।
तप्तं क्षिप्तं वराक्वाथे शुद्धिमायाति माक्षिकम् ॥७८॥

अथ मारणम्।—

मातुलुङ्गाम्बुगन्धाभ्यां पिष्टं मूषोदरे स्थितम्।
पञ्चक्रोड़पुटैर्दग्धं म्रियते माक्षिकं खलु ॥ ७९ ॥

मतान्तरम्।—

एरण्डस्नेहगव्याज्यैर्मातुलुङ्गरसेन वा।
खर्परस्थं दृढं पक्वं जायते धातुसन्निभम् ॥
एवं मृतं रसे योज्यं रसायनविधावपि ॥ ८० ॥

अथ सत्त्वपातनम्।—

त्रिंशांशनागसंयुक्तं क्षारैरम्लैश्च मर्दितम्।
ध्मातं प्रकटमूषायां सत्त्वं मुञ्चति माक्षिकम् ॥ ८१ ॥

अथ माक्षिकस्य सीसकग्रासः।—

सप्तवारं परिद्राव्य क्षिप्तं निर्गुण्डिकारसे।
माक्षीकसत्त्वसम्मिश्रं नागं नश्यति निश्चितम् ॥ ८२ ॥

---

शोधनान्याह, एरण्डतैलेत्यादि।—एरण्डतैललुङ्गाम्बुसिद्धं, दोलायन्त्रे इति शेषः। लुङ्गाम्बु मातुलुङ्गरसः। पक्षान्तरमाह,—सिद्धमिति। प्रकारान्तरमाह, तप्तमिति।—वराक्वाथे त्रिफलाक्वाथे ॥ ७८ ॥

मारणमाह, मातुलुङ्गेति।—पञ्चक्रोड़पुटैः वाराहपुटैः पञ्च वारान् ॥ ७९ ॥

मतान्तरमाह, एरण्डस्नेहेति।—एरण्डतैलगव्यच्छागपयोभिः सह पिष्टा इत्यर्थः। दृढं निश्चितं सम्यगित्यर्थो वा। धातुसन्निभं स्वर्णगैरिकतुल्यरक्ताभम् ॥ ८० ॥

सत्त्वपातनमाह, त्रिंशांशेति।—माक्षिकापेक्षया त्रिंशद्भागैकभागसीसकभस्म-संयुक्तम्। क्षारैः सर्जिकायावशूकटङ्कणाख्यक्षारत्रयैः। अम्लैः मातुलुङ्गाद्यम्ल-वर्गरसैः ॥ ८१ ॥

माक्षिकस्य सीसकग्रसनप्रक्रियामाह, सप्तवारमिति।—सीसकमग्नौ द्रवीकृत्य

प्रकारान्तरेण सत्त्वपातनम् ।—

क्षौद्रगन्धर्वतैलाभ्यां गोमूत्रेण घृतेन च ।
कदलीकन्दसारेण भावितं माक्षिकं मुहुः ॥
मूषायां मुञ्चति ध्मातं सत्त्वं शुल्बनिभं मृदु ॥ ८३ ॥

विशुद्धमाक्षिकसत्त्वस्य लक्षणम् ।—

गुञ्जाबीजसमच्छायं द्रुतद्रावञ्च शीतलम् ।
ताप्यसत्त्वं विशुद्धं तद्देहलोहकरं परम् ॥ ८४ ॥

माक्षिकसत्त्वस्य प्रयोगविशेषः ।—

माक्षीकसत्त्वञ्च रसेन पिष्टं कृत्वा विलीने च बलिं निधाय ।
सम्मिश्र्य सम्मर्द्य च खल्वमध्ये निक्षिप्य सत्त्वं द्रुतिमभ्रकस्य ॥
॥ ८५ ॥

विधाय गोलं लवणाख्ययन्त्रे पचेद्दिनार्द्धं मृदुवह्निना च ।
स्वतः सुशीतं परिचूर्ण्य सम्यग्वल्लोन्मितं व्योषविडङ्गयुक्तम् ॥
॥ ८६ ॥

संसेवितं क्षौद्रयुतं निहन्ति जरां सरोगान्त्वपमृत्युमेव ।
दुःसाध्यरोगानपि सप्तवासरैर्नैतेन तुल्योऽस्ति सुधारसोऽपि ॥
॥ ८७ ॥

सप्तवारं निर्गुण्डीरसे निर्वाप्य माक्षिकसत्त्वेन संयोजयेत्, एवञ्च तत् अवश्यमेव तत्र विलीयेत इत्यर्थः ॥ ८२ ॥

मतान्तरे सत्त्वपातनमाह, क्षौद्रेति ।—गन्धर्वतैलम् एरण्डतैलम् । मुहुः सप्तवारमित्यर्थः । शुल्बनिभं ताम्रसदृशपाटलवर्णमित्यर्थः ॥ ८३ ॥

विशुद्धस्य गुणमाह, गुञ्जाबीजेति ।—गुञ्जाबीजसमच्छायं गुञ्जासदृशरक्तवर्णमित्यर्थः । द्रुतद्रावं द्रूयते विलीयते द्रवीभूयते अनेनेति व्युत्पत्त्या द्रुतशब्देनात्र अग्निः गृह्यते, द्रुतेन अग्निना द्रावं सन्तप्तं तरलीभूतमित्यर्थः ॥ ८४ ॥

प्रयोगविधिमाह, माक्षीकेति ।—विलीने मिश्रिते इत्यर्थः । बलिं गन्धकम् । सत्त्वमित्यादि ।—अभ्रस्य तरलसारमित्यर्थः । लवणाख्ययन्त्रे लवणयन्त्रे तन्नामकयन्त्रे इत्यर्थः ॥ ८५—८७ ॥

अथ माक्षिकसत्त्वद्रावणम् ।—

एरण्डोत्थेन तैलेन गुञ्जा क्षौद्रञ्च टङ्कणम् ।
मर्दितं तस्य वापेन सत्त्वं माक्षीकजं द्रवेत् ॥ ८८ ॥

[ इति माक्षिकाधिकारः ]।

## अथ विमलः ।—

अथ विमलभेदाः ।—

विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्वकः ।
तृतीयः कांस्यविमलस्तत्तत्कान्त्या स लक्ष्यते ॥८९॥

अथ विमलस्य लक्षणं गुणाश्च ।—

वर्त्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः ।
मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ॥ ९० ॥

अथ त्रिविधस्य तस्य क्रियाविशेषः ।—

पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मतः ।
तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तरः ॥ ९१ ॥

अथ विमलशोधनम् ।—

आटरूषजले स्विन्नो विमलो विमलो भवेत् ।
जम्बीरस्वरसे स्विन्नो मेषशृङ्गीरसेऽथवा ।
आयाति शुद्धिं विमलो धातवश्च यथा परे ॥ ९२ ॥

माक्षिकसत्त्वद्रावणमाह, एरण्डोत्थेनेति ।—गुञ्जा गुञ्जाबीजम् । तस्य वापेन मृष्ट-गुञ्जादेः तत्र प्रक्षेपेण तत्कल्कमध्ये स्थापनेनेत्यर्थः ॥ ८८ ॥

विमलस्य भेदमाह, विमल इति ।—विमलः माक्षिकविशेषः । तत्तत्कान्त्या हेमादीनां प्रभया । पर्य्यायमुक्तावलीकृता विमलशब्देन रौप्यमाक्षिकं गृहीतम् ॥८९॥

विमलस्याकृतिं गुणांश्चाह, वर्त्तुल इति ।—सुगमम् ॥ ९० ॥

त्रिविधस्य तस्य क्रियाविशेषमाह, पूर्व इति ।—हेमक्रियासु स्वर्णाभावे तत्कार्य्य-करणार्थमित्यर्थः । रूप्यकृत् रौप्यकार्य्यकृदित्यर्थः ॥ ९१ ॥

तस्य शोधनमाह, आटरूषेति ।—आटरूषजले वासकपत्र-स्वरसे क्वाथे वा । स्विन्नः, दोलायन्त्रे इति शेषः । परे अन्ये ॥ ९२ ॥

अथ विमलमारणम् ।—

**गन्धाश्मलकुचाम्लैश्च म्रियते दशभिः पुटैः ॥ ९३ ॥**

अथ सत्त्वपातनम् ।—

**सटङ्कलकुचद्रावैर्मेषशृङ्ग्याश्च भस्मना ।**
**पिष्टो मूषोदरे लिप्तः संशोष्य च निरुध्य च ॥ ९४ ॥**
**षट्प्रस्थकोकिलैर्ध्मातो विमलः सीससन्निभः ।**
**सत्त्वं मुञ्चति तद्युक्तो रसः स्यात् स रसायनः ॥ ९५ ॥**

मतान्तरम् ।—

**विमलं शिग्रुतोयेन काङ्क्षी कासीसटङ्कणम् ।**
**वज्रकन्दसमायुक्तं भावितं कदलीरसैः ॥ ९६ ॥**
**मोक्षक-क्षारसंयुक्तं ध्मापितं मूकमूषगम् ।**
**सत्त्वं चन्द्रार्कसङ्काशं पतते नात्र संशयः ॥ ९७ ॥**

अथ प्रयोगविधिः ।—

**तत् सत्त्वं सूतसंयुक्तं पिष्टं कृत्वा सुमर्दितम् ।**
**विलीनं गन्धके क्षिप्त्वा जारयेत्त्रिगुणात्मकम् ॥ ९८ ॥**
**शिलां पञ्चगुणाञ्चापि वालुकायन्त्रके खलु ।**
**तारभस्म दशांशेन तावद्वैक्रान्तकं मृतम् ॥ ९९ ॥**

---

विमलस्य मारणमाह, गन्धाश्मेति ।—गन्धाश्मा गन्धकः, लकुचः लकुचस्वरसः, लकुचः "डहुया" "मन्दार" इति वा ख्यातः अम्लः अम्लवर्गः ते तैः ॥ ९३ ॥

सत्त्वमङ्क्षणमाह, सटङ्केति ।—षट्प्रस्थकोकिलैः द्वादशशरावमितवदरकाष्ठाङ्गारैः ; विमलं टङ्कणमेषशृङ्गीभस्मभ्यां सम्मिश्य लकुचद्रावैः पिष्ट्वा मूषागर्भे संलिप्यातपे संशोष्य पश्चात् मूषां तां निरुध्य द्वादशशरावमितवदरकाष्ठाङ्गारेण भस्त्रया ध्मापयेत्, तेन विमलः सीसकसदृशः सन् सत्त्वं मुञ्चतीति निष्कर्षः ॥ ९४।९५ ॥

प्रकारान्तरमाह, विमलमिति ।—काङ्क्षी सौराष्ट्रमृत्तिका । मोक्षकः मुष्ककः घण्टापाटला इति यावत् ; काङ्क्ष्यादिवज्रकन्दान्तैः विमलं संयोज्य शिग्रुमूलरसेन तथा कदलीमूलरसेन च भावयित्वा घण्टापाटलिकाक्षारेण सम्मिश्य मूषामध्ये ध्मापयित्वा धमेदित्यर्थः ॥ ९६।९७ ॥

विमलसत्त्वस्य प्रयोगं गुणांश्चाह, तत्सत्त्वमिति ।—जारयेत् त्रिगुणात्मकं विमल-

सर्वमेकत्र सञ्चूर्ण्य पटेन परिगाल्य च।
निक्षिप्य कूपिकामध्ये परिपूर्य्य प्रयत्नतः ॥ १०० ॥
क्षौद्रो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो
हन्याद्दुर्भगकज्ज्वरान् श्वयथुकं पाण्डुप्रमेहारुचीः।
मूलार्त्तिं ग्रहणीञ्च शूलमतुलं यक्ष्मामयं कामलां
सर्वान् पित्तमरुद्गदान् किमपरैर्योगैरशेषामयान् ॥१०१॥
[ इति विमलाधिकारः ]।

अथ शिलाजतु।—

अथ शिलाजतुनो भेदः।—

शिलाधातुर्द्विधा प्रोक्तो गोमूत्राद्यो रसायनः।
कर्पूरपूर्वकश्चान्यस्तत्राऽऽद्यो द्विविधः पुनः॥
ससत्त्वश्चैव निःसत्त्वस्तयोः पूर्वो गुणाधिकः ॥ १०२ ॥

अथ शिलाजतुन उत्पत्तिकथनम्।—

ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः।
स्वर्णरूप्यार्कगर्भेभ्यः शिलाधातुर्विनिःसरेत् ॥ १०३ ॥

सत्त्वापेक्षया त्रिगुणहरितालं दत्त्वा जारणां कुर्य्यादित्यर्थः। "जारयेत् त्रिगुणात्मकम्" इति पाठे—वातपित्तकफनाशनरूपगुणत्रयविशिष्टम् इत्यर्थः। दुर्भगकज्ज्वरान् श्रीहीनताकरज्वरान्, वैरूप्यजनकज्वरानित्यर्थः, यद्वा,—दुर्भगकत्र भगन्दरः। मूलार्त्तिं शिरोरोगम्। अयमर्थः,—विमलसत्त्वं तुल्यरसेन सम्मर्द्य पक्वीभूते सति तयोस्तुल्यं गन्धकं त्रिगुणहरितालं तथा पञ्चगुणमनःशिलाञ्च दत्त्वा सम्मिश्र्य वालुकायन्त्रे दिनमेकं पचेत्, स्वाङ्गशीते च समुद्धृत्य दशमांशरौप्यभस्म तावच्च मृतवैक्रान्तं दत्त्वा सञ्चूर्ण्य वस्त्रपूतं काचकूप्यां स्थापयेत्। तच्चूर्णमल्परूपं गृहीत्वा व्योषादिभिः सह सेवितं वक्ष्यमाणगुणं कुर्य्यात् इति वृद्धाः ॥ ९८—१०१ ॥

अथ शिलाजतुनो द्वैविध्यमाह, शिलेति।—गोमूत्राद्यः गोमूत्रशिलाजतु गोमूत्रगन्धिशिलाजतु इत्यर्थः। अन्यः कर्पूरपूर्वकः कर्पूरशिलाजतु कर्पूरगन्धिशिलाजतु इत्यर्थः। पूर्वः गोमूत्रशिलाजतु ॥ १०२ ॥

शिलाजतुन उत्पत्तिमाह, ग्रीष्मे इति।—पादेभ्यः प्रत्यन्तपर्वतेभ्यः। स्वर्णेति।—स्वर्णरूप्यार्काः गर्भे येषां तेभ्यः। अर्कः ताम्रम् ॥ १०३ ॥

अथ त्रिविधस्य तस्य गुणाः ।—

स्वर्णगर्भगिरेर्जातो जपापुष्पनिभो गुरुः ।
स स्वल्पतिक्तः सुस्वादुः परमं तद्रसायनम् ॥१०४॥
रूप्यगर्भगिरेर्जातं मधुरं पाण्डुरं गुरु ।
शिलाजं पित्तरोगघ्नं विशेषात् पाण्डुरोगहृत् ॥ १०५ ॥
ताम्रगर्भगिरेर्जातं नीलवर्णं घनं गुरु ।
शिलाजं कफवातघ्नं तिक्तोष्णं क्षयरोगहृत् ॥ १०६ ॥

अथ विशुद्धशिलाजतुलक्षणम् ।—

वह्नौ क्षिप्तं भवेद्यत्तु लिङ्गाकारमधूमकम् ।
सलिलेऽप्यविलीनञ्च तच्छुद्धं हि शिलाजतु ॥ १०७ ॥

अथ गुणाः ।—

नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमान्द्यापहं
मेदश्छेदकरञ्च यक्ष्मशमनं शूलामयोन्मूलनम् ।
गुल्मप्लीहविनाशनं जठर-हृच्छूलघ्नमामापहं
सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ॥ १०८ ॥
रसोपरस-सूतेन्द्र-रत्न-लोहेषु ये गुणाः ।
वसन्ति ते शिलाधातौ जरामृत्युजिगीषया ॥ १०९ ॥

---

तत्रादौ स्वर्णादिभ्य उत्पत्तिभेदेन त्रिविधस्य गोमूत्रगन्धिनः तस्य लक्षणादिकमाह, स्वर्णेति ।—तन्त्रान्तरे तु उत्पत्तिभेदेन भिन्नस्य तस्य चातुर्विध्यमुक्तं, यथा चरके—"गात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः । हेम्नोऽथ रजतात्ताम्रात् वरं कालायसा-दपि ॥" इति । अत्र तु आयसं नोक्तं, तल्लक्षणमपि तत्रैव द्रष्टव्यं यथा—"यत्तु गुग्गुलु-सङ्काशं तिक्तकं लवणान्वितम् । विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम् ॥ गोमूत्रगन्धि सर्वेषां सर्वकर्मसु यौगिकम् । रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ॥" इति । अत्र हैम-शिलाजतुनो परमरसायनत्वेनोक्तत्वात् आयसस्यापि मुख्यतः रसायनगुणत्वेन एक-कार्य्यकत्वात् आयसं पृथङ्नोक्तमिति मन्तव्यम् ॥ १०४—१०६ ॥

विशुद्धस्य तस्य लिङ्गमाह, वह्नाविति ।—सुगमम् ॥ १०७ ॥

तस्य गुणमाह; नूनमिति ।—देहे च लोहे हितं—देहस्य स्थिरीकरणे रसवर्द्धन-क्रियायाञ्च हितम् ॥ १०८।१०९ ॥

अथ शोधनम् ।—

क्षाराम्लगोजलैर्धौतं शुध्यत्येव शिलाजतु ॥ ११० ॥

मतान्तरम् ।—

शिलाधातुश्च दुग्धेन त्रिफला-मार्कवद्रवैः ।
लोहपात्रे विनिक्षिप्य शोधयेदतियत्नतः ॥ १११ ॥

मतान्तरम् ।—

क्षाराम्लगुग्गुलोपेतैः स्वेदनीयन्त्रमध्यगैः ।
स्वेदितो घटिकामानाच्छिलाधातुर्विशुध्यति ॥ ११२ ॥

अथ मारणम् ।—

शिलया गन्धतालाभ्यां मातुलुङ्गरसेन च ।
पुटितो हि शिलाधातुर्म्रियतेऽष्टगिरिण्डकैः ॥ ११३ ॥

अथ प्रयोगविधिः ।—

भस्मीभूतशिलोद्भवं समतुलं कान्तञ्च वैक्रान्तकं
युक्तञ्च त्रिफलाकटुत्रिकघृतैर्वल्लेन तुल्यं भजेत् ।

---

शिलाजतुशोधनमाह, क्षारेति ।—अत्र जलशब्दः क्षारादिभिः प्रत्येकं सम्बध्यते, ततश्च यवक्षारोदकेन काञ्जिकेन गोमूत्रेण च लोहपात्रे एकैकदिनं धौतं कृत्वा आतपे संशोष्य गृह्णीयात । अत्र यद्यपि आतपशोषणं नोक्तं तथाऽपि तन्त्रान्तरदर्शनात् वृद्ध-वैद्यव्यवहारसिद्धत्वाच्च तत् कार्य्यम् ॥ ११० ॥

मतान्तरमाह, शिलेति ।—अत्रापि पूर्ववत् प्रत्येकद्रवेण एकैकदिनं मर्दयित्वा आतपे सशोष्य शोधयेदित्यर्थः ॥ १११ ॥

मतान्तरमाह, क्षारेति ।—क्षाराम्लगुग्गुलोपेतैरित्यस्य "दुग्धेन त्रिफलामार्कवद्रवैः" इति पूर्ववाक्येन सम्बन्धः कल्पनीयः । स्वेदनीयन्त्रमग्रे वक्ष्यति । स्वेदनप्रकारश्चायं— स्थालीमध्ये दुग्धादिगुग्गुलान्तं सर्वमेकीकृत्य निधाय स्थालीमुखं वस्त्रेण बद्ध्वा तदुपरि शिलाजतु संस्थाप्य शरावेणाच्छाद्य सन्धिं लिप्त्वा घटिकां यावत् स्वेदयेत् इति ॥ ११२ ॥

मारणमाह, शिलयेति ।—शिलया मनःशिलया । शिलादीनां प्रत्येकं शिलाजतु-तुल्यत्वं मातुलुङ्गरसस्य पेषणयोग्यो देयः । गिरिण्डकः वनोपलः ॥ ११३ ॥

पाण्डौ यक्ष्मगदे तथाऽग्निसदने मेहेषु मूलामये
गुल्मप्लीह-महोदरे बहुविधे शूले च योन्यामये ॥ ११४ ॥

सेवेत यदि षण्मासं रसायनविधानतः।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥ ११५ ॥

अथ सत्त्वपातनम्।—

पिष्टं द्रावणवर्गेण साम्लेन गिरिसम्भवम्।
क्षिप्त्वा मूषोदरे रुद्ध्वा गाढ़ैर्ध्मातं हि कोकिलैः॥
सत्त्वं मुञ्चेच्छिलाधातुस्तत्क्षणात् लोहसन्निभम् ॥ ११६ ॥

कर्पूरशिलाजतुनो लक्षणादिकम्।—

पाण्डुरं सिकताकारं कर्पूराद्यं शिलाजतु।
मूत्रकृच्छ्राश्मरीमेह-कामलापाण्डुनाशनम् ॥ ११७ ॥

अथ तस्य शोधनम्।—

एलातोयेन सम्भिन्नं सिद्धं शुद्धिमुपैति तत्।
नैतस्य मारणं सत्त्व-पातनं विहितं बुधैः ॥ ११८ ॥

[ इति शिलाजत्वधिकारः ]।

---

मृतशिलाजतुनः प्रयोगं गुणांश्चाह, भस्मीभूतेति।—समतुलं समपरिमितम्। कान्तं कान्तलौहम्। वह्निन तुल्यमिति भस्मीभूतशिलाजतुसामत्र्येन सह योजनीयम्। कान्तवैक्रान्तयोः प्रत्येकं तत्समत्वम्। त्रिफलादिकमनुपानं दत्त्वा सेव्यम्। मूलामये शिरोरोगे। रसायनविधानतः कुटीप्रवेशादिरसायनविधिमनुसृत्येत्यर्थः ॥ ११४।११५ ॥

सत्त्वपातनमाह, पिष्टमिति।—द्रावणवर्गेण "गुड़गुग्गुलुगुञ्जाज्य-सारघैटङ्कणान्वितैः। दुर्द्रावाखिललोहादेर्द्रावणाय गणो मतः॥" इति वक्ष्यमाणवर्गेण। साम्लेन सकाञ्जिकेन। कोकिलैः वादराङ्गारैः ॥ ११६ ॥

इदानीं कर्पूरगन्धिशिलाजतुनो लक्षणादिकमाह, पाण्डुरमिति।—सुगमम् ॥११७॥

तस्य शोधनमाह, एलेति।—सम्भिन्नं मिश्रितं मर्दितं वा। सिद्धम् एलातोयेनैव स्विन्नम्। नैतस्येति।—एतस्य कर्पूरशिलाजतुनः ॥ ११८ ॥

## अथ सस्यकः ।—

अथ सस्यकोत्पत्तिः ।—

पीत्वा हालाहलं वान्तं पीतामृतगरुत्मता ।
विषेणामृतयुक्तेन गिरौ मरकताह्वये ॥
तद्वान्तं हि घनीभूतं सञ्जातं सस्यकं खलु ॥ ११९ ॥

अथ प्रशस्तसस्यकलक्षणम् ।—

मयूरकण्ठसच्छायं भाराढ्यमतिशस्यते ॥ १२० ॥

अथ सस्यकस्योत्कर्षकथनम् ।—

द्रव्यं विषयुतं यत्तद्द्रव्याधिकगुणं भवेत् ।
सुधा हालाहलैर्युक्ता सुधाधिकगुणा तथा ॥ १२१ ॥

अथ गुणाः ।—

निःशेषदोष-विष-हृद्गद-शूल-मूल-
कुष्ठाम्लपैत्तिक-विबन्धहरं परञ्च ।
रसायनं वमनरेककरं गरघ्नं
श्वित्रापहं गदितमत्र मयूरतुत्थम् ॥ १२२ ॥

सस्यकोत्पत्तिमाह, पीत्वेति ।—वान्तं वमनं कृतम् । पीतामृतगरुत्मता अमृतं पीतवता गरुडेन । सस्यकं तुत्थनाम । गरुडोद्गीर्णमविषममृतं कालेन घनीभूतं सस्यकं जातमित्यर्थः । यद्यप्यस्य भेदादिकं ग्रन्थकारेण नोक्तं, तथाऽपि तन्त्रान्तर-दर्शनात् द्वैविध्यं ज्ञेयम् ; यथा—"तुत्थं द्विविधं—मयूरं खर्परीतुत्थञ्च । तुत्थं कटु-कषायोष्णं श्वित्रनेत्रामयापहम् । विषदोषेषु सर्वेषु प्रशस्तं वान्तिकारकम् ॥ खर्परी कटुका तिक्ता चक्षुष्या च रसायनी । त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्द्धिनी ॥" इति रत्नमालायाम् ॥ ११९ ॥

प्रशस्तसस्यकस्य लक्षणमाह, मयूरेति ।—सुगमम् ॥ १२० ॥

तस्य श्रोत्कर्षमाह, द्रव्यमिति ।—यत् द्रव्यं विषयुतं तत् द्रव्यं द्रव्यात् विषरहित-सजातीयादिति भावः, अधिकगुणं भवेत् ॥ १२१ ॥

तस्य गुणमाह, निःशेषेति ।—रेककरं विरेचकम् । मयूरतुत्थं मयूरकण्ठाभ-तुत्थकम् । गरघ्नं संयोगजविषनाशनम् ॥ १२२ ॥

अथ शोधनम्।—

सस्यकं शुद्धिमाप्नोति रक्तवर्गेण भावितम्॥ १२३॥

मतान्तरम्।—

स्नेहवर्गेण संसिक्तं सप्तवारमदूषितम्।
दोलायन्त्रेण सुस्विन्नं सस्यकं प्रहरत्रयम्॥
गोमहिष्याजमूत्रेषु शुध्यते—"॥ १२४॥

अथ तुत्थखर्परमारणम्।—

—तुत्थखर्परम्।
लकुचद्राव-गन्धाश्म-टङ्कणेन समन्वितम्॥
निरुध्य मूषिकामध्ये म्रियते कौक्कुटैः पुटैः॥ १२५॥

अथ सत्त्वपातनम्।—

सस्यकस्य तु चूर्णन्तु पादसौभाग्यसंयुतम्।
करञ्जतैलमध्यस्थं दिनमेकं निधापयेत्॥ १२६॥
अन्धमूषाऽऽस्यमध्यस्थं ध्मापयेत् कोकिलत्रयम्।
इन्द्रगोपाकृति चैव सत्त्वं भवति शोभनम्॥ १२७॥

---

शोधनमाह, सस्यकमिति।—रक्तवर्गेण वक्ष्यमाणकुसुम्भादिक्वाथेनेत्यर्थः। भावितमित्यत्र सप्तवारमिति शेषः॥ १२३॥

मतान्तरे शोधनमाह, स्नेहेति।—स्नेहवर्गेण घृततैलवसामज्जरूपेण सप्तवारं संसिक्तं भावितमित्यर्थः। अदूषितं विशुद्धम्। गोमहिष्याजमूत्रेषु दोलायन्त्रेण प्रहरत्रयं सुस्विन्नमित्यन्वयः॥ १२४॥

खर्परीतुत्थमारणमाह, तुत्थखर्परमिति।—कौक्कुटैः पुटैः,—"अधः षडङ्गुलं खातं चतुर्दिक्षु च तादृशम्। एतं कुक्कुटनामानं पुटं विद्याद्भिषग्वरः॥" इत्युक्तलक्षणकैः शुष्कवनोपलसाध्यपुटविशेषैः॥ १२५॥

सत्त्वपातनमाह, सस्यकस्येति।—पादसौभाग्यसंयुतं सस्यकापेक्षया चतुर्थांशटङ्कणसंयुक्तम्। कोकिलत्रयं कोकिलेन बदरकाष्ठाङ्गारेण दग्धं वारत्रयम् इत्यर्थः। इन्द्रगोपाकृति तदाख्यरक्तवर्णकीटविशेषसदृशम्, आरक्तवर्णमित्यर्थः॥१२६॥१२७॥

मतान्तरम् ।—

निम्बुद्रवाल्पटङ्काभ्यां मूषामध्ये निरुध्य च ।
ताम्ररूपं परिध्मातं सत्त्वं मुञ्चति सस्यकम् ॥ १२८ ॥

मतान्तरम् ।—

शुद्धं सस्यं शिखिक्रान्तं पूर्वभेषजसंयुतम् ।
नानाविधानयोगेन सत्त्वं मुञ्चति निश्चितम् ॥ १२९ ॥

अथ प्रयोगविधिः ।—

सत्त्वमेतत् समादाय खर-भूनागसत्त्वयुक् ।
तन्मुद्रिका कृतस्पर्शा शूलघ्नी तत्क्षणाद्भवेत् ॥ १३० ॥
चराचरं विषं भूत-डाकिनी-दृग्गतं जयेत् ।
मुद्रिकेयं विधातव्या दृष्टप्रत्ययकारिका ॥ १३१ ॥

अथ आलुकितन्त्रोक्तप्रयोगविधिः ।—

"रामवल्लोमसेनानीर्मुद्रितेऽपि तथाऽऽत्वरम् ।
हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः ॥

---

मतान्तरमाह, निम्बुद्रवेति ।—अल्पटङ्कः पादसौभाग्यमित्यर्थः । ताम्ररूपं ताम्रवर्णं सत्त्वमिति योजनीयम् ॥ १२८ ॥

मतान्तरमाह, शुद्धमिति ।—शिखिक्रान्तं वह्निना दग्धम् । पूर्वभेषजसंयुतं पूर्वोक्तनिम्बुद्रवादिसमन्वितमित्यर्थः ॥ १२९ ॥

प्रयोगविधिमाह, सत्त्वमिति ।—खरभूनागसत्त्वयुक् खरः दुरालभा भूनागसत्त्वं सीसकसारः ताभ्यां युनक्ति इति खरभूनागसत्त्वयुक् । "खर" इत्यत्र "कर्ष" इति पाठः समीचीनः; तत्पक्षे—कर्षं भूनागसत्त्वमिति । मुद्रिका चक्रिका इत्यर्थः । तन्मुद्रिकेत्यादि ।—पूर्वोक्तविधानेन सङ्गृहीततुल्यकसत्त्वं सीसकसत्त्वेन तुल्येन संयोज्य दुरालभारसेन चक्रिकां विधाय शूलिनो जठरोपरि भ्रामयेत् तत्क्षणादेव शूलादिकं नश्यतीत्यर्थः । चराचरमित्यादि ।—चराचरं स्थावरजङ्गमं तथा भूतडाकिन्योः दृग्गतं दर्शनजनितं विषमिति योजनीयम् ॥ १३०।१३१ ॥

तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम्" ॥ १३२ ॥
मन्त्रेणानेन मुद्राऽम्भो निपीतं सप्तमन्त्रितम्।
सद्यः शूलहरं प्रोक्तमिति भालुकिभाषितम् ॥ १३३ ॥

अथ प्रयोगान्तरम्।—

अनया मुद्रया तप्तं तैलमग्नौ सुनिश्चितम्।
लेपितं हन्ति वेगेन शूलं यत्र क्वचिद्भवेत् ॥
सद्यः सूतिकरं नार्य्याः सद्यो नेत्ररुजापहम् ॥ १३४ ॥

[ इति सस्यकाधिकारः ]।

अथ चपलः।—

अथ चपलस्य भेदादिकथनं निरुक्तिश्च।—

गौरः श्वेतोऽरुणः कृष्णश्चपलस्तु चतुर्विधः।
हेमाभश्चैव ताराभो विशेषाद्रसबन्धनः ॥ १३५ ॥
शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ।
वङ्गवद्द्रवते वह्नौ चपलस्तेन कीर्त्तितः ॥ १३६ ॥

अथ गुणाः।—

चपलो लेखनः स्निग्धो देहलोहकरो मतः।
रसराजसहायः स्यात्तिक्तोष्णमधुरो मतः ॥ १३७ ॥

---

भालुकितन्त्रोक्तप्रयोगभेदमाह, रामवदिति।—रामवदित्यादि गतमित्यन्तेन मन्त्रेण सप्तवारमभिमन्त्रितं मुद्राभिषिक्तं जलं पीतमेव शूलहरं भवेदित्यर्थः ॥१३२।१३३॥

प्रयोगान्तरमाह, अनयेति।—सूतिकरं प्रसवकारकम् ॥ १३४ ॥

चपलस्य भेदं निरुक्तिञ्चाह, गौर इति।—चपलः यशदः, दस्ता इति लोके। हेमाभः गौर इत्यर्थः। ताराभः श्वेतः। शेषौ कृष्णारुणौ। मध्यौ मध्यमगुणसम्पन्नौ। लाक्षेति।—कृष्णारुणौ लाक्षावत् शीघ्रद्रावौ चेत् निष्फलौ इत्यर्थः। निरुक्तिर्यथा वङ्गवदिति।—सुगमम् ॥ १३५।१३६ ॥

गुणमाह, चपल इति।—लेखनः दूषितचर्मविदारकः वान्तिकरो वा, चर्मविदारणक्रियासु वमनकार्य्येषु वा प्रयोज्यः इत्यर्थः। रसराजस्य पारदस्य सहायः संयोगेन गुणाधिक्यजनक इत्यर्थः ॥ १३७ ॥

अथ वर्णाकृतिभेदेन गुणभेदः ।—

चपलः स्फटिकच्छायः षडस्रः स्निग्धको गुरुः ।
त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः ॥ १३८* ॥

चपलस्य महारसत्वकथनम् ।—

महारसेषु कैश्चित्तु चपलः परिकीर्त्तितः ॥ १३९ ॥

अथ शोधनम् ।—

जम्बीरकर्कोटकशृङ्गवेरैर्विभावनाभिश्चपलस्य शुद्धिः ॥ १४० ॥

अथ सत्त्वपातनम् ।—

शैलन्तु चूर्णयित्वा तु धान्याम्लोपविषैर्विषैः ।
पिण्डं बद्ध्वा तु विधिवत् पातयेच्चपलं तथा ॥ १४१ ॥

[ इति चपलाधिकारः ] ।

---

वर्णाकृतिभेदेन तस्य गुणभेदमाह, चपल इति ।—षडस्रः षट्कोणविशिष्टः ; स्फटिकच्छायः षडस्रः चपलः स्निग्ध इत्यादिगुणविशिष्टः ॥ १३८ ॥

तन्त्रान्तरे उपरसमध्ये पठिता एते अभ्रादयः निबन्धकृता महारसोपरसभेदेन द्विधा विभज्य उल्लिखिताः, अभ्रादीनां महावीर्य्यत्वात् बहुलप्रयोगदर्शनाच्च महारसत्वन्तु कदाचित् युज्यते, चपलस्य तु न तथात्वं दृश्यते, अतस्तस्योपरसत्वमाशङ्कमानानां मतं निरसितुं स्वोक्तेर्दार्ढ्यार्थञ्चाह, महेति ।—सुगमम् ॥ १३९ ॥

शोधनमाह, जम्बीरेति ।—कर्कोटकः "काँकरोल" इति ख्यातः ; जम्बीरादीनां रसैः सप्तभिर्भावनाभिः विशुद्धिमायातीत्यर्थः ॥ १४० ॥

सत्त्वपातनमाह, शैलमिति ।—शैलं शिलाजतु । उपविषाणि लाङ्गल्यादीन्यग्रे वक्ष्यमाणानि । विषाणि शृङ्गादीनि तान्यप्यग्रे वाच्यानि, शैलादि चपलान्तं द्रव्यजातं काञ्जिकेन सम्मर्द्य पिण्डं कृत्वा पूर्ववत् मूषामध्ये निरुध्य कोष्ठिकेध्मापयेत्, तेन सत्त्वं मुञ्चेदित्यर्थः ॥ १४१ ॥

अथ रसकः।—

अथ रसकस्य भेदलक्षणे।—

रसको द्विविधः प्रोक्तो दुर्दुरः कारवेल्लकः।
सदलो दुर्दुरः प्रोक्तो निर्दलः कारवेल्लकः॥ १४२॥

तयोः प्रयोगविषयः गुणाश्च।—

सत्त्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु।
रसकः सर्वमेहघ्नः कफपित्तविनाशनः॥
नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः॥ १४३॥
नागार्जुनेन सन्दिष्टौ रसश्च रसकावुभौ।
श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परम्॥ १४४॥
रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ।
देहलोहमयी सिद्धिर्दासी तस्य न संशयः॥ १४५॥

अथ शोधनम्।—

कटुकालाबुनिर्यास आलोड्य रसकं पचेत्।
शुद्धं दोषविनिर्मुक्तं पीतवर्णञ्च जायते॥ १४६॥

मतान्तरम्।—

खर्परः परिसन्तप्तः सप्तवारं निमज्जितः।
वीजपूर-रसस्यान्तर्निर्मलत्वं समश्नुते॥ १४७॥

---

रसकस्य द्वैविध्यं लक्षणञ्चाह, रसक इति।—रसकः खर्परीतुत्थकविशेषः; यदुक्तं भावप्रकाशे—"खर्परीतुत्थकं तुत्थादन्यत्तत् रसकं स्मृतम्। ये गुणास्तुत्थके प्रोक्तास्ते गुणाः रसके स्मृताः॥" इति। सदलः सपत्रः, वंशपत्रहरितालवदिति भावः॥१४२॥

कार्य्येषु प्रयोगं गुणांश्चाह, सत्त्वपाते इति।—पूर्वः दुर्दुरः। द्वितीयः कारवेल्लकः॥ १४३—१४५॥

शोधनमाह, कटुकेति।—पचेत् इत्यत्र दोलायन्त्रे इति शेषः॥ १४६॥

मतान्तरमाह, खर्पर इति।—खर्परमग्नौ सन्ताप्य मातुलुङ्गरसाभ्यन्तरे निमज्जेत् एवं सप्तवारकरणेन शुद्धिमायातीत्यर्थः॥ १४७॥

मतान्तरम्।—

नृमूत्रे वाऽश्वमूत्रे वा तक्रे वा काञ्जिकेऽथवा।
प्रताप्य मज्जितं सम्यक् खर्परं परिशुध्यति॥ १४८॥

अथ रसकस्य ताम्रादिरञ्जनविधिः।—

नरमूत्रे स्थितो मासं रसको रञ्जयेद्ध्रुवम्।
शुद्धताम्रं रसं तारं शुद्धस्वर्णप्रभं यथा॥ १४९॥

अथ सत्त्वमङ्गुरः।—

हरिद्रा-त्रिफला-राल-सिन्धु-धूमैः सटङ्कणैः।
सारुष्करैश्च पादांशैः साम्लैः सम्मर्द्य खर्परम्॥ १५०॥
लिप्तं वृन्ताकमूषायां शोषयित्वा निरुध्य च।
मूषां मूषोपरि न्यस्य खर्परं प्रधमेत्ततः॥ १५१॥
खर्परे प्रद्रुते ज्वाला भवेन्नीला सिता यदि।
तदा सन्दंशतो मूषां धृत्वा कृत्वा त्वधोमुखीम्॥ १५२॥
शनैरास्फालयेद्भूमौ यथा नालं न भज्यते।
वङ्गाभं पतितं सत्त्वं समादाय नियोजयेत्॥
एवं त्रिचतुरैर्वारैः सर्वं सत्त्वं विनिःसरेत्॥ १५३॥

मतान्तरमाह, नृमूत्रे इति।—अत्रानुक्तत्वेऽपि पूर्ववत् सप्तवारं निमज्जनं ज्ञेयम्॥ १४८॥

तस्य ताम्रादिरञ्जनविधिमाह, नरमूत्रे इति।—सुगमम्॥ १४९॥

सत्त्वमङ्गुरमाह, हरिद्रेति।—रालः सर्जरसः। धूमः गृहधूमः। अरुष्करः भल्लातकः। वृन्ताकमूषालक्षणमग्रे वाच्यम्। शोधितखर्परं प्रत्येकं पादांशैः हरिद्रादिभिः सह काञ्जिकाम्लेन सम्मर्द्य वृन्ताकमूषोदरे लिप्त्वा आतपे संशोष्य निरुध्य मूषान्तरोपरि संस्थाप्य च भस्त्राग्निना प्रधमेत्। खर्परे द्रवीभूते सति नील-वर्णानलशिखा यदा शुभ्रा भवेत्, तदा सन्दंशेन मूषां गृहीत्वा अधोमुखीं कृत्वा च नालदण्डं यथा न भज्यते तथा भूमौ मन्दं मन्दं ताडयेत्, एवं त्रिचतुर्वारान् कुर्यात् इत्युपदेशः॥ १५०—१५३॥

मतान्तरम् ।—

साभया-जतु-भूनाग-निशा-धूमज-टङ्कणम् ।
मूकमूषागतं ध्मातं शुद्धं सत्त्वं विमुञ्चति ॥ १५४ ॥

मतान्तरम् ।—

लाक्षा-गुड़ासुरी-पथ्या-हरिद्रा-सर्ज-टङ्कणैः ।
सम्यक् सञ्चूर्ण्य तत् पक्कं गोदुग्धेन घृतेन च ॥ १५५ ॥
वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् ।
ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा शिलातले ॥
सत्त्वं वङ्गाकृति ग्राह्यं रसकस्य मनोहरम् ॥ १५६ ॥

मतान्तरम ।—

यद्वा जलयुतां स्थालीं निखनेत् कोष्ठिकोदरे ।
सच्छिद्रं तन्मुखे मल्लं तन्मुखेऽधोमुखीं क्षिपेत् ॥ १५७ ॥
मूषोपरि शिखित्रांश्च प्रक्षिप्य प्रधमेद्दृढम् ।
पतितं स्थालिकानीरे सत्त्वमादाय योजयेत् ॥ १५८ ॥

---

मतान्तरमाह, साभयेति ।—जतु शिलाजतु लाक्षा वा, सत्त्वपातने उभयस्यापि प्रयोगदर्शनात् । धूमजः गृहधूम इत्यर्थः, खर्परम् अभयादिभिः सह मर्दयित्वा मूकमूषायां संस्थाप्य ध्मापयेत् ॥ १५४ ॥

मतान्तरमाह, लाक्षेति ।—आसुरी राजिका ; लाक्षादिभिः समांशैः सह खर्परं चूर्णयित्वा गोदुग्धेन गोघृतेन च सह पक्त्वा गुटिकाकृतिं विधाय वृन्ताकमूषामध्ये निरुध्य पुनः पुनर्ध्मापयित्वा समाकृष्य शिलाखण्डोपरि ढालयेत् इत्यर्थः ॥ १५५ । १५६ ॥

मतान्तरमाह, यद्वेति ।—निखनेत् स्थापयेदित्यर्थः । कोष्ठिका सत्त्वपातनार्थं चुल्लीप्रायो यन्त्रविशेषः । मल्लं पात्रविशेषं, शरावमिति यावत् । अधोमुखीमित्यत्र मूषामित्यध्याहार्य्यम् । शिखित्रान् शिखिनम् अनलं त्रायन्ते पालयन्ति रक्षन्तीति यावत् ये तान्, अग्निस्थापकान् अङ्गारानित्यर्थः । अयमर्थः,—सजलां स्थालीमेकां कोष्ठिकामध्ये निवेश्य सच्छिद्रशरावेण तन्मुखं पिधाय शरावोपरि खर्परगर्भां मूषामधो-

अथ सत्त्वमारणम् ।—

तत् सत्त्वं तालकोपेतं प्रक्षिप्य खलु खर्परे ।
मर्द्दयेल्लोहदण्डेन भस्मीभवति निश्चितम् ॥ १५९ ॥

अथ प्रयोगविधिः ।—

तत् भस्म मृतकान्तेन समेन सह योजयेत् ।
अष्टगुञ्जामितं चूर्णं त्रिफलाक्वाथसंयुतम् ॥ १६० ॥
कान्तपात्रस्थितं रात्रौ तिलजप्रतिवापकम् ।
निषेवितं निहन्त्याशु मधुमेहमपि ध्रुवम् ॥ १६१ ॥
पित्तं क्षयञ्च पाण्डुञ्च श्वयथुं गुल्ममेव च ।
रक्तगुल्मञ्च नारीणां प्रदरं सोमरोगकम् ॥ १६२ ॥
योनिरोगानशेषांश्च विषमांश्च ज्वरानपि ।
रजःशूलञ्च नारीणां कासं श्वासञ्च हिध्मिकाम् ॥ १६३ ॥

[ इति रसकाधिकारः ] ।

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
महारसाष्टकशुद्ध्यादिनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

मृषीं कृत्वा संस्थाप्य तदुपरि वदरकाष्ठाङ्गारं दत्त्वा भस्त्रया प्रधमेत्, एवं कृते द्रवीभूतं खर्परसत्त्वं शरावच्छिद्रेण स्थालीस्थनीरे पतिष्यतीति ॥ १५७ । १५८ ॥

सत्त्वमारणमाह, तत् सत्त्वमिति ।—तत् सत्त्वं रसकसत्त्वम् । तालकोपेतं हरितालसंयुक्तं, तच्च वंशपत्राख्यं ग्राह्यम् । खर्परे मृत्कटाहे इत्यर्थः ॥ १५९ ॥

प्रयोगविधिमाह, तद्भस्मेति ।—मृतकान्तेन भस्मीकृतकान्तलौहेन । तिलज-प्रतिवापकं तिलतैलप्रक्षेपयुक्तम् ॥ १६०—१६३ ॥

इति रसरत्नसमुच्चयबोधिन्यां द्वितीयोऽध्यायः

समाप्तः ॥ २ ॥

# अथ तृतीयोऽध्यायः ।



## अथोपरसाः साधारणरसाश्च ।—

### अथोपरसानां नामानि ।—

गन्धाश्म-गैरि-कासीस-काङ्क्षी-ताल-शिलाञ्जनम् ।
कङ्कुष्ठञ्चेत्युपरसाश्चाष्टौ पारदकर्मणि ॥ १ ॥

## अथ गन्धकः ।—

### अथ गन्धकोत्पत्तिः ।—

पार्वत्युवाच ।—

गन्धकस्य तु माहात्म्यं तद्गुह्यं वद मे प्रभो ! ॥ २ ॥

ईश्वर उवाच ।—

श्वेतद्वीपे पुरा देवि ! सर्वरत्नविभूषिते ।
सर्वकाममये रम्ये तीरे क्षीरपयोनिधेः ॥ ३ ॥
विद्याधरीभिर्मुख्याभिरङ्गनाभिश्च योगिनाम् ।
सिद्धाङ्गनाभिः श्रेष्ठाभिस्तथैवाप्सरसां गणैः ॥ ४ ॥

---

द्वितीयाध्याये महारसाष्टकानां नामादिकं निरूप्य इदानीमुपरसान् साधारणरसांश्च निरूपयितुं तृतीयाध्यायमारभते; तत्रादौ उपरसानां नामान्याह, गन्धाश्मेति ।—गन्धाश्मा गन्धकः । काङ्क्षी सौराष्ट्रमृत्तिका । शिला मनःशिला । कङ्कुष्ठं हिमवत्पादशिखरजः हरितालवत्पाषाणविशेषः, 'मुर्दाशिम्' इति प्रसिद्धं, तथा च—"हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैकं रक्तकालं स्यात्तदन्यदण्डकं स्मृतम् ॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिशेत् । श्यामं पीतं लघु त्यक्त-सत्त्वं नेष्टं तथाऽण्डकम् ॥" इति । पार्वतीयमृत्तिकाविशेषो वा ॥ १ ॥

अथ गन्धकोत्पत्तिं निरुक्तिञ्च वर्णयितुं ईश्वरपार्वतीसंवादमाह, गन्धकस्येति ।—

देवाङ्गनाभी रम्याभिः क्रीडन्तीभिर्मनोहरैः ।
गीतैर्नृत्यैर्विचित्रैश्च वाद्यैर्नानाविधैस्तथा ॥ ५ ॥

एवं सङ्क्रीडमानायाः प्राभवत् प्रसृतं रजः ।
तद्रजोऽतीव सुश्रोणि ! सुगन्धि सुमनोहरम् ॥ ६ ॥

रजसश्चातिबाहुल्याद्वासस्ते रक्ततां ययौ ।
तत्र त्यक्त्वा तु तद्वस्त्रं सुस्नाता क्षीरसागरे ॥ ७ ॥

हृता देवाङ्गनाभिस्त्वं कैलासं पुनरागता ।
ऊर्मिभिस्तद्रजोवस्त्रं नीतं मध्ये पयोनिधेः ॥ ८ ॥

एवं ते शोणितं भद्रे ! प्रविष्टं क्षीरसागरे ।
क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ॥ ९ ॥

निजगन्धेन तान् सर्वान् हर्षयन् सर्वदानवान् ।
ततो देवगणैरुक्तं गन्धकाख्यो भवत्वयम् ॥ १० ॥

रसस्य बन्धनार्थाय जारणाय भवत्वलम् ।
ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्त्विति ॥ ११ ॥

इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि ! ।
तेनायं गन्धको नाम विख्यातः क्षितिमण्डले ॥ १२ ॥

अथ गन्धकस्य भेदनिर्देशः ।—

स चापि त्रिविधो देवि ! शुकचञ्चुनिभो वरः ।
मध्यमः पीतवर्णः स्याच्छुक्लवर्णोऽधमः प्रिये ! ॥ १३ ॥

प्रसृतम् आर्त्तवाशयान्निर्गतं पलद्वयपरिमाणं वा । "प्रसृतम्" इत्यत्र "प्राकृतम्" इति पाठे—प्राकृतं स्वभावसिद्धं प्राप्तकालमित्यर्थः । गन्धक इति संज्ञायां हेतुमाह, निजेति ।—तान् सर्वान् इत्यत्र देवानिति शेषः । यतोऽयं निजप्रशस्तगन्धेन देवादीन् अहर्षयत् अतः गन्धक इत्याख्यां प्राप्तवान् ॥ २—१२ ॥

गन्धकस्य त्रैविध्यमाह, स इति ।—शुकचञ्चुनिभः रक्तवर्ण इत्यर्थः ॥ १३ ॥

मतान्तरम्।—

चतुर्द्धा गन्धको ज्ञेयो वर्णैः श्वेतादिभिः खलु।
श्वेतोऽत्र खटिका प्रोक्तो लेपने लोहमारणे॥ १४॥
तथा चामलसारः स्याद् यो भवेत् पीतवर्णवान्।
शुकपिच्छः स एव स्याच्छ्रेष्ठो रसरसायने॥ १५॥
रक्तश्च शुकतुण्डाख्यो धातुवादविधौ वरः।
दुर्लभः कृष्णवर्णश्च स जरामृत्युनाशनः॥ १६॥

अथ गुणाः।—

गन्धाश्माऽतिरसायनः सुमधुरः पाके कटूष्णो मतः
कण्डूकुष्ठविसर्पदद्रुदलनो दीप्तानलः पाचनः।
आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्य्यप्रदो
गौरीपुष्पभवस्तथा कृमिहरः सत्यात्मकः सूतजित्॥१७॥
बलिना सेवितः पूर्वं प्रभूतबलहेतवे॥ १८॥

अथ बलिवसाख्यगन्धकोत्पत्तिः।—

वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता।
वसा गन्धकगन्धाढ्या सर्वतो निःसृता तनोः॥ १९॥

ग्रन्थान्तरोक्तं चातुर्विध्यमाह, चतुर्द्धेति।—अन्यत्राप्युक्तं—"स च रक्तपीतश्वेतकृष्णचात् चतुर्विधः। तत्र पीतः औषधेषु श्वेतः चर्मरोगेषु बाह्यप्रयोगेषु च व्यवहार्य्यः। चतुर्द्धा गन्धकः प्रोक्त, रक्तः पीतः सितोऽसितः। रक्तो हेमक्रियासूक्तः पीतश्वेतौ रसायने॥ व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः॥" इति॥ १४—१६॥

गन्धकस्य गुणमाह, गन्धाश्मेति।—गौरीपुष्पभवः पार्वतीरजःसम्भवः। सत्यात्मकः सती पार्वती आत्मा यस्य तादृशः, पार्वतीसमुद्भूतः, तद्रजःसमुत्पन्नत्वात्। "सत्त्वात्मकः" इति पाठस्तु साधीयान्, सत्त्वात्मकः सत्त्वगुणस्वरूपः सत्त्वगुणवर्द्धक इति तात्पर्य्यम्। सूतजित् रसस्य बन्धने मारणे च समर्थत्वात् तस्य तथात्वम्। बलिना विरोचनसुतेन दैत्यराजेन॥ १७।१८॥

बलिवसाख्यसविषगन्धकोत्पत्तिमाह, वासुकिमिति।—श्लोकेऽस्मिन् पूर्वश्लोकोक्तः बलिशब्दः आकर्षणीयः। तस्य बलिराजस्य। तन्मुखज्वालया आकर्षणजनितेन

गन्धकत्वञ्च सम्प्राप्ता गन्धोऽभूत् सविषः स्मृतः ।
तस्मात् बलिवसेत्युक्तो गन्धकोऽतिमनोहरः ॥ २० ॥

अथ शोधनम् ।—

पयःस्विन्नो घटीमात्रं वारिधौतो हि गन्धकः ।
गव्याज्यविद्रुतो वस्त्राद्गालितः शुद्धिमृच्छति ॥ २१ ॥
एवं संशोधितः सोऽयं पाषाणानम्बरे त्यजेत् ।
घृते विषं तुषाकारं स्वयं पिण्डत्वमेव च ॥ २२ ॥
इति शुद्धो हि गन्धाश्मा नापथ्यैर्विकृतिं व्रजेत् ।
अपथ्यादन्यथा हन्यात् पीतं हालाहलं यथा ॥ २३ ॥

मतान्तरद्वयम् ।—

गन्धको द्रावितो भृङ्गरसे क्षिप्तो विशुध्यति ।
तद्रसैः सप्तधा भिन्नो गन्धकः परिशुध्यति ॥ २४ ॥

वासुकिमुखोद्गीर्णसन्तापेन । वसा मांसस्नेहः । गन्धकेति ।—बलिना प्राक् सेवनात् तस्य वसायां गन्धकगन्धभूयस्त्वमिति बोद्धव्यम् । गन्धकत्वमिति ।—गन्धकगन्धबाहुल्यात् वसया एव गन्धक इति आख्या लब्धा । सविषः वासुकिमुखज्वालासम्बन्धात् सविषत्वम् ॥ १९।२० ॥

शोधनमाह, पयःस्विन्न इति ।—पयःस्विन्नः पयसा दुग्धेन स्विन्नः । घटीमात्रं दण्डमात्रम् । पाषाणान् गन्धाश्मनि ये पाषाणभागा विद्यन्ते तान् । अम्बरे गालनार्थं गृहीतवस्त्रे । घृते द्रावणार्थं गृहीताज्ये ॥ २१—२३ ॥

मतान्तरमाह, गन्धक इति ।—भृङ्गरसे भृङ्गराजरसे । क्षिप्त इत्यत्र सकृदिति शेषः । सन्तप्तघृतसम्पर्कात् द्रवीकृतः गन्धकः सकृत् भृङ्गरसे निक्षिप्तः विशुद्धिमाप्नोतीत्यर्थः । विकल्पमाह, तद्रसैरिति ।—तद्रसैः भृङ्गस्वरसैः । भिन्नः क्षुदितः चूर्णीकृत इति यावत् । गन्धकं चूर्णीकृत्य सप्तवारं भृङ्गराजरसैराप्लुत्य संशोष्य च वह्नौ द्रावयित्वा वस्त्रान्तरेण पुनर्भृङ्गरसे निक्षिप्य शोधयेदिति । अथवा—गन्धकचूर्णं वह्नौ द्रवीकृत्य भृङ्गरसे निक्षिपेत्. ततश्च तमुद्धृत्य शोषयित्वा पुनः सञ्चूर्ण्य च द्रावयित्वा पुनर्भृङ्गरसे क्षिपेत्, एवं सप्तवारं कुर्य्यादिति वृद्धव्यवहारः ॥ २४ ॥

मतान्तरम्।—

स्थाल्यां दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च।
गन्धकं तत्र निक्षिप्य चूर्णितं सिकताकृतिम्॥ २५॥
छादयेत् पृथुदीर्घेण खर्परेणैव गन्धकम्।
ज्वालयेत् खर्परस्योर्द्ध्वं वनच्छागैस्तथोपलैः॥ २६॥
दुग्धे निपतितो गन्धो गलितः परिशुध्यति।
शतवारं कृतश्चैव निर्गन्धो जायते ध्रुवम्॥ २७॥

अथ प्रयोगविधिः।—

इत्थं विशुद्धस्त्रिफलाऽऽज्यभृङ्ग-
मध्वन्वितः शाणमितो हि लीढ़ः।
गृध्राक्षितुल्यं कुरुतेऽक्षियुग्मं
करोति रोगोज्झितदीर्घमायुः॥ २८॥

अथ गन्धकतैलविधिः।—

कलांशव्योषसंयुक्तं गन्धकं श्लक्ष्णचूर्णितम्।
अरत्निमात्रे वस्त्रे तद्विप्रकीर्य्य विवेष्ट्य तत्॥ २९॥
सूत्रेण वेष्टयित्वाऽथ यामं तैले निमज्जयेत्।
धृत्वा सन्दंशतो वर्त्ति-मध्यं प्रज्वालयेच्च तम्॥
द्रुतो निपतितो गन्धो विन्दुशः काचभाजने॥ ३०।

मतान्तरमाह, स्थाल्यामिति।—ज्वालयेदित्यत्र वह्निमिति शेषः। वनच्छागैः वनोपलैः। उपलैः गृहजातशुष्कगोमयपिण्डैः॥ २५—२७॥

प्रयोगविधिमाह, इत्थमिति।—घृतमधुभृङ्गरसैः त्रिफलाचूर्णेन च सह शाणमितं गन्धकं लिह्यादित्यर्थः॥ २८॥

गन्धकतैलमाह, कलांशेति।—कलांशव्योषसंयुक्तं गन्धकापेक्षया षोडशभागैक भागमिलितत्रिकटुचूर्णमिश्रितम्। अरत्निमात्रे प्रसारितकनिष्ठाङ्गुलिबद्धमुष्टिहस्त-प्रमाणे। निपतित इत्यत्र भवेदिति शेषः॥ २९।३०॥

अथ प्रयोगविधिः ।—

तां द्रुतिं प्रक्षिपेत् पत्रे नागवल्ल्यास्त्रिबिन्दुकाम् ।
वल्लेन प्रमितं स्वच्छं सूतेन्द्रञ्च विमर्दयेत् ॥ ३१ ॥
अङ्गुल्याऽथ सपत्रां तां द्रुतिं सूतञ्च भक्षयेत् ।
करोति दीपनं तीव्रं क्षयं पाण्डुञ्च नाशयेत् ॥ ३२ ॥
कासं श्वासञ्च शूलार्त्तिं ग्रहणीमतिदुर्द्धराम् ।
आमं विनाशयत्याशु लघुत्वं प्रकरोति च ॥ ३३ ॥

अथान्यविधप्रयोगविधिः ।—

घृताक्ते लोहपात्रे तु विद्रुतं शुद्धगन्धकम् ।
घृताक्त-दर्विकाक्षिप्तं द्विनिष्कप्रमितं भजेत् ॥
हन्ति क्षयमुखान् रोगान् कुष्ठरोगं विशेषतः ॥ ३४ ॥

अथ गन्धकसेवने अपथ्यम् ।—

क्षाराम्लतैलसौवीर-विदाहि द्विदलं तथा ।
शुद्धगन्धकसेवायां त्यज्यं योगयुतेन हि ॥ ३५ ॥

गन्धकतैलस्य प्रयोगविधिमाह, तामिति ।—तां द्रुतिम् उक्तप्रक्रियया द्रुतगन्धकतैलम् । वल्लेन गुञ्जाया त्रयेण वयेण वा । सूतेन्द्रं मृतपारदं, रससिन्दूरमिति यावत । वल्लमितं विशुद्धरससिन्दूरमङ्गुल्या विमर्द्य पर्णपत्रसंस्थितबिन्दुत्रयपरिमितगन्धकतैलेन सह भक्षयेत् ॥ ३१—३३ ॥

गन्धकस्य प्रयोगान्तरमाह, घृताक्ते इति ।—शुद्धगन्धकरजः घृताक्ते लौहकटाहे द्रवीकृत्य घृतम्रक्षितलौहदर्व्यां निक्षिपेत्, ततः शीतीकृतं तच्चूर्णम् उचितानुपानेन भक्षितं यथोक्तरोगान् नाशयेदिति ॥ ३४ ॥

गन्धकोपयोगी वर्ज्यान्याह, क्षारेति ।—सौवीरं निस्तुषयवकृतं गोधूमकृतं वा काञ्जिकं, तथा च भावप्रकाशे—"सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतः । गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे ॥" इति । विदाहि अम्लपाकि वस्तु, यथा वंशकरीरादि ; तल्लक्षणं भावप्रकाशे—"विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम् । हृदि दाहञ्च जनयेत् पाकं गच्छति तच्चिरात् ॥" इति । द्विदलं मुद्गादिशमीधान्यम् ॥ ३५ ॥

अथ कुष्ठरोगे गन्धकप्रयोगविधिः।—

गन्धकस्तुल्यमरिचः षड्गुणत्रिफलान्वितः।
घृष्टः शम्पाकमूलेन पीतश्चाखिलकुष्ठहा॥ ३६॥

अथ प्रलेपप्रयोगः।—

तन्मूलसलिले पिष्टं लेपयेत् प्रत्यहं तनौ।
दृष्टप्रत्ययप्रयोगोऽयं सर्वत्राप्रतिवीर्य्यवान्॥
श्रीमता सोमदेवेन सम्यगत्र प्रकीर्त्तितः॥ ३७॥

अथ लेपप्रयोगान्तरम्।—

द्विनिष्कप्रमितं गन्धं पिष्ट्वा तैलेन संयुतम्।
अथापामार्गतोयेन सतैलमरिचेन हि॥ ३८॥
विलिप्य सकलं देहं तिष्ठेद्घर्मे ततः परम्।
तक्रभक्तञ्च भुञ्जीत तृतीये प्रहरे खलु॥ ३९॥
भजेद्रात्रौ तथा वह्निं समुत्थाय तथा प्रगे।
महिषीच्छगणं लिप्त्वा स्नायाच्छीतेन वारिणा॥ ४०॥
ततोऽभ्यज्य घृतैर्देहं स्नायादिष्टोष्णवारिणा।
अमुना क्रमयोगेन विनश्यत्यतिवेगतः॥
दुर्जया बहुकालीना पामा कण्डूः सुनिश्चितम्॥ ४१॥

कुष्ठरोगे गन्धकप्रयोगविधिमाह, गन्धक इति।—षड्गुणत्रिफलान्वितः इति मिलितत्रिफलाया एव षड्भागः ग्राह्यः। शम्पाकमूलेन आरग्वधमूलरसेन॥ ३६॥

लेपप्रयोगमाह, तन्मूलेति।—तन्मूलसलिले शम्पाकमूलरसे। पिष्टमित्यत्र गन्धकमिति शेषः। अप्रतिवीर्य्यवान् प्रभूतशक्तिसम्पन्नः इत्यर्थः॥ ३७॥

लेपप्रयोगान्तरमाह, द्विनिष्केति।—तैलेन कटुतैलेन, कुष्ठादिघ्नत्वात्। घर्मे आतपे। प्रगे प्रभाते। महिषीच्छगणं महिषीमलम्। क्रमयोगेन पौर्वापर्य्यानुसारतः पुनःपुनः करणेन। अयमर्थः,—निष्कद्वयं गन्धकचूर्णं कटुतैलेन अपामार्गमूलरसेन तथा कटुतैलमरिचाभ्यां सह पिष्ट्वा तेन सर्वगात्रमभ्यज्य द्विमासं त्रिमासं वा आतपे तिष्ठेत्, ततः तृतीयप्रहरे तक्रान्नं भुक्त्वा रात्रौ वह्निसेवनं कुर्य्यात्, ततः प्रभाते माहिषमलं गात्रे

गन्धकस्य प्रयोगाणां शतं तत्र प्रकीर्त्तितम् ।
ग्रन्थविस्तरभीतेन सोमदेवेन भूभुजा ॥ ४२ ॥

अथ गन्धकतैलान्तरम् ।—

अथवाऽर्क-स्नुहीक्षीरैर्वस्त्रं लेप्यन्तु सप्तधा ।
गन्धकं नवनीतेन पिष्ट्वा वस्त्रं लिपेद्घनम् ॥ ४३ ॥
तद्वर्त्तिं ज्वलितां दंशे धृतां कुर्य्यादधोमुखीम् ।
तैलं पतेदधोभाण्डे ग्राह्यं योगेषु योजयेत् ॥ ४४ ॥

अथ शुद्धगन्धकगुणाः ।—

शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति च ॥ ४५ ॥

[ इति गन्धकाधिकारः ] ।

अथ गैरिकम् ।—

अथ गैरिकस्य भेदः ।—

पाषाणगैरिकञ्चैकं द्वितीयं स्वर्णगैरिकम् ॥ ४६ ॥

अथ द्विविधयोस्तयोर्लक्षणम् ।—

पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् ।
अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ॥ ४७ ॥

---

लिप्त्वा शीततोयेन स्नायात्, स्नानानन्तरं गात्रं प्रमृज्य घृताभ्यक्तः सन् सुखोदकेन पुनः स्नानं कुर्य्यात्, एवं त्रिविवारकरणेन दीर्घकालीयपामादयोऽपि अवश्यमेव नश्यन्तीति ॥ ३८—४२ ॥

भिन्नविधं गन्धकतैलविधानमाह, अथवेति ।—दंशे सन्दंशे । अपरिमितं वस्त्रखण्डं प्राक् अर्कक्षीरे आप्लुत्य आतपे शोषयेत् एवं सप्तवारं प्रकुर्वीत, ततः स्नुहीक्षीरेऽपि तथा कुर्य्यात्, अनन्तरं शुद्धगन्धकं नवनीतेन पिष्ट्वा तद्वस्त्रं तेन गन्धकेन प्रगाढ़ं लिप्त्वा वर्त्तिं विधाय तां सन्दंशेन धृत्वा अधोऽग्निं प्रज्वालयेत्, एवञ्च अधःस्थिते भाण्डे निपतितं तैलं गृह्णीयादिति ॥ ४३।४४ ॥

शुद्धगन्धकस्य गुणमाह, शुद्धेति ।—सुगमम् ॥ ४५ ॥

गैरिकस्य द्वैविध्यमाह, पाषाणेति ।—सुगमम् ॥ ४६ ॥

द्विविधयोस्तयोर्लक्षणमाह, पाषाणगैरिकमिति ।—सुगमम् ॥ ४७ ॥

अथ द्विविधयोस्तयोर्गुणाः।—

स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तनुत्।

हिध्मा-वमि-विषघ्नञ्च रक्तघ्नं स्वर्णगैरिकम्॥

पाषाणगैरिकञ्चान्यत् पूर्वस्मादल्पकं गुणैः॥ ४८॥

अथ शोधनम्।—

गैरिकन्तु गवां दुग्धैर्भावितं शुद्धिमृच्छति॥ ४९॥

अथ गैरिकस्य सत्वरूपताकथनम्।—

गैरिकं सत्त्वरूपं हि नन्दिना परिकीर्त्तितम्॥ ५०॥

अथ गैरिकस्य सत्त्वरूपतायां मतान्तरम्।—

कैरप्युक्तं पतत् सत्त्वं चाराम्ल-स्विन्नगैरिकात्।

उपतिष्ठति सूतेन्द्रमेकत्वं गुणवत्तरम्॥ ५१॥

[इति गैरिकाधिकारः]।

अथ कासीसम्।—

अथ कासीसस्य भेदः।—

•कासीसं वालुकाद्येकं पुष्पपूर्वमथापरम्॥ ५२॥

---

द्विविधयोस्तयोर्गुणमाह, स्वाद्विति।—नेत्र्यं चक्षुषोर्हितकरम्। रक्तघ्नं रक्तस्तम्भनमित्यर्थः॥ ४८॥

गैरिकस्य शोधनमाह, गैरिकन्त्विति।—भावितमित्यत्र सप्तवारमिति शेषः॥४९॥

गैरिकस्य सत्त्वरूपतामाह, गैरिकमिति।—सत्त्वरूपं स्वभावत एव सारात्मकम्, अस्य क्रामिकोपायेन सत्त्वसङ्ग्रहणमनावश्यकमिति तात्पर्य्यम्॥ ५०॥

तस्य सत्त्वरूपतायां मतान्तरमाह,—कैरिति। चारेति।—चारोदककाञ्जिकाभ्यां दोलायन्त्रे पक्वगैरिकादित्यर्थः। उपतिष्ठतीति।—गैरिकसत्त्वं पारदेन सह ऐक्यं भजते गुणाधिक्यञ्च प्राप्नोति इति॥ ५१॥

कासीसस्य भेदावाह, कासीसमिति।—कासीसं "हिराकस्" इति लोके। वालुकाद्यकं वालुकाकासीसम्। तन्त्रान्तरे तु अस्य धातुकासीसं पांशुकासीसमिति वा संज्ञा; तद्यथा भावप्रकाशे—"कासीसं धातुकासीसं पांशुकासीसमित्यपि" इति। पुष्पपूर्वमिति पुष्पकासीसमित्यर्थः। यद्यप्यत्रास्य लिङ्गं न स्फुटमुक्तं, तथाऽपि निबन्धान्तरदर्शनात् तत् ज्ञातव्यं, तद्यथा रत्नमालायां—"कासीसं द्विविधं धातुपुष्पभेदात्, धातुकासीसं हरितं लोहितञ्च, अन्यत् शुक्लं कषायञ्च" इति। अन्यत्राप्युक्तं—"पुष्प-

अथ बालुकाकासीसगुणाः।—

क्षाराम्लागुरुधूमाभं सोष्णवीर्य्यं विषापहम्।
बालुकापूर्व-कासीसं श्वित्रघ्नं केशरञ्जनम्॥ ५३॥

अथ पुष्पकासीसगुणाः।—

पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लमतीव नेत्र्यम्।
विषानिल-श्लेष्मगद-व्रणघ्नं श्वित्रक्षयघ्नं कचरञ्जनञ्च॥ ५४॥

अथ शोधनम्।—

सकृद्भृङ्गाम्बुना क्लिन्नं कासीसं निर्मलं भवेत्॥ ५५॥

अथ सत्त्वपातनविधिः।—

तुवरीसत्त्ववत् सत्त्वमेतस्यापि समाहरेत्॥ ५६॥

अथ शोधनान्तरम्।—

कासीसं शुद्धिमाप्नोति पित्तैश्च रजसा स्त्रियाः॥ ५७॥

अथ प्रयोगविधिः।—

बलिना हतकासीसं कान्तं कासीसमारितम्।
उभयं समभागं हि त्रिफलाविल्लसंयुतम्॥ ५८॥

कासीसं किञ्चित् पीतं, भस्मवत् मृत्तिकाभं धातुकासीसम्" इति। भैषज्यरत्नावल्यां प्रौढ़ाधिकारोक्तमहाद्रावकाख्यौषधे तु कासीस-धातुकासीस-पुष्पकासीसभेदेनास्य त्रैविध्यमुक्तम्॥ ५२॥

बालुकाकासीसस्य गुणमाह, क्षारेति।—केशरञ्जनं केशस्य कृष्णीकरणम्॥ ५३॥

पुष्पकासीसस्य गुणमाह, पुष्पादीति।—कचरञ्जनं केशरञ्जनम्॥ ५४॥

शोधनमाह, सकृदिति।—सकृत् एकवारम्। क्लिन्नम् आर्द्रं, भृङ्गराजरसे दिनमेकं निमग्नमिति यावत्। "क्लिन्नम्" इत्यत्र "खिन्नम्" इति पाठे—खिन्नं दोलायन्त्रे पक्कम्; अयमेव पाठः प्रचारी॥ ५५॥

सत्त्वपातनमाह, तुवरीति।—वक्ष्यमाणसौराष्ट्रमृत्तिकासत्त्वपातविधिनेत्यर्थः॥५६॥

शोधनान्तरमाह, कासीसमिति।—पित्तैः पञ्चपित्तैः, तानि च वराहच्छाग-महिषमत्स्यमयूराणि इति। रजसा आर्त्तवशोणितेन, पञ्चपित्तैः आर्त्तवेन च पृथक् पृथक् मर्दनेन शुद्धिमाप्नोति इत्यर्थः॥ ५७॥

कासीसस्य प्रयोगविधिमाह, बलिनेति।—बलिना गन्धकेन हत-कासीसं भस्मीकृतकासीसम्। कान्तं वैक्रान्तम्। विल्लं विडङ्गम्।

विषमांश-घृतक्षौद्रप्लुतं शाणमितं प्रगे।
सेवितं हन्ति वेगेन श्वित्रं पाण्डुत्वयामयम् ॥ ५६ ॥
गुल्मप्लीहगदं शूलं मूलरोगं विशेषतः।
रसायनविधानेन सेवितं वत्सरावधि ॥ ६० ॥
आमसंशोषणं श्रेष्ठं मन्दाग्निपरिदीपनम्।
पलितं वलिभिः सार्द्धं विनाशयति निश्चितम् ॥ ६१ ॥

[ इति कासीसाधिकारः ]।

अथ तुवरी।—

अथ तुवर्य्याः परिचयः।—

सौराष्ट्राश्मनि सम्भूता मृत्स्ना सा तुवरी मता।
वस्त्रेषु लिप्यते याऽसौ मञ्जिष्ठारागबन्धिनी ॥ ६२ ॥

अथ तुवर्य्याः भेदकथनम्।—

फटकी फुल्लिका चेति द्वितीया परिकीर्त्तिता ॥ ६३ ॥

विषमेति।—असमघृतमधुमर्दितमित्यर्थः। प्रगे प्रभाते। रसायनविधानेन संशोधना-नन्तर कुटीप्रवेशादिविधिना इत्यर्थः। पलितं केशशौक्ल्यम्। वलिः जरागमन-जनितचर्मलोलता। शुद्धकासीसं समानगन्धकेन यावता पुटेन म्रियेत तावत् पुटनं कुर्य्यात्, शुद्धवैक्रान्तमपि शुद्धसमपरिमितकासीसेन सह तथा पुटेत्, ततः त्रिफलाविडङ्गचूर्णसमन्वितं तदुभयं मिलित्वा शाणमानम असमपरिमित-घृतमधुभ्यां सम्मर्द्य लिह्यात्, तेन च श्वित्रादिकं नश्यति। रसायनविधिना संवत्सरं यावत् सेवेत चेत बालपलितादिक नश्यति इति। अस्य पर्वो यथा—कासीसं र ४ वैक्रान्तं र ४ त्रिफला प्रः र ११ घृतं मा ६ मधु मा १० सर्वमालोड्य लेह्यम् ॥ ५८—६१ ॥

तुवर्य्याः परिचयमाह, सौराष्ट्रेति।—सौराष्ट्राश्मनि सौराष्ट्रदेशीयपर्वते। मृत्स्ना मृत्तिका। तुवरी सौराष्ट्रमृत्तिका गोपीचन्दनमिति यावत्; तदभावे पङ्कपर्पटी स्फटिकारी वा ग्राह्या। मञ्जिष्ठेति।—मञ्जिष्ठायाः रागं रक्तिमानं बध्नाति संयोगेन दृढीकरोतीत्यर्थः या सा मञ्जिष्ठारागबन्धिनी ॥ ६२ ॥

तस्या द्वैविध्यमाह, फटकीति।—फटकीत्यत्र आद्या इत्यध्याहार्य्यम् ॥ ६३ ॥

अथ फटक्याः गुणलक्षणे ।—

ईषत्पीता गुरुः स्निग्धा पीतिका विषनाशिनी ।
व्रणकुष्ठहरा सर्वकुष्ठघ्नी च विशेषतः ॥ ६४ ॥

अथ फुल्लिकायाः गुणलक्षणे ।—

निर्भारा शुभ्रवर्णा च स्निग्धा साम्लाऽपरा मता ।
सा फुल्लतुवरी प्रोक्ता लेपात्ताम्रं चरेद्यः ॥ ६५ ॥

अथ द्विविधस्य तस्य सामान्यगुणाः ।—

काङ्क्षी कषाया कटुकाम्लकण्ठ्या
केश्या व्रणघ्नी विषनाशिनी च ।
श्वित्रापहा नेत्रहिता त्रिदोष-
शान्तिप्रदा पारदजारणी च ॥ ६६ ॥

अथ शोधनम् ।—

तुवरी काञ्जिके क्षिप्ता त्रिदिनाच्छुद्धिमृच्छति ॥ ६७ ॥

अथ सत्त्वपातनम् ।—

क्षाराम्लैर्मर्दिता ध्माता सत्त्वं मुञ्चति निश्चितम् ॥ ६८ ॥

---

तत्र आद्यायाः लक्षणं गुणांश्चाह, ईषदिति ।—पीतिका इति फटक्या नामान्तरम् ।। ६४ ॥

द्वितीयायाः फुल्लिकाया लक्षणं गुणांश्चाह, निर्भारेति ।—निर्भारा लघ्वीत्यर्थः । अपरा फुल्लिका, स्फटिकाविकेत्यर्थः ; फुल्लतुवरीति तस्या नामान्तरम् । लेपादिति । —फुल्लतुवरीलेपेन ताम्रं लोहांशमुज्झति ताम्रे यः लोहांशः विद्यते स निर्गच्छतीत्यर्थः, ताम्रं लौहवत् काठिन्यं गच्छतीत्यर्थो वा ॥ ६५ ॥

तुवर्याः गुणमाह, काङ्क्षीति ।—काङ्क्षी सौराष्ट्रमृत्तिका ॥ ६६ ॥

शोधनमाह, तुवरीति ।—दिनत्रयं यावत् काञ्जिकेनाप्लुता सौराष्ट्री शुद्धिमायातीति ॥ ६७ ॥

सत्त्वपातनमाह, क्षारेति ।—क्षाराम्लैः यवक्षारकाञ्जिकाद्यम्लैः । ध्माता सन्तप्ता, भस्त्राग्निनेति शेषः ॥ ६८ ॥

मतान्तरम्।—

गोपित्तेन शतं वारान् सौराष्ट्रीं भावयेत्ततः।
धमित्वा पातयेत् सत्त्वं क्रामणञ्चातिगुह्यकम्॥ ६९॥

[इति तुवर्य्यधिकारः]।

अथ तालकः।—

अथ तालकस्य भेदनिर्देशः।—

हरितालं द्विधा प्रोक्तं पत्राद्यं पिण्डसंज्ञकम्॥ ७०॥

अथ पत्रतालकलक्षणम्।—

स्वर्णवर्णं गुरु स्निग्धं तनुपत्रञ्च भासुरम्।
तत् पत्रतालकं प्रोक्तं बहुपत्रं रसायनम्॥ ७१॥

अथ पिण्डतालकलक्षणम्।—

निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु।
स्त्रीपुष्पहरणं तत्तु गुणाल्पं पिण्डतालकम्॥ ७२॥

अथ गुणाः।—

श्लेष्मरक्तविषवातभूतनुत् केवलञ्च खलु पुष्पहृत् स्त्रियाः।
स्निग्धमुष्णकटुकञ्च दीपनं कुष्ठहारि हरितालमुच्यते॥ ७३॥

---

मतान्तरमाह, गोपित्तेनेति।—ततः भावनानन्तरम्। क्रामणस्य अतिगोप्यत्वमाह, क्रामणमिति।—क्रामणं रसोपरसानां बन्धनार्थं स्वेदनमर्दनाद्येकोनविंशतिकर्म्मणां समष्टिकर्म्मविशेषः; अतीव गोपनीयत्वात् तदस्मिन् ग्रन्थे नोक्तमिति तात्पर्य्यम्॥ ६९॥

हरितालस्य द्वैविध्यमाह, हरितालमिति।—पत्राद्यं पत्रपूर्वकं हरितालं वंशपत्रहरितालमिति यावत्। पिण्डसंज्ञकमित्यत्र द्वितीयमिति शेषः, पिण्डहरितालमित्यर्थः॥ ७०॥

पत्रहरितालस्य लक्षणमाह, स्वर्णवर्णमिति।—तनुपत्रं सूक्ष्मपत्रम्। भासुरं दीप्तिमत्। बहुपत्रं बहुपटलसमन्वितम्॥ ७१॥

पिण्डहरितालस्य लक्षणमाह, निष्पत्रमिति।—निष्पत्रं पटलरहितम्। स्वल्पसत्त्वं स्वल्पसारम्। स्त्रीपुष्पहरणं रजोनाशकम्। गुणाल्पमिति पत्रतालापेक्षयेत्यर्थः॥ ७२॥

गुणमाह, श्लेष्मरक्तेति।—सुगमम्॥ ७३॥

अथ शोधनम्।—

स्विन्नं कुष्माण्डतोये वा तिलक्षारजलेऽपि वा।
तोये वा चूर्णसंयुक्ते दोलायन्त्रेण शुध्यति ॥ ७४ ॥

अथाशुद्धस्य दोषनिर्देशः।—

अशुद्धं तालमायुघ्नं कफमारुतमेहकृत्।
तापस्फोटाङ्गसङ्कोचं कुरुते तेन शोधयेत् ॥ ७५ ॥

मतान्तरे शोधनम्।—

तालकं कणशः कृत्वा दशांशेन च टङ्कणम्।
जम्बीरोत्थद्रवैः क्षाल्यं काञ्जिकैः क्षालयेत्ततः ॥ ७६ ॥
वस्त्रे चतुर्गुणे बद्ध्वा दोलायन्त्रे दिनं पचेत्।
सचूर्णनाऽऽरनालेन दिनं कुष्माण्डजे रसे ॥
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ॥ ७७ ॥

मतान्तरे शोधनं मारणञ्च।—

मधुतुल्ये घनीभूते कषाये ब्रह्म-मूलजे।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥ ७८ ॥
उपलैर्दशभिर्देयं पुटं रुद्ध्वाऽथ पेषयेत्।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ॥ ७९ ॥

---

शोधनमाह, स्विन्नमिति।—तिलक्षारजलं तिलनालं दग्ध्वा तत् क्षारं षड्गुणतोये एकविंशतिवारं विस्राव्य ग्राह्यमिति ॥ ७४ ॥

अशुद्धस्य दोषमाह, अशुद्धमिति।—सुगमम् ॥ ७५ ॥

मतान्तरे शोधनमाह, तालकमिति।—हरितालं खण्डशः कृत्वा तदपेक्ष्य दशमांशटङ्कणेन सह मेलयित्वा जम्बीरद्रवैः सप्तधा काञ्जिकैश्च सप्तधा प्रक्षाल्य चतुष्पटलवस्त्रखण्डे बद्ध्वा दिनमेकं चूर्णोदकसहितकाञ्जिकेन दोलायन्त्रे पचेत्, ततः कुष्माण्डसलिलेऽपि दिनं पचेत्, अथवा उक्तरीत्या प्रक्षाल्य वस्त्रान्तरितं कृत्वा शाल्मलीमूलरसेन दिनं यावत् दोलायन्त्रे स्वेदयेत् इति। ॥ ७६।७७ ॥

मतान्तरे शोधनं मारणमाह, मधुतुल्ये इति।—ब्रह्ममूलजे भार्गीमूलकृते

अथ सत्त्वपातनम्।—

कुलित्थक्काथसौभाग्य-महिष्याज्यमधुप्लुतम्।
स्थाल्यां क्षिप्त्वा पिदध्याच्च मल्लेन छिद्रयोगिना॥ ८०॥
सम्यङ्निरुध्य शिखिनं ज्वालयेत् क्रमवर्द्धितम्।
एकप्रहरमात्रं हि रन्ध्रमाच्छाद्य गोमयैः॥ ८१॥
यामान्ते छिद्रमुद्घाट्य दृष्टे धूमे च पाण्डुरे।
शीतां स्थालीं समुत्तार्य्य सत्त्वमुत्कृष्य चाऽऽहरेत्॥ ८२॥
सर्वपाषाणसत्त्वानां प्रकाराः सन्ति कोटिशः।
ग्रन्थविस्तरभीत्याऽत्र लिखिता न मया खलु॥ ८३॥

मतान्तरम्।—

पलालकं रवेर्दुग्धैर्दिनमेकं विमर्दयेत्।
क्षिप्त्वा षोड़शिकातैले मिश्रयित्वा ततः पचेत्॥ ८४॥

पलाशमूलकृते वा। मधुसमेन भार्गीक्काथेन पलाशक्काथेन वा हरितालं वारत्रयं भावयित्वा माहिषमूत्रे सम्पेष्य मूषायां रुद्ध्वा दशवनोपलैः पुटेत्, स्वाङ्गशीतञ्च तत आकृष्य पुनः माहिषमूत्रेण पेषयेत् पुटेच्च, एवं द्वादशधा कार्य्यं, तेन शुद्धं मृतञ्च तालम् औषधेषु प्रयुञ्जीत इति॥ ७८।७९॥

सत्त्वग्रहणमाह, कुलित्थेति।—सौभाग्यं टङ्कणम्। महिष्याज्यं महिषीघृतम्। पिदध्यात् आच्छादयेत्। मल्लेन शरावपुटेन। अयमर्थः,—तालं कुलत्थक्काथादिभिराप्लुत्य हण्डिकाभ्यन्तरे निधाय मध्यच्छिद्रेण शरावेण आच्छाद्य सन्धिनिरोधं कृत्वा आर्द्रगोमयैः शरावमध्यच्छिद्रं पिधाय आ-यामं क्रमवृद्धाग्निना पचेत्, प्रहरेऽतीते शरावच्छिद्रमुद्घाट्य यदि तस्मात् पाण्डुवर्णो धूमो निर्गच्छति इति पश्येत् तदा वह्निसंयमनं कुर्य्यात्, ततः स्वाङ्गशीतं यन्त्रमवतार्य्य शरावमुन्मुच्य स्थालीमध्यस्थं सत्त्वमाकृष्य गृह्णीयादिति॥ ८०—८३॥

मतान्तरमाह, पलालकमिति।—पलालकं पलञ्च तत् आलकञ्चेति विग्रहे पलमात्रं हरितालम्। रवेर्दुग्धैः अर्कक्षीरैः। षोड़शिकातैले पलपरिमिततिलतैले। यद्यपि कर्षपर्य्यायस्य षोड़शिकाशब्दस्य पलार्थे प्रयोगो न सङ्गच्छते, तथाऽपि पलमिते हरिताले कर्षमिततैलस्य अल्पत्वेन मिश्रणानुपयोगित्वात्

अनावृतप्रदेशे च सप्त-यामावधि ध्रुवम् ।
स्वाङ्गशीतमधःस्थञ्च सत्त्वं श्वेतं समाहरेत् ॥ ८५ ॥

मतान्तरम् ।—

छागलस्याथ बालेन बलिना च समन्वितम् ।
तालकं दिवसद्वन्द्वं मर्दयित्वाऽतियत्नतः ॥ ८६ ॥
युक्तं द्रावणवर्गेण काचकूप्यां विनिक्षिपेत् ।
त्रिधा ताञ्च मृदा लिप्त्वा परिशोष्य खरातपे ॥ ८७ ॥
ततः खर्परकाच्छिद्रे तामर्द्धाञ्चैव कूपिकाम् ।
प्रवेश्य ज्वालयेदग्निं द्वादशप्रहरावधि ॥
कूपि-कण्ठस्थितं शीतं शुद्धं सत्त्वं समाहरेत् ॥ ८८ ॥

मतान्तरम् ।—

पलार्द्धप्रमितं तालं बद्ध्वा वस्त्रे सिते दृढे ।
बलिनाऽऽलिप्य यत्नेन त्रिवारं परिशोष्य च ॥ ८९ ॥
द्राविते त्रिपले ताम्रे क्षिपेत्तालकपोटलीम् ।

---

पाकानुपपत्त्या च षोडशी पवेति षोडशिका इति व्युत्पत्त्या पलपर्य्यायकस्य षोडशी-शब्दस्यैवात्र ग्रहणमाचार्य्याभिमततया प्रतिभाति । केचित्तु कर्षार्थक एवात्र षोडशिकाशब्दः इति वदन्ति ॥ ८४।८५ ॥

मतान्तरमाह, छागलस्येति ।—छागलस्य बालेन छागपुच्छरोम्णा । बलिना गन्धकेन । दिवसद्वन्द्वं दिनद्वयम् । द्रावणवर्गेण—"गुडगुग्गुलुगुञ्जाज्य सारघैष्टङ्कणान्वितैः" इति वक्ष्यमाणगणेन । तां कूपिकामित्यर्थः । अयमर्थः,—शुद्धतालं छागपुच्छलोमगन्धकाभ्यां दिवसद्वयमवहितः सम्मर्द्य गुडादिद्रावणवर्गेण अनुरूपेण सह काचकूप्यन्तर्निवेशयेत्, ततः मृद्वस्त्रेण वारत्रयं कूपिकां तां लिप्त्वा चण्डातपे संशोष्य सच्छिद्रखर्परिकामध्ये कूपिकाया अर्द्धांशम् अर्द्धांशञ्च बहिः यथा तिष्ठेत् तथा संस्थाप्य द्वादशप्रहरं यावत् वह्निज्वालां दद्यात्, शीते कूपिकायाः कण्ठलग्नं शुद्धं सत्त्वं गृह्णीयादिति ॥ ८६—८८ ॥

मतान्तरमाह, पलेति ।—कर्षद्वयं तालं दृढनिर्मलाम्बरे बद्ध्वा वस्त्रोपरि वारत्रयं पिष्टगन्धकं संलिप्य शोषयित्वा च गलितताम्रे पलत्रयमिते पोट्टलीं तां क्षिपेत्

भस्मना छादयेच्छीघ्रं ताम्रेणाऽऽवेष्टितं सितम् ॥
मृदुलं सत्त्वमादद्यात् प्रोक्तं रसरसायने ॥ ९० ॥

[ इति तालकाधिकारः ]।

अथ मनःशिला।—

अथ मनःशिलाया भेदाः।—

मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका।
खण्डाख्या चेति तद्रूपं विविच्य परिकथ्यते ॥ ९१ ॥

अथ त्रिविधानां लक्षणानि।—

श्यामा रक्ता सगौरा च भाराऽऽख्या श्यामिका मता।
तेजस्विनी च निर्गौरा ताम्राभा कणवीरका ॥ ९२ ॥
चूर्णीभूताऽतिरक्ताङ्गी सभारा खण्डपूर्विका।
उत्तरोत्तरतः श्रेष्ठा भूरिसत्त्वा प्रकीर्त्तिता ॥ ९३ ॥

अथ गुणाः।—

मनःशिला सर्वरसायनाग्र्या तिक्ता कटूष्णा कफवातहन्त्री।
सत्त्वात्मिका भूतविषाग्निमान्द्य-कण्डूतिकासक्षयहारिणी च
॥ ९४ ॥

---

शीघ्रं भस्मना छादयेच्च, किञ्चित्कालातीते ताम्रगर्भस्थं मृदु शुभ्र सत्त्व गृहीत्वा कार्य्येषु योजयेदिति ॥ ८९।९०॥

त्रिधा भिन्नायाः मनःशिलायाः नामान्याह, मनःशिलेति।—सुगमम ॥ ९१ ॥

त्रिविधानां तासां लक्षणान्याह, श्यामेति।—सगौरा सपीता, तेन ईषत्पीत-मिश्रितश्यामरक्तवर्णा इत्यर्थः। तेजस्विनी तेजोभूयिष्ठा पित्तवर्द्धिनीत्यर्थः। सभारा अलघ्वीत्यर्थः। उत्तरोत्तरतः परपरत, प्रथमात् द्वितीया, द्वितीयात् तृतीया इत्यर्थः। भूरिसत्त्वा प्रभूतसारविशिष्टा ॥ ९२।९३ ॥

मनःशिलाया गुणमाह, मनःशिलेति!—सत्त्वात्मिका सत्त्वगुणमयी; पित्तस्य सत्त्वगुणसदृशकार्य्यत्वात् सत्त्वात्मिका-शब्देन पित्तस्वरूपा पित्तगुणा इत्यर्थः इति व्यज्यते। सत्त्वात्मिका सारवपिणीत्यर्थो वा ॥ ९४ ॥

अथ अशुद्धशुद्धशिलयोर्दोषगुणौ ।—

अश्मरीं मूत्रकृच्छ्रञ्च अशुद्धा कुरुते शिला ।
मन्दाग्निं मलबन्धञ्च शुद्धा सर्वरुजापहा ॥ ९५ ॥

अथ शोधनम् ।—

अगस्त्यपत्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला ॥ ९६ ॥

अथ प्रकारान्तरशोधनम् ।—

जयन्तीभृङ्गराजोत्थ-रक्तागस्त्यरसैः शिलाम् ।
दोलायन्त्रे पचेत् यामं यामं छागोत्थमूत्रकैः ॥
क्षालयेदारनालेन सर्वरोगेषु योजयेत् ॥ ९७ ॥

अथ सत्त्वपातनम् ।—

अष्टमांशेन किट्टेन गुड़गुग्गुलुसर्पिषा ।
कोष्ठ्यां रुद्ध्वा दृढं ध्माता सत्त्वं मुञ्चेन्मनःशिला ॥ ९८ ॥

अशुद्धशुद्धयोर्दोषगुणावाह, अश्मरीमिति ।—शिला मनःशिला ॥ ९५ ॥

द्विविधशोधनमाह, अगस्त्येति ।—अगस्त्यपत्रतोयेन वकपुष्पपत्रस्वरसेन ; यद्यप्यत्र अगस्त्यस्य विशेषो नोक्तः, तथाऽपि अग्रे रक्तपुष्पवकग्रहणदर्शनादिहापि रक्तवकस्यैव ग्रहणं युक्तम् । भाविता सम्यक् मर्दनयोग्येन द्रवेण सम्भृता । भावनाया द्रवदानविधिर्यथा तोडरानन्दे— "द्रवेण यावता सम्यगेकीभूयार्द्रतां व्रजेत् । द्रवप्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥" इति । भावनाविधिर्यथा शार्ङ्गधरे—"दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत् । शुष्कं चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः ॥" इति । शृङ्गवेररसैः आर्द्रकस्वरसैः ; अत्रापि सप्तवारं भाविता इति योज्यम् ॥ ९६ ॥

मतान्तरमाह, जयन्तीति ।—जयन्ती स्वनामप्रसिद्धा । रक्तागस्त्यरसैः रक्तपुष्पवकपत्रस्वरसैः ; जयन्त्यादिद्रव्यत्रयाणां मिलितरसैः यामं, यामञ्च छागमूत्रकैः दोलायन्त्रे पक्वा पश्चात् काञ्जिकेन प्रक्षाल्य गृह्णीयादिति ॥ ९७ ॥

सत्त्वोद्धरणमाह, अष्टमांशेनेति ।—अष्टमांशेन किट्टादिसर्पिरन्तानां प्रत्येकं मनःशिलापेक्षया अष्टमभागेन, अथवा किट्टस्यैव अष्टमो भागः गुड़ादिकञ्च यथायोग्यं देयम् । किट्टेन मण्डूरेण । कोष्ठ्यां कोष्ठिकायन्त्रे । ध्माता सन्तप्ता ॥ ९८ ॥

मतान्तरम्।—

भूनाग-धौत-सौभाग्य-मदनैश्च विमर्दितैः।
कारवल्लीदलाम्भोभिर्मूषां कृत्वाऽत्र निक्षिपेत्॥ ९९॥
शिलां चाराम्लनिष्पिष्टां प्रधमेत्तदनन्तरम्।
कोकिलाद्वयमात्रं हि ध्मानात् सत्त्वं त्यजत्यसौ॥ १००॥

[इति मनःशिलाधिकारः]।

अथाञ्जनानि।—

अथाञ्जनानां भेदनिर्देशः।—

सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम्।
स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च॥
नीलाञ्जनञ्च तेषां हि स्वरूपमिह वर्ण्यते॥ १०१॥

अथ सौवीराञ्जनगुणाः।—

सौवीरमञ्जनं धूम्रं रक्तपित्तहरं हिमम्।
विषहिध्माक्षिरोगघ्नं व्रणशोधनरोपणम्॥ १०२॥

मतान्तरमाह, भूनागेति।—भूनागः सीसकम्। धौतं सीसकासीसम्। "धौतम्" इत्यत्र "सत्त्वम" इति पाठे—भूनागसत्त्वं सीसकमारम। मदनः स्वनामख्यातवृक्षविशेषः, तस्य फलं ग्राह्यम। कारवल्ली "क्षुद्रकरेला" इति प्रसिद्धा, तस्याः दलाम्भोभिः पत्रस्वरसैः। कोकिलेति।—कोकिलया बादराङ्गाराग्निना द्वयमात्रं वारद्वयम। भूनागादिकं कारवल्लीपत्ररसेन मर्दयित्वा तेनैव मूषां विधाय चाराम्लाभ्यां मनःशिलां पिष्ट्वा तत्र संरुध्य बादराङ्गाराग्निना वारद्वय प्रधमेदिति॥ ९९।१००॥

अञ्जनस्य भेदानाह, सौवीरमिति।—सौवीरं सुवीरानाम्नी काचिन्नदी तत्र भवमिति अञ्जनविशेषणम। तल्लक्षणं यथा चक्रसङ्ग्रहे—"वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति। सौवीराञ्जनमित्याहुरायुर्वेदविदो जनाः॥" इति। स्रोतोऽञ्जनम् अञ्जनविशेषः, "कृष्णसुर्मा" इति प्रसिद्धम्; एतदेव श्रेष्ठम्; यदुक्तं भावप्रकाशे—"स्रोतोऽञ्जनगुणाः सर्वे सौवीरेऽपि मता बुधैः। किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम्॥" इति। तल्लक्षणं यथा राजनिघण्टौ,—वल्मीकशिखराकारं भिन्ननीलाञ्जनप्रभम्। घृष्टे च गैरिकावर्णं श्रेष्ठं स्रोतोऽञ्जनञ्च तत्॥" इति। पुष्पाञ्जनकं कृत्रिमाञ्जनविशेषः। नीलाञ्जनं स्रोतोऽञ्जनभेदः॥ १०१॥

अथ रसाञ्जनगुणाः।—

रसाञ्जनञ्च पीताभं विष-वक्त्रगदापहम्।
श्वासहिध्मापहं वर्ण्यं वातपित्तास्रनाशनम्॥ १०३॥

अथ स्रोतोऽञ्जनगुणाः।—

स्रोतोऽञ्जनं हिमं स्निग्धं कषायं स्वादु लेखनम्।
नेत्र्यं हिध्माविषच्छर्दि-कफपित्तास्ररोगनुत्॥ १०४॥

अथ पुष्पाञ्जनगुणाः।—

पुष्पाञ्जनं सितं स्निग्धं हिमं सर्वाक्षिरोगनुत्।
अतिदुर्वारहिध्माघ्नं विष ज्वरगदापहम्॥ १०५॥

अथ नीलाञ्जनगुणाः।—

नीलाञ्जनं गुरु स्निग्धं नेत्र्यं दोषत्रयापहम्।
रसायनं सुवर्णघ्नं लोहमार्दवकारकम्॥ १०६॥

अथ शोधनम्।—

अञ्जनानि विशुध्यन्ति भृङ्गराज-निजद्रवैः॥ १०७॥

अथ सत्त्वग्रहणम्।—

मनोह्वा-सत्त्ववत् सत्त्वमञ्जनानां समाहरेत्॥ १०८॥

---

तत्र सौवीराञ्जनस्य गुणमाह, सौवीरमिति।—धूम्रं धूम्रवर्णमित्यर्थः। हिध्मा हिक्का। व्रणेति।—व्रणानां शोधनं दोषनाशनं, रोपणं क्षतपूरणम्॥ १०२॥

रसाञ्जनगुणमाह, रसाञ्जनमिति।—वातपित्तास्रनाशनं वातरक्तनाशनं रक्तपित्तनाशनञ्च॥ १०३॥

स्रोतोऽञ्जनगुणमाह, स्रोतोऽञ्जनमिति।—लेखनं—"धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत्। लेखनं तत् यथा क्षौद्रं नीरमुष्णं वचा यवाः॥" इत्युक्तलक्षणकम्॥ १०४॥

पुष्पाञ्जनगुणमाह, पुष्पाञ्जनमिति।—सितं शुभ्रवर्णम्॥ १०५॥

नीलाञ्जनगुणमाह, नीलाञ्जनमिति।—सुवर्णघ्नं स्वर्णमारकम्। लोहमार्दवकारकम् एकत्र मर्दनेन पुटनेन वा लोहानां श्लक्ष्णत्वसम्पादकम्॥ १०६॥

शोधनमाह, अञ्जनानीति।—भृङ्गराजनिजद्रवैः भृङ्गराजस्वरसैः॥ १०७॥

सत्त्वपातनमाह, मनोह्वेति।—मनःशिलातः सत्त्वग्रहणविधिना अञ्जनेभ्योऽपि सत्त्वं गृह्णीयादिति॥ १०८॥

अथ स्रोतोऽञ्जनलक्षणम्।—

वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति।
घृष्टन्तु गैरिकच्छायं स्रोतोजं लक्षयेत् बुधः॥ १०९॥

अथाञ्जनेन रसबन्धनोपायः।—

गोशकृद्रस-मूत्रेषु घृत-क्षौद्र-वसासु च।
भावितं बहुशस्तच्च शीघ्रं बध्नाति सूतकम्॥ ११०॥

अथ रसाञ्जनस्य विशेषशोधनम्।—

सूर्य्यावर्त्तादियोगेन शुद्धिमेति रसाञ्जनम्॥ १११॥

अथ स्रोतोऽञ्जनात् सत्त्वग्रहणम्।—

राजावर्त्तकवत् सत्त्वं ग्राह्यं स्रोतोऽञ्जनादपि॥ ११२॥

[ इत्यञ्जनाधिकारः ]।

अथ कङ्कुष्ठम्।—

अथ कङ्कुष्ठस्योत्पत्तिस्थानं भेदश्च।—

हिमवत्पादशिखरे कङ्कुष्ठमुपजायते।
तत्रैकं नालिकाख्यं हि तदन्यद्रेणुकं मतम्॥ ११३॥

---

स्रोतोऽञ्जनस्य लक्षणमाह, वल्मीकेति।—वल्मीकशिखराकारं वल्मीकवत् उन्नतावनतबहुशिखरविशिष्टम्। घृष्टमिति।—शिलाखण्डे घृष्टे सति गैरिकवत् लोहिताभं परिदृश्यते। अत्र चतुर्णामपरेषां लक्षणं नोक्ता यत् केवलस्रोतोऽञ्जनस्यैव लक्षणमुक्तं तत् स्रोतोऽञ्जनस्य प्रशस्ततापतिपादनार्थम्॥ १०९॥

तस्य रसबन्धकत्वमाह, गोशकृदिति।—तत् स्रोतोऽञ्जनम्। गोमयरसेन गोमूत्रेण घृतेन क्षौद्रेण वसया च प्रत्येकशः सप्तवारान् भावितं स्रोतोऽञ्जनं रसबन्धनाय अलं भवतीति॥ ११०॥

रसाञ्जनस्य विशेषशोधनमाह, सूर्य्यावर्त्तादीति।—सूर्य्यावर्त्तः सुवर्चला "हुड़हुड़िया" इति प्रसिद्धः। अत्र आदिपदेन "सूर्य्यावर्त्तकदली बन्ध्या कोषातकी च मुरङ्गाक्षी। शिग्रुस्तु वज्रकन्दो गौरं कणा काकमाची च॥" इत्यनेन वक्ष्यमाणः सूर्य्यावर्त्तादिगणः बोध्यः॥१११॥

स्रोतोऽञ्जनात् सत्त्वग्रहणप्रकारमतिदेशेनाह, राजावर्त्तकवदिति।—राजावर्त्तकम् उपरत्नविशेषः, "रेवटी" इति नाम्ना पश्चिमदेशे प्रसिद्धम्। वक्ष्यमाणराजावर्त्तक-सत्त्वपातनविधिना अस्यापि सत्त्वं ग्राह्यम् इति॥ ११२॥

अथ कङ्कुष्ठद्वयलक्षणम् ।—

पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् ।
श्यामपीतं लघु त्यक्त-सत्त्वं नेष्टं हि रेणुकम् ॥ ११४ ॥

अथ कङ्कुष्ठस्योत्पत्तौ मतान्तरद्वयं लक्षणञ्च ।—

केचिद्वदन्ति कङ्कुष्ठं सद्योजातस्य दन्तिनः ।
वर्चश्च श्यामपीताभं रेचनं परिकथ्यते ॥ ११५ ॥
कतिचित्तेजिवाहानां बालं कङ्कुष्ठसंज्ञकम् ।
वदन्ति श्वेतपीताभं तदतीव विरेचनम् ॥ ११६ ॥

अथ नालिकाकङ्कुष्ठस्य प्रयोगविषयः

रेणुकाकङ्कुष्ठस्य अप्रशस्तता च ।—

रसे रसायने श्रेष्ठं निःसत्त्वं बहुवैकृतम् ॥ ११७ ॥

अथ गुणाः ।—

कङ्कुष्ठं तिक्तकटुकं वीर्य्योष्णञ्चातिरेचनम् ।
व्रणोदावर्त्तशूलार्त्ति-गुल्मप्लीहगुदार्त्तिनुत् ॥ ११८ ॥

---

कङ्कुष्ठस्योत्पत्तिस्थानं भेदञ्चाह, हिमवदिति ।—कङ्कुष्ठं "घुषिम्" इति प्रसिद्धम । ग्रन्थान्तरे तु रक्तकालम अण्डकश्चेति भेदद्वयमस्य निर्दिष्ट, तत्तु प्रागेव प्रदर्शितम ॥११३॥

तयोर्लक्षणमाह, पीतेति ।—आदिम नालिकाह्वम् । त्यक्तसत्त्वं निःसारम् । नेष्टं नाभिमतं, न ग्राह्यमित्यर्थः ॥ ११४ ॥

केषाञ्चिन्मते कङ्कुष्ठस्य स्वरूपलक्षणमाह, केचिदिति ।—वर्चः पुरीषम् । तेजिवाहानां तेजस्विनामश्वानां, "सर्वे सान्तास्त्वदन्ताः" इति नियमात् अदन्त-तेज-शब्दादिन्-प्रत्ययेन तेजीति पदं सिद्धम् ; बालं पुच्छलोम इत्यर्थः । "बालम्" इत्यत्र "नालम्" इति पाठे—नालं मेढ्रम ॥ ११५।११६ ॥

नालिकायाः प्रयोगविषयं रेणुकाया अप्रयोज्यताञ्चाह, रसे इति ।—श्रेष्ठ नालिकाख्यकङ्कुष्ठमित्यर्थः, प्राक् तस्यैव श्रेष्ठत्वेनोक्तत्वात्, रसे रसायने, योज्यमिति शेषः । निःसत्त्वं रेणुकाख्यकङ्कुष्ठं, तस्य त्यक्तसत्त्वत्वेनोक्तत्वात ; बहुवैकृतं बहुविकारजनकम् । "श्रेष्ठम्" इत्यत्र "नेष्टम्" इति पाठे—कङ्कुष्ठसंज्ञकं तेजिवाहानां बालं निःसत्त्वं बहुवैकृतम् अत एव रसे रसायने नेष्टमिति पूर्वश्लोकेन अन्वयो बोध्यः ॥ ११७ ॥

कङ्कुष्ठस्य गुणमाह, कङ्कुष्ठमिति ।—गुदार्त्तिः अर्शः ॥ ११८ ॥

अथ रसोपरसानां सामान्यतः शोधनं सत्त्वपातनञ्च।—

सूर्य्यावर्त्तक-कदली वन्ध्या कोशातकी च सुरदाली।
शिग्रुश्च वज्रकन्दो नीरं कणा काकमाची च ॥११९॥
आसामेकरसेन तु लवणक्षाराम्लभाविता बहुशः।
शुध्यन्ति रसोपरसा ध्माता मुञ्चन्ति सत्त्वानि ॥ १२० ॥

अथ कङ्कुष्ठशोधनम्।—

कङ्कुष्ठं शुद्धिमायाति त्रिधा शुण्ठ्यम्बुभावितम् ॥ १२१ ॥

अथ कङ्कुष्ठस्य सत्त्वरूपतायाः कथनम्।—

सत्त्वाकर्षोऽस्य न प्रोक्तो यस्मात् सत्त्वमयं हि तत् ॥ १२२ ॥

अथास्य विरेचनार्थप्रयोगे मात्रादिनिर्देशः।—

भजेदेनं विरेकार्थं ग्राहिभिर्यवमात्रया।
नाशयेदामपूर्त्तिञ्च विरेच्य क्षणमात्रतः ॥ १२३ ॥

रसोपरसानां सामान्यतः शोधनं सत्त्वपातनञ्चाह, सूर्य्यावर्त्तकेति।—सूर्य्यावर्त्तकः सुवर्चला "हुड़हुड़िया" इति प्रसिद्धः। वन्ध्या वन्ध्याकर्कोटकी "सित्‌कॉक्‌रोल" इति ख्याता। कोशातकी घोषकः "घोषालता" इति भाषा। सुरदाली हस्तिघोषकः "पीतघोषा" इति भाषा। वज्रकन्दः वन्यशूरणः। नीरं वालकम्। "नीरकणा" इति समस्तपाठे तु—जलपिप्पली "कॉच्‌ड़ा" इति ख्याता। रसोपरसादिकं सूर्य्यावर्त्तादीनामेकतमरसेन सैन्धवयवक्षारकाञ्जिकैश्च सह बहुवारं भावयित्वा शोधयेत्, ततो भस्त्रया ध्मात्वा सत्त्वं गृह्णीयात् इति ॥ ११९।१२० ॥

कङ्कुष्ठस्य शोधनमाह, कङ्कुष्ठमिति।—त्रिधा शुण्ठ्यम्बुभावितं शुण्ठीक्वाथेन वारत्रयं भावितम् ॥ १२१ ॥

अस्य सत्त्वरूपतामाह, सत्त्वेति।—सुगमम् ॥ १२२ ॥

विरेकार्थम् अस्य प्रयोगविधिमाह, भजेदिति।—ग्राहिभिः मलरोधकैः, शुण्ठी-जीरकादिभिरिति यावत्; ग्राहिलक्षणं यथा भावप्रकाशे।—"दीपनं पाचनं यत् स्यादुष्णत्वात् द्रवशोषकम्। ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली ॥" इति। आमपूर्त्तिम् आमेन पूरणं, देहस्येति शेषः। "आमशान्तिम्" इति पाठे—आमजन्य-विकारमित्यर्थः। विरेचनार्थं शुण्ठीजीरकादिभिः ग्राहिभेषजैः सह यवमात्रं कङ्कुष्ठं

अथास्य अविधिप्रयोगे दोषः।—

भक्षितं सह ताम्बूलैर्विरेच्यासून् विनाशयेत्॥ १२४॥

अथ विषनाशार्थं कङ्कुष्ठप्रयोगविधिः।—

बर्बुरीमूलिकाक्वाथे-जीरसौभाग्यकं समम्।
कङ्कुष्ठं विषनाशाय भूयो भूयः पिबेन्नरः॥ १२५॥

[इति कङ्कुष्ठाधिकारः]।

इत्युपरसाः।

अथ साधारणरसाः।—

अथ साधारणरसानां नामानि।—

कम्पिल्लश्चपलो गौरी-पाषाणो नवसारकः।
कपर्दो वह्निजारश्च गिरिसिन्दूर-हिङ्गुलौ॥ १२६॥
मृद्दारशृङ्गमित्यष्टौ साधारणरसाः स्मृताः।
रससिद्धिकराः प्रोक्ता नागार्जुनपुरःसरैः॥ १२७

प्रयुञ्जीत, तेन अचिरमेव विरेको भवेत् आमपूर्णिश्च नश्येत्। ग्राहिभेषजैः सह प्रयोगविधिश्च अतिविरेचननिवारणार्थं ज्ञेयम्॥ १२३॥

अविधिप्रयोगे दोषमाह, भक्षितमिति।—ताम्बूलैः पर्णपत्रैः, तस्य सरगुणविशिष्टत्वात्। विरेच्य इत्यत्र अति इति पदमूहनीयम्, अतिशयेन रेचयित्वा इत्यर्थः॥१२४॥

विषनाशनार्थं कङ्कुष्ठप्रयोगमाह, बर्बुरीति।—बर्बुरी बब्बोलः "बाबला" इति भाषा, "बाबुइतुलसी" इति ख्याता वनतुलसी वा। मूलिका चोरिका "चोरक" इति प्रसिद्धा। समं समपरिमितम्। बर्बुरीमूलिकाक्वाथैः सह तुल्यमानं जीरकटङ्कणकङ्कुष्ठं विषनाशाय पुनः पुनः प्रत्यहं वा पिबेत् इति। "कङ्कुष्ठं विषनाशाय" इत्यत्र "कङ्कुष्ठविषनाशाय" इति पाठे—अशुद्धकङ्कुष्ठभक्षणजनितविषदोषनाशाय अविधिना कङ्कुष्ठभक्षणजनितविषक्रियानिवारणार्थं वा समपरिमितजीरकटङ्कणं युक्त्या बर्बुरीमूलिकाक्वाथेन पिबेत् इति॥ १२५॥

उपरसानां शोधनादिनिर्देशानन्तरं साधारणरसानामपि तेषु वक्तव्येषु आदौ तेषां नामान्याह, कम्पिल्ल इति।—कम्पिल्लः गुण्डारोचनी "कमलागुँडी" इति लोके। चपलः यशदः "दस्ता" इति भाषा। "कम्पिल्लश्चपलः" इत्यत्र "कम्पिल्लश्च

अथ कम्पिल्लः।—

अथ कम्पिल्लस्य स्वरूपलक्षणमुत्पत्तिस्थानञ्च।—

इष्टिकाचूर्णसङ्काशश्चन्द्रिकाऽऽढ्योऽतिरेचनः।
सौराष्ट्रदेशे चोत्पन्नः स हि कम्पिल्लकः स्मृतः॥ १२८॥

अथ गुणाः।—

पित्तव्रणाध्मानविबन्धनिघ्नः श्लेष्मोदरार्त्तिक्रिमिगुल्मवैरी।
मूलामशोफज्वरशूलहारी कम्पिल्लको रेच्यगदापहारी
॥ १२९ ॥

[ इति कम्पिल्लाधिकारः ]।

परः" इति पाठः साधीयान्। गौरीपाषाणः शुक्लपाषाणः, "फुलखड़ि" इति लोके। नवसारकः "निशादल" इति भाषा, "नरसारः" इत्येव नाम सर्वत्र दृश्यते। कपर्दः वराटिका। वह्निजारः स्वनामख्यातः पश्चिमसागरसम्भूत औषधविशेषः। गिरिसिन्दूरः रक्तवर्णः पार्वतीयरसविशेषः। हिङ्गुलः प्रसिद्धः। सुहागशङ्ख सौसकसमुत्पन्नः पार्वतीयधातुविशेषः। अत्र कम्पिल्लादि सुहागशङ्ख-मित्यन्तानां साधारणरसानां नवसङ्ख्यावत्त्वं सम्पद्यते, परन्तु सङ्ख्याकथनावसरे "इत्यष्टौ" इति विरुद्धोक्तिः कथं सङ्गच्छते? इति चेत् उच्यते—ग्रन्थकारः प्राक् महारसमध्ये चपलं पठित्वाऽपि पुनः साधारणरसे ग्रहणं कृतवान्, तत्र प्राचां मतद्वैधप्रदर्शनमेव हेतुः, निबन्धकारस्य स्वमतन्तु महारसत्वेन, तत्तु तत्रैव समर्थितम्। सत्यपि मतभेदे श्रुतिद्वैधवत् उभयमपि प्रमाणं, यथा चरकमते महाकुष्ठे पठितस्य सिध्मस्य सुश्रुते क्षुद्रकुष्ठेषु, किञ्च महाकुष्ठे पठितस्य सौश्रुतदद्रुणः चरके क्षुद्रकुष्ठे-ष्वन्तर्भावः। अत एव शोधनादिकथनावसरे आचार्य्येणास्य पुनः ग्रहणं न कृतम्, एवञ्च चपलपरित्यागादष्टत्वमवाच्याहतमेव इति॥ १२६।१२७॥

कम्पिल्लस्य लक्षणमुत्पत्तिस्थानञ्चाह, इष्टिकेति।—चन्द्रिकाढ्यः चाकचक्यविशिष्टः, सचन्द्राभवत् उज्ज्वलकणाबहुलः इत्यर्थः॥ १२८॥

तस्य गुणमाह, पित्तेति।—मूलामेत्यत्र मूलशब्देन मूलगतरोगः ग्राह्यः, तेन शिरोरोगनाशनः इत्यर्थः। रेच्येति।—रेच्यः विरेचनार्हः यः गदः रोगः तम् अपहरति नाशयतीति तादृशः विरेचनोपक्रमणीयरोगनाशनः इत्यर्थः॥ १२९॥

## अथ गौरीपाषाणः ।—

अथ गौरीपाषाणस्य पर्य्यायो भेदश्च ।—

गौरीपाषाणकः पीतो विकटो हतचूर्णकः ।
स्फटिकाभश्च शङ्खाभो हरिद्राभस्त्रयः स्मृताः ॥
पूर्वः पूर्वो गुणैः श्रेष्ठः—" ॥ १३० ॥

अथ शोधनम् ।—

"—कारवल्लीफले क्षिपेत् ।
स्वेदयेद्दण्डिकामध्ये शुद्धो भवति मूषकः ॥ १३१ ॥

अथ सत्त्वग्रहणम ।—

तालवद्ग्राहयेत् सत्त्वं शुद्धं शुभ्रं प्रयोजयेत् ॥ १३२ ॥

अथ गुणाः ।—

रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्य्यकृत् ॥ १३३ ॥

[ इति गौरीपाषाणाधिकारः ] ।

## अथ नवसारः ।—

अथ नवसारस्योत्पत्तिः पर्य्यायश्च ।—

करीर-पीलुकाष्ठेषु पच्यमानेषु चोद्भवः ।
क्षारोऽसौ नवसारः स्याच्चूलिकालवणाभिधः ॥ १३४ ॥

गौरीपाषाणस्य पर्य्यायान् वर्णभेदेन वैविध्यञ्चाह, गौरीति ।—पीत-विकट-हतचूर्णकाः इति इमे त्रयः पर्य्यायाः । पूर्वं इति ।—पूर्वः पूर्वः हरिद्राभगौरीपाषाणात् शङ्खाभः, शङ्खाभपाषाणात् स्फटिकाभः श्रेष्ठः ॥ १३० ॥

तस्य शोधनमाह, कारवल्लीति ।—कारवल्लीफले कारवल्लीफलरसे, कारवल्ली "क्षुद्र-करेला" इति भाषा । स्वेदयेत्, दोलायन्त्रे इति शेषः । मूषकः गौरीपाषाणः ॥१३१॥

सत्त्वग्रहणमाह, तालवदिति ।—हरितालात् सत्त्वग्रहणविधिना इत्यर्थः ॥१३२॥

गुणमाह, रसेति ।—रसवीर्य्यकृत्, संयोगेन इति शेषः ॥ १३३ ॥

नवसारस्य उत्पत्तिं पर्य्यायञ्चाह, करीरेति ।—करीरः वंशाङ्कुरः मरुजद्रुम-विशेषो वा । पीलुः औत्तरापथिकफलविशेषः "आखरोट्" इति लोके । चूलिका-लवणमिति पर्य्यायः ॥ १३४ ॥

उत्पत्तौ मतान्तरम्।—

इष्टिकादहने जातं पाण्डुरं लवणं लघु।
तदुक्तं नवसाराख्यं चूलिकालवणञ्च तत्॥ १३५॥

अथ गुणाः।—

रसेन्द्रजारणं लोहद्रावणं जठराग्निकृत्।
गुल्मप्लीहास्यशोषघ्नं भुक्तमांसादिजारणम्॥
विड़ाख्यञ्च त्रिदोषघ्नं चूलिकालवणं मतम्॥ १३६॥

[ इति नवसाराधिकारः ]।

## अथ वराटिका।—

अथ वराटिकालक्षणम्।—

पीताभा ग्रन्थिका पृष्ठे दीर्घवृत्ता वराटिका।
रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका॥ १३७॥

अथ उत्तमादिभेदेन तस्याः त्रैविध्यनिर्देशः।—

सार्द्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा।
पादोन-निष्कभारा च कनिष्ठा परिकीर्त्तिता॥ १३८॥

उत्पत्तौ मतान्तरमाह, इष्टिकेति।—इष्टिकादहने इष्टकदहनकाले इष्टकदहनस्थाने वा। ग्रन्थान्तरे अस्य उत्पत्तिरन्यविधा दर्शिता, यथा—"औष्ट्रं वा माहिषं गव्यं पुरीषं भस्मतां गतम्। क्षारपाकविधानेन नृसारमिहोच्यते॥" इति। यतोऽत्रास्य गृहीता अतः ग्रन्थान्तरदर्शनात् सा ज्ञातव्या, तद्यथा—"नरसारो भवेत् गुड़ः चूर्णतोये विपाचितः। डौलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये॥" इति अपि॥१३५॥

अथास्य गुणमाह, रसेन्द्रेति।—विड़ाख्यं रसादीनां स्वर्णादिग्रसनार्थम् औषधविशेषः विड़ः तदाख्यं, विड़साध्यकर्माणि प्रयोज्यमिति॥ १३६॥

वराटिकायाः लक्षणमाह, पीताभेति।—पृष्ठे ग्रन्थिका ग्रन्थिविशिष्टा। दीर्घवृत्ता किञ्चित् गोलाकृतिदीर्घाकारा; "दीर्घवृत्ता" इत्यत्र "दीर्घवृन्ता" इति पाठान्तरे—अग्रभागे वृन्तवत् दीर्घा इत्यर्थो ज्ञेयः। सेति।—सा तथाभूता वराटिका चराचरेति नाम्ना ख्याता॥ १३७॥

उत्तममध्यमाधमभेदेन तस्याः त्रैविध्यं विवृणोति, सार्द्धेति।—सार्द्धनिष्कभरा

अथ गुणाः ।—

परिणामादिशूलघ्नी ग्रहणी-क्षयनाशिनी ।
कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ॥
रसेन्द्रजारणे प्रोक्ता विड्द्रव्येषु शस्यते ॥ १३९ ॥

अथ वराटस्य लक्षणगुणौ ।—

तदन्ये तु वराटाः स्युर्गुरवः श्लेष्मपित्तलाः ॥ १४० ॥

अथ शोधनम् ।—

वराटाः काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयुः ॥ १४१ ॥

[ इति वराटिकाधिकारः ] ।

## अथ अग्निजारः ।—

अथाग्निजारस्य स्वरूपलक्षणम् ।—

समुद्रेणाग्निनक्रस्य जरायुर्बहिरुज्झितः ।
संशुष्को भानुतापेन सोऽग्निजार इति स्मृतः ॥ १४२ ॥

---

षण्माषकपरिमिता । पादोननिष्कभारा निष्कचतुर्थांशहीना, माषत्रयपरिमाणा इत्यर्थः ॥ १३८ ॥

तस्याः गुणानाह, परिणामादीति ।—परिणामादि इत्यत्र आदिपदेन अन्नद्रवयकृत्प्लीहादीनां ग्रहणम् । विड्द्रव्येषु रसादीनां स्वर्णादिग्रासशक्तिसञ्जननार्थम् औषधद्रव्येषु ॥ १३९ ॥

वराटस्य चातिदीर्घत्वलक्षणं गुणश्चाह, तदिति ।—प्रोक्तवराटिकालक्षणविपरीता वराटाः ज्ञेयाः इति ॥ १४० ॥

शोधनमाह, वराटा इति ।—स्विन्ना इत्यत्र दोलायामिति बोध्यम् ॥ १४१ ॥

अग्निजारस्य स्वरूपपरिचयमाह, समुद्रेणेति ।—अग्निनक्रस्य न क्रामति दूरस्थलम् इति नक्रः जलजन्तुभेदः ; तथा च वाचस्पत्ये—"नक्रः जलजन्तुभेदे मकरादौ च" इति । अत्र आदिपदेन शिशुमारवड़वादयो बोध्याः, तेषामपि दूरस्थानभूमिगमनादिशक्तिराहित्यात् । अग्निविशिष्टः नक्रः तस्य समुद्रस्थाग्निवक्त्रजलजन्तुभेदस्य, वडवाया इत्यर्थः, यद्वा—नक्रं नासिका, नक्रशब्दस्य नासिकार्थकत्वेऽपि सामीप्यादत्र मुखे उपचारः, तेनापि अग्निनक्रशब्देन अग्निमुखी वड़वा एव बोध्या । जरायुः गर्भाशयः, गर्भावरकचर्म इति यावत् । बहिः समुद्रात् बहिः तटे इत्यर्थः । अन्यत्रापि

अथ गुणाः।—

अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत्।
वर्द्धनो रसवीर्य्यस्य दीपनो जारणस्तथा॥ १४३॥

तस्य स्वभावतः शुद्धत्वनिर्देशः।—

यदब्धिक्षारसंशुद्धः तस्मात् शुद्धिर्न शोध्यते॥१४४॥

[ इत्यग्निजाराधिकारः ]।

अथ गिरिसिन्दूरम्।—

अथ गिरिसिन्दूरस्य स्वरूपलक्षणम्।—

महागिरिषु चाल्पीयः-पाषाणान्तःस्थितो रसः।
शुष्कः शोणः स निर्दिष्टो गिरिसिन्दूरसंज्ञया॥ १४५॥

अथ गुणाः।—

त्रिदोषशमनं भेदि रसबन्धनमग्रिमम्।
देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम्॥ १४६॥

[ इति गिरिसिन्दूराधिकारः ]।

अथ हिङ्गुलः।—

अथ हिङ्गुलस्य द्वैविध्यम्।—

हिङ्गुलः शुकतुण्डाख्यो हंसपाकस्तथाऽपरः॥ १४७॥

---

एतस्य लक्षणमुक्तं, तद्यथा—"जाराभो दहनस्पर्शी पिच्छिलः सागरे भवः। जरायुः स चतुर्वर्णः तेषु श्रेष्ठः सलोहितः॥" इति। ( जाराभः जारयति असौ जीर्य्यते अनेन वा इति निरुक्त्या जारः अग्निः तदाभः अग्निवत् प्रभाविशिष्ट इत्यर्थः )॥ १४२॥

गुणानाह, अग्निजार इति।—धनुर्वातः धनुस्तम्भः॥ १४३॥

शोधनस्य अप्रयोजनीयतामाह, यदिति।—अब्धेः समुद्रस्य क्षारेण क्षारोदकेन संशुद्धः; समुद्रक्षारां लवणमयत्वात्॥ १४४॥

गिरिसिन्दूरस्य स्वरूपलक्षणमाह, महेति।—हिमालयादिमहत्पर्वतान्तर्वार्त्तिक्षुद्र-पाषाणद्वयमध्यनिसृतः रक्तवर्णरसविशेषः शुष्कीभूतः गिरिसिन्दूर इति ख्यातः॥१४५॥

तस्य गुणमाह, त्रिदोषेति।—रसबन्धनमग्रिमं रसबन्धनार्हनानाविधद्रव्येषु श्रेष्ठम्॥ १४६॥

अथ शुकतुण्डाख्यस्य परिचयः ।—

प्रथमोऽल्पगुणस्तत्र चर्मारः स निगद्यते ॥ १४८ ॥

अथ हंसपाकस्य लक्षणम् ।—

श्वेतरेखः प्रवालाभो हंसपाकः स ईरितः ॥ १४९ ॥

अथ गुणाः ।—

हिङ्गुलः सर्वदोषघ्नो दीपनोऽतिरसायनः ।
सर्वरोगहरो वृष्यो जारणायातिशस्यते ॥ १५० ॥

अथ हिङ्गुलाकृष्टसूतस्य गुणाः ।—

एतस्मादाहृतः सूतो जीर्णगन्धसमो गुणैः ॥ १५१ ॥

अथ शोधनम् ।—

सप्तकृत्वाऽऽर्द्रकद्रावै-र्लकुचस्याम्बुनाऽपि वा ।
शोषितो भावयित्वा च निर्दोषो जायते खलु ॥ १५२ ॥

---

नामभेदेन हिङ्गुलस्य द्वैविध्यमाह, हिङ्गुल इति ।—शुकतुण्डाख्य इत्यस्य आद्य इति शेषः ॥ १४७ ॥

शुकतुण्डहिङ्गुलस्य परिचयमाह, प्रथम इति ।—तत्र तयोर्मध्ये प्रथमः शुकतुण्डाख्यः अल्पगुणः हंसपाकाख्यहिङ्गुलापेक्षयेति बोध्यम् । चर्मारः इति तस्य नामान्तरम् । यद्वा—तत्र वक्ष्यमाणेषु त्रिविधेषु हिङ्गुलेषु मध्ये प्रथमः चर्मारः, स अल्पगुणः, द्वितीयः शुकतुण्डाख्यः, अपरः हंसपाकः इति त्रिविधः । तथा च भावप्रकाशे—"दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्यात् गुणवान् उत्तरोत्तरम् ॥ चर्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जवाकुसुमसङ्काशो हंसपादो महोत्तमः ॥" इति । अत्र च प्रतिलोमतन्त्रयुक्तिन्यायेन आदौ द्वितीयतृतीयावुक्त्वा पश्चात् प्रथममुक्तवान् ॥ १४८ ॥

हंसपाकस्य प्रवरत्वात् तस्यैव लक्षणमाह, श्वेतरेख इति ।—श्वेतरेखः शुभ्रोज्ज्वलरेखाविशिष्टः ॥ १४९ ॥

हंसपाकहिङ्गुलस्य गुणमाह, हिङ्गुल इति ।—जारणायातिशस्यते भस्मीकरणार्थं हंसपाकः प्रशस्तः ॥ १५० ॥

हिङ्गुलाकृष्टरसस्य गुणमाह, एतस्मादिति ।—जीर्णगन्धसमः शोधितगन्धकसदृशः; जीर्णशब्देनात्र शोधितो बोध्यः । अथवा—जीर्णगन्धसमः 'गन्धकद्रावसमः; गन्धकद्रुतिरेव गन्धकजारणोच्यते ॥ १५१ ॥

अथ शोधनानन्तरं विशेषेण गुणविशेष:।—

किमत्र चित्रं दरद: सुभावित: क्षीरेण मेष्या बहुशोऽम्लवर्गैः।
एवं सुवर्णं बहुघर्मतापितं करोति साक्षाद्वरकुङ्कुमप्रभम्
॥ १५३॥

अथ हिङ्गुलात् सत्त्वाकर्षणविधि:।—

दरद: पातनायन्त्रे पातितश्च जलाश्रये।
तत् सत्त्वं सूतसङ्काशं जायते नात्र संशय: ॥ १५४ ॥

[ इति हिङ्गुलाधिकार: ]।

## अथ मृद्दारशृङ्गकम्।—

अथ मृद्दारशृङ्गस्य परिचय:।—

सदलं पीतवर्णञ्च भवेद्गुर्जरमण्डले।
अर्बुदस्य गिरे: पार्श्वे जातं मृद्दारशृङ्गकम् ॥ १५५ ॥

---

शोधनमाह, सप्तकृत्वेति।—सप्तकृत्व: सप्तवारान् ; सप्तशब्दात् चकृत्वस्-प्रत्ययेन निष्पन्नम् ; "सर्वे सान्तास्त्वदन्ता:" इति नियमात् अत्र सप्तकृत्व इति अदन्त: सिद्ध:। लकुचाम्बुना डहुरसेन ॥ १५२ ॥

शोधनविशेषेण हिङ्गुलस्य गुणविशेषमाह, किमिति।—मेषीदुग्धेन तथा अम्लवर्गेण च सप्तसप्तवारान् भावित: हिङ्गुल: सेवित: प्रखरातपतप्तं नरं प्रवरकुङ्कुमसदृशं शोभनवर्णं करोति, अथवा—उक्तप्रकारशोधितहिङ्गुल: स्वयोगेन वह्निना बहुवारमारितं सुवर्णं प्रवरकुङ्कुमसदृशं सुवर्णं करोति इति ॥ १५३ ॥

सत्त्वाकर्षणमाह, दरद इति।—पातनायन्त्रे अध:पातनायन्त्रे ; अध:पातनविधिना ऊर्द्धभाण्डोदरे जम्बीरशोधितदरदं लिप्त्वा अधोभाण्डे जलं संस्थाप्य ऊर्द्धभाण्डोपरि पुटं देयं, तेन अध:स्थजले पारदसदृशं सत्त्वं पतेत् इति। अध:पातनयन्त्रलक्षणञ्चाग्रे वक्ष्यति ॥ १५४ ॥

मृद्दारशृङ्गस्य लक्षणमुत्पत्तिस्थानञ्चाह, सदलमिति।—वंशपत्रहरितालवत् पटलविशिष्टम्। मृद्दारशृङ्गस्य पर्य्यायादिकं निघण्ट्वादौ अन्यत्र वा कुत्रापि ग्रन्थे न परिदृश्यते, परन्तु अस्मद्देशे यत् "मुद्राशङ्ख" इति नाम्ना प्रसिद्धं, पश्चिमदेशे तत्

अथ गुणाः।—

सौमसत्त्वं गुरु श्लेष्म-शमनं पुं-गदापहम्।
रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम्॥ १५६॥

[ इति मृद्दारशृङ्गाधिकारः ]।

अथ साधारणरसानां सामान्यशोधनम्।—

साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना।
त्रिरात्रं भाविताः शुष्काः भवेयुर्दोषवर्जिताः॥ १५७॥

अथ सत्त्वानां सामान्यशोधनम।—

यानि कानि च सत्त्वानि तानि शुध्यन्त्यशेषतः।
ध्मातानि शुद्धिवर्गेण मिलन्ति च परस्परम्॥ १५८॥

इति करवालभैरवः। *

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये उपरस-साधारणरसानां शुद्ध्यादिनिरूपणं नाम तृतीयोऽध्यायः॥ ३॥

"मुरदारशिङ्" इति नाम्ना तद्वचैरभिधीयते, अतो मन्ये मृद्दारशृङ्गकं मुद्राशङ्ख एव इति॥ १५५॥

तस्य गुणमाह, सौमेति।—सौमसत्त्वमिति मृद्दारशृङ्गस्य नामान्तरं, तस्य सौमक-सारविशेषत्वात्। पुं-गदापहं पुंप्रतिनियततापदंशादिरोगनाशनम्॥ १५६॥

साधारणरसानां सामान्यशोधनमाह, साधारणेति।—साधारणरसाः कम्पिल्ला-दयः॥ १५७॥

सत्त्वानां सामान्यशोधनमाह, यानीति।—ध्मातानि शुद्धिवर्गेण "काचटङ्कण-शिग्राभिः शोधनीयगणो मतः" इत्यग्रे वक्ष्यमाणशोधनीयगणेन सह मर्दयित्वा भस्त्राग्निना सन्धुक्षितानि। मिलन्ति एकीभवन्ति यसत्त्वीत्यर्थः॥ १५८॥

* करवालभैरव इति कस्यचित् रसतन्त्रकर्त्तुः अभिधा।

इति रसरत्नसमुच्चयबोधिन्यां तृतीयोऽध्यायः॥ ३॥

# अथ चतुर्थोऽध्यायः ।

## अथ रत्नानि ।—

### अथ मणयः ।—

अथ मणीनां सामान्यकार्य्यम् ।—

मणयोऽपि च विज्ञेयाः सूतबन्धनकारकाः ॥ १ ॥

अथ मणीनां नामानि ।—

वैक्रान्तः सूर्य्यकान्तश्च हीरकं मौक्तिकं मणिः ।
चन्द्रकान्तस्तथा चैव राजावर्त्तश्च सप्तमः ॥ २ ॥
गरुड़ोद्गारकश्चैव ज्ञातव्या मणयस्त्वमी ।
पुष्परागो गोमेदश्च पद्मरागः प्रवालकम् ॥ ३ ॥
वैदूर्य्यञ्च तथा नील एते च मणयो मताः ।
यत्नतः सङ्ग्रहीतव्या रसबन्धस्य कारणात् ॥ ४ ॥

अथ तृतीयाध्याये उपरस-साधारणरसानां शोधनादिनिरूपणानन्तरम् इदानीं रत्नानां नामलक्षणादिकं निरूपयितुं चतुर्थाध्यायमारभते ; तत्रादौ रत्नानां सामान्य-कार्य्यमाह, मणय इति ।—मणयः रत्नानि । रत्नशब्दस्य निरुक्तिः राजनिघण्टौ उक्ता यथा—"धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत । ततो रत्नमिति प्रोक्तं शब्दशास्त्र-विशारदैः ॥" इति । सूतबन्धनकारकत्वं सामान्यकार्य्यम ॥ १ ॥

मणीनां नामान्याह, वैक्रान्त इति ।—वैक्रान्तादिनीलान्ताः चतुर्दश मणिभेदाः । वैक्रान्तः "चुणिविशेषः" इति लोके । सूर्य्यकान्तः स्वनामख्यातः "आतसपाथर" इति लोके ; यद्यप्यत्रास्य गुणादिकं नोक्तं तथाऽपि ग्रन्थान्तरदर्शनात तज्ज्ञातव्यं, यथा राजनिघण्टौ—"सूर्य्यकान्तो भवेदुष्णो निर्म्मलश्च रसायनः । वातश्लेष्महरो मेध्यः पूजनात् रवितुष्टिदः ॥" इति । मणिः स्फटिकोपलः ; अस्यापि गुणं यथा राजनिघण्टौ—"पित्तदाहरोगघ्नः रक्तसमवीर्य्यश्च" इति । चन्द्रकान्तः स्वनामख्यातः ; अस्यापि गुणं तत्रैव द्रष्टव्यं यथा—"चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापहृत् । शिवप्रीतिकरः स्वच्छः ग्रहालक्ष्मीविनाशकृत् ॥" इति । राजावर्त्तः पश्चिमदेशे "रेवटी" इति नाम्ना ख्यातः । गरुड़ोद्गारकः मरकतः "पान्ना" इति लोके । पुष्परागः

अथ श्रेष्ठमणीनां नामानि ।—

पद्मरागेन्द्रनीलाख्यौ तथा मरकतोत्तमः ।
पुष्परागः सवज्राख्यः पञ्च रत्नवराः स्मृताः ॥ ५ ॥

अथ दुष्टनवग्रहाणां प्रसादकरत्नानि ।—

माणिक्यमुक्ताफलविद्रुमाणि तार्क्ष्यञ्च पुष्पं भिदुरञ्च नीलम् ।
गोमेदकञ्चाथ विदूरकञ्च क्रमेण रत्नानि नवग्रहाणाम् ॥ ६ ॥

अथ अन्यविधानि दुष्टनवग्रहाणां प्रसादकरत्नानि ।—

ग्रहानुमैत्र्या कुरुविन्दपुष्प-प्रवालमुक्ताफलतार्क्ष्यवज्रम् ।
नीलाख्य-गोमेदविदूरकञ्च क्रमेण मुद्राधृतमिष्टसिद्ध्यै ॥७॥

अथ रत्नधारणस्य सिद्धिप्रदत्वोक्तिः ।—

रसे रसायने दाने धारणे देवतार्चने ।
सुलक्षणानि सुजातीनि रत्नान्युक्तानि सिद्धये ॥ ८ ॥

---

पीतवर्णमणिविशेषः "पोखराज्" इति लोके । गोमेदः रक्तवर्णमणिविशेषः । पद्मरागः रक्तवर्णमणिविशेषः । एतस्यापि गुणं यथा राजनिघण्टौ—"माणिक्यं मधुरं स्निग्धं वातपित्तप्रणाशनम् । रत्नप्रयोगप्रज्ञानां रसायनकरं परम् ॥ माणिक्यं पद्मरागः" इति । वैदूर्य्यं विदूरभूमिजमणिविशेषः पाश्चमे "लसुनिया" इति ख्यातं, तच्च मेघगर्ज्जनेन अङ्कुरीभवति इति प्रसिद्धिः । नीलः इन्द्रनीलः "नीला" इति ख्यातः ॥ २—४ ॥

श्रेष्ठरत्नानां नामान्याह, पद्मरागेति ।—इन्द्रनीलः नीलः । मरकतोत्तमः गरुडोद्गारकः, गारुत्मतः इति यावत् । वज्रं हीरकम् ॥ ५ ॥

नवग्रहेषु कुपितेषु यस्य प्रसादनार्थं यानि रत्नानि धार्य्याणि तेषां नामान्याह, माणिक्येति ।—माणिक्यं पद्मरागः । तार्क्ष्यं गरुडोद्गारकः, मरकतमिति यावत् । पुष्पं पुष्परागः । भिदुरं हीरकम् । माणिक्यादीनि विदूरकान्तानि एतानि नव रत्नानि सूर्य्यादिकेत्वन्तानां नवग्रहाणां प्रसादनार्थं क्रमेण धार्य्याणि इत्यर्थः ॥ ६ ॥

नवग्रहप्रसादनार्थं रत्नधारणविषये मतान्तरमाह, ग्रहेति ।—ग्रहानुमैत्र्या ग्रहाणां नवग्रहाणां मैत्रीं प्रसादम् अनु लक्ष्यीकृत्य इति ग्रहानुमैत्री तया नवग्रहप्रसादन-हेतुना इत्यर्थः । कुरुविन्दः पद्मरागः । क्रमेणेति ।—क्रमेण पौर्वापर्य्यानुसारेण, मुद्रया अङ्गुरीयकेण सह धृतं सत् इष्टसिद्ध्यै अभिलषितफललाभाय, भवतीति शेषः ॥ ७ ॥

रत्नानां सिद्धिकारकत्वमाह, रसे इति ।—सुलक्षणानि प्रशस्तलक्षणानि ;

अथ माणिक्यम्।—

अथ द्विविधमाणिक्यनिर्देशः।—

माणिक्यं पद्मरागाख्यं द्वितीयं नीलगन्धि च ॥ ९ ॥

अथ प्रशस्तपद्मरागमाणिक्यलक्षणम्।—

कुशेशयदलच्छायं स्वच्छं स्निग्धं महत् स्फुटम्।
वृत्तायतं समं गात्रं माणिक्यं श्रेष्ठमुच्यते ॥ १० ॥

अथ प्रशस्तनीलगन्धिमाणिक्यलक्षणम्।—

नीलं गङ्गाम्बुसम्भूतं नीलगर्भारुणच्छवि।
पूर्वमाणिक्यवच्छ्रेष्ठं माणिक्यं नीलगन्धि तत् ॥ ११ ॥

अथ निकृष्टमाणिक्यलक्षणम्।—

रन्ध्रकार्कश्यमालिन्य-रौक्ष्यावैशद्यसंयुतम्।
चिपिटं लघु वक्रञ्च माणिक्यं दुष्टमष्टधा ॥ १२ ॥

"सुरत्न्यानि" इति पाठे—सु शोभनं यथा तथा रत्न्यानि उत्तमप्रयत्नेन रक्षणार्हाणीत्यर्थः। मुक्तादीनि उत्कृष्टजातीयानि। रसादिविषये सिद्धिलाभार्थम् उक्तानि उत्कृष्टजातीयरत्नानि सर्वप्रयत्नेन व्यवहर्त्तव्यानि भवन्तीति ॥ ८ ॥

माणिक्यस्य द्वैविध्यमाह, माणिक्यमिति।—प्रथमं पद्मरागनामकं द्वितीयं नीलगन्धिनामकम्। एतं हि आदित्यस्य प्रसादनार्थं धार्य्यम् इति ग्रन्थविदः ॥ ९ ॥

प्रशस्तपद्मरागमाणिक्यलक्षणमाह, कुशेशयेति।—कुशेशयदलच्छायं पद्मपत्राभम्। स्वच्छं निर्मलम्। स्निग्धं मसृणम्। महत् गुरुभारम्। स्फुटं दीप्तिमत्। वृत्तायतं वर्त्तुलं विस्तृतञ्च। समं गात्रम् उच्चनीचरहितावयवम्; यद्वा—समं समावयवम्, गात्रं स्थूलमित्यर्थः। माणिक्यं पद्मरागमाणिक्यं तस्यैव प्राथम्येनोक्तत्वात् नीलगन्धिमाणिक्यलक्षणस्य पश्चादुल्लिखितत्वाच्च ॥ १० ॥

नीलगन्धिमाणिक्येषु श्रेष्ठस्य लक्षणमाह, नीलमिति।—नीलमत्र नीलगन्धिमाणिक्यभेदः, न तु इन्द्रनीलः। नीलगर्भारुणच्छवि अन्तर्नीलाभमरुणवर्णम्। पूर्वमाणिक्यवत् प्रथमोक्तपद्मरागमाणिक्यलक्षणवत् स्वच्छस्निग्धादिगुणविशिष्टम् इत्यर्थः ॥ ११ ॥

अपकृष्टमाणिक्यलक्षणमाह, रन्ध्रेति।—रन्ध्रं छिद्रम्। अवैशद्यम् अनुज्ज्वलमित्यर्थः। "वैशद्य" इति पाठे—धूलिस्पर्शवदपेच्छिलत्वं, खरत्वमित्यर्थः ॥ १२ ॥

अथ माणिक्यस्य गुणाः ।—

माणिक्यं दीपनं वृष्यं कफवातक्षयार्त्तिनुत् ।
भूतवेतालपापघ्नं कर्मजव्याधिनाशनम् ॥ १३ ॥

[ इति माणिक्याधिकारः ] ।

## अथ मौक्तिकम् ।—

अथ प्रशस्तमौक्तिकलक्षणम् ।—

ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत् ।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम् ॥ १४ ॥

अथ मौक्तिकगुणाः ।—

मुक्ताफलं लघु हिमं मधुरञ्च कान्ति-
दृष्ट्यग्निपुष्टिकरणं विषहारि भेदि ।
वीर्य्यप्रदं जलनिधेर्जनिता च शुक्ति-
र्दीप्ता च पक्तिरुजमाशु हरेदवश्यम् ॥ १५ ॥

गुणमाह, माणिक्यमिति ।—दीपनम् अग्निकारकम् । तल्लक्षणं यथा—"पचेन्नामं वह्निकृत् यद्दीपनं तत् यथा मिषिः" इति । भूतेति ।—भूतवेतालाद्यावेशनाशनं पापनाशनञ्च, तच्च धारणेनेति ज्ञेयम् । कर्मजव्याधिनाशनमपि धारणेन बोध्यम् ॥१३॥

प्रशस्तमौक्तिकलक्षणमाह, ह्लादीति ।—ह्लादि आनन्दजननम् । रश्मिवत् प्रभाविशिष्टम् अत्युज्ज्वलमिति यावत् । महत् स्थूलम् । तोयप्रभं जलाभं, यत्र तिष्ठति तत्र दूरतो जलभ्रमोत्पादकमित्यर्थः. यद्वा—जलवत् तरलच्छायं, लावण्यविशिष्टमिति यावत् । लावण्यशब्दः जलशब्देन उपचरितः कविभिः, यथा—"लावण्यलीलाजलम्" इति । नवधा शुभम एतन्नवलक्षणविशिष्टं मौक्तिकं प्रशस्तम् । इदं चन्द्रप्रसादकम्; मतान्तरे चान्द्रः ॥ १४ ॥

गुणमाह. मुक्ताफलमिति ।—भेदि रेचनम् । मौक्तिकयोनित्वात् मौक्तिकगुणवर्णनप्रसङ्गेनात शुक्तेरपि गुणमाह, जलनिधेरिति ।—जलनिधेः जनिता समुद्रभवा, जनिता-शब्दोऽत्र जातार्थे प्रयुक्त इति बोध्यम् । दीप्ता दीपनगुणसम्पन्ना, अग्निदीपनी इति यावत् । अथवा—दीप्ता उज्ज्वला । पक्तिरुजं परिणामशूलमित्यर्थः । मौक्तिकयोनिशुक्तिप्रसङ्गेनात अन्येऽपि तद्योनयः ग्रन्थान्तरानुसरणात् ज्ञातव्याः, तद्यथा—

अथ निकृष्टमौक्तिकलक्षणम्।—

रूक्षाङ्गं निर्जलं श्यावं ताम्राभं लवणोपमम्।
अर्द्धशुभ्रञ्च विकटं ग्रन्थिलं मौक्तिकं त्यजेत्॥ १६॥

अथ मौक्तिकस्य गुणान्तरम्।—

कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यनुत्।
पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम्॥ १७॥

[ इति मौक्तिकाधिकारः ]।

## अथ प्रवालम्।—

अथ प्रशस्तप्रवाललक्षणम्।—

पक्वबिम्बफलच्छायं वृत्तायतमवक्रकम्।
स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम्॥ १८॥

अथ निकृष्टप्रवाललक्षणम्।—

पाण्डुरं धूसरं रूक्षं सव्रणं कोटरान्वितम्।
निर्भारं शुभ्रवर्णञ्च प्रवालं नेष्यतेऽशुभम्॥ १९॥

"शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यश्च दर्दुरः। वेणुरेते समाख्यातास्तज्ज्ञैः मौक्तिकयोनयः॥" इति॥ १५॥

वर्जनीयमुक्तालक्षणमाह, रूक्षाङ्गमिति।—निर्जलं निर्जडं, डलयोरैक्यात् अशिशिरमित्यर्थः, उष्णमिति यावत्; यद्वा—निश्छायं, दृश्यते च लावण्ये जलशब्दोपचारः, मुक्ताफलस्य तरलच्छाया एव लावण्यशब्दबोधिका, यदुक्तं,—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इति। अत्र जलशब्देन मुक्ताफलगततरलच्छाया बोध्या। श्यावं शुक्लानुविद्धकृष्णवर्णम्। लवणोपमं लवणसदृशखरस्पर्शम्। अर्द्धशुभ्रं मल्यात्यामभमाविलम्। विकटं विषमगात्रम्। ग्रन्थिलं सव्रणं, ग्रन्थिविशिष्टमिति यावत्॥ १६॥

गुणान्तरमाह, कफेति।—दाहघ्नमिति धारणात्॥ १७॥

उत्तमप्रवालस्य लक्षणमाह, पक्वेति।—पक्वबिम्बफलच्छायं बिम्बफलम् ओष्ठोपमाफलं "तेलाकुचा" "बनकुँदरि" इति च भाषा; पक्वबिम्बफलवत् रक्तवर्णम्। अव्रणकं ग्रन्थ्यादिरहितम्। सप्तधा शुभम् एतत्सप्तविधलक्षणविशिष्टं प्रवालं मङ्गलप्रदम्। एवमेतत् भूमिसुतस्य प्रियम्॥ १८॥

अथ प्रवालगुणाः ।—

क्षय पित्तास्र-कासघ्नं दीपनं पाचनं लघु ।
विषभूतादिशमनं विद्रुमं नेत्ररोगनुत् ॥ २० ॥

[ इति प्रवालाधिकारः ] ।

अथ तार्क्ष्यम् ।—

अथ प्रशस्ततार्क्ष्यलक्षणम् ।—

हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम् ।
मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम् ॥ २१ ॥

अथाप्रशस्ततार्क्ष्यलक्षणम् ।—

कपिलं कर्कशं नीलं पाण्डु कृष्णं मलान्वितम् ।
चिपिटं विकटं रूक्षं लघु तार्क्ष्यं न शस्यते ॥ २२ ॥

अथ तार्क्ष्यगुणाः ।—

ज्वरच्छर्दिविषश्वास-सन्निपाताग्निमान्द्यनुत् ।
दुर्नामपाण्डुशोफघ्नं तार्क्ष्यमोजोविवर्द्धनम् ॥ २३ ॥—

[ इति तार्क्ष्याधिकारः ] !

---

कुप्रवाललक्षणमाह, पाण्डुरमिति ।—पाण्डुरं श्वेतपीतमिश्रवर्णम् । धूसरं श्वेतकृष्णमिश्रवर्णम् । कोटरान्वितं सोत्सङ्गं, सच्छिद्रमिति यावत् । निर्भारं लघु ॥ १९ ॥

गुणमाह, क्षयेति ।—पाचनम् आमपाचकं किन्तु नाग्निसन्धुक्षणम् ; तल्लक्षणं यथा शार्ङ्गधरे—"पचत्यामं न वह्निञ्च कुर्यात् यत्तद्धि पाचनम्" इति । विषभूतादिशमनं धारणादिति ज्ञेयम् ॥ २० ॥

प्रशस्ततार्क्ष्यलक्षणमाह, हरिदिति ।—हरिद्वर्णं नीलपीतमिश्रवर्णं, शष्पवर्णमिति यावत् । स्फुरद्रश्मिचयं विसारिकिरणसमूहम् । भासुरं प्रभासमन्वितम् । तार्क्ष्यं मरकतः । गात्रं स्थूलम् । एतत्सप्तगुणसंयुक्तं तार्क्ष्यं शुभं ज्ञेयम् । इदं बुधग्रहप्रसादनार्थं धार्य्यं, मतान्तरे सुरगुरोरिति ॥ २१ ॥

दुष्टतार्क्ष्यलक्षणमाह, कपिलमिति ।—कपिलं पिङ्गलवर्णम् । विकटं विकृताकृम् ॥ २२ ॥

गुणमाह, ज्वरेति ।—सुगमम् ॥ २३ ॥

## अथ पुष्परागः।—

अथ प्रशस्तपुष्परागलक्षणम्।—

पुष्परागो गुरुः स्वच्छः स्निग्धः स्थूलः समो मृदुः।
कर्णिकारप्रसूनाभो मसृणश्च शुभोऽष्टधा॥ २४॥

अथाप्रशस्तपुष्परागलक्षणम्।—

निष्प्रभं कर्कशं रूक्षं पीतश्यामं नतोन्नतम्।
कपिशं कपिलं पाण्डु पुष्परागं परित्यजेत्॥ २५॥

अथ पुष्परागगुणाः।—

पुष्परागो विषच्छर्दि-कफवाताग्निमान्द्यनुत्।
दाहकुष्ठास्रशमनो दीपनः पाचनो लघुः॥ २६॥

[इति पुष्परागाधिकारः]।

## अथ वज्रम्।—

अथ वज्राणां त्रैविध्यनिर्देशः।—

वज्रञ्च त्रिविधं प्रोक्तं नरो नारी नपुंसकम्।
पूर्वं पूर्वमिह श्रेष्ठं रसवीर्य्यविपाकतः॥ २७॥

---

उत्कृष्टपुष्परागलक्षणमाह, पुष्पराग इति।—समः समगात्रः। मृदुः सुखस्पर्शः दृश्यश्च। कर्णिकारप्रसूनाभः कर्णिकारः कृतमालकः, "सोंदाल" इति भाषा, तस्य पुष्पसदृशवर्णविशिष्टः, पीतः इति यावत्। एतदष्टलक्षणसमन्वितः पुष्परागः शुभप्रदः ज्ञेयः। अयं बार्हस्पत्यः, मतान्तरे सौमस्य इति॥ २४॥

वर्जनीयपुष्परागलक्षणमाह, निष्प्रभमिति।—निष्प्रभं ज्योतिःशून्यं, मलिनमिति यावत। पीतश्यामं कृष्णपीतमिश्रवर्णम्। नतोन्नतं विषमगात्रम्। कपिशं श्याववर्णम्। कपिलं पिङ्गलवर्णम्॥ २५॥

गुणमाह, पुष्परागः इति।—सुगमम्॥ २६॥

स्त्रीपुंसादिभेदेन वज्रस्य त्रैविध्यमाह, वज्रमिति।—पूर्वं पूर्वं श्रेष्ठं नपुंसकात् नारी नार्य्याः नरः श्रेष्ठः। रसेति।—रसादिहेतोरित्यर्थः, तत्र रसः द्रव्याणां स्वाभाविकमधुरत्वादिगुणयोगः, वीर्य्यं द्रव्यगता कार्य्यसाधिका स्वाभाविकी शक्तिः; यदुक्तं

अथ पुं-वज्रलक्षणम् ।—

अष्टास्रश्चाष्टफलकं षट्कोणमतिभासुरम् ।
अम्बुदेन्द्रधनुर्वारितरं पुं-वज्रमुच्यते ॥ २८ ॥

अथ स्त्रीवज्र-नपुंसकवज्रलक्षणे ।—

तदेव चिपिटाकारं स्त्रीवज्रं वर्त्तुलायतम् ।
वर्त्तुलं कुण्ठकोणाग्रं किञ्चिद्गुरु नपुंसकम् ॥ २९ ॥

सुश्रुते—"द्रव्याणि येन कुर्वन्ति तद्वीर्य्यम्" इति । (येन गुणेनेत्यर्थः । कुर्वन्ति क्रियामिति शेषः) तच्च द्विविधं, यदुक्तं भावप्रकाशे—"उष्णशीतगुणोत्कर्षात् बुधैर्वीर्य्यं द्विधा स्मृतम् । यत सर्वमग्निषोमीयं दृश्यते भुवनत्रयम् ॥" इति (अग्निषोमीयम् अग्निसोमगुणविशिष्टं, शीतोष्णगुणमित्यर्थः) अन्यत्राप्युक्तं—"तत् द्विविधं चिन्त्याचिन्त्य-क्रियाहेतुत्वेन, तत्र चिन्त्यक्रियाहेतुः या द्रव्यरसादीनां स्वस्वकर्मणि स्वभावसिद्धा शक्तिः, आचिन्त्यक्रियाहेतुश्च प्रभावापरपर्य्यायः द्रव्याणां रसाद्यननुरूपकार्य्यकरणशक्तिः" इति । अत्र द्रव्यगताचिन्त्यक्रियाहेतुर्या स्वभावसिद्धा शक्तिः सैव वीर्य्यशब्दाभिधेया ज्ञेया । विपाकः भुक्तद्रव्यपाकानन्तरं माधुर्य्यादिपरिणामः ; यदुक्तं भावप्रकाशे—"जाठरेणाग्निना योगात् यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥" इति । इदं टेव्यगुणेरिति ॥ २७ ॥

तेषु पुंजातीयवज्रस्य लक्षणमाह, अष्टास्रमिति ।—अष्टास्रम् अष्टकोणम् । अष्ट फलकम् अष्टधारम्, अस्त्रादीनामग्रभागवत् सूक्ष्माग्रमित्यर्थः । षट्कोणं वा । अम्बु-देति ।—अम्बुदे मेघे, इन्द्रधनुः इन्द्रधनुरिव "इवाद्यर्थे प्रयुक्तः शब्दो वतिमन्तरेणापि वत्यर्थं गमयति" इति नियमात् इन्द्रधनुः-शब्देनात्र इन्द्रधनुरिवेति बोध्यम् ; वारिणि जले तरति प्लवते इति तादृशं, कृष्णवर्णमेघमण्डले वर्णोज्ज्वलेन्द्रधनुः यथा भासते तद्वत् कृष्णवर्णजले भास्वत् पुंवज्रं तरति इत्यर्थः ; अथवा—अम्बुदशब्देनात्र तारुण्यात् लक्षणया तडित् बोध्या, तेन तडिदिव इन्द्रधनुरिव च अतिभासुरमिति द्वितीयचरणेन सम्बन्धः ; तथा वारितरं लघु इत्यर्थः । वज्रस्य लघुता एव प्रशस्ता, यदुक्तं गारुडे—"गुरुता सर्वरत्नानां गौरवाधानकारणम् । वज्रे सा वैपरीत्येन सूरयः परिचक्षते ॥" इति । इन्द्रधनुष उद्भवकारणं स्वरूपञ्चान्यत्र द्रष्टव्यं यथा—"रविकिरणा बहुवर्णा वातेन विलोडिता नभसि । शक्रायुधसंस्थाना दृश्यन्ते तत्तु इन्द्रधनुः ॥" इति ॥ २८ ॥

स्त्रीनपुंसकयोर्लक्षणे आह, तदेवेति ।—चिपिटाकारम् अथवा वर्त्तुलमायतञ्च

अथ तेषां जातिभेदेनाधिकारिभेदनिर्देशः।—

स्त्री-पुं-नपुंसकं वज्रं योज्यं स्त्री-पुं-नपुंसके।
व्यत्यासान्नैव फलदं पुं-वज्रेण विना क्वचित्॥ ३०॥

अथ तेषां वर्णभेदेनाधिकारिभेदनिर्देशः।—

श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम्।
ब्रह्म-क्षत्रिय-विट्-शूद्रं स्वस्ववर्ण-फलप्रदम्॥ ३१॥
उत्तमोत्तमवर्णं हि नीचवर्णफलप्रदम्।
न्यायोऽयं भैरवेणोक्तः पदार्थेष्वखिलेष्वपि॥ ३२॥

अथ वज्रगुणाः।—

आयुष्प्रदं झटिति सद्गुणदञ्च वृष्यं
दोषत्रयप्रशमनं सकलामयघ्नम्।

क्लीवज्रं ज्ञेयम्। कुण्ठकोणाग्रं कुण्ठः क्रियासु मन्दः कोणः अग्रञ्च यस्य तत् स्खलितधारमित्यर्थः। किञ्चित् गुरु स्त्रीपुंजात्यपेक्षया इति बोध्यम्॥ २९॥

केन कीदृशं व्यवहर्त्तव्यं तदाह, स्त्रीति।—सुगमम्॥ ३०॥

वर्णभेदेन तेषां प्रत्येकं चातुर्विध्यं तथा यज्जातीयाय यज्जातीयं फलप्रदं तच्चाह, श्वेतेति।—स्त्रीपुंनपुंसकजातीयं वज्रं प्रत्येकं श्वेतरक्तपीतकृष्णवर्णभेदेन यथाक्रमं ब्राह्मणक्षत्रियवैश्यशूद्रवर्णसंज्ञकं चतुर्विधं ज्ञेयम्; तत्र शुभ्रं विप्रवर्णं विप्रवर्णेषु, रक्तं क्षत्रियवर्णं क्षत्रियवर्णेषु, पीतं वैश्यवर्णं वैश्यवर्णेषु, कृष्णं शूद्रवर्णं शूद्रेषु गुणकारि, किञ्च ब्राह्मणाद्युत्तमवर्णं वज्रं निम्नवर्णेन पुरुषेण धृतमपि फलदं भवति किन्तु अधमवर्णं नोत्तमवर्णैः धार्य्यम् इति। अत्र वज्रस्य उत्कृष्टापकृष्टलक्षणं वर्णजात्यादिकञ्च विस्तरतोऽन्यत्रापि तन्त्रान्तरदर्शनात् ज्ञातव्यं, तद्यथा—"स्वच्छं विद्युत्प्रभं स्निग्धं मन्दरं लघु लेखनम्। षडारं तीक्ष्णधारञ्च सुस्थामारं श्रियं दिशेत॥ भग्नाङ्गं काकपादञ्च रेखाक्रान्तन्तु वर्त्तुलम्। अधारं मलिनं विन्दुसन्त्रासं स्फुटितं तथा॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत। स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः॥ पीतो वैश्योऽसितः शूद्रश्चतुर्वर्णात्मकश्च सः। रसायने मतो विप्रः सर्वसिद्धिप्रदायकः। क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः स्मृतः॥ वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत्। शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च॥" इति। (अत्र काकपादं काकपादवत् आकृतिविशिष्टं काकपदवद्रेखाङ्कितं वा। सः हीरकः)॥ ३१।३२॥

सूतेन्द्रबन्धबधसद्गुणकृत् प्रदीपनं
मृत्युञ्जयं तदमृतोपममेव वज्रम् ॥ ३३ ॥

अथ सर्वरत्नानां साधारणदोषनिर्देशः।—

ग्रासस्त्रासश्च बिन्दुश्च रेखा च जलगर्भता।
सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः॥
क्षेत्र-तोयभवा दोषा रत्नेषु न लगन्ति ते ॥ ३४ ॥

अथ वज्रशोधनम्।—

कुलत्थक्काथके स्विन्नं कोद्रवक्कथितेन वा।
एकयामावधि स्विन्नं वज्रं शुध्यति निश्चितम् ॥ ३५ ॥

अथ वज्रमारणम्।—

वज्रं मत्कुणरक्तेन चतुर्वारं विभावितम्।
सुगन्धिमूषिकामांसैर्वर्त्तितैः परिवेष्ट्य च ॥ ३६ ॥
पुटेत् पुटैर्वराहाख्यैस्त्रिंशद्वारं ततः परम्।
ध्मात्वा ध्मात्वा शतं वारान् कुलत्थक्काथके क्षिपेत् ॥
अन्यैरुक्तः शतं वारान् कर्त्तव्योऽयं विधिः क्रमात् ॥ ३७ ॥

---

गुणमाह,—आयुरिति। सूतेति।—सूतेन्द्रस्य पारदस्य बन्धं बधं सद्गुणञ्च करोति इति तत् तथाभूतं, रसनिगड़ं रसमारकं तथा रसस्य गुणवर्द्धनञ्चेत्यर्थः। प्रदीपनं वह्निसन्दीपनम् ॥ ३३ ॥

वज्रस्य नैसर्गिकदोषानाह, ग्रास इति।—ग्रासत्रासादयः पञ्च दोषाः सर्वरत्नेष्वेव सहजाः ज्ञेयाः, किन्तु तेषाम् आकरजलादिसम्भवत्वात् तैः रत्नस्य न काऽपि गौरव-हानिरिति ॥ ३४ ॥

वज्रशोधनमाह, कुलत्थेति।—कोद्रवः कोरदूषः "कोदो" इति ख्यातः धान्य-विशेषः। प्रहरं यावत् कौलत्थे कषाये कोद्रवकषाये वा दोलायन्त्रे संस्वेद्य वज्रं शोधयेत् इति ॥ ३५ ॥

मारणमाह, वज्रमिति।—मत्कुणः वस्त्राश्रयः कीटविशेषः "छारपोका" इति ख्यातः। सुगन्धिमूषिका छुछुन्दरी "छुँचा" इति ख्याता। शोधितवज्रं मत्कुण-रक्तेन वारचतुष्टयं भावयेत्, ततो गन्धमूषिकामांसं सम्पिष्य पिण्डाकारं कृत्वा तदन्तः

अथ मारणान्तरम् ।—

कुलत्थक्वाथसंयुक्त-लकुचद्रवपिष्टया ।
शिलया लिप्तमूषायां वज्रं क्षिप्त्वा निरुध्य च ॥ ३८ ॥
अष्टवारं पुटेत् सम्यग्विशुष्कैश्च वनोत्पलैः ।
शतवारं ततो ध्मात्वा निक्षिप्तं शुद्धपारदे ॥
निश्चितं म्रियते वज्रं भस्म वारितरं भवेत् ॥ ३९ ॥
सत्यवाक् सोमसेनानीरेतद्वज्रस्य मारणम् ।
दृष्टप्रत्ययसंयुक्तमुक्तवान् रसकौतुकी ॥ ४० ॥

मतान्तरम् ।—

विलिप्तं मत्कुणस्यास्रैः सप्तवारं विशोषितम् ।
कासमर्दरसापूर्णे लोहपात्रे निवेशितम् ॥ ४१ ॥
सप्तवारं परिध्मातं वज्रं भस्म भवेत् खलु ।
ब्रह्मज्योतिर्मुनीन्द्रेण क्रमोऽयं परिकीर्त्तितः ॥ ४२ ॥

तं वज्रं संस्थाप्य मूषायां निरुध्य च अरत्निपरिमितकुण्डे पुटेत, एवं विंशद्वार कार्य्यं, ततः भस्त्राग्निना ध्मात्वा पुनः कुलत्थकषाये निक्षिपेत, एवं शतवारं कुर्य्यात्। अथ मतान्तरमाह, अन्यैरिति।—केषाञ्चिन्मते मत्कुणरक्तेन भावनामारभ्य कुलत्थक्वाथे निक्षेपान्तः कृत्स्नो विधिः यथोक्तक्रमेण शतवारं कार्य्यः इति ॥ ३६।३७ ॥

मारणे सोमसेनानीमतमाह, कुलत्थेति।—लकुचः डहुकः। शिलया मनःशिलया। अत्रायं विधिः,—कुलत्थक्वाथलकुचस्वरसाभ्याम् एकीभूताभ्यां मनःशिलां पिष्ट्वा तेन मूषागर्भमालिप्य तत्र वज्रं निधाय सन्धिरोधं कृत्वा मृत्कर्पटादिना मूषाबहिर्लिप्त्वा वन्यकरीषाग्निना पुटेत्, एवमष्टवारं, पश्चिमपुटानन्तरं शोधितपारदेन सह एकीकृत्य पारदपिण्डमध्ये निधाय वा धमेत्, एवं शतवारं कार्य्यम ; तेन वज्रस्य वारितरं भस्म सम्पाद्येत ; प्रक्रियेयं सोमसेनान्या विहिता इति ॥ ३८—४० ॥

मुनीन्द्रब्रह्मज्योतिःप्रोक्तं मारणमाह, विलिप्तमिति।—मत्कुणशोणितेन वज्रं सप्तवारं विलेपयेत् आतपे शोषयेच्च, ततः कासमर्दस्वरसपरिपूर्णलोहपात्रे तदाप्लुत्य भस्त्राग्निना धमेत्, एवं सप्तधाकरणेन भस्मीभवेत् इति ॥ ४१।४२ ॥

मतान्तरम् ।—

नीलज्योतिर्लताकन्दे घृष्टं घर्मे विशोषितम् ।
वज्रं भस्मत्वमायाति कर्मवज्ज्ञानवह्निना ॥ ४३ ॥

मतान्तरम् ।—

मदनस्य फलोद्भूतरसेन क्षौणिनागकैः ।
कृतकल्केन संलिप्य पुटेद्विंशतिवारकम् ॥
वज्रचूर्णं भवेद्वश्यं योजयेच्च रसादिषु ॥ ४४ ॥

मतान्तरम् ।—

तद्वज्रं चूर्णयित्वाऽथ किञ्चिट्टङ्कणसंयुतम् ।
खरभूनागसत्त्वेन विंशनाऽऽवर्त्तयेद्ध्रुवम् ॥
तुल्यस्वर्णेन तद्ध्मातं योजनीयं रसादिषु ॥ ४५ ॥

अथ प्रयोगविशेषेण गुणविशेषकथनम् ।—

त्रिगुणेन रसेनैव सम्मर्द्य गुटिकीकृतम् ।
मुखे धृतं करोत्याशु चलदन्तविबन्धनम् ॥ ४६ ॥

---

अग्निसम्पर्कं विनाऽपि वज्रभस्मप्रक्रियामाह, नीलेति ।—नील: नीलीवृक्ष: नीलापराजिता वा, ज्योतिर्लता ज्योतिष्मती "लताफट्की" इति भाषा। नीलवृक्षमूलरसेन नीलापराजितामूलरसेन वा तथा ज्योतिष्मतीमूलरसेन च घृष्टं वज्रम् आतपे संशोषणात् भस्मीभवति। अत्र दृष्टान्तमाह, कर्मवदिति ।—ज्ञानाग्नि. यथा सर्वकर्माणि भस्मसात् करोति तथेत्यर्थ: ॥ ४३ ॥

मतान्तरमाह, मदनस्येति ।—क्षौणीनागकै: भूनागकै:, "कँचो" इति ख्यातै: । नागकैरिति स्वार्थे क: । मदनफलरसेन भूनागं पिष्ट्वा तत्कल्केन वज्रं संलिप्य पुटेत्, एवं विंशतिवारकरणेन वज्रं चूर्णीभवति ॥ ४४ ॥

मतान्तरमाह. तदिति ।—तत् पूर्वोक्तविधानेन मारितम् । पूर्वप्रक्रियया मारितं वज्रं किञ्चित् टङ्कणेन सह सञ्चूर्ण्य पुष्टाङ्गविंशतिसङ्ख्याककिञ्चुलुकरसेन सह आलोड्य समानसुवर्णेन सह मूषायां निरुध्य ध्मापयेत्, तेन गुणाधिक्यं जायते इति ॥ ४५ ॥

प्रयोगविशेषेण गुणविशेषमाह, त्रिगुणेनेति ।—त्रिगुणेन वज्रभागमपेक्ष्य इति बोध्यम् ॥ ४६ ॥

प्रयोगान्तरम्।—

त्रिंशद्भागमितं हि वज्रभसितं स्वर्णं कलाभागिकं
तारञ्चाष्टगुणं सितामृतवरं रुद्रांशकञ्चाभ्रकम्।
पादांशं खलु ताप्यकं वसुगुणं वैक्रान्तकं षड्गुणं
भागोऽप्युक्तरसै रसोऽयमुदितः षाड्गुण्यसंसिद्धये॥ ४७॥

[इति वज्राधिकारः]।

अथ नीलम्।—

अथ नीलस्य द्वैविध्यकथनम्।—

जलनीलञ्चेन्द्रनीलं शक्रनीलं तयोर्वरम्॥ ४८॥

अथ नीलद्वयस्य सामान्यलक्षणम्।—

श्वैत्यगर्भित-नीलाभं लघु तज्जलनीलकम्।
कार्ष्ण्यगर्भित-नीलाभं सभारं शक्रनीलकम्॥ ४९॥

---

प्रयोगान्तरमाह, त्रिंशदिति।—वज्रभसितं हीरकभस्म। कलाभागिकं षोडशभागम्, "कला तु षोड़शो भागः" इत्युक्तेः, न तु षोडशभागैकभागः इति। सितामृतवरं शुभ्रपारदम्। रुद्रांशकम् एकादशभागम्। पादांशं चतुर्भागम्। ताप्यकं स्वर्णमाक्षिकम्। वसुगुणम् अष्टगुणम्। भागः भागपरिमितः, यथाग्निमात्रया इत्यर्थः, सेवित इति शेषः। रसैः पूर्वोक्तकुलत्थकोद्रवकासमर्दलकुचमदनफलादीनां रसैः। अयं रसः वज्रभस्मादिकृत औषधविशेषः। षाड्गुण्यसंसिद्धये षाड्गुण्यं विद्यावितर्कादिकं तस्य सम्यक् सिद्धिलाभाय; षाड्गुण्यमुक्तं चरके यथा—"विद्या वितर्को विज्ञानं, स्मृतिस्तत्परता क्रिया। यस्यैते षड्गुणास्तस्य—" इति। एतद्रसवरसेवनात् धीधृतिस्मृतिमेधादिसमन्वितः विद्यावितर्कादिसिद्धिं लभते इति निष्कर्षः। अस्य पर्वौ यथा—हीरकभस्म ३० स्वर्णभस्म १६ रौप्यभस्म ८ शुभ्रशुद्धपारदं तद्भस्म वा ११ अभ्रभस्म ४ स्वर्णमाक्षिकभस्म ८ वैक्रान्तभस्म ६ सर्वमेकीकृत्य कुलत्थादिरसेन सम्मर्द्य योग्यमात्रा प्रयोज्या। "भागोऽप्युक्त" इत्यत्र "भागश्चोक्त" इति पाठकल्पनं समीचीनम्॥ ४७॥

नीलस्य द्वैविध्यमाह, जलनीलमिति।—शक्रनीलम् इन्द्रनीलम्॥ ४८॥

तयोः साधारणलक्षणमाह, श्वैत्येति।—श्वैत्यगर्भितनीलाभम् अन्तःशुभ्राभनीलवर्णम्। लघु निर्भारिकम्। कार्ष्ण्यगर्भितनीलाभम् अन्तःकृष्णाभनीलवर्णम्। सौरिरिदं ज्ञेयम्॥ ४९॥

अथ प्रशस्तप्रकृतनीललक्षणम् ।—

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् ।
मृदु मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम् ॥ ५० ॥

अथ जलनीलस्य विशेषलक्षणम् ।—

कोमलं विहितं रूक्षं निर्भारं रक्तगन्धि च ।
चिपिटाभं ससूक्ष्मञ्च जलनीलञ्च सप्तधा ॥ ५१ ॥

अथ गुणाः ।—

श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् ।
विषमज्वरदुर्नामपापघ्नं नीलमीरितम् ॥ ५२ ॥

[ इति नीलाधिकारः ] ।

---

इन्द्रनीलस्य विशेषलक्षणमाह, एकेति ।—एकच्छायम् एका अद्वितीया, अतुल्या इत्यर्थः, अन्यधर्माग्राहिणीति यावत्, छाया कान्तिः यस्य तत्, यत् द्रव्यान्तरस्य प्रतिबिम्बं न गृह्णाति, किन्तु स्वकान्त्या द्रव्यान्तरं रञ्जयति, यदुक्तं राजनिघण्टौ—"यः पात्रं रञ्जयत्याशु स जात्यो नील उच्यते" इति । अन्यच्च—"क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत् । इन्द्रनीलमिति ख्यातम्" इति । यद्वा—एका मुख्या श्रेष्ठा इति यावत्, छाया कान्तिः यस्य तत् उत्तमकान्तिमत् ; यद्वा—एका केवला छाया आतपाभावः, औष्ण्यशून्यता इति यावत् यस्य तत् स्पर्शशीतमित्यर्थः, आतपस्य औष्ण्य-धर्मित्वेन छायायाश्च शैत्यतया तथाभूतोऽर्थः बोध्यः । स्वच्छं निर्मलम् । पिण्डितविग्रहं घनीभूतावयवं, स्थूलमित्यर्थः । मृदु अदारुणं, सुखस्पर्शमिति यावत् । मध्ये लसज्ज्योतिः अभ्यन्तरे दीप्तप्रकाशं, ज्योतिर्मयमित्यर्थः, नीलम् उत्तमम् इन्द्रनीलम् एतत्सप्तविध-गुणसम्पन्नं ज्ञेयम् । वज्रवन्नीलस्यापि विप्रक्षत्रादिवर्णभेदेन चातुर्विध्यं बोध्यं, तथा च निघण्टुराजे—"सितशोणपीतकृष्णाच्छाया नीले क्रमादिमाः कथिताः । विप्रादिवर्ण-सिद्ध्यै धारणमस्यापि वज्रवत् फलवत् ॥" इति ॥ ५० ॥

जलनीलस्य विशेषलक्षणमाह, कोमलमिति ।—कोमलं मनोहरं, पञ्चवर्णविशिष्ट-मित्यर्थः । विहितम् अर्द्धभागेन सम्पूर्णं वर्णम् अर्द्धभागेन पञ्चवर्णमित्यर्थः । निर्भारं लघु । ससूक्ष्मं क्षुद्रावयवमित्यर्थः ॥ ५१ ॥

गुणमाह, श्वासेति ।—पापघ्नं धारणेनेति बोध्यम् ; यद्वा—पापरोगमसूरिकादि-नाशनं, तस्य मङ्गल्यत्वात् प्रभावाच्च इति ॥ ५२ ॥

## अथ गोमेदः।—

### अथ गोमेदस्य निरुक्तिः।—

गोमेदः-समरागत्वाद्गोमेदं रत्नमुच्यते ॥ ५३ ॥

### अथ प्रशस्तगोमेदलक्षणम्।—

सु-स्वच्छ-गोजलच्छायं स्वच्छं स्निग्धं समं गुरु।
निर्दलं मसृणं दीप्तं गोमेदं शुभमष्टधा ॥ ५४ ॥

### अथाप्रशस्तगोमेदलक्षणम्।—

विच्छायं लघु रूक्षाङ्गं चिपिटं पटलान्वितम्।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ॥ ५५ ॥

### अथ गुणाः।—

गोमेदं कफपित्तघ्नं क्षय-पाण्डुक्षयङ्करम्।
दीपनं पाचनं रुच्यं त्वच्यं बुद्धिप्रबोधनम् ॥ ५६ ॥

[ इति गोमेदाधिकारः ]।

---

गोमेदस्य निरुक्तिमाह, गोमेद इति।—गोः मेदसा समः तुल्यः रागः वर्णः यस्य तथात्वात् ईषद्रक्तत्वादित्यर्थः ॥ ५३ ॥

शुभगोमेदस्य लक्षणमाह, सुस्वच्छेति।—सुस्वच्छगोजलच्छायम् अनाविलगोमूत्रवर्णम्। समं समगात्रम्। निर्दलं निष्पत्रम्, अशुभगोमेदस्य सपटलत्वात् अत्र शुभगोमेदस्य निर्दलत्वावतारणम्। राहुप्रसादनमेतत् ॥ ५४ ॥

अप्रशस्तगोमेदलक्षणमाह, विच्छायमिति।—विच्छायं विकृतकान्ति, मलिनमित्यर्थः। पटलान्वितं सदलम्। निष्प्रभम् अनुज्ज्वलम्। पीतकाचाभं पीतवर्णकाचाख्यमणिविशेषतुल्यं गौरकृष्णमिश्रितवर्णाभम् इति वा; काचशब्दः कृष्णार्थकोऽपि दृश्यते, यथा—काचलवणं कृष्णलवणम्; यद्वा—पीतकाचाभं श्वेतपीतमिश्रवर्णमिति ॥ ५५ ॥

गुणमाह, गोमेदमिति।—क्षयपाण्डुक्षयङ्करं क्षयस्य राजयक्ष्मणः पाण्डोश्च क्षयङ्करं नाशनम्। क्षयङ्करमित्यत्र विभक्तेरलुक् छान्दसत्वात्। त्वच्यं त्वक्प्रसादनं, त्वचः सौकुमार्य्यसम्पादकमित्यर्थः ॥ ५६ ॥

## अथ वैदूर्य्यम् ।—

अथ शुभवैदूर्य्यलक्षणम् ।—

वैदूर्य्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् ।
अभ्रशुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥ ५७ ॥

अथ अशुभवैदूर्य्यलक्षणम् ।—

श्यामं तोयसमच्छायं चिपिटं लघु कर्कशम् ।
रक्तगर्भोत्तरीयञ्च वैदूर्य्यं नैव शस्यते ॥ ५८ ॥

अथ गुणाः ।—

वैदूर्य्यं रक्तपित्तघ्नं प्रज्ञाऽऽयुर्बलवर्द्धनम् ।
पित्तप्रधानरोगघ्नं दीपनं मलमोचनम् ॥ ५९ ॥

[ इति वैदूर्य्याधिकारः ] ।

अथ नवरत्नानां शोधनम् ।—

शुध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं तथा ।
विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धकैस्तथा ॥ ६० ॥
पुष्परागश्च सन्धानैः कुलत्थक्वाथसंयुतैः ।
तण्डुलीयजलैर्वज्रं नीलं नीलीरसेन च ॥
रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलैः ॥ ६१ ॥

---

सल्लक्षणवैदूर्य्यलक्षणमाह, वैदूर्य्यमिति ।—श्यामशुभ्राभं श्वेतकृष्णमिश्रवर्णम् । समं समगात्रम् । स्फुटं प्रकाशवत्, उज्ज्वलमित्यर्थः । अभ्रेति ।—अभ्रवत् शुभ्रेण शुक्लवर्णेन उत्तरीयेण ऊर्द्धदेहधार्य्यवस्त्रविशेषाकारचिह्नेनेत्यर्थः, गर्भितं मध्ययुक्तमित्यर्थः, लम्बितोत्तरीयवदुपवीतवद्वा शुभ्ररेखाविशिष्टमध्यमित्यर्थः । कैतुरत्नमिति प्रसिद्धमेतत् ॥ ५७ ॥

कुवैदूर्य्यलक्षणमाह, श्याममिति ।—श्यामम् असितकृष्णवर्णं, शुभवैदूर्य्यस्य श्यामशुभ्रत्वात् । तोयसमच्छायं जलसमानकान्तिमत्, दूरतो दर्शने जलभ्रमोत्पादकं, न तु जलवत् द्रवमित्यर्थः । रक्तगर्भोत्तरीयं रक्तः रक्तवर्णः गर्भे उत्तरीयः यस्य तत्, पूर्ववत् रक्तरेखाविशिष्टमध्यम् इत्यर्थः ॥ ५८ ॥

गुणमाह, वैदूर्य्यमिति ।—मलमोचनं पुरीषरेचनं दोषनाशनं वा ॥ ५९ ॥

अथ नवरत्नानां प्रत्येकं शोधनमाह, शुध्यतीति ।—अम्लेन "अम्लवेतसजम्बीर

अथ रत्नानां मारणम्।—

लकुचद्रावसम्पिष्टैः शिलागन्धकतालकैः।
वज्रं विनाऽन्यरत्नानि म्रियन्तेऽष्टपुटैः खलु॥ ६२॥

अथ रत्नानां द्रावणम्।—

रामठं पञ्चलवणं क्षाराणां त्रितयं तथा।
मांसद्रवाऽम्लवेतस्य चूलिकालवणं तथा॥ ६३॥
स्थूलं कुम्भीफलं पक्वं तथा ज्वालामुखी शुभा।
द्रवन्ती च रुदन्ती च पयस्या चित्रमूलकम्॥ ६४॥
दुग्धं स्नुह्यास्तथाऽर्कस्य सर्वं सम्मर्द्य यत्नतः।
गोलं विधाय तन्मध्ये प्रक्षिपेत्तदनन्तरम्॥ ६५॥
शुद्धवज्रवररत्नानि जातिमन्ति शुभानि च।
भूर्जे तं गोलकं कृत्वा सूत्रेणाऽऽवेष्ट्य यत्नतः॥ ६६॥

---

चुक्राम्लवर्गकाम्लकाः। नागरङ्गं तिन्तिडी च चिञ्चापदञ्च निम्बुकम्॥ चाङ्गेरी दाडिमञ्चैव करमर्दं तथैव च। एष चाम्लगणः प्रोक्तः वेतसाम्लसमायुतः॥" इत्युक्ताम्लवर्गरसेन काञ्जिकेन वा। माणिक्यं पद्मरागः। जयन्त्या जयन्तीपत्रस्वरसेन। क्षारवर्गेण "स्वर्जिका टङ्कणश्चैव यवक्षार उदाहृतः" इत्युक्तवर्गेण। पुष्परागमिति।—कुलत्थक्वाथमिश्रकाञ्जिकैः पुष्परागं शुध्यति। तण्डुलीयजलैः "काँटानटे" इति ख्यातक्षुपविशेषमूलरसैः। नीली नीलवृक्षः। रोचना गोरोचना हरिद्रा वा। यथायोग्यमेषां स्वरसादिभिः सह दोलायन्त्रे विपाच्य रत्नानि शोधयेत् इति। हस्तलिखितादर्शपुस्तकाद्वयेऽपि एते वक्ष्यमाणश्लोका मूलमध्ये अधिकतया पठिता दृश्यन्ते, यथा—"रत्नानां शोधनं श्रेष्ठं मारणं न गुणप्रदम्। मारणा वीर्यहानिः स्यात् तस्मात्तानि च शोधयेत्॥ रसे रसायने दाने धारणे देवतार्चने। सुलक्षणानि सुजातीनि सर्वाण्युक्तानि शोधयेत्॥ शुद्धिं चरन्ति रत्नानि निम्बूम्बुनि तुषाम्बुनि। विशुध्यन्ति त्रिदिवसैः विधृतानि च सर्वशः॥" इति॥ ६०।६१॥

मारणमाह, लकुचेति।—लकुचः डहुकः। लकुचरससपिष्टमनःशिलागन्धकहरितालकल्कमध्ये, वज्रव्यतिरिक्तानि रत्नानि स्थापयित्वा अष्टकृत्वः पुटनेन म्रियन्ते इति॥ ६२॥

पुनर्वस्त्रेण संवेष्ट्य दोलायन्त्रे निधाय च ।
सर्वाम्लयुक्तसन्धान-परिपूर्णघटोदरे ॥ ६७ ॥
अहोरात्रत्रयं यावत् स्वेदयेत्तीव्रवह्निना ।
तस्मादाहृत्य सङ्क्षाल्य रत्नजां द्रुतिमाहरेत् ॥
रत्नतुल्यप्रभा लघ्वी देहलोहकरी शुभा ॥ ६८ ॥

अथ मुक्ताद्रावणे विशेषक्रमः ।—

मुक्ताचूर्णन्तु सप्ताहं वेतसाम्लेन मर्दितम् ।
जम्बीरोदरमध्ये तु धान्यराशौ विनिक्षिपेत् ॥
सप्ताहादुद्धृतञ्चैव पुटं दत्त्वा द्रुतिं हरेत् ॥ ६९ ॥

---

सर्वरत्नानां द्रावणमाह, रामठमिति ।—रामठं हिङ्गु । मांसद्रवः अम्लवेतसभेदः, यदुक्तं राजनिघण्टौ—"शङ्खमांसादिद्रावी स्यात् द्विधा चैवाम्लवेतसः" इति । अम्लवेतसः प्रसिद्ध एव । "मांसद्राव्यम्लवेतश्च" इति पाठे—मांसद्रावणाख्योऽम्लवेतसः, न तु प्रसिद्धोऽपरः । चूलिकालवणं लवणविशेषः नरसारो वा । स्थूलं कुष्माण्डफलं पक्वं सुपक्वपरिपुष्टाङ्गजैपालबीजम् । ज्वालामुखी शुभा उत्तमा लाङ्गली "ईशलाङ्गला" इति भाषा, भल्लातकी वा । द्रवन्ती क्षीरितदन्तीभेदः, बृहद्दन्तीति यावत्, आखुकर्णी लता वा । रुदन्ती उत्कलादिदेशे स्वनामख्याता, तल्लक्षणं यथा राजनिघण्टौ—"चणपत्रसमं पत्रं क्षुपश्चैव तथाम्लकः । शिशिरे जलबिन्दूनास्रवन्तीति रुदन्तिका ॥" इति । पयस्या क्षीरकाकोली भूमिकुष्माण्डो वा । जातिमन्ति अक्लिष्टानि उत्कृष्टानीति यावत् । शुभानि मङ्गल्यानि । भूर्जे भूर्जपत्रे । अयमत्र क्रमः,—रामठाद्यर्कक्षीरान्तं सर्वमनुरूपं गृहीत्वा सम्पिष्य तत्पिण्डान्तः वररत्नानि निदध्यात्, ततः भूर्जपत्राभ्यन्तरे तत् पिण्डं संस्थाप्य सूत्रेण दृढं बद्ध्वा पुनः वस्त्रेणावेष्ट्य अम्लवेतसाद्यम्लवर्गरसमिश्रकाञ्जिकेन सह स्थाल्यां दोलायां तीव्रवह्निना त्रिदिनं पचेत्, तेन रत्नानि द्रवीभवन्ति, अनन्तरमवतार्य्य वस्त्रादिवेष्टनमपसार्य्य प्रक्षाल्य च मध्यस्थद्रुतिं गृह्णीयादिति ॥ ६३—६८ ॥

मुक्ताद्रावणे विशेषक्रममाह, मुक्तेति ।—सप्ताहं यावत् अम्लवेतसेन सह मुक्ताचूर्णं खल्लयित्वा तेन जम्बीरगर्भमापूर्य्य मृत्कर्पटादिना संलिप्य धान्यराशौ सप्ताहं स्थापयेत्, सप्ताहादनन्तरमुद्धृत्य पुटो देयः ॥ ६९ ॥

अथ वज्रद्रावणे विशेषक्रमः ।—

वज्रवल्ल्यन्तरस्थञ्च कृत्वा वज्रं निरोधयेत् ।
अम्लभाण्डगतं स्वेद्यं सप्ताहाद्द्रवतां व्रजेत् ॥ ७० ॥

अथ वैक्रान्तद्रावणे विशेषक्रमः ।—

श्वेतवर्णन्तु वैक्रान्तमम्लवेतसभावितम् ।
सप्ताहात्तात्र सन्देहः खरघर्मे द्रवत्यलम् ॥ ७१ ॥

मतान्तरम् ।—

कैतकीस्वरसं ग्राह्यं सैन्धवं स्वर्णपुष्पिका ।
इन्द्रगोपकसंयुक्तं सर्वं भाण्डे विनिक्षिपेत् ॥
सप्ताहं स्वेदयेत्तस्मिन् वैक्रान्तं द्रवतां व्रजेत् ॥ ७२ ॥

मतान्तरम् ।—

लोहाष्टके तथा वज्रे वापनात् स्वेदनाद्द्रुतिः ।
जायते नात्र सन्देहो योगस्यास्य प्रभावतः ॥ ७३ ॥

---

वज्रद्रावणमाह, वज्रवल्लीति ।—वज्रवल्ली अस्थिसंहारः "हाड़जोड़ा" इति प्रसिद्धा । वज्रवल्लीमूलपिण्डाभ्यन्तरे वज्रं निबध्य काञ्जिकपूर्णघटे दोलायां सप्ताहं स्वेदयेत्, तेन द्रवत्वमायाति कुलिशम् ॥ ७० ॥

वैक्रान्तद्रावणमाह, श्वेतवर्णमिति ।—महारसविशेषस्य वैक्रान्तस्य शोधनादिकं द्वितीयाध्याये महारसाधिकारे प्रागेवोक्तं, किन्तु द्रावणस्य तत्रानुक्तत्वात् अस्य उपरस-विशेषत्वाच्च रसद्रावणप्रसङ्गे अत्र द्रावणं निर्देष्टुं पुनरुल्लेखः कृतो ग्रन्थकृता । किञ्च महारसत्वेऽपि अस्य उपरसत्वं नासङ्गतं, यतो ग्रन्थान्तरे वज्रस्यापि उपरसमध्ये ग्रहणं दृश्यते । किंवा केषाञ्चिन्मते अस्य महारसत्वं केषाञ्चित् उपरसत्वम्, उभयमपि अविरुद्धं स्मृतिद्वैधवत । वर्णभेदेनाष्टविधेषु वैक्रान्तेषु श्वेतवर्णवैक्रान्तम् अम्लवेतसक्वाथेन तीव्रातपे सप्ताहं भावयेत्, तेन निश्चितमेव द्रवीभवति इति ॥ ७१ ॥

मतान्तरमाह, कैतकीति ।—स्वर्णपुष्पिका स्वर्णयूथिका, पीतपुष्पयूथिका इत्यर्थः । इन्द्रगोपकः वार्षिककीटविशेषः "आषाढ़े पोका" इति "बीरबहूटी" इति वा भाषा । कैतकीस्वरसादिद्रव्यचतुष्टयेन सह वैक्रान्तं स्थालीमध्ये संस्थाप्य सप्ताहं दोलायन्त्रे स्वेदनेन द्रवीभवतीति ॥ ७२ ॥

मतान्तरमाह, लोहाष्टक इति ।—लोहाष्टकम् अष्टलोहं, तत्र स्वर्णरौप्यताम्रवङ्ग-

अथ सर्वरत्नानां सामान्यद्रावणम् ।—

कुरुते योगराजोऽयं रत्नानां द्रावणं परम् ॥ ७४ ॥

अथ राजावर्त्तः ।—

अथोत्तममध्यमराजावर्त्तलक्षणम् ।—

राजावर्त्तोऽल्परक्तोरु-नीलिकामिश्रितप्रभः ।
गुरुश्च मसृणः श्रेष्ठस्तदन्यो मध्यमः स्मृतः ॥ ७५ ॥

अथ गुणाः ।—

प्रमेहक्षयदुर्नाम-पाण्डुश्लेष्मानिलापहः ।
दीपनः पाचनो वृष्यो राजावर्त्तो रसायनः ॥ ७६ ॥

अथ राजावर्त्ताद्युपरत्नानां सामान्यशोधनम् ।—

निम्बुद्रवैः सगोमूत्रैः सक्षारैः स्वेदिताः खलु ।
द्वित्रिवारेण शुध्यन्ति राजावर्त्तादिधातवः ॥ ७७ ॥

अथ राजावर्त्तशोधनम् ।—

शिरीषपुष्पार्द्ररसैः राजावर्त्तं विशोधयेत् ॥ ७८ ॥

---

सीसपित्तल-कान्तलौह-तीक्ष्णलौहात्मकम् । उक्ताष्टविधलौहभस्ममध्ये तथा वज्रभस्म-मध्ये च वैक्रान्तं प्रक्षिप्य दोलायन्त्रे स्वेदनात् द्रवीभवति ॥ ७३ ॥

सर्वरत्नानां द्रावणमाह, कुरुते इति ।—योगराजोऽयं लौहाष्टकादिकृतः अयं योगः । रत्नानां माणिक्यादीनाम् ॥ ७४ ॥

उत्तममध्यमभेदेन द्विविधराजावर्त्तयोः स्वरूपलक्षणमाह, राजावर्त्त इति ।—अल्परक्तोरुनीलिकामिश्रितप्रभः ईषद्रक्तानल्पनीलद्युतिः । तदन्यः श्रेष्ठलक्षणविपरीतः, अनल्परक्तेषन्नीलद्युतिः लघुः खरश्चेत्यर्थः ॥ ७५ ॥

राजावर्त्तस्य गुणमाह, प्रमेहेति ।—सुगमम् ॥ ७६ ॥

राजावर्त्ताद्युपरत्नानां सामान्यशोधनमाह, निम्बुद्रवैरिति ।—निम्बुरसगोमूत्राभ्यां यवक्षारेण च सह राजावर्त्तादिकं स्थाल्यां दोलायन्त्रे वारद्वयं वारत्रयं वा स्वेदयेत् तेन शुध्यन्तीति ॥ ७७ ॥

राजावर्त्तस्य विशेषशोधनमाह, शिरीषेति ।—सद्यस्कशिरीषपुष्परसैः राजावर्त्तं भावयित्वा स्वेदयित्वा वा शोधयेदिति ॥ ७८ ॥

अथ राजावर्त्तमारणम्।—

लुङ्गाम्बुगन्धकोपेतो राजावर्त्तो विचूर्णितः।
पुटनात् सप्तवारेण राजावर्त्तो मृतो भवेत्॥ ७९॥

अथ सत्त्वपातनम्।—

राजावर्त्तस्य चूर्णन्तु कुनटी-घृतमिश्रितम्।
विपचेदायसे पात्रे महिषीक्षीरसंयुतम्॥ ८०॥
सौभाग्यपञ्चगव्येन पिण्डीबद्धन्तु जारयेत्।
ध्मापितं खदिराङ्गारैः सत्त्वं मुञ्चति शोभनम्॥ ८१॥
[ इति राजावर्त्ताधिकारः ]।

अथ द्रुतीनां दीर्घकालरक्षणोपायः।—

कुसुम्भतैलमध्ये तु संस्थाप्या द्रुतयः पृथक्।
तिष्ठन्ति चिरकालन्तु प्राप्ते कार्य्ये नियोजयेत्॥ ८२॥

मारणमाह, लुङ्गाम्ब्विति।—लुङ्गाम्बु मातुलुङ्गरसः। मातुलुङ्गरसेन तुल्यगन्धकं राजावर्त्तं पिष्ट्वा सप्तवारं पुटेत् इति॥ ७९॥

सत्त्वपातनविधिमाह, राजावर्त्तस्येति।—कुनटी मनःशिला। अयमत्र क्रमः,—राजावर्त्तचूर्णं घृतमनःशिलाभ्यां तुल्याभ्यां पिष्ट्वा महिषीक्षीरेण चतुर्गुणेन क्षीरशोषणं यावत् लौहपात्रे पचेत्, ततः तुल्यटङ्कणेन पिण्डत्वसम्पादनार्हेण पञ्चगव्येन च सम्मर्द्य पिण्डाकारं कृत्वा मूषायां संस्थाप्य पुटं दद्यात्, ततः खदिरकाष्ठाङ्गारेण भस्त्रया ध्मापयित्वा सत्त्वं गृह्णीयादिति। ननु उद्देशे वैक्रान्तादीनि चतुर्दश रत्नान्युक्ता विवरणे एकादशानामेव गुणादिकमुक्तं, तत् कथमिति चेदुच्यते—"रत्नं गारुत्मतं पुष्प-रागो माणिक्यमेव च। इन्द्रनीलश्च गोमेदस्तथा वैदूर्य्यमित्यपि॥ मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव॥" इति नवरत्ननिर्देशात् अत्र प्राधान्येन तेषामेव परिचयादिकमुक्तम्। वैक्रान्त सूर्य्यकान्त-स्फटिक-चन्द्रकान्त-राजावर्त्ताख्यानां मणीनाम् उपरत्नजातीयानां रत्नाधिकारे निर्देशे कृतेऽपि सूर्य्य-चन्द्रकान्तस्फाटिकानामौषधादिषु बाहुल्येन प्रयोगादर्शनात् लक्षणादिकं नोक्तं, वैक्रान्तराजावर्त्तयोस्तु प्रयोगदर्शनात् उल्लिखितम् इति। (अथ रत्नं हीरकम्)॥ ८०।८१॥

द्रवाणां चिरकालमविकृततया संस्थापने प्रकारमाह, कुसुम्भेति।—सुगमम्॥ ८२॥

अथ रत्नधारणगुणाः ।—

सूर्य्यादिग्रह-निग्रहापहरणं दीर्घायुरारोग्यदं
सौभाग्योदय-भाग्य-वश्य-विभवोत्साहप्रदं धैर्य्यकृत् ।
दुश्छाया-चलधूलि-सङ्गतिभवाऽलक्ष्मीहरं सर्वदा
रत्नानां परिधारणं निगदितं भूतादि-भीनाशनम् ॥ ८३ ॥

## अथ गैरिकम् ।—

अथ गैरिकस्य शोधनं सत्त्वपातनञ्च ।—

अनेन क्रमयोगेन गैरिकं विमलं भवेत् ।
क्रमात् पीतञ्च रक्तञ्च सत्त्वं पतति शोभनम् ॥ ८४ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
रत्नानां शुद्ध्यादिनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

रत्नधारणगुणमाह, सूर्य्यादीति ।—सूर्य्यादिभिः ग्रहैः कृतस्य निग्रहस्य अपहरणं विग्रह-भयग्रहजनितापच्छमनम् । सौभाग्येति ।—सौभाग्यं स्त्रीप्रियत्वम् उदयः उन्नतिः भाग्यं शुभादृष्टं "भाग्य" इत्यत्र "भोग्य" इति पाठे—भोगार्हवस्तु इत्यर्थः, वश्यं लोकवशीकरणसामर्थ्यं विभवः धनम् उत्साहः कार्य्येषु उद्यमः तान् प्रददाति इति तथाभूतम् । दुश्छायेति ।—दुः दुष्टा अशुभोत्पादिका इत्यर्थः, छाया प्रतिबिम्बं तथा चला वातेन स्थानान्तरं नीयमाना धूलिः पांशुः अजादीनां खुरोत्था इति भावः, तयोः सङ्गत्या संस्पर्शेन भवा या अलक्ष्मीः श्रीहीनता दैन्यमिति यावत्, तां हरतीति तथाभूतम् । भूतादिभीनाशनं भूतप्रेतादिभ्यो भयनिवारणम् ॥ ८३ ॥

उपरसभेदस्य गैरिकस्य शोधनादिकं तृतीयाध्याये उपरसाधिकारे उक्तमपि राजावर्त्तवत् शोधनाद्यतिदेशार्थमत्रापि पुनस्तदाह, अनेनेति ।—अनेन राजावर्त्तस्य शोधनसत्त्वपातनविध्यनुसारेण । क्रमात् पीतञ्च रक्तञ्चेत्यत्र पाषाणगैरिकस्य पीतं स्वर्णगैरिकस्य च रक्तं सत्त्वं बोध्यमिति ॥ ८४ ॥

इति रसरत्नसमुच्चयबोधिन्यां चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पञ्चमोऽध्यायः।

## अथ लोहानि।—

अथ लोहानां जातिनिरूपणम्।—

शुद्धं लोहं कनकरजतं भानुलोहाश्मसारं
पूतीलोहं द्वितयमुदितं नागवङ्गाभिधानम्।
मिश्रं लोहं त्रितयमुदितं पित्तलं कांस्यवर्त्तं
धातुर्लोहे लुह इति मतः सोऽप्यनेकार्थवाची॥ १॥

अथ चतुर्थाध्याये रत्नानां शोधनादिकं निरूप्य स्वर्णाद्यष्टलोहानामपि रत्नसदृश-गुणवत्त्वात् इदानीं तेषामपि शोधनादिविवरणार्थं पञ्चमाध्यायमारभते; तत्रादौ तेषां जातीः निरूपयति, शुद्धमिति।—भानुलोहाश्मसारं भानुना ताम्रेण सह लोहाश्मसारं कान्तादिसंज्ञकलौहत्रयमित्यर्थः। स्वर्णं रौप्यं ताम्रं तथा कान्तमुण्डतीक्ष्णाख्यलौहत्रयम् अमिश्रलोहं ज्ञेयम्। सीसकं वङ्गञ्च द्वयं पूतिलोहाभिधानम्; पूतिलोहमिति लोहस्य जातिविशेषः, अथवा वङ्गस्य पूतिगन्धेतिपर्य्यायकत्वात् नागस्य च वङ्गसदृश-गुणवत्त्वात् लोहविशेषयोर्नागवङ्गयोः पूतिलोहाभिधानम् इति। पित्तलादित्रयं मिश्रलोहसंज्ञं तेषां धात्वन्तरसंयोगजत्वात्, यदुक्तं भावप्रकाशे—"रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च। पित्तलस्य गुणाः ज्ञेयाः स्वयोनिसदृशाः जनैः॥ संयोगज-प्रभावेण तस्यान्येऽपि गुणाः स्मृताः॥ ताम्रत्रपुजमाख्यातं कांस्यं घोषञ्च कांसकम्। उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः॥ कांस्यस्य तु गुणाः ज्ञेयाः स्वयोनिसदृशाः जनैः। संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः॥" इति। वर्त्तलोहस्य मिश्रत्वमग्रे वक्ष्यति। वर्त्तलोहं कङ्कलोहं "विदरी" इति ख्यातम्। लोहे कनकादिधातौ लुहधातुः इति मतः, लुहः लोहस्य पर्य्याय इत्यर्थः। अनेकार्थ-वाची अष्टलोहितसुवर्णादिबह्वर्थबोधकः। "तत्त्वार्थवाची" इति पाठे—स लुहाख्यः धातुर्लोहः तत्त्वार्थवाची लोहस्य प्रकृतार्थस्याय:शब्दस्य बोधकः इत्यर्थः। "कर्षार्थ-वाची" इति पाठे—कर्षार्थबोधकः, कर्षपर्य्याय इत्यर्थः॥ १॥

अथ स्वर्णम् ।—

अथ स्वर्णस्य पञ्चविधत्वनिर्देशः ।—

प्राकृतं सहजं वह्निसम्भूतं खनिसम्भवम् ।
रसेन्द्रवेधसञ्जातं स्वर्णं पञ्चविधं स्मृतम् ॥ २ ॥

तत्रादौ सर्वलोहप्राधान्यात् स्वर्णस्य पञ्चधा भेदमाह, प्राकृतमिति ।—प्राकृतं प्रकृत्या स्वभावेन निर्वृत्तम् अकृत्रिमं, सृष्टेरादौ स्वभावत एव उत्पन्नत्वात् ; यद्वा—ब्रह्मणः प्रकृतिभूतस्य अण्डस्य आवरकत्वात् प्राकृतम् । सहजं ब्रह्मणा सह जातं गर्भावरकस्य उल्वापराख्यस्य जरायोः ब्रह्मणा सहैव निसृतत्वात् । वह्निसम्भूतम् अग्निसम्भवम्, अस्य विवृतिश्च अग्रे द्रष्टव्या । खनिसम्भवं भूगर्भस्थाकरजातम् । रसेन्द्रवेधसञ्जातं रसेन्द्रस्य पारदस्य वेधः स्वेदनाद्यूनविंशतिकर्मान्तर्गतकर्मविशेषः, येन कर्मणा स्पर्शादिमात्रेणैव रसस्य अन्यपदार्थविद्धकरणशक्तिरुत्पद्यते, सा च स्वर्णादिसंयोगे भवति, यदुक्तं रसेन्द्रचिन्तामणौ—"अष्टानवतिभागश्च रूप्यमेकश्च हाटकम् । सूतकेन च वेधः स्यात् शतांशविधिरीरितः ॥ चन्द्रस्यैकोनपञ्चाशत्तथा शुद्धस्य भास्वतः । वह्निरेकः सम्पुरेकः शतांशविधिरीरितः ॥ द्वावेव रजतस्योनितास्मयोनित्वेनोपचर्य्यते ; एवं सहस्रवेधादयो जारणाबीजवशादसंख्याः । अतिविद्धुते तस्मिन् वेध्योऽसौ दण्डवेधेन । विद्धं रसेन यद्द्रव्यं पश्चाद्धं स्थापयेद्भुवि । तत आनीय नगरे विजानीत विचक्षणः ॥" इति । तस्मात् सञ्जातं रसेन्द्रवेधकर्मणि उत्पन्नम् । रसेन्द्रवेधजस्वर्णस्य करणप्रकारो मातृकाभेदतन्त्रेऽप्युक्तं, यथा—"आनीय पारदं देवि ! स्थापयेत् प्रस्तरोपरि । तस्योपरि जपेन्मन्त्रं सर्वबन्धमयात्मकम् ॥ साष्टसहस्रं देवेशि ! प्रजपेत् साधकाग्रणीः । स्वयम्भुपुष्पसंयुक्ते वस्त्रे चारुणसन्निभे ॥ संस्थाप्य पारदं देवि ! मृत्पात्रयुगले शिवे ! । पुष्पयुक्तेन सूत्रेण बध्नीयात् बहुयत्नतः ॥ मृत्तिकया रक्तेनैव धान्यस्य परमेश्वरि ! । लेपयेत् बहुयत्नेन रौद्रे शुष्काणि कारयेत् ॥ पुनश्च लेपयेद्धीमान् ततो वह्नौ विनिक्षिपेत् । अष्टमीनवमीरात्रौ क्षिपेन्नैव सुरेश्वरि ! ॥ अथवा परमेशानि ! मृत्पात्रे स्थापयेद्रसम् । वल्लीरसेन तद्द्रव्यं शोधयेत् बहुयत्नतः ॥ घृतनारीरसेनैव तथैव शोधनं चरेत् । एवं कृते तु गुटिका यदि स्यात् दृढबन्धना ॥ धुस्तूरञ्च समानीय मध्ये शून्यञ्च कारयेत् । कृष्णाख्यतुलसीयोगे तथा घृतकुमारिका ॥ एवं कृते वह्नियोगे भस्मसात् जायते ध्रुवम् । भस्मयोगे भवेत् स्वर्णं धनदायाः प्रसादतः ॥ विवर्णं जायते द्रव्यं यदि पूजां न चाचरेत् ॥" इति । राजनिघण्टौ पुनः "तच्चैकं रसवेधजं तदपरं जातं स्वयं भूमिजम् । किञ्चान्यद्बहुलोहसङ्करभवञ्चेति त्रिधा काञ्चनम् ॥" इति

अथ स्वर्णरौप्ययोः सामान्यगुणाः ।—

आयुर्लक्ष्मीप्रभाधीस्मृतिकरमखिलव्याधिविध्वंसि पुण्यं
भूतावेशप्रशान्तिस्मरभरसुखदं सौख्यपुष्टिप्रकाशि ।
गाङ्गेयञ्चाथ रूप्यं गदहरमजराकारि मेहापहारि
क्षीणानां पुष्टिकारि स्फुटमतिकरणं वीर्य्यवृद्धिप्रकारि ॥३॥

अथ प्राकृतस्वर्णस्योत्पत्तिः ।—

ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु ।
तत् प्राकृतमिति प्रोक्तं देवानामपि दुर्लभम् ॥ ४ ॥

अथ सहजस्वर्णोत्पत्तिः ।—

ब्रह्मा येनाऽऽवृतो जातः सुवर्णेन जरायुणा ।
तन्मेरुरूपतां यातं सुवर्णं सहजं हि तत् ॥ ५ ॥

---

यदस्य वैविध्यमुक्तं, तत् प्राकृतसहजयोः दुर्लभतया भूमिजान्तर्गणनया वा बोध्यम ॥ २ ॥

स्वर्णरौप्ययोः सामान्यगुणमाह, आयुरिति ।—गाङ्गेयं स्वर्णम् । स्फुटमतिकरणं चित्तोन्मेषसम्पादनम ॥ ३ ॥

प्राकृतस्वर्णस्योत्पत्तिमाह, ब्रह्माण्डमिति ।—रजोगुणभुवा रजोगुणोत्पन्नेन. रजसः सृष्टिप्रवर्त्तकत्वात् ब्रह्मणश्च सृष्टिकर्त्तृत्वात तद्योनेः हैमाण्डस्यापि रजोगुणोद्भूतत्वं. तथा कारणभूतहैमाण्डस्य रजोगुणसम्भवत्वात् कार्य्यभूतब्रह्मणोऽपि रजोगुणमयत्वं बोध्यम् ; येन सुवर्णेन ब्रह्माण्डं ब्रह्मणः आधारभूतः स्वर्णमयः अण्डाकारः भुवनकोषः संवृतं पिहितम ; यदुक्तं मनुसंहितायां—"सोऽभिध्याय शरीरात स्वात सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीजमवासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशु-समप्रभम । तस्मिन जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥" इति ॥ ४ ॥

सहजस्वर्णस्योत्पत्तिमाह, ब्रह्मेति ।—येन सुवर्णेन सुवर्णमयेन जरायुणा गर्भ-मन्दिररूपविष्णुनाभिपद्मेन आवृतः वेष्टितः, तदन्तःस्थः सन् इति यावत्, ब्रह्मा जातः ; तदुक्तं श्रीमद्भागवते—"परावरेषां भूतानामात्मा यः पुरुषः परः । स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥ तस्य नाभेः समभवत् पद्मकोषो हिर-ण्मयः । तस्मिन्जज्ञे महाराज ! स्वयम्भूश्चतुराननः ॥" इति ॥ ५ ॥

अथ वह्निजस्वर्णोत्पत्तिः ।—

विसृष्टमग्निना गर्भं तेजः पीतं सुदुःसहम् ।
अभूत् सर्वं समुद्दिष्टं सुवर्णं वह्निसम्भवम् ॥ ६ ॥

अथ प्राकृतादित्रयाणां लक्षणगुणौ ।—

एतत् स्वर्णत्रयं दिव्यं वर्णैः षोडशभिर्युतम् ।
धारणादेव तत् कुर्याच्छरीरमजरामरम् ॥ ७ ॥

अथ खनिजस्वर्णस्योत्पत्तिलक्षणगुणाः ।—

तत्र तत्र गिरीणां हि जातं खनिषु यद्भवेत् ।
तच्चतुर्दशवर्णाढ्यं भक्षितं सर्वरोगहृत् ॥ ८ ॥

अथ रसेन्द्रवेधजस्वर्णस्योत्पत्तिगुणौ ।—

रसेन्द्रवेधसम्भूतं तद्वेधजमुदाहृतम् ।
रसायनं महाश्रेष्ठं पवित्रं वेधजं हि तत् ॥ ९ ॥

---

वह्निजस्वर्णस्योत्पत्तिमाह, विसृष्टमिति ।—विसृष्टं त्यक्तम् । वह्निसम्भूतसुवर्णस्योत्पत्तिकथा यथा—प्रस्कन्नस्य रुद्रशुक्रस्य भग्नमङ्गान्तस्याग्निना देवताप्रार्थनया गङ्गायामाहितस्य तया च वोढुमसमर्थतया "समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा" इत्यनेन मेरौ निक्षिप्तस्य तस्य तेजसैव मेरुस्थं सर्वं वस्तु सुवर्णीकृतं, तदेव वह्निजं सुवर्णं ज्ञेयम् ; यथोक्तं भारतानुशासनिके—"तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः । यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु च । तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत ॥......तस्मात् सुवर्णं माङ्गल्यं रत्नानामुत्तमोत्तमम् । सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतम् ॥" इति ॥ ६ ॥

प्राकृतादीनां त्रिविधानां गुणमाह, एतदिति ।—स्वर्णत्रयं प्राकृतसहजवह्निसम्भूतत्रिविधसुवर्णम् ॥ ७ ॥

खनिजस्वर्णस्योत्पत्तिमाह, तत्रेति ।—गिरीणां विन्ध्यसुमेरुहिमाचलादिपर्वतानाम् । खनिषु आकरेषु । चतुर्दशवर्णाढ्यं चतुर्दशविधवर्णसम्पन्नम् ॥ ८ ॥

रसेन्द्रवेधजस्वर्णस्य विवृतिमाह, रसेन्द्रेति ।—एतस्य प्रकारस्तु प्रागेव प्रदर्शितः ॥ ९ ॥

अथ गुणाः।—

स्निग्धं मेध्यं विषगदहरं बृंहणं वृष्यमग्र्यं
यक्ष्मोन्मादप्रशमनपरं देहरोगप्रमाथि।
मेधाबुद्धिस्मृतिसुखकरं सर्वदोषामयघ्नं
रुच्यं दीपि प्रशमितरुजं स्वादुपाकं सुवर्णम्॥ १०॥

अथाशोधितामारितस्वर्णस्य दोषाः।—

सौख्यं वीर्य्यं बलं हन्ति रोगवर्गं करोति च।
अशुद्धममृतं स्वर्णं तस्माच्छुद्धञ्च मारयेत्॥ ११॥

अथ सुवर्णस्य सु-वर्णसम्पादनम्।—

कर्षप्रमाणन्तु सुवर्णपत्रं शरावरुद्धं पटुधातुयुक्तम्।
अङ्गारसंस्थं प्रहरार्द्धमानं ध्मानेन तत् स्यान्ननु वर्णपूर्णम्॥१२॥

अथ लोहमारकद्रव्येषु उत्तमादिनिर्देशः।—

लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना।
मूलिभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः॥
अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम्॥ १३॥

गुणमाह, स्निग्धमिति।—मेध्यं पवित्रम्। बृंहणं पुष्टिकरम्। वृष्यमग्र्यं श्रेष्ठ-वाजीकरम्। "यक्ष्मोन्माद" इत्यत्र "यक्षोन्माद" इति पाठे—यक्षग्रहावेशजोन्माद-नाशनम्। दीपि अग्निवर्द्धकम्। प्रशमितरुजं रुजाप्रशमकम्॥ १०॥

अशुद्धामृतस्वर्णस्य दोषमाह, सौख्यमिति।—सुगमम्॥ ११॥

स्वर्णस्य प्रशस्तवर्णसम्पादनप्रकारमाह, कर्षेति।—पटुधातुः गन्धकः। कण्टक-वेध्यं कर्षप्रमाणं स्वर्णपत्रं गन्धकेन सह शरावसम्पुटे रुद्ध्वा निर्धूमाङ्गाराग्नौ संस्थाप्य अर्द्धप्रहरं यावत् भस्त्रया ध्मापनेन वर्णोत्कर्षतां याति॥ १२॥

लोहमारणे प्रवरावरादिसहाययोगमाह, लोहानामिति।—लोहानां स्वर्णाद्यष्ट-विधलोहानाम्। मूलिभिः ओषधीनां मूलविशेषैः इत्यर्थः। अरिलोहेन लोहारिणा हरितालेनेति यावत्। दुर्गुणप्रदम् अपकर्षतासम्पादकमित्यर्थः॥ १३॥

अथ स्वर्णमारणम् ।—

ज्ञात्वा कण्टकवेध्यानि स्वर्णपत्राणि लेपयेत् ।
लुङ्गाम्बु-भस्मसूतेन म्रियते दशभिः पुटैः ॥ १४ ॥

मतान्तरम् ।—

द्रुते विनिक्षिपेत् स्वर्णे लोहमानं मृतं रसम् ।
विचूर्ण्य लुङ्गतोयेन दरदेन समन्वितम् ॥
जायते कुङ्कुमच्छायं स्वर्णं द्वादशभिः पुटैः ॥ १५ ॥

मतान्तरम् ।—

हेम्नः पादं मृतं सूतं पिष्टमम्लेन केनचित् ।
पत्रे लिप्त्वा पुटैः पश्चादष्टभिर्म्रियते ध्रुवम् ॥ १६ ॥

अथ स्वर्णद्रावणम् ।—

मण्डूकास्थिवसाटङ्क-हयलालेन्द्रगोपकैः ।
प्रतिवापेन कनकं सुचिरं तिष्ठति द्रुतम् ॥ १७ ॥

---

मारणमाह, ज्ञात्वेति ।—लुङ्गाम्बु मातुलुङ्गरसः । भस्मसूतः पारदभस्म, रससिन्दूरमित्यर्थः ॥ १४ ॥

मतान्तरमाह, द्रुते इति ।—द्रुते गलिते । लोहमानं स्वर्णपरिमितम् । दरदेन हिङ्गुलेन । टङ्कणादिद्रावणवर्गेण द्राविते स्वर्णे तुल्यमानं पारदभस्म तथा हिङ्गुलञ्च प्रक्षिप्य मातुलुङ्गरसेन सम्पिष्य पुटो देयः, एवं द्वादशपुटेन स्वर्णस्य कुङ्कुमवर्णं भस्म जायते ॥ १५ ॥

मतान्तरमाह, हेम्नः इति ।—शुद्धसुवर्णस्य चतुर्थांशं सूतभस्म जम्बीराद्यम्लानां केनापि सम्पिष्य तेन कल्केन कण्टकवेध्यस्वर्णपत्रौ लिप्त्वा लघुपुटो देयः, एवमष्टकृत्वः कार्यम् ॥ १६ ॥

द्रावणमाह, मण्डूकेति ।—मण्डूकास्थिवसा भेकास्थि भेकवसा च । हयलाला अश्वलाला । "हयलाला" इत्यत्र "हयमार" इति पाठे—करवीर इत्यर्थः बोध्यः । इन्द्रगोपकः रक्तवर्णवार्षिककीटविशेषः "आषाढ़े पोका" इति "केण्डाइ" इति वा भाषा । प्रतिवापः गलितस्य धातोः द्रव्यान्तरेण अवचूर्णनम् । विशुद्धसुवर्णं द्रावणवर्गेण वह्नौ द्रावितं मण्डूकास्थ्यादिभिः अवचूर्णनैः अवचूर्णितं सुचिरकालं द्रुतं तिष्ठति इति ॥ १७ ॥

अथ द्रावणान्तरम्।—

चूर्णं सुरेन्द्रगोपाणां देवदालीफलद्रवैः।
भावितं सदृशं हेम करोति जलवद्द्रुतम्॥ १८॥

अथ मारितस्वर्णस्य प्रयोगविधिः।—

एतद्भस्म सुवर्णजं कटुघृतोपेतं द्विगुञ्जोन्मितं
लीढं हन्ति नृणां क्षयाग्निमदनं श्वासञ्च कासारुचिम्।
ओजोधातुविवर्द्धनं बलकरं पाण्ड्वामयध्वंसनं
पथ्यं सर्वविषापहं गरहरं दुष्टग्रहण्यादिनुत्॥ १९॥

अथ अमारितस्य स्वर्णस्य दोषः।—

बलञ्च वीर्य्यं हरते नराणां रोगव्रजं कोपयतीव काये।
असौख्यकारञ्च सदैव हेमा-पक्वं सदोषं मरणं करोति॥२०॥

[ इति स्वर्णाधिकारः ]।

प्रकारान्तरमाह, चूर्णमिति।—सुरेन्द्रगोपः इन्द्रगोपकीटः। देवदाली हस्तिघोषकः। सदृशं हेमतुल्यमित्यर्थः, सुरेन्द्रगोपाणां चूर्णमित्यनेनान्वयः। अत्र हेम इति कर्मपदं बोध्यम्। इन्द्रगोपकीटचूर्णं स्वर्णतुल्यमानं हस्तिघोषकफलरसैः भावयित्वा सञ्चूर्णयेत्, तस्यावचूर्णनेन स्वर्णं जलवत् तरलं भवति॥ १८॥

मृतस्वर्णस्य प्रयोगविधिमाह, एतदिति।—कटुशब्देनात्र त्रिकटुर्बोध्यः क्षयादिहन्तृत्वात्; त्रिकटुचूर्णघृताभ्यां सह द्विगुञ्जोन्मितं सुवर्णजं भस्म इति योज्य. यद्वा—कटुघृतोपेतम् अपेतमाधुर्य्यपुराणघृतसंयुक्तम्। ओजोधातुविवर्द्धनं "हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्। ओजः शरीरे सङ्ख्यातं तन्नाशान्ना विनश्यति॥" अन्यच्च—"अष्टबिन्दुप्रमाणं तदीषद्रक्तं सपीतकम्। अग्निसोमात्मकत्वेन द्विरूपं वर्णितञ्च तत्॥" अन्यच्च—"ओजश्च तेजो धातूनां शुक्रान्तानां परं स्मृतम्। हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम्॥" इत्याद्युक्तलक्षणस्य रसादिशुक्रान्तसर्वधातुसार-धातुविशेषस्य वृद्धिकारकम्। गरहरं संयोगजविषनाशनं, कृत्रिमविषापहारकमिति यावत्; गरस्वरूपं यथा वाग्भटे—"नानाप्राण्यङ्गशमल-विरुद्धौषधभस्मनाम्। विषाणाञ्चाल्पवीर्य्याणां योगो गर इति स्मृतः॥" इति॥ १९॥

अमृतस्वर्णस्य दोषमाह, बलमिति।—हेमापक्वम् अमृतं, स्वर्णमित्यर्थः। श्लोकोऽयं प्रक्षिप्त इति केचित्॥ २०॥

अथ रजतम् ।—

अथ रौप्यस्य वैविध्यनिर्देशः ।—

सहजं खनिसञ्जातं कृत्रिमं त्रिविधं मतम् ।
रजतं पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ॥ २१ ॥

अथ सहजरौप्यस्योत्पत्तिर्गुणाश्च ।—

कैलासाद्यद्रिसम्भूतं सहजं रजतं भवेत् ।
तत् स्पृष्टं हि सकृत् व्याधिनाशनं देहिनां भवेत् ॥२२॥

अथ खनिजरौप्यस्योत्पत्तिर्गुणाश्च ।—

हिमाचलादिकूटेषु यद्रूप्यं जायते हि तत् ।
खनिजं कथ्यते तज्ज्ञैः परमं हि रसायनम् ॥ २३ ॥

अथ कृत्रिमरौप्यस्योत्पत्तिर्गुणाश्च ।—

श्रीरामपादुकान्यस्तं वङ्गं यद्रूप्यतां गतम् ।
तत् पादरूप्यमित्युक्तं कृत्रिमं सर्वरोगनुत् ॥ २४ ॥

अथोत्तमरौप्यलक्षणम् ।—

घनं स्वच्छं गुरु स्निग्धं दाहे छेदे सितं मृदु ।
शङ्खाभं मसृणं स्फोटरहितं रजतं शुभम् ॥ २५ ॥

रजतस्य वैविध्यमाह, सहजमिति ।—स्वगुणैः आत्मगुणैः, रजतसहजगुणैरित्यर्थः, उत्तरोत्तरं श्रेष्ठात् श्रेष्ठतरमित्यर्थः, उत्तरशब्दोऽत्र श्रेष्ठार्थको बोध्यः; कृत्रिमापेक्षया खनिजं तदपेक्षया च सहजं गुणाधिकमित्यर्थः ॥ २१ ॥

सहजस्योत्पत्तिं गुणांश्चाह, कैलासादीति ।—सकृत् एकवारम् ॥ २२ ॥

खनिजस्योत्पत्तिं गुणांश्चाह, हिमाचलादीति ।—कूटेषु शिखरेषु ॥ २३ ॥

कृत्रिमरौप्यस्योत्पत्तिं गुणांश्चाह, श्रीरामेति ।—श्रीरामचन्द्रस्य पादुकानिबद्धं वङ्गं यत् रौप्यत्वं प्राप्तं, तत्पादस्पर्शात् इति शेषः । पादरूप्यं चरणसंस्पर्शजनित-रौप्यम् ॥ २४ ॥

प्रशस्तरौप्यलक्षणमाह, घनमिति ।—घनं निबिडावयवं, नीरन्ध्रमिति यावत् । स्वच्छं निर्मलम् । दाहे तथा छेदेऽपि सितम् अन्तःशुभ्रम् । मृदु अदारुणं, सुखस्पर्श-मित्यर्थः । स्फोटरहितं व्रणवत् गर्तरहितम् ॥ २५ ॥

अथापकृष्टरौप्यलक्षणम् ।—

दाहे रक्तञ्च पीतञ्च कृष्णं रूक्षं स्फुटं लघु ।
स्थूलाङ्गं कर्कशाङ्गञ्च रजतं त्याज्यमष्टधा ॥ २६ ॥

अथ रौप्यगुणाः ।—

रूप्यं विपाकमधुरं तुवराम्लसारं
शीतं सरं परम-लेखनकञ्च रूप्यम् ।
स्निग्धञ्च वातकफजिज्जठराग्निदीपि
बल्यं परं स्थिरवयस्करणञ्च मेध्यम् ॥ २७ ॥

अथ गुणान्तरम् ।—

रौप्यं शीतं कषायाम्लं स्निग्धं वातहरं गुरु ।
रसायनविधानेन सर्वरोगापहारकम् ॥ २८ ॥

अथ स्वर्णादिशोधनम् ।—

तैले तक्रे गवां मूत्रे ह्यारनाले कुलत्थजे ।
क्रमान्निषेचयेत्तप्तं द्रावे द्रावे तु सप्तधा ॥
स्वर्णादिलोहपत्राणां शुद्धिरेषा प्रशस्यते ॥ २९ ॥

अथ अशोधितमारितरौप्यस्य दोषाः ।—

आयुः शुक्रं बलं हन्ति तापविड्बन्धरोगकृत् ।
अशुद्धमसृतं तारं शुद्धं मार्य्यमतो बुधैः ॥ ३० ॥

---

निकृष्टरौप्यलक्षणमाह, दाहे इति ।—स्फुटं भिन्नं, विदीर्णमिति यावत् ; "स्फुटं यत् घनाहतं स्फुटति" इति भावमिश्रः ॥ २६ ॥

गुणमाह, रूप्यमिति ।—तुवराम्लसारं कषायाम्लरसमित्यर्थः । सरं सारकमित्यर्थः । लेखनकं "धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत् । लेखनं तत्" इति-लक्षणोक्तकर्शकारकमित्यर्थः ॥ २७ ॥

मतान्तरे गुणमाह, रौप्यमिति ।—सुगमम् ॥ २८ ॥

शोधनमाह, तैले इति ।—कुलित्थजे कुलत्थक्वाथे । कपटकवेध्यं रौप्यपत्रम् अग्नौ प्रताप्य प्रताप्य क्रमात् तैलादौ प्रत्येकं सप्तकृत्वः निषिञ्चेत्, एवं रजतं शुद्धिमायाति । स्वर्णादिसर्वलोहानामपि शोधने अयमेव क्रमः प्रशस्तः ॥ २९ ॥

अथ रौप्यस्य विशेषशोधनम् ।—

नागेन टङ्कणेनैव वापितं शुद्धिमृच्छति ।
तारं त्रिवारं निक्षिप्तं तैले ज्योतिष्मतीभवे ॥ ३१ ॥

मतान्तरम् ।—

खर्परे भस्मचूर्णाभ्यां परितः पालिकां चरेत् ।
तत्र रूप्यं विनिक्षिप्य समसीससमन्वितम् ॥ ३२ ॥
जातसीसक्षयं यावद्धमेत्तावत्पुनः पुनः ।
इत्थं संशोधितं रूप्यं योजनीयं रसादिषु ॥ ३३ ॥

अथ रौप्यमारणम् ।—

लकुचद्रवसूताभ्यां तारपत्रं प्रलेपयेत् ।
ऊर्ध्वाधो गन्धकं दत्त्वा मूषामध्ये निरुध्य च ॥ ३४ ॥
स्वेदयेद्वालुकायन्त्रे दिनमेकं दृढाग्निना ।
स्वाङ्गशीतात्त्व तां पिष्ट्वा साम्लतालेन मर्दिताम् ॥
पुटेद्द्वादशवाराणि भस्मीभवति रूप्यकम् ॥ ३५ ॥

अशोधितामृतरौप्यस्य दोषमाह, आयुरिति ।—सुगमम् ॥ ३० ॥

रौप्यस्य विशेषशोधनमाह, नागेनेति ।—वापितं कल्कीकृतं, पिष्टमित्यर्थः । तैले ज्योतिष्मतीभवे ज्योतिष्मती "लताफट्की" इति भाषा, तत्फलसम्भूते तैले । कण्टकवेधार्हं रौप्यपत्रं समपरिमितसीसकभस्मटङ्कणचूर्णाभ्यां सह पिष्ट्वा वारत्रयं ज्योतिष्मतीफलोत्थतैले निक्षिपेत्, तेन शुद्धिं याति ॥ ३१ ॥

मतान्तरमाह, खर्परे इति ।—भस्मचूर्णाभ्यां सीसकभस्मटङ्कणचूर्णाभ्याम् । पालिकाम् आलवालम् । अथायं विधिः.—नागभस्मटङ्कणचूर्णौ जलेन पिष्ट्वा तत्पिण्डेन मृत्खर्परं परितः आलवालं रचयित्वा तन्मध्ये समसीसचूर्णपिष्टरौप्यं निक्षिप्य तावत् भस्त्रया धमेत यावत् सीसक्षयो न भवेदिति ॥ ३२।३३ ॥

मारणमाह, लकुचेति ।—साम्लतालेन सकाञ्जिकहरितालेन ; लकुचद्रवसूताभ्यां रौप्यपत्रं प्रलिप्य मूषामध्ये ऊर्ध्वाधो गन्धकं दत्त्वा संस्थाप्य मृत्कर्पटादिना सन्धिरोधं कृत्वा च आतपे शोषयेत्, ततः दिनमेकं तीव्राग्निना वालुकायन्त्रे पचेत्, ततः स्वाङ्गशीतं समुद्धृत्य भूयः काञ्जिकहरितालाभ्यां पेषयित्वा द्वादशवारं पुटेदिति ॥ ३४।३५ ॥

मतान्तरम्।—

माक्षीकचूर्णलुङ्गाम्ल-मर्दितं पुटितं शनैः।
त्रिंशद्वारेण तत्तारं भस्मसाज्जायतेतराम् ॥ ३६ ॥

अथ रौप्यस्य निरुत्थभस्मीकरणम्।—

भाव्यं ताप्यं स्नुहीक्षीरैस्तारपत्राणि लेपयेत्।
मारयेत् पुटयोगेन निरुत्थं जायते ध्रुवम् ॥ ३७ ॥

अथ निरुत्थभस्मीकरणे मतान्तरम्।—

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम्।
मर्द्यं जम्बीरजद्रावैस्तारपत्राणि लेपयेत् ॥ ३८ ॥
शोषयेदन्धयन्त्रे च त्रिंशदुत्पलकैः पचेत्।
चतुर्दशपुटैरेवं निरुत्थं जायते ध्रुवम् ॥ ३९ ॥

अथ स्वर्णरौप्ययोर्द्रावणम्।—

सप्तधा नरमूत्रेण भावयेद्देवदालिकाम्।
तच्चूर्णावापमात्रेण द्रुतिः स्यात् स्वर्णतारयोः ॥ ४० ॥

---

मतान्तरमाह, माक्षीकेति।—लुङ्गाम्लः मातुलुङ्गः ॥ ३६ ॥

रौप्यस्य निरुत्थभस्मप्रकारमाह, भाव्यमिति।—ताप्यं स्वर्णमाक्षिकम्; स्नुहीक्षीरैः सप्ताहं स्वर्णमाक्षिकं भावयित्वा तेन रौप्यपत्रं प्रलिप्य यावन्मृतिं पुटेत्, एवं रौप्यस्य निरुत्थं भस्म जायते ॥ ३७ ॥

निरुत्थभस्मीकरणे मतान्तरमाह, तारपत्रमिति।—अन्धयन्त्रे अन्धमूषायाम्; इदमेव वज्रमूषानाम्ना ख्याता इति केचित्। तल्लक्षणं यथा—"अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा। नैवाच्छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥ द्वौ भागौ तुषदग्धस्य एका वल्मीकमृत्तिका। लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥ नरकेशसमं किञ्चित् छागीक्षीरेण पेषयेत्। यामद्वयं दृढं मर्द्यं तेन मूषां सुसम्पुटाम् ॥ शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्निरोधयेत्। वज्रमूषेयमाख्याता सम्यक् पारदमारिका ॥" इत्यपि। एतद्व्याख्यानवज्रमूषालक्षणमग्रे द्रष्टव्यम्। उत्पलकैः वन्यकरीषैः ॥३८।३९॥

स्वर्णरौप्ययोः द्रावणमाह, सप्तधेति।—देवदालिका इन्द्रघोषकः। तच्चूर्णावापमात्रेण नृमूत्रभावितइन्द्रघोषकमूलचूर्णप्रक्षेपमात्रेण ॥ ४० ॥

अथ रौप्यप्रयोगः ।—

भस्मीभूतं रजतममलं तत्समौ व्योमभानू
सर्वैस्तुल्यं त्रिकटु सवरं सारघाज्येन युक्तम् ।
लीढं प्रातः क्षपयति तरां यक्ष्मपाण्डूदरार्शः
श्वासं कासं नयनजरुजः पित्तरोगानशेषान् ॥ ४१ ॥
[ इति रजताधिकारः ] ।

अथ ताम्रम् ।—

अथ ताम्रस्य द्वैविध्यनिर्देशः ।—

म्लेच्छं नेपालकञ्चेति तयोर्नेपालमुत्तमम् ।
नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ॥ ४२ ॥

अथ म्लेच्छताम्रस्य लक्षणम् ।—

सितकृष्णारुणच्छायमतिवामि कठोरकम् ।
क्षालितञ्च पुनः कृष्णमेतन्म्लेच्छकताम्रकम् ॥ ४३ ॥

अथ नेपालताम्रलक्षणम् ।—

सुस्निग्धं मृदुलं शोणं घनघातक्षमं गुरु ।
निर्विकारं गुणश्रेष्ठं ताम्रं नेधालमुच्यते ॥ ४४ ॥

---

रजतप्रयोगमाह, भस्मीभूतमिति ।—तत्समौ प्रत्येकं मृतरजतसमौ । व्योमभानू मृताभ्रताम्रे । सर्वैरिति ।—मिलितत्रिकटुत्रिफलाचूर्णं रजतादीनां मिलितचूर्णसमम् । सारघाज्येन क्षौद्रघृतेन । अस्य पत्री यथा—रौप्यभस्म र २, अभ्रभस्म र २, ताम्रभस्म र २, त्रिकटु प्रः र १, त्रिफला प्रः र १, असतुल्यघृतमधुना सम्मर्द्य प्रातः लिह्यम ॥ ४१ ॥

ताम्रस्य द्वैविध्यं परिचययन्नाह, म्लेच्छमिति ।—नेपालकं नेपालदेशीयखनिसमुत्थम् ॥ ४२ ॥

म्लेच्छताम्रस्य लक्षणमाह, सितेति ।—अतिवामि वमनातिशय्यकारकम् ॥ ४३ ॥

नैपालताम्रस्य लक्षणमाह, सुस्निग्धमिति ।—शोणं जपाकुसुमसङ्काशरक्तवर्णम् । घनघातक्षमं पुनःपुनराघातसहम् । निर्विकारम् अतिवामकत्वादिदोषपरिशून्यम् इत्यर्थः ॥ ४४ ॥

अथ रसकर्मनिर्दिष्टताम्रलक्षणम् ।—

पाण्डुरं कृष्णशोणञ्च लघु स्फुटनसंयुतम् ।
रूक्षाङ्गं सदलं ताम्रं नेष्यते रसकर्मणि ॥ ४५ ॥

अथ ताम्रस्य गुणाः ।—

ताम्रं तिक्तकषायकञ्च मधुरं पाकेऽथ वीर्य्योष्णकं
सारं पित्तकफापहं जठररुक्कुष्ठामजन्त्वन्तकृत् ।
ऊर्द्ध्वाधःपरिशोधनं विष-यकृत् स्थौल्यापहं क्षुत्करं
दुर्नामक्षयपाण्डुरोगशमनं नेत्र्यं परं लेखनम् ॥ ४६ ॥

अथाशोधितामारितताम्रस्य दोषाः ।—

अशुद्धं ताम्रमायुघ्नं कान्तिवीर्य्यबलापहम् ।
वान्तिमूर्च्छाभ्रमोत्क्लेदं न मृतं कुष्ठशूलकृत् ॥ ४७ ॥
उत्क्लेदभेदभ्रमदाहमोहास्ताम्रस्य दोषाः खलु दुर्द्धरास्ते ।
विशोधनात्तद्विगतस्वदोषं सुधासमं स्याद्रसवीर्य्यपाके ॥४८॥

अथ ताम्रशोधनम् ।—

ताम्रं क्षाराम्लसंयुक्तं द्रावितं दत्तगैरिकम् ।
निक्षिप्तं महिषीतक्रे छगणे सप्तवारकम् ॥
पञ्चदोषविनिर्मुक्तं सप्तवारेण जायते ॥ ४९ ॥

---

रसकर्मायोग्यताम्रलक्षणमाह, पाण्डुरमिति ।—कृष्णशोणं धूम्रवर्णम् । स्फुटनसंयुतं विदीर्णप्रायम् । सदलं सपत्रं, पटलसंयुतमिति यावत् ; "दलं ओर इति लोके" इति भावमिश्रः ॥ ४५ ॥

गुणमाह, ताम्रमिति ।—पाके मधुरमिति योज्यम् । जन्तुः क्रिमिः । ऊर्द्ध्वाधःपरिशोधनं वमनविरेचनकारकम् । लेखनं लेखनगुणविशिष्टम् ॥ ४६ ॥

अशुद्धामृतस्य दोषमाह, अशुद्धमिति ।—उत्क्लेदम् उत्थापितवमनवेगम् । दुर्द्धराः दुर्वाराः ॥ ४७।४८ ॥

शोधनमाह, ताम्रमिति ।—क्षाराम्लसंयुक्तं यवक्षार-काञ्जिकाद्यम्लसहितम् । छगणं करीषे । पञ्चदोषविनिर्मुक्तम् उत्क्लेदभेदभ्रमदाहमोहदोषशून्यम् । क्षाराम्लमर्दितं ताम्रं छगणे द्रवीकृत्य तत्र गैरिकचूर्णं दत्त्वा महिषीतक्रे निक्षिपेत्, एवं सप्तवारम् ॥ ४९ ॥

मतान्तरम् ।—

ताम्रनिर्मलपत्राणि लिप्त्वा निम्बूम्बुसिन्धुना ।
ध्मात्वा सौवीरकक्षेपात् विशुध्यत्यष्टवारतः ॥ ५० ॥

मतान्तरम् ।—

निम्बूम्बुपटुलिप्तानि तापितान्यष्टवारकम् ।
विशुध्यन्त्यर्कपत्राणि निर्गुण्ड्या रसमज्जनात् ॥ ५१ ॥

मतान्तरम् ।—

गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र सन्देहो मारणञ्चाप्यथोच्यते ॥ ५२ ॥

अथ ताम्रमारणम् ।—

जम्बीर-रससम्पिष्ट-रसगन्धकलेपितम् ।
शुल्वपत्रं शरावस्थं त्रिपुटैर्याति पञ्चताम् ॥ ५३ ॥

अथ रसरत्नाकरोक्तामृतीकरणम् ।—

अथवा मारितं ताम्रमम्लेनैकेन मर्दितम् ।
तद्गोलं शूरणस्यान्त-रुद्ध्वा सर्वत्र लेपयेत् ॥ ५४ ॥
शुष्कं गजपुटे पच्यात् सर्वदोषहरं भवेत् ।
वान्तिं भ्रान्तिं विरेकञ्च न करोति कदाचन ॥ ५५ ॥

---

मतान्तरमाह, ताम्रेति ।—निम्बूम्बुसिन्धुना जम्बीररस-सैन्धवलवणेन । सौवीरकक्षेपात् निस्तुषयवकृतकाञ्जिके निक्षेपात् ॥ ५० ॥

मतान्तरमाह, निम्बूति ।—निम्बू इत्यादौ पटुः सैन्धवलवणम् । निर्गुण्ड्याः सिन्दुवारस्य । जम्बीररसमिश्रसैन्धवलवणेन ताम्रपत्राणि लिप्त्वा अग्नौ प्रताप्य निर्गुण्डीरसे निक्षिपेत्, एवमष्टवारान् ॥ ५१ ॥

मतान्तरमाह, गोमूत्रेणेति ।—सुगमम् ॥ ५२ ॥

मारणमाह, जम्बीरेति ।—जम्बीररसपिष्टकज्जल्या ताम्रपत्रीं लिप्त्वा शरावसम्पुटे कृत्वा पुटत्रयं देयं, तेन ताम्रं भस्मीभवति ॥ ५३ ॥

रसरत्नाकरोक्तामृतीकरणमाह, अथवेति ।—अथवा-शब्दोऽत्र तदन्योक्तप्रक्रिया-

अथ मारणान्तरम् ।—

ताम्रपत्राणि सूक्ष्माणि गोमूत्रे पञ्चयामकम् ।
क्षिप्त्वा रसेन भाण्डे तद्द्विगुणं देहि गन्धकम् ॥ ५६ ॥
अम्लपर्णीं प्रपिष्याथ ह्यभितो देहि ताम्रकम् ।
सम्यङ्निरुध्य भाण्डे तमग्निं ज्वालय यामकम् ॥
भस्मीभवति ताम्रं तद्यथेष्टं विनियोजयेत् ॥ ५७ ॥

अथ सोमनाथोक्तताम्रप्रयोगः ।—

शुल्वतुल्येन सूतेन बलिना तत्समेन च ।
तदर्द्धांशेन तालेन शिलया च तदर्द्धया ॥ ५८ ॥
विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसन्निभाम् ।
यन्त्राध्यायविनिर्दिष्ट-गर्भयन्त्रोदरान्तरे ॥ ५९ ॥
कज्जलीं ताम्रपत्राणि पर्य्यायेण विनिक्षिपेत् ।
प्रपचेद्यामपर्य्यन्तं स्वाङ्गशीतं विचूर्णयेत् ॥ ६० ॥

तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं
संलीढं परिणामशूलमुदरं शूलञ्च पाण्डुज्वरम् ।
गुल्मप्लीहयकृत् क्षयाग्निसदनं मेहञ्च मूत्रामयं
दुष्टाञ्च ग्रहणीं हरेद्ध्रुवमिदं तत् सोमनाथाभिधम् ॥६१॥

---

त्तरापेक्षया बोध्यः। मृततास्रं येन केनापि एकेनाम्लेन मर्दयित्वा पिण्डं कुर्य्यात्, ततः शूरणकन्दगर्भे तत् पिण्डं सन्धाप्य मुखं रुद्ध्वा मृत्कर्पटादिना लेपयेत्, पश्चात् गजपुटो देयः॥ ५४।५५ ॥

मारणान्तरमाह, ताम्रपत्राणीति।—अम्लपर्णी चाङ्गेरी। कण्टकवेध्यताम्रपत्रं गोमूत्रे क्षिप्त्वा पञ्चयामं स्थापयेत्, तत उद्धृत्य खल्ले समानपारदेन सहितं ताम्राद्द्विगुणं गन्धकं दत्त्वा सम्मर्द्य चाङ्गेरीकल्केन तत् सरसगन्धकं ताम्रपत्रं लेपयेत्, ततो भाण्डमध्ये सम्यक् निरुध्य यामं यावत् ज्वाला देया, तेन भस्मीभवति ॥ ५६।५७ ॥

सोमनाथोक्तताम्रप्रयोगमाह, शुल्वेति।—शुल्वं ताम्रम्। बलिना तत्समेन पारद-तुल्येन गन्धकेन। तदिति।—गन्धकार्द्धेन हरितालेन हरितालार्द्धेन मनःशिलाचूर्णेन इत्यर्थः। यन्त्रेति।—"गर्भयन्त्रं प्रवक्ष्यामि पिष्टिकाभस्मकारकम्" इत्यादिना

अथ ग्रन्थान्तरोक्तताम्रप्रयोगः।—

सूताद्द्विगुणितं ताम्र-पत्रं कन्यारसैः प्लुतम्।
पिष्ट्वा तुल्येन बलिना भाण्डमध्ये विनिक्षिपेत्॥ ६२॥
रुद्ध्वा शरावकेणैतत्तदूर्ध्वं लवणं न्यसेत्।
मुखे शरावकं दत्त्वा वह्निं यामचतुष्टयम्॥ ६३॥
अवचूर्ण्यैव तच्छुल्वं वल्लमात्रं प्रयोजयेत्।
पिप्पलीमधुना सार्द्धं सर्वरोगेषु योजयेत्॥ ६४॥
श्वासं कासं क्षयं पाण्डुमग्निमान्द्यमरोचकम्।
गुल्मप्लीहयकृन्मूर्छा-शूलपक्त्यर्थमुत्तमम्॥ ६५॥
दोषत्रयसमुद्भूतानामयान् जयति ध्रुवम्।
रोगानुपानसहितं जयेद्धातुगतं ज्वरम्॥
रसे रसायने चैव योजयेद्युक्तमात्रया॥ ६६॥

[इति ताम्राधिकारः]।

अथायः।—

अथायोभेदाः।—

मुण्डं तीक्ष्णञ्च कान्तञ्च त्रिप्रकारमयः स्मृतम्॥ ६७॥

वक्ष्यमाणदशमाध्यायोक्तगर्भयन्त्रमध्ये। आदौ यथानिर्दिष्टां कज्जलीं किञ्चित्परिमाणां मूषायां संस्थाप्य तदुपरि ताम्रपत्रीं तदुपरि पुनः कज्जलीं तदुपरि ताम्रपत्रीं ततः कज्जलीभिर्वक्रमेण संस्थाप्य यामं यावत् गर्भयन्त्रे पचेत्, स्वाङ्गशीतं यदा भवेत्तदा विचूर्ण्य स्थापयेत्। तत्तदिति।—यस्मिन् यस्मिन् रोगे ताम्रं प्रयोज्यं, तत्तद्रोगनाशकानुपानसहितम्। सोमनाथाभिधं सोमनाथप्रोक्तत्वात् सोम· नाथाह्वम॥ ५८—६१॥

ग्रन्थान्तरोक्तताम्रप्रयोगमाह, सूतादिति।—पारदापेक्षया द्विगुणं ताम्रपत्रं घृतकुमारीरसेनाप्लाव्य तेनैव पिष्ट्वा भाण्डमध्ये संस्थाप्य च ताम्रतुल्यगन्धकमूर्द्धाधो दत्त्वा स्वल्पशरावकेण पिधाय लवणेनोर्द्धं पूरयेत्, ततो भाण्डमुखं शरावान्तरेणाच्छाद्य यामचतुष्टयं वह्निना पचेत्॥ ६२—६६॥

लोहस्य भेदानाह, मुण्डमिति।—मुण्डं आंबलोहम्। तीक्ष्णं कक्षलोहम्, "इस्पात्" इति भाषा। कान्तम् अयस्कान्तं, कान्तलोहमिति यावत्॥ ६७॥

अथ मुण्डलौहस्य वैविध्यम्।—

मृदु कुण्ठं कडारञ्च त्रिविधं मुण्डमुच्यते ॥ ६८ ॥

अथ मृदुमुण्डलक्षणम्। —

द्रुतद्रावमविस्फोटं चिक्कणं मृदु तच्छुभम् ॥ ६९ ॥

अथ कुण्ठमुण्डलक्षणम्।—

हतं यत् प्रसरेद्दुःखात्तत् कुण्ठं मध्यमं स्मृतम् ॥ ७० ॥

अथ कडारमुण्डलक्षणम्।—

यद्धतं भज्यते भङ्गे कृष्णं स्यात्तत् कडारकम् ॥ ७१ ॥

अथ मुण्डगुणाः।—

मुण्डं परं मृदुलकं कफवातशूल-

मूलाममेहगद-कामलपाण्डुहारि।

गुल्मामवातजठराग्निहरं प्रटोपि

शोफापहं रुधिरकृत् खलु कोष्ठशोधि ॥ ७२ ॥

अथ अशुद्धलौहस्य दोषाः।—

अशुद्धलोहं न हितं निषेवणा-

दायुर्बलं कान्तिविनाशि निश्चितम्।

---

तत्रादौ मुण्डलौहस्य भेदमाह, मृद्विति।—कडारमित्यत्र कुठारमिति पाठान्तरम् ॥ ६८ ॥

मुण्डभेदस्य मृदुनो लक्षणमाह, द्रुतेति।—द्रुतद्रावम् अग्नौ शीघ्रद्रवणशीलम्। अविस्फोटं विस्फोटाकृति-गण्डादिशून्यगात्रम्; यद्वा—स्फुटनादिरहितम्, अभङ्गुरमिति यावत्। चिक्कणं श्लक्ष्णम् ॥ ६९ ॥

कुण्ठस्य लक्षणमाह, हतमिति।—परीक्षणार्थम् अग्नौ दग्ध्वा आघातितमपि कृच्छ्रेण विस्तारं गच्छति। मध्यमं मध्यगुणविशिष्टम् ॥ ७० ॥

कडारस्य लक्षणमाह, यदिति।—पूर्ववत् आघातितं सत् अल्पेनैव भग्नतां याति। मृदुकुण्ठयोरुत्तममध्यमत्वोक्त्या अनुक्तमपि एतस्य अधमत्वमर्थादेव व्यज्यते। कडारकमित्यत्रापि कुठारकमिति पाठान्तरम् ॥ ७१ ॥

मुण्डलौहस्य गुणमाह, मुण्डमिति।—परं मृदुलकम् अत्यर्थं मृदु, तीक्ष्णकान्तापेक्षया हीनगुणमित्यर्थः ॥ ७२ ॥

छर्दिं प्रपीडां तनुते च पाटवं
रुजं करोत्येव विशोध्य मारयेत् ॥ ७३ ॥

अथ तीक्ष्णलौहस्य षड्विधत्वम् ।—

खरं सारञ्च हृन्नालं तारावट्टञ्च वाजिरम् ।
काललोहाभिधानञ्च षड्विधं तीक्ष्णमुच्यते ॥ ७४ ॥

अथ खरतीक्ष्णलक्षणम् ।—

परुषं पोगरोन्मुक्तं भङ्गे पारदवच्छवि ।
नमने भङ्गुरं यत्तत् खरलोहमुदाहृतम् ॥ ७५ ॥

अथ सपर्य्याय-पोगरलक्षणम् ।—

अङ्गच्छाया च वङ्गञ्च पोगरस्याभिधात्रयम् ।
चिकुरं भङ्गुरं लोहात् पोगरं तत् परं मतम् ॥ ७६ ॥

अथ सारतीक्ष्णलक्षणम् ।—

वेगभङ्गुरधारं यत् सारलोहं तदीरितम् ।
पोगराभासकं पाण्डुभूमिजं सारमीरितम् ॥ ७७ ॥

---

अशुद्धलौहस्य दोषमाह, अशुद्धेति ।—सुगमम् ॥ ७३ ॥

तीक्ष्णलौहस्य भेदानाह, खरमिति ।—सुगमम् ॥ ७४ ॥

तीक्ष्णभेदखरस्य लक्षणमाह, परुषमिति ।—पोगरं कुञ्चितालकवत् तरङ्गायितं तेन उन्मुक्तं तद्रहितमित्यर्थः ॥ ७५ ॥

खरलक्षणे "पोगरोन्मुक्तम्" इत्युक्तम्, अतः पोगरस्य पर्य्यायादिकमाह, अङ्गच्छायेति ।—विलक्षणं पोगरमपेत्य बोध्यं, तेन अङ्गच्छाया वङ्गं पोगरञ्च इत्येकार्थम् । पोगरस्य स्वरूपलक्षणमाह, चिकुरमिति ।—लोहात् लौहमध्ये इत्यर्थः । अत्र सप्तम्यर्थे पञ्चमीति बोद्धव्यम् ; यत् चिकुरं भङ्गुरं कुञ्चितकुन्तलवद्भङ्गीविशेषः इत्यर्थः ॥ ७६ ॥

सारस्य लक्षणमाह, वेगभङ्गुरधारमिति ।—वेगभङ्गुरधारं वेगेन जवेन प्रबलाघातेन भङ्गुरा भग्नप्रवणा धारा यस्य तादृशम्, अत्यर्थाघातेनैव भङ्गुरधारं, न त्वल्पाघातेनेत्यर्थः ; "वेगभं गुरुधारम्" इति पाठे—वेगेन क्षिप्याकेन अल्पोत्तापेनेत्यर्थः, [illegible]प्रवाहे क्षिप्याके वेगशब्दस्त्रिषु स्मृतः" इति शास्त्रान्तरवचनात् ; भा दीप्तिः;

अथ हृन्नालतीक्ष्णलक्षणम्।—

कृष्णपाण्डुवपुश्चञ्चु बीजतुल्योरु-पोगरम्।
छेदने चातिपरुषं हृन्नालमिति कथ्यते॥ ७८॥

अथ वाजिरतीक्ष्णलक्षणम्।—

पोगरैर्वज्रमङ्काभैः सूक्ष्मरेखैश्च मान्द्रकैः।
निचितं श्यामलाङ्गञ्च वाजिरं तत् प्रकीर्त्त्यते॥ ७९॥

अथ काललोहाख्यतीक्ष्णलक्षणम्।—

नीलकृष्णप्रभं सान्द्रं मसृणं गुरु भासुरम्।
लोहघातेऽप्यभङ्गाग्रधारं कालायसं मतम्॥ ८०॥

अथ खरतीक्ष्णगुणाः।—

रूक्षं स्यात् खरलोहकं समधुरं पाकेऽथ वीर्य्यं हिमं
तिक्ताख्यं कफपित्तकुष्ठजठर-प्लीहामपाण्ड्वर्त्तिनुत्।
सद्यः शूलयकृद्दद्रुक्षयजरा मेहामवातापहं
दीप्तश्चातिरसायनं बलकरं दुर्नामदाहापहम्॥ ८१॥

---

औज्ज्वल्यमित्यर्थः, यस्य तादृशम्, अल्पोत्तापेनैव प्रभासम्पन्नमित्यर्थः; वेगा वेगिनी अत्यर्था भा प्रभा यस्य तादृशमित्यर्थो वा, तथा गुरुधारं स्थूलधारमित्यर्थः। पोगरा-भासकं तरङ्गितकुन्तलच्छायम्। पाण्डुभूमिजं पाण्डुवर्णमृत्तिकाविशिष्टदेश-जातम्॥ ७७॥

हृन्नालस्य लक्षणमाह, कृष्णेति।—कृष्णपाण्डुवपुः कृष्णपाण्डुमिश्रवर्णमित्यर्थः। चञ्चुति।—एरण्डबीजतुल्यं प्रथमपोगरञ्च। छेदने भङ्गे इत्यर्थः॥ ७८॥

वाजिरस्य लक्षणमाह, पोगरैरिति।—हीरकवत् कठिनैरुज्ज्वलैर्वा तथा सूक्ष्मरेखाभिः घनसन्निविष्टैश्च पोगरैः व्याप्तं श्यामदेहञ्च वाजिराख्यतीक्ष्णलौहं ज्ञेयम् इत्यर्थः॥ ७९॥

काललोहलक्षणमाह, नीलेति।—सान्द्रं स्थूलमित्यर्थः। लोहेति।—लौहान्तरेण आघाते कृतेऽपि अभङ्गुरधारविशिष्टम्॥ ८०॥

तीक्ष्णलोहभेदस्य खरलोहस्य गुणमाह, रूक्षमिति।—सुगमम् [illegible]

अथ सारलौहादीनां पञ्चानां गुणः ।—

खरलोहात् परं सर्वमेकैकस्माच्छतोत्तरम् ॥ ८२ ॥

अथ कान्तलौहस्य पञ्चविधत्वम् ।—

भ्रामकं चुम्बकञ्चैव कर्षकं द्रावकं तथा ।
एवं चतुर्विधं कान्तं रोमकान्तञ्च पञ्चमम् ॥ ८३ ॥

अथ पञ्चविधस्य कान्तस्य भेदान्तरनिर्देशः ।—

एक-द्वि-त्रि-चतुष्पञ्च-सर्वतोमुखमेव तत् ।
पीतं कृष्णं तथा रक्तं त्रिवर्णं स्यात् पृथक् पृथक् ॥
क्रमेण देवतास्तत्र ब्रह्मविष्णुमहेश्वराः ॥ ८४ ॥

अथ वर्णभेदेन कान्तस्य कार्यभेदनिर्देशः ।—

स्पर्शवेधि भवेत् पीतं कृष्णं श्रेष्ठं रसायने ।
रक्तवर्णं तथा चापि रसबन्धे प्रशस्यते ॥ ८५ ॥

---

सारादीनां गुणमाह, खरलोहादिति ।—सारादिलौहं खरलोहादुत्तरोत्तरशत गुणाधिकमित्यर्थः ॥ ८२ ॥

कान्तलौहस्य भेदानाह, भ्रामकमिति ।—सुगमम् । राजनिघण्टौ—"स्याद्भ्रामकं तदनु चुम्बकरोमकाख्यं स्याच्छेदकाख्यमिति तच्च चतुर्विधं स्यात्" इत्यनेन यदस्य चातुर्विध्यमुक्तं तत चुम्बककर्षकयोः प्रायस्तुल्यगुणत्वेनाभेदं विगणय्य एकत्वेन गणनादिति मन्तव्यम् । किञ्च द्रावकच्छेदकयोरपि तुल्यार्थत्वात् तत्रोक्तं छेदकमेव अत्र द्रावकं ज्ञेयम् ॥ ८३ ॥

पञ्चविधानां तेषां भेदान्तरमाह, एकेति ।—किञ्चित् एकमुखं किञ्चित द्विमुखमित्यादि । अथवा सर्वतोमुखी प्रतिभा इतिवत् एकमुखादिशब्देन एकत्रिभ-द्विविधचिविधादिकार्य्ये उपयुक्तम् ; यतः अग्रे वक्ष्यति "कनिष्ठं स्यादेकमुखम्" इत्यादि । क्रमेणेति ।—पीतादिवर्णवति कान्तलौहे यथाक्रमं ब्रह्मविष्णुमहेश्वराः अधिष्ठातृदेवताः ज्ञेयाः ॥ ८४ ॥

वर्णभेदेन कार्यभेदमाह, स्पर्शवेधीति ।—स्पर्शवेधि स्पर्शमात्रेणैव वेधकारकं रसेन्द्रस्य वेधाख्यसंस्कारसम्पादकं वा इत्यर्थः । "स्पर्शवेधे" इति पाठे—स्पर्शशान-जनने, सुखिनाशार्थमित्यर्थः । रसबन्धे रसस्य निगडीकरणार्थम् ॥ ८५ ॥

अथ भ्रामकादीनामधममध्यमत्वादिनिर्देशः।—

भ्रामकन्तु कनिष्ठं स्याच्चुम्बकं मध्यमं तथा।
उत्तमं कर्षकञ्चैव द्रावकञ्चोत्तमोत्तमम्॥ ८६॥

अथ भ्रामककान्तलक्षणम्।—

भ्रामयेल्लोहजातन्तु तत् कान्तं भ्रामकं मतम्॥ ८७॥

अथ चुम्बक-कर्षककान्तद्वयलक्षणम्।—

चुम्बयेच्चुम्बकं कान्तं कर्षयेत् कर्षकं तथा॥ ८८॥

अथ द्रावककान्तलक्षणम्।—

साक्षात् यत् द्रावयेल्लोहं तत् कान्तं द्रावकं भवेत्॥८९॥

अथ रोमकान्त-कान्तलक्षणम्।—

तत् रोमकान्तं स्फुटितात् यतो रोमोद्गमो भवेत्॥ ९०॥

अथ एकादिमुखभेदेन कान्तस्याधममध्यमत्वादिनिर्देशः।—

कनिष्ठं स्यादेकमुखं मध्यं द्वित्रिमुखं भवेत्।
चतुष्पञ्चमुखं श्रेष्ठमुत्तमं सर्वतोमुखम्॥ ९१॥

---

कान्तलौहभेदभ्रामकादीनामधममध्यमत्वादिकं निर्दिशति, भ्रामकमिति।—सुगमम्॥ ८६॥

भ्रामकस्य लक्षणमाह, भ्रामयेदिति।—यत् कान्तलौहं सन्निकर्षवशात् लौहान्तर-समूहं विघूर्णयेत् तत् भ्रामकाख्यं ज्ञेयम॥ ८७॥

चुम्बककर्षकयोर्लक्षणे आह, चुम्बयेदिति।—यत् सन्निकर्षवशात् लौहान्तरम् आश्लिष्यति तत् चुम्बकम्; यच्च लौहान्तरम् आकृष्य स्वान्तिकमानयति तत् कर्षकमिति॥ ८८॥

अथ द्रावकस्य लक्षणमाह, साक्षादिति।—यत्तु लौहान्तरं द्रवीकरोति तत् द्रावकाख्यं ज्ञेयम्॥ ८९॥

रोमकान्त-कान्तलक्षणमाह, तदिति।—यच्च भग्ने विदीर्णे वा उद्भिन्नपुलकवत् स्फुटितगात्रं दृश्यते, तत् रोमकान्तं बोध्यम्॥ ९०॥

एकमुखत्वादिभेदेन तेषामपकर्षतामुत्कर्षताञ्चाह, कनिष्ठमिति।—प्राक् भ्रामकस्य कनिष्ठत्वमुक्तम्, अत तु एकमुखस्य कनिष्ठत्वोक्तेः भ्रामकमेव एकमुखं

अथ भ्रामकादीनां कार्यनिर्देश: ।—

भ्रामकं चुम्बकश्चैव व्याधिनाशे प्रशस्यते ।
रसे रसायने चैव कर्षकं द्रावकं हितम् ॥ ९२ ॥

अथ रसकर्मणि कान्तस्य विशेषोपयोगिता ।—

मदोन्मत्तगज: सूत: कान्तमङ्कुशमुच्यते ॥ ९३ ॥

अथ कान्तस्य ग्राह्यवर्ज्यत्वनिर्देश: ।—

चैवं ज्ञात्वा ग्रहीतव्यं तत् प्रयत्नेन धीमता ।
मारुताऽऽतपविक्षिप्तं वर्जयेन्नात्र संशय: ॥ ९४ ॥

अथ कान्तलौहलक्षणम् ।—

पात्रे यस्य प्रसरति जले तैलबिन्दुर्न लिप्तो
हिङ्गुर्गन्धं विसृजति तथा तिक्ततां निम्बकल्क: ।
पाके दुग्धं भवति शिखराकारकं नैति भूमौ
कान्तं लौहं तदिदमुदितं लक्षणोक्तं न चान्यत् ॥ ९५ ॥

अथ कान्तलौहगुणा: ।—

कान्तायोऽतिरसायनोत्तरतरं स्वस्थे चिरायु:प्रदं
स्निग्धं मेहहरं त्रिदोषशमनं शूलाममूलापहम् ।

---

कनिष्ठं ज्ञेयम ; एवं चुम्बकादीनामपि । उत्तमं सर्वतोमुखमित्यत्र उत्तम-शब्देन उत्तमोत्तमं ग्राह्यम् ॥ ९१ ॥

क्रियाविशेषे भ्रामकादीनामुपयोगितामाह, भ्रामकमिति ।—सुगमम् ॥ ९२ ॥

रसबन्धनादिषु कान्तलौहस्योपयोगितां प्रदर्शयति, मदोन्मत्तेति ।—अङ्कुशताडनेन यथा गजो वशीभवति तथा कान्तलौहसंयोगेन रसो बद्धो भवति इत्यर्थ: ॥ ९३ ॥

कीदृशस्थानस्थं कान्तलौहं ग्राह्यं वर्ज्यं वा तदाह, चैवमिति ।—मारुतातपविक्षिप्तं, चैवमिति शेष: ॥ ९४ ॥

कान्तलौहस्य लक्षणमाह, पात्रे इति ।—यस्य पात्रे जले यन्निर्मितपात्रस्थे जले, न प्रसरति न विसृमरो भवति, इदं हि तैलधर्मं यत्—जले निक्षेपमात्रेणैव तत् प्रसृतं भवति, किन्तु कान्तपात्रस्थे जले निक्षिप्तं तत् स्थिरमेव तिष्ठतीत्यर्थ: । लिप्त इत्यस्य हिङ्गुरित्यनेनान्वय:, तत्पात्रे लिप्तो हिङ्गु: निजगन्धं त्यजतीत्यर्थ: ॥ ९५ ॥

गुल्मप्लीहयकृत्-क्षयामयहरं पाण्डूदरव्याधिनुत्
तिक्तोष्णं हिमवीर्य्यकं किमपरं योगेन सर्वार्त्तिनुत्॥ ९६॥

अथ लौहस्य शोधनमारणयोरावश्यकता।—

सम्यगौषधकल्पानां लौहकल्पः प्रशस्यते।
तस्मात् सर्वप्रयत्नेन शुद्धलौहं विमारयेत्॥ ९७॥

अथ मारणार्थं लौहस्य परिमाणनिर्देशः।—

नायः पचेत् पञ्चपलादर्वागूर्द्ध्वं त्रयोदशात्॥ ९८॥

अथ लौहमारणे मन्त्रम्।

आदौ मन्त्रस्ततः कर्म कर्त्तव्यं मन्त्र उच्यते॥ ९९॥
"ओम् अमृतोद्भवाय स्वाहा।"

अनेन मन्त्रेण लौहमारणम्।

---

गुणमाह, कान्ताय इति।—अतिरसायनोत्तरतरं रसायने अतिश्रेष्ठतरमित्यर्थः। स्वस्थे इति।—व्याधिविवर्जितेन देहिना सेवितं सत् दीर्घायुष्पदं भवति। "स्वस्थे" इत्यत्र "स्वच्छम्" इति पाठे—स्वच्छं मलादिरहितं दोषशून्यमित्यर्थः॥ ९६॥

लौहानां शोधनमारणयोरावश्यकतामाह, सम्यगिति।—औषधकल्पानाम् औषधान्तरकल्पनानां मध्ये सम्यक् यथाविधि लौहकल्पः लौहकल्पना लौहप्रयोग इति यावत्, प्रशस्यते; यद्वा—औषधकल्पानां त्रिफलाकल्प-शाल्मलीकल्पप्रभृतीनां मध्ये लौहकल्प एव प्रशस्तः॥ ९७॥

मारणार्थग्राह्यलौहस्य परिमाणमाह, नाय इति।—पञ्चपलात् अर्वाक् विंशतिकर्षात् न्यूनमित्यर्थः। ऊर्द्ध्वं त्रयोदशात् त्रयोदशपलातिरिक्तमित्यर्थः॥ ९८॥

मारणार्हलौहे मन्त्रेणाभिमन्त्रणस्यावश्यकतामाह, आदाविति।—कर्म मारणकर्मेत्यर्थः। "ओम् अमृतोद्भवाय स्वाहा" इति मन्त्रं पठित्वा सम्मर्द्य पश्चात् पुटो देयः। रसरत्नाकरे तु—"ओम् अमृतोद्भवोद्भवाय स्वाहा" इति पाठो दृश्यते। तत्र चास्य बलिदानमन्त्रोऽप्युक्तः, तद्यथा—"ओम् अमृतोद्भवाय हूं फट् स्वाहा। ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरु सुरु स्वाहा यक्षविद्याबलाय स्वाहा" इति। तन्त्रान्तरे चास्य "शाणघर्षणम् उद्वर्त्तनम् अम्लभावनम् आतपशोषः निषेकः मारणं दलनं क्षालनं सूर्य्यपाकः स्थालीपाकः चूर्णनं पुटपाकः पाकनिष्पत्तिश्च" इति त्रयोदशविधः संस्कार उक्तः॥ ९९॥

अथ लौहवर्गाणामुत्तरोत्तरगुणाधिक्यम् ।—

लक्षोत्तरगुणं सर्वं लौहं स्यादुत्तरोत्तरम् ।
कान्तं कोटिगुणं तत्र तदप्येवं गुणोत्तरम् ॥ १०० ॥

अथ सर्वलौहानां सामान्यशोधनम् ।—

शश-च्तजसंलिप्तं त्रिवारं परितापितम् ।
मुण्डादि सकलं लौहं सर्वदोषान् विमुञ्चति ॥ १०१ ॥

अथ लौहानां गिरिजदोषशोधनम् ।—

क्वाथ्यमष्टगुणे तोये त्रिफला-षोडशं पलम् ।
तत्क्वाथे पादशेषे तु लौहस्य पलपञ्चकम् ॥ १०२ ॥
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ।
एवं प्रलीयते दोषो गिरिजो लौहसम्भवः ॥ १०३ ॥

लौहानामुत्तरोत्तरगुणाधिक्यमाह, लक्षोत्तरगुणमिति ।—मुण्डादिसर्वप्रकारलौहमुत्तरोत्तरं लक्षगुणाधिकं, तत्र च कान्तलौहं कोटिगुणं ज्ञेयं, तदपि कोटिगुणमपि तत कान्तम् एवं पूर्वोक्तविधानेन आदौ मलेभ्योऽभिनिर्णिक्तं पश्चात् शोधनादिकर्मणा संस्कृतं सत् कोटिगुणादपि अधिकगुणवत् भवेत् । रसरत्नाकरेऽपि उक्तं—"किट्टात् शतगुणं मुण्डं मुण्डात् तीक्ष्णं शताधिकम् । तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात् कुरुते गुणम् ॥ तस्मात् कान्तं सदा सेव्यं जरामृत्युहरं परम् ॥" इति । यत्तु रसेन्द्रचिन्तामणौ "सामान्यात् द्विगुणं क्रौञ्चं कालिङ्गोऽष्टगुणस्ततः । कलिर्दशगुणं ( शतगुणं ) भद्रं भद्रात् वज्रं सहस्रधा ॥ वज्रात् शतगुणं पाण्डि निरङ्गं दशभिर्गुणैः । तस्मात् सहस्रगुणितमथः कान्तं गुणाधिकम् ॥" ( ततः कोटिसहस्रैर्वा कान्तलौहं महागुणम् ॥" ) इत्यनेन क्रौञ्च-कालिङ्ग-कलि-भद्र-वज्र पाण्डि-निरङ्ग-कान्तभेदेन लौहस्य अष्टविधत्वमुक्तं तत् मुण्डादीनां प्रकारभेदतयैव समाधेयं, लौहजातीयानां बहुधात्वात् । अत्र तु प्रयोगबाहुल्यदर्शनात् गुणाधिकत्वाच्च मुण्डादित्रिविधमेवोक्तम् इति ॥ १०० ॥

सर्वलौहानां सामान्यशोधनमाह, शशेति ।—शशरक्तेन लौहपत्रम् आलिप्य वारत्रयम् अग्नौ सन्तापयेत् ॥ १०१ ॥

सर्वलौहानां गिरिजदोषशोधनमाह, क्वाथ्यमिति ।—अष्टगुणे तोये इति त्रिफलाषोडशपलापेक्षया बोध्यम् । गिरिजो दोषः पर्वतदोषः ; यदुक्तं भावप्रकाशे धात्वादि-

मतान्तरम्।—

सामुद्रलवणोपेतं तप्तं निर्वापितं खलु।
त्रिफलाक्कथिते नूनं गिरिदोषमयस्त्यजेत्॥ १०४॥

मतान्तरम्।—

चिञ्चाफल-जलक्काथादयो दोषमुदस्यति॥ १०५॥

मतान्तरे शोधनं मारणञ्च।—

यद्वा फलत्रयोपेतं गोमूत्रे क्कथितं चणम्।
रेचितं घृतसंयुक्तं चिप्त्वाऽयः खर्परे पचेत्॥ १०६॥
चालयेल्लोहदण्डेन यावत् चिप्तं तृणं दहेत्।
पिष्ट्वा पिष्ट्वा पचेदेवं पञ्चवारमतः परम्॥ १०७॥
धात्रीफलरसैर्यद्वा त्रिफलाक्कथितोदकैः।
पुटेल्लोहं चतुर्वारं भवेद्वारितरं खलु॥ १०८॥

---

वर्गे—"गुरुता दृढ़तोत्क्लेदः कश्मलं दाहकारिता। अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु॥" इति॥ १०२।१०३॥

मतान्तरमाह, सामुद्रेति।—सामुद्रलवणं "करकच" इति ख्यातम्। सामुद्रलवणं जलेन गोलयित्वा तेन लौहपत्रम् आलिप्य तप्तं कृत्वा च त्रिफलाक्काथे सप्तधा निर्वापयेत् इति॥ १०४॥

मतान्तरमाह, चिञ्चेति।—चिञ्चाफलं तिन्तिड़ीफलं जलं बालकं तयोः क्काथात् क्काथे निक्षेपात् इति हेत्वर्थे पञ्चमी ल्यब्लोपे पञ्चमी वा, क्काथे निक्षेप प्राप्य इत्यर्थः; यद्वा—चिञ्चा तिन्तिड़ी, फल त्रिफला। "जल" इत्यत्र "दल" इति पाठे—दलं तेजपत्रम्॥ १०५॥

मतान्तरे शोधनं तथा मारणञ्चाह, यद्वेति।—रेचितं स्रावितम्। पूर्वोक्तक्रममनुसृत्य षोडशपलत्रिफलासंयुक्तं पञ्चपललौहचूर्णम् अष्टगुणे गोमूत्रे निःक्काथ्य अर्द्धावशेषं विस्राव्य समघृतेन पिष्ट्वा खर्परे लौहदर्व्या विघट्टयन् तावत् पचेत् यावत् लौहोपरि चिप्तं तृणं न भस्मीभवेत्; एवं पञ्चवारं कार्य्यं, ततः आमलकीस्वरसेन त्रिफलाक्काथेन वा पिष्ट्वा पिष्ट्वा चतुष्पुटी देयः, तेन वारितरं भस्म भवति॥ १०६—१०८॥

मतान्तरे मारणम्।—

स्नेहाक्तं लोहरजो मूत्रे स्वरसेऽपि रात्रिधात्रीणाम्।
पृथगेवं सप्तकृत्वो भर्जितमखिलामये योज्यम्॥ १०९॥

अथ तीक्ष्णलोहस्य मारणम्।—

तीक्ष्णलोहस्य पत्राणि निर्दलानि दृढेऽनले।
ध्मात्वा निपेज्जले सद्यः पाषाणोलूखलोदरे॥ ११०॥
कण्डयेद्दृढनिर्घातैः स्थूलया लोहधारया।
तन्मध्यात् स्थूलखण्डानि कृत्वा मल्लद्वयान्तरे॥ १११॥
ध्मात्वा निम्ना जले सम्यक् पूर्ववत् कण्डयेत् खलु।
तच्चूर्णं सूतगन्धाभ्यां पुटेद्विंशतिवारकम्॥ ११२॥
पुटे पुटे विधातव्यं पेषणं दृढवत्तरम्।
एवं भस्मीकृतं लोहं तत्तद्रोगेषु योजयेत्॥ ११३॥

अथ कान्तलोहस्य रसनिभृकगुणाः।—

कान्तायः कमनीयकान्तिजननं पाण्डामयोन्मूलनं
यक्ष्मव्याधिनिबर्हणं गरहरं दोषत्रयोन्मूलनम्।

---

मारणे मतान्तरमाह, स्नेहाक्तमिति।—स्नेहाक्तं घृतपिष्टम्। मूत्रे गोमूत्रे। रात्रिः हरिद्रा॥ १०९॥

तीक्ष्णलोहस्य मारणमाह, तीक्ष्णलोहस्येति।—लोहधारया लोहमपि धारयति समापयति निःशेषेण चूर्णयति या तया लोहदण्डेनेत्यर्थः। मल्लद्वयान्तरे पात्रद्वयमध्ये। अत्रायं क्रमः,—तीक्ष्णलोहं दलरहितं सूक्ष्मपत्रं कृत्वा तीव्राग्नौ भस्त्रया ध्मात्वा जले निक्षिपेत्, निक्षेपानन्तरञ्च सद्य एव उद्धृत्य पाषाणोलूखले स्थूललोहदण्डेन दृढमाहत्य चूर्णीकुर्य्यात्; तत्र यानि स्थूललोहपत्राणि न चूर्णीभवन्ति तानि शरावद्वयमध्ये पुनः कृत्वा ध्मापयित्वा च पूर्ववत् जले निक्षिपेत्, तत्क्षणमेव उद्धृत्य चूर्णयेच्च, एवं यावत् सम्यक्तया चूर्णीभूतानि न भवन्ति तावत् कुर्य्यात्, ततः चूर्णीभूतानि तानि समसूतगन्धाभ्यां मर्दयित्वा विंशतिवारं पुटेत् प्रतिपुटं दृढतरं पेषयेच्च इति॥ ११०—११३॥

नानाकुष्ठनिवर्हणं बलकरं हृद्यं वयःस्तम्भनं
सर्वव्याधिहरं रसायनवरं भौमामृतं नापरम्॥ ११४ ॥

अथ सर्वलौहानां मारणे मतान्तरम्।—

हिङ्गुलस्य पलान् पञ्च नारीस्तन्येन पेषयेत्।
तेन लोहस्य पत्राणि लेपयेत् पलपञ्चकम्॥ ११५ ॥
रुद्ध्वा गजपुटे पच्यात् कषायैस्त्रैफलैः पुनः।
जम्बीरैरारनालैर्वा विंशत्यंशेन हिङ्गुलम्॥ ११६ ॥
पिष्ट्वा रुद्ध्वा पचेल्लोहं तद्द्रवैः पाचयेत् पुनः।
चत्वारिंशत्पुटैरेवं कान्तं तीक्ष्णञ्च मुण्डकम्॥
म्रियते नात्र सन्देहो दत्त्वा दत्त्वैव हिङ्गुलम्॥ ११७ ॥

अथ तीक्ष्णलौहस्य विशेषमारणम्।—

अथ पूर्वोदितं तीक्ष्णं वसुभल्लकवासयोः।
पुटितं पत्रतोयेन त्रिंशद्वाराणि यत्नतः॥
शोधितं जायते भस्म कृतसिन्दूरविभ्रमम्॥ ११८ ॥

---

रसेन्द्रसिन्धूक्तं कान्तलौहस्य गुणमाह, कान्ताय इति।—भौमामृतं नापरं कान्तलौहमेव पार्थिवामृतं नापरं किञ्चित्, तस्य श्रेष्ठरसायनत्वात् वयःस्तम्भकत्वादिगुणवत्त्वाच्च अमृतत्वेन निर्देशो बोध्यः॥ ११४ ॥

मतान्तरे सर्वलौहाना मारणमाह, हिङ्गुलस्येति।—विंशत्यंशेन हिङ्गुल लौहापेक्षया विंशतिभागैकभाग, कर्षमितमित्यर्थः। आदौ पञ्चपलमितं हिङ्गुलं गृहीत्वा स्त्रीस्तन्येन सम्पिष्य तेन पलपञ्चमितानि तनुलौहपत्राणि लेपयेत् ततो मूषामध्ये संस्थाप्य गजपुटे पचेत्; द्वितीयदिने कर्षमितेन हिङ्गुलेन सह तानि पत्राणि त्रिफलाक्वाथेन जम्बीररसेन आरनालेन वा पिष्ट्वा पूर्ववत गजपुटे पचेत। ततः पुनः पूर्वोक्तद्रवैः प्रागुल्लिखितमानं हिङ्गुलं पिष्ट्वा तेन तान्येव लौहपत्राणि लिप्त्वा गजपुटे पचेत्, एव चत्वारिंशद्वारं कुर्यात्, प्रतिपुटे एव हिङ्गुलं दद्यात् इति॥ ११५—११७ ॥

तीक्ष्णलौहस्य विशेषमारणमाह, अथेति।—वसुभल्लकं श्वेतपुनर्नवा। पूर्वोक्त-

मतान्तरम् ।—

यद्वा तीक्ष्णादिलोहोत्थं रजश्च त्रिफलाजलैः ।
पिष्ट्वा दत्त्वौदनं किञ्चिच्चक्रिकां प्रविधाय च ॥ ११९ ॥
शोषयित्वाऽतियत्नेन प्रपचेत् पञ्चभिः पुटैः ।
रक्तवर्णं हि तद्भस्म योजनीयं यथायथम् ॥ १२० ॥

अथ मतान्तरे सर्वलोहानां मारणम् ।—

मत्स्याक्षीगन्धबाह्लीकैर्लकुचद्रवपेषितैः ।
विलिप्य सकलं लोहं मत्स्याक्षीकल्कपेषितम् ॥ १२१ ॥
भस्त्राभ्यां सुदृढं ध्मात्वा त्रिशूलीनिर्गमावधि ।
अथोद्धृत्य क्षिपेत् क्वाथे त्रिफलागोजलात्मके ॥ १२२
तस्मादाहृत्य सन्ताड्य मृतमादाय लोहकम् ।
पुनश्च पूर्ववद्ध्मात्वा मारयेदखिलायसम् ॥ १२३ ॥
खण्डयित्वा ततो गन्ध-गुडत्रिफलया सह ।
पुटैस्त्रिंशतिवाराणि निरुत्थं भस्म जायते ॥ १२४ ॥

क्रमशः चूर्णीकृतं तीक्ष्णलोहं श्वेतपुनर्नवायाः तथा वासायाश्च स्वरसेन पिष्ट्वा विंशत्पुटं दद्यात्, एवं तस्य सिन्दूरवत् रक्तवर्णं भस्म जायते ॥ ११८ ॥

मतान्तरमाह, यद्वेति ।—ओदनं पिष्टतण्डुलम् अन्नं वा । किञ्चित् चतुर्थांशम् ; लोहचूर्णं चतुर्थांशेन पिष्टतण्डुलेन अन्नेन वा सह त्रिफलाक्वाथेन पिष्ट्वा चक्रिका कार्या, ततः शोषयित्वा पञ्चपुटो देयः ॥ ११९।१२० ॥

सर्वलोहमारणे प्रकारान्तरमाह, मत्स्याक्षीति ।—मत्स्याक्षी शालिञ्चः, लोहमारकत्वात्, गन्धः गन्धकः, बाह्लीकं कुङ्कुमं हिङ्गु वा । त्रिशूली त्रिशूलवत् चाटकात्रयमित्यर्थः । लकुचद्रवेण मत्स्याक्ष्यादिकं पिष्ट्वा तेन कल्केन सर्वविध लोहमालिप्य संशोष्य च पुनरपि केवलमत्स्याक्षीकल्केन पिष्ट्वा भस्त्राद्वयेन उभयतः तीव्राग्निना सुदृढं धमेत् यावत् उभयपार्श्वं विदार्य चाटका निर्गत्य त्रिशूलवत् परिदृश्यमानं न भवेत्, ततः त्रिफलाक्वाथे गोमूत्रे च निर्वाप्य पाषाणोदूखले स्थूललोहदण्डेन तावत् ताडयेत् यावत् चूर्णं निर्गच्छति, यदा च चूर्णनिर्गमरहितो भवेत् तदा पुनश्च पूर्वक्रमात् चूर्णं गृह्णीयात्, एवं यावत्

मतान्तरम्।—

समगन्धमयश्चूर्णं कुमारीवारिमर्दितम्।
पुटीकृतं कियत्कालमवश्यं म्रियते ह्ययः॥ १२५॥

मतान्तरम्।—

जम्बीर-रससंयुक्ते दरदे तप्तमायसम्।
बहुवारं विनिक्षिप्तं म्रियते नात्र संशयः॥ १२६॥

मतान्तरम्।—

गोमूत्रैस्त्रिफला क्वाथ्या तत्कषायेण भावयेत्।
त्रिःसप्ताहं प्रयत्नेन दिनैकं मर्दयेत् पुनः॥ १२७॥
कृत्वा गजपुटे पश्चाद्दिनं क्वाथेन मर्दयेत्।
दिवा मर्द्य पुटेद्रात्रावेकविंशद्दिनावधि॥
एकविंशत्पुटैश्चैव म्रियते त्रिविधं ह्ययः॥ १२८॥

अथ तीक्ष्णलौहद्रावणम्।—

त्रिःसप्तकृत्वो गोमूत्रे शाल्मलीभस्म भावितम्।
शोषयेत्तस्य वापेन तीक्ष्णं मूषागतं द्रवेत्॥ १२९॥

मध्यक्रया चूर्णं न भवति तावत् कुर्यात्. ततस्तच्चूर्णं गन्धकगुडत्रिफलाक्वाथेन पिष्ट्वा त्रिंशद्वारं पुटेत, प्रतिपुटे एव गन्धकादिकं दद्यात॥१२१—१२४॥

मारणान्तरमाह, समगन्धमिति।—सुगमम्॥ १२५॥

प्रकारान्तरमाह, जम्बीरेति।—निमज्जनयोग्यजम्बीररसे किञ्चित् हिङ्गुलं सम्मिश्य तत्र सन्तप्तलौहपत्रं बहुवारं विनिक्षिपेत. तेन लौहं म्रियेत॥ १२६॥

अपरमतमाह, गोमूत्रैरिति।—"भाव्यद्रव्यसमं क्वाथ्यम्" इत्यादिपरिभाषया लौहतुल्या त्रिफला क्वथनीया, ततश्च एकविंशतिदिनानि तेन क्वाथेन लौहं भावयित्वा अनन्तरमेकदिनं तेनैव क्वाथेन सम्मर्द्य चक्रिकां विधाय रात्रौ गजपुटे पचेत. अपरदिने पुनश्च पूर्वोक्तक्वाथेनैकदिनं मर्दयित्वा पूर्ववत् पुटेत्, एवमेकविंशतिदिनानि कुर्यादिति॥ १२७।१२८॥

तीक्ष्णलौहस्य द्रावणमाह, त्रिःसप्तेति।—त्रिःसप्तकृत्वः एकविंशतिवारान्। शाल्मलीभस्म पीतपुष्पघोषालताक्षारः। वापेन प्रक्षेपेण। गोमूत्रे एकविंशतिवारं

मतान्तरे द्रावणम्।—

सुरदालिभस्म गलितं त्रिःसप्तकृत्वोऽथ गोजले शुष्कम्।
तापेन सलिलसदृशं करोति मूषागतं तीक्ष्णम्॥ १३०॥

अथ लौहप्रयोगः।—

एतत् स्यादपुनर्भवं हि भसितं लोहस्य दिव्यामृतं
सम्यक् सिद्धरसायनं त्रिकटुकोवेल्लाज्यमध्वन्वितम्।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्यप्रदं
दिष्टं श्रीगिरिशेन कालयवनोद्भूत्यै पुरा तत्पितुः॥ १३१॥

अथ कान्तलौहस्य रामराजीयप्रोक्तशोधनम्।—

यत्पात्राभ्युषिते तोये तैलबिन्दुर्न सर्पति।
तारेणाऽऽवर्त्तते यत्तत् कान्तलोहं तनूकृतम्॥ १३२॥
अयसामुत्तमं सिञ्चेत्तप्तं तप्तं वरारसे।
एवं शुद्धानि लोहानि पिष्टान्यम्लेन केनचित्॥ १३३॥
मृतसूतस्य पादेन प्रलिप्तानि पुटानले।
पचेत्तुल्येन वा ताप्य-गन्धाश्म-हरतेजसा॥ १३४॥

---

भावितं शाल्मलीभस्म आतपे शोषयेत्, ततो मूषामध्ये तद्भस्म संस्थाप्य तन्मध्ये तीक्ष्णलौहं स्थापयेत्, तेन च तत् द्रवीभवति। अथवा घोषाक्षारोदके भावितं लौहं गोमूत्रे निक्षिप्य रौद्रयन्त्रे शोषयेत्, एवम् एकविंशतिवारं कुर्यात्; ततस्तस्मिन् एव क्षारे मूषास्थे लौहं प्रक्षिपेत्॥ १२९॥

प्रकारान्तरेण द्रावणमाह, सुरदालीति।—सुरदाली देवदाली, हस्तिघोषक इति ख्यातः, तस्या भस्म। गलितं परिस्रुतम्। गोमूत्रे एकविंशतिवारं परिस्रुतं हस्तिघोषकक्षारं शुष्कं कृत्वा तत्क्षारमध्ये तीक्ष्णलौहं निक्षिप्य मूषायां निरुध्य च अग्निसन्तापेन द्रवीकुर्यादिति॥ १३०॥

लौहस्य प्रयोगविधिमाह, एतदिति।—एतत् पूर्वोक्तरूपम्। अपुनर्भवं निरुत्थमित्यर्थः। भसितं लोहस्य लौहभस्म। दिव्यामृतं स्वर्गीयामृतवत् गुणविशिष्टमित्यर्थः। अन्वितं मिश्रितम्। त्रिकटुकादिकम् अनुरूपमात्रया ग्राह्यम्। निष्कमितम् अर्द्धतोलकपरिमाणम्। दिष्टम् उपदिष्टम्। कालयवनोद्भूत्यै कालयवनाख्यस्य द्वापरीयासुरराजस्य जन्मनिमित्तम्। तत्पितुः कालयवनपितुः॥ १३१॥

तप्तं क्षाराम्लसंलिप्तं अश्वरक्ते निधापितम् ।
कान्तलोहं भवेच्छुद्धं सर्वदोषविवर्जितम् ॥ १२५ ॥

अथ सर्वविधलोहानां सामान्यमारणम् ।—

शुद्धसूतं द्विधा गन्धं खल्वेन कृतकज्जलम् ।
द्वयोः समं लोहचूर्णं मर्दयेत् कन्यकाद्रवैः ॥ १२६ ॥
यामद्वयात् समुद्धृत्य तद्गोलं ताम्रपात्रके ।
आच्छाद्यैरण्डपत्रैश्च यामार्द्धेऽत्युष्णतां व्रजेत् ॥ १२७ ॥
धान्यराशौ न्यसेत् पश्चात्त्रिदिनान्ते समुद्धरेत् ।
सम्पेष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ॥
कान्तं तीक्ष्णञ्च मुण्डञ्च निरुत्थं जायते मृतम् ॥ १२८ ॥
स्वर्णादीन् मारयेदेवं चूर्णं कृत्वा च लोहवत् ।
सिद्धयोगो ह्ययं ख्यातः सिद्धानां सुमुखागतः ॥ १२९ ॥
अनुभूतं मया सत्यं सर्वरोगजराऽपहम् ।
त्रिफलामधुसंयुक्तं सर्वरोगेषु योजयेत् ॥ १४० ॥

सुलक्षणं कान्तलौहस्य विशेषशोधनमाह, यदिति ।—यस्य यस्मिन् वा पात्रे अभ्युषिते स्थापिते तोये तैलबिन्दुः, प्रक्षिप्तः सन्निति शेषः, न सर्पति, यस्य लौहं तारेण रौप्येण सह आवर्त्तते आवर्त्तितं मिश्रितं सत् तिष्ठति, अयसामुत्तमं तत् कान्तलौहं तनूकृतं सूक्ष्मपत्रीकृतं तप्तं तप्तं सन्ताप्य सन्ताप्य वरारसे त्रिफलाक्वाथे सिञ्चेत् इत्येवं योजना । एवं संशोधितं तत् जम्बीररसमालादीनामम्लानां केनचिद्रसेन पिष्टा लौहापेक्षया पादमितभस्मसूतेन संलिप्य, लौहतुल्येन मिलितस्वर्णमाक्षिक-गन्धकपारदेन संलिप्य वा पुटाग्नौ पचेत्, ततः टङ्कणेन केनचित् अम्लरसेन च संलिप्य अश्वरक्ते सप्तदिनं निधाय अनन्तरं प्रक्षाल्य गृह्णीयादिति ॥ १२२—१२५ ॥

सर्वविधलोहानां सामान्यमारणमाह, शुद्धसूतमिति ।—यामद्वयात् यामद्वयादूर्द्धम् । ताम्रपात्रे, संस्थाप्य इति शेषः । "ताम्रपात्रके" इत्यत्र "कांस्यपात्रके" इति पाठान्तरम् । यामार्द्धेऽत्युष्णतां व्रजेत् यामार्द्धं यावत् पुटं दद्यादित्यर्थः । "आच्छाद्य" इत्यादौ "घर्मे धृत्वोरुबूकस्य" इत्यादिरसेन्द्रचिन्तामणिपाठे—घर्मे इत्यस्य अग्निसन्तापे इत्यर्थः कार्य्यः ; रौद्रसन्तापे इत्यर्थे कृते तु अग्निसम्पर्काभावेन कज्जलीसम्मिश्रणजनितगुरुत्वसद्भावात्

अथ लौहानां रामराजीयोक्तगुणाः ।—

लौहं जन्तुविकारपाण्डुपवन-क्षीणत्वपित्तामय-
स्थौल्यार्शोग्रहणीज्वरार्त्ति-कफजिच्छोफप्रमेहप्रणुत् ।
गुल्मप्लीहविषापहं बलकरं कुष्ठाग्निमान्द्यप्रणुत्
सौख्यालम्बि रसायनं मृतिहरं कान्तादिकं किट्टवत् ॥१४१॥

मृतानि लौहानि रसीभवन्ति निघ्नन्ति युक्तानि महामयांश्च ।
अभ्यासयोगाद्दृढदेहसिद्धिं कुर्वन्ति रुग्जन्मजराविनाशम् ॥१४२॥

---

वाचितरत्वासम्भवादिति । धान्यराशाविति ।—धान्यराशौ स्थापनमपि एरण्डपत्रेणाच्छाद्यैव कार्य्यम् । मया वाग्भटेनेत्यर्थः । प्रयोगविधिमाह,—त्रिफलेति । लौहमारणप्रसङ्गेन एतद्ग्रन्थानुक्तं पतञ्जल्यादिभिर्लौहार्वाङ्नयोक्तं सम्यक्पाकादिलक्षणमत्र प्रदर्श्यते ; तथा च पतञ्जलिः,—"तावल्लौहं पचेद्वैद्यो यावत् वस्त्रेण गालितम् । स मृदं जायते व्यक्तं न निःसरति सन्धिभिः ॥" अन्यच्च—"अङ्गुलिभ्यां दृढं घृष्टं यदा चूर्णत्वमागतम् । तदा सिद्धं विजानीयाल्लौहं लौहविदां वरः ॥ अञ्जनाभं घनं स्निग्धं श्लक्ष्णमूलमलेपनम् । अच्छिन्नमम्भसि क्षिप्तं सम्यक्पक्वस्य लक्षणम् ॥ मन्दमाहुरथो लौहमलस्याखिललक्षणम् । अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम् ॥" इति । अमोघतन्त्रे चोक्तं—"पाकास्तु त्रिविधाः प्रोक्ता मृदुमध्यमतीक्ष्णकाः । त्रैविध्यात् सर्वधातूनां पित्तानिलकफात्मनाम् ॥ दर्व्यां मा स्निह्यते यत्तत् स्वैरं स्खलति वा न वा । मृदुपाकं विजानीयात् पित्ते तद्वीक्ष्य योजयेत् ॥ सितापुञ्जोपमं यत्तु मूषिकोत्कारसन्निभम् । तदयः खरपाकं स्यात् श्लेष्मण्येव प्रकीर्त्तितम् ॥ एकैकगुणयोगित्वान्न तदिच्छन्ति तद्विदः । सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम् ॥ गुडादिः प्रविशेद्यत्र तत्र पाकोऽस्य मुद्रया ॥" इति ॥ १३६—१४० ॥

मृतलौहस्य गुणमाह, लौहमिति ।—जन्तुविकारः क्रिमिरोगः । पवनक्षीणत्वं वातक्षयः, पवनः वातविकृतिः क्षीणत्वं कार्श्यमिति वा । सौख्यालम्बि सौख्यम् आलम्बते दधाति यत् तत् सुखदायकमित्यर्थः । मृतिहरम् अकालमृत्युनाशनं कालमृत्योर्दुर्हरणीयत्वात । किट्टवत् सकिट्टं मुण्डतीक्ष्णकान्तलौहानि मण्डूरञ्चेत्यर्थः ॥ १४१ ॥

रामराजीयोक्तगुणमाह, मृतानीति ।—अरसाः रसाः भवन्ति इति रसीभवन्ति रसतुल्यगुणवन्ति भवन्तीत्यर्थः ॥ १४२ ॥

अथ उत्तमकान्तलोहस्य लक्षणम्।—

पङ्कजम्बूनिभच्छायं कान्तलोहं तदुत्तमम्॥ १४३॥

अथ कान्तलोहस्य विशेषमारणम्।—

मुरदालिभवं भस्म नरमूत्रेण गालितम्।
त्रिःसप्तवारं तत्क्षार-वापात् कान्तहृतिर्भवेत्॥ १४४॥

अथाष्टलोहानां द्रावणम्।—

गन्धकं कान्तपाषाणं चूर्णयित्वा समं समम्।
द्रुते लौहे प्रतीवापो देयो लोहाष्टकं द्रवेत्॥ १४५॥

मतान्तरम्।—

देवदाल्या द्रवैर्भाव्यं गन्धकं दिनसप्तकम्।
तेन प्रवापमात्रेण लोहं तिष्ठति सूतवत्॥ १४६॥

अथ मण्डूरः।—

अथ मण्डूरशोधनम्।—

अक्षाङ्गारैर्धमेत् किट्टं लोहजं तद्गवां जलैः।
सेचयेत्तप्तपात्रान्तः सप्तवारं पुनः पुनः॥
मण्डूरोऽयं समाख्यातश्चूर्णं श्लक्ष्णं प्रयोजयेत्॥ १४७॥

वर्णभेदेन प्रशस्तकान्तलोहस्य लक्षणमाह, पङ्केति।—सुगमम्॥ १४३॥

कान्तलोहस्य विशेषमारणमाह, मुरदालिभवमिति।—नरमूत्रेण एकविंशतिवारं परिस्रुते इक्षिघोषकक्षारोदके प्रक्षिप्य कियन्ति दिनानि स्थापनात् कान्तलौह मृतं भवेत्। "हृतिः" इत्यत्र "द्रुतिः" इति पाठे—कान्तस्य द्रुतिः द्रावणं जलवत् तारल्यमित्यर्थो बोध्यः॥ १४४॥

अष्टविधलोहानां द्रावणमाह, गन्धकमिति।—कान्तपाषाणं "चुम्बक" इति ख्यातः प्रस्तरविशेषः। स्वर्णाद्यष्टविधलोहानां यत्किञ्चिल्लोह द्रवीकृत्य तत्र प्रत्येकं लोहपरिमितं गन्धकचूर्णं कान्तपाषाणचूर्णञ्च प्रक्षिपेत्, एवञ्च सर्वविधलोहं द्रवीभूय तिष्ठति; अथवा—लोहमिति प्रसिद्धं लोहं द्रवीकृत्य तत्र उक्तचूर्णद्वयं प्रक्षिप्य स्वर्णाद्यन्यतमलोहं प्रक्षिपेत्, एवञ्च तत् द्रवीभूय एव तिष्ठति॥ १४५॥

द्रावणान्तरमाह, देवदाल्या इति।—तेन प्रवापमात्रेण तद्गन्धकचूर्णप्रक्षेपमात्रेणैव। सूतवत् पारदवत् तरलमेव इत्यर्थः॥ १४६॥

मतान्तरम् ।—

गोमूत्रैस्त्रिफला क्वाथ्या तत्क्वाथे सेचयेच्छनैः ।
लोहकिट्टं सुसन्तप्तं यावच्छीर्य्यति तत् स्वयम् ॥
तच्चूर्णं जायते पेष्यं मण्डूराख्यं प्रयोजयेत् ॥ १४८ ॥

अथ लौहमण्डूरयोः तुल्यगुणत्वनिर्देशः ।—

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात् सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ १४९ ॥

अथ मण्डूरस्य लौहानाञ्च उत्तरोत्तरगुणाधिक्यम् ।—

किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शतोन्मितम् ।
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात् कुरुते गुणान् ॥
तस्मात् कान्तं सदा सेव्यं जरामृत्युहरं नृणाम् ॥ १५० ॥

---

किट्टस्य लोहगणत्वात् लौहमलत्वाच्च लौहशोधनमारणप्रकरण एव तस्यापि शोधनादिकमाह, अक्षाङ्गारैरिति ।—विभीतककाष्ठाग्नौ मण्डूरं भस्त्रया आध्माप्य विभीतककाष्ठमयपात्राभ्यन्तरे स्थापिते गोमूत्रे सिञ्चेत्, एवं सप्तवारेण मण्डूरः शुध्यति, ततः श्लक्ष्णं चूर्णीकृत्य कार्य्येषु नियोजयेत् इति ॥ १४७ ॥

मतान्तरमाह, गोमूत्रैरिति ।—क्वाथश्चात्र मण्डूरापेक्षया द्विगुणो ग्राह्यः ॥१४८॥

लौहमण्डूरयोः तुल्यगुणशालित्वं प्रदर्श्य मण्डूरस्य प्रयोगार्हतामाह, ये इति ।—अत्र मुण्डशब्दः तीक्ष्णकान्तयोरुपलक्षणं, यतः यल्लौहं यद्गुणं तत्किट्टमण्डूरोऽपि तद्गुणविशिष्ट इत्युक्तम् ; तथा च भावमिश्रः,—"ध्मायमानस्य लौहस्य मलं मण्डूरमुच्यते । लौहसिंहानिका किट्टी सिंहानञ्च निगद्यते ॥ यल्लौहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम् ॥" इति ॥ १४९ ॥

मण्डूरस्य तथा त्रिविधलौहस्य च उत्तरोत्तरगुणाधिक्यं प्रदर्शयति, किट्टादिति ।—यत्तु प्राक् "ये गुणा मारिते मुण्डे" इत्यादिना लौहमण्डूरयोः समानगुणत्वमुक्तं तत लौहाप्राप्तौ मण्डूरेणैव लौहसाध्यकर्मसम्पादनार्थं, लौहमलत्वात् लौहगुणाः काश्चन् विद्यन्ते एव इति ज्ञापनार्थञ्च, वस्तुतस्तु मलमपेक्ष्य सारांशस्य गुणबाहुल्यं स्वाभाविकमेव इति । अत्रानुक्तोऽपि ग्रन्थान्तरात् मण्डूरगुणो द्रष्टव्यः, तद्यथा राजनिघण्टौ—"लौहकिट्टन्तु मधुरं कटूष्णं क्रिमिवातनुत् । पक्तिशूलं मरुच्छूलं मेहगुल्माग्निशोषनुत् ॥" इति । किञ्च मण्डूरस्य उत्तममध्यमत्वादिकमप्यत्रानुक्तं

अथ अशुद्धलौहस्य ग्रन्थान्तरोक्तदोषाः।—

अशुद्धलोहं न हितं निषेवणादायुर्बलं कान्तिविनाशि निश्चितम्।
हृदि प्रपीडां तनुते ह्यपाटवं रुजं करोत्येव विशोध्य मारयेत्॥१५१॥

अथ शुद्धलौहस्य ग्रन्थान्तरोक्तगुणाः।—

आयुष्प्रदाता बलवीर्य्यकर्त्ता रोगप्रहर्त्ता मदनस्य कर्त्ता।
अयःसमानं न हि किञ्चिदन्यद्रसायनं श्रेष्ठतमं हि जन्तोः॥१५२॥

[इत्ययोऽधिकारः]।

अथ वङ्गम्।—

अथ वङ्गस्य द्वैविध्यनिर्देशः।—

खुरकं मिश्रकञ्चेति द्विविधं वङ्गमुच्यते।
खुरं तत्र गुणैः श्रेष्ठं मिश्रकं न हितं मतम्॥ १५३॥

अथ खुरकवङ्गस्य लक्षणम्।—

धवलं मृदुलं स्निग्धं द्रुतद्रावं सगौरवम्।
निःशब्दं खुरवङ्गं स्यात्—"

अथ मिश्रकवङ्गस्य लक्षणम्।—

"—मिश्रकं श्यामशुभ्रकम्॥१५४॥

---

प्रदर्श्यते, यथा रसेन्द्रचिन्तामणौ—"शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्। अधमं षष्टिवर्षीयं ततो हीनं विषोपमम्॥" इति॥ १५०॥

अशुद्धलौहसेवने ग्रन्थान्तरोक्तं दोषमाह, अशुद्धलोहमिति।—आयुर्बलमित्यत्र विनाशयेदिति शेषः॥ १५१॥

तत्रोक्तं शुद्धलौहस्य गुणमाह, आयुरिति।—मदनस्य कर्त्ता वाजीकरणमित्यर्थः॥ १५२॥

इदानीं वङ्गस्य द्वैविध्यमुक्त्वा तयोरुत्तमाधमतां निर्दिशति, खुरकमिति।—खुरकं "पश्चखुरि रां" इति प्रसिद्धम्। मिश्रकं तदितरत् ज्ञेयम्॥ १५३॥

खुरकस्य मिश्रकस्य च लक्षणमाह, धवलमिति।—द्रुतद्रावं शीघ्रद्रवणशीलम्। निःशब्द पत्रीभूतमपि शब्दरहितं, पत्रीभूतं रङ्गान्तरं यथा सशब्दं भवति, तथा नेत्यर्थः। मिश्रकमिति।—कृष्णश्वेतमिश्रवर्णत्वात् मिश्रकमिति संज्ञा ज्ञेया॥१५४॥

अथ वङ्गगुणाः।—

वङ्गं तिक्तोष्णकं रूक्षमीषद्वातप्रकोपणम्।
मेहश्लेष्मामयघ्नञ्च मेदोघ्नं कृमिनाशनम्॥ १५५॥

अथ खुरकवङ्गशोधनम्।—

द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसे।
विशुध्यति त्रिवारेण खुरवङ्गं न संशयः॥ १५६॥

अथ मिश्रकवङ्गशोधनम्।—

अम्लतक्रविनिक्षिप्तं वर्षाभूविषतिन्दुभिः।
कट्फलाम्बुगतं वङ्गं द्वितीयं परिशुध्यति॥ १५७॥

अथ नागवङ्गकांस्यताम्राणां सामान्यशोधनम्।—

शुध्यति नागो वङ्गो घोषा रविरायसेऽपि मुनिसङ्ख्यैः।
निर्गुण्डीरससेकैस्तन्मूलरजःप्रवापैश्च॥ १५८॥

---

गुणमाह, वङ्गमिति।—स्पष्टार्थम्॥ १५५॥

खुरकवङ्गस्य शोधनमाह, द्रावयित्वेति।—निशा हरिद्रा। अग्निसन्तापेनादौ वङ्गं तरलीकृत्य पश्चात् हरिद्राचूर्णसंयुक्ते हरिद्रास्वरससंयुक्ते वा निर्गुण्डीस्वरसे निक्षिपेत्, एवं वारत्रयेण वङ्गं शुध्यति॥ १५६॥

मिश्रकस्य शोधनमाह, अम्लेति।—विषतिन्दुः कुचेला "कुँचिला" इति भाषा। वर्षाभूविषतिन्दुभिः, क्वाथे विनिक्षिप्तमिति शेषः। द्वितीयं मिश्रकम्। अम्लतक्रे दिनत्रयं पुनर्नवा विषमुष्टिक्वाथे दिनत्रयं तथा कट्फलक्वाथे च दिनत्रयं वङ्गं निमज्ज्य स्थापयेत्। "विनिक्षिप्तम्" इत्यत्र "विनिष्पिष्टम्" इति पाठे—अम्लतक्रेण सह वङ्गं निष्पिष्य वर्षाभूविषतिन्दुक्वाथे कटफलक्वाथे च दिनत्रयं स्थापयेत्। "विषतिन्दुभिः" इत्यत्र "इषतिन्दुभिः" इति पाठे—इषः वासकः तिन्दुः विषतिन्दुकः। "विषसिन्दुभिः" इति पाठे—विषं वत्सनाभविषं सिन्दुः सिन्दुवारः। "विषसिन्धुभिः" इति पाठेऽपि स एवार्थः। "कट्फलाम्बुगतम्" इत्यत्र "कटुतुम्बुगतम्" इति पाठे—तिक्ततुम्बीमध्यस्थितमित्यर्थः। "वङ्गं द्वितीयम्" इत्यत्र "वङ्गं द्वितयं" "वङ्गद्वितयम्" इति च पाठे—खुरकं मिश्रकञ्च द्विविधवङ्गमित्यर्थः॥ १५७॥

तुल्यशोधनत्वात् वङ्गशोधनप्रसङ्गे नागताम्रकांस्यानामपि शोधनमाह, शुध्यतीति।—घोषः कांस्यकम्। रविः ताम्रम्। मुनिसङ्ख्यैः सप्तसङ्ख्यैः। तन्मूलरजःप्रवापैः

अथ वङ्गमारणम् ।—

मतालेनार्कदुग्धेन लिप्ता वङ्गदलानि च ।
बोधि-चिञ्चात्वचः क्षारैर्दद्याल्लघुपुटानि च ॥
मर्दयित्वा चरेद्भस्म तद्रसादिषु शस्यते ॥ १५९ ॥

मारणे मतान्तरम् ।—

प्रद्राव्य खर्परे वङ्गं षोड़शांशं रसं क्षिपेत् ।
स्वल्पस्वल्पाऽऽलकं दत्त्वा भारद्वाजस्य काष्ठतः ॥
मर्दयित्वा चरेद्भस्म तद्रसादिषु कीर्त्तितम् ॥ १६० ॥

मतान्तरम् ।—

पलाशद्रवयुक्तेन वङ्गपत्रं प्रलेपयेत् ।
तालेन पुटितं पश्चान्म्रियते नात्र संशयः ॥ १६१ ॥

मतान्तरम् ।—

भल्लाततैलसंलिप्तं वङ्गं वस्त्रेण वेष्टितम् ।
चिञ्चा-पिप्पल-पालाश-काष्ठाग्नौ याति पञ्चताम् ॥ १६२ ॥

---

निर्गुण्डीमूलचूर्णमध्ये निक्षेपैः । नागादिचतुष्टयं प्रत्येकं सिन्दुवाररसान्तः संस्थाप्य आतपे शोषयित्वा सिन्दुवारमूलचूर्णमध्ये प्रक्षिप्य च दिनमेकं न्यसेत्, एवं सप्तवारं कुर्य्यात ॥ १५८ ॥

वङ्गस्य मारणमाह, मतालेनेति ।—मतालेन हरितालसहितेन । बोधिः अश्वत्थः, चिञ्चा तिन्तिडी तयोः त्वचः क्षारैः । चरेत आचरेत, रोगेषु प्रयुञ्जीतेत्यर्थः ॥ १५९ ॥

मतान्तरमाह, प्रद्राव्येति ।—आलकं हरितालम । भारद्वाजस्य वनकार्पास्याः । वङ्गं खर्परे कृत्वा अग्नौ विद्राव्य वङ्गषोडशभागैकभागं रसं तत्र निक्षिपेत, ततः तत्र अल्पमल्पं हरितालचूर्णं दत्त्वा दत्त्वा आरण्यकार्पासदण्डेन तावत् निरन्तरं मर्दयेत् यावत् भस्म न भवेत् इति ॥ १६० ॥

मतान्तरमाह, पलाशेति ।—पलाशद्रवः पलाशमूलरसः ॥ १६१ ॥

प्रकारान्तरमाह, भल्लातेति ।—भल्लातकोद्भवेन तैलेन वङ्गं लिप्ता वस्त्रखण्डेनावेष्ट्य च तिन्तिड़िकाश्वत्थपलाशकाष्ठाग्नौ भस्मीकुर्य्यात् । भल्लाततैलविधिर्यथा—आदौ गोमूत्रे भावितान् भल्लातकान् क्षीरे त्रिरात्रम् अधिवास्य द्विधाकुर्य्यात, ततः लौहकुम्भे ताम संस्थाप्य सच्छिद्रशरावेण मुखं बद्धा लौहमयकुम्भान्तरस्य भूमावाकण्ठं निखातस्यो-

अथ वङ्गप्रयोगः ।—

वङ्गभस्मसमं कान्तं व्योमभस्म च तत्समम् ।
मर्दयेत् कनकाम्भोभिर्निम्बपत्ररसैरपि ॥ १६३ ॥
दाड़िमस्य मयूरस्य रसेन च पृथक् पृथक् ।
भूपालावर्त्तभस्माथ विनिक्षिप्य समांशकम् ॥ १६४ ॥
गोमूत्रक-शिलाधातु-जलैः सम्यक् विमर्दयेत् ।
ततो गुग्गुलतोयेन मर्दयित्वा दिनाष्टकम् ॥ १६५ ॥
विशोष्य परिचूर्ण्याथ समभागेन योजयेत् ।
घृष्टं बन्धूकनिर्यासैर्नाकुलीबीजचूर्णकैः ॥ १६६ ॥
ततः क्षिपेत् करण्डान्तर्विधाय पटगालितम् ।
गोतक्रपिष्ट-रजनी-सारिणा सह पाययेत् ॥ १६७ ॥
चतुर्भिर्वल्लकैस्तुल्यं रम्यं वङ्गं रसायनम् ।
निश्चितं तेन नश्यन्ति मेहा विंशतिभेदकाः ॥ १६८ ॥
शालयो मुद्गसूपश्च नवनीतं तिलोद्भवम् ।
पटोलं तिक्ततुण्डीरं तक्रं पथ्याय शस्यते ॥ १६९ ॥

[ इति वङ्गाधिकारः ] ।

---

परि भल्लातपूर्णकुम्भं तमधोमुखं योजयित्वा सन्धिरोधं कृत्वा च उपरिष्टात् करीषाग्निं दद्यात्, अग्निसन्तापेन तस्मात् निःसृतः यः स्नेहः तलभाण्डे पतिष्यति, तदेव भल्लाततैलं ग्राह्यम् इति ॥ १६२ ॥

वङ्गप्रयोगमाह, वङ्गभस्मसममिति ।—कान्तं कान्तलौहं, तच्च मारितं ग्राह्यम् । कनकाम्भोभिः धुस्तूरपत्ररसैः । "कनकाम्भोभिः" इत्यत्र "कन्यकाम्भोभिः" इत्येव पाठः साधीयान्, तत्र—कन्यकाम्भोभिः घृतकुमारीरसैः । मयूरस्य अपामार्गस्य । भूपालावर्त्तः राजावर्त्तः । समांशकं वङ्गभस्मतुल्यम् । गोमूत्रकशिलाधातुजलैः गोमूत्रेण शिलाजतु-जलेन च, गोमूत्रगन्धिशिलाजतुजलेन इत्यर्थो वा ; अत्र जलैरिति बहुवचननिर्देशेन सप्तवारमर्दनं बोद्धव्यम् । समभागेन इत्यत्र गृहीतैरिति शेषः, बन्धूकनिर्यासैर्नाकुली-बीजचूर्णकैरित्यनेनान्वयः । बन्धूकनिर्यासैः बन्धूकः बन्धुजीवपुष्पं "बाँधुलि" इति भाषा, तस्य निर्यासैः क्षीरैः क्वाथैर्वा । नाकुलीबीजं रास्नाबीजं शाकबीजं वा ।

अथ सीसकम्।—

अथ शुद्धाशुद्धसीसकलक्षणम्।—

द्रुतद्रावं महाभारं छेदे कृष्णं समुज्ज्वलम्।
पूतिगन्धं बहिः कृष्णं शुद्धं सीसमतोऽन्यथा॥ १७०॥

अथ सीसकगुणाः।—

अत्युष्णं सीसकं स्निग्धं तिक्तं वातकफापहम्।
प्रमेह-तोयदोषघ्नं दीपनञ्चाऽऽमवातनुत्॥ १७१॥

अथ सीसकशोधनम्।—

सिन्दुवारजटा-कौन्ती-हरिद्राचूर्णकं क्षिपेत्।
द्रुते नागेऽथ निर्गुण्ड्यास्त्रिवारं निक्षिपेद्रसे॥
नागः शुद्धो भवेदेवं मूर्च्छास्फोटादि नाऽऽचरेत्॥ १७२॥

---

"मृष्टं बन्धूकनिर्य्यासैर्नाकुलीबीजचूर्णकैः" इत्यत्र "भृष्टबन्धूकनिर्य्यासैर्वाकुचीबीजचूर्णकैः" इति पाठे—वाकुची सोमराजी। वङ्गकान्तलौहाभ्रकभस्म तुल्यमानं गृहीत्वा कनकादीनां प्रत्येकं स्वरसैरेकैकदिनं मर्द्दयेत्, ततः राजावर्त्तभस्म वङ्गमानं तत्र दत्त्वा गोमूत्रेण शिलाजतुक्वाथेन च शिलाजतुमिश्रजलेन वा अथवा गोमूत्रगन्धशिलाजतुक्वाथेन सप्ताहं भावयित्वा पश्चात् गुग्गुलक्वाथेन दिनाष्टकं मर्द्दयेत्, अनन्तरं शोषयित्वा विचूर्ण्य च बन्धूकनिर्य्यासेन नाकुलीबीजचूर्णेन च तुल्येन मर्द्दयेत्, ततो वस्त्रपूतं विधाय पात्रान्तः स्थापयेत्। अष्टरक्तिमितं तच्चूर्णं हरिद्राचूर्णगन्धकानुपानेन प्रयोजयेत्। तिलोद्भवं तिलतैलं तिलबीजं वा। तिक्ततुण्डीरं बिम्बीफलम्॥ १६२—१६९॥

प्रशस्ताप्रशस्तसीसकलक्षणमाह, द्रुतद्रावमिति।—अतोऽन्यथा इत्यत्र अशुद्धमिति शेषः॥ १७०॥

सीसकगुणमाह, अत्युष्णमिति।—तोयदोषघ्नं दुष्टजलोपयोगजनितव्याधिनिवारकम् इत्यर्थः॥ १७१॥

शोधनमाह, सिन्दुवारजटेति।—कौन्ती रेणुकम्। सीसकमग्निसन्तापेन विलाप्य सिन्दुवारमूलादीनां चूर्णैः सह द्विधा द्विधा निर्गुण्डीरसे निक्षिपेत्, एवं वारत्रयम्॥ १७२॥

अथ सीसकमारणम् ।—

तिर्य्यगाकारचुल्ल्यां तु तिर्य्यग्वक्त्रं घटं न्यसेत् ।
तस्य वक्त्रं विना सर्वं गोपयेत् यत्नतो मृदा ॥ १७३ ॥
भृष्टयन्त्राभिधे तस्मिन् पात्रे सीसं विनिक्षिपेत् ।
पलविंशतिकं शुद्धमधस्तीव्रानलं क्षिपेत् ॥ १७४ ॥
द्रुते नागे क्षिपेत् सूतं शुद्धं कर्षमितं शुभम् ।
घर्षयित्वा क्षिपेत् क्षारमेकैकं हि पलं पलम् ॥ १७५ ॥
अर्जुनस्याक्षवृक्षस्य महा-राजगिरेरपि ।
दाड़िमस्य मयूरस्य क्षिप्त्वा क्षारं पृथक् पृथक् ॥ १७६ ॥
एवं विंशतिरात्राणि पचेत्तीव्रेण वह्निना ।
विघट्टयन् दृढं दोर्भ्यां लोहदर्व्या प्रयत्नतः ॥ १७७ ॥
रक्तं तज्जायते भस्म कपोतच्छायमेव वा ।
नागं दोषविनिर्मुक्तं जायतेऽतिरसायनम् ॥ १७८ ॥

मतान्तरम् ।—

हतमुत्थापितं सीसं दशवारेण सिध्यति ।
तन्मृतं सीसकं सर्वदोषमुक्तं रसायनम् ॥ १७९ ॥

मारणमाह, तिर्य्यगिति ।—अक्षः विभीतकः । महा राजगिरिः शाकविशेषः, कलशाकमिति यावत्, स तु लघुस्थूलभेदेन द्विविधः, अत्र च स्थूलो ग्राह्यः । मयूरः अपमार्गः । अत्रेदं कार्य्यं—वक्राकारां चुल्लीं कृत्वा तदुपरि घटमेकं वक्रमुखं कृत्वा स्थापयेत, ततो वक्त्रमात्रं विहाय कृत्स्नं घटावयवं मृल्लेपेनाच्छादयेत्. भृष्टयन्त्राख्येऽस्मिन् यन्त्रे विंशतिपलमानं शुद्धं सीसकं दत्त्वा तीव्रोत्तापेन द्रवीकुर्य्यात्, ततः तस्मिन् कर्षप्रमाणं शोधितपारदं प्रक्षिप्य दर्व्या घट्टयेत्, मिश्रीभूते च तस्मिन् प्रत्येकं पलमानम् अर्जुनादीनां क्षारं पृथक् पृथक् दत्त्वा लौहदर्व्या दृढं घट्टयन् तीव्राग्निना विंशतिरात्रं पचेत् । कपोतच्छायं पारावतवर्णं, धूसरवर्णमिति यावत ॥ १७३—१७८ ॥

मतान्तरे मारणमाह, हतमिति ।—आदौ भस्मीकृत्य ऊर्द्धपातनयन्त्रे उत्थापयेत्, ततः पुनः भस्मीकृत्य पुनरुत्थापयेत्, एवं दशवारेण सीसकस्य निरुत्थं भस्म भवति ।

अथ सीसकस्य निरुत्थभस्मीकरणम् ।—

अश्वत्थ-चिञ्चात्वग्भस्म नागस्य चतुरंशतः ।
क्षिपेन्नागं पचेत् पात्रे चालयेल्लोहचाटुना ॥ १८० ॥
यामाद्भस्म तदुद्धृत्य भस्मतुल्या मनःशिला ।
जम्बीरैरारनालैर्वा पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥ १८१ ॥
स्वाङ्गशीतं पुनः पिष्ट्वा विंशत्यंशशिलायुतम् ।
अम्लेनैव तु यामैकं पूर्ववत् पाचयेत् पुटे ॥
एवं षष्टिपुटैः पक्वो नागः स्यात् सुनिरुत्थितः ॥ १८२ ॥

अथ निरुत्थभस्मीकरणे मतान्तरम् ।—

शिलया रविदुग्धेन नागपत्राणि लेपयेत् ।
मारयेत् पुटयोगेन निरुत्थं जायते तथा ॥ १८३ ॥

अथ सीसकप्रयोगः ।—

एवं नागोद्भवं भस्म ताम्रभस्मार्द्धभागिकम् ।
पादं पादं क्षिपेद्भस्म शुल्वस्य विमलस्य च ॥ १८४ ॥
कान्ताभ्रसत्त्वयोश्चापि स्फटिकस्य पृथक् पृथक् ।
सर्वमेकत्र सञ्चूर्ण्य पुटेत्त्रिफलवारिणा ॥ १८५ ॥
त्रिंशद्वनगिरिखण्डैश्च त्रिंशद्वारं विचूर्ण्य तत् ।
व्योषवेल्लकचूर्णैश्च समांशैः सह मेलयेत् ॥ १८६ ॥

---

उत्थापनप्रकारो यथा—"मर्दयेत् कन्यकाद्रावैः चूर्णितैः रविपादकैः । पातयेत् पातनायन्त्रे इत्युत्थापनमीरितम् ॥" इति ॥ १७९ ॥

मतान्तरमाह, अश्वत्थचिञ्चेति ।—लोहचाटुना लौहदर्व्या । सीसकात् प्रत्येकं पादिकम् अश्वत्थवल्कलभस्म तथा तिन्तिडीत्वग्भस्म पात्रस्थे प्रद्रुते नागे क्षिप्त्वा लौहदर्व्या यामं विघट्टयन् भस्म कुर्य्यात्, ततः तं भस्मनागं तुल्यमनःशिलया सहैव जम्बीररसैरारनालैर्वा पि॰। पुटे पचेत्. स्वाङ्गशीतञ्च तमुद्धृत्य विंशतिभागैकभागमनःशिलया सह जम्बीरादीनां केनचिदम्लेन पुनः मर्द्दयित्वा यामं पुटेत्. एवं षष्टिपुटैः नागस्य निरुत्थं भस्म जायते ॥ १८०—१८२ ॥

प्रकारान्तरमाह, शिलयेति ।—स्पष्टम् ॥ १८३ ॥

मध्वाज्यसहितं हन्ति प्रलीढं वल्लमात्रया ।
अर्शांसि वातजान् रोगान् धनुर्वातं विशेषतः ॥ १८७ ॥
कफरोगानशेषांश्च मूत्ररोगांश्च सर्वशः ।
श्वासं कासं क्षयं पाण्डुं श्वयथुं शीतकज्वरम् ॥ १८८ ॥
ग्रहणीमामदोषञ्च वह्निमान्द्यं सुदुर्जरम् ।
सर्वानुदकदोषांश्च तत्तद्रोगानुपानतः ॥ १८९ ॥

[ इति सीसकाधिकारः ] ।

अथ पित्तलम् ।—

अथ पित्तलस्य द्वैविध्यनिर्देशः ।—

रीतिका काकतुण्डी च द्विविधं पित्तलं भवेत् ॥ १९० ॥

अथ रीतिकालक्षणम् ।—

सन्ताप्य काञ्जिके क्षिप्ता ताम्राभा रीतिका मता ॥ १९१ ॥

अथ काकतुण्डीलक्षणम् ।—

एवं या जायते कृष्णा काकतुण्डीति सा मता ॥ १९२ ॥

---

नागप्रयोगमाह, एवमिति ।—एवं पूर्वक्रमेण भस्मीभूतम् । नाग्येति ।—सीसकादि स्वर्णमाक्षिकभस्म । विशदेति ।—विशदवर्णापन्ने, विशदाकारं पटेदिति योजनीयम् । वेल्लकं विडङ्गम् । समांशैः प्रत्येकं नागपरिमितैः, वल्लमानैः व्योषादिचूर्णैरित्यर्थः ॥ १८४—१८९ ॥

पित्तलस्य भेदमाह, रीतिकेति ।—रीतिका पित्तलम् । काकतुण्डी राजरीतिः, पित्तलविशेषः, "कांसा पितल" "वेङ्गा पितल" इति च भाषा । तच्च कृत्रिमधातुरेव, यदुक्तं भावप्रकाशे—"रीतिरप्युपधातुः स्यात् ताम्रस्य यशदस्य च । पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः ॥ संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः ॥" इति ॥ १९० ॥

रीतिकाया लक्षणमाह, सन्ताप्येति ।—यत् पित्तलमुष्णीकृतं काञ्जिके क्षिप्तं ताम्रवर्णं भवेत् सा रीतिकेत्यर्थः ॥ १९१ ॥

काकतुण्डीलक्षणमाह, एवमिति ।—यच्च उष्णीकृतं काञ्जिके क्षिप्तं कृष्णवर्णं स्यात् सा काकतुण्डी ज्ञेया इत्यर्थः ॥ १९२ ॥

अथ रीतिकाया गुणाः ।—

रीतिस्तिक्तरसा रूक्षा जन्तुघ्नी साम्रपित्तनुत् ।
पाण्डुकुष्ठहरा योगात् सोष्णवीर्य्या च शीतला ॥ १९३ ॥

अथ काकतुण्ड्या गुणाः ।—

काण्डतुण्डी गतस्नेहा तिक्तोष्णा कफपित्तनुत् ।
यकृत्प्लीहहरा शीत-वीर्य्या च परिकीर्त्तिता ॥ १९४ ॥

अथ शुभरीतिकालक्षणम् ।—

गुर्वी मृद्वी च पीताभा साराङ्गी ताड़नक्षमा ।
सुस्निग्धा मसृणाङ्गी च रीतिरीतादृशी शुभा ॥ १९५ ॥

अथ अशुभरीतिकालक्षणम ।—

पाण्डु-पीता खरा रूक्षा बर्बरा ताडनाक्षमा ।
पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ॥ १९६ ॥

अथ रीतिकाशोधनम् ।—

तप्ता क्षिप्ता च निर्गुण्डी-रसे श्यामारजोऽन्विते ।
पञ्चवारेण संशुद्धिं रीतिरायाति निश्चितम् ॥ १९७ ॥

रीतिकाया गुणमाह, रीतिरिति ।—जन्तुघ्नी क्रिमिनाशिनी । योगादिति ।—उष्णवीर्य्यद्रव्यसंयोगात् उष्णवीर्य्या शीतवीर्य्यद्रव्यसंयोगाच्च शीतवीर्य्या भवतीत्यर्थः ॥ १९३ ॥

काकतुण्ड्या गुणमाह, काकतुण्डीति ।—गतस्नेहा निःस्नेहा, रूक्षा इति यावत् । "गतस्नेहा" इत्यत्र "त्वतिस्नेहा" इति पाठान्तरम् ; युक्तञ्चैतत् राजनिघण्टुसंवादात्, तथा च—"गुरु स्निग्धा मृदुः शीता" इत्यादि ॥ १९४ ॥

प्रशस्तरीतिलक्षणमाह, गुर्वीति ।—मृद्वी कोमला, सुखस्पर्शा इत्यर्थः । साराङ्गी दृढा, छिद्ररहितेत्यर्थो वा । ताडनक्षमा आघातसहा, घनघातेऽपि न भज्यते इत्यर्थः ॥ १९५ ॥

दुष्टरीतिलक्षणमाह, पाण्डुपीतेति ।—पाण्डुपीतमिश्रवर्णा । बर्बरा अधमा इत्यर्थः ॥ १९६ ॥

शोधनमाह, तप्तेति ।—श्यामारजोऽन्विते हरिद्राचूर्णसंयुते ॥ १९७ ॥

अथ रीतिकाद्रावणम् ।—

सुवर्णरीतिकाचूर्णं भक्षितं विष्ठितं पुनः ।
छागेन कृष्णवर्णेन मत्तेन तरुणेन च ॥ १९८ ॥
तल्लिप्तं खर्परे दग्धं द्रुतिं मुञ्चति शोभनाम् ।
चतुर्दश-लसद्वर्ण-सुवर्ण-सदृशच्छविः ॥
देहलोहकरी प्रोक्ता युक्ता रसरसायने ॥ १९९ ॥

अथ रीतिकामारणम् ।—

निम्बूरस-शिला-गन्ध-वेष्टिता पुटिताऽष्टधा ।
रीतिरायाति भस्मत्वं ततो योज्या यथायथम् ॥ २०० ॥

मतान्तरम् ।—

ताम्रवन्मारणं तस्याः कृत्वा सर्वत्र योजयेत् ॥ २०१ ॥

अथ पित्तलप्रयोगः ।—

मृतारकूटकं कान्तं व्योमसत्त्वञ्च मारितम् ।
त्रयं समांशकं तुल्य-व्योषं जन्तुघ्नसंयुतम् ॥ २०२ ॥
ब्रह्मबीजाजमोदाग्नि-भल्लाततिलसंयुतम् ।
सेवितं निष्कमात्रं हि जन्तुघ्नं कुष्ठनाशनम् ॥
विशेषाच्छ्वेतकुष्ठघ्नं दीपनं पाचनं हितम् ॥ २०३ ॥

[ इति पित्तलाधिकारः ] ।

द्रावणमाह, सुवर्णेति ।—सुवर्णवत् पीताभपित्तलचूर्णं कृष्णवर्णं तरुणं मत्तञ्च छागं भोजयेत्, यदा भक्षितं तत् रीतिकाचूर्णं विष्ठारूपेण परिणतं सत् निर्गच्छति, तदा तं मलं खर्परे लिप्त्वा दहेत्, एवञ्च उत्कृष्टं द्रवं निःसरति । चतुर्दशेति ।—चतुर्दशभिः चतुर्दशविधैः लसद्भिः उज्ज्वलैः वर्णैः सुवर्णसदृशी छविः कान्तिः यस्याः सा तादृशी अत्युज्ज्वलकर्बुरवर्णा इत्यर्थः । प्रागुक्तां द्रुतिमिति द्वितीयान्तपदम् अत्र आकृष्य लिङ्गविपरिणामेन अन्वेतव्यः ॥ १९८।१९९ ॥

मारणमाह, निम्बूरसेति ।—सुगमम् ॥ २०० ॥

मारणान्तरमतिदिशति, ताम्रवदिति ।—सुगमम् ॥ २०१ ॥

पित्तलप्रयोगविधिमाह, मृतारकूटकमिति ।—मृतारकूटकं पित्तलभस्म । जन्तुघ्नः

अथ कांस्यम्।—

अथ कांस्यस्य उत्पत्तिनिर्देशः।—

अष्टभागेन ताम्रेण द्विभागखुरकेण च।
विद्रुतेन भवेत् कांस्यं तत् सौराष्ट्रभवं शुभम्॥ २०४॥

अथ प्रशस्तकांस्यलक्षणम्।—

तीक्ष्णशब्दं मृदु स्निग्धमीषच्छ्यामलशुभ्रकम्।
निर्मलं दाहरक्तञ्च षोढ़ा कांस्यं प्रशस्यते॥ २०५॥

अथ अप्रशस्तकांस्यलक्षणम्।—

तत् पीतं दहने ताम्रं खरं रूक्षं घनासहम्।
मन्दनादं गतज्योतिः सप्तधा कांस्यमुत्सृजेत्॥ २०६॥

अथ कांस्यगुणाः।—

कांस्यं लघु च तिक्तोष्णं लेखनं दृक्‌प्रसादनम्।
कृमिकुष्ठहरं वात-पित्तघ्नं दीपनं हितम्॥ २०७॥

---

विडङ्गम्। ब्रह्मबीजं पलाशबीजं ब्रह्मीशाकबीजं वा। अजमोदा यमानी, अन्तःपरिमार्जकत्वात्। अग्निः चित्रकः। आरकूटादि तिलान्तं द्वादशद्रव्यं समांशं गृहीत्वा मिश्रीकृत्य शाणमानेन प्रयोक्तव्यमिति॥ २०२।२०३॥

मिश्रधातोः कांस्यस्य उत्पत्तिप्रकारमाह, अष्टभागेनेति।—खुरकेण तदाख्यवङ्गेन। "खुरकेण" इत्यत्र "कुटिलेन" इति पाठे—कुटिलेन वङ्गेन। तदिति।—सौराष्ट्रदेशोत्पन्नं तत् कांस्यम् उत्तमम्, एतादृशमिश्रणेन यत् कांस्यं भवति तदेव सुराष्ट्रजं कांस्यं शुभञ्च इत्यर्थः। एतस्य मिश्रधातुत्वे प्रमाणं प्रागेव प्रदर्शितम् इति॥२०४॥

प्रशस्तकांस्यलक्षणमाह, तीक्ष्णशब्दमिति।—मृदु कोमल, सुखस्पर्शमित्यर्थः। ईषदिति।—ईषत् श्यामाभशुभ्रवर्णम्। दाहरक्तम् अग्निसन्तापेन रक्तवर्णम्। षोढा षड्‌विधम्॥ २०५॥

अवरकांस्यलक्षणमाह, तदिति।—घनासहं "घनाग्निसहमृत्वाङ्गं कांस्यमुत्तममीरितम्" इति राजनिघण्टुवचनेन घनाग्निसहत्वस्य उत्तमकांस्यलक्षणत्वात् तद्विपर्य्यासेन घनाग्न्यसहं, तीव्रानले विदीर्य्यमाणमित्यर्थः। "मन्दनादं गतज्योतिः" इत्यत्र "मर्दनादागतज्योतिः" इति पाठे तु—घर्षणादिना प्राप्तोज्ज्वल्यम्॥ २०६॥

घृतमेकं विना चान्यत् सर्वं कांस्यगतं नृणाम् ।
भुक्तमारोग्यसुखदं हितं सात्म्यकरं तथा ॥ २०८ ॥

अथ कांस्यशोधनम् ।—

तप्तं कांस्यं गवां मूत्रे वापितं परिशुध्यति ॥ २०९ ॥

अथ कांस्यमारणम् ।—

म्रियते गन्धतालाभ्यां निरुत्थं पञ्चभिः पुटैः ॥ २१० ॥

मतान्तरम् ।—

त्रिक्षारं पञ्चलवणं सप्तधाऽम्लेन भावयेत् ।
कांस्यारकूटपत्राणि तेन कल्केन लेपयेत् ॥
रुद्ध्वा गजपुटे पक्वं शुद्धिमायाति नान्यथा ॥ २११ ॥

[ इति कांस्याधिकारः ] ।

अथ वर्त्तलोहम् ।—

अथ वर्त्तलोहस्वरूपम् ।—

कांस्यार्क-रीति-लोहाहि-जातं तद्वर्त्तलोहकम् ।
तदेव पञ्चलोहाख्यं लोहविद्भिरुदाहृतम् ॥ २१२ ॥

---

गुणमाह,—कांस्यमिति । घृतमेकमिति ।—केवलं घृतं विना अन्यत् सर्वं कांस्यपात्रस्थं सेवितम् आरोग्यादिप्रदं भवति, कांस्यपात्रस्थघृतस्य विषवद्दपकारकत्वादिति ॥ २०७।२०८ ॥

शोधनमाह, तप्तमिति ।—वापितं प्रक्षिप्तम् ॥ २०९ ॥

मारणमाह, म्रियते इति ।—गन्धतालाभ्यां गन्धकहरितालाभ्यां समभागाभ्याम् ॥ २१० ॥

मतान्तरे मारणमाह, त्रिक्षारमिति ।—त्रिक्षारं "स्वर्जिक्षारं यवक्षारं टङ्कणक्षारमेव च । क्षारत्रयं समाख्यातं त्रिक्षारञ्च प्रकीर्त्तितम् ॥" इत्युक्तस्वरूपम् । पञ्चलवणं "सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च । सामुद्रेण समं पञ्च लवणानि" इत्युक्तरूपम् । आरकूट पित्तलम् । "कांस्यारकूटपत्राणि" इत्यत्र "कांस्यारघोषपत्राणि" इति पाठे—आरः इति घोषः शब्दः, संज्ञा इति यावत्, यस्य स आरघोषः पित्तलशब्दवाच्य इत्यर्थः ॥ २११ ॥

अथ वर्त्तलोहगुणाः।—

हिमाम्लं कटुकं रूक्षं कफपित्तविनाशनम्।
रुच्यं त्वच्यं क्रमिघ्नञ्च नेत्र्यं मलविशोधनम्॥ २१३॥
तद्भाण्डे साधितं सर्वमन्नव्यञ्जनसूपकम्।
अम्लेन वर्जितञ्चाति-दीपनं पाचनं हितम्॥ २१४॥

अथ वर्त्तलोहशोधनम्।—

द्रुतमश्वजले क्षिप्तं वर्त्तलोहं विशुध्यति॥ २१५॥

अथ वर्त्तलोहमारणम्।—

म्रियते गन्धतालाभ्यां पुटितं वर्त्तलोहकम्।
तेषु तेष्वथ योगेषु योजनीयं यथाविधि॥ २१६॥

[ इति वर्त्तलोहाधिकारः ]।

अथ रसोपरसलोहानां सूतसाधकत्वनिर्देशः।—

जातिमद्भिर्विशुद्धैश्च विधिना परिसाधितैः।
रसोपरस-लोहाद्यैः सूतः सिध्यति नान्यथा॥ २१७॥

---

वर्त्तलोहस्य उत्पत्तिप्रकारं पर्य्यायञ्चाह, कांस्येति।—कांस्यताम्रारकूटसीस-लौहेतिपञ्चधातुसम्मेलनोत्पन्नत्वात् तस्य पञ्चलौहेति नामान्तरं बोध्यम्। वर्त्तलोहं "बिदरी" इति लोके प्रसिद्धम्॥ २१२॥

गुणमाह, हिमाम्लमिति।—त्वच्यं त्वचः सौकुमार्य्यसम्पादकम्। तद्भाण्डे वर्त्तलोह-निर्मितस्थाल्याम्। साधितं निष्पादितं पक्कमित्यर्थः॥ २१३।२१४॥

शोधनमाह, द्रुतमिति।—द्रुतं द्रावितमित्यर्थः। अश्वजले अश्वमूत्रे॥ २१५॥

मारणमाह, म्रियते इति।—गन्धतालाभ्यां गन्धकहरितालाभ्याम्॥ २१६॥

शोधितानामेव रसोपरसादीनां सूतकर्मण्यपि प्रयोज्यतामाह, जातिमद्भिरिति।—जातिमद्भिः अकृत्रिमैः। विशुद्धैः प्रशस्तैः। विधिना परिसाधितैः यथाशास्त्रं शोधितमारितैः। रसेति।—रसशब्देनात्र महारसा ग्राह्याः। एवंविधमहारसोप-रसलोहादिसंयोगात् स्वेदनमूर्च्छनाद्येकोनविंशकर्मसिद्धः पारदः देहलोहसत्वादि-करो भवति, नान्यथा इति॥ २१७॥

अथ भस्मीभूतरत्नादीनामेव सूतयोगे प्रयोज्यतानिर्देशः ।—

रत्नानि लोहानि वराटशुक्ति-पाषाणजातं खुरशृङ्गशल्यम् ।
महारसाद्येषु कठोरदेहं भस्मीकृतं तत् खलु सूतयोग्यम्
॥ २१८ ॥

अथ भूनागः ।—

अथ भूनागसत्त्वपातनम् ।—

वज्राणां द्रावणार्थाय सत्त्वं भूनागजं ब्रुवे ।
तदेव परमं तेजः सूतराजेन्द्र-वज्रयोः ॥ २१९ ॥
धौत-भूनागसम्भूतं मर्दयेद्भृङ्गजद्रवैः ।
निम्बुद्रवैश्च निर्गुण्ड्याः स्वरसैर्लोटनं पृथक् ॥ २२० ॥
तद्द्रावणगणोपेतं सम्मर्द्य वटकीकृतम् ।
निरुध्य दृढमूषायां हिदण्डं प्रधमेद्दृढम् ॥ २२१ ॥
स्वतः शीतं समाहृत्य पट्टके विनिवेश्य तत् ।
रवकान् राजिकातुल्यान् रेणूनतिभरान्वितान् ॥ २२२ ॥
द्वादशांशार्कसंयुक्तान् धमित्वा रवकान् हरेत् ।
प्रक्षाल्य रवकानाशु समादाय प्रयत्नतः ॥ २२३ ॥
वज्रादिद्रावणं तेन प्रकुर्वीत यथेप्सितम् ।
खरसत्त्वमिदं प्रोक्तं रसायनमनुत्तमम् ॥
द्वित्रिमूषासु चैकस्यां सत्त्वं भवति निश्चयः ॥ २२४ ॥

---

रत्नादीनां सूतसाधनकर्मणि उपयोगिकरणप्रकारमाह, रत्नानीति ।— शल्यम् अस्थि । महारसाद्येषु यत् कठोरदेहं वैक्रान्तमाक्षिकादिकठिनद्रव्यम् । सूतयोग्यं पारदकर्मोपयोगि, भवति इति शेषः ॥ २१८ ॥

वज्रमारणे भूनागसत्त्वस्य उपयोगिता प्रागुक्ता, इदानीं पुनर्द्रावणार्थं तस्य सत्त्वपातनमाह, वज्राणामिति ।—भूनागः भूजन्तु-रक्ततुण्डकादिपर्यायकः द्रव्यविशेषः । किञ्चुलुक इति केचित्, दृश्यते च—किञ्चुलुकप्रचारस्थाने सीसकघृष्टरेखावत् रेखा, अत एव तस्य भूनागसंज्ञा इति, किञ्च मुखस्यापि तस्य किञ्चिदारक्ताभत्वात् इति

मतान्तरम् ।—

भुजङ्गमानुपादाय चतुष्पञ्चसमन्वितान् ।
सुवर्णरूप्यताम्रायस्कान्त-सम्भूतिभूमिजान् ॥ २२५ ॥
प्रक्षाल्य रजनीतोयैः शीतलैश्च जलैरपि ।
उपोषितं मयूरं वा शूरं वा चरणायुधम् ॥ २२६ ॥
क्रमेण चारयित्वाऽथ तद्विष्ठां समुपाहरेत् ।
क्षाराम्लैः सह सम्पेष्य विशोष्य च खरातपे ॥ २२७ ॥
ततः खर्परके क्षिप्त्वा भर्जयित्वा मषीं चरेत् ।
मषीं द्रावणवर्गेण संयुक्तां सम्प्रमर्दिताम् ॥ २२८ ॥
निरुध्य कोष्ठिकामध्ये प्रधमेद्घटिकाद्वयम् ।
शीतलीभूतमूषायाः खोटमाहृत्य पेषयेत् ॥ २२९ ॥
प्रक्षाल्य रवकान् सूक्ष्मान् समादाय प्रयत्नतः ।
सुवर्णमानवद्ध्मात्वाऽनवं कृत्वा नियोजयेत् ॥ २३० ॥

---

च तेषामाशयः । यत्तु केचिदत्र भूनागशब्देन सीसकमित्याहुः तच्चिन्त्यम्; सीसकप्रकरणे तत्सत्त्वपातनमनुक्त्वा अत्र पुनस्तत्प्रसङ्गावतारणस्यासमीचीनत्वादिति । तत्सत्त्वं सारम् । तद्वेति ।—पारदहीरकयोः तत् भूनागसत्त्वमेव अतीव नैर्मल्यवर्द्धकम् । रवकान् तीक्ष्णान् खरानिति यावत्, चञ्चलानिति वा । धौतभूनागसम्भूतमित्यत्र चूर्णमिति शेषः, भूनागमुद्धृत्य प्रक्षाल्य च चूर्णं कृत्वा भृङ्गादीनां प्रत्येकं स्वरसैः दिनत्रयं मर्दयेत्, ततो द्रावणगणेन सह दिनमेकं सम्मर्द्य चक्रिकां कृत्वा दृढमूषायाम् अवरुध्य दण्डद्वयं तीव्राग्निना आधमेत् । ततः स्वाङ्गशीतम् आदाय पट्टके संस्थाप्य राजिकाख्य-सर्षपसदृशान् खरान् गुञ्जेव रेणून् गृहीत्वा द्वादशांशताम्रेण सह पुनरपि भस्त्रया आध्माप्य खररेणून् गृह्णीयात्, एवं द्वित्रिवारेण कदाचिदेकवारेणापि सत्त्वं भवति, ततस्तान् प्रक्षाल्य काचकूप्यां निधापयेत् । इदमेव खरसत्त्वाख्यं बोध्यम् ॥ २१९—२२४ ॥

मतान्तरमाह. भुजङ्गमानिति ।—भुजङ्गमशब्देनात्र प्रकरणवशात् भूभुजङ्गो बोध्यः, ततश्च भूनाग इत्यर्थः । शूरं चरणायुधं पराक्रान्तकुक्कुटम् । चारयित्वा भक्षयित्वा, भोजयित्वेत्यर्थः । तद्विष्ठामित्यादि ।—विष्ठासमाहरणे चात्र तस्याः प्रथमांशः परित्याज्यः,

अथ भूनागसत्त्वप्रयोगविधिः ।—

भूनागोद्भवसत्त्वमुत्तममिदं श्रीसोमदेवोदितं
दत्तं पादमितं द्विशाणकनकेनैकाङ्गतेनोर्मिकाम् ।
तद्धौताम्बुविलेपनं स्थिर-चरोद्भूतं विषं नेत्ररुक्
शूलं मूत्रगदञ्च कर्णजरुजो हन्यात् प्रसूतिग्रहम् ॥२३१॥

[ इति भूनागाधिकारः ]।

—"मलं मूत्रं गृहीत्वा च सन्त्यज्य प्रथमांशकम्" इति रसेन्द्रचिन्तामणि-प्रमाणात्। खोटं रसजारणबन्धनद्रव्यविशेषम्; भूनागसत्त्वस्य रसजारकत्वात् अत्र खोटशब्देन रसकर्मगुरूपं भूनागसत्त्वं बोध्यम्। सुवर्णमानवत् सुवर्णस्य मानं परिमाणं तद्वत् तादृशमिष्ट, स्वर्णतुल्यमित्यर्थः। अनवं कृत्वा पुरातनं कृत्वा, पुरातनमेव तत्सत्त्वं प्रयोज्यं, न तु नवं, "पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः" इत्युक्तेः। अत्रायमर्थः.—सुवर्णादीनामाकरभूतभूमिस्थान चतुष्पथस्थितान् भूनागान् उद्धृत्य हरिद्राम्बरस-शीतलजलाभ्यां प्रक्षाल्य च उपोषितमयूरं वीर्यवन्तं कुक्कुटं वा तान् भोजयेत्, ततो यदा स मयूरः कुक्कुटो वा पुरीषमुत्सृजेत, तदा त्यक्तप्रथमांशं तत् पुरीषं गृहीत्वा टङ्कणक्षाराम्लकाञ्जिकादिभिः सह मर्दयित्वा च तीव्रातपे विशोषयेत्, ततः खर्परे संस्थाप्य भर्जनक्रमेण यदा ससीवत् कृष्णवर्णं भवेत्, तदा तदादाय द्रावणवर्गेण सह सम्पिष्य कोष्ठिकामध्ये दत्वा च दण्डद्वयं भस्त्रया धमेत्, स्वाङ्गशीतायाञ्च तां मूषामुद्घाट्य खोटापराख्य रसबन्धनसाधनं तत खरसत्त्वमादाय पिष्ट्वा प्रक्षाल्य च समसुवर्णेन सह पुनः ध्मात्वा तन्निःसृतरवकान् गृहीत्वा च काचकूप्यां स्थापयेत्, अतीते च संवत्सरे तत् रसकर्मणि अवचारयेत् इति। रसेन्द्रचिन्तामणावप्यस्य सत्त्वपातनविधिमाह, यथा,—"सद्यो भूनागमादाय धारयेत् शिखिनं बुध.। अथवा कुक्कुटं वीरं कृत्वा मन्दिरमागतम्॥ मलं मूत्रं गृहीत्वा च सन्त्यज्य प्रथमांशकम्। आलोड्य क्षारमध्वाज्यैः धमेत् सत्त्वार्थमादरात्॥ मुञ्चन्ति ताम्रवत् सत्त्वं तन्मुद्राजलपानतः। नश्यन्ति जङ्गमविषं स्थावरञ्च न संशयः॥" इति। ताम्रवत् सत्त्ववत्त्वात्, वज्रद्रावण-सूतबन्धनादिकर्मोपयोगित्वाच्च अ-धातोरपि भूनागसत्त्वस्य लोहनिरूपणाधिकारे ग्रहणं बोध्यम्॥ २२५—२३० ॥

भूनागसत्त्वप्रयोगविधिमाह, भूनागोद्भवसत्त्वमिति।—पादमितमिति द्विशाण-कनकापेक्षया ज्ञेयं, तेन भूनागसत्त्वस्य माषकद्वयं कनकस्य च शाणद्वयं ग्राह्यम्।

## अथ तैलपातनविधिः ।—

अथ अङ्कोल्लबीजात् तैलपातनम् ।—

मूलान्युत्तरवारुण्या जर्जरीकृत्य काञ्जिके ।
क्षिपेदङ्कोल्लबीजानां पेषिकां जर्जरीकृताम् ॥
तत्तैलं घृतवत् स्यानं ग्राह्यं तत्तु यथाविधि ॥ २३२ ॥

मतान्तरम् ।—

सम्पेष्योत्तरवारुण्याः पिटकार्य्या दलान्यथ ।
काञ्जिकेन ततस्तेन कल्केन परिमर्दयेत् ॥ २३३ ॥
रजश्चाङ्कोल्लबीजानां तद्बद्ध्वा विरलाम्बरे ।
तद्विलम्ब्यातपे तीव्रे तस्याधश्चषकं न्यसेत् ॥
तस्मिन्निपतितं तैलमादेयं श्वित्रनाशनम् ॥ २३४ ॥

---

ऊर्मिका अङ्गुरीयकमित्यर्थः । पञ्चतियष्टं पञ्चतिगौरं, मृत्तिकातङ्कमिति यावत् । सुवर्णतालकेन सह भूनागसत्त्वमाषद्वयं मिश्रयित्वा अङ्गुरीयकरणोपयोगिकं विधाय तेन अङ्गुरीयकं कुर्य्यात्; तदङ्गुरीयकधौताम्बुविलेपनेन स्थावरजङ्गमविषादिकं विनश्यति ॥ २३१ ॥

तैलानां बीजसत्त्वत्वात् सत्त्वपातनवर्णनप्रसङ्गेन तैलपातनविधिं विवक्षुरादौ अङ्कोल्लबीजात् तैलपातनविधिमाह, मूलानीति ।—उत्तरवारुण्याः "राखालशशा" इति प्रसिद्धायाः इन्द्रवारुण्याः । अङ्कोल्लः अङ्कोठः "धल् आँकड़ा" इति ख्यातः, अङ्कोल्लो टेवठाक इति वा, "धीकड़ा" इति ख्यातो वा, काँकरोल" इति वा ख्यातः, तस्य बीजानां पेषिकां बीजमज्जानम् । जर्जरीकृतां चूर्णितामित्यर्थः । उत्तरवारुणीमूलं कुट्टयित्वा तद्रसेन अङ्कोठमज्जचूर्णं परिभाव्य काञ्जिके क्षिप्त्वा तीव्रातपे न्यसेत्, घृतवत् स्यानं यत्तैलं काञ्जिकोपरि उत्तिष्ठेत् तत् वस्त्रखण्डेन पाणिना वा आकृष्य गृह्णीयात्; यद्वा,—वक्ष्यमाणविधिना कुट्टितोत्तरवारुणीमूलम् अङ्कोल्लमज्ज-चूर्णञ्च काञ्जिकेन पिष्ट्वा सूक्ष्मवस्त्रे बद्ध्वा च तीव्रातपे लम्बयेत् तदधः पात्रमेकं स्थापयेच्च, लम्बमानवस्त्रबद्धौषधात् यत् तैलं च्यवेत तत् ग्राह्यम् इति ॥ २३२ ॥

अस्यैव प्रकारान्तरमाह, सम्पेष्येति ।—पेटकारी ज्योतिष्मती । विरलाम्बरे घनतन्तुवस्त्रे । चषकं पात्रम्; चषकशब्दः सुरापानपात्रार्थकोऽपि अत्र पात्रमात्रार्थकः

मतान्तरम् ।—

अङ्कोल्लबीजसम्भूतं चूर्णं सम्मर्द्य काञ्जिकैः ।
एकरात्रोषितं तत्तु पिण्डीकृत्य ततः परम् ॥ २३५ ॥
स्वेदयेत् कन्दुके यन्त्रे घटिकाद्वितयं ततः ।
तां च पिण्डीं दृढे वस्त्रे बद्ध्वा निष्पीड्य काष्ठतः ॥ २३६ ॥
अधःपात्रस्थितं तैलं समाहृत्य नियोजयेत् ।
एवं कन्दुकयन्त्रेण सर्वतैलान्युपाहरेत् ॥ २३७ ॥

मतान्तरम् ।—

अङ्कोल्लस्यापि तैलं स्यात् काकतुण्ड्या समूलया ॥ २३८ ॥

अथ बाकुचीबीज-घोषाबीजाभ्यां तैलपातनम् ।—

बाकुची-देवदाल्योश्च कर्कोटीमूलतो भवेत् ॥ २३९ ॥

अथ विषमुष्टितैलपातनम् ।—

अपामार्गकषायेण तैलं स्याद्विषमुष्टिजम् ॥ २४० ॥

बोध्यः । इन्द्रवारुण्याः ज्योतिष्मत्याश्च पत्राणि काञ्जिकेन पिष्ट्वा तत्कल्केन अङ्कोल्लबीजचूर्णं मर्दयेत्, ततः पूर्वोक्तक्रमानुसारेण तैलं गृह्णीयात् ॥ २३३।२३४ ॥

प्रकारान्तरमाह, अङ्कोल्लेति ।—अङ्कोठबीजचूर्णं काञ्जिकेन मर्दयित्वा एकरात्रं वासयेत्, अपरेद्युः तत् पिण्डीकृत्य कन्दुकयन्त्रे दण्डद्वयं स्वेदयित्वा पश्चात् दृढे वस्त्रे बद्ध्वा काष्ठद्वयेन उभयतः पेषयेत्, अधःस्थपात्रे तैलं पतेदिति ; कन्दुकयन्त्रलक्षणञ्च अग्रे वक्ष्यति । ग्रन्थान्तरे इदं स्वेदनयन्त्राख्यम ; तल्लक्षणं यथा —"साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च । पिधाय पच्यते यत्र तत् यन्त्रं स्वेदनं स्मृतम् ॥" इति ॥ २३५—२३७ ॥

मतान्तरमाह, अङ्कोल्लस्येति ।—काकतुण्डी श्वेतगुञ्जा । समूलकाकतुण्डीरसेन अङ्कोल्लबीजं मर्दयित्वा पूर्ववत् कन्दुकयन्त्रे तैलं ग्राह्यम् ॥ २३८ ॥

बाकुचीबीज-घोषाबीजाभ्यां तैलपातनविधिमाह, बाकुचीत्यादि ।—बाकुची सोमराजी । देवदाली हस्तिघोषकः । कर्कोटी कर्कोटकः, "काँक्रोल" इति भाषा । कर्कोटीमूलरससमर्दितबाकुची-देवदालीबीजाभ्यां पूर्वरीत्या तैलमाहरेदिति ॥ २३९ ॥

विषमुष्टिबीजात् तैलपातनविधिमाह, अपामार्गकषायेणेति ।—विषमुष्टिः

अथ जैपालात् तैलपातनम्।—

मूलक्वाथैः कुमार्य्याश्च तैलं जैपालजं हरेत्॥ २४१॥

अथ बाकुचीबीजात् तैलपातने प्रकारान्तरम्।—

क्वाथै रक्तापमार्गस्य बाकुचीतैलमाहरेत्॥ २४२॥

अथ कृष्णामिश्रश्वेतगुञ्जाबीजात् तैलपातनम्।—

कृष्णायाः काकतुण्ड्याश्च वीजचूर्णानि कारयेत्।
कान्तपाषाणचूर्णञ्च एकीकृत्य निरोधयेत्।
धान्यराशिगतं पश्चादुद्धृत्य तैलमाहरेत्॥ २४३॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये लोहशोधनमारणादिनिरूपणं नाम पञ्चमोऽध्यायः॥ ५॥

---

"कुँचिला" इति ख्याता। अपामार्गकषायभावितविषमुष्टिबीजात् पूर्वोक्तक्रमेण तैलमाहरेदिति॥ २४०॥

जैपालबीजात्तैलपातनविधिमाह, मूलक्वाथैरिति।—कुमार्य्याः घृतकुमार्य्याः। पूर्वरीत्या कुमारीमूलक्वाथभावितजैपालबीजात् तैलमाहरेत॥ २४१॥

बाकुचीबीजात् तैलपातने प्रकारान्तरमाह, क्वाथैरिति।—अत्रापि पूर्वक्रमो बोध्यः। "रक्तापमार्गस्य" इत्यत्र छन्दभङ्गश्छान्दसः॥ २४२॥

कृष्णामिश्रश्वेतगुञ्जाबीजात् तैलपातनमाह, कृष्णाया इति।—कृष्णा पिप्पली कालाजाजी वा। कान्तपाषाणम् अयस्कान्तः। कृष्णादिद्रव्यत्रयमेकीकृत्य पात्रमध्ये संस्थाप्य निरुध्य च धान्यराशिमध्ये पक्षं निधापयेत्, पश्चादुत्तोल्य पूर्ववत् तैलमाकर्षेत् इति॥ २४३॥

इति रसरत्नसमुच्चयबोधिन्यां पञ्चमोऽध्यायः॥ ५॥

---

# अथ षष्ठोऽध्यायः।

## अथ शिष्योपनयनम्।—*

अथ रसशास्त्रप्रकटने हेतुनिर्देशः।—

रसशास्त्राणि सर्वाणि समालोच्य यथाक्रमम्।
साधकानां हितार्थाय प्रकटीक्रियतेऽधुना॥ १॥

अथ शास्त्रक्रमयोरन्योऽन्यापेक्षित्वनिर्देशः।—

न क्रमेण विना शास्त्रं न शास्त्रेण विना क्रमः।
शास्त्रं क्रमयुतं ज्ञात्वा यः करोति स सिद्धिभाक्॥ २॥

---

रसशास्त्राणां प्रकटीकरणे कारणं विवक्षुराचार्य्यः स्वस्मिन् शिष्याणां प्रत्ययोत्पादनार्थमादौ आत्मनः रसशास्त्रेषु विशेषज्ञत्वं विवृणोति, रसशास्त्राणीति।—यथाक्रमं पौर्वापर्य्यानुसारेण, शास्त्रविहितस्वेदनमूर्च्छनोत्थापनादिप्रक्रियाया यथानिर्देशानुसारेण, यद्वा—यथाक्रमं यथाऽनुष्ठानं, स्वयमनुष्ठानादिकं कृत्वा इत्यर्थः, नाहं स्वयं किञ्चिदपि विदधामि किन्तु पूर्व्वाचार्य्यप्रणीतानि सर्व्वाणि शास्त्राणि सम्यक् आलोच्य अनुष्ठानादिना जातप्रत्ययः सन् प्रकटीकरोमि अत एव एतत् सर्वं विश्वास्यमिति॥१॥

शास्त्रक्रमयोरन्योऽन्यापेक्षित्वमाह, नेति।—पौर्वापर्य्यरूपेण विन्यासविरहितं शास्त्रं न शास्त्रं, शास्त्रविरहितक्रमोऽपि न क्रमः, शास्त्रादन्यत्र क्रमविधानस्य

---

* सूतस्य सर्वार्थसाधकशक्त्याधाने प्रागुक्तमहारसादीनां विशिष्टोपयोगितया प्राक् तेषां सर्वविधसंस्कारमुक्त्वा इदानीं रसस्य शोधनादिकं विवक्षुः आचार्य्यः रसकर्मणि सम्यक्सिद्धिलाभस्य मन्त्रपूजाद्यायत्तत्वात्, मन्त्रादौ पुनः अदीक्षितस्य अनधिकारित्वाच्च रसकर्म शिशिक्षिषोः शिष्यस्य मन्त्राद्युच्चारणे अधिकारलाभार्थं शिष्योपनयनीयं नाम षष्ठमध्यायमारभते, अथेति।—उपनयनम् उप समीपं, गुरोरिति शेषः, नीयते प्राप्यते वेदादिशास्त्राध्ययनार्थमिति तात्पर्य्यं, येन कर्मणा तत्; "गृह्योक्तकर्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगात् बालस्योपनयं विदुः॥" इत्युक्तलक्षणवेदाधिकारिकरणयोग्यसंस्कारविशेषः, अत्र च अथर्ववेदोपाङ्गायुर्वेदाधिकारिकरणार्हः संस्कारविशेषो बोध्यः।

अथ रसविद्याया गुरोर्लक्षणम्।—

आचार्य्यो ज्ञानवान् दक्षो रसशास्त्रविशारदः।
मन्त्रसिद्धो महावीरो निश्चलः शिववत्सलः॥ ३॥
देवीभक्तः सदा धीरो देवता-याग-तत्परः।
सर्वाऽऽम्नायविशेषज्ञः कुशलो रसकर्मणि॥
एवं-लक्षणसंयुक्तो रसविद्यागुरुर्भवेत्॥ ४॥

अथ रसविद्यासाधकशिष्यलक्षणम्।—

गुरुभक्ताः सदाचाराः सत्यवन्तो दृढव्रताः।
निरालस्याः स्वधर्मज्ञाः सदाऽऽज्ञापरिपालकाः॥ ५॥
दम्भ-मात्सर्य्यनिर्मुक्ताः कुलाचारेषु दीक्षिताः।
अत्यन्तसाधकाः शान्ता मन्त्राराधनतत्पराः॥
इत्येवं-लक्षणैर्युक्ताः शिष्याः स्युः सूतसिद्धये॥ ६॥

अथ रसविद्यासाधकस्य सहायलक्षणम्।—

सहायाः सोद्यमास्तत्र यथा शिष्यास्ततोऽधिकाः।
कुलीनाः स्वामिभक्ताश्च कर्त्तव्या रसकर्मणि॥ ७॥

---

न काऽप्युपयोगिता इत्यर्थः; यद्वा—अनुष्ठानं विना शास्त्रं न, शास्त्रं विना अनुष्ठानमपि न, यदि अनुष्ठानं न क्रियते तदा शास्त्रपठनस्य वैयर्थ्यं, यदि शास्त्रं नाधीयते, तदा अनुष्ठानमपि सम्यक् न जायते अतस्तस्य वैयर्थ्यम् इति॥ २॥

रसकर्मोपदेष्टृगुरुलक्षणमाह, आचार्य्य इति।—आचार्य्यः "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते॥" इत्युक्तलक्षणः सकल्परहस्यवेदाध्यापयिता। निश्चलः स्थिरमतिः॥ ३।४॥

उपदेष्टव्यशिष्यलक्षणमाह, गुरुभक्ता इति।—कुलाचारेषु स्ववंशोचितधर्मेषु दीक्षिताः प्राप्तोपदेशाः, स्वधर्मनिष्ठाः इत्यर्थः; यद्वा—"जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते॥ ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्तः" इत्युक्तलक्षणेषु कुलाचारेषु दीक्षिताः सर्वभूते समदर्शिनः इत्यर्थः। सूतसिद्धये सूतस्य सर्वसिद्धिप्रदगुणसम्पादनाय॥ ५।६॥

रसकर्मसाधने उपयुक्तसहायलक्षणमाह, सहाया इति।—सहायाः सहचराः,

अथ रसविद्यासाधने नास्तिकादीनां वैफल्यनिर्देशः।—

नास्तिका ये दुराचारास्तुम्बका गुरुतोऽपरात्।
विद्यां ग्रहीतुमिच्छन्ति चौर्य्याच्छद्मखलोत्सवात्॥ ८॥
न तेषां सिध्यते किञ्चिन्मणिमन्त्रौषधादिकम्।
कुर्वन्ति यदि मोहेन नाशयन्ति स्वकं धनम्॥
इहलोके सुखं नास्ति परलोके तथैव च॥ ९॥

अथ रसविद्यायां गुरुसन्तोषस्य सिद्धिप्रदत्वनिर्देशः।—

तस्माद्भक्ति-बलादेव सन्तुष्यति यदा गुरुः।
तदा शिष्येण सा ग्राह्या रसविद्याऽऽत्मसिद्धये॥
हस्तमस्तकयोगेन वरं लब्ध्वा सुसाधयेत्॥ १०॥

अथ रससाधनोपयोगिदेशनिर्देशः।—

आतङ्करहिते देशे धर्मराज्ये मनोरमे।
उमामहेश्वरोपेते समृद्धे नगरे शुभे॥ ११॥
कर्त्तव्यं साधनं तत्र रसराजस्य धीमता।
अत्यन्तोपवने रम्ये चतुर्द्वारोपशोभिते॥ १२॥
तत्र शाला प्रकर्त्तव्या सुविस्तीर्णा मनोरमा।
सम्यग्वातायनोपेता दिव्यचित्रैर्विचित्रिता॥ १३॥

परिचारका इति यावत्। सौद्यमा इति।—शिष्येभ्योऽपि साधकोद्यमशीलाः इत्यर्थः। कुलीनाः सद्वंशजाः॥ ७॥

नास्तिकादीनां रसकर्मणि वैफल्यमाह, नास्तिका इति।—तुम्बकाः धूर्त्ताः, ग्रन्थैकदेशाभिज्ञाः वा, पल्लवग्राहिणः इति यावत्। गुरुत इति।—गुरुं विहाय अन्यस्मात् चौर्य्यमाश्रित्य अथवा छद्मना गुप्तभावेनेत्यर्थः, खले खलकर्मणि यः उत्सवः आनन्दः आसक्तिरिति यावत्, तस्मात् स्वकीयनास्तिक्यादिकं निह्नुत्य साधुत्वव्यपदेशादित्यर्थः, विद्यां ग्रहीतुमिच्छन्ति इति योजना॥ ८।९॥

गुरुसन्तोषस्य सिद्धिहेतुत्वमाह, तस्मादिति।—हस्तमस्तकयोगेन करशिरःसंयोगरूपप्रणामेन। "सुसाधयेत्" इत्यत्र "सुशोधयेत्" इति पाठान्तरम्॥ १०॥

अथ रसविद्यादाने दीक्षाविधिः।—

रसविद्या शिवेनोक्ता दातव्या साधकाय वै।
यथोक्तेन विधानेन गुरुणा मुदितात्मना॥ २७॥
सुमुहूर्त्ते सुनक्षत्रे चन्द्रताराबलान्विते।
कलसं तोयसम्पूर्णं हेमरत्नफलैर्युतम्॥ २८॥
स्थापयेद्रसलिङ्गाग्रे दिव्यवस्त्रेण वेष्टितम्।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैश्च सुपूजयेत्॥ २९॥
पूजाऽन्ते हवनं कुर्य्याद्योनिकुण्डे सुलक्षणे।
तिलाऽऽज्यैः पायसैः पुष्पैः शतपुष्पादिकैः पृथक्॥ ३०॥
अघोरेण रसाङ्कुश्या होमान्ते शिष्यमाह्वयेत्।
कालिनीशक्तिसंयुक्तं रससिद्धिपरायणम्॥ ३१॥

तत्र कालिनीलक्षणम्।—

यस्यास्तु कुञ्चिताः केशाः श्यामा या पद्मलोचना।
सुरूपा तरुणी भिन्ना विस्तीर्णजघना शुभा॥ ३२॥
मङ्कीर्णहृदया पीन-स्तनभारेण नम्रिता।
चुम्बनालिङ्गनस्पर्श-कोमला मृदुभाषिणी॥ ३३॥
अश्वत्थपत्रसदृश-योनिदेश-सुशोभिता।
कृष्णपक्षे पुष्पवती सा नारी कालिनी स्मृता॥
रसबन्धे प्रयोगे च उत्तमा सा रसायने॥ ३४॥

तत्र कालिन्यभावे तदनुकल्पविधिः।—

तदभावे सुरूपा तु या काचित्तरुणाङ्गना।

---

दिश आरभ्य दक्षिणावर्त्तेन। नाममन्त्रैरिति।—"ओँम् नन्दिने नमः" इत्यादिरूपमन्त्रैः॥ २५।२६॥

रसविद्यादानार्थं दीक्षाविधिमाह, रसविद्येति।—योनिकुण्डे योन्याकारे होमकुण्डे। अघोरेण रसाङ्कुश्या इत्यत्र मन्त्रेणेति शेषः, हवनं कुर्य्यादित्यनेनान्वयः। कालिनीशक्तिसंयुक्तं "यस्यास्तु" इत्यादिना वक्ष्यमाणलक्षणान्वितस्त्रीद्वितीयम्। कालिनीलक्षणमाह, यस्या इति।—भिन्ना प्रस्फुटितयोनिका इत्यर्थः।

तस्या देयं त्रिमधाढ्यं गन्धकं घृतसंयुतम् ॥
कर्षैकैकं प्रभाते तु सा भवेत् कालिनीसमा ॥ ३५ ॥

एवं शक्तियुतो योऽसौ दीक्षयेत्तं गुरूत्तमः ।
सुस्नातमभिषिञ्चेत मन्त्रेण कलसोदकैः ॥ ३६ ॥
अघोरामङ्कुशीं विद्यां दद्याच्छिष्याय सद्गुरुः ।
यथाशक्त्या सुशिष्येण दातव्या गुरुदक्षिणा ॥ ३७ ॥
अथाऽऽज्ञया गुरोर्मन्त्रं लक्षं लक्षं पृथग्जपेत् ।
"ओँम् क्रां क्रीं क्रूम् अघोरतर प्रस्फुट २ प्रकट २
कह २ शमय २ जात २ दह २ पातय २
ओँम् क्रीं क्रैं क्रां क्रूम् अघोराय फट्" इममघोरमन्त्रन्तु
"ओँम् कामराजशक्तिबीजरसाङ्कुशायै आञ्चैया
विद्यां रसाङ्कुशाम्"
अनया पूजयेद्देवीं शक्तिमङ्कुशविद्यया ॥ ३८ ॥

तत्र होमविधिः ।—

दशांशं जुहुयात् कुण्डे त्रिकोणे हस्तमात्रके ।
जातिपुष्पं त्रिमध्वाक्तं पूर्णान्ते कन्यकाऽर्चनम् ॥ ३९ ॥

कृत्वाऽथ प्रविशेच्छालां शुद्धां लिप्तां सवेदिकाम् ।
षट्कोणं मण्डलं तत्र सिन्दूरेण द्विहस्तकम् ॥ ४० ॥

---

नमिता नम्रा जाता । अत्र "नामिता" इति साधीयान् । पुष्पवती ऋतुमती । कालिन्या अभावे तदनुकल्पमाह, तदिति ।—कर्षैकैकम् एकैक-कर्षं, गन्धकमेककर्षं घृतञ्चैककर्षमित्यर्थः । दीक्षाप्रकारमाह, एवमिति ।—कलसोदकैः रसलिङ्गाग्रे स्थापितस्य हेमरत्नादियुतकलसस्य जलैः । अथेति ।—अघोरमन्त्रं तथा रसाङ्कुशविद्यां प्रत्येकं लक्षजपं कुर्य्यात् । अघोरमन्त्रमाह,—ओँम् क्रामित्यादि । रसाङ्कुशामन्त्रमाह,—ओँम् कामेत्यादि । पूजान्ते होमविधिमाह, दशांशमिति ।—दशांशमिति जपसङ्ख्यापेक्षया दशभागैकभागं त्रिमध्वाक्तं मध्वाज्य-शर्करासंयुक्तं जातिपुष्पं जुहुयात् । त्रिमधुलक्षणं यथा राजनिघण्टौ—"सितामाक्षिक-सर्पींषि मिलितानि यदा तदा । मधुरत्रयमाख्यातं त्रिमधु स्यात् मधुत्रयम् ॥" इति ।

अथ रससाधनोपयोगिगृहनिर्माणप्रकारनिर्देशः।—

तत्समीपे समे दीप्ते कर्त्तव्यं रसमण्डपम्।
अतिगुप्तं सुविस्तीर्णं कपाटार्गलशोभितम्॥ १४॥
ध्वजच्छत्रवितानाढ्यं पुष्पमालाविलम्बितम्।
भेरि-काहल-घण्टादि-शृङ्गिनादविनादितम्॥ १५॥
भूः समा तत्र कर्त्तव्या सुदृढा दर्पणोपमा।
तन्मध्ये वेदिका रम्या कर्त्तव्या लक्षणान्विता॥ १६॥

अथ रसलिङ्गप्रस्तुतप्रकारनिर्देशः।—

निष्कत्रयं हैमपत्रं रसेन्द्रं नवनिष्ककम्।
अम्लेन मर्दयेद्यामं तेन लिङ्गन्तु कारयेत्॥ १७॥
दोलायन्त्रे सारनाले जम्बीरस्थं दिनं पचेत्।
तल्लिङ्गं पूजयेत्तत्र सुशुभैरुपचारकैः॥ १८॥

अथ रसलिङ्गार्चनादौ फलनिर्देशः।—

लिङ्गकोटिसहस्रस्य यत् फलं सम्यगर्चनात्।
तत् फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत्॥ १९॥

---

रससाधनोपयोगिदेशं तथा सामान्यतो गृहप्रकारञ्चाह, आतङ्केति।—अत्यन्तोपवने उपवनबहुले, उपवनप्रान्ते वा। तत्र पूर्वोक्तप्रकारदेशे॥ ११—१३॥

तत्र केवलरससाधनार्थमेव विशिष्टगृहनिर्माणप्रकारमाह, तदिति।—तत्समीपे पूर्वोक्तादिशा निर्मितगृहसंलग्नस्थाने। दीप्ते सुस्पष्टे सूर्य्यकिरणोद्भासिते इत्यर्थः, भूमौ इति शेषः। वितानं चन्द्रातपः, ध्वजादिभिः आढ्यं समृद्धम्। काहलः महाढक्का। समा अनुन्नतनीचा। दर्पणोपमा मालिन्यविरहिता मसृणा वा इत्यर्थः। लक्षणान्विता वेदिका उन्नतकाऽऽकारपिण्डिकावती कृतसंस्कारा परिष्कृता चतुरस्रादिलक्षणसंयुक्ता भूमिः॥ १४—१६॥

रसलिङ्गप्रस्तुतप्रकारमाह, निष्कत्रयमिति।—निष्कत्रयं सार्द्धतोलकम्। दोलायन्त्रे इति।—जम्बीररसमध्ये सर्वाङ्गावस्थितं शिवलिङ्गं दोलायन्त्रे काञ्जिकेन पचेत्; यद्वा—जम्बीरफलमध्यस्थं लिङ्गं दिनं यावत् काञ्जिकेन दोलायन्त्रे पचेत्। तत्र वेदिकायाम्॥ १७।१८॥

ब्रह्महत्यासहस्राणि स्त्री-गोहत्याऽयुतानि च ।
तत्क्षणाद्विलयं यान्ति रसलिङ्गस्य दर्शनात् ॥
स्पर्शनात् प्राप्यते मुक्तिरिति सत्यं शिवोदितम् ॥ २० ॥

अथ पूजाविधिनिर्देशः ।—

आग्नेय्यां श्रीमघोरेण मन्त्रराजेन चार्चयेत् ॥ २१ ॥

अथ ध्यानम् ।—

अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम् ।
प्रेतारूढं नीलकण्ठं रसलिङ्गे विचिन्तयेत् ॥ २२ ॥
तस्योत्सङ्गे महादेवीमेकवक्त्रां चतुर्भुजाम् ।
अक्षमालाऽङ्कुशं दक्षे वामे पाशाभयं शुभम् ॥
दधतीं तप्तहेमाभां पीतवस्त्रां विभावयेत् ॥ २३ ॥

अथ देवीपूजाया मन्त्रम् ।—

"वाग्माया श्रीः कामराजशक्तिबीजं रसाङ्कुशा—।
यै नमो" द्वादशार्णेषा ज्ञेया विद्या रसाङ्कुशा ॥ २४ ॥

अथ पूजने प्रकारनिर्देशः ।—

अनया पूजयेद्देवीं गन्धपुष्पाक्षतादिभिः ।
नन्दी-भृङ्गी-महाकाल-कुलीरान् पूर्वदिक्क्रमात् ॥ २५ ॥
पूजयेन्नाममन्त्रैश्च प्रणवादि-नमोऽन्तकैः ।
एवं नित्यार्चनं तत्र कर्त्तव्यं रससिद्धये ॥ २६ ॥

---

रसलिङ्गार्चनादिफलमाह, लिङ्गकोटिसहस्रेणेति।—सुगमम् ॥ १९।२० ॥

रसलिङ्गस्य पूजाविधिमाह, आग्नेय्यामिति।—आग्नेय्याम् अग्निकोणे, वेदिकायां स्थापितमिति शेषः। श्रीमघोरेण मन्त्रराजेन वक्ष्यमाण "ओँ म् क्राम्" इत्यादिरूपेण अघोरमन्त्रेण ॥ २१ ॥

ध्यानमाह, अष्टादशभुजमिति।—दक्षे दक्षिणहस्ते ॥ २२।२३ ॥

देवीपूजने मन्त्रमाह, वाग्मायेति।—द्वादशार्णा द्वादशाक्षरा ॥ २४ ॥

पूजनप्रकारमाह, अनयेति।—अनया रसाङ्कुशाविद्यया। पूर्वदिक्क्रमात् पूर्वस्या

वेदिकायां लिखेत् सम्यक् तद्वहिश्चाष्टपत्रकम् ।
कमलं चतुरस्रञ्च चतुर्द्वारैः सुशोभितम् ॥ ४१ ॥
कर्णिकायां न्यसेत् खल्लं लौहजं स्वर्णलेखितम् ।
तन्मध्ये रसराजन्तु पलानां शतमात्रकम् ॥
पञ्चाशत् पञ्चविंशद्वा पूजयेद्रसलिङ्गवत् ॥ ४२ ॥

तत्र रसशक्तयः।—

{वज्रवैक्रान्तवज्राभ्र-कान्तपाषाणटङ्कणम् ।
भूनागः शक्तयश्चैताः षट्कोणे पूजयेत् क्रमात् ॥४३॥}

तत्र उपरसाः।—

{गन्धतालककासीस-शिलाकङ्कुष्ठभूषणम् ।
राजावर्त्तो गैरिकञ्च ख्याता उपरसा अमी ॥}
{पूज्या अष्टदलेष्वेते पूर्व्वादीशानगं क्रमात् ॥४४॥}

तत्र महारसाः।—

{रसकं विमला ताप्यं चपला तुत्थमञ्जनम् ।
हिङ्गुलं सस्यकञ्चैव ख्याता एते महारसाः ॥}
{पूर्व्वादीशानपर्य्यन्तं पत्राग्रेषु प्रपूजयेत् ॥४५॥}

---

पूर्णान्ते पूर्णाहुतिशेषे। कन्यकाऽर्चनं कुमारीपूजनम्। हिहस्तकं हस्तद्वयपरिमितपरिधि-विशिष्टं मण्डलमित्यनेनान्वयः। कर्णिकायामित्यादि।—कर्णिकायां लिखितपद्म-बीजकोषोपरि लौहखल्लं संस्थाप्य तन्मध्ये सुवर्णेन रेखामङ्कयित्वा तदुपरि शतपलं पञ्चाशत्पलं पञ्चविंशतिपलं वा पारदं न्यस्य रसलिङ्गपूजनक्रमेण पूजयेत। रसशक्तीराह, वज्रेत्यादि।—संयोगेन रसशक्तिवर्द्धकत्वात् वज्रादिभूनागान्ताः षट् शक्तयः उक्ताः, ताश्च षड्भितमण्डलस्य षट्सु कोणेषु स्थापयित्वा पूजयितव्याः। दीक्षाविधौ उपरसानां नामान्याह, गन्धेति।—भूषणं सौराष्ट्रमृत्तिका। राजा-वर्त्तस्य उपरत्नत्वेऽपि यदत्र उपरसमध्ये गणनं, तत् रससाधनकार्य्यार्थमेव बोध्यम; तेन रसवादे अस्य उपरसत्वं धातुवादे च उपरत्नत्वम् इति। दीक्षाविधौ महारसानां नामान्याह, रसकमिति।—तुत्थं खर्परीतुत्थकम्। सस्यकं मयूरकण्ठाभं तुत्थकम। पूर्व्वदत्रापि अञ्जनहिङ्गुलयोरुपरस-साधारणरसमध्ये प्राक् पठितयोः यत् महारसेषु

तत्र अष्टलोहपूजाक्रमः ।—

पूर्वद्वारे स्वर्णरूप्ये दक्षिणे ताम्रसीसके ।
पश्चिमे वङ्गकान्तौ च उत्तरे मुण्डतीक्ष्णके ॥
सर्वमेतदघोरेण पूजयेदङ्कुशान्वितम् ॥४६॥

तत्र उपकरणानां पूजाविधिः ।—

विडं काञ्जिकयन्त्राणि क्षारमूत्रलवणानि च ।
कोष्ठी मूषा वङ्कनालतुषाङ्गारवनोपलाः ॥४७॥

भस्त्रिका दण्डिकाऽनेकाः शिलाः खल्लान्युलूखलम् ।
स्वर्णकारोपकरणं समस्ततुलनानि च ॥ ४८ ॥

मृत्काष्ठताम्रलोहोत्थ-पात्राणि विविधानि च ।
दिव्यौषधीनां वर्गाश्च रञ्जकस्नेहनानि च ॥
एतानि द्वारवाह्ये तु मूलमन्त्रेण पूजयेत् ॥ ४९ ॥

वाग्माया क्लीं ततः चेश्च क्षमश्च पञ्चाक्षरो मनुः ।
अनेन मूलमन्त्रेण भैरवं तत्र पूजयेत् ॥
सर्वेषां रससिद्धानां नाम सङ्कीर्तयेत्तदा ॥ ५० ॥

---

गणनं तत् रसवादे बोध्यम्, अन्यत्र तु साधारणरसोपरसत्वमेव । लोहाष्टकस्य पूजाक्रममाह, पूर्वद्वारे इति ।—अङ्कुशान्वितं रसाङ्कुशमन्त्रेणाभिमन्त्रितम् । साधनानां नामानि पूजाविधिञ्चाह, विडमिति ।—विडं रसजारणार्थक्षारबहुल-द्रव्यविशेषः । यदुक्तं रसेन्द्रचिन्तामणौ—"टङ्कणं शतधा भाव्यं द्रावैः पालाशवल्कजैः । विडो वह्निमुखो नाम द्वितीयं सर्वजारणे ॥" इति । अस्य च बहवः प्रकाराः सन्ति विस्तरभयात्ते नात्रोदाहृताः, ग्रन्थान्तरे द्रष्टव्याः । यन्त्राणि ऊर्द्धपातनादीनि । क्षारः "स्वर्जिका टङ्कणश्चैव यवक्षार उदाहृतः" इत्युक्तलक्षणक्षारवर्गः । मृत् "वल्मीकमृत्तिका धूमं गैरिकश्चेष्टका पटुः । इत्येताः मृत्तिकाः पञ्च" इत्युक्तपञ्च-मृत्तिकाः । कोष्ठीमूषादयोऽग्रे वक्ष्यमाणाः । दण्डिका मर्दनार्थं स्वल्पदण्डविशेषः । "दण्डिका" इत्यत्र "दंशिका" इति पाठे—सन्दंशयन्त्रमित्यर्थो बोध्यः । दिव्यौषधीनां वर्गाः जीवकर्षभकादयः । रञ्जकस्नेहनानि "मञ्जिष्ठा किंशुकश्चैव खदिरं रक्तचन्दनम् ।

तत्र रससिद्धानां नामानि।—

व्यालाचार्य्यश्चन्द्रसेनः सुबुद्धिर्नरवाहनः।
नागार्जुनो रत्नघोषः सुरानन्दो यशोधनः ॥५१॥

इन्द्रधूमश्च माण्डव्यश्चर्पटिः शूरसेनकः।
आगमो नागबुद्धिश्च खण्डः कापालिको मतः ॥ ५२ ॥

कामारिस्तान्त्रिकः शम्भुर्लङ्कालम्पटशारदौ।
बाणासुरो मुनिश्रेष्ठो गोविन्दः कपिलो बलिः ॥ ५३ ॥

एते सर्वे तु सूतेन्द्राः रससिद्धा महाबलाः।
चरन्ति सर्वलोकेषु नित्या भोगपरायणाः ॥५४॥

सप्तविंशतिसङ्ख्याका रससिद्धिप्रदायकाः।
वैद्याः पूज्याः प्रयत्नेन ततः कुर्य्याद्रसार्चनम् ॥५५॥

हर्षयन् द्विजदेवानां तर्पयेदिष्टदेवताः।
कुमारी-योगिनी-योगीश्वरान्मेलकसाधकान् ॥
तर्पयेत् पूजयेद्भक्त्या यथाशक्त्यनुसारतः ॥५६॥
इत्येवं सर्वसम्भार-युक्तं कुर्य्याद्रसोत्सवम्।
सर्वविघ्नप्रशान्त्यर्थं सर्वेप्सितफलप्रदम् ॥ ५७ ॥

---

करवीरं देवदारु सरलं रजनीद्वयम् ॥ अन्यानि रक्तपुष्पाणि पिष्टा लाक्षारसेन तु। तैलं विपाचयेत्तेन कुर्य्याद्दोलादिरञ्जनम ॥" इति रसेन्द्रचिन्तामण्युक्तपारद-रञ्जकतैलादीनि। सर्वाण्येतानि रसकल्याणानि रसकर्माणि विघ्नविनाशाय पूज्यानि इति बोध्यम्। मनुः मन्त्रः। रससिद्धानां नामानि पूज्यत्वञ्चाह, व्यालाचार्य्य इति।—सूतेन्द्राः सूतसाधने इन्द्रतुल्याः, सूतसाधकश्रेष्ठा इत्यर्थः। "सूतेन्द्राः" इत्यत्र "राजेन्द्राः" इति पाठे—राजेन्द्रतुल्या इत्यर्थः। रससिद्धाः रसे रसशास्त्रे सिद्धाः प्राप्तसाफल्याः, आयत्तीकृतरसशास्त्राः इत्यर्थः। नित्याः अविनाशिनः ॥ २७—५७ ॥

अदीक्षितस्य रसविद्यासाधनवैफल्यनिर्देशः ।—

अन्यथा यो विमूढात्मा मन्त्रदीक्षाक्रमाद्विना ।
कर्त्तुमिच्छति सूतस्य साधनं गुरुवर्जितः ॥ ५८ ॥
नासौ सिद्धिमवाप्नोति यत्नकोटिशतैरपि ।
तस्मात् सर्वप्रयत्नेन शास्त्रोक्तां कारयेत् क्रियाम् ॥ ५९ ॥

अथ रससाधने सिद्धिलाभहेतुनिर्देशः ।—

सम्यक्साधनसोद्यमा गुरुयुता राजाऽऽज्ञयाऽलङ्कृता
नानाकर्मपराङ्मुखा रसपरा ह्याऽऽढ्या जनैश्चार्थिताः ।
मात्रा-यन्त्र-सुपाककर्मकुशलाः सर्वौषधे कोविदा-
स्तेषां सिध्यति नान्यथा विधिबलाच्छ्रीपारदः पारदः ॥६०॥

गुरुसन्निधाने अदीक्षितस्य रससाधनेविधौ नैष्फल्यमाह, अन्यथेति ।—सुगमम् ॥ ५८।५९ ॥

रसकर्मणि साफल्यहेतुमाह,: सम्यगिति ।—सम्यक् यथाशास्त्रं साधनानि विडाद्युपाया: येषां ते, तथा सह उद्यमेन वर्त्तमानाः सोद्यमाः सम्यक् साधनाश्च ते सोद्यमाश्च सम्यक्-साधनसोद्यमाः विडादिसाधनवन्तः उद्यमशालाश्च । राजाज्ञया राजाज्ञां प्राप्य अलङ्कृताः भूषिताः राजाज्ञाप्राप्त्या सर्वजनपूज्याः । गुरुयुता इत्यादिविशेषणद्वयेन एतस्य विश्वस्तत्वं ख्यत्वञ्च प्रतिपादितम् । नानाकर्मपराङ्मुखाः रसपराश्च सर्वकर्माणि परित्यज्य, केवलं रसकर्मनिष्ठाः ; एताभ्यामस्य कार्य्यसाफल्यम् अवश्यम्भावि इति दर्शितम् ॥ आढ्याः धनवन्तः ; एतेनास्य सर्वोपकरणसमन्वितत्वं तेन च अवश्यमेव कार्य्यसाधकत्वमुक्तम् । जनैः अर्थिताः पारदसाधनं कुरु इत्येवंरूपेण प्रार्थिताः ; अनेनास्य परोपकारशीलत्व ज्ञापितम् । मात्रेति ।—मात्रा शोधनार्थग्राह्यरसादीनां परिमाणं यन्त्रम् ऊर्द्धपातनादिरूपं सुपाककर्म सुष्ठुरूपेण औषधपाकक्रिया तेषु कुशलाः निपुणाः, इयन्मानं रसादिकं शोध्यम, एवंविधं यन्त्रं करणीयम, एतादृशः पाकः कर्त्तव्यः इत्यादिषु अभिज्ञाः । सर्वौषधे कोविदाः सर्वविधौषधपरिचये प्रयोगे च अभिज्ञाः ; एताभ्यामस्य दृष्टकर्मत्वेन अवश्यमेव पाकादिसिद्धिः इति बोधितम् । ये एवंविधाः तेषां विधिबलात् विधानवशात यथाशास्त्रक्रियाकरणात् इत्यर्थः, पारदः पारं जरामरणादिभयार्त्तानाम् आश्रयमित्यर्थः, ददाति इति तथोक्तः, यदुक्तं रसेश्वरदर्शने—"विविधव्याधि-

अथ कस्मै किमर्थं रसविद्या दातव्या तन्निर्देशः।—

रसशास्त्रं प्रदातव्यं विप्राणां धर्महेतवे।
राज्ञे वैश्याय कृत्यर्थं दास्यार्थमितरस्य च॥ ६१॥

अथ गुरुसन्तोषस्य सर्वसिद्धिहेतुत्वनिर्देशः।—

गुरौ तुष्टे शिवस्तुष्येच्छिवे तुष्टे रसस्तथा।
रसे तुष्टे क्रियाः सर्वाः सिध्यन्त्येव न संशयः॥ ६२॥

अथ रसविद्याया अवश्यगोप्यत्वनिर्देशः।—

रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम्।
भवेद्वीर्य्यवती गुप्ता निर्वीर्य्या च प्रकाशनात्॥ ६३॥
न रोगिविदितं कार्य्यं बहुभिर्विदितं तथा।
रोगिणा बहुभिर्ज्ञातं भवेन्निर्वीर्य्यमौषधम्॥ ६४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
शिष्योपनयनं नाम षष्ठोऽध्यायः॥ ६॥

---

भयोदयमरणजरासङ्कटेऽपि मर्त्यानाम्। पारं ददाति यस्मात्तस्मात् अयमेव पारदः कथितः॥" इति। श्रीपारदः पारदाख्यधातुः सिध्यति, अन्यथा एतद्विपर्य्यये, अ, सिध्यतीति शेषः॥ ६०॥

कस्मै किमर्थं रसविद्या दातव्या तदाह, रसशास्त्रमिति।—दास्यार्थं विप्रादिवर्णत्रयाणां रससाधनकर्मणि साहाय्यकरणार्थम् इत्यर्थः। इतरस्य शूद्रस्य सम्बन्धे॥ ६१॥

रसकर्मसिद्धौ गुरुतुष्टेः मुख्यहेतुत्वमाह, गुराविति।—सुगमम्॥ ६२॥

रसविद्याया अवश्यगोप्यत्वं तथा प्रकाशे च वीर्य्यहीनत्वमाह, रसविद्येति।—सुगमम्॥ ६३।६४॥

इति रसरत्नसमुच्चयबोधिन्यां षष्ठोऽध्यायः॥ ६॥

# अथ सप्तमोऽध्यायः ।

## अथ रसशाला ।—

अथ रसशालानिर्माणस्य स्थाननिर्देशः ।—

रसशालां प्रकुर्वीत सर्वबाधाविवर्जिते ।
सर्वौषधिमये देशे रम्ये कूपसमन्विते ॥ १ ॥
यक्ष-त्र्यक्ष-सहस्राक्षदिग्विभागे सुशोभने ।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ॥ २ ॥

अथ रसशालायाः कुत्र किं कर्म कर्त्तव्यं तन्निर्देशः ।—

शालायाः पूर्वदिग्भागे स्थापयेद्रसभैरवम् ।
वह्निकर्माणि चाऽऽग्नेये याम्ये पाषाणकर्म च ॥ ३ ॥
नैर्ऋत्ये शस्त्रकर्माणि वारुणे क्षालनादिकम् ।
शोषणं वायुकोणे च वेधकर्मोत्तरे तथा ॥
स्थापनं सिद्धवस्तूनां प्रकुर्य्यादीशकोणके ॥ ४ ॥

---

पूर्वाध्याये शिष्योपनयनप्रसङ्गेन रसकर्मसम्पादनार्हगृहादीनां सङ्क्षिप्तविधानमुक्त्वा इदानीं सर्वोपकरणानामाश्रयत्वेन गृहस्य प्राधान्यात् रसशालायां स्थापनीयद्रव्यवर्ग-जाताः प्राक् पुनश्च तत्स्थापनयोग्यं भूविभागं निरूपयति, रसशालामिति ।—रस-शाला रससाधनोपयोगि गृहम् । यक्षेति ।—यक्षः कुबेरः उदीच्यधिपतिः, त्र्यक्षः ईशानः ईशानकोणपतिः, सहस्राक्षः इन्द्रः प्राच्यधिपतिः, तेषां दिग्विभागे उत्तरस्यामैशान्यां पूर्वस्यां वा दिशि, पूर्वोत्तरस्यां दिशि वा ॥ १।२ ॥

एवं निर्मितगृहस्य कुत्र किं प्रयोजनं सम्पादनीयं तदाह, शालाया इति ।—रसभैरवं प्रागुक्तरसनिर्मितलिङ्गम् । वह्निकर्माणि धापनपुटनादिक्रियाः । पाषाणकर्म शिलायां मर्द्दनादिक्रिया । शस्त्रकर्माणि धातूनां परीक्षार्थं यन्त्रादिकरणार्थञ्च छेदनादि-क्रिया । वारुणे वरुणसम्बन्धिनि, पश्चिमस्यामित्यर्थः । क्षालनादिकं काञ्जिकादिना धावनादिकर्म । शोषणम् आर्द्रद्रव्याणामातपे शुष्कीकरणम् । वेधकर्म स्पर्शमात्रेण रसेन्द्रस्य सर्वद्रव्याणां सुवर्णत्वादिप्रापणरूपमत्युपादानकर्म । सिद्धवस्तूनां यथाविधि

अथ रसशालायां सङ्ग्राह्याणि उपकरणानि।—

पदार्थसङ्ग्रहः कार्य्यो रससाधनहेतुकः।
सत्त्वपातनकोष्ठीञ्च भस्त्रकोष्ठीं सुशोभनाम्॥ ५॥
भूमिकोष्ठीं चलत्कोष्ठीं जलद्रोण्योऽप्यनेकशः।
भस्त्रिकायुगलं तद्वन्नलिके वंशलोहयोः॥ ६॥
स्वर्णायो-घाष-शुल्वाश्म-कुण्डश्चर्मकर्त्ता तथा।
करणानि विचित्राणि द्रव्याण्यपि समाहरेत्॥ ७॥
कण्डनी पेषणी खल्या द्रोणीरूपाश्च वर्त्तुलाः।
आयसास्तप्तखल्लाश्च मर्दकाश्च तथाविधाः॥ ८॥

मारणादिसिद्धरसादीनाम्। अत्र पूर्वदिग्भागे रसलिङ्गस्थापनं पूर्वाभिमुखीभूत्वा पूजाकार्य्यस्य प्राशस्त्यात् तत्सम्पादनार्थम्। अग्निकोणस्य अग्निर्देवताकत्वात् अग्निसाध्यकर्म्मणा तत्रैव करणप्राशस्त्यात् आग्नेय्यां कृतिनिर्देशः। दक्षिणस्य दण्डधराधिपतिकत्वात् दण्डपाषाणसाध्यमर्द्दनादिकर्म्मणां तत्रैव विधानं कृतम्। नैर्ऋतस्य राक्षसाधिपतिकत्वात् शस्त्रकर्म्मणश्च आसुरकत्वात् तच्छिन्नाद्यानां तत्रैव विधानसङ्गतम्। पश्चिमस्य वरुणदैवतत्वात् वरुणस्य च जलाधिपत्वात् क्षालनादिकर्म्मणः तत्राभिधानम्। वायुकोणस्य मरुद्देवताकत्वात् मरुतश्च शोषकत्वात् शोषणादिकर्म्मणां तत्र सम्पादनं कर्त्तव्यम्। उत्तरस्य कुबेराधिदेवताकत्वात् कुबेरस्य च धनाधिपत्वात् सुवर्णाद्युत्पादकवेधकर्म्मणः उत्तरस्यां निर्देशः। ईशानस्य ईशानापरनामक-शिवदैवतत्वात् शिवस्य च शिवकरत्वात् शिवकराणां मारणादिसिद्धरसादीनां तत्र स्थापनविधानम्; यद्वा—"आरोग्यं भास्करादिच्छेत्" इत्युक्त्या ईशानस्य सूर्य्यमूर्त्तिधर-ईशानाधिपतिकत्वात् सूर्य्यस्य च आरोग्यप्रदत्वात् आरोग्यजनकसिद्धवस्तूनाम् ऐशान्यां स्थापनं बोध्यमिति॥ ३।४॥

तत्र रससाधनार्थं यानि यानि द्रव्याणि स्थाप्यानि तेषां नामान्याह, पदार्थसङ्ग्रहः इति।—सत्त्वपातनकोष्ठ्यादिलक्षणमग्रे वक्ष्यति। जलद्रोण्यः काष्ठादिनिर्म्मितजलाधाराः। भस्त्रिका चर्म्मप्रसेविका, कर्म्मकाराणां चर्म्मनिर्म्मितयन्त्रविशेषः "हापर" इति भाषा। नलिके इति।—वंशनिर्म्मितं लौहनिर्म्मितञ्च नलिकाद्वयम्। स्वर्णेति।—स्वर्णादिनिर्म्मिताः कुण्डाः खल्याः स्थाल्यः। तथा चर्म्मकर्त्ता चर्म्मकाराणां करणानि साधनानि उपकरणभूतानीत्यर्थः, विचित्राणि विविधानि द्रव्याणि। कण्डनी पेषणी

सूक्ष्मच्छिद्रसहस्राऽऽढ्या द्रव्यगालनहेतवे ।
चालनी च कटत्राणि शलाका स्थिर च कुण्डली ॥ ९ ॥

तत्र त्रिविधचालनीनां स्थूलद्रव्यचालनार्थं चालनीस्वरूपम् ।—

चालनी त्रिविधा प्रोक्ता तत्स्वरूपश्च कथ्यते ।
वैणवीभिः शलाकाभिर्निर्मिता ग्रथिता गुणैः ॥
कीर्त्तिता सा सदा स्थूल-द्रव्याणां गालने हिता ॥१०॥

तत्र चूर्णचालनार्थचालनीस्वरूपम् ।—

चूर्णचालनहेतोश्च चालन्यन्याऽपि वंशजा ॥ ११ ॥

तत्र सूक्ष्मतरचूर्णचालनार्थं चालनीस्वरूपम् ।—

कर्णिकारस्य शाल्मल्या हरिजातस्य कम्बया ।
चतुरङ्गुलविस्तार-युक्तया निर्मिता शुभा ॥१२॥

कुण्डल्यरत्निविस्तारा छागचर्माभिवेष्टिता ।
वाजि-बालाम्बरानद्ध-तला चालनिकाऽपरा ॥
तया प्रचालनं कुर्य्याद्वस्तु सूक्ष्मतरं रजः ॥ १३ ॥

---

स्वल्पा वृत्यत्र स्वल्पा इत्यस्य कण्डनीपेषणीभ्यामुभाभ्यामेव सम्बन्धः, तेन स्वल्पा कण्डनी क्षुद्राकारोदूखलमूषलं तथा स्वल्पा पेषणी क्षुद्राकृतिपेषणशिला च । द्रोणीति ।—वर्तुलाकारद्रोणीसदृशपात्रविशेषाः । आयसा इति ।—तप्तखल्लार्थं लौहखल्लाः लौहनिर्मितखल्लदण्डाश्च । कटत्राणि कटतीति कटः वर्षणं तस्मात् त्रायते इति तानि वृष्ट्यादिनिवारणार्थमाच्छादनविशेषाः, यद्वा—कटम् औषधं त्रायते इति तानि औषधाच्छादनार्थं द्रव्यविशेषाः ; यद्वा—कटत्राणि कषायितचर्मखण्डानि इत्यर्थः । शलाका रससिन्दूरादिपाकार्थं लौहनिर्मितालौड़नीविशेषः । कुण्डली स्थाली-कटाहादिसंस्थापनार्थं तृणादिकृतवेष्टनीविशेषः । चालन्यास्त्रैविध्यमाह,—चालनी त्रिविधेति । तासु स्थूलद्रव्यचालनार्थं चालन्याः स्वरूपमाह, वैणवीभिरिति ।—वेणवीभिः वंशनिर्मिताभिः । गुणैः रज्जुभिः । तासु चूर्णचालनार्थं चालन्याः स्वरूप-माह,—चूर्णेति । तासु अतिसूक्ष्मचूर्णचालनार्थं चालन्याः स्वरूपमाह, कर्णिकार-स्येति ।—कर्णिकारस्य क्षुद्रारग्वधस्य । हरिजातस्य हरिः वंशः जातः यस्मात्तस्य वंशाङ्कुरस्य कम्बया वल्कलेन ; चतुरङ्गुलविस्तारयुक्तया इत्यस्य कम्बयेत्यनेनान्वयः ।

मूषा-मृत्तुष-कार्पास-वनोपलक-पिष्टकम् ।
त्रिविधं भेषजं धातु-जीव-मूलमयं तथा ॥
शिखित्रा गोवरश्चैव शर्करा च सितोपला ॥ १४ ॥

तत्र शिखित्रस्वरूपम् ।—

{ शिखित्राः पावकोच्छिष्टा अङ्गाराः कोकिला मताः ॥१५॥ }

तत्र कोकिलास्वरूपम् ।—

{ कोकिलाश्चेतिताङ्गारा निर्वाणाः पयसा विना ॥१६॥ }

तत्र उपलस्य पर्य्यायाः ।—

{ पिष्टकं छगणं छाणमुपलश्चोत्पलं तथा ।
गिरिण्डोपलसाठो च संशुष्कच्छगणाभिधाः ॥१७॥ }

काचायोमृद्वराटानां कूपिका चषकाणि च ॥ १८ ॥

तत्र कूपिकायाः पर्य्यायाः ।—

{ कूपिका कुपिका सिद्धा गोला चैव गिरिण्डिका ॥१९॥ }

कुण्डली चालन्या वेष्टनी । अरत्निविस्तारा प्रसारितकनिष्ठाङ्गुलिबद्धमुष्टिहस्त-प्रमाणायता ; चतुरङ्गुलविस्तृतकर्णिकारादिवल्कलनिर्मिता अरत्निविस्तारवेष्टनीगुम्फा छागचर्मगण्डिता अश्वपुच्छकेश-सूक्ष्मवस्त्ररचिततलदेशा सूक्ष्मतरद्रव्यचालनार्थमपरत्रिधा चालनीत्यर्थः । पिष्टकं तण्डुलपिष्टं "पिट्ठी" इति भाषा । त्रिविधं भेषजमिति ।—धातुमयं स्वर्णादिरूपं स्थावरं, जीवमयं क्षीरमूत्रपुरीषादिकं जङ्गमं, मूलमयं वनौषधादिकम् औद्भिदम् । शर्करा बालुका । सितोपला कठिनी "फुलखडी" इति भाषा । शिखित्रा-शब्दस्यार्थमाह, शिखित्रा इति ।—पावकोच्छिष्टाः अग्निना भुक्तावशिष्टाः, अप्रज्वलिताः किन्तु अग्निसंसृष्टाः इत्यर्थः, अङ्गाराः अङ्गारस्वरूपाः कोकिलाः शिखित्राः शिखिनम् अनलं त्रायन्ते पालयन्ति प्रदीपनेन रक्षन्ति इति तादृशाः ज्वलदङ्गाराः इत्यर्थः, मताः । शिखित्रलक्षणे कोकिला उक्ताः, अतः कोकिला-शब्दस्यार्थमाह, कोकिला इति ।—चेतिताङ्गाराः तप्ताङ्गाराः, पयसा विना स्वयं निर्वाणाः शान्ताः चेत् ते अङ्गाराः कोकिलाः मताः ; कोकिलाः "कयला" इति भाषा । शुष्कगोवरस्य पर्य्यायमाह, पिष्टकमिति ।—पिष्टकाद्युपलसाठ्यन्ताः सप्त शब्दाः संशुष्कच्छगणाभिधाः शुष्कगोमयस्य पर्य्याया इत्यर्थः । कूपिकाचषकयोः स्वरूपमाह, काचेति ।—कूपिका "शिशि" "बोतल"

तत्र चषकस्य पर्य्यायाः।—

चषकश्च कटोरी च वाटिका खारिका तथा।
कञ्चोलो ग्राहिका चेति नामान्येकार्थकानि हि ॥२०॥
शूर्पादिवेणुपात्राणि चुद्रशिप्राश्च शङ्खिकाः।
क्षुरप्राश्च तथा पाक्यं यच्चान्यत्तत्र युज्यते ॥
पालिका कर्णिका चैव शाकच्छेदनशस्त्रकाः ॥२१॥

अथ रससाधनाङ्गानामर्चनाया: कर्त्तव्यतानिर्देशः।—

शालासम्मार्जनाद्यं हि रसपाकान्तकर्म यत्।
तत्रोपयोगि यच्चान्यत्तत् सर्वं परविद्यया ॥ २२ ॥
अघोरसाङ्कुशया सर्वं मन्त्रयित्वा समर्चयेत्।
अन्यथा तद्गतं तेजः परिगृह्णन्ति भैरवाः ॥ २३ ॥

अथ रसकर्मणि यादृशा वैद्या नियोज्याः तत्कथनम्।—

रससंवित्तरा वैद्या निघण्टुज्ञाश्च वार्त्तिकाः।
सर्वदेशजभाषाज्ञाः सङ्ग्राह्यास्तेऽपि साधकैः ॥ २४ ॥

---

इति भाषा। चषकं पानपात्रं, "बाटी" "ग्लास" इति प्रसिद्धम्। कूपिकायाः पर्य्यायमाह,—कूपिकेति। चषकस्य पर्य्यायमाह,—चषकमिति। शूर्पं शस्यमल-धूल्याद्यपनयनार्थे वंशशलाकादिनिर्मितः करिकर्णाकारपात्रविशेषः। क्षुद्राशिप्रा, क्षुद्राकाराः शुक्तयः। शङ्खिकाः क्षुद्रशङ्खाः। "क्षुद्रशिप्राश्च शङ्खिकाः" इत्यत्र "सद्राश्चिप्राश्च शङ्खिकाः" इति पाठे—क्षुद्राकारा मन्दगामिन्यश्च शङ्खिकाः शम्बुका इत्यर्थः। पाक्यम् औषधपाकसम्पादनार्थं पात्रविशेषः पांशुलवणं वा। पालिका पाकपात्रविशेषः। कर्णिका अस्त्रविशेषः। शाकच्छेदनशस्त्रकाः शाकानां पत्रपुष्प-फलादीनां छेदनार्थं शस्त्रविशेषाः ॥ ५—२१ ॥

रससाधनोपयोगिद्रव्याणामभिमन्त्रणस्य कर्त्तव्यतामाह, शालेति।—गृहमार्जन-मारभ्य रसपाकान्तं यत् कर्म, द्रव्याणि च यानि तत्र उपयोगीनि तानि सर्वाणि परमगुह्यघोरसाङ्कुशाभन्त्रेण अभिमन्त्र्य पूजयेत् तेन च रसकर्म निर्विघ्नं सिध्यति। अन्यथा अपूजने। तद्गतं द्रव्यनिष्ठम्। भैरवाः शिवानुचरभेदाः ॥ २२।२३ ॥

रससाधकेन तत्कर्मसाधनार्थं यादृशा वैद्याः सहायत्वेन ग्राह्याः तदाह, रस-

अथ रसपाककाले मन्त्रजपस्य कर्त्तव्यतानिर्देशः ।—

रसपाकावसानं हि सदाऽघोरञ्च जापयेत् ॥ २५ ॥

अथ परिचारकलक्षणम् ।—

सोद्यमाः शुचयः शूरा बलिष्ठाः परिचारकाः ॥ २६ ॥

अथ रसकर्मयोग्यस्य वैद्यस्य लक्षणम् ।—

धर्मिष्ठः सत्यवान् विद्वान् शिवकेशवपूजकः ।
सदयः पद्महस्तश्च स योज्यो रसवैद्यके ॥ २७ ॥

अथ पद्महस्तवैद्यलक्षणम् ।—

पताका-कुम्भ-पाथोज-मत्स्य-चापाङ्कपाणिकः ।
अनामाधःस्थ-रेखाङ्कः स स्यादमृतहस्तवान् ॥ २८ ॥

अथ वर्जनीयवैद्यलक्षणम् ।—

अदैशिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ।
कृष्णरेखा-करो वैद्यो दग्धहस्तः स उच्यते ॥ २९ ॥

---

संवित्तरा इति ।—रससंवित्तराः रसविषये अतीव ज्ञानिनः । "रससंवित्तरा वैद्याः" इत्यत्र "रससंहितया वैद्याः" इति पाठे—रसशास्त्राभिज्ञाः इत्यर्थः, "धान्येन धनवान्" इतिवत् तृतीया । वार्त्तिकाः "उक्तानुक्तदुरुक्तार्थ-व्यक्तकारि तु वार्त्तिकम्" इत्युक्तलक्षण सूत्रानुक्ताद्यर्थाविष्कारके शास्त्रविशेषे निपुणाः । एतेन रससंवित्तरा इत्यादिविशेषण-सतुष्टयेन सर्वशास्त्रदर्शिनो विपश्चितः वैद्यस्य रससाधने सहायीभवितुमधिकारः इति प्रदर्शितम् ॥ २४ ॥

रसस्य पाकशेषपर्य्यन्तं मन्त्रजपस्य कर्त्तव्यतामाह, रसपाकेति ।—अघोरम् अघोरमन्त्रम् ॥ २५ ॥

परिचारकलक्षणमाह, सोद्यमा इति ।—सुगमम् ॥ २६ ॥

रससाधनयोग्यस्य वैद्यस्य लक्षणं निर्दिशति, धर्मिष्ठ इति ।—पद्महस्तः अमृतहस्तः पीयूषपाणिः इत्यर्थः ॥ २७ ॥

पद्महस्तं विवृणोति, पताकेति ।—पाथोजं पद्मम् । अनामेति ।—अनामिकाया अङ्गुल्या अधोदेशपर्य्यन्तमूर्द्ध्वरेखाचिह्नितकर इत्यर्थः । अमृतहस्तवान् अमृतहस्त इत्यपरपर्य्यायक-पद्महस्तवान्, पीयूषपाणिरित्यर्थः ॥ २८ ॥

रससाधनाधिकारिपद्महस्तपुरुषनिर्देशप्रसङ्गेन अनधिकारिदग्धहस्तपुरुषलक्षण·

अथ निधिसाधने नियोज्यपुरुषलक्षणम् ।—

भूतनिग्रहमन्त्रज्ञास्ते योज्या निधिसाधने ॥ ३० ॥

अथ बलिसाधने नियोज्यपुरुषलक्षणम् ।—

बलिष्ठाः सत्यवन्तश्च रक्ताक्ताः कृष्णविग्रहाः ।
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ॥ ३१ ॥

अथ रसायने नियोज्यपुरुषलक्षणम् ।—

निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ।
यमिनः पथ्यभोक्तारो योजनीया रसायने ॥ ३२ ॥

अथ धातुवादे नियोज्यपुरुषलक्षणम् ।—

धनवन्तो वदान्याश्च सर्वोपस्करसंयुताः ।
गुरुवाक्यरता नित्यं धातुवादेषु ते शुभाः ॥ ३३ ॥

---

माह, परदेशिक इति ।—परदेशस्य निन्दितदेशस्य म्लेच्छादिभूमेरिति यावत्, अयमिति म्लेच्छादिदेशवासीत्यर्थः, कुग्रामीति वा । कृष्णरेखाकरः कृष्णवर्णरेखाङ्कितकरः पुरुषः । एवम्भूतः पुरुषः दम्भकः अतः वर्जनीयः इत्याशयः ॥ २९ ॥

अधिकारिनिर्देशप्रसङ्गेन रससाधनार्थं यादृशि कर्मणि यद्विधानां पुंसामधिकारः तान् विवरीष्यन् आदौ निधिसाधनार्हानाह, भूतेति ।—निधीनां पद्मशङ्खादीनां साधने आयत्तीकरणे इत्यर्थः । रसकर्मणो बहुव्ययसाध्यत्वात् तदर्थमङ्कुशार्थं निधि-साधनप्रयोजनम्; भूताश्च तत्र विघ्नकरा भवन्ति अतस्तदुत्सादनार्थं भूताभिज्ञानां प्रयोजनम् इति बोध्यम् ॥ ३० ॥

बलिसाधने नियोज्यान् पुरुषानाह, बलिष्ठा इति ।—भूतत्रासनविद्याः भूतेभ्यः त्रासनं भयप्रदर्शनं विद्या येषां ते भूतापसारकाः । बलिसाधने देव्यादिसमीपे उपहारीकृतद्रव्याणां रक्षणार्थम्; विविधशुभकार्येषु भूतानां विघ्नोत्पादकत्वा-दिति ॥ ३१ ॥

रसायनसाधने नियोज्यानाह, निर्लोभा इति ।—यमिनः इन्द्रियनिग्रह-शीलाः ॥ ३२ ॥

धातुवादे नियोज्यानाह, धनवन्त इति ।—वदान्याः दानशीलाः । सर्वोपस्कर-संयुताः सर्वोपस्करः समस्तोपकरणं तेन संयुताः सर्वोपकरणवन्तः । धातुवादेषु स्वर्णरौप्यादिधातुसाधनक्रियासु ॥ ३३ ॥

अथ भेषजाहरणे नियोज्यपुरुषलक्षणम्।—

तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः।

नानाविषयभाषाज्ञास्ते मता भेषजाहृतौ॥ ३४॥

अथ रसविद्यायां लब्धव्यसाफल्यस्य लक्षणम्।—

शुचीनां सत्यवाक्यानामास्तिकानां मनस्विनाम्।

सन्देहोज्झितचित्तानां रसः सिध्यति सर्वदा॥ ३५॥

अथ रससिद्धसाधकस्य कर्त्तव्यनिर्देशः।—

दशाष्टक्रियया सिद्धो रसोऽसौ साधकोत्तमः।

हा रसो नष्ट इत्युक्त्वा सेवेतान्यत्र तं रसम्॥ ३६॥

अथ रससिद्धेः फलम्।—

रससिद्धो भवेन्मर्त्यो दाता भोक्ता न याचकः।

जरामुक्तो जगत्पूज्यो दिव्यकान्तिः सदा सुखी॥ ३७॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये

रसशालाप्रकरणं नाम सप्तमोऽध्यायः॥ ७॥

भेषजाहरणे नियोज्यानाह, तत्तदिति।—वञ्चनोज्झिताः साध्वाचाराः। नानाविषयभाषाज्ञाः नानादेशीयभाषाभिज्ञाः॥ ३४॥

अवश्यप्रयत्नं रससाधकं निर्दिशति, शुचीनामित्यादि।—सन्देहोज्झितचित्तानां सिद्धिलाभे निश्चितमनसाम्॥ ३५॥

रससिद्धौ कर्त्तव्यान्तरमाह, दशाष्टक्रिययेति।—यथायथं स्वेदनाद्यष्टादशविध-कर्मणा रसः रसकर्म, सिद्धः सफलः जरामरणादिनिवारकशक्तिसम्पन्न इत्यर्थः, चेत्, तदा असौ साधकोत्तमः हा खेदे, रसः नष्टः मृतः इत्युक्त्वा स्थानान्तरे पुनरपि रसकर्म आचरेत्। अत्र स्वप्रयत्नसाफल्यजनितहर्षज्ञापकाव्ययप्रयोगस्यौचित्येऽपि यत् "हा" इति विषादार्थकः शब्दः प्रयुक्तः, तत् देवांशसम्भूतस्य महाप्रभावस्य रसस्य एवं स्वेदनादि-कदर्थनाजनितस्वरूपनाशनरूपमरणात् सदयस्य विपश्चितः सहृदयत्वज्ञापनार्थमिति बोध्यं, यथा शत्रुं विनाश्यापि श्रीरामयुधिष्ठिरादीनां विषादः। अथवा हा इति विस्मये। "सिद्धो रसः" इत्यत्र "सिद्धे रसे" इति पाठे—रसे सिद्धे सति॥ ३६॥

रससिद्धस्य गुणवत्तामाह, रससिद्ध इति।—सुगमम्॥ ३७॥

इति रसरत्नसमुच्चयबोधिन्यां सप्तमोऽध्यायः॥ ७॥

# अथाष्टमोऽध्यायः ।

## अथ परिभाषा ।—

### अथ परिभाषायाः प्रयोजनम् ।—

कथ्यते सोमदेवेन मुग्धवैद्यप्रवृत्तये ।
परिभाषा रसेन्द्रस्य शास्त्रैः सिद्धैश्च भाषिता ॥ १ ॥

### अथ धन्वन्तरिभागः ।—

अर्द्धं सिद्धरसस्य तैलघृतयोर्लेहस्य भागोऽष्टमः
संसिद्धाखिललोहचूर्णवटकादीनां तथा सप्तमः ।
यो दीयेत भिषग्वराय गदिभिर्निर्दिश्य धन्वन्तरिं
सर्वारोग्यसुखाप्तये निगदितो भागः स धान्वन्तरः ॥ २ ॥

---

शास्त्रकृतामियं शैली यत् ते सुखग्रहणार्थं नातिविस्तरार्थञ्च केषाञ्चित् शब्दानाम् अवयवार्थमनादृत्य समुदायार्थज्ञापनाय परिभाषानाम्नीं विशिष्टसंज्ञां विदधति, तज्ज्ञानमन्तरेण च शास्त्रार्थो दुर्बोधो भवति, अतस्तां निर्देष्टुम् अष्टमाध्यायमारभते ; तत्र स्वल्पज्ञानां बोधसौकर्य्यार्थं सोमदेवोक्तां रसशास्त्रीयां परिभाषामाह, कथ्यते इति ।—सोमदेवेन तदाख्यरसतन्त्रकर्त्रा । मुग्धेति ।—अनभिज्ञभिषजां बोधसौकर्य्यार्थम् । परिभाषा अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशकः मानादिज्ञापकश्च ग्रन्थविशेषः ; यदुक्तं परिभाषाप्रदीपे—"ध्वान्ते पथि चरिष्णूनां यथा दीपः प्रदर्शकः । नानाशास्त्राज्ञभिषजां सङ्केतोऽयं तथा भवेत् ॥ अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिकाः । परिभाषाः प्रकथ्यन्ते दीपीभूताः सुनिश्चिताः ॥" इति । अत्र तु रसकर्मणि रसविद्भिः विहितस्य समुदायार्थबोधकसंज्ञाविशेषस्य अर्थप्रकाशिका परिभाषा इत्यर्थो बोध्यः । सिद्धैः योगसिद्धपुरुषैः ॥ १ ॥

भिषजां धन्वन्तर्य्यंशत्वात् धन्वन्तरिप्रसादनार्थं रोगिभिः वैद्याय यस्य यस्यौषधस्य धन्वन्तरिभाग इति नाम्ना प्रसिद्धः यावान् यावानंशः दातव्यः तदाह, अर्द्धमिति ।—सिद्धरसस्य जारणादिक्रियानुष्ठानेन जरामरणादिविनाशकशक्तिसम्पन्नस्य रसस्य अर्द्धं प्रस्तुतौषधापेक्षया अर्द्धांशम् ; तैलघृतयोरित्यत्रापि अर्द्धमित्यनेन सम्बन्धः ;

अथ रुद्रभागः।—

भैषज्यक्रीणितद्रव्य-भागोऽप्येकादशो हि यः।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स उच्यते॥ ३॥

अथ विश्वासघातकवैद्यलक्षणम्।—

प्रगृह्याधिकरुद्रांशं योऽसमीचीनमौषधम्।
दापयेल्लुब्धधीर्वैद्यः स स्याद्विश्वासघातकः॥ ४॥

अथ कज्जली।—

धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते॥ ५॥

अथ रसपङ्कः।—

सद्रवा मर्दिता सैव रसपङ्क इति स्मृतः॥ ६॥

---

तेन सिद्धरसस्य षडं तैलघृतयोरपि षडं देयमिति बोध्यम्; एवमष्टम सप्तमभागावपि एतत्तन्लेहाद्यपेक्षया बोध्यौ। एवंविधांशग्रहणञ्च गुरुविप्रसिद्धतपस्विदुर्गतानाम् औषधप्रस्तुतासमर्थानां स्वभेषजैः चिकित्साकरणार्थं बोद्धव्यं, यदुक्तं चरके—"गुरु-विप्रसिद्धतपस्विदुर्गतानां स्वभेषजैरुपाचरेत्" इति॥ २॥

रुद्रस्य तन्त्रकर्तृत्वात् तदनुगामिभिर्भिषग्भिः रुद्रप्रसादसम्पादनार्थं रुद्रभाग इति नाम्ना प्रसिद्धः अंशः यथा ग्राह्यः तदाह, भैषज्येति।—अत्र वणिग्भ्यः भेषजार्थं क्रीणितद्रव्याणां य एकादशो भागः इत्येवमन्वयः कार्यः; किञ्च "सविशेष्यं हि विशेषणे विशेष्यं बाधित्वाऽपि विशेषणमुपसङ्क्रामति" इति न्यायात् शिखी विनष्टः पक्षी न नष्टः इत्येवंदिशा भैषज्यक्रीणितद्रव्यस्य एकादशो भाग इति योजनीयम्। "भैषज्यक्रीणितं द्रव्यं भागः" इति पाठे—भैषज्यार्थं क्रीणीतं यत् द्रव्यं तस्य य एकादशो भागः इत्येवमन्वयः। श्लोकोऽयं प्रक्षिप्त इति केचित्॥ ३॥

निन्दनीयवैद्यमाह, प्रगृह्येति।—अधिकरुद्रांशम् एकादशभागादप्यधिकम्। दापयेत्, वणिग्भिः रोगिभ्य इति शेषः। यः वणिग्भ्यः अधिकरुद्रांशमुत्कोचस्वरूपं गृहीत्वा अपकृष्टं द्रव्यमुत्कृष्टमित्युक्त्वा तैः रोगिभ्यो दापयेदित्यर्थः॥ ४॥

कज्जलीमाह, धातुभिरिति।—धातुभिः स्वर्णादिभिः। गन्धकाद्यैरित्यत्र आदि-पदेन अभ्रादीनां ग्रहणं बोध्यम्॥ ५॥

अथ पिष्टी।—

अर्कांशतुल्याद्रसतोऽथ गन्धान्निष्कार्द्धतुल्यात्त्रुटिशोऽधिखल्ले।
अर्कातपे तीव्रतरे विमर्द्यात् पिष्टी भवेत् सा नवनीतरूपा॥७॥

मतान्तरे पिष्टी।—

खल्ले विमर्द्य गन्धेन दुग्धेन सह पारदम्।
पेषणात् पिष्टतां याति सा पिष्टीति मता परैः॥ ८॥

अथ पातनपिष्टी।—

चतुर्थांशसुवर्णेन रसेन घृष्टपिष्टिका।
भवेत् पातनपिष्टी सा रसस्योत्तमसिद्धिदा॥ ९॥

अथ स्वर्णरौप्ययोः क्रष्टी।—

रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम्।
समुत्थितञ्च बहुशः सा क्रष्टी हेमतारयोः॥ १०॥

रसपङ्कमाह, सद्रवेति।—सद्रवा केनचिद्द्रवेण सहिता। सैव कज्जली एव॥ ६॥

पिष्टीमाह, अर्कांशतुल्यादिति।—अर्कांशः द्वादशभागः, स च निष्कार्द्धापेक्षया इति बोध्यं, तेन सार्द्धकर्षो रसस्येति। निष्कार्द्धतुल्यात् माषद्वयमितात्। त्रुटिशः खण्डशः। अधिखल्ले खल्लमध्ये। अत्र तुल्यादिति प्रयोगद्वये ल्यब्लोपे पञ्चमी, तेन अर्कांशतुल्यं निष्कार्द्धतुल्यञ्च गृहीत्वा इत्येवं योजनीयम्॥ ७॥

पिष्टीं मतान्तरमाह, खल्ले इति।—सुगमम्॥ ८॥

पातनपिष्टीमाह, चतुर्थांशेति।—रसापेक्षया चतुर्थांशसुवर्णेन इत्यर्थः। घृष्टपिष्टिका आदौ घृष्टा पश्चात् पिष्टिका पिष्टीकृता। पातनपिष्टी ऊर्द्ध्वपातनार्थं पिष्टी॥ ९॥

क्रष्टीलक्षणमाह, रूप्यमिति।—जातरूपं सुवर्णम्। समुत्थितमिति अन्तर्भूतण्यर्थप्रयोगः, तेन समुत्थापितं शोधितमित्यर्थः, ऊर्द्ध्वपातनायन्त्रे साधितमित्यर्थो वा। सा उत्थापनक्रिया। क्रष्टीति।—स्वर्णरौप्ययोः सा क्रिया क्रष्टीति बोध्यम्। रसादिभिः सह स्वर्णं वा रौप्यं वा केनचिन्मारकद्रव्येण सम्मर्द्य बहुशः आतपे शोषयेत्, अथवा—रसगन्धादिभिर्मारितं स्वर्णं रौप्यं वा बहुवारम् ऊर्द्ध्वपातनयन्त्रेण समुत्थापयेत् सा क्रिया क्रष्टी बोध्या॥ १०॥

अथ कृष्ट्याः कार्य्यम् ।—

कृष्टीं क्षिपेत् सुवर्णान्तर्न्नं वर्णो क्षीयते तथा ॥ ११ ॥

अथ स्वर्णकृष्टीकृतवीजस्य कार्य्यम् ।—

स्वर्णकृष्ट्या कृतं वीजं रसस्य परिरञ्जनम् ॥ १२ ॥

अथ वरलोहकम् ।—

ताम्रं तीक्ष्णसमायुक्तं द्रुतं निक्षिप्य भूरिशः ।
स-गन्ध-लकुचद्रावे निर्गतं वरलोहकम् ॥ १३ ॥

अथ हेमरक्ती ।—

तेन रक्तीकृतं स्वर्णं हेमरक्तीत्युदाहृतम् ॥१४॥

अथ हेमरक्त्याः कार्य्यम् ।—

निक्षिप्ता सा द्रुते स्वर्णे वर्णोत्कर्षविधायिनी ।
तारस्य रञ्जनी चापि वीजरागविधायिनी ॥ १५ ॥

---

कृष्ट्याः. कार्य्यमाह, कृष्टीमिति ।—पूर्वरीत्या कृतया सुवर्णरौप्ययोरन्यतरकृष्ट्या सह सुवर्णं सन्माद्य पुटनेन स्वर्णस्य वर्णान्यथा न जायते ॥ ११ ॥

स्वर्णकृष्टीकृतवीजस्य कार्य्यमाह, स्वर्णकृष्ट्येति ।—वीजं "निर्वापणविशेषेण" इत्यादिना वक्ष्यमाणलक्षणः धातुविशेषाणां विचित्रसंस्कारविशेषः । उक्तप्रकारेणैव कृतस्वर्णकृष्टीनिर्मितं वीजं पारदं रञ्जयेत् ॥ १२ ॥

वरलोहप्रस्तुतप्रकारमाह, ताम्रमिति ।—तीक्ष्णसमायुक्तं तीक्ष्णलोहसंयुक्तम् । भूरिशः सप्तवारानित्यर्थः । तीक्ष्णलोह ताम्रञ्च अग्निसन्तापेन द्रवीकृत्य गन्धक-चूर्णमिश्रितलकुचरसे निक्षिपेत्, घनीभूतं तद्द्वयमुत्तोल्य पुन द्रावयित्वा पूर्वरसे निक्षिपेत, एवं सप्तवारम् । "द्रुतम्" इत्यत्र "मृतम्" इति पाठे,—मृतं भस्मीभूतम् । एवं प्रक्रियया तस्मात् उत्कृष्टलोह निर्गमिष्यतीति । १३ ॥

हेमरक्तीमाह, तेन रक्तीकृतमिति ।—तेन वरलोहसंयोगेन रक्तीभूतं सुवर्णं हेमरक्ती इति नाम्ना ख्यातम् ॥ १४ ॥

हेमरक्त्याः कार्य्यमाह, निक्षिप्तेति ।—सा हेमरक्ती । तारस्य रौप्यस्य । वीजरागविधायिनी निर्वापणविशेषेण इत्यादिना वक्ष्यमाणलक्षणस्य विचित्रसंस्कार-क्लिष्टधातुविशेषस्य रञ्जनी ॥ १५ ॥

अथताररञ्जी।—

एवमेव प्रकर्त्तव्या ताररञ्जी मनोहरा।
रञ्जनी खलु रूप्यस्य बीजानामपि रञ्जनी॥ १६॥

अथ दलम्।—

मृतेन वा बद्धरसेन वाऽन्यल्लोहेन वा साधितमन्यलोहम्।
सितञ्च पीतत्वमुपागतं तद्दलं हि चन्द्रानलयोः प्रसिद्धम्॥ १७॥

अथ अन्यविधदलम्।—

आ-मास-कृतबद्धेन रसेन सह योजितम्।
साधितं वाऽन्यलोहेन सितं पीतञ्च तद्दलम्॥ १८॥

अथ शुल्बनागम्।—

माक्षिकेण हतं ताम्रं दशवारं समुत्थितम्।
तद्वद्विशुद्धनागं हि द्वितयं तच्चतुष्पलम्॥ १९॥

ताररञ्जीमाह, एवमिति।—एवं हेमरञ्जीप्रक्रियामनुसृत्य इत्यर्थः। ताररञ्जी रौप्यरञ्जी॥ १६॥

दलमाह, मृतेनेति।—बद्धरसेन निगडीकरणक्रियया संयमितसूतेन। अन्यल्लोहेन अष्टलोहानामन्यतमलोहेन; अन्यत् लोहमन्यल्लोहमिति अलुक्-समासः, तेन। अन्य-लोहम् अष्टलोहानां यत् किञ्चिदेकं लोहमित्यर्थः। चन्द्रानलयोः दलमिति सितत्व-पीतत्वप्राप्तलोहविशेषस्य संज्ञाविशेषः। मृतमूतादीनामन्यतमेन साधितं यत्किञ्चिदेकं लोहं यदा सितत्वं पीतत्वं वा प्राप्नोति तदा सितपीतान्यतरत्वमुपागतं तत् चन्द्रानलयोः दलमिति संज्ञां लभते, एवञ्च सितत्वमुपागतं लोहं चन्द्रदलं पीतत्वमुपागतञ्च लोह-मनलदलमिति बोध्यम्॥ १७॥

दलक्रियाया क्रमान्तरमाह, आ-मासेति।—आ मास-कृतबद्धेन मासं यावत् कृतनिगडीकरणक्रियेण, मासं यावत् निगडीकरणक्रियया संयमितेनेत्यर्थः। "आ-मास" इत्यत्र "आवास" इति पाठे—"सर्पाक्षी चीरिणी" इत्यादिनोक्तनियामक-गणो सम्यगावासनद्वारा नियमितेनेत्यर्थः। योजितं मिश्रयित्वा साधितमित्यर्थः। तत् यत्किञ्चिल्लोहम्॥ १८॥

गोलाञ्जनहतं भूयः सप्तवारं समुत्थितम्।
इति संसिद्धमेतद्धि शुल्वनागं प्रकीर्त्त्यते ॥ २० ॥

अथ शुल्वनागगुणाः।—

साधितस्तेन सूतेन्द्रो वदने विधृतो नृणाम्।
निहन्ति मासमात्रेण मेहव्यूहमशेषतः ॥ २१ ॥
पथ्याशनस्य वर्षेण पलितं वलिभिः सह।
दृढदृष्टिर्लसत्पुष्टिः सर्वारोग्यसमन्वितः ॥ २२ ॥

अथ पिञ्जरी।—

लोहं लोहान्तरे चिप्तं ध्मातं निर्वापितं द्रवे।
पाण्डुपीतप्रभं जातं पिञ्जरीत्यभिधीयते ॥ २३ ॥

अथ चन्द्रार्कम्।—

भागाः षोड़श तारस्य तथा द्वादश भास्वतः।
एकत्राऽऽवर्त्तितास्तेन चन्द्रार्कमिति कथ्यते ॥ २४ ॥

अथ निर्वाहणम्।—

साध्यलोहेऽन्यलोहं चेत् प्रक्षिप्तं वङ्कनालतः।
निर्वापणन्तु तत् प्रोक्तं वैद्यैर्निर्वाहणं खलु ॥ २५ ॥

---

शुल्वनागमाह, माक्षिकेणेति।—स्वर्णमाक्षिकेण सह मारितं ताम्रं तथा सीसकञ्च पृथक् पृथक् दशवारं समुत्थापितं कृत्वा तयोः प्रत्येकं चतुष्पलम् आदाय एकीकुर्य्यात् ततः तदुभयं भूयः गोलाञ्जनेन सह भस्मीकृत्य सप्तवारं समुत्थापयेत्, एवञ्च तयोः शुल्वनाग इति संज्ञा जायते इति ॥ १९।२० ॥

शुल्वनागस्य गुणमाह, साधित इति।—साधितः मारितः। वदने विधृतः, गुटिकां कृत्वेति शेषः ॥ २१।२२ ॥

पिञ्जरीमाह, लोहमिति।—किमपि द्रुतं लोहमन्यतरस्मिन् द्रुते लोहे निक्षिप्य त्रिफलाद्यन्यतरद्रावे निर्वापयेत्, एवञ्च पाण्डुपीतप्रभं तल्लोहं पिञ्जरीसंज्ञां प्राप्नोति इत्यर्थः ॥ २३ ॥

चन्द्रार्कसंज्ञामाह, भागा इति।—भास्वतः ताम्रस्य। एकत्राऽऽवर्त्तिताः एकस्मिन्नेव पात्रे युगपत् द्रवीकृत्य आलोड़िताः। तेन तथा आलोड़नेन ॥ २४ ॥

अथ निर्वापणस्य मानानिर्देशः ।—

क्षिपेन्निर्वापणं द्रव्यं निर्वाह्ये समभागिकम् ।
आवाह्यं वापनीये च भागे दृष्टे च दृष्टवत् ॥ २६ ॥

अथ वारितरलोहलक्षणम् ।—

मृतं तरति यत्तोये लोहं वारितरं हि तत् ॥ २७ ॥

अथ रेखापूर्णाख्यमृतलोहलक्षणम् ।—

अङ्गुष्ठतर्जनीघृष्टं यत्तद्रेखान्तरे विशेत् ।
मृतलोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ॥ २८ ॥

अथ अपुनर्भवलोहलक्षणम् ।—

गुड-गुञ्जा-सुखस्पर्श-मध्वाज्यैः सह योजितम् ।
नाऽऽयाति प्रकृतिं ध्मानादपुनर्भवमुच्यते ॥ २९ ॥

---

निर्वाहणमाह, साध्यलोहे इति ।—साध्यलोहे मारणीयलोहे । वङ्कनालतः वङ्कनालाख्ययन्त्रविशेषेण । वङ्कनाललक्षणस्त्वग्रे दशमाध्याये "मूषामध्ये:" इत्यादिना "दृढध्मानाय कीर्त्तितम्" इत्यन्तेन वक्ष्यति । निर्वापणं मारणलोहम् । निर्वाहणं संज्ञाविशेषः । मारणार्हलोहे तत्तल्लोहमारकं लोहान्तरं यदि वङ्कनालेन प्रक्षिपेत् तर्हि तन्मारकं लोहं निर्वाहणसंज्ञां लभते ॥ २५ ॥

निर्वापणद्रव्यस्य मानमाह, क्षिपेदिति ।—निर्वापणं मारणद्रव्यम् । निर्वाह्ये सम्पादनीये, साध्ये इति यावत्, लोहादिद्रव्ये इति शेषः । साध्यलोहे मारणद्रव्यं साध्यलोहसमभागं प्रक्षेप्यम् ; अथवा वापनीये प्रक्षेपयोग्ये भागे माने दृष्टे सति, उपदेष्टृसकाशे इति शेषः, दृष्टवत् यथा दृष्टं तथा, प्रक्षिप्येति शेषः, आवाह्यम् आ सम्यक् वाह्यं सम्पादनीयम् । "आवाह्यम्" इत्यत्र "आवाप्यम्" इति पाठे—गुरुसकाशे यथा दृष्टं तथा प्रक्षेप्यम् इति ॥ २६ ॥

वारितरलोहलक्षणमाह, मृतमिति ।—वारिणि जले तरति प्लवते भासते इति यावत्, इति वारितरम् ॥ २७ ॥

रेखापूर्णलोहलक्षणमाह, अङ्गुष्ठेति ।—तद्रेखान्तरे तयोः तर्जन्यङ्गुष्ठयोः रेखान्तरे रेखावकाशे, अङ्गुष्ठतर्जनीभ्यां घर्षणे कृते यत् लोहं तयोरङ्गुल्योः रेखासमूहः अङ्कितौ भवेदित्यर्थः ॥ २८ ॥

निरुत्थलोहलक्षणमाह, गुडेति ।—सुखस्पर्शः टङ्कणं, निरुत्थीकारकनिरूपणकर्त्रे

अथ ऊनमलक्षणम् ।—

तस्योपरि गुरुद्रव्यं धान्यञ्चोपनयेद्ध्रुवम् ।
हंसवत्तीर्य्यते वारिण्यूनमं परिकीर्त्तितम् ॥ ३० ॥

अथ निरुत्थलोहलक्षणम् ।—

रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ॥ ३१ ॥

अथ बीजलक्षणम् ।—

निर्वापणविशेषेण तत्तद्वर्णं भवेद्यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ॥ ३२ ॥

अथ उत्तरणम् ।—

इदमेव विनिर्दिष्टं वैद्यैरुत्तरणं खलु ।
संसृष्टलोहयोरेक-लोहस्य परिनाशनम् ॥ ३३ ॥

---

टङ्कणशब्दग्रहणात्, यदुक्तं रसेन्द्रसारे—"मधुसर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा । मित्रपञ्चकमेतत्तु गदितं धातुमेलने ॥" इति । मित्रपञ्चकोक्तगुग्गुलोः कार्य्यमत्र गुडेन सम्पादनीयमिति । प्रकृतिं स्वरूपम् । अपुनर्भवम् अपुनरुत्थानं, निरुत्थमिति यावत् ॥ २९ ॥

ऊनमाख्यमृतलोहलक्षणमाह, तस्येति ।—तस्य उक्तप्रकारेण मृतलोहस्योपरि किमपि भारवद्द्रव्यं धान्यञ्च संस्थाप्य जले निक्षिप्ते सति तत् तरति चेत् ऊनमाख्यं तल्लोहं ज्ञेयम् ॥ ३० ॥

निरुत्थस्य लक्षणान्तरमाह, रौप्येणेति ।—रौप्यं लोहञ्च एकत्र संस्थाप्य भस्त्रया ध्मापनेन यदि परस्परं मिश्रीभवेत् तदाऽपि निरुत्थं ज्ञेयम् ॥ ३१ ॥

बीजमाह, निर्वापणेति ।—पूर्वनिर्दिष्टसाध्यलोहे तत्तल्लोहमारकान्यलोहनिक्षेप-रूपनिर्वाहणाख्यसंस्कारविशेषेण यदा साध्यलोहं प्रक्षिप्तलोहवर्णं भवेत्, तदा मृदुलं सुखस्पर्शं, चित्रसंस्कारम् आहितापूर्वगुणान्तरं तत् बीजमिति ज्ञेयम् ॥ ३२ ॥

उत्तरणमाह, इदमिति ।—इदं संसृष्टलोहयोरित्यादिना वक्ष्यमाणरूपमित्यर्थः । उत्तरणमिति संज्ञाविशेषः । संसृष्टेति ।—मिश्रितलोहयोः एकलोहस्य परिनाशनं ध्मापनादिक्रियाविशेषेण एकस्मात् अन्यत् पृथक्कृत्य भस्मीकरणम्, एकस्मात् अन्यस्य बहिर्निष्काशनं वा ॥ ३३ ॥

अथ ताडनम् ।—

प्रध्मातं वङ्कनालेन तत्ताड़नमुदाहृतम् ॥ ३४ ॥

अथ धान्याभ्रलक्षणम् ।—

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्धस्ताद्धान्याभ्रमिति कथ्यते ॥ ३५ ॥

अथ सत्त्वलक्षणम् ।—

क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतः सारः सत्त्वमित्यभिधीयते ॥ ३६ ॥

अथ एककोलीसकलक्षणम् ।—

कोष्ठिका-शिखरापूर्णैः कोकिलैर्ध्मानयोगतः ।
मूषाकण्ठमनुप्राप्तै-रेककोलीसको मतः ॥ ३७ ॥

अथ द्रावणादिकर्मसाधने काष्ठनिर्देशः ।—

द्रावणे सत्त्वपाते च माधुकाः खादिराः शुभाः ।
दृद्रावे वंशजास्ते तु स्वेदने वादराः शुभाः ॥ ३८ ॥

ताडनमाह, प्रध्मातमिति ।—तत् धमनक्रियानिष्पन्नं संसृष्टलोहयोरेक-लोहम् ॥ ३४ ॥

धान्याभ्रमाह, चूर्णाभ्रमिति ।—व्याख्यातमेतत् द्वितीयाध्याये ॥ ३५ ॥

सत्त्वमाह, क्षारेति ।—क्षारः टङ्कणं लोहशोधकत्वात्, अम्लः काञ्जिकादिक, द्रावकः "गुञ्जाटङ्कणमध्वाज्यगुडाः द्रावकपञ्चकाः" इत्युक्तस्वरूपः तैः । आकरकोष्ठके कोष्ठिकायन्त्रे । सारः स्थिरांशः, प्रसादभागः इति यावत् ॥ ३६ ॥

एककोलीसकमाह, कोष्ठिकेति ।—कोष्ठिकायन्त्राग्रभागपर्य्यन्तम् अङ्गारैरापूर्य्य आधमनवशात सारणीयद्रव्यैः मूषाकण्ठपर्य्यन्तभागतैः उपलक्षितो यत् कर्म स एककोलीसकाख्यः क्रियाविशेषो मतः ॥ ३७ ॥

द्रावणादिकर्मसम्पादनार्थमिन्धन निर्दिशति, द्रावणे इति ।—माधुकाः मधुककाष्ठाङ्गाराः । "माधूकाः" इति पाठे—मधूकः मधुद्रुमः "महुया" इति भाषा, मधूककाष्ठाङ्गारा इत्यर्थः । दुर्द्रावे माधुकखादिराभ्यां द्रावयितुं दुष्करे इत्यर्थः ॥ ३८ ॥

अथ हिङ्गुलाकृष्टरसः।—

विद्याधराख्ययन्त्रस्थादार्द्रकद्रावमर्दितात्।
समाकृष्टो रसो योऽसौ हिङ्गुलाकृष्ट उच्यते॥ ३९॥

अथ घोषाकृष्टलक्षणम्।—

स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम्।
मुक्तरङ्गं हि तत्ताम्रं घोषाकृष्टमुदाहृतम्॥ ४०॥

अथ वरनागलक्षणम्।—

तीक्ष्णनीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम्।
मृदु कृष्णं द्रुतद्रावं वरनागं तदुच्यते॥ ४१॥

अथ उत्थापनालक्षणम्।—

मृतस्य पुनरुद्भूतिः सम्प्रोक्तोत्थापनाख्यया॥ ४२॥

अथ ढालनलक्षणम।—

द्रुतद्रव्यस्य निक्षेपो द्रवे तड्ढालनं मतम्॥ ४३॥

हिङ्गुलाकृष्टरसमाह, विद्याधरेति।—विद्याधरयन्त्रलक्षणमग्रे वक्ष्यमाणम्। मर्दितादित्यत्र हिङ्गुलादिति शेषः॥ ३९॥

घोषाकृष्टमाह, स्वल्पेति।—मुक्तरङ्गं पृथग्भूतरङ्गधातुकं, कांस्यस्य ताम्रवङ्ग-संयोगजत्वात्। तत्ताम्रं रङ्गस्य पृथक्करणेन अवशिष्टं ताम्रम्। घोषाकृष्टं घोषात् कांस्यात् आकृष्टं निष्काशितमिति तादृशम्॥ ४०॥

वरनागलक्षणमाह, तीक्ष्णेति।—अत्र विशेष्यपदोल्लेखाभावेऽपि वरनाग इति संज्ञाबलादेव तीक्ष्णनीलाञ्जनोपेतमित्यत्र नागमिति विशेष्यपदं शेषः बोध्यः। तीक्ष्ण-लौहनीलाञ्जनसंयुक्तं यत् सीसकं बहुवारं दृढमाध्मातं सत् सुकोमलं कृष्णवर्णं द्रुतद्रावञ्च स्यात् तत् सीसकं वरनागं बोध्यम्। "तीक्ष्णम्" इति पृथक् पाठे—नीलाञ्जनं तीक्ष्णलौहञ्च इत्यर्थः॥ ४१॥

उत्थापनामाह, मृतस्येति।—पुनरुद्भूतिः यन्त्रादियोगेन स्वरूपापादनम् इत्यर्थः॥ ४२॥

ढालनमाह, द्रुतद्रव्यस्येति।—द्रुतद्रव्यस्य गलितद्रव्यस्य॥ ४३॥

अथ नागसम्भूतचपलः ।—

त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ।
विमर्द्य पुटयेत्तावद्यावत् कर्षावशेषितम् ॥ ४४ ॥
न तत् पुटसहस्रेण क्षयमायाति सर्वथा ।
चपलोऽयं समादिष्टो वार्त्तिकैर्नागसम्भवः ॥ ४५ ॥

अथ वङ्गसम्भूतचपलः ।—

इत्थं हि चपलः कार्य्यो वङ्गस्यापि न संशयः ॥ ४६ ॥

अथ चपलस्य कार्य्यम् ।—

तत्स्पृष्टहस्त-संस्पृष्टः केवलो बध्यते रसः ॥ ४७ ॥

अथ तादृशबद्धरसस्य कार्य्यम् ।—

स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि खर्वणाख्येन लोकनाथेन कीर्त्तितः ॥ ४८ ॥

---

नागसम्भूतचपलमाह, त्रिंशदिति ।—भानुदुग्धेन अर्कक्षीरेण । पुटयेदिति ।—यावता पुटेन त्रिंशत्पलं तत कर्षशेषं स्यात् तावत पुटेत । तत कर्षावशेष नागम । वार्त्तिकैः "उक्तानुक्तदुरुक्तार्थ-व्यक्तकारि तु वार्त्तिकम्" इत्युक्तलक्षणकसूत्राभुक्तार्थ्या-विष्कारकग्रन्थविशेषाभिज्ञैः ॥ ४४।४५ ॥

वङ्गसम्भूतचपलमाह, इत्थमिति ।—इत्थं नागसम्भूतचपलवत् ॥ ४६ ॥

द्विविधचपलस्य कार्य्यमाह, तदिति ।—तेन चपलेन, स्पृष्टाभ्यां हस्ताभ्यां संस्पृष्टः स्पर्शविषयीकृतः, केवल. एकः अन्याविमिश्रः, रसः बध्यते संयमितो भवति, अनुड्डयनस्वभावो भवति इत्यर्थः ॥ ४७ ॥

तादृशबद्धरसस्य कार्य्यमाह, स इति ।—स रसः पूर्वोक्तक्रियया बद्धो रसः । धातुवादेषु लोहादीनां स्वर्णादिरूपेण परिणमनक्रियासु । खर्वणाख्येन खर्वण इति नाम्ना ख्यातेन । क्वचित् एतच्छ्लोकानन्तरं "नागं निर्वापितं कृत्वा खर्परैः सङ्गुणैः सह । षष्टिश्चतुर्थवेधेन तारमायाति काञ्चनम् ॥" इत्यधिकः श्लोको दृश्यते । अत्र च षष्टिरित्यस्य निर्वापितमित्यनेनान्वयः, षष्टिवारं निर्वापितं कृत्वा इत्यर्थः । चतुर्थवेधेन उक्तविधनिर्वापितनागद्वारा वारत्रयवेधानन्तरं चतुर्थवारवेधकर्म-सम्पादनेनेत्यर्थः ॥ ४८ ॥

अथ धौतम्।—

भू-भुजङ्ग-ग्रजत्तोयैः प्रक्षाल्यापहृतं रजः।

कृष्णवर्णं हि तत् प्रोक्तं धौताख्यं रसवादिभिः॥ ४९॥

अथ उन्थानम्।—

द्रव्ययोर्मर्दनाद्ध्मानात् उन्थानं परिकीर्त्तितम्॥ ५०॥

अथ भञ्जनी।—

भागाद्द्रव्याधिकक्षेप-मनु वर्णसुवर्णके।

द्रवैर्वा वह्निकाग्रासो भञ्जनी वादिभिर्मता॥ ५१॥

अथ चुल्लका।—

पतङ्गीकल्कतो जाता लोहे तारे च हेमता।

दिनानि कतिचित् स्थित्वा यात्यसौ चुल्लका मता॥ ५२॥

धौतमाह, भूभुजङ्गेति।—अपहृतम् अपचितं, निःसारितमित्यर्थः। रजः पुटनादिकाले तत्संलग्नाङ्गारादिचूर्णम्। तत् अपलीभूतं नागं वङ्गञ्च। भूनागमलस्रुतैः तन्मलमिश्रजलैर्वा परिशोधितमलादिकं कृष्णवर्णं अपलीभूतं नागं वङ्गञ्च धौतनागं धौतवङ्गञ्च प्रोक्तमिति निष्कर्षः॥ ४९॥

उन्थानमाह, द्रव्ययोरिति।—संसृष्टद्रव्यद्वयं मर्दयित्वा ध्मापनेन उन्थानसंज्ञा जायते। "उन्थानम्" इत्यत्र "बन्धनम्" इति पाठान्तरम्॥ ५०॥

भञ्जनीमाह, भागादिति।—वर्णेन सुवर्णं इव तस्मिन् वर्णसुवर्णके राजपित्तले, भागात् मारणार्थनिर्दिष्टप्रक्षेप्यभागम् अपेक्ष्य, द्रव्याधिकक्षेपं द्रव्याणां प्रक्षेप्यद्रव्याणाम् अधिकक्षेपम् अधिकप्रक्षेपम्, अनु पश्चात् अधिकप्रक्षेपानन्तरमित्यर्थः, यः वह्निकाग्रासः मारणीयद्रव्यगतवह्निनिर्वापणं, वा अथवा द्रवैः जलादिभिः यः वह्निकाग्रासः, स भञ्जनीति संज्ञया वादिभिः रसवादिभिः मता कथिता॥ ५१॥

चुल्लकामाह, पतङ्गीति।—पतङ्गीकल्कतः पतङ्गीकल्कात्, इत्यर्थः, कतिचिद्-दिनानि स्थित्वा, लौहं तारञ्चेति शेषः, तत्र लौहे विशेषतः तारे च या हेमता स्वर्णसादृश्यं जाता असौ हेमता चुल्लका याति चुल्लका इति संज्ञां लभते इत्यर्थः, इति मता। चुल्लका "गिल्टी" इति लोके। यद्वा—सप्तपादयमिदं, तेन पतङ्गीत्यारभ्य हेमता इत्यन्तेन श्लोकार्द्धेन हेमतालक्षणम्; दिनानीत्यादिश्लोकार्द्धेन च चुल्लकालक्षणं ज्ञेयम्। अस्मिन् पक्षे—वक्ष्यमाणपतङ्गीरागाख्यरञ्जकद्रव्यविशेषस्य

अथ पतङ्गीरागः ।—

रञ्जिताद्धि चिराल्लोहाद्ध्मानाद्वा चिरकालतः ।
विनिर्यासः स निर्दिष्टः पतङ्गीरागसंज्ञकः ॥ ५३ ॥

अथ आवापः ।—

द्रुते द्रव्यान्तरक्षेपो लोहाद्ये क्रियते हि यः ।
स आवापः प्रतीवापस्तदेवाऽऽच्छादनं मतम् ॥ ५४ ॥

अथ अभिषेकः ।—

द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् ।
सलिलस्य परिक्षेपः सोऽभिषेक इति स्मृतः ॥ ५५ ॥

अथ निर्वापः ।—

तप्तस्याप्सु विनिक्षेपो निर्वापः स्नपनञ्च तत् ॥ ५६ ॥

अथ प्रक्षेपकालनिर्देशः ।—

प्रतीवापादिकं कार्य्यं द्रुते लोहे सुनिर्मले ॥ ५७ ॥

---

कल्कलेपनेन सर्वलोहे विशेषतः रौप्ये हैमता इति संज्ञा जायते । हेम्नो भावः इति हैमता स्वर्णसादृश्यम् । तथा असौ लोहतारयोर्हैमता, कतिचिद्दिनानि स्थित्वा, पतङ्गीकल्के इत्याशयः, चुल्लिका याति चुल्लिकेत्याख्यया ख्यातिं यातीत्यर्थः ॥ ५२ ॥

पूर्वश्लोके "पतङ्गी" इत्युक्तम्, अतः तामेव विवृणोति, रञ्जितादिति ।—चिरात् दीर्घकालं व्याप्य रञ्जितात् वक्ष्यमाणरक्तादिवर्गान्यतमवर्गेण रागप्रापितात्, यस्मात् कस्मादपि लोहात् अथवा चिरकालतः सुदीर्घकालं ध्मानात् ध्मापितात् यस्मात् कस्मादपि रञ्जितलोहात् यः विनिर्यासः निःस्रवः, सत्त्वमिति यावत्, निर्गच्छतीति शेषः. स पतङ्गीरागसंज्ञकः निर्दिष्टः ॥ ५३ ॥

आवापमाह, द्रुते इति ।—द्रुते द्रवीभूते ॥ ५४ ॥

अभिषेकमाह, द्रुते इति ।—वह्निस्थिते प्रज्वलितचुल्ल्युपरि एव अवस्थिते । अष्टनिमेषकम् अष्टवारमक्ष्णोर्निमीलनोन्मीलनात्मकं कालं विरम्य द्रवीभवनानन्तरमपेक्ष्य ॥ ५५ ॥

निर्वापमाह, तप्तस्येति ।—तप्तस्य द्रव्यस्य लोहस्येति शेषः । स्नपनमिति निर्वापस्य नामान्तरम् ॥ ५६ ॥

अथ शुद्धावर्त्तः।—

यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः।
शुद्धावर्त्तस्तदा ज्ञेयः स कालः सत्त्वनिर्गमे ॥ ५८ ॥

अथ बीजावर्त्तः।—

द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा।
द्रावस्योन्मुखता सेयं बीजावर्त्तः स उच्यते ॥ ५९ ॥

अथ स्वाङ्गशीतलम्।—

वह्निस्थमेव शीतं यत्तदुक्तं स्वाङ्गशीतलम् ॥ ६० ॥

अथ बहिःशीतलम्।—

अग्नेराकृष्य शीतं यत्तद्बहिःशीतमीरितम् ॥ ६१ ॥

अथ स्वेदनलक्षणम्।—

क्षाराम्लैरौषधैर्वाऽपि दोलायन्त्रे स्थितस्य हि।
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ॥ ६२ ॥

---

आवापादीनां कालमाह, प्रतीवापादिकमिति।—अत्रादिपदेन निर्वापाभिषेकयोर्ग्रहणं बोध्यम्। द्रुते लोहे सुनिर्मले द्रवीभूतं लोहं यदा सुनिर्मलं भवति तदेत्यर्थः ॥ ५७ ॥

शुद्धावर्त्तमाह, यदेति।—शुक्लोत्थानसमन्वितः शुभ्रोर्द्ध्वज्वालासंयुक्तः। ध्मापनकाले यदा वह्निः दीप्तार्चिः शुभ्रज्वालासमन्वितश्च भवेत् तदा तस्य शुद्धावर्त्त इति संज्ञा ज्ञातव्या। तदैव सत्त्वनिर्गमो भावीति च ज्ञातव्यम् ॥ ५८ ॥

बीजावर्त्तमाह, द्राव्येति।—द्राव्यद्रव्यनिभा द्रावणीयद्रव्यसदृशी। धमने ध्मापनकाले। द्रावस्योन्मुखता द्रवीभवनारम्भः ॥ ५९ ॥

स्वाङ्गशीतलक्षणमाह, वह्निस्थमिति।—सुगमम् ॥ ६० ॥

बहिःशीतलक्षणमाह, अग्नेरिति।—सुगमम् ॥ ६१ ॥

स्वेदनमाह, क्षाराम्लैरिति।—औषधैः तत्तल्लोहशोधकद्रव्याणां स्वरसादिभिरित्यर्थः। मलशैथिल्यकारकं स्वेदनेन मार्दवे जाते अन्तर्मलानां पृथक्करणं द्रवीकरणं वा ॥ ६२ ॥

अथ मर्दनलक्षणम् ।—

उदितैरौषधैः सार्द्धं सर्वाम्लैः काञ्जिकैरपि ।
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ॥ ६३ ॥

अथ मूर्च्छनलक्षणम् ।—

मर्दनादिष्टभैषज्यैर्नष्टपिष्टत्वकारकम् ।
तन्मूर्च्छनं हि वङ्गाहि-मलादिदोषनाशनम् ॥ ६४ ॥

अथ उत्थापनलक्षणम् ।—

स्वेदातपादियोगेन स्वरूपाऽऽपादनं हि यत् ।
तदुत्थापनमित्युक्तं मूर्च्छाव्यापत्तिनाशनम् ॥ ६५ ॥

अथ बन्धनलक्षणम् ।—

स्वरूपस्य विनाशेन पिष्टत्वाद्बन्धनं हि तत् ।
विद्वद्भिर्निर्जितः सूतो नष्टपिष्टिः स उच्यते ॥ ६६ ॥

---

मर्दनमाह, उदितैरिति ।—उदितैरौषधैः तत्र तत्रोक्तभेषजद्रव्याणां स्वरसैः क्वाथैर्वा इत्यर्थः ॥ ६३ ॥

मूर्च्छनमाह, मर्दनादिति ।—इष्टभैषज्यैः शोधकादित्वेन अभिमतौषधैः । नष्टपिष्टत्वकारकं पेषणेन स्वरूपनाशात् यत् मूर्त्तिबद्धत्वम् । वङ्गेति ।—नागवङ्गादिदोषनाशनम् । एतत्तु रसमुद्दिश्य उक्तं, धात्वन्तराणामपि स्वस्वदोषनाशनमिति आदिपदेन बोध्यम् ॥ ६४ ॥

उत्थापनमाह, स्वेदेति ।—स्वेदः ऊर्द्धपातनादिना स्वेदनम्, आतपः रौद्रसन्तापः, आदिना मर्दनादीनां ग्रहणम् । स्वरूपाऽऽपादनं प्रकृत्यवस्थापनम् । मूर्च्छाव्यापत्तिनाशनं मूर्च्छनक्रियाजनितस्वरूपध्वंसरूपविपत्तिवारणम् ॥ ६५ ॥

बन्धनमाह, स्वरूपस्येति ।—पिष्टम् इष्टभैषज्यैः पेषणं, पिष्टमिति भावे क्तः; तस्य भावः तत्त्वात्, स्वरूपस्य विनाशेन स्वकीयशुभ्रत्व-चपलत्वादिरूपापायेन, यद्रूपापादनमिति शेषः, तत् बन्धनं वह्निनाऽनुच्छिद्यमानत्वं मूर्त्तिबद्धत्वमिति वा; ज्ञेयमिति शेषः । अस्यैव नष्टपिष्टिरिति संज्ञाऽन्तरमाह, विद्वद्भिरिति ।—निर्जितः बन्धनेन नष्टस्वरूपः, यद्वा—निर्जितः मृतः, स सूतः, विद्वद्भिः नष्टपिष्टिः उच्यते ॥ ६६ ॥

अथ पातनलक्षणम्।—

उक्तौषधैर्मर्दितपारदस्य यन्त्रस्थितस्योर्द्ध्वमधश्च तिर्य्यक्।
निर्यातनं पातनसंज्ञमुक्तं वङ्गाहिसम्पर्कज-कञ्चुकघ्नम्॥ ६७॥

अथ रोधनलक्षणम्।—

जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम्।
स्थितिरास्थापनी कुम्भे याऽसौ रोधनमुच्यते॥ ६८॥

अथ नियमनलक्षणम्।—

रोधनाल्लब्धवीर्य्यस्य चपलत्वनिवृत्तये।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत्॥ ६९॥

अथ दीपनलक्षणम्।—

धातु-पाषाण-मूलाद्यैः संयुक्तो घटमध्यगः।
ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः॥ ७०॥

पातनाख्यमाह, उक्तौषधैरिति।—निर्यातनं शोधनार्थं यत् कदर्थनमित्यर्थः॥ ६७॥

रोधनमाह, जलेति।—जलसैन्धवाभ्यां सह कुम्भमध्ये दिवसत्रयं रसस्य या आस्थापनी आ सम्यक् स्थापनी षण्ढदोषनाशपूर्वकं स्ववीर्य्यस्थापनकारिणी, क्रियेति शेषः, असौ स्थितिः स्थापनं, रोधनमित्युच्यते। इदं हि स्वेदनादिक्रियाजनितकदर्थनेन षण्ढभावप्राप्तस्य रसस्य तद्दोषनाशपूर्वकवीर्य्यप्रकर्षाधानार्थं ज्ञातव्यम्। ग्रन्थान्तरेऽस्य बोधनम् इति संज्ञा निर्दिष्टा॥ ६८॥

नियमनमाह, रोधनादिति।—स्वेदः स्वेदनम्। यद्यप्यत्र स्वेदनार्थं द्रव्यनिर्देशो न कृतः, तथाऽपि अध्येतॄणां विज्ञानार्थं ग्रन्थान्तरोक्तं तत् निर्दिश्यते, तथा च रसेन्द्रचिन्तामणौ,—"सर्पाक्षीचिञ्चिकाकन्या-भृङ्गारकनकाम्बुभिः। दिनं संस्वेदितः सूतो नियमात् स्थिरतां व्रजेत्॥" इति। नियमनं चपलत्वपरिहारपूर्वकस्थिरत्वसम्पादनम्॥ ६९॥

दीपनमाह, धात्विति।—ग्रासार्थं घनहेमादीनामिति शेषः। स्वेदः, दोलायन्त्रे काञ्जिकादिना रसस्य इति शेषः। दीपनं ग्रासशक्तिसञ्जननक्रियाविशेषः। रसेन्द्रचिन्तामणिकारेण दीपनद्रव्याणि अन्यविधान्युक्तानि यथा—"कासीसं पञ्चलवणं राजिका मरिचानि च। भूशिग्रुबीजमेकत्र टङ्कणेन समन्वितम्॥ आलोड्य काञ्जिके

अथ ग्रासमानम् ।—

इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ।
इयतीत्युच्यते याऽसौ ग्रासमानं समीरितम् ॥ ७१ ॥

अथ जारणायास्त्रैविध्यनिर्देशः ।—

ग्रासस्य चारणं गर्भे द्रावणं जारणं तथा ।
इति त्रिरूपा निर्दिष्टा जारणा वरवार्त्तिकैः ॥ ७२ ॥

अथ जारणायाः पुनस्त्रैविध्यनिर्देशः ।—

ग्रासः पिण्डः परीणामस्तिस्रश्चाख्याः पराः पुनः ॥ ७३ ॥

अथ जारणायाः पुनर्द्वैविध्यनिर्देशः ।—

समुखा निर्मुखा चेति जारणा द्विविधा पुनः ॥ ७४ ॥

अथ निर्मुखजारणालक्षणम् ।—

निर्मुखा जारणा प्रोक्ता बीजादानेन भागतः ॥ ७५ ॥

---

दोला-यन्त्रे पाकाद्दिनैस्त्रिभिः । दीपनं जायते सम्यक् सूतराजस्य जारणे ॥ अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् ॥" इति ॥ ७० ॥

ग्रासमानमाह, इयन्मानस्येति ।—इयन्मानस्य एतावत्परिमाणस्य सूतस्य ; सम्बन्धविवक्षया षष्ठी ; इयन्मिते सूते इत्यर्थः, या इयती मितिः एतावत्परिमाणं, भोज्यद्रव्याणामिति शेषः, इति उच्यते, भोज्यद्रव्यात्मिका ग्रसनीयस्वर्णादिद्रव्याणां मानानिर्देशरूपा असौ उक्तिः ग्रासमानं समीरितम्, इयन्मानः सूतः इयन्मानं स्वर्णादिद्रव्यं ग्रसितुं समर्थः, एवं-रूपमाननिर्देशः ग्रासमानं ज्ञेयम् ॥ ७१ ॥

जारणात्रयमाह, ग्रासस्येति ।—ग्रासस्य ग्रासयोग्यस्य स्वर्णादेरित्यर्थः, चारणं रसान्तः क्षेपणं, गर्भे द्रावणं रसान्तः तरलीभवनं, जारणं विड्यन्त्रादियोगेन द्रवीभूतग्रासस्य पाकः ॥ ७२ ॥

जारणाया अपरं त्रैविध्यमाह, ग्रास इति ।—ग्रासः कवलीकरणरूपजारणा, पिण्डः कर्दमवत् पिण्डीभवनरूपजारणा । परीणामः भस्मान्तरप्रापण-रूपजारणा ॥ ७३ ॥

उक्तरूपजारणायाः पुनरवान्तरभेदद्वयमाह, समुखेति ।—समुखनिर्मुखसंज्ञकजारणाद्वयलक्षणमाचार्यः स्वयमेवाग्रे वक्ष्यति ॥ ७४ ॥

तत्रादौ निर्मुखजारणामाह, निर्मुखेति ।—निः नास्ति मुखं वक्ष्यमाणचतुःषष्ट्यंशः

अथ बीजनिर्देशः ।—

शुद्धं स्वर्णञ्च रूप्यञ्च बीजमित्यभिधीयते ॥ ७६ ॥

अथ मुखलक्षणम् ।—

चतुःषष्ट्यंशतो बीज-प्रक्षेपो मुखमुच्यते ॥ ७७ ॥

अथ समुखजारणालक्षणम् ।—

एवं कृते रसो ग्रास-लोलुपो मुखवान् भवेत् ।

कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ॥

इयं हि समुखा प्रोक्ता जारणा मृगचारिणा ॥ ७८ ॥

अथ राक्षसवक्त्ररसलक्षणम् ।—

दिव्यौषधिसमायोगात् स्थितः प्रकटकोष्ठिषु ।

भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्त्रवान् ॥ ७९ ॥

अथ चारणालक्षणम् ।—

रसस्य जठरे ग्रास-क्षपणं चारणा मता ॥ ८० ॥

अथ गर्भद्रुतिलक्षणम् ।—

ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ॥ ८१ ॥

---

बीजप्रक्षेपरूपमुखलक्षणं यत्र जारणायां तादृशी । बीजेति ।—भागतः यथाभागं, तत्तद्द्रव्यजारणायां निर्दिष्टभागमनतिक्रम्य, वक्ष्यमाणचतुःषष्टिभागात् न्यूनतया अधिकतया वा इत्यर्थः, बीजादानेन शुद्धस्वर्णरौप्यात्मकबीजग्रहणम ॥ ७५ ॥

निर्मुखजारणायां बीजमित्युक्तमतो बीजलक्षणमाह, शुद्धमिति ।—सुगमम् ॥७६॥

समुखा निर्मुखा च इत्युक्तं, तत्र मुखं तावत् किमित्यपेक्षायामाह, चतुःषष्टीति ।—रसापेक्षया चतुःषष्टिभागेनेत्यर्थः ॥ ७७ ॥

समुखजारणामाह, एवमिति ।—एवं कृते चतुःषष्ट्यंशतो बीजप्रक्षेपे कृते । मुखवान् समुखः । मृगचारिणा तदाख्येन केनचित् रसतन्त्रकृता ॥ ७८ ॥

राक्षसमुखरसमाह, दिव्यौषधीति ।—दिव्यौषधिः मनःशिला । प्रकटकोष्ठिषु विवृताननकोष्ठिकायन्त्रेषु । भुञ्जीत ग्रसेत् ॥ ७९ ॥

जारणाभेद-चारणालक्षणमाह, रसस्येति ।—जठरे मध्ये इत्यर्थः, ग्रासक्षपणं ग्रासस्य ग्रासार्हलोहादेः क्षपणं क्षयमापादनं, रसेन सह एकीकरणमित्यर्थः ॥ ८० ॥

जारणाभेद-गर्भद्रुतिमाह, ग्रस्तस्येति ।—ग्रस्तस्य ग्रस्तलोहादेः ॥ ८१ ॥

अथ बाह्यद्रुतिलक्षणम् ।—

वह्निरेव द्रुतीकृत्य घनसत्त्वादिकं खलु ।
जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते ॥ ८२ ॥

अथ द्रुतेः पञ्चविधत्वनिर्देशः ।—

निर्लेपत्वं द्रुतत्वञ्च तेजस्त्वं लघुता तथा ।
असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ॥ ८३ ॥

अथ द्रुतिस्वरूपम् ।—

औषधाध्मानयोगेन लोहं धात्वादिकं तथा ।
सन्तिष्ठते द्रवाकारं सा द्रुतिः परिकीर्त्तिता ॥ ८४ ॥

अथ जारणाभेद-जारणालक्षणम् ।—

द्रुतग्रासपरीणामो विड़यन्त्रादियोगतः ।
जारणेत्युच्यते तस्याः प्रकाराः सन्ति कोटिशः ॥ ८५ ॥

---

गर्भद्रुतिप्रसङ्गेन बाह्यद्रुतिमाह, वह्निरिति ।—वह्निरेव मुञ्जुपरिस्थकटाहादौ, न तु रसगर्भे इत्यर्थः । घनसत्त्वादिकम् अभ्रसत्त्वादिकम्; अत्रादिपदेन स्वर्ण-सत्त्वादीनां ग्रहणं बोध्यम् ॥ ८२ ॥

द्रुतेः पञ्चधाभेदानाह, निर्लेपत्वमिति ।—निर्लेपत्वं निः निश्चयेन निःशेषेण वा लेपत्वं लिप्तत्वं, द्रावान्तरेण सह निःशेषेण एकीभवनमित्यर्थः; यद्वा—निः निर्गतः लेपः लिप्तपदार्थः मलादिर्यस्मात् तत्त्वं, पृथग्भूतमलादिकामित्यर्थः । द्रुतत्वं विशेषेण द्रवीभवनम् । तेजस्त्वं स्वरूपापेक्षया तेजोभूयस्त्वम् । लघुता स्वाभाविकगुरुत्वमपेक्ष्य लाघवम् । असंयोगश्च सूतेन पारदेन सह पृथक्तया अवस्थानम् ॥ ८३ ॥

द्रुतिस्वरूपमाह, औषधेति ।—द्रावकौषधेन सह अग्निसंयोगादिक्रियया लोहं स्वर्णाद्यष्टविधं, तथा धात्वादिकम् अभ्रादयः, तेषामपि देहधारकत्वात् धातुसंज्ञया व्यपदेशः । अत्रादिपदेन रत्नादीनां ग्रहणम् । "लोहं धात्वादिकम्" इत्यत्र "लोहधात्वादिकम्" इति पाठान्तरेऽपि—स एवार्थः, अस्मिन् पक्षे—तथा इत्यस्य निर्लेपत्वादिरूपेणेत्यर्थः ॥ ८४ ॥

जारणाभेद-जारणामाह, द्रुतेति ।—विड़ः वक्ष्यमाणलक्षणलक्षितः, यन्त्रं कोष्ठि-कादिकं तदादियोगतः, अत्रादिपदेन मूषापुटादीनां ग्रहणम्; द्रुतस्य गर्भे तरलितस्य ग्रासस्य स्वर्णादेः परीणामः परिपाकः, स्वात्मनि अभेदरूपेण परिणमनम् । रसेन्द्र-

अथ विडलक्षणम्।—

क्षारैरम्लैश्च गन्धाद्यैर्मूत्रैश्च पटुभिस्तथा।
रसग्रासस्य जीर्णार्थं तद्विड़ं परिकीर्त्तितम्॥ ८६॥

अथ रञ्जनलक्षणम्।—

सुसिद्धबीज-धात्वादि-जारणेन रसस्य हि।
पीतादिरागजननं रञ्जनं परिकीर्त्तितम्॥ ८७॥

चिन्तामणौ तु "जारणा हि पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकं पूर्वावस्थापन्नत्वम" इत्यनेन यत् प्रकारान्तरं जारणालक्षणमुक्तं तत् चारणाख्य जारणाभिप्रायेण बोध्यम॥ ८५॥

पूर्वश्लोके विडगन्धादियोगतः इत्युक्तं, तत्र किन्नामतत् विडमित्यपेक्षायामाह, क्षारैरिति।—क्षारैः वालुकक्षारादिभिः टङ्कणादिभिश्च, अम्लैः काञ्जिकादिभिः अम्लोरादिभिर्वा, यदुक्तं रसेन्द्रचिन्तामणौ—"अम्लीरबीजपूरकचाङ्गेरीवेतसाम्लसंयोगात्। क्षारा भवन्ति सुतरां गर्भद्रुतिजारणे शस्ताः॥" इति। गन्धाद्यैरित्यत्र आद्यशब्देन काशीशसौराष्ट्रादीनां शङ्खादीनां वा ग्रहणम्। मूत्रैरष्टविधैरित्याशयः। पटुभिः लवणैः, तानि चात्र षड्विधानि बोध्यानि; यदुक्तं रसेन्द्रचिन्तामणौ,—"वालुकैरण्डकदलीदेवदालीपुनर्नवाः। वासापलाशशिग्रुश्च-तिलकाञ्चनमोचकाः॥ सर्वाङ्गखण्डं सञ्छिन्नं मानिशुष्कं शिलातले। दग्धं काण्डं तिलानाञ्च पञ्चाङ्गं मूलकस्य च॥ प्लावयेन्मूत्रवर्गेण जलं तस्मात परिस्रुतम्। लौहपात्रे पचेद्यन्त्रे हंसपाकेऽग्निमानवित॥ बाष्पाणां बुद्बुदानाञ्च बहुनामुद्गमो यदा। तदा काशीशसौराष्ट्री-क्षारत्रयकटुत्रयम्॥ गन्धकञ्च मिता हिङ्गुर्लवणानि च षट् तथा। एषां चूर्णं क्षिपेद्देवि। लौहसम्पुटमध्यतः॥ सप्ताहं भृशतं पश्चात् धार्य्यस्तु प्रचुरो विडः॥ अत्र सकलक्षारैः साम्यं तिलकाण्डक्षाराणामिति नित्यनाथपादाः" इति। हंसपाकयन्त्रलक्षणमपि तत्रैव यथा—"खर्परं सिकतापूर्णं कृत्वा तस्योपरि क्षिपेत। तस्मिन खर्परं तत्र शनैर्मृद्वग्निना पचेत॥ हंसपाकं समाख्यातं यन्त्रं तत् वार्त्तिकोत्तमैः।" इति। षड्लवणानि यथा राजनिघण्टौ,—"काचसैन्धवसामुद्र-विडसौवर्चलैः समैः। स्यात् पञ्चलवणं तच्च सरक्षोपेतं षडाह्वयम्॥" इति। काचं कृष्णलवणं "कालालवण" इति प्रसिद्धम्; "सोरा" इति केचित। रक्षा शाम्भरलवणम्। रसग्रासस्य रसेन ग्रस्तस्येत्यर्थः, स्वर्णादेरिति शेषः॥ ८६॥

रञ्जनमाह, सुसिद्धेति।—शोधितस्वर्णरौप्याभ्यां तथा जीर्णताम्रादियोगेन क्रियाविशेषमाश्रित्य रसस्य यत् पीतादिरागजननमित्यन्वयः॥ ८७॥

अथ सारणालक्षणम् ।—

सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् ।
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्त्तिता ॥ ८८ ॥

अथ वेधलक्षणम् ।—

व्यवायि-भेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ।
वेधः इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ॥ ८९ ॥

अथ वेधस्य पञ्चविधत्वनिर्देशः ।—

लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः ॥ ९० ॥

अथ लेप-वेधलक्षणम् ।—

लेपनं कुरुते लोहं स्वर्णं वा रजतं तथा ।
लेपवेधः स विज्ञेयः पुटमत्र च सौरकम् ॥ ९१ ॥

---

सारणामाह, सूते इति ।—सतैलयन्त्रस्थे तैलपूर्णान्धमूषामध्यस्थिते सूते रसे यत् स्वर्णादिक्षेपणं स्वर्णादिप्रक्षेपः, लोहे ताम्रादौ इत्यर्थः, वेधाधिक्यकरं वेधस्य स्वर्णादिजननरूपवेधशक्तेः, आधिक्यकरम् आतिशय्यजनकम् । उक्तञ्च रसेन्द्रचिन्तामणौ,—"अथ सारणोच्यते—'अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा । सैव छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥' अस्यामेव मूषायां तत्तैलमपगतकल्क-विमलमापूर्य अग्निमधिकमधस्तात् द्रुतबीजप्रक्षेपसमकालमेव समावर्त्तनीयः सूत-वरस्तदनु सद्यो मूषाननमाच्छादनीयम् । एतत्तैलाक्तखण्डपल्यिबन्धेन अरुणासित-बीजाभ्याम् अश्वनासारकसंख्या (?) मिलितश्चेत् सारितः सम्यक् संयमितः विज्ञातव्यः ।" सारणार्थं तैलमपि तत्रैवान्वेष्टव्य विस्तरभयान्नोद्धृतम् इति ॥ ८८ ॥

सारणालक्षणे वेधाधिक्यकरमित्युक्तं, कस्तावत वेध इत्यपेक्षायामाह, व्यवायीति ।—नागवल्लीकुमारिकाधुस्तूरादिव्यवायिगुणविशेषणसंयुक्तः इत्यर्थः । व्यवायिलक्षणं शार्ङ्गधरे यथा,—"पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति । व्यवायि तद्यथा भङ्गा फेनञ्चाहिसमुद्भवम् ॥" इति । द्रव्ये स्वर्णादिरूपेण परिणमयितो लोहे ॥ ८९ ॥

वेधभेदानाह, लेप इति ।—स्पष्टम् ॥ ९० ॥

तेषु लेप-वेधलक्षणमाह, लेपनमिति ।—लेपनं वेधसामर्थ्यापादकक्रियाविशेष-

अथ क्षेप वेधलक्षणम्।—

प्रक्षेपणं द्रुते लोहे वेधः स्यात् क्षेपसंज्ञितः॥ ९२॥

अथ कुन्त-वेधलक्षणम्।—

सन्दंशधृतसूतेन द्रुतद्रव्याप्लुतिश्च या।
सुवर्णत्वादिकरणं कुन्तवेधः स उच्यते॥ ९३॥

अथ धूम-वेधलक्षणम्।—

वह्नौ धमायमानेऽन्तः-प्रक्षिप्त-रस-धूमतः।
स्वर्णाद्यापादनं लोहे धूमवेधः स ईरितः॥ ९४॥

अथ शब्द-वेधलक्षणम्।—

मुखस्थितरसेनाल्प-लोहस्य धमनात् खलु।
स्वर्णरूप्यत्वजननं शब्दवेधः स कीर्त्तितः॥ ९५॥

---

सिद्धरसेनेत्याशयः। अथ लेपवेधे। सौरकं पुटं, दद्यादिति शेषः, भूर्य्यपकं कुर्य्यादित्यर्थः॥ ९१॥

क्षेप-वेधलक्षणमाह, प्रक्षेपणमिति।—गलित-स्वर्णेतरलोहे रसप्रक्षेपेण यत् सुवर्णीकरणं, स क्षेपाख्यवेधो ज्ञेयः॥ ९२॥

कुन्त वेधमाह, सन्दंशेति।—सन्दंशः "साँडाशी" इति ख्यातः, सन्दंशयन्त्रेण मूर्त्तिबद्धसूतं धृत्वा द्रुतलोहे निमज्जनेन तत्सम्पर्कात स्वर्णादिरूपेण परिणतस्य लोहस्य यदाहरणं स कुन्त-वेधसंज्ञको ज्ञेयः॥ ९३॥

धूम-वेधमाह, वह्नाविति।—सधूमवह्निमध्ये वेधसमर्थरसनिक्षेपेण यो धूमः निर्गच्छति, तत्सम्पर्कात् यत्किञ्चिल्लोहस्य स्वर्णादिरूपेण या परिणतिः स धूमवेधः॥९४॥

शब्द-वेधमाह, मुखेति।—धमनात् शब्दोच्चारणादित्यर्थः, फुत्कारादित्यर्थो वा। "धम ध्माने" इत्यस्मात् ल्युट्। मुखमध्ये वेधसमर्थरसगुटिकां संस्थाप्य परो लोहखण्डमेकं धृत्वा शब्दोच्चारणे कृते फुत्कारे दत्ते वा तत् लोहखण्डं स्वर्णादिरूपेण परिणमेत्। "धमनात्" इत्यत्र "दमनात्" इति पाठे—मुखमध्ये वेधसमर्थरसगुटिकां संस्थाप्य क्षुद्रलोहखण्डं तन्निम्ने निधाय च पीडने कृते अधःस्थलोहखण्डं यत्र वेधे स्वर्णादिरूपेण परिणमेत् स शब्दवेधः इत्यर्थः॥ ९५॥

अथ उद्घाटनलक्षणम्।—

सिद्धद्रव्यस्य सूतेन कालुष्यादिनिवारणम्।
प्रकाशनञ्च वर्णस्य तदुद्घाटनमीरितम्॥ ८६॥

अथ स्वेदनलक्षणम्।—

क्षाराम्लैरौषधैः सार्द्धं भाण्डं कल्काऽतियत्नतः।
भूमौ निखन्यते यत्नात् स्वेदनं सम्प्रकीर्त्तितम्॥ ८७॥

अथ सन्न्यासलक्षणम्।—

रसस्यौषधयुक्तस्य भाण्डकल्कस्य यत्नतः।
मन्दाग्नियुतचुल्लान्तः क्षेपः सन्न्यास उच्यते॥ ८८॥

अथ रसस्य स्वेदनसन्न्यासयोः गुणः।—

द्वावेतौ स्वेदसन्न्यासौ रसराजस्य निश्चितम्।
गुणप्रभावजनकौ शीघ्रव्याप्तिकरौ तथा॥ ८९॥

उद्घाटनमाह, सिद्धद्रव्यस्येति।—सिद्धद्रव्यस्य मृतलौहादेरित्यर्थः, सूतेन क्रियाविशेषनिष्पन्नसूतसंयोगेन, यत् कालुष्यादिनिवारणं मालिन्यादिप्रोञ्छनं, वर्णस्य च प्रकाशनम् औज्ज्वल्यसम्पादनम्; यद्वा—सूतेन सूतसंयोगेन सिद्धद्रव्यस्य मारितलौहादेः कालुष्यादिनिवारणं यया क्रियया द्रव्यान्तरसंयोगजनितमालिन्यादिनाशनं स्यादित्येवं योजनीयम्। "सिद्धद्रव्यस्य सूतेन" इत्यत्र "सिद्धद्रव्येण सूतस्य" इति पाठे—मृतलौहादिसंयोगद्वारा सूतस्य यत् कालुष्यादिनिवारणमित्यर्थः॥ ८६॥

स्वेदनमाह, क्षाराम्लैरिति।—औषधैः स्वेदनीयौषधैः। भाण्डं रसपूर्णभाण्डमित्यर्थः। अत्र उष्णवीर्य्यैः क्षाराम्लैः सह भूम्यधःस्थापनेन तदुष्मणा अनग्निस्वेदो बोध्यः॥ ८७॥

सन्न्यासमाह, रसस्येति।—औषधयुक्तस्य क्षाराम्लौषधयुक्तस्येत्यर्थः। मन्दाग्नियुतचुल्लान्तः मृद्वग्निविशिष्टचुल्लीमध्ये, न तु तीव्राग्नियुतचुल्ल्यामित्यर्थः॥ ८८॥

स्वेदनसन्न्यासयोः फलमाह, द्वाविति।—शीघ्रव्याप्तिकरौ सेवनानन्तरमेव सर्वदेहविसरणशीलौ, व्याध्यादिगुणजनकावित्यर्थः; यद्वा—रसस्य योगवाहित्वात् संसर्गितद्रव्येषु त्वरितमात्मगुणसञ्चारणशीलौ॥ ८९॥

अथ परिभाषाज्ञानस्य फलम् ।—

रसनिगममहाब्धेः सोमदेवः समन्तात्

स्फुटतरपरिभाषा-नामरत्नानि हृत्वा ।

व्यरचयदतियत्नात्तैरिमां कण्ठमालां

कलयतु भिषगग्र्यो मण्डनार्थं सभायाम् ॥ १०० ॥

भवेत् पठितवारोऽयमध्यायो रसवादिनाम् ।

रसकर्माणि कुर्वाणो न स मुह्यति कुत्रचित् ॥ १०१ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसपरिभाषाकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

अथ यन्त्राणि ।—

अथ प्रस्तुताध्यायस्य वक्तव्यनिर्देशः ।—

अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यशेषतः ।

समालोक्य समासेन सोमदेवेन साम्प्रतम् ॥

स्वेदादिकर्म निर्मातुं—" ॥ १ ॥

उपसंहरति द्वाभ्यां रसेत्यादिभ्याम् ।—हृत्वा आहृत्य । इमाम् उक्तरूपाम् । कलयतु गृह्णातु, धारयतु इत्यर्थः, कण्ठे इति शेषः, कण्ठस्थां करोतु अभ्यस्यतु इत्याशयः । भिषगग्र्यः भिषक्श्रेष्ठः । भवेदिति ।—सुगमम् ॥ १००।१०१ ॥

इति रसरत्नसमुच्चयबोधिन्याम् अष्टमोऽध्यायः ॥ ८ ॥

---

पूर्वाध्याये परिभाषां निरूप्य इदानीं रसादिकर्मणां यन्त्रपुटनाद्यायत्तसिद्धित्वात् यन्त्रविधिज्ञानं विना च पुटनाद्यसिद्धेः आदौ यन्त्राण्येव विवरीतुं नवमाध्यायमारभते । तत्र प्रथमं तावदेतदध्यायस्य अभिधेयं निर्दिशति, अथेति ।—अथ रसपरिभाषा-कथनानन्तरम् । यन्त्राणि वक्ष्यमाणदोलादीनि । स्वेदादीत्यत्र आदिपदेन मर्दन-मूर्च्छनाद्यूनविंशतिविधरसकर्मणां ग्रहणम् ॥ १ ॥

अथ यन्त्रशब्दस्य निरुक्तिः।—

"—वार्त्तिकेन्द्रैः प्रयत्नतः।
यन्त्र्यते पारदो यस्मात्तस्माद्यन्त्रमिति स्मृतम् ॥ २ ॥

अथ दोलायन्त्रम्।—

द्रवद्रव्येण भाण्डस्य पूरितार्द्धोदरस्य च।
मुखस्योभयतो द्वार-द्वयं कृत्वा प्रयत्नतः ॥ ३ ॥
तयोस्तु निक्षिपेद्दण्डं तन्मध्ये रसपोट्टलीम्।
बद्ध्वा तु स्वेदयेदेतद्दोलायन्त्रमिति स्मृतम् ॥ ४ ॥

अथ स्वेदनीयन्त्रम्।—

साम्बुस्थालीमुखे बद्ध-वस्त्रे पाक्यं निवेशयेत्।
पिधाय पच्यते यत्र स्वेदनी-यन्त्रमुच्यते ॥ ५ ॥

अथ पातनायन्त्रलक्षणम्।—

अष्टाङ्गुलपरीणाहमानाहेन दशाङ्गुलम्।
चतुरङ्गुलकोत्सेधं तोयाधारं गलादधः ॥ ६ ॥

---

यन्त्रस्य निरुक्तिमाह, वार्त्तिकेन्द्रैरिति।—वार्त्तिकेन्द्रैः वार्त्तिकशास्त्रविशारदैः; वार्त्तिकलक्षणञ्च प्रकटितं प्रागेव। यन्त्र्यते नियम्यते, बध्यते इत्यर्थः, रक्ष्यते वा, अनेनोपायेनेति शेषः। "यत्रि सङ्कोचने" इत्यस्य कर्मणि रूपसिद्धिः ॥ २ ॥

दोलायन्त्रमाह, द्रवद्रव्येणेति।—द्रवद्रव्येण काञ्जिकादिस्वेदनद्रव्येण। मुखस्येति।—भाण्डकन्धरायाः प्रान्तद्वये छिद्रद्वयं कृत्वेत्यर्थः। तयोः छिद्रयोः। तन्मध्ये दण्डमध्ये। स्वेदनार्हेण काञ्जिकादिना केनचित् द्रवेण भाण्डार्द्धमापूर्य्य भाण्डकन्धराप्रान्तद्वये छिद्रद्वयं कृत्वा तन्मध्ये दण्डमेकं निधाय तस्मिन् रसपोट्टलीं बद्ध्वा च एवं लम्बयेत यथा भाण्डस्थद्रवे सा निमज्जेत्, परन्तु भाण्डं न स्पृशेदिति निष्कर्षः ॥३।४॥

स्वेदनीयन्त्रमाह, साम्बुस्थालीति।—पाक्यं स्वेद्यम्। अत्राम्बुशब्दो द्रवमात्रोपलक्षणं, तेन यथास्वशोधनाशकद्रवपूर्णस्थालीमुखं वस्त्रेणावेष्ट्य तत्र स्वेद्यं निधाय शरावेणाच्छाद्य च स्थाल्यधो ज्वालां दद्यादिति ॥ ५ ॥

पातनायन्त्रस्य स्वरूपमाह, अष्टाङ्गुलेति।—परीणाहः विस्तारः, परिधिरिति

अधोभाण्डं मुखं तस्य भाण्डस्योपरिवर्त्तिनः।
षोड़शाङ्गुलविस्तीर्णं-पृष्ठस्याऽऽस्ये प्रवेशयेत् ॥ ७ ॥
पार्श्वयोर्मह्निषीक्षीर-चूर्णमण्डूरफाणितैः।
लिप्त्वा विशोषयेत् सन्धिं जलाधारे जलं क्षिपेत् ॥
चुल्ल्यामारोपयेदेतत् पातनायन्त्रमीरितम् ॥ ८ ॥

अथ अधःपातनप्रकारः।—

अधोर्द्धभाजने लिप्तस्थापितस्य जले सुधीः।
दीप्तैर्वनोत्पलैः कुर्य्यादधःपातं प्रयत्नतः ॥ ९ ॥

अथ दीपिकायन्त्रम्।—

कच्छपयन्त्रान्तर्गत-मृन्मयपीठस्थ-दीपिकासंस्थः।
यस्मिन्निपतति सूतः प्रोक्तं तद्दीपिकायन्त्रम् ॥ १० ॥

यावत। आनाहः औन्नत्यं, दैर्घ्यमिति यावत्। उत्सेधः उपचितिः, स्थौल्यमिति यावत्। फाणितम् अर्द्धावर्त्तितेक्षुरसविकृतिगुडविशेषः, तल्लक्षणं यथा भावप्रकाशे—"इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः। स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया ॥" इति। अत्रैवमन्वयः कार्य्यः,—अष्टाङ्गुलपरीणाहमानाहेन दशाङ्गुलं चतुरङ्गुलकोत्सेधं तोयाधारमधोभाण्डं, कुर्य्यादिति शेषः। तस्य तोयाधारस्य अधोभाण्डस्य मुखं षोडशाङ्गुलविस्तीर्णपृष्ठस्य उपरिवर्त्तिनः भाण्डस्य आस्ये गलादधःपर्य्यन्तं प्रवेशयेदिति। एतेन षोड़शाङ्गुलविस्तीर्णपृष्ठमपरमेकं भाण्डं कर्त्तव्यं, तच्च उपरिदेशे स्थाप्यमिति प्रतीयते। अष्टाङ्गुलपरिधिविशिष्टं दशाङ्गुलदीर्घं चतुरङ्गुलस्थूलञ्च जलाधारमेकं निर्माय अधः स्थापयित्वा तत्र जलं निक्षिपेत्, ततः षोडशाङ्गुलविस्तृतपृष्ठदेशम् औषधलिप्तोदरम् अधोमुखं भाण्डमेकं पूर्वोक्तभाण्डस्य मुखे कण्ठदेशादधःपर्य्यन्तं प्रवेश्य महिषीक्षीरादिभिः सन्धिं लिप्त्वा विशोष्य च चुल्ल्यां स्थापयेत् इति यन्त्रविधिः। अत्र पातनायन्त्रशब्देन अधःपातनं लक्षितमिति बोध्यम् ॥ ६—८ ॥

अधःपातनायन्त्रे पातनक्रममाह, अधेति।—अथ उक्तरीत्या यन्त्रनिर्माणानन्तरम्, ऊर्द्धभाजने उपरिस्थाधोमुखभाण्डोदरे इत्यर्थः, आदौ लिप्तं पश्चात् स्थापितं तस्य लिप्तस्थापितस्य, रसस्येति शेषः, जले, अधोभाण्डस्थिते इति शेषः, दीप्तैः वनोत्पलैः वन्यकरीषाग्निभिः ॥ ९ ॥

दीपिकायन्त्रमाह, कच्छपेति।—वक्ष्यमाणकच्छपयन्त्रमध्यवर्त्तिमृन्मयघटखर्परे

अथ डेकीयन्त्रम् ।—

भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् ।
कांस्यपात्रद्वयं कृत्वा सम्पुटं जलगर्भितम् ॥ ११ ॥
नलिकाऽऽस्यं तत्र योज्यं दृढं तत्रापि कारयेत् ।
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः ॥ १२ ॥
अग्निना तापितो नालात्तोये तस्मिन् पतत्यधः ।
यावद्दुष्णं भवेत् सर्वं भाजनं तावदेव हि ॥
जायते रससन्धानं डेकीयन्त्रमितीरितम् ॥ १३ ॥

अथ नारयायन्त्रम् ।—

लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ।
ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम् ॥ १४ ॥
मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत् ।
तोयं स्यात् सूतकस्याध ऊर्द्ध्वाधो वह्निदीपनम् ॥ १५ ॥

---

रूप-पीठोपरि प्रदीपमेकं संस्थाप्य तत्र सूतं स्थापयेत्, कच्छपयन्त्राधः वह्निञ्च दद्यात्, एवं प्रदीपस्थसूतः कच्छपयन्त्रे पतति तत् दीपिकाख्य यन्त्रं ज्ञेयम ॥ १० ॥

डेकीयन्त्रमाह, भाण्डकण्ठादिति ।—भाण्डस्य कण्ठनिम्ने छिद्रमेकं विधाय तत्र वंशनिर्मितं नलमेकं संयोज्य स्थापयेत् । अन्यच्च जलपूर्णकांस्यपात्रद्वयेन सम्पुटमेकं कृत्वा भाण्डकण्ठस्थ-नलाग्रं तत्र प्रवेश्य दृढं सन्धिरोधं कुर्य्यात । ततो भाण्डमध्ये निर्दिष्टद्रव्यैः सह रसं क्षिप्त्वा अग्निज्वाला देया, तेन नालच्छिद्रानुसारी रसः कांस्य-पात्रमध्यस्थजले पतति । एवं यावत् सर्वं पात्रम् उष्णं भवेत् तावत् कुर्य्यात । रससन्धानं रसनिर्गमनम् इत्यर्थः ॥ ११—१३ ॥

नारयायन्त्रमाह, लोहेत्यादि द्वाभ्याम् ।—वितस्तिमानं लौहमयमूषाद्वयं निर्माय तयोरीषच्छिद्रान्वितायाम् एकस्यां मूषायां गन्धकं संस्थापयेत, ततः रसगर्भाया-मन्यस्यां मूषायां पूर्वोक्तां सगन्धकमूषां प्रवेश्य सूतगर्भमूषाधो जलं स्थापयित्वा ऊर्द्ध-मध्य वह्निं प्रज्वालयेदिति ॥ १४।१५ ॥

अथ आरणायन्त्रस्य प्रकारान्तरम्।—

रसोनक-रसं भद्रे ! यत्नतो वस्त्रगालितम्।
दापयेत् प्रचुरं यत्नादाप्लाव्य रसगन्धकौ ॥ १६ ॥
स्थालिकायां पिधायोर्द्धं स्थालीमन्यां दृढ़ां कुरु।
सन्धिं विलेपयेत् यत्नात् मृदा वस्त्रेण चैव हि ॥ १७ ॥
स्थाल्यन्तरे कपोताख्यं पुटं कर्षाग्निना सदा।
यन्त्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा ॥ १८ ॥
एवं तु त्रिदिनं कुर्य्यात्ततो यन्त्रं विमोचयेत्।
तप्तोदके तप्तचुल्ल्यां न कुर्य्याच्छीतलक्रियाम् ॥ १९ ॥
न तत्र चीयते सूतो न च गच्छति कुत्रचित्।
अनेन च क्रमेणैव कुर्य्याद्गन्धकजारणम् ॥ २० ॥

अथ कच्छपयन्त्रम्।—

जलपूर्णपात्रमध्ये दत्त्वा घटखर्परं सुविस्तीर्णम्।
तदुपरि विड़मध्यगतः स्थाप्यः सूतः क्षतः कोष्ठ्याम् ॥ २१ ॥

---

अन्यविधं आरणायन्त्रमाह, रसोनक-रसमिति।—"रसोनकरसम" इत्यत्र "रसोनकवसाम्" इति पाठे—रसोनस्य मण्डं मज्जां वा, वसावत् प्रतीयमानत्वात् तथात्वेन निर्देशो बोध्यः। भद्रे इति पार्व्वत्याः सम्बोधनम्। कपोताख्यं पुटं कपोतपुटं, तल्लक्षणं यथा भावप्रकाशे—"यत् पुटं दीयते खाते अष्टसङ्ख्यैर्वनोपलैः। कपोतपुटमेतत्तु कथितं पुटपण्डितैः॥" इति। कर्षाग्निना करीषाग्निनेत्यर्थः, विभीतककाष्ठाङ्गारैर्वह्निना वा। अयं विधिः,—स्थालीमध्ये रसगन्धकौ संस्थाप्य वस्त्र-प्रस्तुतेन प्रचुररसोनद्रवेण आप्लावयेत्, ततः स्वल्पजरणेन रसगन्धकौ तौ पिधाय स्थाल्युपरि अन्यां दृढां स्थालीं संस्थाप्य मृद्वस्त्रेण सन्धिं लिप्त्वा च ऊर्द्ध्वस्थालीमध्ये कपोतपुटो देयः, यन्त्राधोऽपि करीषाग्निं तीव्राग्निं वा दद्यात्, एवं त्रिदिनं निरन्तरं, दिवसत्रयात्पूर्वं तप्तचुल्ल्युपरि उष्णोदकमध्ये यन्त्रं संस्थाप्य मोचयेत्, शीतक्रियाञ्च तदा न कुर्य्यात्। अनेनैव विधानेन गन्धकमपि जारयेत् इति ॥ १६—२० ॥

कच्छपयन्त्रमाह, जलपूर्णेति।—घटखर्परं घटकपालं "खाप्‌रा" इति भाषा।

लघुलोहकटोरिकया कृतषण्मृत्सन्धिलेपयाऽऽच्छाद्य ।
पूर्वोक्तघटखर्परमध्येऽङ्गारैः खदिर-कोलभवैः ॥ २२ ॥
स्वेदनतो मर्दनतः कच्छपयन्त्रस्थितो रसो जरति ।
अग्निबलेनैव ततो गर्भे द्रवन्ति सर्वसत्त्वानि ॥ २३ ॥

अथ विद्याधरयन्त्रम् ।—

यन्त्रं विद्याधरं ज्ञेयं स्थालीद्वितयसम्पुटात् ।
चुल्लीं चतुर्मुखीं कृत्वा यन्त्रभाण्डं निवेशयेत् ॥ २४ ॥
ततौषधं विनिक्षिप्य निरुन्ध्याद्भाण्डकाननम् ।
कोष्ठीयन्त्रमिदं नाम्ना तन्त्रज्ञैः परिकीर्त्तितम् ॥ २५ ॥

अथ सोमानलयन्त्रम् ।—

ऊर्द्ध्वं वह्निरधश्चाऽऽपो मध्ये तु रससङ्करः ।
सोमानलमिदं प्रोक्तं जारयेद्गगनादिकम् ॥ २६ ॥

लौहयां कटोरिकायां मूषायां वा इत्यर्थः । कृतेति ।—कृतः षड्भिः मृद्भिः "वल्मीकमृत्तिका धूमं गैरिकञ्चेष्टका पटु । इत्येता मृत्तिकाः पञ्च" इत्युक्तप्रकाराः पञ्च मृदः तथा सामान्या मृच्च इत्येताभिः षण्मृद्भिः ; यद्वा—कृतः षट् षड्वारं मृदा सन्धिलेपः यस्याः तथाभूतया, लघुलोहकटोरिकया इत्यनेन सम्बन्धः । सजलपात्रमध्ये बहुलसं खर्परखण्डमेकं संस्थाप्य तदुपरि कटोरिका मूषां वा एकां स्थापयित्वा तत्र त्रिडमध्यगतं रस रक्षेत, पश्चात् स्वल्पलोहकटोरिकया रसं तमावृत्य षड्भिर्मृद्भिः मृदा षड्वारं वा सन्धिलेपं कृत्वा च प्रागुक्तखर्परं खादिरकौलयोरन्यतराङ्गारैरापूर्य स्वेदयेत मर्दयेच्च, तेन रसो जीर्य्यति । अस्मिन्नेव यन्त्रे अग्निबलेनैव अन्यान्यपि सत्त्वानि गर्भे द्रवन्ति ॥ २१—२३ ॥

विद्याधरयन्त्रमाह, यन्त्रमिति ।—स्थालीद्वितयसम्पुटात् हण्डिकाद्वयकृतपुटविशेषात् । तदेव विवृणोति, चुल्लीमिति ।—अधोभाण्डे औषधं निक्षिप्य भाण्डान्तरेण मुखं पिधाय चुल्ल्यां चतुर्मुख्यां संस्थाप्य च ज्वाला देया । कोष्ठीयन्त्रमिति संज्ञान्तरमस्य । ग्रन्थान्तरे तु विद्याधरयन्त्रलक्षणमन्यविधं, तत्तु अग्रे स्वयमेव वक्ष्यति ॥ २४।२५ ॥

सोमानलयन्त्रमाह, ऊर्द्ध्वमिति ।—गगनादिकम् अभ्रादिकम् । स्थालीमध्ये

अथ गर्भयन्त्रम्।—

गर्भयन्त्रं प्रवक्ष्यामि पिष्टिका-भस्मकारकम्।
चतुरङ्गुलदीर्घान्तु त्र्यङ्गुलान्मितविस्तराम्॥ २७॥
मृन्मयीं सुदृढ़ां मूषां वर्त्तुलं कारयेन्मुखम्।
लोणस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः॥ २८॥
सुश्लक्ष्णं पेषयित्वा तु वारं वारं पुनः पुनः।
मूषालेपं दृढ़ं कृत्वा लवणार्द्धमृदम्बुभिः॥ २९॥
करीषतुषाग्निना भूमौ स्वेदयेन्मृदु मानवित्।
अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत्॥ ३०॥

अथ हंसपाकयन्त्रम्।—

खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत्।
अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत्॥ ३१॥
पञ्चक्षारैस्तथा मूत्रैर्लवणञ्च विड़ं ततः।
हंसपाकं समाख्यातं यन्त्रं तद्वार्त्तिकोत्तमैः॥ ३२॥

रसमूषां संस्थाप्य शरावेण मुखं पिधाय मृद्वस्त्रेण सन्धिं लिप्त्वा च जलपूर्णस्थाल्यन्तरोपरि स्थालीं तां स्थापयेत् शरावोपरि करीषाग्निञ्च दद्यादिति॥ २६॥

गर्भयन्त्रमाह, गर्भयन्त्रमिति।—पिष्टिका नष्टपिष्टीकृतः रस इत्यर्थः। विस्तरामिति छान्दसः, विस्तारामित्यर्थः। लोणस्य लवणस्य; "लोणस्य" इत्यत्र "लोहस्य" इति पाठान्तरं न युक्तं, "लवणार्द्धमृदम्बुभिः" इति वक्ष्यमाणवाक्यविरोधात्। अत्र वारं वारमिति पदं पेषयित्वा, तथा पुनः पुनरिति पदं मूषालेपमित्यनेन योजनीयम्। लवणार्द्धमृदम्बुभिरिति सहार्थे तृतीया, तेन लवणार्द्धमृदम्बुभिः सह लोणगुग्गुलू पेषयित्वा इति तथा विंशतिभागलवणापेक्षया मृदोऽर्द्धत्वमिति च बोध्यम्। करीषत् आतपे शोषयेत्॥ २७—३०॥

हंसपाकयन्त्रमाह, खर्परमिति।—सिकतापूर्णं वालुकापूर्णम्। पञ्चक्षारैः "यवसुष्कमुष्कजानां पलाशतिलयोस्तथा। क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः॥" इत्युक्तप्रकारैः। अत्र क्षारसाहचर्य्यात् मूत्रस्यापि पञ्चत्वं बोध्यम्; तानि च "अजाविगजानां मेषीणां महिषीणाञ्च निश्चितम्। मूत्रंच गर्दभीनां यत्तन्मूत्रं मूत्रपञ्च-

अथ वालुकायन्त्रम् ।—

सरसां गूढवक्त्रां मृद्वस्त्राङ्गुलघनावृताम् ।
शोषितां काचकलसीं त्रिषु भागेषु पूरयेत् ॥ ३३ ॥
भाण्डे वितस्तिगम्भीरे वालुका सुप्रतिष्ठिता ।
तद्भाण्डं पूरयेत्त्रिभिरन्याभिरवगुण्ठयेत् ॥ ३४ ॥
भाण्डवक्त्रं मणिकया सन्धिं लिम्पेन्मृदा पचेत् ।
चुल्ल्यां तृणस्य चाऽऽदाहान्मणिकापृष्ठवर्त्तिनः ॥
एतद्धि वालुकायन्त्रं तद्यन्त्रं लवणाश्रयम् ॥ ३५ ॥

अथ वालुकायन्त्रस्य प्रकारान्तरम् ।—

पश्चाद्-वालुकापूर्ण-भाण्डे निक्षिप्य यत्नतः ।
पच्यते रसगोलाद्यं वालुकायन्त्रमीरितम् ॥ ३६ ॥

कम ॥” इति । लवणानि चात्र षट् बोध्यानि रसेन्द्रचिन्तामणिसंवादात्, तत्तु प्रागेव विवृतम् ; पञ्चक्षारैस्तथा पञ्चमूत्रैः सह लवणानि संयोज्य विडं पचेदिति योज्यम् । यन्त्रमेतत् विडपाकार्थं ज्ञेयम ॥ ३१।३२ ॥

वालुकायन्त्रमाह, सरसामिति ।—सरसां पारदगर्भाम् । गूढवक्त्रां सङ्कीर्णमुखीम् । मृदिति ।—मृद्वस्त्रेण मृल्लिप्तवस्त्रेण अङ्गुलघनम् अङ्गुलमात्रोत्सेधं यथा तथा आवृताम् । त्रिषु भागेषु पूरयेत पाच्यरसादिना काचकलस्याः भागत्रयं पूरयेदित्यर्थः । त्रिषु भागेष्विति अवच्छेदे सप्तमी । भाण्डे इत्यत्र काचकलसीं स्थापयेदिति शेषः । वालुकाभिः कियान् भागः पूरयितव्य इत्यपेक्षायामाह,—तद्भाण्डमिति । त्रिभिरित्यत्र भागैरिति शेषः । तृतीया चात्र अभेदे, भाण्डस्य भागत्रयमित्यर्थः, पूरयेत, वालुकयेति शेषः । अन्याभिः वालुकाभिरित्यर्थः, अवशिष्टांशं पूरयेदिति शेषः । अवगुण्ठयेदित्यस्य मणिकया इत्यनेन सम्बन्धः ; मणिकया शरावेण । अयमर्थः,—सङ्कीर्णमुखीं काचकूपिकां मृद्वस्त्रेणाङ्गुलोत्सेधमालिप्य शोषयित्वा च तस्या भागत्रयं रसेनापूरयेत, ततो वितस्तिप्रमाणगभीरे वालुकया त्रिभागपूर्णे भाण्डमध्ये तां निवेश्य ऊर्ध्वे वालुकया आच्छादयेत्, ततश्च शरावेण भाण्डवक्त्रं पिधाय मृत्तिकया सन्धिं लिप्त्वा च तावत् पचेत् यावत शरावोपरि न्यस्तं तृणं न दहेदिति । तुल्यलक्षणत्वात् वालुकायन्त्रप्रसङ्गे लवणयन्त्रमप्यतिदिशति, तदिति ।—तत् उक्तप्रकारं यन्त्रं, लवणाश्रयम्, अपि भवतीति शेषः, लवणयन्त्रमपि वालुकायन्त्रवत् भवतीत्यर्थः ॥ ३३—३५ ॥

अथ लवणयन्त्रम्।—

एवं लवणनिक्षेपात् प्रोक्तं लवणयन्त्रकम्॥ ३७॥

अथ लवणयन्त्रस्य प्रकारान्तरम्।—

अन्तःकृतरसालेप-ताम्रपात्रमुखस्य च।
लिप्त्वा मृल्लवणेनैव सन्धिं भाण्डतलस्य च॥ ३८॥
तद्भाण्डं पटुनाऽऽपूर्य क्षारैर्वा पूर्ववत् पचेत्।
एवं लवणयन्त्रं स्याद्रसकर्मणि शस्यते॥ ३९॥

अथ नालिकायन्त्रम्।—

लोहनालगतं सूतं भाण्डे लवणपूरिते।
निरुद्धं विपचेत् प्राज्ञो नालिकायन्त्रमीरितम्॥४०॥

अथ भूधरयन्त्रम्।—

वालुकागूढसर्वाङ्गां गर्त्ते मूषां रसान्विताम्।
दीप्तोत्पलैः संवृणुयात् यन्त्रं तद्भूधराह्वयम्॥ ४१॥

---

अन्यविधं वालुकायन्त्रमाह, पश्चेति।—चत्वारिंशच्छरावमितवालुकापूर्णभाण्डे इत्यर्थः। अत्र वालुकामध्ये एव रसगोलादिकं स्थापयेत्, न तु काच-कूप्यामिति विशेषः॥ ३६॥

वालुकायन्त्रे "तद्यन्त्रं लवणाश्रयम्" इत्युक्तम्, अतस्तदेव लवणयन्त्रमाह, एव-मिति।—एवं वालुकायन्त्रवत्। भाण्डमध्ये वालुकास्थाने लवणनिक्षेपात् लवणयन्त्रं ज्ञेयम्; अन्यत् सर्वं तुल्यमिति॥ ३७॥

लवणयन्त्रस्य प्रकारान्तरमाह, अन्तरिति।—अन्तः ताम्रपात्रमध्ये इत्यर्थः, कृतः रसेन आलेपः यत्र तथाभूतं यत् ताम्रपात्रं तस्य मुखं तस्य रसालिप्तोदरताम्रपात्रमुखस्य, तथा भाण्डतलस्य ताम्रपात्रमुखोपरि स्थापितभाण्डाधोभागस्य। तद्भाण्डम् उपरिस्थभाण्डम्। पूर्ववत् हठस्य चाद्दाहात् इत्यर्थः। ताम्रपात्रोदरे रसं निक्षिप्य तदुपरि लवणपूर्णं क्षारपूर्णं वा भाण्डमेकं विन्यसेत्, ततो मृल्लवणेन सन्धिं रुद्ध्वा पचेत् इति॥ ३८।३९॥

नालिकायन्त्रमाह, लोहेति।—लौहमयनालमध्ये पारदमापूर्य छिद्रदीर्घं कृत्वा च लवणपूरितभाण्डान्तः नालं तं निरुन्ध्यात्, ततो मणिकया भाण्डवक्त्रमाच्छाद्य आलिप्य च सन्धिं तावत् पचेत् यावत् शरावोपरिस्थं तृणं न दहेत् इति॥ ४०॥

अथ पुटयन्त्रम् ।—

शरावसम्पुटान्तःस्थं करीषेष्वग्निमानवित् ।
पचेत्तुल्लयां हियामं वा रसं तत् पुटयन्त्रकम् ॥ ४२ ॥

अथ कोष्ठीयन्त्रम् ।

षोड़शाङ्गुलविस्तीर्णं हस्तमात्राऽऽयतं समम् ।
धातुसत्त्वनिपातार्थं कोष्ठीयन्त्रमिति स्मृतम् ॥ ४३ ॥

अथ वलभीयन्त्रम् ।—

यत्र लोहमये पात्रे पार्श्वयोर्वलयद्वयम् ।
तादृक् स्वल्पतरं पात्रं वलयप्रोतकोष्ठकम् ॥ ४४ ॥
पूर्वपात्रोपरि न्यस्य स्वल्पपात्रे परिक्षिपेत् ।
रसं सम्मूर्च्छितं स्थूल-पात्रमापूर्य्य काञ्जिकैः ॥४५॥

---

भूधरयन्त्रमाह, वालुकेति ।—गर्त्तस्थवालुकोपरि रसगर्भां मूषां संस्थाप्य वालुकया चाच्छाद्य उपरिदेशे करीषाग्निं दद्यादिति । ग्रन्थान्तरे तु यन्त्रमेतत् अन्यथा पठितं, तद्यथा चतिसंहितायां,—"यन्त्रं डमरुवद्वाऽथ वाऽधःपातनयन्त्रवत् । भूगर्त्ते तत् समाधाय चोर्ध्वमाकीर्य्य वह्निना ॥ अधःस्थाल्यां जलं क्षिप्त्वा सूतकं तत्र पातयेत् । एतद्भूधरयन्त्रं स्यात् सूतसंस्कारकर्मणि ॥" इति ॥ ४१ ॥

पुटयन्त्रमाह, शरावेति ।—करीषेषु पचेत् अथवा अग्निमानवित् हियामं तुल्लयाम् अङ्गारेषु पचेदिति योज्यम ॥ ४२ ॥

कोष्ठीयन्त्रमाह, षोडशेति ।—अत्र सममिति पदेन मिलितभाण्डद्वयस्य षोडशाङ्गुलत्वादि बोध्यम् ; एवञ्च वितस्तिप्रमाणदीर्घस्य अष्टाङ्गुलविस्तीर्णस्य च अधोभाण्डस्य मुखोपरि तावन्मानं भाण्डान्तरमधोमुखं संस्थाप्य अधो दृढाङ्गारैः भस्त्रया धमेत, तेन धातुसत्त्वं निर्गच्छतीति । चधिसंहितायामेतच्छ्लोकानन्तरमस्यैवापरांशः पठितः तद्यथा,—"परिपूर्णं दृढाङ्गारैरधो वातेन कोष्ठके । भावयेत् ज्वालमार्गेण ज्वालयेच्च हुताशनम् ॥" इति ॥ ४३ ॥

वलभीयन्त्रमाह, यत्रेति ।—वलयद्वयं वलयं "कड़ा" "आंटा" इति ख्यातम् । तादृक् लौहमयम् । वलयेति ।—वलये वृहत्पात्रस्थवलये प्रोतम् आबद्धं कोष्ठं मध्यदेशो यस्य तादृशम् । अयमर्थः,—वृहदाकारं कान्तलौहमयं पात्रमेकं निर्माय तस्यान्तर्गताद्धःपार्श्वद्वये वलयद्वयं संयोजनीयम् ; क्षुद्राकारमपरमपि तथाविधं

द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे।
एतत् स्याद्दलभीयन्त्रं रसे षाड्गुण्यकारकम्॥
सूक्ष्मकान्तमये पात्रे रसः स्याद्गुणवत्तरः॥ ४६॥

अथ तिर्य्यक्पातनयन्त्रम्।—

क्षिपेद्रसं घटे दीर्घनताधोनालसंयुते।
तन्नालं निक्षिपेदन्य-घटकुक्ष्यन्तरे खलु॥ ४७॥
तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरथ।
अधस्ताद्रसकुम्भस्य ज्वालयेत्तीव्रपावकम्॥ ४८॥
इतरस्मिन् घटे तोयं प्रक्षिपेत् स्वादु शीतलम्।
तिर्य्यक्पातनमेतद्धि वार्त्तिकैरभिधीयते॥ ४९॥

अथ पालिकायन्त्रम्।—

चषकं वर्त्तुलं लौहं विनताग्रोर्द्धदण्डकम्।
एतद्धि पालिकायन्त्रं बलिजारणहेतवे॥ ५०॥

पात्रमेकं कृत्वा बृहत्पात्रस्थे वलये अस्पृष्टतलभागं यथा तथा आबध्य तत्र मूर्च्छितरसं परिक्षिपेत्, काञ्जिकेन स्थूलपात्रञ्च पूरयेदिति। रसे षाड्गुण्यकारकं षाड्गुण्यं "विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया" इत्युक्त-षड्गुणप्रद-शक्ति-जनकम्; एवंविधरसोपयोक्ता उक्तषाड्गुण्यसिद्धिं लभते इत्यर्थः॥ ४४-४६॥

तिर्य्यक्पातनयन्त्रमाह, क्षिपेदिति।—दीर्घनताधोनालसंयुते दीर्घाकारं नतं निम्नाभिमुखञ्च यत् अधोनालं तेन संयुते। अयं विधिः,—एकस्मिन् घटे रसं निधाय तस्य उदराधो दीर्घमधोलम्बितं नालमेकं संयोज्य द्वितीयघटोदरस्थच्छिद्रे नालाग्रं प्रवेश्य मृद्वस्त्रेण सन्धिमालिप्य च घटयोर्मुखमपि तथा लिम्पेत्, रसकुम्भाधश्च तीव्राग्निं प्रज्वालयेत्. द्वितीयघटे स्वादुशीतलं जलञ्च प्रक्षिपेत् इति॥ ४७—४९॥

पालिकायन्त्रमाह, चषकमिति।—विनतम् अग्रं यस्य तत् न्युब्जीकृताग्रभागम्, ऊर्द्धम् उच्चैःकृतं दण्डं यस्य तत् उन्नतदण्डं, विनताग्रञ्च तत् ऊर्द्धदण्डञ्चेति विनताग्रोर्द्धदण्डकं लौहं लोहमयं वर्त्तुलं गोलाकारं चषकं कटोरिका, कार्य्यमिति शेषः। चषकशब्दस्य मद्यपानपात्रार्थकत्वेऽपि पात्रमात्रार्थकत्वं प्रागेव प्रदर्शितम्। बलिजारणहेतवे गन्धकजारणार्थम्॥ ५०॥

अथ घटयन्त्रम् ।—

चतुष्प्रस्थ-जलाधारश्चतुरङ्गुलिकाऽऽननः ।
घटयन्त्रमिदं प्रोक्तं तदाप्यायनकं स्मृतम् ॥ ५१ ॥

अथ इष्टकायन्त्रम् ।—

विधाय वर्त्तुलं गर्त्तं मल्लमत्र निधाय च ।
विनिधायेष्टकां तत्र मध्यगर्त्तवतीं शुभाम् ॥ ५२ ॥
गर्त्तस्य परितः कुर्य्यात् पालिकामङ्गुलोच्छ्रयाम् ।
गर्त्ते सूतं विनिक्षिप्य गर्त्तास्ये वसनं क्षिपेत् ॥ ५३ ॥
निक्षिपेत् गन्धकं तत्र मल्लेनाऽऽस्यं निरुध्य च ।
मल्ल-पालिकयोर्मध्ये मृदा सम्यङ्निरुध्य च ॥ ५४ ॥
वनोत्पलैः पुटं देयं कपोताख्यं न चाधिकम् ।
इष्टिकायन्त्रमेतत् स्याद्गन्धकं तेन जारयेत् ॥ ५५ ॥

अथ हिङ्गुलाकृष्टिविद्याधरयन्त्रम् ।—

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरुध्य च ।
ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ॥
एतद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे ॥ ५६ ॥

घटयन्त्रमाह, चतुरिति ।—षोडशशरावमितजलधारणसमर्थः चतुरङ्गुलविस्तृतमुखविशिष्टश्च घटः घटयन्त्रमिति निष्कर्षः । आप्यायनकं रसादीनां तर्पणं, षाड्गुण्यसम्पादनमिति यावत् । "आप्यायनकम्" इत्यत्र "उत्थापनकम्" इति पाठे —रसोत्थापनसाधनमित्यर्थः ॥ ५१ ॥

इष्टकायन्त्रमाह, विधायेति ।—मल्लं शरावपात्रम् । पालिकाम् आलवालम् । गोलाकारं गर्त्तमेकं कृत्वा तत्र शरावं संस्थाप्य तदुपरि मध्यच्छिद्रामिष्टकामेकां विन्यसेत्, इष्टकागर्त्तं परितः अङ्गुलिमितोन्नतम् आलवालमेकञ्च कुर्य्यात्, तत इष्टकारन्ध्रे पारदं विनिक्षिप्य रन्ध्रमुखे वस्त्रं तदुपरि गन्धकञ्च विन्यस्य शरावान्तरेण कृत्वा शरावालवालयोः सन्धिं मृदा सम्यगालिप्य च वन्यकरीषैः कपोताख्यपुटं कुर्य्यादिति निष्कर्षः ॥ ५२—५५ ॥

हिङ्गुलाकृष्टिविद्याधरयन्त्रमाह, स्थालिकोपरीति ।—स्थालीमेकाम् ऊर्द्ध्वमुखी-

अथ डमरुयन्त्रम्।—

यन्त्रस्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरुन्धयेत्।
यन्त्रं डमरुकाख्यं तद्रसभस्मकृते हितम्॥ ५७॥

अथ नाभियन्त्रम्।—

मल्लमध्ये चरेद्गर्त्तं तत्र सूतं सगन्धकम्।
गर्त्तस्य परितः कुड्यं प्रकुर्य्यादङ्गुलोच्छ्रितम्॥ ५८॥
ततश्चाऽऽच्छादयेत् सम्यग्गोस्तनाकारमूषया।
सम्यक् तोयमृदा रुद्ध्वा सम्यगत्राच्यमानया॥ ५९॥

तत्र तोयमृल्लक्षणम्।—

{ लोहवल्कृतबब्बूल-क्वाथेन परिमर्दितम्। }
{ जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम्॥ }
{ इयं हि जलमृत् प्रोक्ता दुर्भेद्या सलिलैः खलु॥६०॥ }

तत्र वह्निमृत्स्ना।—

{ खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः। }
{ वह्निमृत्स्ना भवेद्घोर-वह्नितापसहा खलु॥ ६१॥ }

---

मिति शेषो बोध्यः। अत्र हिङ्गुलाकृष्टिप्रकारस्य अनुक्तत्वात् ग्रन्थान्तरोक्तस्तत्प्रकारः प्रदर्श्यते, तद्यथा—जम्बीरादिरसशोधितहिङ्गुलम् अधःस्थाल्यां पर्णोपरि संस्थाप्य कठिनीघृष्टतलभागामुत्ताना स्थालीमपरा तदुपरि दत्त्वा मृदम्बरादिभिः सन्धिमालिप्य च अधो ज्वाला देया ऊर्द्ध्वस्थाल्यां जलञ्च, उष्णे च तस्मिन् तत् निःक्षिप्य पुनर्देयम्, एवं त्रिंशद्वारं कुर्य्यात्। ग्रन्थान्तरेऽस्य ऊर्द्ध्वपातनमिति नामान्तरम्। क्वचिदेतदनन्तरं "रसं सम्मूर्च्छितं स्थूलपात्रमापूर्य्य काञ्जिकैः। त्रियामं स्वेदयेदेवं रसो-त्थापनहेतवे॥" इत्यधिकः पाठो विद्यते॥ ५६॥

डमरुयन्त्रमाह, यन्त्रेति।—न्युब्जाम् अधोमुखीम्। डमरुकाख्यं डमरुवाद्ययन्त्र-विशेषः तदाख्यम्॥ ५७॥

नाभियन्त्रमाह, मल्लमध्ये इति।—कुड्यं भित्तिः, आलबालाकारमिति यावत्। अत्राच्यमानया अत्र यन्त्रे उच्यमानया कथ्यमानया, तोयमृदा लोहवदित्यादिना वक्ष्य-माणया परिभाषितमृदा इत्यर्थः। अत्र प्रथमं सम्यक् "आच्छादयेत्" द्वितीयं सम्यक्

एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः ।
विदग्धवनिताप्रौढ-प्रेम्णा रुद्धः पुमानिव ॥ ६२ ॥
नन्दी नागार्जुनश्चैव ब्रह्मज्योतिर्मुनीश्वरः ।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ॥ ६३ ॥

ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं प्रोक्तं नन्दिना सर्ववेदिना ॥
अनेन जीर्यते सूतो निर्धूमः शुद्धगन्धकः ॥ ६४ ॥

अथ ग्रस्तयन्त्रम् ।—

मूषां मूषोदराविष्टामाधन्तः समवर्त्तुलाम् ।
चिपिटाञ्च तले प्रोक्तं ग्रस्तयन्त्रं मनीषिभिः ॥
सूतेन्द्रबन्धनार्थं हि रसविद्भिरुदीरितम् ॥ ६५ ॥

अथ स्थालीयन्त्रम् ।—

स्थाल्यां ताम्रादि निक्षिप्य मल्लेनाऽऽस्यं निरुध्य च ।
पच्यते स्थालिकाधस्तात् स्थालीयन्त्रमितीरितम् ॥ ६६ ॥

अथ धूपयन्त्रम् ।—

विधायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम् ।
कण्ठाधो द्व्यङ्गुले देशे गलाधारं हि तत्र च ॥ ६७ ॥
तिर्य्यग्लोहशलाकाश्च तन्वीस्तिर्य्यग्विनिक्षिपेत् ।
तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत् ॥ ६८ ॥

"रुद्धा" तृतीयं सम्यक् "उच्यमानया" सम्बध्यते । तोयमृत्प्रकारमाह,—लिहवदिति । लेपार्थमृत्तिकाप्रस्तुतप्रसङ्गक्रमेण वह्निमृत्प्रकारमाह,—खटिकेति । अथ विधिः,— पात्रमध्ये किञ्चित् गर्त्तं कृत्वा तत्र रसगन्धकौ निवेश्य गर्त्तस्य चतुर्दिक्षु अङ्गुलोच्छ्रायम् आलवालं कुर्य्यात्, ततो गोस्तनाकृतिमूषया सालवालं सरसगन्धकं गर्त्तमाच्छाद्य तोयमृदा सन्धिं लिम्पेत्, ततस्तत्र जलं दत्त्वा यन्त्राधो वह्निं दापयेत् इति ॥५८—६४॥

ग्रस्तयन्त्रमाह, मूषामिति ।—सूतेन्द्रबन्धनार्थं रसपाकार्थम् ॥ ६५ ॥

स्थालीयन्त्रमाह, स्थाल्यामिति ।—सुगमम् ॥ ६६ ॥

धूपयन्त्रमाह, विधायेति ।—गलाधारे शलाकास्थापनार्थं गलदेशस्थपालिका

पत्राधो निक्षिपेद्धूमं वक्ष्यमाणमिहैव हि ।
तत् पात्रं न्युब्जपात्रेण छादयेदपरेण हि ॥ ६९ ॥
मृदा विलिप्य सन्धिञ्च वह्निं प्रज्वालयेदधः ।
तेन पत्राणि कृत्स्नानि हतान्युक्तविधानतः ॥ ७० ॥
रसश्चरति वेगेन द्रुतं गर्भे द्रवन्ति च ।
गन्धालकशिलानां हि कज्जल्या वा मृताहिना ॥ ७१ ॥
धूपनं स्वर्णपत्राणां प्रथमं परिकीर्त्तितम् ।
तारार्थं तारपत्राणि मृतवङ्गेन धूपयेत् ॥ ७२ ॥
धूपयेच्च यथायोग्यैरन्यैरुपरसैरपि ।
धूपयन्त्रमिदं प्रोक्तं जारणाद्रव्यसाधने ॥ ७३ ॥

अथ कन्दुकयन्त्रम ।—

स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम् ।
तत्र स्वेद्यं विनिक्षिप्य तन्मुखं प्रपिधाय च ॥ ७४ ॥
अधस्ताज्ज्वालयेदग्निं तत् स्यात् कन्दुकयन्त्रकम् ।
स्वेदनी-यन्त्रमित्यन्ये प्राहुस्खेदं मनीषिणः ॥ ७५ ॥

---

ह्रदाधारविशेषे इत्यर्थः। अत्र प्रथमं तिर्य्यक् "लौहशलाका" इत्यनेन द्वितीयस्य "विनिक्षिपेत" इत्यनेन सम्बध्यते। तिर्य्यक् वक्राकाराः तन्वीः सूक्ष्माः लौहशलाकाः तिर्य्यक् वक्रभावेन विनिक्षिपेत इत्यन्वयः। तेनेत्यादि।—उक्तविधिना हतानि कृत्स्नानि पत्राणि द्रुतं गर्भे द्रवन्ति, ततश्च रसः स स्वर्णपत्रद्रवः वेगेन चरति स्वकार्य्यं साधयतीत्यर्थः। पत्राधो निक्षिपेद्धूममित्युक्तं, किन्तद्धूममित्याह,—गन्धेति। प्रथमं श्रेष्ठम। दैर्घ्यविस्तारतोऽष्टाङ्गुलमानं लौहपात्रमेकं कारयित्वा तस्य कण्ठाधः अङ्गुलिद्वयपरिमितस्थाने गलाधारं सूक्ष्मतिर्य्यग्लौहशलाकाः तिर्य्यग्भावेन विन्यस्य तदुपरि कण्टकवेध्यस्वर्णपत्राणि स्थापयेत्; तत्पत्राधः पात्राभ्यन्तरे गन्धकहरितालमनःशिलाभिः कृतकज्जलीं मृतनागं वा निक्षिप्य अधोमुखपात्रान्तरेण तत् पात्रं पिधाय मृदादिना सन्धिं रुद्ध्वा च पात्राधो वह्निं प्रज्वालयेत्, तेन सन्तप्तकज्जल्यादितो धूमं निर्गत्य स्वर्णपत्रे लगिष्यति पत्राणि तानि भस्मीभवन्ति गर्भे द्रवन्ति च ॥ ६७—७३ ॥

कन्दुकयन्त्रमाह, स्थूलस्थाल्यामिति।—स्पष्टम्। स्वेदनीयन्त्रतया प्रागुक्तमपि

अथ कन्दुकयन्त्रस्य प्रकारान्तरम् ।—

यद्वा स्थाल्यां जलं क्षिप्त्वा वस्त्रं क्षिप्त्वा मुखोपरि ।
स्वेद्यद्रव्यं परिक्षिप्य पिधानं प्रविधाय च ॥
अधस्ताज्ज्वालयेद्वह्निं तत् स्यात् कन्दुकयन्त्रकम् ॥ ७६ ॥

अथ खल्लयन्त्रम् ।—

खल्लयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः ।
षोडशाङ्गुलकोत्सेधा नवाङ्गुलकविस्तरा ॥ ७७ ॥
चतुर्विंशाङ्गुला दीर्घा घर्षणी द्वादशाङ्गुला ।
विंशत्यङ्गुलदीर्घा वा स्यादुत्सेधे दशाङ्गुला ॥
खल्लप्रमाणं तज्ज्ञेयं श्रेष्ठं स्याद्रसकर्मणि ॥ ७८ ॥

अथ खल्लयन्त्रस्य वैविध्यनिर्देशः ।—

खल्लयन्त्रं त्रिधा प्रोक्तं रसादिसुखमर्दने ॥ ७९ ॥

द्विविधखल्लयोः सामान्यलक्षणम् ।—

निरुद्गारौ सुमसृणौ कार्य्यौ पुत्रिकया युतौ ॥ ८० ॥

---

इदं मतान्तरप्रदर्शनार्थं पुनरुक्तम् ; अथवा तत्र स्थाल्या विशेषो नोक्तः, अतः या काचित् स्थाली एव ग्राह्या, अत्र तु स्थूलस्थाली एव ग्राह्या, अतः स्वेदनीयत्वात् अस्य वैशिष्ट्यम् इति ॥ ७४।७५ ॥

प्रकारान्तरमाह, यद्वेति ।—मुखोपरि स्थाल्या मुखोपरि इत्यर्थः । "मुखोपरि" इत्यत्र "वस्त्रोपरि" इति पाठे—स्थाल्यां वस्त्रं क्षिप्त्वा तद्वस्त्रोपरि इत्यर्थः । जलपूर्णस्थालीमुखे वस्त्रं संस्थाप्य तदुपरि स्वेद्यद्रव्यं निधाय च पिधानं दत्त्वा वह्निज्वाला देया ॥ ७६ ॥

खल्लयन्त्रमाह, खल्लयोग्येति ।—उत्सेधः पार्श्वत उन्नतः । दीर्घः आयामेन उन्नतः इति दीर्घोत्सेधयोर्भेदः । घर्षणी कज्जली, पुत्रिका इति यावत्, "नोड़ा" इति भाषा ॥ ७७।७८ ॥

कार्य्यविशेषार्थं खल्लस्य प्रकारभेदमाह, खल्लयन्त्रमिति ।—स्पष्टम् ॥ ७९ ॥

तत्र द्विविधयोः सामान्यलक्षणमाह, निरुद्गाराविति ।—निरुद्गारौ उद्गारकाले यथा देहस्य ऊर्ध्वश्वयनादिकं भवति तथा न भवति इति तादृशौ, चौरत्या-

अथ शोधनार्थम् अर्द्धचन्द्राकृतिखल्वनिर्देशः ।—

उत्सेधे स दशाङ्गुलः खलु कलातुल्याङ्गुलायामवान्
विस्तारेण दशाङ्गुलो मुनिमितैर्निम्नस्तथैवाङ्गुलैः ।
पाल्यां द्व्यङ्गुलविस्तरश्च मसृणोऽतीवार्द्धचन्द्रोपमो
घर्षो द्वादशकाङ्गुलश्च तदयं खल्वो मतः सिद्धये ॥ ८१ ॥
अस्मिन् पञ्चपलः सूतो मर्दनीयो विशुद्धये ।
तत्तदौचित्ययोगेन खल्वेष्वन्येषु योजयेत् ॥ ८२ ॥

अथ मर्दनार्थं वर्त्तुलखल्वनिर्देशः ।—

द्वादशाङ्गुलविस्तारः खल्वोऽतिमसृणोपलः ।
चतुरङ्गुलनिम्नश्च मध्येऽतिमसृणीकृतः ॥ ८३ ॥
मर्दकश्चिपिटोऽधस्तात् सुग्राह्यश्च शिखोपरि ।
अयं हि वर्त्तुलः खल्वो मर्दनेऽतिसुखप्रदः ॥ ८४ ॥

---

नतत्वरहितौ समौ इत्यर्थः; यद्वा—निबद्धारौ वान्तादिपरिशून्यौ, वान्तश्चात्र मर्दनकाले रज-उद्गीरणादिरूपम्, एतेन दृढमसृणौ समगात्रौ न तु उद्गतकणिकौ इत्यर्थः समायाति इति । पुत्रिकया घर्षण्या इत्यर्थः । निबद्धारौ इत्यादिषु खल्वौ इति विशेष्यपदम् ऊहनीयम्; तेन च त्रिविधेषु खल्वेषु द्विविधौ खल्वौ एवम्भूतौ कार्यौ इत्याशयः । अत्र द्विवचनम् "उत्सेधे" इत्यारभ्य "अति-सुखप्रदः" इत्यन्तेन वक्ष्यमाणद्विविधखल्वबोधनार्थं, तृतीयस्य तु लौहमयत्वात् पृथक् ग्रहणं बोध्यम् ॥ ८० ॥

निबद्धारौ इत्यादिसामान्यलक्षणेनोक्तयोर्द्विविधखल्वयोर्विशेषलक्षणं विवक्षुः प्रथमं तावत् रसादिशोधनार्थमर्द्धचन्द्राकृतिखल्वप्रकारमाह, उत्सेधे इति ।—उत्सेधः पार्श्वत औन्नत्यम् । कलेति ।—षोडशाङ्गुलदीर्घः । मुनिमितैः सप्तभिः । निम्नः गभीरः । पाल्यां चतुष्पार्श्वस्थतटरूपप्रदेशे । अर्द्धचन्द्रोपमः चन्द्रार्द्धवदाकारविशिष्टः । घर्षः शिलापुत्रः । सिद्धये रसकर्मसिद्ध्यर्थम् । प्रयोजनानुसारेण खल्वान्तरेऽपि रसः शोधनीय इति वक्तुमाह, तत्तदिति ।—तत्तदौचित्ययोगेन विशिष्टप्रयोजनानुसारेण; पञ्चपलादधिक-सूते मर्दनीये बृहत् खल्वान्तरमपि व्यवहर्त्तव्यमित्यर्थः ॥ ८१।८२ ॥

मर्द्दनार्थं द्वितीयं वर्त्तुलखल्वमाह,—द्वादशेति । मर्द्दक इति ।—पुत्रिका अधोभागे

अथ तप्तखल्लार्थं खल्लनिर्देश: ।—

लौहो नवाङ्गुल: खल्लो निम्नत्वे च षडङ्गुल: ।
मर्दकोऽष्टाङ्गुलश्चैव तप्तखल्लाभिधोऽप्ययम् ॥८५॥

अथ तप्तखल्लविधि: ।—

कृत्वा खल्लाकृतिं चुल्लीमङ्गारै: परिपूरिताम् ।
तस्यां निवेश्य तं खल्लं पार्श्वे भस्त्रिकया धमेत् ॥ ८६ ॥
तदन्तर्मर्दिता पिष्टि: क्षारैरम्लैश्च संयुता ।
प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशय: ॥
कृत: कान्तायसा सोऽयं भवेत् कोटिगुणो रस: ॥८७॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
यन्त्रनिरूपणं नाम नवमोऽध्याय: ॥ ९ ॥

र्चिपिटवद्विस्तीर्णा उपरिभागे च सुखेन यथा धारणीया भवति तथा कर्त्तव्य इत्यर्थ: ॥ ८३।८४ ॥

तृतीयं तप्तखल्लार्थं खल्लमाह, लौह इति ।—लौह: लौहमय इत्यर्थ: ॥ ८५ ॥

तप्तखल्लविधिमाह,—कृत्वेति । तदन्तरिति ।—अङ्गारपूर्णचुल्ल्युपरि-स्थापितखल्ल-मध्ये क्षाराम्लसंयोगेन मर्दितरसादिपिष्टि: इत्यर्थ: । कान्तायसा कान्तलौहनिर्मित-तप्तखल्लेन इत्यर्थ: ॥ ८६।८७ ॥

इति रसरत्नसमुच्चयबोधिन्यां नवमोऽध्याय: ॥ ९ ॥

# अथ दशमोऽध्यायः ।

---

## अथ मूषादिकथनम् ।—

अथ मूषायाः पर्य्यायाः ।—

मूषा हि क्रौञ्चिका प्रोक्ता कुमुदी करहाटिका ।
पाचनी वह्निमित्रा च रसवादिभिरिष्यते ॥ १ ॥

अथ मूषाया निरुक्तिः ।—

मुष्णाति दोषान् मूषा या सा मूषेति निगद्यते ॥ २ ॥

अथ मूषाया उपादानम् ।—

उपादानं भवेत्तस्या मृत्तिका लौहमेव च ॥ ३ ॥

अथ मूषाप्रशंसा ।—

मूषामुखविनिष्क्रान्ता वरमेकाऽपि काकिणी ।
दुर्जनप्रणिपातेन धिग्लक्षमपि मानिनाम् ॥ ४ ॥

---

यन्त्रवत् मूषा-पुटादीनामपि रसकर्मणि यौगिकत्वात् पूर्वाध्याये यन्त्रनिरूपणानन्तरं मूषादिकं निरूपयितुं दशमाध्यायमारभते ; तत्रादौ तावत् मूषापर्य्यायमाह, मूषेति । —स्पष्टम् ॥ १ ॥

मूषाया निरुक्तिमाह, मुष्णातीति ।—मुष्णाति अपहरति, नाशयतीति यावत्, दोषान् रसादिगतनागादिदोषान् इत्यर्थः, दोषमोषणात् मूषा इति सारः ॥ २ ॥

मूषायाः सामान्योपादानमाह, उपादानमिति ।—सुगमम् ॥ ३ ॥

मूषासाध्यरसादिगौरवं प्रशंसनीयत्वमाह, मूषेति ।—मूषामुखविनिष्क्रान्ता मूषापुटादिसिद्धरसादिलब्धा इत्यर्थः । काकिणी विंशतिकपर्दकः कपर्दको वा, "पणस्य दशकयोस्तुर्य्ये उन्मानस्य काकिणी" इति रुद्रवचनात् "काकिणी पणतुर्य्यांशे मानदण्डेऽपि दृश्यते । कपर्दकवराट्योः स्यादुन्मानस्यांशकेऽपि च ॥" इति मेदिनी-वचनात्, तथा "वराटकानां दशकद्वयं तत् सा काकिणी" इति लीलावत्युक्तेश्च । दुर्जनप्रणिपातेन निन्दितजनचित्तस्यानुसरणार्थं प्रणामादिद्वारा इत्यर्थः, लक्ष-मिति शेषः ॥ ४ ॥

अथ सन्धिलेपस्य पर्य्यायाः ।—

मूषापिधानयोर्बन्धे बन्धनं सन्धिलेपनम् ।
अन्ध्रणं रन्ध्रणञ्चैव संश्लिष्टं सन्धिबन्धनम् ॥ ५ ॥

अथ मूषोपयोगिमृत्तिका ।—

मृत्तिका पाण्डुरस्थूला शर्करा शोणपाण्डुरा ।
चिराध्मानसहा सा हि मूषार्थमतिशस्यते ॥
तदभावे च वाल्मीको कौलालो वा समीर्य्यते ॥ ६ ॥

अथ मूषोपयोगिद्रव्याणि ।—

या मृत्तिका दग्धतुषैः शणेन शिखित्रकैर्वा हयलद्दिना च ।
लौहेन दण्डेन च कुट्टिता सा साधारणा स्यात् खलु मूषिकार्थे ॥७॥

अथ मूषाया उपकरणान्तराणि ।—

श्वेताश्मानस्तुषा दग्धाः शिखित्राः शणखर्परे ।
लद्दिः किट्टं कृष्णमृत्स्ना संयोज्या मूषिकामृदा ॥८॥

सन्धिलेपपर्य्यायमाह, मूषापिधानयोरिति ।—मूषा च पिधानं मूषावरणञ्च तयोः बन्धे संयोजने, बन्धनादिशब्दः प्रयोज्य इति शेषः ॥ ५ ॥

मूषार्थे प्रशस्तमृत्तिकामाह, मृत्तिकेति ।—पाण्डुरस्थूला पाण्डुवर्णा स्थूला च, अथवा शोणपाण्डुरा रक्तपाण्डुमिश्रवर्णा, चिराध्मानसहा दीर्घकालं व्याप्य अग्निसन्तापं प्राप्यापि अविदारणशीला, एवंविधा या शर्करा मृत्तिका कङ्करूपा मृत्तिका। शर्करामृत्तिकाभावे ग्राह्यमृत्तिकामाह, तदिति।—वाल्मीकी कृमिशैलोद्भवा मृत् "उइमाटी" इति वङ्गभाषा। कौलाली कुम्भकारमृदित्यर्थः ॥ ६ ॥

सामान्यमूषार्थम् उपादानान्याह, येति ।—हयलद्दिना अश्वपुरीषेण ॥ ७ ॥

उपादानान्तराण्याह, श्वेताश्मान इति ।—श्वेताश्मानः श्वेतप्रस्तराः। खर्परं कपालखण्डः, दग्धमृत्तिका इति यावत्। "शणखर्परे" इत्यत्र "शणकर्पटे" इति पाठे—कर्पटं छिन्नवस्त्रम्। लद्दिः हयलद्दिः। किट्टं मण्डूरम्। कृष्णमृत्स्ना कृष्णवर्ण-मृत्तिका। मूषिकामृदा मूषार्थग्राह्यमृत्तिकया सहेत्यर्थः ॥ ८ ॥

अथ वज्रमूषा।—

मृदस्त्रिभागाः शणलद्दिभागौ भागश्च निर्दग्धतुषोपलादेः।
किट्टाद्भागं परिखण्ड्य वज्र-मूषां विदध्यात् खलु सत्त्वपाते ॥९॥

अथ योगमूषा।—

दग्धाङ्गारतुषोपेता मृत्स्ना वल्मीकमृत्तिका।
तत्तद्विड़समायुक्ता तत्तद्विड़विलेपिता ॥ १० ॥
तया या विहिता मूषा योगमूषेति कथ्यते।
अनया साधितः सूतो जायते गुणवत्तरः ॥ ११ ॥

अथ वज्रद्रावणोपयोगिमूषा।—

गारभूनागधौताभ्यां शणैर्दग्धतुषैरपि।
समैः समा च मूषामृन्माहिषोदुग्धमर्दिता ॥१२॥
क्रौञ्चिका यन्त्रमात्रं हि बहुधा परिकीर्त्तिता।
तया विरचिता मूषा वज्रद्रावणकाचिता ॥ १३ ॥

---

वज्रमूषामाह, मृद इति।—मृदः पूर्वोक्तरूपमृत्तिकायाः। शण-लद्दिभागौ शणस्य लद्देश्च प्रत्येकं भागद्वयम्। परिखण्ड्य चूर्णयित्वा ॥ ९ ॥

योगमूषामाह, दग्धेति।—दग्धशब्दोऽत्र अङ्गारतुषाभ्यां प्रत्येकं सम्बध्यते। मृत्स्ना पाण्डुरस्थूलादिगुणोपेता शर्करामृत्तिकेत्यर्थः। तत्तद्विड़समायुक्ता सूतजारणाद्यै प्रागुक्तरूपैर्विड़ैर्मिश्रिता। तत्तद्विड़विलेपिता तेनैव विड़ेनालिप्ता। दग्धाङ्गारादि-विड़ान्तं सर्वमेकत्र सन्नीय मूषां विरचय्य विड़ेन लिप्ता शुष्कीकृत्य गृह्णीया-दिति ॥ १०।११ ॥

वज्रद्रावणोपयोगिमूषामाह, गारेति।—गारशब्दोऽत्र कौलागारिकार्थकः, "नामैकदेशेनापि नामग्रहणम्" इति न्यायात्; कौलागारिका मृत्तिका-विशेषः "कुमोरे पोकार माटी" इति भाषा। भूनागशब्देनापि तन्मृत्तिका ग्राह्या; एवञ्च गारभूनागधौताभ्यां धौतकौलागारिका-किञ्चुलुकमृद्भ्याम्। मूषामृत् पूर्वोक्तशर्करावाल्मीकिकौलाल्यादीनामन्यतमा। गारादितुषान्तं सर्वं समं, मृत्तिका च सर्वैः समाना ग्राह्या। क्रौञ्चिकेति।—यन्त्रमात्रे हि क्रौञ्चिका संज्ञा वर्त्तते, सा हि बहुधा विविधप्रकारा परिकीर्त्तिता इत्यन्वयः ॥ १२।१३ ॥

अथ गारमूषा ।—

दुग्धषड्गुणगाराष्ट-किट्टाङ्गारगुणान्विता ।
कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता ॥
यामयुग्मपरिध्मानान्नासौ द्रवति वह्निना ॥ १४ ॥

अथ वरमूषा ।—

वज्राङ्गारतुषास्तुल्यास्तच्चतुर्गुणमृत्तिका ।
गारा च मृत्तिकातुल्या सर्वैरेतैर्विनिर्मिता ॥
वरमूषेति निर्दिष्टा याममग्निं सहेत सा ॥ १५ ॥

अथ वर्णमूषा ।—

पाषाणरहिता रक्ता रक्तवर्गानुभाविता ।
रक्तया भाविता मूषा क्षितिखेचरलेपिता ॥
वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ॥ १६ ॥

अथ रूप्यमूषा ।—

एवं हि श्वेतवर्गेण रूप्यमूषा समीरिता ॥ १७ ॥

गारमूषामाह, दुग्धेति ।—गारस्य षड्गुणत्वं किट्टाङ्गारप्रमाणानाञ्च प्रत्येकमष्टगुणत्वं कृष्णमृदपेक्षया बोध्यम् । दुग्धेन मर्दनयोग्यम् ॥ १४ ॥

वरमूषामाह, वज्रेति ।—वज्रं तदाख्यलौहं, पूर्वोक्तसङ्ख्या तत्किट्टं वा बोध्यम् ॥ १५ ॥

वर्णमूषामाह, पाषाणरहितेति ।—रक्ता रक्तवर्णा । रक्तवर्गानुभाविता वक्ष्यमाणकुसुम्भादिमाञ्जिष्ठान्तवर्गक्वाथेन भाविता मृता वा । क्षितिखेचरलेपिता क्षितिश्च खञ्च क्षितिखे तत्र चरतः इति क्षितिखेचरौ भूनागमृत् कासीसञ्च ; यद्वा—क्षितिस्थः खेचरः कासीसमित्यर्थः । वर्णोत्कर्षे प्रशस्तवर्णतापादने, रक्तवर्णजनने इत्याशयः ॥ १६ ॥

रूप्यमूषामतिदिशति, एवमिति ।—एवं वर्णमूषाप्रक्रियानुसारेणेत्यर्थः । श्वेतवर्गेण वक्ष्यमाणतगरादिकन्दान्तवर्गेण । एवञ्च पाषाणरहिता श्वेता श्वेतवर्गानुभाविता या श्वेतया भाविता क्षितिखेचरलेपिता मूषा रूप्यमूषेति निष्कर्षः ॥ १७ ॥

अथ विडमूषा ।—

तत्तद्भेदमृदोद्भूता तत्तद्विड़विलेपिता ।
देहलोहार्थयोगार्थं विड़मूषेत्युदाहृता ॥ १८ ॥

अथ वज्रद्रावणोपयोगिमूषान्तरम् ।—

गारभूनागधौताभ्यां तुषमृष्टशणेन च ।
समैः समा च मूषामृन्माहिषीदुग्धमर्दिता ॥ १९ ॥
क्रौञ्चिका यन्त्रमात्रे हि बहुधा परिकीर्त्तिता ।
तया विरचिता मूषा लिप्ता मत्कुणशोणितैः ॥ २० ॥
बालाब्दध्वनिमूलैश्च वज्रद्रावणक्रौञ्चिका ।
सहतेऽग्निं चतुर्यामं द्रवेण व्यधिता सती ॥ २१ ॥

अथ मूषाऽऽप्यायनम् ।—

द्रवे द्रवीभावमुखे मूषाया ध्मानयोगतः ।
क्षणमुद्धरणं यत्तन्मूषाऽऽप्यायनमुच्यते ॥ २२ ॥

---

विडमूषामाह, तत्तदिति ।—तत्तद्भेदमृदोद्भूता शर्करादीनामन्यतममृदा रचिता इत्यर्थः । "तत्तद्भेदमृदोद्भूता" इत्यत्र "तत्तद्विडमृदोद्भूता" इति पाठे—पूर्वोक्तविडेन पूर्वोक्तमृदा च उद्भूता निर्मिता । देहलोहार्थयोगार्थं देहस्य लोहवत् दार्ढ्यसम्पादनार्थं ये योगाः तदर्थं तत्कर्मसम्पादनार्थमित्यर्थः ॥ १८ ॥

पूर्वोक्तवज्रद्रावणोपयोगिमूषायाः प्रकारान्तरमाह, गारेति ।—मत्कुणः "छार-पोका" इति ख्यातः क्रिमिविशेषः तस्य शोणितैः । अब्दध्वनिः वनतण्डुलीयकः "काँटानटे" इति भाषा, बालाब्दध्वनिमूलैः नवोत्पन्नतण्डुलीयमूलैः ; यद्वा—बालः अश्वपुच्छकेशः तथा अब्दध्वनिमूलं तैः, लिप्ता इत्यनेनान्वयः । द्रवेण व्यधिता विद्धा, स्पृष्टा इत्यर्थः, द्रवपूर्णा इत्याशयः ॥ १९—२१ ॥

मूषाऽऽप्यायनमाह, द्रवे इति ।—ध्मायते अनेनेति ध्मानमग्निः तद्योगतः अग्नि-संयोगात्, द्रवे द्रावणोपयोगिनि द्रव्ये, द्रवीभावमुखे द्रवीभवितुमारब्धे, मूषाया यत् क्षणमुद्धरणम् अग्नितः उत्तोलनम्, अवतारणमित्यर्थः, तत् आप्यायनं तर्पणं, स्थायित्वसम्पादनम् इत्यर्थः ॥ २२ ॥

अथ वृन्ताकमूषा ।—

वृन्ताकाकारमूषायां नालं द्वादशकाङ्गुलम् ।
धत्तूरपुष्पवच्चोर्द्ध्वं सुदृढं श्लिष्टपुष्पवत् ॥ २३ ॥
अष्टाङ्गुलञ्च सच्छिद्रं सा स्याद्वृन्ताकमूषिका ।
अनया खर्परादीनां मृदूनां सत्त्वमाहरेत् ॥ २४ ॥

अथ गोस्तनीमूषा ।—

मूषा या गोस्तनाकारा शिखायुक्तपिधानका ।
सत्त्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत् ॥ २५

अथ मल्लमूषा ।—

निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात् ।
पर्पट्यादि-रसादीनां स्वेदनाय प्रकीर्त्तिता ॥ २६ ॥

अथ पक्वमूषा ।—

कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोटल्यादिविपाचने ॥ २७ ॥

अथ गोलमूषा ।—

निर्वक्त्रगोलकाकारा पुटनद्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता सत्वरद्रवरोधिनी ॥ २८ ॥

वृन्ताकमूषामाह, वृन्ताकेति ।—वृन्ताकं वार्त्ताकुः ; वार्त्ताकुफलसदृशाकारां मूषां कृत्वा तत्र द्वादशाङ्गुलदीर्घं नालं योजयेत्, नालाग्रभागञ्च धुस्तूरपुष्पवत् उपर्य्यधो युग्मरूपावस्थितम् अष्टाङ्गुलं सच्छिद्रञ्च कुर्य्यात् ॥ २३।२४ ॥

गोस्तनीमूषामाह, मूषेति ।—सुगमम् ॥ २५ ॥

मल्लमूषामाह, निर्दिष्टेति ।—स्पष्टम् ॥ २६ ॥

पक्वमूषामाह, कुलालेति ।—घटकपालयोः पृथक् पृथक् निर्माणार्थं यः प्रतिरूपः स कुलालभाण्डशब्देनोच्यते, तद्रूपा इत्यर्थः । पोटल्यादिविपाचने रसगर्भपोट्टल्यादि-पाके इत्यर्थः ॥ २७ ॥

गोलमूषामाह, निर्वक्त्रेति ।—मुखविरहितगोलाकारा इत्यर्थः । सत्वरद्रवरोधिनी

अथ महामूषा।—

तले या कूर्पराकारा क्रमादुपरि विस्तृता।
स्थूलवृन्ताकवत् स्थूला महामूषेत्यसौ स्मृता॥
सा चायोऽभ्रकसत्त्वादेः पुटाय द्रावणाय च ॥ २९ ॥

अथ मण्डूकमूषा।—

मण्डूकाकारमूषा या निम्नताऽऽयामविस्तरा।
षडङ्गुलप्रमाणेन मूषा मण्डूकसंज्ञका॥
भूमौ निखन्य तां मूषां दद्यात् पुटमथोपरि ॥३०॥

अथ मुषलमूषा।—

मूषा या चिपिटा मूले वर्त्तुलाऽष्टाङ्गुलोच्छ्रया।
मूषा सा मुषलाख्या स्याच्चक्रिबद्धरसे हिता ॥ ३१ ॥

अथ कोष्ठिकाप्रस्तावः।—

सत्त्वानां पातनार्थाय पातितानां विशुद्धये।
कोष्ठिका विविधाकारास्तासां लक्षणमुच्यते ॥३२॥

अथ अङ्गारकोष्ठी।—

राजहस्तसमुत्सेधा तदर्द्धायामविस्तरा।
चतुरस्रा च कुड्येन वेष्टिता मृन्मयेन च ॥ ३३ ॥

---

द्रवपदार्थस्रावनिवारिणी इत्यर्थः। मध्यस्थितपुटनद्रव्या सम्यङ्रुद्धानना गोलाकृतिमूषा गोलमूषा बोध्या ॥ २८ ॥

महामूषामाह, तलेति।—कूर्पराकारा कूर्परः कफोणिः, भुजमध्यसन्धिरित्यर्थः; तदाकारा ॥ २९ ॥

मण्डूकमूषामाह, मण्डूकेति।—मण्डूकः भेकः तदाकारा। षडङ्गुलप्रमाणेन निम्नताऽऽयामविस्तरा षडङ्गुलप्रमाणगभीरतादैर्घ्यविस्तारयुक्ता ॥ ३० ॥

मुषलमूषामाह, मूषेति।—वर्त्तुला मूलादूर्द्ध्वमिति बोध्यम्। चक्रिबद्धरसः स्त्रीरोगाधिकारोक्त औषधविशेषः ॥ ३१ ॥

सत्त्वपातनार्थं कोष्ठिकां वक्तुं प्रतिजानीते, सत्त्वानामिति।—स्पष्टम् ॥ ३२ ॥

एकभित्तौ चरेद्द्वारं वितस्त्याभोगसंयुतम् ।
द्वारं सार्द्धवितस्त्या च सम्मितं सुदृढं शुभम् ॥ २४ ॥
टिङ्कल्यधो विधातव्यं धमनाय यथोचितम् ।
प्रादेशप्रमिता भित्तिरुत्तरङ्गस्य चोद्धृतः ॥ २५ ॥
द्वारस्योपरि कर्त्तव्यं प्रादेशप्रमितं खलु ।
ततश्चेष्टकया रुद्ध्वा द्वारसन्धिं विलिप्य च ॥ २६ ॥
शिखित्रैस्तां समापूर्य्य धमेद्भस्त्राद्वयेन च ।
शिखित्रान् धमनद्रव्यमूर्द्ध्वद्वारेण निक्षिपेत् ॥ २७ ॥
सत्त्वपातनगोलांश्च पञ्च पञ्च पुनः पुनः ।
भवेदङ्गारकोष्ठीयं खराणां सत्त्वपातनी ॥ २८ ॥

अथ पातालकोष्ठी ।—

दृढभूमौ चरेद्गर्त्तं वितस्त्या सम्मितं शुभम् ।
वर्त्तुलञ्चाथ तन्मध्ये गर्त्तमन्यं प्रकल्पयेत् ॥ २९ ॥

अङ्गारकोष्ठिकालक्षणमाह, राजहस्तेति ।—राजहस्तसमुत्सेधा हस्तद्वयोन्नता । राजहस्तस्य विवृतव्याख्या गजपुटव्याख्यायां द्रष्टव्या । चतुरस्रा चतुष्कोणा । वितस्त्याभोगसंयुतं द्वादशाङ्गुलविस्तृतम् । द्वारं सार्द्धवितस्त्या च इत्यस्य टिङ्कल्यधः इत्यनेन सम्बन्धः । टिङ्कली द्वारनिम्ना पिण्डिका । प्रादेशप्रमिता "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्तलक्षणा तर्जनीसहितविस्तृताङ्गुष्ठप्रमाणा । उत्तरङ्गस्य द्वारोर्द्ध्वकाष्ठस्य । हस्तद्वयोत्सेधं हस्तमितायामविस्तारं चतुष्कोणं समन्तात् सन्धयभित्तिवेष्टितञ्च चुल्ल्याकारमेकं मार्त्तिकं यन्त्रं कृत्वा तस्य एकभित्तौ वितस्ति-विस्तरं द्वारं द्वारपिण्डिकाधः अष्टादशाङ्गुलमानं द्वारान्तरञ्च कुर्य्यात् । द्वारोर्द्ध्वभागे अङ्गुष्ठतर्ज्जन्योर्मध्यवत् विस्तृतां भित्तिं स्थापयित्वा तदुपरि तद्विस्तृतं द्वारमन्यम् विदध्यात् ; ततः इष्टकया द्वारसन्धिं रुद्ध्वा आलिप्य च कोष्ठीमङ्गारैः परिपूर्य्य द्वाभ्यां भस्त्राभ्यां धमेत् । भस्मीभूते च अङ्गारे पुनरपि अङ्गारं सत्त्वपातनगोलादिकञ्च पञ्च पञ्च कृत्वा ऊर्द्ध्वद्वारेण पुनः पुनः निक्षिपेत् । इयमङ्गारकोष्ठी खरद्रव्याणां सत्त्वपातने शुभा ज्ञेया ॥ २२—२८ ॥

पातालकोष्ठिकामाह, दृढभूमाविति ।—कठिनमृत्तिकायां वितस्तिमानं वर्त्तुलं

चतुरङ्गुलविस्तार-निम्नत्वेन समन्वितम्।
गर्त्ताद्धरणिपर्य्यन्तं तिर्य्यङ्नालसमन्वितम् ॥ ४० ॥
किञ्चित् समुन्नतं बाह्य-गर्त्ताभिमुखनिम्नगम्।
मृच्चक्रीं पञ्चरन्ध्राढ्यां गर्भगर्त्तोदरे क्षिपेत् ॥ ४१ ॥
आपूर्य्य कोकिलैः कोष्ठीं प्रधमेदेकभस्त्रया।
पातालकोष्ठिका ह्येषा मृदूनां सत्त्वपातनी ॥
ध्मानसाध्यपदार्थानां नन्दिना परिकीर्त्तिता ॥ ४२ ॥

अथ गारकोष्ठी।—

द्वादशाङ्गुलनिम्ना या प्रादेशप्रमिता तथा।
चतुरङ्गुलतश्चोर्द्धं वलयेन समन्विता ॥ ४३ ॥
भूरिच्छिद्रवतीं चक्रीं वलयोपरि निक्षिपेत्।
शिखितांस्तत्र निक्षिप्य प्रधमेद्वङ्कनालतः ॥
गारकोष्ठीयमाख्याता मृष्टलोहविनाशिनी ॥ ४४ ॥

अथ वङ्कनालम्।—

मूषामृद्भिर्विधातव्यमरत्निप्रमितं दृढम्।
अधोमुखञ्च तद्वक्रे नालं पञ्चाङ्गुलं खलु ॥
वङ्कनालमिदं प्रोक्तं दृढध्मानाय कीर्त्तितम् ॥ ४५ ॥

---

गर्त्तमेकं कृत्वा तन्मध्ये चतुरङ्गुलविस्तारं चतुरङ्गुलगभीरं गर्त्तात् भूपृष्ठपर्य्यन्तयायि-वक्राकृतिनालसंयुक्तम् ईषदुच्छ्रितञ्च गर्त्तमन्यं कुर्य्यात्। ततः अभ्यन्तरगर्त्तमध्ये पञ्चरन्ध्रसंयुक्तां मृच्चक्रीं स्थापयित्वा अङ्गारैः कोष्ठीं परिपूर्य्य च एकभस्त्रया प्रधमेत्। मृदुद्रव्याणां सत्त्वपातनार्थमियं पातालकोष्ठीति ज्ञेयमिति निष्कर्षः ॥ ३९—४२ ॥

गारकोष्ठीमाह, द्वादशेति।—द्वादशाङ्गुलगभीरा प्रादेशप्रमाणविस्तारविशिष्टा कोष्ठी एका कार्य्या, तस्या ऊर्द्ध्वे चतुरङ्गुले वलयाकारमालवालमेकं दत्त्वा तदुपरि बहुच्छिद्रां चक्रीं विधाय अङ्गारं निक्षिप्य च वङ्कनालेन प्रधमेत् इति। मृष्टलोह-विनाशिनी शोधितलोहमारिणीत्यर्थः ॥ ४३।४४ ॥

गारकोष्ठिकायां वङ्कनालमित्युक्तं, किन्तत् वङ्कनालमित्याशङ्कायामाह, मूषामृद्भि-रिति।—शर्करादीनामन्यतमाभिः मूषोपयोगिमृद्भिः अरत्निप्रमितं दृढमेकं नालं कृत्वा

अथ सिद्धरसादीनां कोष्ठी।—

कोष्ठी सिद्धरसादीनां विधानाय विधीयते।
द्वादशाङ्गुलकोत्सेधा सा बुध्ने चतुरङ्गुला।
तिर्य्यक्प्रधमनाऽऽस्या च मृदुद्रव्यविशोधनी॥ ४६॥

[इति मूषाकोष्ठिकायन्त्राणि]।

अथ पुटानि।—

अथ पुटस्य प्रयोजननिर्देशः।—

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम्।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम्॥ ४७॥

अथ पुटस्य फलम्।—

लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता।
अनप्सुमज्जनं रेखा-पूर्णता पुटतो भवेत्॥ ४८॥
पुटाद्ग्राव्णो लघुत्वञ्च शीघ्रव्याप्तिश्च दीपनम्।
जारितादपि सूतेन्द्राल्लोहानामधिको गुणः॥ ४९॥
यथाऽऽत्मनि विशेद्वह्निर्वह्निस्थपुटयोगतः।
चूर्णत्वाद्धि गुणावाप्तिस्तथा लोहेषु निश्चितम्॥ ५०॥

---

तन्मुखे पञ्चाङ्गुलप्रमाणम् अधोमुखं नालमेकं योजयेत्; दृढध्मानाय तत् वङ्कनालं वेदितव्यम्॥ ४५॥

सिद्धरसादिपाकार्थं कोष्ठ्यन्तरमाह, कोष्ठीति।—बुध्ने मूलभागे, अधोभागे इत्यर्थः। तिर्य्यगिति।—तिर्य्यक् वक्रभावेनावस्थितं प्रधमनार्थमास्यं द्वारं यस्याः सा॥ ४६॥

मूषाकोष्ठिकादिसाध्यद्रव्याणां पुटमायत्तसिद्धित्वात् मूषाविनिर्देशानन्तरं पुटम् अभिधातुं तत्प्रयोजनादिकमाह, रसादीति।—सुपक्वरसादिद्रव्यस्य पाकसिद्धिज्ञापकमित्यर्थः, पुटविशेषादेव रसादीनां सम्यक् पाको जायते इति निष्कर्षः॥ ४७॥

पुटस्य गुणमाह, लोहादेरिति।—ग्राव्णः प्रस्तरस्य, पद्मरागादेरित्यर्थः। अग्रता श्रेष्ठता। अनप्सुमज्जनं न अप्सु मज्जनं वारितरत्वमित्यर्थः। रेखापूर्णता "अङ्गुष्ठतर्जनीघृष्टम्" इत्याद्युक्तलक्षणविशिष्टता। शीघ्रव्याप्तिः सत्वरं सूक्ष्मस्रोतो-

अथ महापुटम्।—

निम्नविस्तारतः कुण्डे द्विहस्ते चतुरस्रके।
वनोत्पलसहस्रेण पूरिते पुटनौषधम् ॥ ५१ ॥
कोष्ठ्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत्।
वनोत्पलसहस्रार्द्धं कोष्ठिकोपरि विन्यसेत् ॥
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ॥ ५२ ॥

अथ गजपुटम्।—

राजहस्तप्रमाणेन चतुरस्रञ्च निम्नकम्।
पूर्णञ्चोपलसाठीभिः कण्ठावध्यथ विन्यसेत् ॥ ५३ ॥
विन्यसेत् कुमुदीं तत्र पुटनद्रव्यपूरिताम्।
पूर्णच्छगणताऽर्द्धानि गिरिण्डानि विनिक्षिपेत् ॥
एतत् गजपुटं प्रोक्तं महागुणविधायकम् ॥ ५४ ॥

ऽनुसरणम्। यथेति।—वाह्यतः पुटे दत्तेऽपि मूषास्थपुटनद्रव्ये यथा वह्निर्विशेत् वह्निगुणाधानेन लघुत्वदीपनत्वादिकं जायते, तथा पुटयोगेन चूर्णत्वात् लौहेष्वपि वह्निगुणाधानेन गुणाधिक्यं स्यात् इत्यर्थः ॥ ४८—५० ॥

महापुटमाह, निम्नेति।—निम्नविस्तारतः गभीरतायां विस्तारे च, द्विहस्ते इत्यनेनान्वयः। चतुरस्रके चतुष्कोणाकारे। कोष्ठ्यां मूषायाम्। पिष्टिकोपरि वनोपल-सहस्रोपरि। वनोत्पलसहस्रार्द्धं पञ्चशतवनोपलम् ॥ ५१।५२ ॥

गजपुटमाह. राजहस्तेति।—राजहस्तः सपादहस्तः, हस्तश्चतुर्विंशत्यङ्गुलप्रमाणः स सपादः, तेन त्रिंशदङ्गुलप्रमाणहस्तो राजहस्तः, स च गजहस्तस्यैव नामान्तरः इति बोध्यम्; भावप्रकाशोक्तगजपुटलक्षणे तत्समार्थकप्रयोगदर्शनात्; तथा च,—"सपाद-हस्तमानेन कुण्डं निम्नं तथाऽऽयतं। वनोपलसहस्रेण पूर्णं मध्ये विधारयेत ॥ पुटन-द्रव्यसंयुक्तां कोष्ठिकां मुद्रितां मुखे। अर्धानि करीषाणि चर्द्धान्युपरि निक्षिपेत् ॥ एतद्गजपुटं प्रोक्तं ख्यातं सर्वपुटोत्तमम् ॥" इति। गजहस्तस्यापि अर्थः तत्रैव यथा, —"साधारणकराङ्गुल्या त्रिंशदङ्गुलको गजः" इति। किञ्च सूतस्य शोधन-क्रियायां रसेन्द्रसारसङ्ग्रहे यत्र "गजहस्तप्रमाणतः" इति पाठः, रसेन्द्रचिन्तामणौ पुनः तत्रैव "राजहस्तप्रमाणतः" इति पाठदर्शनात् द्वयोरेव एकार्थत्वं नास्त्यसंगतिः।

अथ वाराहपुटम् ।—

इत्यरत्निके कुण्डे पुटं वाराहमुच्यते ॥ ५५ ॥

अथ कुक्कुटपुटम् ।—

पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत् स्यात् कुक्कुटकं पुटम् ॥ ५६ ॥

अथ कपोतपुटम् ।—

यत् पुटं दीयते भूमावष्टसंख्यैर्वनोत्पलैः ।
बद्ध्वा सूतार्कभस्मार्थं कपोतपुटमुच्यते ॥ ५७ ॥

अथ गोवरस्वरूपम् ।—

गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
गोवरं तत् समादिष्टं वरिष्ठं रससाधने ॥ ५८ ॥

अथ गोवरपुटम् ।—

गोवरैर्वा तुषैर्वाऽपि पुटं यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥ ५९ ॥

राजहस्तं व्याचष्टे साधारणचतुर्विंशत्यङ्गुलकहस्तापेक्षया षडङ्गुलाधिक्येन हस्तम् [illegible] बोध्यम् । राजहस्तप्रमाणेन निम्नं चतुरस्रञ्च इत्यन्वयः । कुमुदौ मृषाम् ॥ ५३।५४ ॥

वाराहपुटमाह, इत्यरत्नीति ।—अरत्निके विस्तृतकनिष्ठाङ्गुलिमुष्टिः अरत्निः, तत्प्रमाणे कुण्डे ॥ ५५ ॥

कुक्कुटपुटमाह, पुटमिति ।—वितस्तिद्वितयोच्छ्रयं हस्तप्रमाणोन्नतम् । तावच्च तलविस्तीर्णम् अधोभागेऽपि हस्तप्रमाणविस्तृतम् । एतत्तु भूमेरुपरि एव कार्यं न तु गर्त्तं खानत्वा ॥ ५६ ॥

कपोतपुटमाह यदिति —बद्ध्वा मूषायां बद्ध्वेत्यर्थः । सूतार्कभस्मार्थं रसभस्मार्थं ताम्रभस्मार्थञ्च ॥ ५७ ॥

गोवरपुटं विवक्षुरादौ गोवरस्वरूपमाह, गोष्ठान्तरिति ।—स्पष्टम् ॥ ५८ ॥

गोवरपुटमाह, गोवरैरिति ।—एतच्च कुक्कुटपुटमध्ये एव कार्यम्; यदुक्तं भावप्रकाशे,—"कुक्कुटाभ्यन्तरे यत्र गोवरैर्दीयते पुटम् । तद्गोवरपुटं प्रोक्तं भिषग्भिः सूतभस्मनि ॥" इति ॥ ५९ ॥

अथ भाण्डपुटम् ।—

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ ६० ॥

अथ वालुकापुटम् ।—

अधस्तादुपरिष्टाच्च क्रौञ्चिकाऽऽच्छाद्यते खलु ।
वालुकाभि: प्रतप्ताभिर्यत्र तद्वालुकापुटम् ॥ ६१ ॥

अथ भूधरपुटम् ।—

वह्निमित्रा: क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादध: ।
उपरिष्टात् पुटं यत्र पुटं तद्भूधराह्वयम् ॥ ६२ ॥

अथ लावकपुटम् ।—

ऊर्द्ध्वषोड़शिकामूत्रैस्तुषैर्वा गोवरै: पुटम् ।
यत्र तल्लावकाख्यं स्यात् सुमृदुद्रव्यसाधने ॥ ६३ ॥

---

भाण्डपुटमाह, स्थूलभाण्डे इति ।—तुषपूर्णबृहदाकारभाण्डमध्ये औषधपूर्णां मूषां संस्थाप्य वह्निं दत्त्वा भाण्डमुखं निरोधयेत । यदुक्तं भावप्रकाशे,—"बृहद्भाण्डे तुषै: पूर्णे मध्ये मूषा विधारयेत् । वह्निनाऽग्निं मुद्रयेत् भाण्डं तद्भाण्डपुट-मुच्यते ॥" इति ॥ ६० ॥

वालुकापुटमाह, अधस्तादिति ।—पुटेऽस्मिन् अध: उपरि च प्रतप्तवालुकयैव मूषाच्छादनं कार्य्यम् ॥ ६१ ॥

भूधरपुटमाह, वह्निमित्रा: इति ।—वह्निमित्रा: मूषा: ; दीर्घकालं वह्निना सह्या-वस्थानात् अस्या वह्निमित्रत्वं ज्ञातव्यम् । स्पष्टमन्यत् ॥ ६२ ॥

लावकपुटमाह, ऊर्द्ध्वेति ।—ऊर्द्ध्वषोडशिका षोड़शिकोर्द्ध्वं, पलाधिकमित्यर्थ: ; यद्वा —ऊर्द्ध्वषोडशिका कर्षपर्य्यायकषोडशिकाया अपि उपरिवर्त्तिषोडशिका, पलमिति यावत्, तावत्परिमितै: मूत्रै: पलात् किञ्चिदधिकमूत्रै: पलपरिमितमूत्रैर्वा सह तुषै: गोवरैर्वा यत्र पुटमित्यन्वय: । "ऊर्द्ध्वषोड़शिकामूत्रै:" इत्यत्र "ऊर्द्ध्वषोडशिकामानै:" इति पाठे—पलात् किञ्चिदधिकपरिमाणै: पलपरिमितैर्वा तुषै: गोवरैर्वा इत्यन्वय: । "ऊर्द्ध्वम्" इति व्यस्तपाठे तु—ऊर्द्ध्वमुपरिभागे यत्र पुटमिति योजनीयम् ॥ ६३ ॥

अथ अनुक्तपुटमाने कर्त्तव्यनिर्देशः ।—

अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ।
पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ॥ ६४ ॥

अथ उपलपर्य्यायाः ।—

पिष्टकं छगणं छाणमुत्पलञ्चोपलं तथा ।
गिरिण्डोपलसाठौ च वराटी छगणाभिधाः ॥ ६५ ॥

अथ अकृत्रिमकृत्रिमलोहानि ।—

सुवर्णं रजतं ताम्रं त्रपु सीसकमायसम् ।
षडेतानि च लोहानि कृत्रिमौ कांस्यपित्तलौ ॥ ६६ ॥

अथ षड्लवणानि ।—

लवणानि षडुच्यन्ते सामुद्रं सैन्धवं विडम् ।
सौवर्चलं रोमकञ्च चूलिकालवणं तथा ॥ ६७ ॥

अथ क्षारत्रयम् ।—

क्षारत्रयं समाख्यातं यवसर्जिकटङ्कणम् ॥ ६८ ॥

---

अनुक्तस्थले पुटविधिमाह, अनुक्तेति ।—अनुक्तपुटमाने कतिभिः उपलैः कति वा पुटो देयः इत्यादि परिमाणानुक्तौ इत्यर्थः ॥ ६४ ॥

“निघण्टुना विना वैद्यो विद्वान् व्याकरणं विना । अनभ्यासेन धानुष्कस्त्रयो हास्यस्य भाजनम् ॥” इति स्मरणात् निघण्टुज्ञानं विना वैद्यस्य सिद्धेरसम्भवात् विशेषोपयोगिनः कांश्चिन्निघण्टून् वक्तुमिच्छुरादौ उपलपर्य्यायानाह, पिष्टकमिति ।—पिष्टकादिवराट्यन्तं सर्वं छगणाभिधं करीषपर्य्यायो बोध्यः ॥ ६५ ॥

लोहषट्कमष्टलोहञ्चाह, सुवर्णमिति ।—षडेतानि लोहानि, विशुद्धानीति शेषः । धात्वन्तरमिश्रणेन अस्यैव अष्टत्वमाह, कृत्रिमाविति ।—सुवर्णादीनि षट् प्राकृतानि, कांस्यपित्तलौ कृत्रिमौ मिश्रौ ज्ञेयौ ॥ ६६ ॥

लवणषट्कमाह, लवणानीति ।—सामुद्रं “करकच्” इति ख्यातम् । रोमकं रुमानदीभवं, साम्भर इति ख्यातम् । चूलिकालवणं नरसारः ॥ ६७ ॥

क्षारत्रयमाह, क्षारत्रयमिति ।—यवः यवक्षारः । सर्जिकः स्वर्जिकाक्षारः ॥ ६८ ॥

अथ क्षारपञ्चकम्।—

पलाशमुष्ककक्षारौ यवक्षारः सुवर्चिका।
तिलनालोद्भवः क्षारः संयुक्तं क्षारपञ्चकम्॥ ६९॥

अथ मधुरत्रयम्।—

घृतं गुड़ो माक्षिकञ्च विज्ञेयं मधुरत्रयम्॥ ७०॥

अथ रसकर्माणि तैलयोनिफलानि।—

कङ्गणी-तुम्बिनी-घोषा-करीर-श्रीफलोद्भवम्।
कट्वार्त्ताक-सिद्धार्थ-सोमराजी-विभीतजम्॥ ७१॥
अतसीज महाकाली-निम्बजं तिलजं तथा।
अपामार्गदेवदाली-दन्ती-तुम्बुरुविग्रहात्॥ ७२॥
अङ्कोलोन्मत्त-भल्लात-पलाशेभ्यस्तथैव च।
एतेभ्यस्तैलमादाय रसकर्माणि योजयेत्॥ ७३॥

अथ वसावर्गः।—

जम्बूक-मण्डूकवसा वसा कच्छपसम्भवा।
कर्कटो शिशुमारो च गो-शूकर-नरोद्भवा॥
अजाष्ट्र-खर-मेषाणां माहिषस्य वसा तथा॥ ७४॥

क्षारपञ्चकमाह, पलाशेति।—मुष्ककः घण्टापाटला। सुवर्चिका स्वर्जिकाक्षारः॥ ६९॥

मधुरत्रयमाह, घृतमिति।—माक्षिकं मधु॥ ७०॥

रसकर्मसाधनोपयोगितैलयोनिफलान्याह, कङ्गणीति।—कङ्गणी महाज्योतिष्मतीलता; "स्यात् कङ्गणी तदनु शैलसुता सुतैला" इति राजनिघण्टुक्त्या अस्यास्तैलयोनित्वं बोध्यं तथा बीजस्य ग्राह्यमिति। "कङ्गनी" इति दन्त्यन्तपाठे तु—प्रियङ्गुबीजमित्यर्थः। तुम्बिनी कटुतुम्बी सरलकाष्ठं वा। घोषा स्वनामख्याता। करीरः मरुजद्रुमविशेषः; "करीर" इत्यत्र "करञ्ज" इति पाठान्तरम्। महाकाली स्वनामख्याता, "माकाल" इति वङ्गभाषा। देवदाली हस्तिघोषकः। तुम्बुरुः स्वनामख्यातवणिग्द्रव्यविशेषः, नैपालधन्याकमिति केचित्। अङ्कोलः अक्षोटः, "आँकोड़" इति भाषा। उन्मत्तः धुस्तूरः॥ ७१—७३॥

अथ मूत्रवर्गः ।—

मूत्राणि हस्ति-करभ-महिषी-खर-वाजिनाम् ।
*गोऽजावीनां स्त्रियः पुंसां पुष्पं बीजन्तु योजयेत् ॥ ७५ ॥

अथ पञ्चमाहिषम् ।—

माहिषाम्बु दधि क्षीरं साभिसारं शकृद्रसः ।
तत् पञ्चमाहिषं ज्ञेयं—"

अथ छागलपञ्चकम् ।—

"—तद्वच्छागलपञ्चकम् ॥७६॥

अथ अम्लवर्गः ।—

अम्लवेतस-जम्बीर-निम्बूकं बीजपूरकम् ।
चाङ्गेरी चणकाम्लञ्च अम्लीकं कोल-दाड़िमम् ॥ ७७ ॥
अम्लष्ठा तिन्तिडीकञ्च नारङ्गं रसपत्रिका ।
करमर्दं तथा चान्यदम्लवर्गः प्रकीर्त्तितः ॥ ७८ ॥

येषां प्राणिनां वसा रसकर्मसु प्रशस्ता तानाह, जम्बूकेति ।—कर्कटी कुलीरकस्त्री । शिशुमारी शिशुमारः जलजन्तुविशेषः "शुशु" इति ख्यातः, तस्य स्त्री ॥७४॥

मूत्राष्टकमाह, मूत्राणीति ।—करभः उष्ट्रशावकः । मूत्रादिकन्तु स्त्रीजातीयानामेव प्रशस्तम्, यदुक्तं परिभाषाप्रदीपे—"स्त्रीणां मूत्रं गवां तीक्ष्णं न तु पुंसां विधीयते । पित्तात्मिकाः स्त्रियो यस्मात् सौम्यास्तु पुरुषा मताः ॥" इति । प्राणयङ्गज-वसामूत्रादिवर्णनप्रसङ्गेन स्त्रीपुंसोरन्यदपि यद्ग्राह्यं तदाह, स्त्रिय इति ।—स्त्रीणामार्त्तवं तथा पुंसां शुक्रमपि रसकर्मणि ग्राह्यम ॥ ७५ ॥

* माहिषपञ्चकमाह, माहिषाम्बुति ।—माहिषाम्बु महिषीमूत्रं, तासां मूत्रस्यैव तीक्ष्णत्वात, "स्त्रीणां मूत्रं गवां तीक्ष्णं" "स्त्रियश्चतुष्पदे ग्राह्याः" इत्यादि परिभाषास्मरणात् । दधिक्षीरादयोऽपि महिष्या एव ग्राह्याः । साभिसारं सघृतं, दधि क्षीरमित्यनेन सम्बन्धः । शकृद्रसः महिषीविष्ठारसः । छागलपञ्चकमाह, तद्वदिति ।—तद्वत पञ्चमाहिषवत् ॥ ७६ ॥

अम्लवर्गमाह, अम्लवेतसेति ।—चाङ्गेरी चुक्रिका, "चुकापालं" इति ख्याता । अम्लीकं तिन्तिड़ीफलम् । अम्लष्ठा अम्ललोणिका, "आमरुल" इति ख्यातम् । तिन्तिड़ीकं वृक्षाम्लकम् । नारङ्गं "कमलालेबु" इति ख्यातः मधुरनिम्बुकविशेषः ।

चणकाम्लञ्च सर्वेषामेक एव प्रशस्यते।
अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम्॥
रसादीनां विशुद्ध्यर्थं द्रावणे जारणे हितम्॥ ७९॥

अथ अम्लपञ्चकम्।—

कोल-दाड़िम-वृक्षाम्ल-चुल्लिका-चुक्रिकारसः।
पञ्चाम्लकं समुद्दिष्टं तच्चोक्तञ्चाम्लपञ्चकम्॥ ८०॥

अथ पञ्चमृत्तिका।—

इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका।
रसप्रयोगकुशलैः कीर्त्तिताः पञ्च मृत्तिकाः॥८१॥

अथ विषवर्गः।—

शृङ्गीकं कालकूटञ्च वत्सनाभं सक्तविमम्।
पित्तञ्च विषवर्गोऽयं स वरः परिकीर्त्तितः॥ ८२॥
रसकर्म्मणि शस्तोऽयं तद्भेदनविधावपि।
अयुक्त्या सेवितश्चायं मारयत्येव निश्चितम्॥ ८३॥

रसपर्विका कपित्थाम्लम्। करमर्द "करमचा" इति ख्यातम्, "करमर्दम्" इत्यत्र "करवन्दम" इति पाठेऽपि स एवार्थः॥ ७७—७९॥

पञ्चाम्लमाह, कोलेति।—वृक्षाम्लं महार्द्रकं तिन्तिडी वा। "चुल्लिका" इत्यत्र "कोलदाड़िमवृक्षाम्लचुक्रीकाचुक्रिकारसः। पञ्चाम्लको मुखालेपः सर्वशस्तूणां नियच्छति॥" इति वक्रसङ्गृहीतं "चुक्रीका" इति पाठान्तरं समीचीनम्; चुल्लिकाशब्दस्य अम्लवाचकद्रव्यविशेषे प्रयोगादर्शनात्। चुक्रीका "चुकापालङ्" इति तथा चुक्रिका "आमरूल" इति च ख्यातम॥ ८०॥

पञ्चमृत्तिका आह, इष्टिकेति।—लोणं लवणम्। भस्म भूतिः; "भस्म" इत्यत्र "धूमम्" इति क्वचित् पाठः॥ ८१॥

विषवर्गमाह, शृङ्गीकमिति।—शृङ्गीकं "यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम्। तत् शृङ्गीकमिति प्रोक्तं द्रव्यतत्त्वविशारदैः॥" इत्युक्तलक्षणविषभेदः, केचिदद: "त्रिमूलचार:" (शीँगी) इति वदन्ति। कालकूटं "देवासुररणे देवैर्हतस्य पृथमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः। निर्य्यासः

अथ उपविषवर्गः ।—

लाङ्गली विषमुष्टिश्च करवीरं जया तथा ।
नीलकः कनकोऽर्कश्च वर्गो ह्युपविषात्मकः ॥ ८४ ॥

अथ दुग्धवर्गः ।—

हस्त्यश्व-वनिता धेनुर्गर्दभी छागिकाऽविका ।
उष्ट्रिकोदुम्बराश्वत्थ-भानु-न्यग्रोध-तिल्वकम् ॥ ८५ ॥
दुग्धिका स्नुग्गणश्चैव तथैवोत्तमकारिका ।
एषां दुग्धैर्विनिर्दिष्टो दुग्धवर्गो रसादिषु ॥ ८६ ॥

कालकूटोऽस्य मुनिभिः परिकीर्तितः ॥ सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ॥" इत्युक्तलक्षणम्। वत्सनाभं "सिन्धुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा। यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः ॥" इत्युक्तलक्षणविषभेदः "मिठा" "अमृत" इति ख्यातम्, एतत्त्रयं स्थावरम्। कृत्रिमं गरः संयोगजविषमिति यावत्। "सक्तविषम्" इत्यत्र "च सक्तुकम्" इति पाठान्तरं समीचीनम्; तत्र सक्तुकं "ग्रन्थिः सक्तुकेनेव पूर्णमध्यः स सक्तुकः" इत्युक्तलक्षणविषभेदः। पित्तं पित्ताख्यम्, एतच्च जङ्गमाख्यं बोध्यम्; यदुक्तं सुश्रुतेन—"दृष्टिनिश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालाऽऽर्त्तवमुख-सन्दंशविशर्धितगुदास्थिपित्तशूकशवानीति।" तच्च पित्तं शकुलीमत्स्यरक्तराजीवरकी-मत्स्यादीनां बोध्यम्। राजनिघण्टौ तु विषवर्गः अन्यथा उक्तः, यथा—"शृङ्गिकः कालकूटश्च मुस्तकौ वत्सनाभकः। सक्तुकश्चेति योगोऽयं महापञ्चविषाभिधः ॥" इति। वरः श्रेष्ठः। तदिति।—तत् विषं भेदनविधौ विरेचनयोगे ॥ ८२।८३ ॥

उपविषाण्याह, लाङ्गलीति।—जया त्रैलोक्यविजया, भङ्गा इति यावत्। नीलकः भल्लातकः। कनकः धुस्तूरः जैपालो वा। ग्रन्थान्तरे तु भिन्नविधमुपविषं पठितं तद्यथा,—"अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः। गुञ्जाहिफेनधुस्तूराः सप्तोप-विषजातयः ॥" इति ॥ ८४ ॥

दुग्धवर्गमाह, हस्तीति।—हस्त्यश्ववनिता हस्तिनी अश्वी च; यद्वा—हस्तिनी अश्विनी वनिता नारी चेत्यर्थः। अविका मेषी। भानुः अर्कः। तिल्वकं लोध्रः। दुग्धिका क्षीरिका "खिरुइ" इति ख्यातम्। स्नुक् स्नुही तासां गणः बहुविधस्नुहीजातयः। उत्तमकारिका एरण्डविशेषः, "बागा भेरेण्डा" जामाल-गोटा" इति च भाषा, यद्वा—उत्तमकारिका वेतसः क्षीरित्वात्; अश्मन्तको

अथ विड्वर्गः।—

पारावतस्य चाषस्य कपोतस्य कलापिनः।
गृध्रस्य कुक्कुटस्यापि विनिर्दिष्टो हि विड्गणः॥
शोधनं सर्वलोहानां पुटनाल्लेपनात् खलु॥ ८७॥

अथ रक्तवर्गः।—

कुसुम्भं खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम्।
अक्षी च बन्धुजीवश्च तथा कर्पूरगन्धिनी॥
माक्षिकश्चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः॥ ८८॥

अथ पीतवर्गः।—

किंशुकः कर्णिकारश्च हरिद्राद्वितयं तथा।
पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि॥ ८९॥

---

वा, चरके क्षीरकथनप्रस्तावे सुधार्काभ्यां सह अश्मन्तकस्य ग्रहणात्; तथा च—"अथापरे त्रयो वृक्षाः पृथक् ये फलमूलिभिः। स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म पृथक् पृथक्॥ वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने। क्षीरमर्कस्य विज्ञेयं वमने सविरेचने॥" इति तथा"—क्षीराणि वृक्षाश्च षड् ये दृष्टाः पयस्त्वचः॥" इति च॥ ८५।८६॥

विड्गणमाह, पारावतस्येति।—पारावतः गृहकपोतः। चाषः पक्षिविशेषः, स्वर्णचातकः नीलकण्ठो वा इति यावत्। कपोतः पारावतभेदः। कलापी मयूरः। एष तु गणः लोहशोधने प्रयुज्यते॥ ८७॥

रक्तवर्गमाह, कुसुम्भमिति।—कुसुम्भं स्वनामख्यातम्। अक्षी अक्षीवः, रञ्जकवृक्षविशेषः इत्यर्थः, "आउच" इति भाषा; "अक्षी च" इत्यत्र "अक्षीवम्" इति पाठे—रक्तशोभाञ्जनमित्यर्थः। बन्धुजीवः पुष्पविशेषः, "बान्धुलिफुल" इति भाषा, स च मध्याह्ने विकसति पराह्ने सूर्योदये च शुष्यति। कर्पूरगन्धिनी कर्पूरगन्धि-हरिद्राविशेषः। माक्षिकं सुवर्णमाक्षिकम्। एष रक्तवर्गः पारदादीनां रञ्जने प्रयोज्यः॥ ८८॥

पीतवर्गमाह, किंशुक इति।—किंशुकः पलाशः। कर्णिकारः क्षुद्रारग्वधः द्रुमोत्पलो वा, "सोनाट् कनक" इति भाषा। हरिद्राद्वितयं हरिद्रा दारु-हरिद्रा च॥ ८९॥

अथ श्वेतवर्गः ।—

तगरः कुटजः कुन्दो गुञ्जा जीवन्तिका तथा ।
सिताम्भोरुहकन्दश्च श्वेतवर्ग उदाहृतः ॥ ९० ॥

अथ कृष्णवर्गः ।—

कदली कारवल्ली च त्रिफला नीलिका नलः ।
पङ्कः कासीसबालाम्रं कृष्णवर्ग उदाहृतः ॥ ९१ ॥

अथ रक्तवर्गादीनां प्रयोजननिर्देशः ।—

रक्तवर्गादिवर्गैश्च द्रव्यं यज्जारणात्मकम् ।
भावनीयं प्रयत्नेन तादृग्रागाप्तये खलु ॥ ९२ ॥

अथ शोधनीयगणः ।—

काचटङ्कणशिप्राभिः शोधनीयो गणो मतः ॥९३॥

अथ लोहानां मलनाशनगणः ।—

सत्त्वानां बद्धसूतस्य लोहानां मलनाशनः ।
कापाली-कङ्गुणी-ध्वंसी रसवादिभिरुच्यते ॥ ९४ ॥

श्वेतवर्गमाह, तगर इति ।—तगरः पुष्पविशेषः "टगर" इति भाषा । गुञ्जाऽत्र श्वेता ग्राह्या । जीवन्तिका स्वनामप्रसिद्धा ॥ ९० ॥

कृष्णवर्गमाह, कदलीति ।—कारवल्ली क्षुद्रकारवेल्लः "छोट उच्छे" इति भाषा । नीलिका नीलिनी, "नील गाछ" इति भाषा । पङ्कः कर्दमः । बालाम्रम् अचिर-जाताम्रफलम् आम्रमज्जा वा ॥ ९१ ॥

रक्तवर्गादीना प्रयोजनमाह, रक्तेति ।—सुगमम् ॥ ९२ ॥

रसशोधकगणमाह, काचेति ।—काचः मृत्तिकाविशेषः, स च क्षाररसः उष्ण-वीर्य्यः अञ्जनादृष्टिकरश्च, बिडाख्यलवणो वा । शिप्रा शुक्तिविशेषः इत्यर्थः ॥ ९३ ॥

नैर्मल्यसम्पादनवर्गमाह, सत्त्वानामिति ।—सत्त्वानां धातुसत्त्वानामित्यर्थः । कापाली अहिंस्रा, "काँटा गुड़काँउनि" इति भाषा, कङ्गुणः प्रियङ्गुः, "काँउनि-धान" इति प्रसिद्धः तृणधान्यविशेषो वा, ध्वंसी काञ्चनदेशीयपार्वत्याखोड़फलम् । सत्त्वादीनां मलनाशनार्थम् एभिः मर्दनं कार्य्यम् ॥ ९४ ॥

अथ लोहकाठिन्यनाशनो योग: ।—

महिषी मेषशृङ्गी च कलिङ्गो धववीजयुक् ।
शशास्थीनि च योगोऽयं लोहकाठिन्यनाशन: ॥ ९५ ॥

अथ द्रावणीयो गण: ।—

गुड-गुग्गुलु-गुञ्जाऽऽज्य-सारघैष्टङ्कणान्वितै: ।
दुर्द्रावाखिललोहादेर्द्रावणाय गणो मत: ॥ ९६ ॥

अथ क्षाराम्ल-विष-स्नेहानां कार्य्यम् ।—

क्षारा: सर्वे मलं हन्युरम्लं शोधनजारणम् ।
मान्द्यं विषाणि निघ्नन्ति स्नैग्ध्यं स्नेहा: प्रकुर्वते ॥९७॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
मूषाकोष्ठिकापुटादिकथनं नाम दशमोऽध्याय: ॥ १० ॥

लोहानां मार्दवजननवर्गमाह, महिषीति ।—महिषी माहिषीकन्दाख्यमहाकन्द-विशेष:, श्वेतालुक इति यावत् । मेषशृङ्गी कर्कटशृङ्गी अजशृङ्गी वा । कलिङ्ग: इन्द्रयव: । धववीजयुक् धववीजसंयुक्त: । एष योग: लोहानां काठिन्यविनाश-पूर्वकं कोमलतासम्पादने समर्थ: ॥ ९५ ॥

द्रावणवर्गमाह, गुडेति ।—सारघ: माक्षिकम् । दुर्द्रावेति ।—दु:खेन कृच्छ्रेण द्राव: द्रावणं येषां तथाभूतानाम् अखिललोहानां सर्वविधलौहानाम् ॥ ९६ ॥

क्षाराम्लक्षारादीनां कार्य्यमाह, क्षारा इति ।—मान्द्यं जडता धातुगतलाघ्वा-दिकं वा ॥ ९७ ॥

इति रसरत्नसमुच्चयबोधिन्यां दशमोऽध्याय: ॥१०॥

# अथ एकादशोऽध्यायः ।

## अथ रसशोधनादिकथनम् ।—

### अथ मानपरिभाषा ।—

षट्त्रुट्यश्चैकलिक्षा स्यात् षड्लिक्षा यूकमेव च ।
षड्यूकास्तु रजःसंज्ञं कथितं तव सुव्रते ! ॥ १ ॥
षड्रजः सर्षपः साक्षात् सिद्धार्थः स च कीर्त्तितः ।
षट्सिद्धार्थेन देवेशि ! यवस्त्वेकः प्रकीर्त्तितः ॥ २ ॥
षड्यवैरेकगुञ्जा तु त्रिगुञ्जो वल्ल उच्यते ।
षड्भिरेव तु गुञ्जाभिर्माष एकः प्रकीर्त्तितः ॥
माषा द्वादश तोलः स्यादष्टौ तोलाः पलं भवेत् ॥ ३ ॥

### अथ मानपरिभाषायां मतान्तरम् ।—

त्रुटिः स्यादणुभिः षड्भिस्तैर्लिक्षा षड्भिरीरिता ।
ताभिः षड्भिर्भवेद्यूकः षड्यूकास्तद्रजः स्मृतम् ॥ ४ ॥
षड्रजः सर्षपः प्राज्ञैस्तैः षड्भिर्यव ईरितः ।
एका गुञ्जा यवैः षड्भिर्निष्पावस्तु द्विगुञ्जकः ॥ ५ ॥
स्याद्गुञ्जात्रितयं वल्लो द्वौ वल्लौ माष उच्यते ।
द्वौ माषौ धरणं ते द्वे शाणं निष्ककला स्मृता ॥६॥

---

मूषाकोष्ठिकादिकमन्तरेण रसशोधनादिकार्य्यस्य असम्भवत्वात् तद्विवरणानन्तरं रसशोधनादिकं विवरीतुमेकादशाध्यायमारभते, तत्र सर्वभेषजानां मानायत्तत्वेन प्रथमं संक्षिप्तां मानपरिभाषामाह, षट्त्रुट्यश्चेति ।—त्रुटिः त्रसरेणुः, षड्यव इति यावत्, षड्भिः परमाणुभिः त्रुटिः स च त्रसरेणुपरपर्य्यायः, यदुक्तं ब्रह्मवैवर्त्ते—"परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः" इति ; परमाणुषट्कात्मकं त्र्यणुकत्रयात्मकं इत्यः त्रुटिः ॥ १—३ ॥

अन्यविधां विस्तृतां परिभाषामाह, त्रुटिरिति ।—द्वौ वल्लौ षड्गुञ्जा इत्यर्थः ।

निष्कद्वयन्तु वटकः स च कोल इतीरितः।
स्यात् कोलत्रितयं तोलः कर्षो निष्कचतुष्टयम् ॥ ७ ॥
उडुम्बरं पाणितलं सुवर्णं कवलग्रहः।
अक्षं विड़ालपदकं शुक्तिः पाणितलद्वयम् ॥ ८ ॥
शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः।
तदेव कथितं मुष्टिः प्रकुञ्चो विल्वमित्यपि ॥ ९ ॥
पलद्वयन्तु प्रसृतं तद्द्वयं कुड़वोऽञ्जलिः।
कुड़वौ मानिका तौ स्यात् प्रस्थो द्वे मानिके स्मृतः ॥१०॥
प्रस्थद्वयं शुभं तौ द्वौ पात्रकं द्वयमाढ़कम्।
तैश्चतुर्भिर्घटोन्मान-नल्वनामर्णशूर्पकाः ॥ ११ ॥
द्रोणस्य शब्दाः पर्य्यायाः पलानां शतकं तुला।
चत्वारिंशत्पलशत-तुला भारः प्रकीर्त्तितः ॥ १२ ॥
रसार्णवादिशास्त्राणि निरोक्ष्य कथितं मया।
रसोपयोगि यत्किञ्चिद्विज्ञातं तत् प्रदर्शितम् ॥१३॥

अथ पारदस्य संस्कारकथने प्रतिज्ञा।—

अधुना रसराजस्य संस्कारान् सम्प्रचक्ष्महे ॥ १४ ॥

---

उडुम्बरेत्यादि विड़ालपदकान्तः कर्षपर्य्यायो बोध्यः। शुक्तिरिति।—पाणितलद्वयं कर्षद्वयं शुक्तिः। तदेव पलमेव ; मुष्ट्यादिविल्वान्ताः पलपर्य्यायाः। तौ द्वौ पात्रकं द्वाभ्यां शुभाभ्यां पात्रकमित्यर्थः, द्वयमाढकञ्च तस्य नामान्तरम्। तैश्चतुर्भिः पात्रचतुष्टयैः। घटादिशूर्पकान्ताः पञ्च द्रोणपर्य्यायाः। पलानां शतकं शतपलं तुला। चत्वारिंशदिति।—पलशतात्मकतुलायाः चत्वारिंशत्संख्यया एको भारः स्यात् ; यद्यपि चरकादिसम्मतमागधमाने “भारः स्याद्विंशतिस्तुलाः” इति परिदृश्यते, तथाऽपि मानपरिभाषा एषा रसोपयोगिनी इति आचार्य्येण स्वयमेवोक्तत्वात् तन्त्रान्तर-विरोधो न मन्तव्यः, एवमन्येऽपि विरोधाः समाधेयाः ॥ ४—१३ ॥

अथ रसस्य अष्टादशविधसंस्कारान् वक्तुं प्रतिजानीते, अधुनेति।—स्पष्टम् ॥ १४ ॥

अथ अष्टादशसंस्काराणां नामानि ।—

स्यात् स्वेदनं तदनु मर्दनमूर्च्छने च
उत्थापनं पतनरोधनियामनानि ।
सन्दीपनं गगनभक्षणमानमत्र
सञ्चारणा तदनु गर्भगता द्रुतिश्च ॥ १५ ॥
बाह्या द्रुतिः सूतकजारणा स्याद्ग्रासस्तथा मारणकर्म पश्चात् ।
सङ्क्रामणं वेधविधिः शरीरे योगस्तथाऽष्टादशधाऽत्र कर्म ॥ १६ ॥

अथ व्याधिविशेषे रसप्रयोगनिषेधः ।—

न योज्यो मर्मणि च्छिन्ने न च क्षाराग्निदग्धयोः ॥ १७ ॥

अथ शुद्धमूर्च्छितरसयोर्गुणाः ।—

शुद्धः समृद्धाग्निमदो मूर्च्छितो व्याधिनाशनः ॥ १८ ॥

अथ मृतरसस्य गुणाः ।—

निष्कम्पवेगस्तीव्राग्नावायुरारोग्यदो मृतः ॥ १९ ॥

अथ रसस्य नैसर्गिकदोषत्रयं तेषां कार्याणि च ।—

विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः ।
रसे मरणसन्ताप-मूर्च्छानां हेतवः क्रमात् ॥ २० ॥

संस्काराणां नामानि विवृणोति, स्यादिति ।—स्वेदन-मर्दन-मूर्च्छन-उत्थापन-पतन-रोध-नियामन-सन्दीपन-गगनभक्षणमान-सञ्चारणा-गर्भद्रुति-बाह्यद्रुति-जारणा-ग्रास-मारण-सङ्क्रामण-वेधविधि-योगाः इति अष्टादशसंस्काराः । रसेन्द्रचिन्तामणौ तु अष्टादशसंस्काराणां संज्ञाविधौ किञ्चित् परिवर्तनं दृश्यते, तद्यथा—"स्वेदन-मर्दन-मूर्च्छनोत्थापनपातन-बोधननियमनदीपनानुवासनगगनादिग्रासप्रमाण-चारणगर्भद्रुति-बाह्यद्रुतिग्रासजारणरञ्जनमारणक्रामणवेधभक्षणानि" इति ॥ १५।१६ ॥

रसप्रयोगनिषेधमाह, नेति ।—सुगमम् ॥ १७ ॥

शोधितमूर्च्छितरसयोः गुणमाह, शुद्ध इति ।—समृद्धाग्निमदः शोधनविशेषेण [illegible] तीव्राग्नावपि स्थिरः, अनुत्पन्नगतिः इत्यर्थः ॥ १८ ॥

मृतरसस्य गुणमाह, निष्कम्पवेग इति ।—निष्कम्पवेगः निश्चलः, स्थिरः इत्यर्थः, तीव्राग्नौ तीक्ष्णाग्नौ, अपीति शेषः ॥ १९ ॥

रसस्य नैसर्गिकदोषान् तथा कर्माणि चाह, विषमिति ।—सुगमम् ॥ २० ॥

अथ रसस्य यौगिकदोषद्वयं तयोः कार्य्यञ्च।—

योगिकौ नागवङ्गौ द्वौ तौ जाड्याध्मानकुष्ठदौ ॥ २१ ॥

अथ रसस्य औपाधिकदोषाः।—

औपाधिकाः पुनश्चान्ये कीर्त्तिताः सप्तकञ्चुकाः।

भूमिजा गिरिजा वार्जाः—" ॥ २२ ॥

अथ रसदोषाणां द्वादशत्वकथनम्।—

"—ते च द्वौ नागवङ्गजौ।

द्वादशैते रसे दोषाः प्रोक्ता रसविशारदैः ॥ २३ ॥

अथ सप्तकञ्चुकानां नामानि।—

पर्पटी पाटनी भेदी द्रावी मलकरी तथा।

अन्धकारी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः ॥ २४ ॥

अथ भूमिजादीनां कार्य्यम्।—

भूमिजाः कुर्वते कुष्ठं गिरिजा जाड्यमेव च।

वारिजा वातसङ्घातं दोषाढ्यं नागवङ्गयोः ॥ २५ ॥

---

रसस्य यौगिकदोषौ तयोः कर्म चाह, यौगिकाविति।—सुगमम् ॥ २१ ॥

औपाधिकदोषानाह, औपाधिका इति।—औपाधिकाः भूम्यादिसम्पर्कादाहिताः, आरोपिताः इत्यर्थः। वार्जाः वारिजाता इत्यर्थः। भूमिजा गिरिजा वार्जाः इति अन्ये सप्त कञ्चुकाः दोषाः पुनः औपाधिकाः कीर्त्तिताः इत्यन्वयः ॥ २२ ॥

समासतः रसस्य द्वादश दोषानाह, ते चेति।—ते पूर्वोक्ता विषं वह्निर्मलश्चेति त्रयो नैसर्गिकदोषाः, तथा सप्तौपाधिकदोषाः इति मिलित्वा दश इत्यर्थः, नागवङ्गौ च द्वौ यौगिकौ दोषौ एते द्वादश रसदोषाः ॥ २३ ॥

औपाधिकाः सप्त कञ्चुका इत्युक्तं के ते इत्यपेक्षायां तान् विवृणोति, पर्पटीति।—पर्पट्यादि सप्त कञ्चुकानां संज्ञाः; तत्र पर्पटीमद्दशशोषकत्वात् पर्पटी; पर्पटी यथा शोषिणी ग्राहिणी च, पारदस्य पर्पट्याख्यकञ्चुकोऽपि नरदेहे तत्क्रियाजननी, विदारकत्वात् पाटनी, मलभेदकत्वात् भेदिनी, शारीरधातूनां द्रवत्वसम्पादनात् द्रावी, दोषवर्द्धकत्वात् मलकरी, अन्धत्वजननात् अन्धकारी, ध्वाङ्क्षी यथा कर्कशस्वरी भवति तथा स्वरपारुष्यजननात् ध्वाङ्क्षीति ज्ञेयम् ॥ २४ ॥

भूमिजादिदोषवर्गाणां कार्य्यमाह, भूमिजा इति।—भूमिजाः इत्यत्र कञ्चुका

अथ उपसंहारः।—

तस्मात् सूतविधानार्थं सहायैर्निपुणैर्युतः।
सर्वोपस्करमादाय रसकर्म समारभेत्॥ २६॥

अथ संस्कारार्थं सूतस्य परिमाणनिर्देशः।—

द्वे सहस्रे पलानान्तु सहस्रं शतमेव वा।
अष्टाविंशत्पलान्येव दश पञ्चैकमेव वा॥ २७॥
पलार्द्धेनैव कर्त्तव्यः संस्कारः सूतकस्य च।
सुदिने शुभनक्षत्रे रसशोधनमारभेत्॥ २८॥

अथ संस्काराः।—

अथ स्वेदनविधिः।—

त्र्यूषणं लवणासुर्य्यौ चित्रकार्द्रकमूलकम्।
क्षिप्त्वा सूतो मुहुः स्वेद्यः काञ्जिकेन दिनत्रयम्॥ २९॥

---

इति शेषः। वारिजाः कञ्चुकाः नागवङ्गयोः दोषाख्यं जाड्याध्मानकुष्ठबहुलं वातसङ्घातं कुर्वते इत्यर्थः॥ २५॥

उपसंहरति, तस्मादिति।—उपस्करम् उपकरणम्॥ २६॥

संस्कारार्थं कियन्मानाः सूता ग्राह्या इत्याह, द्वे इति।—स्पष्टम्। एतेन इदं ज्ञातव्यं यत् द्विसहस्रपलाधिकः पलार्द्धादूनो वा रसः संस्कारार्थं न ग्राह्यः इति। ग्रन्थान्तरे तु औषधार्थं यावन्मात्रं प्रयोजनं, तावन्मात्रस्यापि ग्राह्यत्वं दृश्यते, तथा च रसेन्द्रसारे—"शतं पञ्चाशतं वाऽपि पञ्चविंशद्दशैव च। पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च॥ कर्षार्द्धूनो न कर्त्तव्यो रससंस्कार उत्तमः। प्रयोगेषु च सर्वेषु यथालाभं प्रकल्पयेत्॥" इति॥ २७।२८॥

अथ उद्देशानुसारेण संस्कारान् विवक्षुरादौ स्वेदनाख्यं प्रथमसंस्कारमाह, त्र्यूषणमिति।—लवणासुर्य्यौ सैन्धवं राजिका च। मुहुः निरन्तरम्। त्र्यूषणादिकं काञ्जिके क्षिप्त्वा चतुरावृतवस्त्रेण बद्धं पारदं तत्र निधाय दिनत्रयमविच्छेदेन दोलायन्त्रे स्वेदयेदिति॥ २९॥

अथ मर्दनविधिः।—

गृहधूमेष्टिकाचूर्णं तथा दधि गुड़ान्वितम्।
लवणासुरिसंयुक्तं चिञ्चा सूतं विमर्दयेत्॥ ३०॥
षोड़शांशन्तु तद्द्रव्यं सूतमानान्नियोजयेत्।
सूतं चिञ्चा समं तेन दिनानि त्रीणि मर्दयेत्॥ ३१॥
जीर्णाभ्रकं तथा वीजजीर्णसूतं तथैव च।
नैर्मल्यार्थं हि सूतस्य खल्ले धृत्वा तु मर्दयेत्॥ ३२॥
गृह्णाति निर्मलो रागान् ग्रासे ग्रासे विमर्दितः।
मर्दनाख्यं हि यत् कर्म तत् सूतगुणकृद्भवेत्॥३३॥

अथ मूर्च्छनविधिः।—

गृहकन्या मलं हन्यात्त्रिफला वह्निनाशनी।
चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः॥ ३४॥
मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्च्छयेत्।
इत्थं सम्मूर्च्छितः सूतो दोषशून्यः प्रजायते॥ ३५॥

अथ उत्थापनविधिः।—

अस्माद्विरेकात् संशुद्धो रसः पात्यस्ततः परम्।
उद्धृतः काञ्जिकक्काथात् पूतिदोषनिवृत्तये॥ ३६॥

मर्दनमाह, गृहधूमेति।—गृहधूमः चलास्युः "झुल" इति "भास्पु" इति वा वङ्गभाषा। वीजजीर्णसूत पूर्वोक्तस्वर्णादिकृष्टीकृतजारितरसम्। ग्रासे ग्रासे स्वर्णादीनां प्रतिग्रासे। अयमर्थः,—सूतात् षोडशांशं गृहधूमादि प्रत्येकं गृहीत्वा दिनत्रयं यावत् यथाक्रमं सूतेन सह मर्दयेत, ततः गृहधूमादिभिर्मर्दनजनितमलापनोदनार्थं जीर्णाभ्रक वीजजीर्णसूतञ्च खल्ले संस्थाप्य पुनः घर्षयेत, तेन सूतः निर्मलो भूत्वा रञ्जितो जायते इति॥ ३०—३३॥

मूर्च्छनमाह, गृहकन्येति।—गृहकन्या कुमारी। मूर्च्छयेत् मिश्रयेदित्यर्थः। गृहकन्यादिभिः द्रव्यैः पृथक् पृथक् पारदं मिश्रीकृत्य सप्त सप्तवारं मर्द्दयेत॥३४।३५॥

उत्थापनमाह, अस्मादिति।—विरेकात् शोधनात्, दोषशोधकत्वेन गृहकन्यादयः एवात्र विरेकशब्दस्य लक्ष्यभूताः ज्ञेयाः। उक्तदिशा शुद्धं रसं पूतिदोषनिवारणार्थं

अथ पातनविधि ।—

ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने ।
वङ्गनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ३७ ॥

अथ ऊर्ध्वाधःपातनयोः सङ्ख्यानिर्देशः ।—

शुल्वेन पातयेत् पिष्टिं त्रिधोर्ध्वं सप्तधा त्वधः ॥ ३८ ॥

अथ अधःपातनविधिः ।—

त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः ।
नष्टपिष्टं रसं कृत्वा लेपयेदूर्ध्वभाजनं ॥
ततो दीपैरधःपातमुत्पलैस्तत्र कारयेत् ॥ ३९ ॥

अथ पातने प्रकारान्तराणि ।—

हरिद्राऽङ्कोलशम्याक-कुमारीत्रिफलाऽग्निभिः ।
तण्डुलीयकवर्षाभू-हिङ्गुसैन्धवमाक्षिकैः ॥ ४० ॥
पिष्टं रसं सलवणैः सर्पाक्ष्यादिभिरेव वा ।
पातयेदथवा देवि ! वर्णाग्नीयच्छलोचनैः ॥ ४१ ॥

---

काञ्जिकादौ निक्षिप्य धौतीकृत्य च उद्धरेत्, ततः पातनायन्त्रे पातयेच्च । काञ्जिकादौ धौतीकृत्य उद्धरणमेव उत्थापनं बोध्यम ॥ ३६ ॥

ऊर्ध्वपातनमाह, ताम्रेणेति ।—पिष्टिकां चाक्रिकां, पिण्डाकृतिं वा । ऊर्ध्वभाजने ऊर्ध्वपातनयन्त्रे ॥ ३७ ॥

शोधनार्थं रसस्य कतिवारम् ऊर्ध्वपातनं कतिवारं वा अधःपातनं कार्य्यमित्यपेक्षायामाह, शुल्वेनेति ।—त्रिवारम् ऊर्ध्वं पातयेत, सप्तवारञ्चाधः पातयेत् इत्यर्थः ॥ ३८ ॥

अधःपातनमाह, त्रिफलेति ।—शिखी चित्रकम् । नष्टपिष्टं रसं त्रिफलादिभिः सह मर्दनेन पारदम अपगतस्वरूपपिण्डाकारम् ॥ ३९ ॥

पातनान्तराण्याह, हरिद्रेति ।—अङ्कोलः अङ्कोठः "आँकोड़" इति भाषा । शम्याकः आरग्वधः । तण्डुलीयकः काण्डमारिषः "काँटानटे" इति भाषा । सर्पाक्षी गन्धनाकुली, रास्नाभेदः इत्यर्थः, तदादिभिः ; सर्पाक्ष्यादिषु "सर्पाक्षी चीरिणी वन्ध्या" इत्यादिना वक्ष्यमाणो गणः । वर्णाग्नी शुद्रकारवेल्लः, यच्छः यवतक्तः,

इत्थं ह्यधोर्द्ध्वपातेन पातितोऽसौ यदा भवेत्।
तदा रसायने योग्यो भवेद्द्रव्यविशेषतः॥ ४२॥

अथ प्रकारान्तरम्।—

अथवा दीपकयन्त्रे निपातितः सर्वदोषनिर्मुक्तः॥ ४३॥

अथ तिर्य्यक्पातनम्।—

तिर्य्यक्पातनविधिना निपातितः सूतराजस्तु।
श्लक्ष्णीकृतमभ्रदलं रसेन्द्रयुक्तं तथाऽऽरनालेन॥ ४४॥
खल्ले दत्त्वा मृदितं यावत्तन्नष्टपिष्टतामेति।
कुर्य्यात्तिर्य्यक्पातनपातितसूतं क्रमेण दृढवह्निम्॥ ४५॥
संस्वेद्यः पात्योऽसौ न पतति यावद्दृढश्चाग्नौ।
तदाऽसौ शुध्यते सूतः कर्मकारो भवेद्ध्रुवम्॥ ४६॥

अथ मर्द्दनादीनां गुणः।—

मर्द्दनैर्मूर्च्छनैः पातैर्मन्दः शान्तो भवेद्रसः॥ ४७॥

---

न्यग्रोधश्च: इति यावत्, अस्य त्वक् ग्राह्या, लोचनं क्षीरकम्। हरिद्रादिभिः माक्षिकान्तैः द्रव्यैः अथवा ससैन्धवैः सर्पाक्ष्यादिभिरथवा ब्रणघ्नादिभिः नष्टपिष्टं रसम् ऊर्द्ध्वभाजनोदरे लिप्त्वा अधोभाण्डे जलं संस्थाप्य भूम्यधः निखन्य च उपरिष्टात् पुटं दद्यात्। इत्थमिति।—तान्नेण पिष्टिकामित्यारभ्य ब्रणघ्नीयचलोचनैः इत्यन्तग्रन्थनोक्तेन ऊर्द्ध्वपातनविधिना अधःपातनविधिना चेत्यर्थः। द्रव्यविशेषतः द्रव्यविशेषसंयोगात्॥ ४०—४२॥

पक्षान्तरमाह, अथवेति।—दीपकयन्त्रे प्रागुक्तदीपिकायन्त्रे॥ ४३॥

तिर्य्यक्पातनमाह, तिर्य्यक्पातनविधिनेति।—तिर्य्यक्पातनविधिना निपातितः सूतराजः सर्वदोषनिर्मुक्तो भवेदिति पूर्वेणान्वयः। तमेव विधिमाह, श्लक्ष्णीकृतमिति।—क्रमेण दृढवह्निं मृदुमध्यतीव्राग्निं, दत्त्वेति शेषः। अयमर्थः।—अभ्रदलं रसेन्द्रञ्च आरनालेन सह खल्ले श्लक्ष्णां पिष्ट्वा नष्टपिष्टिं कुर्य्यात्, ततः एकस्मिन् घटे नष्टपिष्टीकृतं तं घटान्तरे जलञ्च संस्थाप्य रसघटगलाधश्छिद्रे नालमेकं संयोजयेत्, जलघटकुक्षिस्थच्छिद्रे च नालाग्रभागं निक्षिप्य मृदा उभयोर्मुखे रुद्ध्वा रसघटाधः मृदुमध्यतीव्रक्रमेण वह्निज्वालां दद्यात् यावत् रसो जलघटान्तः न विशेत; एवम् ऊर्द्ध्वाधस्तिर्य्यक्पातनक्रमेण शुद्धो रसः कर्मसु प्रयोज्यो भवेत्॥ ४४—४६॥

अथ रोधनम्।—

सृष्टाम्बुजैर्निरोधेन ततो मुखकरो रसः।
स्वेदनादिवशात् सूतो वीर्य्यं प्राप्नोत्यनुत्तमम्॥ ४८॥

अथ नियामनम्।—

नियम्योऽसौ ततः सम्यक् चपलत्वनिवृत्तये।
कर्कोटी-फणिनेत्राभ्यां वृश्चिकाम्बुज-मार्कवैः॥
समं कृत्वाऽऽरनालेन स्वेदयेच्च दिनत्रयम्॥ ४९॥

अथ प्रकारान्तरम्।—

मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटङ्कणोपेतैः।
काञ्जिकयुक्तैरेभिः स्तनं ग्रासार्थी जायते स्वेदात्॥ ५०॥

---

मर्दनादीनां फलमाह, मर्दनैरिति।—मर्दनादिक्रियाभिः मन्दः सदोषः रसः शान्तः दोषमुक्तः भवेत॥ ४७॥

रोधनमाह, सृष्टाम्बुजैरिति।—स्वेदनादिवशात् आदिपदेन मर्दनमूर्च्छनपातनादीनां ग्रहणं, निर्वीर्य्यतां गत इति शेषः, सूतः सृष्टाम्बुजैः सृष्टैः वृद्धिः, अम्बु वालकं, जः विषं "नाम्नां विषाणि निघ्नन्ति" इत्युक्तेः विषस्य रसवीर्य्यजनकत्वात्, तैः, निरोधेन रोधनकर्मणा, भाण्डमध्ये एभिः सह रसं क्षिप्ता दिनत्रयं भूम्यधः स्थापनेन, अनुत्तमं वीर्य्यं प्राप्नोति, ततः रसः मुखकारः स्वर्णादिग्राससमर्थः भवेत्। रसेन्द्रचिन्तामणौ इदं बोधननाम्ना उक्तं, पाठश्च अन्यविधो दृश्यते यथा—"एवं कदर्थितः सूतः षण्ढत्वमधिगच्छति। तन्मुक्त्यैऽस्य क्रियते बोधनं कथ्यते हि तत्॥ विशालितकपाले वा काचकूप्यामथापि वा। सूताम्बुजं विनिक्षिप्य तत्र तन्मज्जनावधि॥ पूरयेत्त्रिदिनं भूम्यां राजहस्तप्रमाणतः। अनेन सूतराजोऽयं षण्ढभावं विमुञ्चति॥" इति। रसेन्द्रसारेऽपि एवमेव पाठः, केवलं "सूताम्बुजम्" इत्यत्र "सूते जलं" तथा "राजहस्त" इत्यत्र "गजहस्त" इति पाठभेदः॥ ४८॥

नियामनमाह, नियम्य इति।—कर्कोटी कर्कोटकं "काँकरोल" इति भाषा। फणिनेत्रं सर्पाक्षी, गन्धाभेदः इति यावत्। वृश्चिकः श्वेतपुनर्नवा। अम्बुजः इज्जलः। मार्कवः भृङ्गराजः। सुगममन्यत्॥ ४९॥

मतान्तरमाह, मरिचैरिति।—भूखगः सुवर्णमाक्षिकम्। आसुरिः राजिका। एतया प्रक्रियया रसः ग्राससमर्थोऽपि भवेत्॥ ५०॥

अथ दीपनम् ।—

विश्वारसिन्धुखगभू-शिखिशिग्रुराजी-
तीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः ।
नेपालताम्रदलशोधितमारनाले
साम्लासवाम्लपुटितं रसदीपनं तत् ॥५१॥

अथ प्रकारान्तरदीपनम् ।—

स्वेदयेदासवाम्लेन वीर्य्यतेजःप्रवृद्धये ।
यथोपयोगं स्वेद्यः स्यान्मूलिकानां रसेषु च ॥ ५२ ॥

अथ रसभावनादौ मूलिन्यः ।—

सर्पाक्षी चोरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका ।
काकजङ्घा शिखिशिखा ब्रह्मदण्ड्याखुकर्णिका ॥ ५३ ॥
वर्षाभूः कञ्चुकी दूर्वा सैर्य्यकोत्पलशङ्खिकाः ।
शतावरी वज्रलता वज्रकन्दाग्निकर्णिका ॥ ५४ ॥

---

दीपनमाह, विश्वारेति ।—खगभूः भूखग इत्यर्थः, राजी "राइ" इति ख्यातः सर्षपभेदः, तीक्ष्णं चवी, शिखी चित्रकः, अम्लवेतसमुखैः अम्लवेतसादिभिः अम्लद्रव्यैः ; लवणोषणाम्लैः विश्वारादिभिः अम्लवेतसान्तैर्लवणोषणाम्लरसविशिष्ट-द्रव्यैः सह, नेपालताम्रदलशोधितं नेपालदेशीयताम्रपत्रेण सह सम्मर्द्य नष्टपिष्टीकृतं रसम् आरनाले, पचेदिति शेषः, ततः साम्लासवाम्लपुटितम् अम्लासवेन काञ्जिकेन, अम्लेन अन्येनाम्लद्रव्येण च सह पुटितं पुटनं, कार्य्यमिति शेषः, तत् एतद्विधानं रसदीपनं रसस्य वीर्य्योद्दीपनं, ज्ञेयमिति शेषः ॥ ५१ ॥

दीपनान्तरमाह, स्वेदयेदिति ।—आसवाम्लेन काञ्जिकेन । यथोपयोगं यथा-लाभम् । मूलिकानां वक्ष्यमाणसर्पाक्ष्यादीनाम ॥ ५२ ॥

स्वेद्यद्रव्यमूलिकानां नामान्याह, सर्पाक्षीति ।—चोरिणी स्वनामप्रसिद्धा "चोरइ" इति वङ्गीयाः । वन्ध्या वन्ध्याककोटकी, "तित् काँक्रोल्" इति भाषा । शिखिशिखा मयूरशिखा, "मयूरचुटी" इति भाषा, अपामार्गस्य वीजाधारदण्डी वा "आपाङ्गेर" इति ख्यातः । ब्रह्मदण्डी भार्गी, "छागलदाँड़ि, बामनदाँड़ि"

श्वेतार्कशिग्रुधत्तूर-मृगदूर्वारसाङ्कुशाः ।
रम्भा रक्तार्भनिर्गुण्डी लज्जालुः सुरदालिका ॥ ५५ ॥
मण्डूकपर्णी पाताली चित्रकं शीषसुन्दरा ।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥ ५६ ॥
जाती जयन्ती शौण्डेवी भूकदम्बः कुसुम्भकः ।
कोशातकी नीरं कणा लाङ्गली कटुतुम्बिका ॥५७॥
चक्रमर्दोऽमृता कन्दः सूर्य्यावर्त्तेषुपुङ्खिका ।
वाराही हस्तिशुण्डी च प्रायेण रसमूलिकाः ॥ ५८ ॥
रसस्य भावने स्वेदे मूषालेपे च पूजिताः ।
इत्यष्टौ सूतसंस्काराः समा द्रव्ये रसायने ॥
कार्य्यास्ते प्रथमं शेषा नात्ता द्रव्योपयोगिनः ॥ ५९ ॥

---

इति भाषया ख्याता वा । आखुकर्णी मूषिककर्णी । कम्बुकी अश्वगन्धा । सैय्येकः श्वेतझिण्टी । वज्रलता अस्थिसंहारः । वज्रकन्दः शर्करकन्दालुकः । शाम्रकर्णिका औषधिविशेषः स च पार्वतीय एव । मृगदूर्वा मृगप्रिया दूर्वा, सुकोमलदूर्वा इत्यर्थः । रसाङ्कुशः औषधिविशेषः । लज्जालुः लज्जावती । सुरदालिका देवदाली, हस्ति-घोषकः इति यावत । पाताली पातालगरुडी, छिलिहिण्ट इति यावत् । शीषसुन्दरा "सिमा" इति भाषा । महाराष्ट्री जलपिप्पली । तिलपर्णिका "तिलोनि" इति ख्यातः शाकविशेषः, श्वेतचन्दनं वा । शौण्डेवी सुवर्चला तुलसी वा । कोशातकी घोषकः । नीरं बालकम् । इषुपुङ्खिका शरपुङ्खः । वाराही वाराहीकन्दः । रसमूलिकाः रससंस्कारार्थं मूलानि इत्यर्थः ; एभिः यथालाभं रसस्य भावना रसस्वेदनं रसपूर्णमूषालेपनञ्च कार्य्यम् । इति पूर्वोक्तरूपाः, अष्टौ अष्टविधाः स्वेदनमर्दन-मूर्च्छनोत्थापनपातनरोधननियामनदीपनाख्याः सूतसंस्काराः द्रव्ये औषधविषये रसायने च समाः तुल्याः, उक्ता इति शेषः, औषधार्थं रसायनार्थञ्च संस्कार एकविध इत्यर्थः, ते संस्काराः प्रथमम् आदौ कार्य्याः, यद्वा—प्रथमं श्रेष्ठाः, द्रव्यरसायनोभयोपयोगित्वात ; शेषाः गगनभक्षणमानादयः संस्काराः द्रव्योप-योगिनः केवलम् औषधोपयोगिनः, न तु रसायनोपयोगिन इत्यर्थः, अतः न उक्ताः ॥ ५१—५९ ॥

अथ रसबन्धनं वक्तुं प्रतिज्ञा।—

पञ्चविंशतिसङ्ख्याकान् रसबन्धान् प्रचक्ष्महे।
येन येन हि चाञ्चल्यं दुर्ग्रहत्वञ्च नश्यति॥
रसराजस्य सम्प्रोक्ता बन्धनार्थो हि वार्त्तिकैः॥६०॥

अथ रसबन्धाः।—

हठारोटौ तथाऽऽभासः क्रियाहीनश्च पिष्टिका।
क्षारः खोटश्च पोटश्च कल्कबन्धश्च कज्जलिः॥ ६१॥
सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः।
शृङ्खला-द्रुतिबन्धौ च बालकश्च कुमारकः॥ ६२॥
तरुणश्च तथा वृद्धो मूर्त्तिबद्धस्तथाऽपरः।
जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः॥
महाबन्धाभिधश्चेति पञ्चविंशतिरीरिताः॥ ६३॥

अथ मतान्तरीयबन्धः।—

केचिद्वदन्ति षड्विंशो जलूकाबन्धसंज्ञकः।
स तावन्नेष्यते देहे स्त्रीणां द्रावेऽतिशस्यते॥६४॥

अथ हठबन्धः।—

हठो रसः स विज्ञेयः सम्यक् शुद्धिविवर्जितः।
स सेवितो नृणां कुर्य्यात् मृत्युं वा व्याधिमुद्धतम्॥ ६५॥

---

रसबन्धान् वक्तुं प्रतिजानीते, पञ्चविंशतीति।—सुगमम्॥ ६०॥

बन्धनस्य पञ्चविंशतिभेदानाह, हठारोटाविति।—हठ आरोट आभास-क्रियाहीन-पिष्टिका-क्षार-खोट-पोट-कल्कबन्ध कज्जलि--सजीव-निर्जीव-निर्बीज सबीज-शृङ्खला-द्रुति-बालक कुमार-तरुण-वृद्ध-मूर्त्तिबद्ध--जलबन्ध अग्निबन्ध--सुसंस्कृतकृत-महाबन्ध-नामकाः पञ्चविंशतिबन्धभेदा बोध्याः॥ ६१—६३॥

केषाञ्चिन्मते जलूकाबन्धाख्यं षड्विंशतिं बन्धान्तरमाह, केचिदिति।—स जलूकाबन्धः देहे शारीररोगे न इष्यते, परन्तु स्त्रीणां द्रावे कामिनीद्रावणे, योनिद्रावणे वशीकरणे वा इत्यर्थः, शस्यते॥ ६४॥

अथ आरोटबन्धः।—

सुशोधितो रसः सम्यगारोट इति कथ्यते।
स चेत्रीकरणे श्रेष्ठः शनैर्व्याधिविनाशनः॥ ६६॥

अथ आभासबन्धः।—

पुटितो यो रसो याति योगं मुक्त्वा स्वभावताम्।
भावितो धातुमूलाद्यैराभासो गुणवैकृतैः॥६७॥

अथ क्रियाहीनबन्धः।—

असंशोधितलोहाद्यैः साधितो यो रसोत्तमः।
क्रियाहीनः स विज्ञेयो विक्रियां यात्यपथ्यतः॥६८॥

अथ पिष्टिकाबन्धः।—

तीव्रातपे गाढतरावमर्दात् पिष्टी भवेत् सा नवनीतरूपा।
स रसः पिष्टिकाबन्धो दीपनः पाचनस्तराम्॥६९॥

अथ क्षारबन्धः।—

शङ्खशुक्तिवराटाद्यैर्योऽसौ संसाधितो रसः।
क्षारबन्धः परं दीप्ति-पुष्टिकृत्स्खलनाशनः॥ ७०॥

---

तत्र प्रथमं हठबन्धमाह, हठ इति।—सम्यक् शुद्धिविवर्जितः असम्यक्तया शोधितो रसः हठबद्धो ज्ञेयः, तत्सेवने मृत्युः व्याधिर्वा जायते॥ ६५॥

आरोटबन्धमाह, सुशोधित इति।—चेत्रीकरणे देहस्य दार्ढ्यसम्पादने, जरायुशोधनद्वारा गर्भग्रहणसामर्थ्यदाने वा इत्यर्थः॥ ६६॥

आभासबन्धमाह, पुटित इति।—धातुमूलाद्यैः प्रागुक्तस्वर्णादिधातुभिस्तथा सर्पाक्ष्यादिमूलिकाभिः भावितः पुटितश्च रसः गुणवैकृतैः द्रव्यान्तरसंयोगेन स्वाभाविकगुणविपर्ययात् स्वभावतां स्वाभाविकगुणादिकं मुक्त्वा योगं योगवाहितां याति स आभासः, कथ्यते इति शेषः॥ ६७॥

क्रियाहीनबन्धमाह, असंशोधितेति।—अपथ्यतः अहितोपयोगात्॥ ६८॥

पिष्टिकाबन्धमाह, तीव्रातपे इति।—गाढतरावमर्दात् द्रव्यान्तरेण सह दृढमर्दनात्। पिष्टी पिष्टिकाबन्धः॥ ६९॥

क्षारबन्धमाह, शङ्खेति।—संसाधितः मर्दनपुटनादिभिः सुसम्पादितः। स्खलनम्‌ पतनम्॥ ७०॥

अथ खोटबन्धः।—

बन्धो यः खोटतां याति ध्मातो ध्मातः क्षयं व्रजेत्।
खोटबद्धः स विज्ञेयः शीघ्रं सर्वगदापहः॥ ७१॥

अथ पोटबन्धलक्षणम्।—

द्रुतकज्जलिका मोचा-पत्रके चिपिटीकृता।
स पोटः पर्पटी सैव बालाद्यखिलरोगनुत्॥ ७२॥

अथ कल्कबन्धलक्षणम्।—

स्वेदाद्यैः साधितः सूतः पङ्कत्वं समुपागतः।
कल्कबद्धः स विज्ञेयो योगोक्तफलदायकः॥ ७३॥

अथ कज्जलीबन्धलक्षणम्।—

कज्जली रसगन्धोत्था सुश्लक्ष्णा कज्जलोपमा।
तत्तद्योगेन संयुक्ता कज्जलीबन्ध उच्यते॥ ७४॥

---

खोटबन्धमाह, बन्ध इति।—खोटतां वह्निस्थोऽपि अनुड्डयनस्वभावतां, यदुक्तम् "अग्निमध्ये यदा तिष्ठेत् खोटबद्धस्य लक्षणम्" इति। ध्मातो ध्मातः भस्त्रया पुनः पुनराध्मापित इत्यर्थः, क्षयं व्रजेत् द्रव्यान्तरेण सह एकीभावात् अदर्शनतां गच्छेदित्यर्थः॥ ७१॥

पोटबन्धमाह, द्रुतकज्जलिकेति।—द्रुतकज्जलिका वह्निसन्तापेन ईषदार्द्रीभूत-कज्जलीत्यर्थः। मोचापत्रके कदलीपत्रे। पर्पटीति तस्य संज्ञाऽन्तरम्। एतद्बन्धस्य विस्तृतप्रक्रिया तु चक्रदत्तीयग्रहण्यधिकारे रसपर्पटीप्रस्तावे द्रष्टव्या॥ ७२॥

कल्कबन्धमाह, स्वेदाद्येरिति।—स्वेदाद्यैः स्वेदनमर्दनार्हद्रव्यैः सह स्वेदनमर्दना-दिभिः इत्यर्थः, साधितः स्विन्नः मर्दितश्च इत्यर्थः, पङ्कत्वं पङ्कवत् पिण्डाकारताम्। योगोक्तफलदायकः यस्मिन् योगे स प्रयोज्यः तस्य फलोत्कर्षप्रद इत्यर्थः; अथवा स्वेदनमर्दनार्थं गृहीतकल्कद्रव्याणाम् उपयोगे यत् फलं, तत्फलप्रद इत्यर्थः॥ ७३॥

कज्जलीबन्धमाह, कज्जलीति।—सुश्लक्ष्णा चिक्कणा। तत्तद्योगेन संयुक्ता रस-गन्धकयोश्चकद्रव्यसंयोगेन युक्ता इत्यर्थः॥ ७४॥

अथ सजीवबन्धलक्षणम् ।—

भस्मीकृतो गच्छति वह्नियोगात्
रसः सजीवः स खलु प्रदिष्टः ।
संसेवितोऽसौ न करोति भस्म-
कार्य्यं जवाद्व्याधिविनाशनञ्च ॥ ७५ ॥

अथ निर्जीवबन्धलक्षणम् ।—

जीर्णाभ्रको वा परिजीर्णगन्धो
भस्मीकृतश्चाखिललोहमौलिः ।
निर्जीवनामा हि स भस्मसूतो
निःशेषरोगान् विनिहन्ति वेगात् ॥ ७६ ॥

अथ निर्बीजबन्धलक्षणम् ।—

रसस्तु पादांशसुवर्णजीर्णः पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुटितः क्रमेण निर्बीजनामा सकलामयघ्नः ॥ ७७ ॥

---

सजीवबन्धमाह, भस्मीकृत इति ।—यः रसः भस्मीकृतः सन् वह्नियोगात् अग्निसम्पर्कात्, गच्छति उड्डीनो भवति इत्यर्थः । भस्मकार्य्यं भस्मीभूतपारदोपयोगस्य यत् फलम् । जवात् वेगात्, शीघ्रमित्यर्थः । उड्डयनसमर्थत्वादस्य सजीवत्वं बोध्यम् ॥ ७५ ॥

निर्जीवबन्धमाह, जीर्णाभ्रक इति ।—जीर्णाभ्रकः ग्रासीकृताभ्र इत्यर्थः । परिजीर्ण-गन्धः सम्यग्-ग्रासितगन्धक इत्यर्थः । अखिलेति ।—अखिलानां सर्वेषां लोहानां स्वर्णादीनामित्यर्थः, मौलिः शिरोभूषणस्वरूपः, सर्वलोहोपयोगे ये गुणा भवन्ति, तेभ्योऽप्यधिकगुणप्रद इत्यर्थः । वह्नियोगेऽपि निर्गमनासामर्थ्यात् अस्य निर्जीवत्वं बोध्यम् ॥ ७६ ॥

निर्बीजबन्धमाह, रस इति ।—पादांशसुवर्णजीर्णः पादांशः चतुर्थांशः सुवर्णजीर्णः स्वर्णं यस्य एव तादृशः । गन्धकयोगतः तुल्यगन्धकसंयोगात्, वक्ष्यमाण "तुल्यांशगन्धैः" इत्यत्र तुल्यांश इति वाक्यबलात् अत्रापि तुल्यांशत्वं ज्ञेयम् ; चतुर्थांशस्वर्णभक्षणात् तुल्यगन्धकेन च पिष्टीकृतः रसः तुल्यगन्धकेन सप्तवारं पुटितः निर्बीजबन्धनामतां याति इति निष्कर्षः ॥ ७७ ॥

अथ सबीजबन्धलक्षणम्।—

पिष्टीकृतैरभ्रकसत्त्वहेम-तारार्ककान्तैः परिजारितो यः।
हतस्ततः षड्गुणगन्धकेन सबीजबद्धो विपुलप्रभावः॥ ७८॥

अथ शृङ्खलाबन्धलक्षणम्।—

वज्रादिनिहतः सूतो हतः सूतः समोऽपरः।
शृङ्खलाबद्धसूतस्तु देहलोहविधायकः॥
चित्रप्रभावो वेगेन व्याप्तिं जानाति शङ्करः॥ ७९॥

अथ द्रुतिबन्धलक्षणम्।—

युक्तोऽपि वाह्यद्रुतिभिश्च सूतो
बन्धं गतो वा भसितस्वरूपः।
स राजिकापादमितो निहन्ति
दुःसाध्यरोगान् द्रुतिबद्धनामा॥ ८०॥

अथ बालकबन्धलक्षणम्।—

समाभ्रजीर्णः शिवजस्तु बालः संसेवितो योगयुतो जवेन।
रसायनो भाविगदापहश्च सोपद्रवारिष्टगदान्निहन्ति॥ ८१॥

सबीजबन्धमाह, पिष्टीकृतैरिति।—पिष्टीकृतैः पेषणेन कृतपिण्डाकारैः। आदौ पिष्टीकृतैरभ्रसत्त्वादिभिः सह जारितः पश्चात् षड्गुणगन्धकेन सह मारितश्च रसः सबीजबन्धनामा भवति॥ ७८॥

शृङ्खलाबन्धमाह, वज्रादीति।—वज्रादिनिहतः हीरकादिसहयोगेन मारितः सूतः तथा समः समपरिमितः अपरश्च हतः प्रकारान्तरेण मारितः सूतः शृङ्खलाबद्धसूतः, उभयोर्मर्दनादिति शेषः। चित्रप्रभावाम् अलौकिकसामर्थ्यां, वेगेन व्याप्तिं, शृङ्खलाबन्धसूतस्य देहे इति शेषः॥ ७९॥

द्रुतिबन्धमाह, युक्त इति।—वाह्यद्रुतिभिः रसस्य द्रवत्वसम्पादकक्रियाविशेषैः युक्तः अपि बन्धं गतः बन्धनतां प्राप्तः, वा अथवा भसितस्वरूपः भस्मीभूतः सूतः द्रुतिबद्धनामा ज्ञेयः। सः द्रुतिबद्धसूतः राजिका "राइ" इति ख्यातः रक्तवर्णसर्षपविशेषः तस्याः पादमितः चतुर्भागपरिमितः॥ ८०॥

बालकबन्धमाह, समाभ्रेति।—समेन तुल्येन अभ्रेण सह जीर्णः जारितः शिवजः

अथ कुमारबन्धलक्षणम् ।—

हरोद्भवो यो द्विगुणाभ्रजीर्णः स स्यात् कुमारो मिततण्डुलोऽसौ ।
त्रिःसप्तरात्रैः खलु पापरोग-सङ्घातघातो च रसायनञ्च ॥ ८२ ॥

अथ तरुणबन्धलक्षणम् ।—

चतुर्गुणव्योमकृताशनोऽसौ रसायनाग्र्यस्तरुणाभिधानः ।
स सप्तरात्रात् सकलामयघ्नो रसायनो वीर्य्यबलप्रदाता ॥ ८३ ॥

अथ वृद्धबन्धलक्षणम् ।—

यस्याभ्रकः षड्गुणितो हि जीर्णः
ग्रासाग्निसख्यः स हि वृद्धनामा ।
देहे च लोहे च नियोजनीयः
शिवादृते कोऽस्य गुणान् प्रवक्ति ? ॥ ८४ ॥

अथ मूर्त्तिबन्धलक्षणम् ।—

यो दिव्यमूलिकाभिश्च कृतोऽत्यग्निसहो रसः ।
विनाऽभ्रजारणात् स स्यान्मूर्त्तिबन्धो महारसः ॥ ८५ ॥
अयं हि जार्य्यमाणस्तु नाग्निना क्षीयते रसः ।
योजितः सर्वयोगेषु निरौपम्यफलप्रदः ॥ ८६ ॥

---

पारदः बालः बालकबन्धः । योगयुतः रसायनादियोगे प्रयुक्तः । भाविगदापहः अनागतव्याधिप्रतिषेधक इत्यर्थः ॥ ८१ ॥

कुमारबन्धमाह, हरोद्भव इति ।—हरोद्भवः पारदः । कुमारः कुमारबन्धः । मिततण्डुलः तण्डुलमानः । त्रिःसप्तरात्रैः एकविंशतिदिवसैः । पापेति ।—पापरोगाणां कुष्ठमसूरिकादीनां सङ्घातं समूहं हन्ति नाशयति इति तद्योक्तः ॥ ८२ ॥

तरुणबन्धमाह, चतुर्गुणेति ।—चतुर्गुणव्यामकृताशनः चतुर्गुणाभ्रजीर्णः असौ रसः रसायनाग्र्यः रसायनश्रेष्ठः ॥ ८३ ॥

वृद्धबन्धमाह, यस्येति ।—अभ्रकः षड्गुणितः जीर्णः षड्गुणाभ्रजीर्णः । ग्रासाग्निसख्यः अग्निसन्तापेऽपि अनुड्डयनशीलत्वात् सखित्वं ज्ञेयम् । देहे शारीररोगे, तथा लोहे लौहप्रयोगे च इत्यर्थः ॥ ८४ ॥

मूर्त्तिबन्धमाह, य इति ।—दिव्यमूलिकाभिः हिमवत्पादसम्भूतमण्डूकपर्णी-

अथ जलबन्धलक्षणम्।—

शिलातोयमुखैस्तोयैर्बद्धोऽसौ जलबन्धवान्।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः॥ ८७॥

अथ अग्निबन्धलक्षणम्।—

केवलो योगयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः।
अक्षीणश्चाग्निबद्धोऽसौ खेचरत्वादिकृत् स हि॥ ८८॥

अथ महाबन्धलक्षणम्।—

हेम्ना वा रजतेन वा सहचरो ध्मातो व्रजत्येकता-
मक्षीणो निविडो गुरुश्च गुटिकाकारोऽतिदीर्घोज्ज्वलः।
चूर्णत्वं पटुवत् प्रयाति निहतो घृष्टो न मुञ्चेन्मलं
निर्बन्धो द्रवति क्षणात् स हि महाबद्धाभिधानो रसः॥८९॥

---

दिभिरौषधविशेषैः। अत्यग्निसहः तीव्राग्नावपि स्थिरः इत्यर्थः। निरोपम्यफलप्रदः अतुलनीयसिद्धिसम्पादकः॥ ८५।८६॥

जलबन्धमाह, शिलेति।—शिलातोयमुखैस्तोयैः कारकादिजलैः। कल्पोक्तफलदायकः रसकल्पोक्तफलदायक इत्यर्थः॥ ८७॥

अग्निबन्धमाह, केवल इति।—केवलः द्रव्यान्तरासंयुक्त इत्यर्थः। योगयुक्तः द्रव्यान्तरसंयुक्तः। ध्मातः अग्नौ सन्तप्तः। अक्षीणः अग्नितापेऽपि यथामात्रया स्थितः, न तु किञ्चिदप्यूनः। खेचरत्वादिकृत् मुखे धृतः नभोगतिसामर्थ्यप्रदः इत्यर्थः। उद्देशग्रन्थे "जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः" इत्यनेन अग्निबन्धानन्तरं महाबन्धाच्च प्राक् सुसंस्कृतकृताख्यबन्धान्तरस्य समुल्लेखो विद्यते, विवरणग्रन्थे तु तदुल्लेखादर्शनात् बन्धः सः लिपिकरप्रमादात् प्रमादान्तराद्वा अदर्शनतां गत इति मन्ये। किञ्च सुसंस्कृतकृताभिधः इत्यस्य अग्निबन्धस्य विशेषणत्वमपि न युज्यते, तथात्वे बन्धस्य चतुर्विंशतिसङ्ख्याकत्वात् "पञ्चविंशतिसङ्ख्याकान् रसबन्धान् प्रचक्षते" इति प्रतिज्ञाहान्यापत्तेरिति॥ ८८॥

महाबन्धमाह, हेम्नेति।—एकतां व्रजति स्वर्णरौप्याभ्यां सह मिश्रितो भवति। निविडः घनतामितः, समानसर्वावयवः इत्यर्थः। गुटिकाकारः स्वर्णेन रौप्येण वा सह धमनवशात् एकीभूय गुटिकाकारेण परिणत इत्यर्थः। अतिदीर्घोज्ज्वलः विस्फुरितप्रभाविशिष्टः सुचिरस्थायिप्रभासम्पन्नो वा। निहतः प्रासाघातः सन् पटुवत् लवणवत्

अथ सूतानां सङ्क्रमसूच्छाकल्पः ।—

विष्णुक्रान्ता-शशि-लता-कुम्भी-कनकमूलकैः ।
विशाला-नागिनी-कन्द-व्याघ्रपादी-कुरुण्टकैः ॥ ९० ॥
वृश्चिकालीभशुण्डीभ्यां हंसपाद्या सहासुरैः ।
अप्रसूतगवां मूत्रैः पिष्टं वा कुलके पचेत् ॥ ९१ ॥
पक्कमेवं मृतैर्लोहैर्मर्दितं विपचेद्रसम् ।
यन्त्रेषु मूर्च्छा सूतानामिष कल्पः समासतः ॥ ९२ ॥

अथ जलूकाबन्धलक्षणम् ।—

सूते गर्भनियोजिताऽर्द्धकनके पादांशनागेऽथवा
पञ्चाङ्गुष्ठक-शाल्मली-क्रतमदा-श्लेष्मातबीजैस्तथा ।

मूर्च्छत्वं प्रयाति । निर्बन्धः यथायथमसम्पादितबन्धनक्रियः चेत् चणात् द्रवति, भग्ना इति शेषः ॥ ८९ ॥

रसस्य सङ्क्रमसूर्च्छाकल्पमाह, विष्णुक्रान्तेति ।—विष्णुक्रान्ता अपराजिता । शशी कर्पूरः । लता लताकस्तूरिका ; यद्वा—शशिलता इत्येकपदं, तत्र श्वेतयूथिका इत्यर्थः । कुम्भी वारिपर्णी "पाना" इति भाषा ; दन्ती वा । कनकं धुस्तूरः । मूलकं स्वनामख्यातकन्दाविशेषः ; "मूलकैः" इत्यत्र "कूलकैः" इति पाठे—पटोलपत्रैरित्यर्थः । विशाला गोरक्षकर्कटी । नागिनी नागदन्ती । कन्दः शूरणम् । व्याघ्रपादी विकङ्कतः, "बैंचि" इति भाषा । कुरुण्टकः पीतझिण्टी ; "कुरुण्टकैः" इत्यत्र "कुतुम्बकैः" इति पाठे—द्रोणपुष्पीरसैः । वृश्चिकाली वृश्चिकपत्री "बिछाटी" इति ख्याता । इभशुण्डी हस्तिशुण्डी । हंसपादी गोधापदीलता । आसुर बिडाख्यलवणम् । एषां समस्तानां यथाप्राप्तानां वा मूलाद्यन्यतमाङ्गैः सह, अप्रसूतगवां मूत्रैर्वा सह रसं पिष्ट्वा कुलके करीषाग्नौ ; "वा कुलके" इत्यत्र "वालुकके" इति पाठे—विष्णुक्रान्तादीनां मूलाद्यन्यतमाङ्गैः तथा अप्रसूतगवां मूत्रैः सह पिष्ट्वा वालुकायन्त्रे, "कुक्कटे" इति पाठे—कुक्कुटपुटे, अयमेव पाठः साधीयस्तया प्रतिभाति । सुगममन्यत् ॥ ९० — ९२ ॥

जलूकाबन्धमाह, सूते इति ।—गर्भे अभ्यन्तरे नियोजितं स्थापितम् अर्द्धम् अर्द्धभागः कनकं यत्र तथाविधे अथवा पादांशः चतुर्थांशः नागः सीसकं यत्र

तद्वत्तेजिनि-कोलकाख्यफलजैश्चूर्णैं तिलं पत्रकं
तप्ते खल्लतले निधाय मृदिते जाता जलूका वरा ॥ ९३ ॥

अथ क्रियाविशेषेण जलूकाया गुणविशेषः।—

सैषा स्यात् कपिकच्छुरोमपटले चन्द्रावतीतैलके
चन्द्रे टङ्कणकामपिप्पलिजले स्विन्ना भवेत्तेजिनी।
तप्ते खल्लतले विमर्दनविधिर्यन्त्राद्वलिर्या कृता
सा स्त्रीणां मददर्पनाशनकरी ख्याता जलूका वरा ॥९४॥

अथ जलूकायाः त्रिविधप्रमाणनिर्देशः।—

बाल्ये चाष्टाङ्गुला योज्या यौवने च दशाङ्गुला।
द्वादशैव प्रगल्भानां जलूका त्रिविधा मता ॥ ९५ ॥

तादृशे मूले, तिलचूर्णं तथा तेजपत्रचूर्णञ्च दत्त्वा तप्तखल्ले निधाय पञ्चाङ्गुष्ठादिभिः सह मर्दनेन जलूकाबन्धः भवेत् इत्यर्थः। तत्र पञ्चाङ्गुष्ठः एरण्डमूलम्। कृतमदा त्रैलोक्यविजया। श्लेष्मातबीजं भव्यफलबीजम्। तेजिनि मूर्वा। कोलकाख्यफलं बदरफलमज्जा ॥ ९३ ॥

प्रक्रियाविशेषेण अस्या गुणविशेषमाह, सैषेति।—सैषा जलूका, कपिकच्छुरोमपटले शूकशिम्बीफलगात्रस्थशूकानिचये, तत्क्वाथे इत्यर्थः, तेन पर्य्युषितजले इत्यर्थो वा; चन्द्रावती चन्द्रमल्लिका इति ख्यातः पुष्पविशेषः तस्याः तैलके बीजोत्थतैले, एलाबीजोत्थतैले वा, चन्द्रे कर्पूरे, कर्पूरोदके, कामः दमनकः "दोना" इति ख्यातः, टङ्कणकामाभ्यां सह पिप्पलीजले पिप्पलीक्वाथे, स्विन्ना पाचिता, तेजिनी तेजःसम्पन्ना, "सर्वे सान्तास्त्वदन्ताः" इति नियमानुसारेण अदन्ततेजश्शब्दात् प्राशस्त्ये इन्; भवेत्, ततः तप्तखल्ले मर्दनं कृत्वा यन्त्रात् यन्त्रयोगेन वलयाकार-करणोपयोगियन्त्रविशेषेण, या वलिः वलयः कृता, सा जलूका। मददर्पेति।—स्त्रीणां दर्पनाशनत्वञ्च मुखे बाहौ वा धारणात् बोध्यम् ॥ ९४ ॥

वयोभेदेन जलूकाया मानमाह, बाल्ये इति।—बाल्ये इत्यस्य नात्यन्तबालावस्थायामित्यर्थो बोध्यः, अथवा बालायामित्यर्थः करणीयः, अत्र पक्षे—द्वादशादूर्द्ध्वं षोडशादर्वाक् इत्यर्थः। यौवने षोडशादूर्द्ध्वं त्रिंशतोऽर्वाक्। प्रगल्भानां प्रौढानां, त्रिंशत ऊर्द्ध्वं पञ्चाशतोऽर्वागित्यर्थः ॥ ९५ ॥

अथ जलूकायाः संस्कारविशेषः ।—

धृत्वा सूक्ष्ममुखे पात्रे मेषीक्षीरं प्रदापयेत् ।
स्थापयेदातपे तीव्रे वासराण्येकविंशतिः ॥ ९६ ॥

अथ अन्यविधां जलूकां वक्तुं प्रतिज्ञा ।—

द्वितीयाऽत्र मया प्रोक्ता जलूका द्रावणे स्थिता ।
पुरुषाणां स्थिता मूर्द्धि द्रावयेद्बीजमद्भुतम् ॥ ९७ ॥

अथ द्वितीयप्रकारजलूकाबन्धः ।—

मुनिपत्ररसञ्चैव शाल्मलीवृन्तवारि च ।
जातीमूलस्य तोयञ्च शिंशपातोयसंयुतम् ॥ ९८ ॥
श्लेष्मातकफलञ्चैव त्रिफलाचूर्णमेव च ।
कोकिलाक्षस्य चूर्णञ्च पारदं मर्दयेद्बुधः ॥ ९९ ॥
जलूका जायते दिव्या रामाजनमनोहरा ।
सा याज्या कामकाले तु कामयेत् कामिनी स्वयम् ॥१००॥

जलूकायाः संस्कारविशेषमाह, धृत्वेति ।—धृत्वा, जलूकावलयमिति शेषः सूक्ष्ममुखे सङ्कीर्णमुखविशिष्टे । "सूक्ष्ममुखे पात्रे" इत्यत्र "सूतमुखं पात्रम्" इति पाठान्तरे—जलूकाबन्धे वलयीकृतस्य सूतस्य संयोगदेशे पात्रं धृत्वा इत्यर्थः । मेषीदुग्धे एकविंशतिदिनानि तीव्रातपे स्थापनरूपसंस्कारविशेषेण जलूकावलयस्य गुणवृद्धिर्जायेत इति ॥ ९६ ॥

अन्यविधजलूकाबन्धं वक्तुं प्रक्रमते, द्वितीयेति ।—द्रावणे कामिनीद्रावणे इत्यर्थः । मूर्द्धि स्थिता धृता इत्यर्थः । बीजं स्त्रीवीर्य्यम् । अद्भुतत्वञ्च पुंमूर्द्धि स्थिता अपि स्त्रीबीजद्रावणात् बोध्यम् ॥ ९७ ॥

तमेव बन्धप्रकारमाह, मुनिपत्ररसमिति ।—मुनिपत्ररसम् अगस्त्यपत्ररसं, वकपुष्पपत्रस्वरसम् इत्यर्थः, दमनकपत्रस्वरसं वा । शाल्मलीवृन्तवारि शाल्मलीपुष्पस्य प्रसववृन्तनरसम् । जातीमूलस्य तोयं मालतीलतामूलस्वरसम् । शिंशपातोयसंयुतं "शिशु" इति ख्याततरुमूलस्वरससंयुतम् । श्लेष्मातकफलं बहुवारफलम् । मुनिपत्रादीनां स्वरसं त्रिफलाकोकिलाक्षयोश्चूर्णं सूतञ्चैकीकृत्य मर्दयित्वा जलूकां कुर्य्यात् ॥ ९८—१०० ॥

अथ जलूकाबन्धान्तरम्।—

त्रिफला-भृङ्ग-महौषध-मधु-सर्पिश्छागदुग्ध-गोमूत्रे।
नागं सप्तनिषिक्तं समरसजारितं जलूका स्यात्॥ १०१॥

अथ प्रकारान्तरम्।—

भानुस्वरदिनसङ्ख्याप्रमाणसूतं गृहीतदीनारम्।
अङ्कोल-राजवृक्ष-कुमारीरसशोधनं कुर्य्यात्॥ १०२॥
शशिरेखा-वरवर्णी-सकोकिलाक्षापामार्ग-कनकानाम्।
चूर्णैः सहैकविंशतिदिनानि सम्मर्दयेत् सम्यक्॥ १०३॥
निशायाः काञ्जिकं यूषं दत्त्वा योनौ प्रवेशयेत्।
बालमध्यमवृद्धासु योज्या विज्ञाय तत् क्रमात्॥
नीरसानामपि नृणां योषा स्यात् सङ्गमोत्सुका॥ १०४॥

---

जलूकान्तरमाह, त्रिफलेति।—त्रिफलाक्काथादौ पृथक् पृथक् सप्तवारं वह्नि-सन्तप्तं सीसकं निषिच्य समरसेन सह जारितं कृत्वा पूर्ववत् जलूकां कुर्य्यात्॥१०१॥

प्रकारान्तरमाह, भान्विति।—भानुः द्वादश, स्वरः सप्त, दिनम् एकः, एतत्सङ्ख्या-प्रमाणसूतं द्वादशादित्रयं मिलित्वा विंशतिसङ्ख्याप्रमाणरसं, विंशतिपलप्रमाणरस-मित्यर्थः, रससंस्कारकर्मणि सर्वत्रैव पलाङ्केन मानविधानदर्शनात् अत्रापि पलमानेनैव ग्राह्यः। गृहीतदीनारं कवलितकर्षद्वयसुवर्णम्। राजवृक्षः आरग्वधः। कुमारी गृहकन्या। शशिरेखा सोमराजी गुडूची वा। वरवर्णी गोरोचना हरिद्रा वा। कनकं धुस्तूरः। निशायाः हरिद्रायाः काञ्जिकं यूषं काञ्जिकेन सह कृतं यूष-मित्यर्थः, स च यूषः मुद्गादिशमीधान्येन सह कार्य्यः, यूषयोनित्वात् मुद्गादीनाम्; यद्वा—निशायाः स्वरसं, काञ्जिकं तथा यूषं मुद्गादियूषम्। अयमर्थः,—ग्रासीकृतचतु-स्तोलकमितस्वर्णं विंशतिपलमानं सूतम् अङ्कोलादीनां स्वरसेन सम्मर्द्य शोधनं कुर्य्यात्, ततः तत्र शशिरेखादीनां चूर्णं युक्त्या किञ्चित् किञ्चित् दत्त्वा निशाकाञ्जिक-यूषेण निशास्वरसादिभिः वा एकविंशतिदिनानि मर्दयित्वा च प्रयुञ्जीत। बालेति।—अत्रापि पूर्ववत् बालाद्यवस्थाभेदेन अष्ट-दश-द्वादशाङ्गुलमाना योज्या इति॥ १०२—१०४॥

प्रकारान्तरम् ।—

रसभागचतुष्कञ्च वङ्गभागञ्च पञ्चमम् ।
सुरसारससंयुक्तं टङ्कणेन समन्वितम् ॥ १०५ ॥
त्रिदिनं मर्दयित्वा च गोलकञ्च रसोद्भवम् ।
लिङ्गाग्रे योनिनिक्षिप्तं यावदायुर्वशङ्करम् ॥ १०६ ॥

प्रकारान्तरम् ।—

कर्पूर-शूरण-सुभृङ्ग-सुमेघनादै-
र्नागं निषिच्य तु मिथो वलयेद्रसेन ।
लिङ्गस्थितेन वलयेन नितम्बिनीनां
स्वामी भवत्यनुदिनं स तु जीवहेतुः ॥ १०७ ॥

अथ योनिविद्रावणम् ।—

टङ्कणपिप्पलिकामा-शूरणकर्पूरमातुलुङ्गरसैः ।
कृत्वा स्वाङ्गुलिलेपं योनिं विद्रावयेत् स्त्रीणाम् ॥ १०८ ॥

---

प्रकारान्तरमाह, रसेति ।—पञ्चमं चतुर्थभागापेक्षया पञ्चमो भागः, तेन रसस्य भागचतुष्टयं वङ्गस्य चैको भाग इत्यर्थः । सुरसा तुलसी । टङ्कणस्य च वङ्गभागसमत्वं बोध्यम्; तदाधिक्यस्य गोलककरणानुपयोगित्वात् । त्रिदिनं मर्दनञ्च सुरसारसेनैव कार्य्यम् । गोलकं वलयमित्यर्थः ॥ १०५।१०६ ॥

अन्यविधमाह, कर्पूरेति ।—सुभृङ्गं कीटादिभिरजग्धः नातिबालो नातिवृद्धः भृङ्गराज इत्यर्थः । सुमेघनादः प्रशस्ततण्डुलीयशाकम् । अत्र शूरणादीनां रसो ग्राह्यः, एवञ्च कर्पूरोदकेन तथा शूरणादीनां पृथक् पृथक् रसेन नागं प्रतप्तद्रवीभूतसीसकं निषिच्य सप्तधा निषेचयित्वा रसेन सह मिथः अन्योऽन्यं मिश्रयित्वा वलयेत् वलयं कुर्य्यादित्यर्थः ॥ १०७ ॥

योनिद्रावणमाह, टङ्कणेति ।—कामा काकमाची, काकमाचीत्यर्थः, "नामैकदेशेनापि सम्पूर्णनामग्रहणम्" इति न्यायात्, यथा रोहिणीत्युक्ते कटुकारोहिणी आयाति तथा । "कामा" इत्यत्र "कामी" इति पाठे—ऋषभक इत्यर्थः; टङ्कणादीनां प्रत्येकं समभागं गृहीत्वा सम्यक्पेषणोपयोगिना मातुलुङ्गरसेन पिष्ट्वा तेन कल्केन स्वाङ्गुलिलेपः कार्य्य इति बोध्यम् ॥ १०८ ॥

अथ मदनवलयम्।—

अग्न्यावर्त्तितनागे द्विगुणं सूतं निक्षिपेत्ततो द्विगुणम्।
मुनि-कनक-नाग-सर्पैर्दन्त्याऽथ सिच्याच्च तन्मध्यम्॥ १०९॥
तक्रेण मर्दयित्वा गणेन मदनवलयं कृत्वा।
रतिसमये वनितानां रतिगर्वविनाशनं कुरुते॥११०॥

प्रकारान्तरम्।—

व्याघ्रीबृहतीफलरससूरण-कन्दञ्च चणकपत्राम्लम्।
कपिकच्छुवज्रवल्ली-पिप्पलि-कामाम्लिकाचूर्णम्॥ १११॥
अग्न्यावर्त्तितनागं नववारं मर्दयेद्धिमैर्द्रव्यैः।
स्मरवलयं कृत्वैतद्वनितानां द्रावणं कुरुते॥ ११२॥

अथ सूतमारणम्।—

पलाशबीजं रक्तञ्च जम्बीराम्लेन सूतकम्।
सजीवं मर्दितं यन्त्रे पाचितं म्रियते ध्रुवम्॥११३॥

मदनवलयमाह, अग्न्यावर्त्तितेति।—मुनिः वकवृक्षः। कनकं धुस्तूरः। नागः नागवल्ली। सर्पः सर्पाक्षी "पानाशिउलि" इति भाषा। दन्ती स्वनामप्रसिद्धा। तक्रेण गणेन तक्रवर्गेण, स च मथितोदश्विच्छाच्छिकाघोलभेदाच्चतुर्विधो बोध्यः। "तक्रेण" इत्यत्र "तिक्तेन" इति तथा "तीक्ष्णेन" इति च पाठान्तरम्। अग्निसन्तापेन द्रवीभूते सीसके द्विगुणं पारदं प्रक्षिप्य मुन्यादीनां रसे सरसं तं निक्षिपेत्, ततः उद्धृत्य तक्रवर्गेण सम्मर्द्य च वलयं कुर्य्यात्॥ १०९।११०॥

प्रकारान्तरमाह, व्याघ्रीति।—व्याघ्री कण्टकारिका। चणकपत्राम्लं चणकाम्लं, "छोलार शाक" इति भाषा। कपिकच्छुः शूकशिम्बी, "आलकुशी" इति भाषा। वज्रवल्ली "हाड़योड़ा" इति भाषा। कामा काकमाचीत्यर्थः; "कामा" इत्यत्र "काम" इति पाठे—कामलवणम् इति बोध्यम्। अम्लिका तिन्तिडी। द्रवीभूतं सीसकं कपिकच्छ्वादीनां चूर्णञ्च व्याघ्रीबृहतीफलरसादिभिः सम्मर्द्य हिमवीर्य्यैः गुडूच्या-मलकादीनां रसैः नवधा मर्दयित्वा वलयः कार्य्यः॥ १११।११२॥

रसमारणमाह, पलाशबीजमिति।—रक्तं कुङ्कुमम्। सजीवम् अष्टवर्गोक्त-जीवकाद्युक्तस्वल्पविशेषसहितम्। यन्त्रे अन्धमूषादौ भस्मयन्त्रे वा। पलाशबीजादि-द्रव्यवर्गेण सह जम्बीराम्लेन मर्दितं पारदं पुटे दत्त्वा पाकात् भस्माग्नौ वा भ्रमणात् भस्मीभवति॥ ११३॥

प्रकारान्तरम् ।—

खरमञ्जरिबीजान्वितपुष्करबीजैः सुचूर्णितैः कल्कम् ।
कृत्वा सूतं पुटयेद्दृढमूषायां भवेद्भस्म ॥ ११४ ॥

प्रकारान्तरम् ।—

काकोडुम्बरिकाया दुग्धेन सुभावितो हिङ्गुः ।
मर्दनपुटेन विधिना सूतं भस्मीकरोत्येव ॥ ११५ ॥

प्रकारान्तरम् ।—

देवदालीं हरिक्रान्तामारनालेन पेषयेत् ।
तद्द्रवैः सप्तधा सूतं कुर्य्यान्मर्दितमूर्च्छितम् ॥११६॥
तत् सूतं खर्परे दद्याद्दत्त्वा दत्त्वा तु तद्द्रवम् ।
चुल्ल्योपरि पचेच्चाह्नं भस्म स्याल्लवणोपमम् ॥११७॥

प्रकारान्तरम् ।—

अपामार्गस्य बीजानि तथैरण्डस्य चूर्णयेत् ।
तच्चूर्णं पारदे देयं मूषायामधरोत्तरम् ॥
रुद्ध्वा लघुपुटैः पश्चाच्चतुर्भिर्भस्मतां नयेत् ॥ ११८ ॥

---

प्रक्रियान्तरमाह, खरमञ्जरीति ।—खरमञ्जरीबीजम् अपामार्गबीजम् । पुष्करबीजं पद्मबीजम् । पद्मापामार्गबीजचूर्णेन सह कल्कीकृतं पारदं दृढमूषायां रुद्ध्वा पुटयेत्, तेन भस्मीभवति ॥ ११४ ॥

साधनान्तरमाह, काकोडुम्बरिकाया इति ।—काकोडुम्बरिका कीठोडुम्बरः "डुमुर" इति भाषा । हिङ्गुम् उडुम्बरक्षीरेण सप्तधा भावयेत्, ततः तेन हिङ्गुना सह यथाविधि मर्दनपुटनाभ्यां सूतो भस्मीभवति ॥ ११५ ॥

प्रकारान्तरमाह, देवदालीमिति ।—देवदाली हस्तिघोषकः । हरिकान्ता विष्णुक्रान्ता, नीलपुष्पापराजिता इति यावत् । एतद्द्वयम् आरनालेन सह पेषयेत्, ततः तद्द्रवीभूताभ्यां ताभ्यां सूतस्य सप्तवारं मर्दनमूर्च्छनादिकं कृत्वा खर्परोपरि चुल्ल्यां तत् सूतं संस्थाप्य च तद्द्रवं तत्र पुनः पुनर्दत्त्वा दर्व्या सञ्चाल्य च दिनं यावत् पचेत्, एवं लवणोपमं भस्म जायते ॥ ११६।११७ ॥

अन्यविधमाह, अपामार्गस्येति ।—अधरोत्तरम् उपर्य्यधः । चतुर्भिः इत्यस्य लघुपुटैरित्यनेनान्वयः ॥ ११८ ॥

प्रकारान्तरम्।—

कटुतुम्ब्युद्भवे कन्दे गर्भे नारीपयःप्लुते।
सप्तधा म्रियते सूतः स्वेदितो गोमयाग्निना॥ ११९॥

प्रकारान्तरम्।—

अङ्कोलस्य शिफावारि-पिष्टं खल्ले विमर्दयेत्।
सूतं गन्धकसन्तुल्यं दिनान्ते तं निरोधयेत्॥
पुटयेद्भूधरे यन्त्रे दिनान्ते स मृतो भवेत्॥१२०॥

अन्यविधम्।—

वटक्षीरेण सूताभ्रौ मर्दयेत् प्रहरत्रयम्।
पाचयेत्तेन काष्ठेन भस्मीभवति तद्रसः॥ १२१॥

अथ रसभस्मसेवनविधिः।—

अथाऽऽतुरो रसाचार्य्यं साक्षाद्देवं महेश्वरम्।
साधितञ्च रसं शृङ्ग-दन्तवैणवादिधारितम्॥ १२२॥
अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि।
पर्णखण्डे धृतं सूतं जग्ध्वा स्यादनुपानतः॥ १२३॥

अथ रससेवने पथ्यविधिः।—

घृतसैन्धवधान्याक-जीरकार्द्रकसंस्कृतम्।
तण्डुलीयकधान्याक-पटोलालम्बुषादिकम्॥१२४॥

---

मतान्तरमाह, कटुतुम्ब्युद्भवे इति।—कटुतुम्बी तिक्तालाबुः, कटुतुम्बी उद्भवति यस्मात् तादृशे कन्दे मूले, गर्भे मध्ये कटुतुम्बीमूलकल्कमध्ये इत्यर्थः॥ ११९॥

विधानान्तरमाह, अङ्कोलस्येति।—अङ्कोलः "धल आँकोड" इति प्रसिद्धः। आदौ खल्ले अङ्कोठमूलरसेन तुल्यगन्धकं पारदं दिनं यावत् विमर्दयेत्, ततो मूषायां निरुध्य चतुर्यामं भूधरे पचेत्॥ १२०॥

अपरमाह, वटक्षीरेणेति।—तेन काष्ठेन वटकाष्ठेन॥ १२१॥

मृतरसस्य भक्षणविधिमाह, अथेति।—रसाचार्य्यं पारदभस्मकर्त्तारं वैद्यम्। पर्णखण्डे धृतं सूतमित्यादि।—भस्मरसं पर्णखण्डमध्ये संस्थाप्य यथाव्याध्यनुपानयोगतः भक्षयित्वा वक्ष्यमाणपथ्यसेवी स्यात्॥ १२२।१२३॥

गोधूमजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि।
हंसोदकं मुद्गरसः पथ्यवर्गः समासतः॥ १२५॥

अथ रससेवने अपथ्यानि।—

बृहतीबिल्वकुष्माण्डं वेत्राग्रं कारवेल्लकम्।
माषं मसूरं निष्पावं कुलित्थं सर्षपं तिलम्॥१२६॥
लङ्घनोद्वर्त्तनस्नान-ताम्रचूड़सुराऽऽसवान्।
आनूपमांसं धान्याम्लं भोजनं कदलीदले।
कांस्ये च गुरु विष्टम्भि तीक्ष्णोष्णञ्च भृशं त्यजेत्॥१२७॥

अथ देवीशास्त्रोक्त-ककारादिगणः।—

कर्कटारीफलकाञ्जिकञ्च कलमस्तैलं तथा राजिका
निम्बूकं कतकं कलिङ्गकफलं कुष्माण्डकं कर्कटी।
कारीकुक्कुटकारवेल्लकफलं कर्कोटिकायाः फलं
वृन्ताकञ्च कपित्थकं खलु गणः प्रोक्तः ककारादिकः॥१२८॥
देवीशास्त्रोदितः सोऽयं ककारादिगणो मतः।
शास्त्रान्तरविनिर्दिष्टः कथ्यतेऽन्यप्रकारतः॥१२९॥

---

पथ्यवर्गमाह, घृतेति।—घृतादिभिः संस्कृतं तण्डुलीयादिकं पथ्यं सेवेत। अत्र अलम्बुषा मुण्डिरी। हंसोदकं "दिवा सूर्य्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्। कालेन पक्वममलमगस्त्येनाविषीकृतम्॥ हंसोदकमिति ख्यातं शारदं विमलं शुचि॥" इत्युक्तलक्षणम्॥ १२४।१२५॥

रसोपयोगे वर्जनीयान्याह, बृहतीति।—कारवेल्लकं "करला उच्छे" इति ख्यातम्। निष्पावं शिम्बि। लङ्घनम् उपवासः। उद्वर्त्तनं चूर्णादिना गात्रघर्षणम्। ताम्रचूडः कुक्कुटः। कदलीपत्रे कांस्यपात्रे च भोजनं तथा गुर्वन्नादिकञ्च त्यजेत्॥ १२६।१२७॥

रसोपयोगे कुष्माण्डकारवेल्लादिकपकारादिद्रव्यवर्जनप्रसङ्गेन देवीशास्त्रोक्तं ककारादिगणमाह, कर्कटारीति।—कर्कटारीफलं कर्कटकारीफलम्। कलमः शालिविशेषः, "कलमाधान" इति प्रसिद्धः; "कलमः" इत्यत्र "कमठः" इति पाठे कूर्मः इत्यर्थः। तैलं कटुतैलं, वक्ष्यमाणककारादिगणे कटुतैलग्रहणात्।

अथ श्रीकृष्णदेवोक्त-ककारादिगणः।—

कङ्गुः कन्दुककोलकुक्कुटकल-क्रोड़ाः कुलत्थास्तथा
कण्टारी कटुतैलकृष्णगलकः कूर्मः कलायः कणा।
कर्कारुश्च कठिल्लकश्च कतकं कर्कोटकं कर्कटी
काली काञ्जिकमेष कादिकगणः श्रीकृष्णदेवोदितः ॥१३०॥

अथ ककारादिनिषेधस्यापवादः।—

यस्मिन् रसे च कण्ठोक्त्या ककारादिर्निषेधितः।
तत्र तत्र निषेध्यस्तु तदौचित्यमतोऽन्यतः ॥ १३१ ॥

अथ रसव्यापदि प्रतीकारः।—

उद्गारे सति दध्यन्नं कृष्णमीनं सजीरकम्।
अभ्यङ्गमनिलक्षोभे तैलैर्नारायणादिभिः ॥ १३२ ॥

राजिका रक्तसर्षपः। कतकं जलप्रसादनफलं, "निर्मली" इति प्रसिद्धम्। कलिङ्गकफलम् इन्द्रयवः तरम्बुजो वा। कर्कटी "काँकुड़" इति भाषा। कारी कण्टकारीभेदः; "कारी" इत्यत्र "कीरी" इति पाठे—शुकी, शुकजातीया स्त्रीत्यर्थः, "कैकी" इति पाठे—मयूर इत्यर्थः। कर्कोटिकायाः फलं "काँकरोल" इति भाषा। तैलराजिकानिष्पूकतलाकानां ककारादिकत्वाभावेऽपि वर्जनीयत्वात् वर्जनीयद्रव्यप्रसङ्गेन ककारादिषु अन्तर्भावो बोध्यः ॥ १२८।१२९ ॥

श्रीकृष्णदेवोक्तं ककारादिगणमाह, कङ्गुरिति।—कङ्गुः प्रसातिका "काँउन" इति प्रसिद्धः। कन्दुकं पूगफलम्। कोलं वदरफलम्। कलः कलकण्ठः, हंसपारावतादिरित्यर्थः। क्रोडः वराहः। कृष्णगलकः कृष्णवर्णगडकमत्स्यः, "गडुइ माछ" इति भाषा, कुकुभपक्षी वा, "कुको पक्षी" इति भाषा। कलायः वर्त्तुलकलायः, "मटर" इति प्रसिद्धः। कणा पिप्पली, "कणा" इत्यत्र "कणी" इति पाठे—अश्वकण्ठलता। कर्कारुः कुष्माण्डभेदः "कखारु" इति उत्कले प्रसिद्धः। कठिल्लकः कारवेल्लकः। काली असितवेतं कृष्णजीरको वा। श्रीकृष्णदेवनामा कश्चित् भिषक् ॥१३०॥

ककारादिनिषेधस्यापवादविषयमाह, यस्मिन्निति।—कण्ठोक्त्या कण्ठरवेण तेषां नामग्रहणेन। अन्यतः अन्यस्मिन् रसे। औचित्यम् उचितत्वात् न निषेध्यमित्यर्थः ॥ १३१ ॥

रसोपयोगे मात्रादिदोषात् कस्याश्चित् व्यापत्तौ सत्यां तत्प्रतीकारमाह, उद्गारे

अरतौ शीततोयेन मस्तकोपरि सेचनम् ।
तृष्णायां नारिकेलाम्बु मुद्गयूषं सशर्करम् ॥ १३३॥

अथ रससेवने उपचारविधिः ।—

द्राक्षादाडिमखर्जूर-कदलीनां फलं भजेत् ।
रसवीर्य्यविवृद्ध्यर्थं दधिक्षीरेक्षुशर्कराः ॥
शीतोपचारमन्यच्च—" ॥१३४॥

अथ रसत्यागे उपचारविधिः ।—

"—रसत्यागविधौ पुनः ।
भक्षयेद्बृहतीबिल्वं सकृत् साधारणो विधिः ॥ १३५ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
रसशोधनबन्धनभस्मजलकादिनिरूपणं नामैकादशोऽध्यायः ॥११॥

---

इति ।—कृष्णमीनं कृष्णवर्णमत्स्यविशेषं शृङ्गीमद्गुरादिकं, तच्च सजीरकं जीरक-संस्कृतं कृत्वा दद्यादिति शेषः । अन्यत् स्पष्टम ॥ १३२।१३३ ॥

उपयुक्तरसस्य वीर्य्योत्कर्षार्थं क्रियाविशेषमाह, द्राक्षेति ।—दध्यादिकं भक्षयेत् उक्तातिरिक्तं शीतोपचारञ्च कुर्य्यात् ॥ १३४ ॥

रससेवनप्रयोजने सिद्धे त्यागकालिककर्त्तव्यमाह, रसत्यागविधाविति ।—सकृत् एकवारं बृहतीं बिल्वञ्च भक्षयेत् ; एतेन रसोपयोगफलं स्थिरं भवेत्, त्यागजन्या काचित् व्यापत्तिः कालान्तरे फलापगमो वा न जायते इति बोध्यम् । साधारणो विधिः अतःपरं यथेष्टाहाराचारः करणीयः ; यद्वा—साधारणविधिः रससेवायाम् एषः सामान्यनियमः ॥ १३५ ॥

इति रसरत्नसमुच्चयबोधिन्याम् एकादशोऽध्यायः ॥ ११ ॥

# अथ द्वादशोऽध्यायः ।

---

## अथ ज्वरचिकित्सनम् ।—

अथ चिकित्सनीयरोगाणां यथाक्रमं नामानि ।—

ज्वरस्य रक्तपित्तस्य कासस्य श्वासहिक्कयोः ।
वैस्वर्य्यस्य क्षयस्यापि तथाऽरोचप्रसेकयोः ॥ १ ॥
छर्द्दिहृद्रोगयोश्चैव तृष्णामद्योद्भवाऽर्शसाम् ।
उदावर्त्तातिसाराणां ग्रहण्यर्त्तिप्रवाहिणोः ॥ २ ॥
विसूच्या वह्निमान्द्यस्य मूत्रकृच्छ्राश्मरीरुजाम् ।
मेहस्य सोमरोगस्य पिड़कानाञ्च विद्रधेः ॥ ३ ॥
वृद्धिगुल्मादिरोगाणां शूलानामुदरस्य च ।
पाण्डुशोफविसर्पाणां कुष्ठचित्रनभस्वताम् ॥ ४ ॥
वातास्रस्याऽऽवृतानाञ्च वन्ध्यानां गर्भिणीरुजाम् ।
सूतिकाबालरोगाणामुन्मादेऽपस्मृतावपि ॥ ५ ॥
नेत्ररोगे कर्णरोगे नासारोगाऽऽस्यरोगयोः ।
शिरःसञ्जातरोगेषु व्रणे भग्ने भगन्दरे ॥ ६ ॥

---

सर्वेष्वेव रोगेषु उपयोगितया रसस्य प्राधान्यात् प्रथमं रसाध्यायं विरच्य इदानीं सर्वरोगेषु प्रथमोत्पन्नत्वात् तथा जन्ममरणयोरवश्यम्भावित्वेन सर्वरोगेषु अव्यभिचारे तथा वर्त्तमानत्वेन च प्राधान्याच्च आदौ ज्वरचिकित्सितं वक्तुं द्वादशाध्यायमारभते, तत्र च प्रस्तुतग्रन्थोक्तरोगाणां नामनिर्देशानन्तरं यथाक्रमं चिकित्सितं वक्तुं प्रतिजानीते, ज्वरस्येति ।—हिध्मा हिक्का । प्रसेकः प्रतिश्यायः । मद्योद्भवः मदात्ययः । प्रवाहिणः प्रवाहिकायाः । पिड़कानां प्रमेहपिड़कानां । कुष्ठेति ।—चित्रः कुष्ठविशेषः श्वेतकुष्ठं वा, नभस्वान् वायुः तेषां, कुष्ठादिरोगाणामित्यर्थः ; यद्वा—चित्रनभस्वता विविधवातरोगाणाम् ; "चित्रनभस्वताम्" इत्यत्र "श्वित्रनभस्वताम" इति पाठान्तरं समीचीनम् । आवृतानामित्यत्र वातानामिति शेषो बोध्यः, दोषाच्छन्नवायूनामिति यावत् । भग्ने भग्नरोगे । गुह्यरोगे उपदंशादिगोपनीयरोगे

ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे विषेषु च।
जरायास्त्वनपत्यानां बीजपोषणहेतवे॥ ७॥
परिपाट्याऽनया सर्वं रोगाणां हि चिकित्सितम्।
रसलोहविषैरत्र योगैर्वक्ष्ये यथाऽऽगमम्॥ ८॥

अथ वातज्वरलक्षणम्।—

रोमाञ्चकम्पौ वदने मधुत्वमुज्जृम्भणं मस्तकतोददाहौ।
वातज्वरस्योक्तमिदं हि लक्ष्म भुक्तोत्तरं स्याद्यदि शश्वदेव॥९॥

गुदभ्रंशादिरोगे वा। जरायाः वार्द्धक्यस्य। अनपत्यानां पुत्रहीनानां बीजपोषणहेतवे शुक्रवृद्ध्यर्थं, चिकित्सितम् इति योज्यम्; तत्र जरायाः चिकित्सितं रसायनौषधं, "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इत्युक्तेः, तथा अनपत्यानां बीजपोषणार्थं चिकित्सितं वाजीकरणौषधमिति ज्ञेयम्। परिपाट्या पर्य्यायक्रमेण, उद्देशानुसारिपौर्वापर्य्यानुक्रमेणेत्यर्थः। रसलोहविषैः रसाश्च लोहाश्च विषाणि च यत्र तैः तादृशैः योगैः रसादिनिर्मितभेषजैः। यथाऽऽगमं यथाशास्त्रम्। क्वचित्—"योगैर्वक्ष्ये यथाऽऽगमम्" इत्यनन्तरं "ज्वरितो हितमश्नीयात् यद्यप्यस्यारुचिर्भवेत्। अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा॥ यावन्न सूतं न शुद्धं न च मृतमथ नो मूर्च्छितं गन्धबद्धं नो वज्रं मारितं वा न च गगनवधो नोपमृताश्च शुद्धाः। स्वर्णाद्यं सर्वलोहं विषमपि न मृतं तैलपाकोऽनभिज्ञः तावद्वैद्यः क्व सिद्धो भवति वसुभुजां मण्डले श्लाघ्ययोग्यः॥ अथ ज्वराणां लक्षणानि प्रतीकाराश्चोच्यन्ते" इत्यधिकः पाठो दृश्यते॥ १—८॥

अथ उद्देशानुसारेण ज्वरचिकित्सिते वक्तव्ये चिकित्सायां वातादिभेदज्ञानस्य विशिष्टोपयोगित्वात् वातादिलक्षणं विवक्षुराचार्य्यः वातविकाराणामसङ्ख्येयत्वात् आशुकारित्वाच्च दोषेषु वातस्यैव प्राधान्यात् आदौ वातज्वरलक्षणमाह, रोमाञ्चेति।—रोमाञ्चः रोमहर्षः। वदने मधुत्वं माधुर्य्यम्; "वदने मधुत्वम्" इति पाठस्तु मुद्राकरप्रमादज इति मन्ये, यतः वातः कषायरसः, तज्जविकारे च मुखस्य कषायरसताया एव सर्वत्रैव चरकादिषु समुल्लेखः दृश्यते, अतः अत्र "अमधुत्वम्" इत्येव पाठः साधुः; अमधुत्वं माधुर्य्याभावः, मुखस्य विरसता इत्यर्थः, तथा च चरकनिदानस्थाने वातज्वरलक्षणे,—"कषायास्यत्वमास्यवैरस्यं वा" इति। सुश्रुतेऽपि उत्तरतन्त्रे ज्वरप्रतिषेधे "शिरोहृद्गात्ररुग्वक्त्रवैरस्यम्" इति। लक्ष्म चिह्नं, रूपमित्यर्थः।

अथ पित्तज्वरलक्षणम्।—

विरेकशोषास्यकटुत्वतीव्र-तापप्रलापभ्रममूर्च्छनानि।
एतानि पित्तज्वरलक्षणानि वमिः सतृष्णाङ्गविदाहिता च॥१०॥

अथ कफज्वरलक्षणम्।—

कासश्वासौ मुखे जाड्यं माधुर्यं बहुनिद्रता।
प्रस्वेदः स्वल्पदाहश्च श्लेष्मजज्वरलक्षणम्॥ ११॥

भुक्तोत्तरमिति।—यदि अस्य नित्यं भुक्तोत्तरं भुक्तस्य भोजनस्य उत्तरम् अनन्तरमित्यर्थः, भोजनपरिणामानन्तरमिति यावत्; तस्यैव वातप्रकोपकालत्वेन उक्तत्वात्, तथा च—"वायुर्वार्द्धिपरागमे परिणते चान्नेऽपराह्णेऽपि च" इति; अन्ने परिणते जीर्णे इत्यर्थः। यदि स्यात्, कोप इति शेषः॥ ९॥

पित्तज्वरलक्षणमाह, विरेकेति।—विरेकः विरेचनं, द्रवमलनिःसरणम् इति यावत्। शोषः, मुखस्येति शेषः। आस्यकटुत्वं मुखस्य तिक्तता, अथवा पित्तस्य कटुत्वात् कटुरसत्वमपि भवितुमर्हति मुखस्य; तथा च "कटुः स्यात् कटुतिक्तयोः" इति मेदिनी। तीव्रसन्तापः इत्यत्र देहस्य इति शेषो बोध्यः। प्रलापः अनर्थकवाक्यप्रयोगः। भ्रमः स्वदेहभ्रमणज्ञानम्, अथवा—भ्रमः पीतः शङ्खः इत्यादिवत् भ्रमज्ञानम्; ननु अशीतिवातविकारमध्ये पठितस्य भ्रमस्य पित्तविकारमध्ये ग्रहणं कथं सङ्गच्छते इति चेत् उच्यते—तस्य वातलिङ्गत्वेऽपि "रजःपित्तानिलाद्भ्रमः" इति उक्तत्वदर्शनात् पित्तस्यापि तत्र कर्त्तृत्वोपलब्धेः सपित्तवातस्यैव तदुत्पादकत्वं बोध्यम् इति। अङ्गविदाहिता अङ्गेषु वि विशेषेण दाहः॥ १०॥

कफज्वरलक्षणमाह, कासेति।—जाड्यं स्तब्धता, देहस्य कठिनता इत्यर्थः। माधुर्यमित्यस्य मुखे इत्यनेनान्वयो बोध्यः; अथवा—जाड्यमपि मुखे एव, कफस्य अरुचिकारित्वात् भोजनविषये अक्षमता इत्यर्थः। प्रस्वेदः अत्यर्थं स्वेददर्शनं, किन्तु ज्वरे प्रायशः स्वेदावरोधस्य एव अनुशासनदर्शनात् प्रस्वेद इत्यत्र अस्वेद इति पाठः युक्ततया प्रतिभाति; अथवा प्रस्वेदः प्रगतः स्वेदः तेन स्वेदाभाव इत्यर्थः, प्रशब्दस्य प्रगतार्थकत्वम् अन्यत्रापि दृश्यते, यथा चक्रपाणिकृतसङ्ग्रहस्य अतीसारचिकित्सितव्याख्याने शिवदासः,—"कार्य्यश्चानशनस्यान्ते प्रद्रवं लघुभोजनम्" इत्यत्र "प्रद्रवं प्रगतद्रवम्"; विस्तरस्तु तत्रैव अनुसन्धेयः। स्वल्पदाहश्चेति।—"गौरवं शीतमुत्क्लेदः" इत्यादिसौश्रुतकफज्वरलक्षणे शीतदर्शनात् कफजे स्वल्पदाहः इति लक्षणं यद्यपि

अथ द्वन्द्वसन्निपातज्वराणामतिदेशिकलक्षणम्।—

मिश्रितं लक्षणं यत्तु द्वयोस्त्रिषु भवेच्च तत्॥ १२॥

अथ रसायनानि। *—

अथ त्रैलोक्यसुन्दररसः।—

विमर्दिताभ्यां रसगन्धकाभ्यां
नीरेण कुर्य्यादिह गोलकं तम्।
भाण्डे नवीने विनिवेश्य पश्चात्
तद्गोलकस्योपरि ताम्रपात्रम्॥ १३॥
भाण्डं मुहूर्त्तं विनिरुध्य धीमान्द्दीपयेद्दीप्तकृशानुनाऽस्य।
अधस्ततः सिध्यति पर्पटीयं नवज्वरारण्यकृशानुमेघः॥१४॥

विरुद्धतया प्रतिभाति तथाऽपि सर्वस्मिन्नेव ज्वरे पित्तस्याव्यभिचरितत्वात् कफजेऽपि स्वल्पदाहः सम्भवत्येव इति न कश्चिद्विरोधः॥ ११॥

द्वन्द्वजसन्निपातजानां लक्षणमतिदेशेनाह, मिश्रितमिति।—यत लक्षणं मिश्रितं वातादिदोषत्रयाणां पृथक् पृथक् यल्लक्षणमुक्तं तत् लक्षणं संसृष्टं, द्वयोः द्वन्द्वजेषु, वातपित्त-वातश्लेष्म-पित्तश्लेष्मजेषु इत्यर्थः, त्रिषु त्रिदोषजेषु, सन्निपातेषु इत्यर्थः, भवेत्; द्वन्द्वजेषु द्वयोर्द्वयोर्दोषयोः पृथक् पृथक् यल्लक्षणमुक्तं तदेव मिलितं भवेत् एवं त्रिदोषजेऽपि त्रयाणां दोषाणां पृथक् पृथक् यल्लक्षणमुक्तं तन्मिलितं भवेदिति॥१२॥

त्रैलोक्यसुन्दररसे—नवज्वरारण्यकृशानुमेघः नवज्वर एव आरण्यकृशानुः दावानलः तस्य मेघः लक्षणया मेघनिसृतमिव, मेघस्य अनलप्रशमनशक्तेरदृष्टत्वात्, मेघनिसृतं वारि यथा अनलं निर्वापयति, अयं त्रैलोक्यसुन्दरोऽपि

* इदानीम उद्दिष्टानां व्याधीनां प्रशमनं वक्तुं प्रस्तौति, अथ रसायनानीति।—यद्यपि चरकादौ "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इत्यनेन जराव्याधिविनाशनौषधानां रसायनसंज्ञा तथा "कायतन्त्रं रसायनतन्त्रम्" इत्यादिना ज्वरादिचिकित्साधिकारात् रसायनाधिकारस्य पृथक्त्वञ्च परिदृश्यते, तथाऽपि "रसेन्द्रमिव निःशेषं जराव्याधिविनाशनम्" "हन्ती हन्ति जराव्याधिम्" इत्याद्युक्त्या रसघटितानां सर्वेषामेवौषधानां जराव्याधिनाशनसामर्थ्यात् तेष्वपि रसायनसंज्ञा न दोषावहा इति।

विलिप्य पूर्वं रसनाञ्च तालु-देशञ्च सिन्धूद्भवजीरकार्द्रैः ।
वल्लोन्मिताञ्चाऽऽर्द्रकतोयमिश्रामेनां नियोज्य स्थगयेत् पटेन ॥१५॥
घर्मोद्गमो यावदतः परञ्च तक्रौदनं पथ्यमिह प्रयोज्यम ।
कुर्याद्दिनानां त्रितयं यदीत्थं ज्वरस्य शङ्काऽपि तदा भवेत् किम् ?
॥ १६ ॥

अथ त्रैलोक्यडम्बररसः ।—

सूतार्कगन्धचपला-जयपालतिक्ता
पथ्या त्रिवृच्च विषतिन्दुकजान समांशान् ।
सम्भाव्य वज्रिपयसा मधुना त्रिवल्ल-
स्त्रैलोक्यडम्बररसोऽभिनवज्वरघ्नः ॥ १७ ॥

अथ मेघनाद रसः ।—

पादांशकंसाररविः समांश-गन्धो विपक्व स्वकषायपिष्टः ।
रसः क्रमान्माषमितश्चलादि-ज्वरेषु नाम्ना किल मेघनादः ॥१८॥

---

तथा नवज्वरं नाशयतीत्यर्थः । आदौ यथाविधि शुद्धरसगन्धकं कज्जलीकृत्य जलेन सम्मर्द्य च गोलकं कुर्यात, ततः तद्गोलकं नूतनभाण्डे स्थापयित्वा केनचित्ताम्रपात्रेण आच्छाद्य च सन्धिं लिप्त्वा चुल्ल्यपरि संस्थापयेत, अधश्च अग्निं दत्त्वा मुहूर्तं ( दण्डद्वयं ) पचेत्, ततः पर्पटिकाकारो भवेत् । अस्योपयोगकाले च आर्द्रकरसेन सैन्धवजीरकै पिष्ट्वा तेन जिह्वातालू आलिप्य आर्द्रकरसेनैव अस्य रत्तिद्वयं पीत्वा पश्चात् वस्त्रेणात्मान-मवगुण्ठयेत घर्मदर्शनं यावत् ; ततः तक्रौदनं पथ्यं कर्त्तव्यम, एवं दिनत्रयेणैव ज्वरो नश्यति ॥ १३—१६ ॥.

त्रैलोक्यडम्बररसे—अर्कः ताम्रं, चपला पिप्पली, तिक्ता कटुकी, विषतिन्दुक-जाम् कुचीलुबीजानि "कुँचिला" इति ख्यातान् । सम्भाव्य भावयित्वा, भावना च सप्तकृत्वः देया । वज्रिपयसा स्नुहीक्षीरेण । त्रिवल्लः गुञ्जाषट्कपरिमितः ॥ १७ ॥

मेघनादरसे—पादांशकंसाररविः पादांशः रसभागापेक्षया प्रत्येकं चतुर्थभागः, कंसं कांस्यम्, आरं पित्तलं, रविः ताम्रं एव ताहृशः । समांशगन्धः रसेन तुल्यः गन्धकः । विपक्वः पुटे पक्वः । स्वकषायपिष्टः मेघनादस्य स्वरसेन क्वाथेन वा पिष्टः, मेघनादः रक्ततण्डुलीयकः । रसः पारदः । चलादिज्वरेषु वातादिज्वरेषु, "रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः" इत्युक्त्या चलस्य वातधर्मत्वात्

अथ ज्वरगजहरिरसः।—

दरदजलदयुक्तं शुद्धसूतञ्च गन्धं
प्रहरमथ सुपिष्टं वल्लयुग्मञ्च दद्यात्।
ज्वरगजहरिसंज्ञं शृङ्गवेरोदकेन
प्रथमजनितदाही क्षीरभक्तेन भोज्यः॥ १९॥

अथ दीपिकारसः।—

सप्तमांशभागञ्च पारदं गन्धकं कणाम्।
समभागं पृथक्कृत्य मेलयेच्च यथाविधि॥ २०॥
जम्बीरस्य रसे सर्वं मर्दयेच्च दिनत्रयम्।
मेघनादकुमार्य्योश्च रसे चापि दिनत्रयम्॥ २१॥
दिनद्वयमजामूत्रे गवां मूत्रे दिनत्रयम्।
भावयेच्च यथायोग्यं तस्मिन्नेतानि दापयेत्॥ २२॥
सैन्धवं चित्रकं भागं सौवर्च्चलवणं तथा।
तेन सम्मेलनं कृत्वा भावयेच्च पुनः पुनः॥ २३॥

धर्मधर्मिणोश्चाभेदोपचारात चलशब्देनात्र वातो गम्यते; यद्वा—चलादिज्वरेषु विषमज्वरादिषु, "यः स्यादनियतात् कालात् शीतोष्णाभ्यां तथैव च। वेगतश्चापि विषमः ज्वरः स विषमः स्मृतः॥" इति विषमज्वरलक्षणे कालस्यानियतत्व चलत्वं बोध्यम्। यत्तु रसेन्द्रसारसङ्ग्रह-रसेन्द्रचिन्तामण्यादौ "क्षारं कांस्यं मृतं ताम्रं विभिन्नतुल्यञ्च गन्धकम्। रसेन मेघनादस्य पिष्ट्वा बद्ध्वा पुटे पचेत्॥" इत्यादिना मेघनादरस उक्तः स रसयुक्तात् पञ्चाङ्गिन्न एव इति मन्तव्यम्॥ १८॥

ज्वरगजहरिरसे—दरदं हिङ्गुलम्। जलदम् अभ्रं, न मुस्तकं, दरदसूतगन्धसाहचर्य्यानुरोधात्। वल्लयुग्मं चतुर्गुञ्जामितम्। प्रथमेति।—प्रथमं ज्वरादौ जनितः उत्पादितः, दोषैरिति शेषः, यद्वा—जनितः इति स्वार्थे णिच्, तेन जात इत्यर्थः, दाहः स यस्यास्तीति दाहपूर्वज्वरीत्यर्थः। क्षीरभक्तेन सदुग्धान्नेन करणेन भोज्यः भोजनं कारयितव्य इत्यर्थः॥ १९॥

दीपिकारसे—सप्तमांशभागं सोसकभस्मनः भागमेकम्। कणां पिप्पलीम्। तत्र शीसकभागे। यथाविधि यथाक्रमम्। मेघनादः तण्डुलीयकः, कुमारी

अनेन विधिना सम्यक् सिद्धो भवति तद्रसः।
शर्कराघृतसंयुक्तं दद्याद्वल्लत्रयं रसम् ॥ २४ ॥
गोधूमस्यौदनं पथ्यं माषसूपञ्च वास्तुकम्।
धात्रीफलसमायुक्तं सर्वज्वरविनाशनम् ॥
दीपिकारस इत्येष तन्त्रज्ञैः परिकीर्त्तितः ॥ २५ ॥

अथ शीतभञ्जीरसः।—

पारदं रसकं तालं तुत्थं गन्धकटङ्कणम्।
सर्वमेतत् समं शुद्धं कारवल्ल्या द्रवैर्दिनम् ॥ २६ ॥
मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत्।
अङ्गुलार्द्धार्द्धमानेन तं पचेत् सिकताह्वये ॥ २७ ॥
यन्त्रे यावत् स्फुटन्त्येवं व्रीहयस्तस्य पृष्ठतः।
ततः सुशीतलं ग्राह्यं ताम्रपात्रोदराद्भिषक् ॥ २८ ॥
शीतभञ्जी रसो नाम चूर्णयेन्मरिचैः समम्।
माषैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम् ॥
त्रिदिनैर्विषमं तीव्रमेकद्वित्रिचतुर्थकम् ॥ २९ ॥

घृतकुमारिका, अनयोः प्रत्येकस्वरसेन दिनत्रय भाव्यम्। सैन्धवमिति।—सीसकादिकं जम्बीरादीनां रसेन यथाविधि भावयित्वा पश्चात् सैन्धवादिकं मेलयित्वा च पुनः जम्बीरादिभिः यथोक्तविधानेन भावयेत्। गोधूमस्यौदनं गोधूमकृतभक्ष्यम। धात्रीफलसमायुक्तम धामलक्या संस्कृतम् ॥ २०—२५ ॥

शीतभञ्जीरसे—रसकं खर्परम। तालं हरितालम्। लिपेदित्यत्र नुमोऽभावः आर्षस्कान्दसो वा; तेन लिम्पेदित्यर्थः। अङ्गुलार्द्धार्द्धमानेन पादाङ्गुलिप्रमाणोत्सेधवतः इत्यर्थः, कल्केन इत्यनेनान्वयः। सिकताह्वये वालुकामण्डके। पारदादिद्रव्यषट्कं कारवेल्लरसेन दिनमेकं मर्दयेत तावत् यावत पिण्डतां गच्छेत्, ततः तत्कल्केन ताम्रपात्रस्य कस्यचित् अभ्यन्तरदेशं पादाङ्गुलोत्सेधप्रमाणं यथा भवति तथा लिप्त्वा पात्रान्तरेणाच्छाद्य च सन्धिं लिप्त्वा तत्पात्रं वालुकायन्त्रगं पचेत, वालुकोपरि कतिचित व्रीहीन् संस्थापयेच्च; ततः पात्राधस्तावज्ज्वाला देया, यावत् व्रीहयः न स्फुटन्ति, अनन्तरं स्वाङ्गशीतलात् ताम्रपात्रादौषधमाकृष्य चूर्णयेत्;

अथ मृतजीवनरसः।—

कुष्माण्डचूर्णतिलजैः प्रतिशुद्धतालं
गाढं विमर्द्य सुषवीसलिलेन तुल्यम्।
सूतेन हिङ्गुलभुवा सिकताख्ययन्त्रे
गोलं विधाय परिवृत्तकपालमध्ये ॥ ३० ॥

पत्रेण तं दिनपतेरपिधाय रुद्ध्वा
सन्धिं तयोर्गुडसुधाखटिकाशिवाभिः।
वह्नौ पचेन्मृदुनि पार्श्वशिरःस्थशालि-
वैवर्ण्यमात्रमवधिं प्रविधाय धीमान् ॥ ३१ ॥

वल्लं ततः सुरसमिश्रममुष्य दद्यात्
सर्पिः सिता कणया मधु चानुपेयम्।
जेतुं ज्वरान् प्रविषमानिह वान्तिशान्त्यै
मौलौ सुशीतलजलस्य ददीत धाराम् ॥ ३२ ॥

अथाऽऽमयान्तं रसराजमौलि-भूषामणिं तं मृतजीवनाख्यम्।
सुधारसेनेव रसेन येन सञ्जीवनं स्यात् सहसाऽऽतुराणाम् ॥ ३३ ॥

ततः मरिचैः पर्णखण्डेन च सह माषैकमौषधं भक्षयेत्। व्यवहारिकी मात्रा तु गुञ्जाद्वयमिता ॥ २६—२९ ॥

मृतजीवनरसे—कुष्माण्डचूर्णतिलजैः कुष्माण्डसलिलेन चूर्णोदकेन तिलतैलेन च। "प्रतिशुद्ध" इत्यत्र "प्रविशुद्ध" इति पाठस्तु समीचीनः। सुषवीसलिलेन कारवेल्लरसेन। सूतेन हिङ्गुलभुवा हिङ्गुलोत्थपारदेन। परिवृत्तकपालमध्ये गोलाकारमृन्मूषामध्ये। दिनपतेः अर्कस्य। सुधा चूर्णम्। सुरसामिश्रं तुलसीपत्ररससहितम्। मौलौ शिरसि। आमयान्तम् आमयानाम् अन्तो यस्मात् तं रोगान्तकारम्। कुष्माण्डसलिलादिभिः यथाविधि शोधितहरितालं हिङ्गुलोत्थपारदश्च समपरिमितं गृहीत्वा कारवेल्लरसेन गाढं विमर्द्य पिण्डाकारं कुर्यात्. ततः अर्कपत्रेणावेष्ट्य सुदृढमृन्मूषायां संस्थाप्य च गुड-चूर्ण खटिका-हरीतकीचूर्णैर्मर्दितैः सन्धिं निरुन्ध्यात्। ततः वालुकायन्त्रमध्ये मूषां तां संस्थाप्य पूर्ववत् वालुकोपरि शालीन् निधाय मन्दवह्निना तावत् पचेत् यावत् शालयो विवर्णा जायन्ते, ततः स्वाङ्गशीतं तं समुद्धृत्य सुगुप्तं स्थापयेत्।

अथ शीतभञ्जीरसः।—

सूततालशिलासुल्या मर्दयेत् कर्कोटीरसे।
ताम्रपात्रे विनिक्षिप्य तत् कल्कं कज्जलीकृतम् ॥ ३४ ॥
विपचेत् वालुकायन्त्रे यथोक्तविधिना ततः।
दद्यान्मरिचचूर्णेन माषमात्रं भिषग्वरः ॥ ३५ ॥
प्रपिबेदुष्णतोयस्य चुलुकं शीतकज्वरे।
शीतभञ्जी रसः सोऽयं शीतज्वरनिवारणः ॥ ३६ ॥

अथ वृद्धज्वराङ्कुशः।—

रसहिङ्गुलजेपालैर्वृद्धा दन्त्यम्बुमर्दितैः।
दिनार्द्धेन ज्वरं हन्याद्गुञ्जैकं सितया सह ॥ ३७ ॥

अथ महाज्वराङ्कुशः।—

शुद्धं सूतं विषं गन्धं धूर्त्तबीजं त्रिभिः समम्।
चतुर्भिश्च समं व्योषं चूर्णीकृत्य निधापयेत् ॥ ३८ ॥
दन्तभाण्डेऽथवा शार्ङ्गे काष्ठे नैव कदाचन।
वातश्लेष्मज्वरे देयं द्वन्द्वजे वा त्रिदोषजे ॥ ३९ ॥
रसेन शृङ्गवेरस्य जम्बीरस्याथवा पुनः।
गुञ्जाद्वयञ्च जीर्णेऽस्मिन् दधिभक्तं प्रयोजयेत् ॥४०॥

---

गुञ्जाद्वयमितं तत तुलसीरसेन पीत्वा सार्पंराह्निक सर्वमनुरूपमात्रया चालोड्य अनुपानं कुर्य्यात्। औषधसेवनेन चेत् वान्तिर्जायेत तदा सुशीतलजलेन मूर्द्धानमभिषिञ्चेत ॥ ३०—३३ ॥

शीतभञ्जीरसे—शिला मनःशिला। कर्कटी एर्वारुः, "कर्कटी" इत्यत्र "मर्कटी" इति पाठान्तरे—मर्कटी शूकशिम्बी। चुलुकं गण्डूषम् ॥३४—३६॥

वृद्धज्वराङ्कुशे—वृद्धा भागवृद्धा; तेन रसस्य एको भागः हिङ्गुलस्य द्वौ, जेपालस्य च त्रयो भागाः ग्राह्याः। दन्त्यम्बुमर्दितैः दन्तीमूलक्वाथेन पिष्टैः। ग्रन्थान्तरेऽस्य हिङ्गुलेश्वरसंज्ञा ज्ञातव्या ॥ ३७ ॥

महाज्वराङ्कुशे—त्रिभिस्तुल्यं व्योषं सूतादिभिश्चतुर्भिः तुल्यं ग्राह्यम्। दन्तभाण्डे हस्तिदन्तनिर्मितभाजने। शार्ङ्गे माहिषादिशृङ्गमये भाजने। वातश्लेष्मज्वरे वातज्वरे

एकद्वित्रिदिनैर्हन्याज्ज्वरान् दोषक्रमेण तु ।
महाज्वराङ्कुशो नाम रसोऽयं शम्भुनोदितः ॥ ४१ ॥

अथ मृत्युञ्जयः ।—

तालं ताम्ररजो रसश्च गगनं गन्धश्च नेपालकं
दीनारप्रमितं तदर्द्धमुदितं टङ्कं शिला माक्षिकम् ।
दीनारद्वितयं विषस्य शिखिनः पिष्ट्वा रसैः पाचितो
यश्चिन्तामणिवज्ज्वरौघविजयी नाम्ना तु मृत्युञ्जयः ॥४२॥

अथ सर्वज्वरारिः ।—

तालं ताम्रमयोरजश्च चपला-तुल्याभ्रकं कान्तकं
नागं स्याच्च समांशकं सुमृदितं मूलञ्च पौनर्नवम् ।
भृङ्गीकासहरीपुनर्नवमहा-मन्दारपत्रोद्भवैः
कल्कं वालुकयन्त्रपाचितमिदं सर्वज्वरस्यान्तकृत् ॥४३॥

अथ चन्द्रसूर्य्यो नामरसः ।—

तुल्येन तुल्यः शिवजश्च गन्धो जम्बीरनीरेण विमर्दनीयः ।
दिनत्रयं मेलय तेन तुल्यं व्योषं ततः सिध्यति चन्द्रसूर्य्यः ॥४४॥

श्लेष्मज्वरे च, न तु वातश्लेष्मज्वरे, द्वन्द्वजस्य पृथगुपादानात् । अस्मिन् औषधे । एकेति ।—एकदोषजमेकदिनेन, द्विदोषजं दिनद्वयेन, सन्निपातजञ्च दिवसत्रयेण हन्यादित्यर्थः ॥ ३८—४१ ॥

मृत्युञ्जये—ताम्ररजः मारितताम्रचूर्णम् । गगनम् अभ्रम । नेपालकं नैपाली, मनःशिला इत्यर्थः । दीनारप्रमितं शाणमितम् । तदर्द्धं दीनारार्द्धं, माषद्वयमित्यर्थः । टङ्कं टङ्कणम् । शिला शिलाजतु ; "नेपालकम्" इत्यत्र "जैपालकम्" इति पाठे तु—शिलया मनःशिला ग्राह्या । माक्षिकं धातुमाक्षिकम् । शिखिनः चित्रकस्य । पाचितः पुटपक्वः । चिन्तामणिवत् चिन्तामणिरसवत् नारायणवत् वा ॥ ४२ ॥

सर्वज्वरारौ—चपला पिप्पली । कान्तकं कान्तलौहः । नागं सीसकम् । पौनर्नवं मूलं पुनर्नवामूलम् । भृङ्गी विजया । कासहरी कासमर्दः, कण्टकारी वा । पुनर्नवेत्यत्र श्वेतरक्तयोरनयोर्ग्रहणम् । महा गौरवल्कला । मन्दारः पारिभद्रकः ॥ ४३ ॥

चन्द्रसूर्य्यरसे—शिवजः पारदः । तेन तुल्याद्विगुणेन तुल्यं व्योषं मिलितत्रिकटु-

वल्ली विजेतुं विषमावलम्बि दलेन देयो भुजगाख्यवल्ल्याः।
दुग्धं हितं स्यादिह शृङ्गवेर-रसेन शैत्ये ह्युपसेवनीयः ॥४५॥
तक्रं मगधेज्वरशूलयोस्तु द्राक्षाम्बुना पथ्यमनन्तरोक्तम्।
रोधं वरायाः सलिलेन शूलं जम्बीरनीरेण वराजलेन ॥४६॥
अपस्मृतावत्र नियोजनीयमभ्यञ्जनं निम्बपयोभवाभ्याम्।
घृतौदनं स्यादिह भोजनाय जम्बीरनीरेण निहन्ति गुल्मम् ॥४७॥
हिङ्ग्वम्लिकानिम्बुरसेन देयं प्लीहोदरे स्यादिह तक्रभक्तः।
स्तम्भार्थमस्मिन् ससितं पयः स्याद्गुडो नियोज्यो वमनप्रशान्त्यै ॥४८॥

अथ विषप्रयोगायोग्यनिर्देशः।—

अशीतिर्यस्य वर्षाणि वसुवर्षाणि यस्य वा।
विषं तस्य न दातव्यं दत्तं चेद्दोषकारकम् ॥ ४९ ॥

अथ उमाप्रसादनो रसः।—

मेघपारदवैगन्ध-विषत्र्योषपटूनि च।
जीरकद्वयमेतानि समभागानि कारयेत् ॥ ५० ॥
सिन्दुवाररसेनापि लशुनस्य रसेन च।
अपामार्गरसेनापि सप्तरात्रं विमर्दयेत् ॥ ५१ ॥
तत् पक्वं बालुकायन्त्रे गुञ्जामात्रं प्रयोजयेत्।
सनागवल्लीमरिचं ततः शीताम्बु पाययेत् ॥५२॥

---

चूर्णम्। वल्लः रक्तिद्वयम्। विषमावलम्बि विषमाश्रितं, ज्वरमिति शेषः। भुजगाख्यवल्ल्याः नागवल्ल्याः, ताम्बूलस्य इत्यर्थः। रोधं मलरोधम्। वरायाः सलिलेन त्रिफलोदकेन। अपस्मृतौ अपस्मारे वराजलेन त्रिफलायाः क्वाथेन शीतकषायेण वा औषधं पाययित्वा निम्बपयोभवाभ्यां निम्बपत्ररसघृताभ्याम् अभ्यञ्जनम् अभ्यङ्गः नियोजनीयम्। स्तम्भार्थं शुक्रस्तम्भनाय। गुड इति।—औषधसेवनेन वमने जाते तत्प्रशान्त्यै गुडः प्रयोज्यः ॥ ४४—४८ ॥

अशीतिरिति।—वसुवर्षाणि अष्टौ वर्षाणि। एकोनाशीतिवर्षादूर्ध्वं नवमवर्षादर्वाक् च विषप्रयोगो न कर्त्तव्य इति निष्कर्षः। श्लोकोऽयं प्रक्षिप्तः इति केचित् ॥ ४९ ॥

उमाप्रसादनरसे—मेघः मुस्तकम्। वैगन्धः गन्धकम्। पटु सैन्धवलवणम्।

उमाप्रमोदनो नाम रसः शीतज्वरापहः ।
चातुर्थिकं त्रिरात्रं वा नाशयेत् किमुतापरान् ? ॥५३॥

अथ ज्वराङ्कुशरसः ।—

टङ्कणं रसगन्धौ च समभागान् प्रकल्पयेत् ।
नेपालं द्विगुणं दत्त्वा मर्दयेत खल्लमध्यतः ॥५४॥
श्लक्ष्णतां याति तद्यावत्तावत्सम्मर्दयेच्छनैः ।
सैन्धवं मरिचं शङ्खं चिञ्चाक्षारं समाक्षिकम् ॥५५॥
तुल्यमेतत्त्रयं कृत्वा निम्बुतोयेन मर्दयेत् ।
चणप्रमाणवटकान् भक्षयेच्च दिनत्रयम् ॥ ५६ ॥
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम् ।
सर्वज्वरविनाशाय ज्वराङ्कुश इति स्मृतः ॥ ५७ ॥

अथ सर्वाङ्गसुन्दरचिन्तामणिरसः ।—

अभ्रकं गन्धकं सूतं तोलैकैकं पृथक् पृथक् ।
गृहीत्वा विषतोलार्द्धं तोलार्द्धं तिन्तिरीफलम् ॥ ५८ ॥
एतत् सर्वं समं कृत्वा मर्दयेत् खल्लमध्यतः ।
श्लक्ष्णतां याति तद्यावत्तावत् सम्मर्दयेच्छनैः ॥५९॥
विस्तारे परिणाहे च गर्त्तां कृत्वा षडङ्गुलाम् ।
फणिवल्लीदलान्यन्तर्गर्त्तायां प्रक्षिपेन्नरः ॥६०॥

---

सिन्दुवाररसेन निर्गुण्डीस्वरसेन । सप्तरात्रमिति प्रत्येकस्वरसेन सप्तवारम् । मरिच-चूर्णनागवल्लीरसेन गुञ्जैकप्रमाणम् औषधमुपयोज्य शीतलजलमनुपाययितव्यम् इति ॥ ५०—५३ ॥

ज्वराङ्कुशरसे—नेपालं ताम्रं, द्विगुणमित्येकभागमपेक्ष्य बोध्यम् । शङ्खं शङ्खभस्म । चिञ्चाक्षारं तिन्तिडीक्षारम् । माक्षिकं स्वर्णमाक्षिकम् । तुल्यं प्रत्येकं टङ्कणभागः । एतत् त्रयं टङ्कणादित्रयेष्वेकं, नेपालमेकं, सैन्धवादिपञ्चकैकमित्येतत्त्रयमित्यर्थः । निम्बुतोयेन जम्बीररसेन ॥ ५४—५७ ॥

सर्वाङ्गसुन्दरचिन्तामणिरसे—तिन्तिरीफलं जैपालबीजम् ; "तिन्तिरी" इत्यत्र "तिन्तिडी" "तिन्तिणी" इति च पाठेऽपि—स एवार्थः । विस्तारे दैर्घ्ये ।

पर्णेषु सूतकल्कं तं गर्त्तायां स्थापयेद्दृढम्।
कल्कादुपरि तत् पर्णैर्गर्त्तावक्त्रं प्रपूरयेत्॥६१॥
गर्त्तायान्तु ततो देयं पुटमारण्यकोत्पलैः।
स्वाङ्गशीतलतां ज्ञात्वा समाकर्षेत्ततःपरम्॥६२॥
सूतलिप्तदलैः सार्द्धं कल्कं खल्वे विमर्दयेत्।
तोलार्द्धममृतं क्षिप्त्वा तोलार्द्धं तिन्तिरीफलम्॥६३॥
स्थापयेत् खल्वितं कल्कं योजयेद्गुञ्जमात्रया।
शृङ्गवेराम्भसा युक्तं तीक्ष्णचित्रकसैन्धवैः॥ ६४ ॥
सन्निपाते तथा वाते त्रिदोषे विषमज्वरे।
अग्निमान्द्ये ग्रहण्याञ्च तथा देयोऽतिसारिणि॥ ६५ ॥
भोजनं दधिभक्तञ्च रसेऽस्मिन् सम्प्रयोजयेत्।
व्याध्याधिक्यं यदा कुर्य्यादुदकं ढालयेत्ततः॥६६॥
एष योगवरः श्रीमान् प्राणिनां प्राणदायकः।
चिन्तामणिरिति ख्याता रसः सर्वाङ्गसुन्दरः॥ ६७ ॥

परिणाहे वेष्टन्याम्। गर्त्ता गर्त्तम्, आवन्तगर्त्तशब्दोऽप्यस्तीति गम्यते प्रयोगदर्शनात्। फणिवल्लीदलानि ताम्बूलीपर्णानि। अन्तर्गर्त्तायां गर्त्ताभ्यन्तरे। पर्णेषु ताम्बूलीदलेषु, लिप्तमिति शेषः। सूतकल्कम् अभ्रादिकृतमौषधपिण्डम्। तीक्ष्णं मरिचं चविका वा। अयं विधिः,—अभ्रादिकं यथोक्तमानं खल्वे तावद्दृढं मर्दयेत्, यावत् चिक्कणतां गच्छति, ततः जलेन पर्णरसेन वा चूर्णं तदालोड्य सान्द्रं पर्णेषु लिम्पेत्। उत्सेधविस्ताराभ्यां षडङ्गुलमितं गर्त्तमेकं कृत्वा तन्मध्ये पर्णदलानि कतिचित् निक्षिप्य तदुपरि भेषजकल्कलिप्तानि तानि स्थापयेत्, भूयश्च कति पर्णानि दत्त्वा गर्त्तमुखं प्रपूर्य्य वन्यकरीषैः पुटं दापयेत्, स्वाङ्गशीतलं समुद्धृत्य च सपर्णमेव तदौषधम् अमृतार्द्धतोलकेन जैपालार्द्धतोलकेन च खल्वे मर्दयित्वा स्थापयेत्। तस्माद्गुञ्जामानमौषधं तीक्ष्णादीनां प्रत्येकं रक्तिद्वयमितेन चूर्णेन आर्द्रकरसेन च दापयेत्। अनुपानं सदध्यन्नं कुर्य्यात्। प्रयोगेणानेन यदि व्याधेराधिक्यं भवति, तदा शिरसि उदकं ढालयेत्॥ ५८—६७॥

अथ लोकनाथगुटिका ।—

सूतेन्द्रं परिमर्द्य पञ्चपटुभिः क्षारैस्त्रिभिस्तं ततः
पिण्डे हिङ्गुमहौषधासुरिमये संस्वेद्य धान्यादके ।
निर्गुण्ड्यम्बुहुताशमन्थ-तिलपर्ण्युन्मत्तभृङ्गार्द्रकं
कामाताऽगिरिकर्णिकाप्लवदला-पञ्चाङ्गुलोत्थैर्जलैः ॥ ६८ ॥
सूतेन्द्रेण समैर्विमर्द्य सहजैः पित्तैस्ततो भावयेत्
दंष्ट्रिच्छाग-लुलायमत्स्यशिखिनां सा सन्निपातान् जयेत् ।
विख्याता भुवि लोकनाथगुटिका मारीचमात्रा स्थिता
स्यादस्याः सहितं दधीक्षुशकलं वीर्य्यं भवेच्छीतलम् ॥ ६९ ॥

अथ सूचिकाभरणो रसः ।—

वज्रवैक्रान्तयोर्भस्म प्रत्येकं निष्कसम्मितम् ।
शृङ्गीविषं द्विनिष्कञ्च त्रिनिष्कं चूलिकापटु ॥ ७० ॥

लोकनाथगुटिकायां—पञ्चपटुभिः "सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च । सामुद्रेण सहैतानि पञ्चैव लवणानि च ॥" इत्युक्तैः पञ्चलवणैः । क्षारैस्त्रिभिः "स्वर्जिका टङ्कणञ्चैव यवक्षार उदाहृतः" इत्युक्तैः त्रिक्षारैः ; अत्र भागानुक्तत्वात् लवणक्षाराणां प्रत्येकं सूतेन्द्रसमत्वं बोध्यम् । आसुरि राजिका । धान्योदके काञ्जिके । निर्गुण्डी सिन्दुवारः । अम्बु बालकम् । हुताशमन्थः अग्निमन्थः । तिलपर्णी रक्तचन्दनम् । उन्मत्तः धुस्तूरः । भृङ्गः भृङ्गराजः । कामाता काकमाची । गिरिकर्णिका अपराजिता । प्लवः कैवर्त्तमुस्तकम । दला ताम्बूलम् । पञ्चाङ्गुलः एरण्डः । सहजैः स्वाभाविकैः अविकृतैः, पित्तैरित्यनेन सम्बन्धः, रोगादिभिर्मृतानां पित्तं विकृतं भवति, अत तु अतद्विधैः । दंष्ट्री शूकरः । लुलायः महिषः । शिखी मयूरः । मारीचमात्रा मरिचप्रमाणा । स-हितं हितसहितं, न त्वहितमहितमित्यर्थः ; "स-हितम्" इत्यत्र "ससितम्" इति पाठः साधुः, तत्र सशर्करमित्यर्थः । इक्षुशकलम् इक्षुखण्डम् । अयमर्थः,—मिलितैः पञ्चपटुभिः क्षारत्रयैश्च मिलितैः तुल्यं रसं सम्मर्द्य गोलकं विधाय हिङ्ग्वादिमये पिण्डे संस्थाप्य च दोलायन्त्रे काञ्जिकेन स्वेदयेत्, ततो दोलायन्त्रादुद्धृत्य तदौषधं निर्गुण्ड्यादीनां प्रत्येकं स्वरसैः क्वाथैर्वा यथायोग्यं रससमैर्विमर्द्य पञ्चभिः पित्तैः यथाविधि भावयेत् ॥ ६८-६९ ॥

पञ्चनिष्कोऽग्निजारश्च सर्वमेकत्र मेलयेत्।
तावद्भस्मरसं यावन्मर्दयेद्दिवसत्रयम् ॥ ७१ ॥
शार्ङ्गेष्टादिकवर्गस्य क्षारनीरेण भावयेत्।
त्रयोविंशतिवाराणि विमर्द्य च विशोष्य च ॥ ७२ ॥
ततो विमर्द्य दिवसं क्षिपेद्दन्तकरण्डके।
मृतसञ्जीवनाख्योऽयं सूचिकाभरणो रसः ॥ ७३ ॥
सन्निपातेन तीव्रेण मुमूर्षोर्भृगतस्य च।
तालुनि प्रच्छयित्वाऽथ रसमेनं विनिक्षिपेत् ॥ ७४ ॥
सूच्याऽतिसूक्ष्मया तोयाभिन्नयाऽतिप्रयत्नतः।
ततस्तैलेन तं लिप्त्वा निवाते सन्निवेशयेत् ॥ ७५ ॥
ततोऽर्द्धप्रहरादूर्द्ध्वं मुक्तमूत्रपुरीषकम्।
लब्धसंज्ञं प्रतापाढ्यं दोलयन्तं शिरो मुहुः ॥ ७६ ॥
आयुष्मन्तं विजानीयादन्यथा चान्यथा खलु।
ततः शीताम्बुसम्पूर्णे कटाहे तं निवेशयेत् ॥ ७७ ॥
तत्र चोत्क्वथितं तोयमपनीयापरं क्षिपेत्।
याचमानममुं पश्चात् पाययेत् ससितं पयः ॥ ७८ ॥
दधि वा सितयोपेतं नारिकेलजलं तथा।
रम्भाफलानि दद्याच्च म्रियते सोऽन्यथा खलु ॥७९॥

---

सूचिकाभरणरसे—वज्रं हीरकम्। वैक्रान्तं "चुणी" इति प्रसिद्धम्। निष्कसम्मितं शाणमानम्। शृङ्गीविषं कन्दविषभेदः, तदभावे कालकूटः अमृताख्यं वा। चूलिकापटु चुल्लिकालवणं, नरसारः इत्यर्थः। अग्निजारः पश्चिमसागरोद्भूतः औषधविशेषः। तावत् तावन्मानं, मिलितानामेषां समानमित्यर्थः, भस्मरसं रस-सिन्दूरम्। शार्ङ्गेष्टादिकेति।—वक्ष्यमाणस्य शार्ङ्गेष्टादिकवर्गस्य भस्मीकृतस्य चतुर्गुणे षड्गुणे वा तोये एकविंशतिवारपरिस्रुतेन क्षारोदकेनेत्यर्थः। दन्तकरण्डके गजदन्त-निर्मितभाजने। तोयाभिन्नया जलस्पृष्टया। प्रतापाढ्यं बलवन्तं, दोषवेगोदयात् शयनं परित्यज्य उद्गमनादिचेष्टावन्तम्। अन्यथा चान्यथा खलु प्रतापप्रदर्शनाद्यकरणे

लब्धसंज्ञं प्रभाषन्तं याचमानं फलादिकम् ।
तस्मादाकृष्य तैलान्तं तैलं पिष्ट्वाऽपनीय च ॥८०॥
लेपयेद्गन्धकर्पूरैरापादतलमस्तकम् ।
इत्यादिशिशिरैर्द्रव्यैः सम्यगात्रमुपाचरेत् ॥ ८१ ॥
कर्णच्छिन्नासिकावक्त्रे क्षिपेत् पोताश्रयं मुहुः ।
अष्टमेऽहनि सम्प्राप्ते दर्दुरीमूलजं रसम् ॥ ८२ ॥
ससितं पाययेद्वेगमवतारयितुं रसम् ।
रसेऽवतारिते पश्चात् यथेष्टं भोजनं दधि ॥ ८३ ॥
श्वासोच्छ्वासयुतश्चान्यैर्मुक्तजीवनलक्षणैः ।
कटाहे जलसम्पूर्णे निक्षिपेद्बोधलब्धये ॥ ८४ ॥
लब्धबोधं तमाकृष्य पूर्ववत् समुपाचरेत् ।
जीवित्वा यावदायुष्यं म्रियते तदनन्तरम् ॥ ८५ ॥
सन्निपाते महाघोरे मज्जन्तं मृत्युसागरे ।
उद्धरेत्तस्य धर्मस्य ब्रह्माऽप्यन्तं न विन्दति ॥ ८६ ॥
सन्निपातमहामृत्यु-भयनिर्मुक्तमानवः ।
अपि सर्वस्वदानेन प्राणाचार्य्यं प्रपूजयेत् ॥ ८७ ॥

गतायुषं विजानीयादित्यर्थः । उत्क्वथितम आतुरस्य देहोष्मसम्पर्केण सन्तप्तम् । अपरं शीतलं तोयम् । अन्यथा शीतोपचाराद्यकरणे ससितदध्याद्यप्रदाने च । पिष्ट्वा गात्रमार्जन्या उद्धृत्य ; "पिष्ट्वा" इत्यत्र "पिष्ट्या" इति पाठे—पिष्ट्या पिष्टिकया, तण्डुलादिचूर्णेन इत्यर्थः । पोताश्रयं जलमित्यर्थः । दर्दुरीमूलजं पुनर्नवामूलोत्थम् । वत्सनाभादिकं यथोक्तमानं गृहीत्वा शार्ङ्गेष्टादीनां क्षारोदकेन त्रयोविंशतिवारं विभाव्य विशोष्य च पुनरेकादिनं विमर्द्य गजदन्तभाजने स्थापयेत । मुमूर्षोः सन्निपातिनः शिरस्तालुं कूर्चकेनान्येन वा केनचित् प्रच्छनसाधनेन किञ्चित् प्रच्छयित्वा जलसम्पृक्तनातिसूक्ष्मेण सूचीवक्त्रेण रसमेनं गृहीत्वा च तत्र स्थापयेत् तैलेनाभ्यज्य निवाते स्थापयेच्च । ततः प्रहरार्द्धानन्तरं संज्ञां लब्ध्वा त्यक्तमूत्रपुरीषः सन्निपाती चेत् शिरस्ताडनादिकं कुर्य्यात् तदा तमायुष्मन्तं जानीयात् । ततः शीतलजलपूर्णे

अन्यथा नरके तावद्यावत् कल्पविकल्पना।
इत्याज्ञा शाङ्करी ज्ञेया शम्भुना परिकीर्त्तिता ॥८८॥
प्रकाशा नैव कर्त्तव्या रसोत्तरणमूलिका।
शास्त्रं विना प्रयच्छन्ते मन्दा वित्ताभिकाङ्क्षया ॥
गुरुप्रसादमासाद्य सन्निपाते प्रयुज्यताम् ॥८९॥

अथ शार्ङ्गेष्टादिवर्गः।—

शार्ङ्गेष्टा च तथा व्याघ्री करीरस्तिलपर्णिका।
इन्द्रवारुणिका मुस्ता हरिद्राऽङ्कोलमूलिका ॥९० ॥
अपामार्गः कणा स्वर्णः कटुतुम्बी च तिन्तिड़ी।
शार्ङ्गेष्टादिकवर्गोऽयं सन्निपातहरः परम् ॥ ९१ ॥

अथ सूचीमुखो रसः।—

सूतं गन्धकतालकं मणिशिलां तार्प्यं लवं तुत्थकं
जैपालं विषटङ्कणं मधुफलं कृत्वा समांशं दृढ़म्।
कृत्वा कज्जलिकां विषोल्बणफणेः पित्तैश्च सम्भावयेत्
क्षिप्त्वा सीसककूपिके रसवरं सूचीमुखं नामतः ॥९२॥

कोष्ठके तम् अवगाहयेत्, यदा च तज्जलमुत्तप्तं भवेत् तदा तदपनीय पुनश्च शीतलजलेन तत् कोष्ठं पूरयेत्। अनन्तरं बुभुक्षवे तस्मै सशर्करदुग्धादिकं दापयेत्, अदत्ते च मृत्युर्भवितुमर्हति। ततः कोष्ठादवतार्य्य गात्रमार्जन्या तण्डुलपिष्टादिना वा तैलमपनीय कर्पूरचन्दनादिभिः शीतलद्रव्यैः आपादमस्तकमनुलेपयेत, एवं सप्ताहं यावत्। अष्टमेऽहनि शीतलजलेन कर्णादिकमभिषिच्य सशर्करं पुनर्नवामूलरसं पाययेत्, एवमौषधसन्तापं प्रशाम्यति, पश्चात् प्रभूतं दधि भोजयेदिति ॥ ७०—८९ ॥

शार्ङ्गेष्टादिवर्गमाह, शार्ङ्गेष्टेति।—शार्ङ्गेष्टा काकमाची काकजङ्घा वा। करीरः वंशाङ्कुरः। तिलपर्णिका रक्तचन्दनम्। इन्द्रवारुणिका गोरक्षकर्कटी। अङ्कोलमूलिका अङ्कोठमूलम्। स्वर्णः धुस्तूरः। कटुतुम्बी तिक्तालाबुः ॥९०।९१॥

सूचीमुखरसे—मणिशिलां मनःशिलाम्। तार्प्यं स्वर्णमाक्षिकम्। लवं जातीफलम्। मधुफलं वैकङ्कतम्। विषोल्बणफणेः तीक्ष्णविषस्य कृष्णसर्पस्य पित्तैः; पित्तैरिति बहुत्वं सप्तभावनाबोधनार्थं, सर्पपित्तानां स्वल्पतया बहुभिः

ब्रह्मद्वारविकीर्णलोहितलवे गुञ्जैकमात्रं ददेत्
दत्त्वा सम्पुटबद्धतन्द्रिकधनुर्वाते सशाखाहिमे ।
कासं श्वासमरोचकं प्रलपनं कम्पञ्च हिक्कातुरं
मूकत्वं बधिरत्वमुन्मदमपस्मारं जयेत्तत्क्षणात् ॥ ९३ ॥

अथ सन्निपातगजाङ्कुशः ।—

रसगन्धकताम्राभ्रं लाङ्गलीवह्निरामठम् ।
वन्ध्यापटोलनिर्गुण्डी-सुगन्धानिम्बपल्लवाः ॥ ९४ ॥
पाठा चारत्रयं क्ष्वेल-बोलधत्तूरतण्डुलैः ।
शृङ्गीमधूकसारञ्च जम्बीराम्लेन मर्दयेत् ॥ ९५ ॥
कुर्याद्धि निष्कमानेन वटिका सा नियच्छति ।
संस्वेददाहाभिन्यासं सन्निपातगजाङ्कुशः ॥ ९६ ॥

अथ चातुर्थिकहरो रसः ।—

ससारा वैष्णवीसेना अचला कादि कङ्कणा ।
रागरुद्रोपमोपेता प्रौढ़ामस्तकशालिनी ॥ ९७ ॥

---

पित्तैः सप्तभावनायाः असङ्गतिश्चेत् यावद्भिः पित्तैः सर्वमेकीभूतं सत् आर्द्रतां व्रजेत् तावत्सङ्ख्यकैः सप्तवारं भावयेत् इति द्योतनार्थं वा । सीसककूपिके सीसकनिर्मित-भाजने ; एतच्च पात्रविशेषकथनं संस्कारार्थं बोध्यम् । ब्रह्मद्वारेति ।—ब्रह्मद्वारे ब्रह्मरन्ध्रे, ब्रह्मतालुनि इत्यर्थः, ब्रह्मद्वारत्वञ्चास्य—एतच्छिद्रेण निष्क्रमणे जीवस्य ब्रह्मप्राप्तिश्रवणात् ; विकीर्णः सूच्यग्रेण व्यधनात् बहिर्निःसृतः लोहितलवः रक्त-बिन्दुः तस्मिन् सति सूक्ष्माग्रसूचीविद्धब्रह्मरन्ध्रात् रक्तबिन्दौ निःसृते सति गुञ्जामात्रं रस-मिमं दापयेत् । सम्पुटेति ।—सम्पुटबद्धः बद्धमुष्टिकः यः तन्द्रिकः तदाख्यसन्नि-पातभेदः, तत्सहितः धनुर्वातः धनुस्तम्भः तस्मिन् बद्धमुष्टिकतन्द्रिकसन्निपाते धनुर्वाते चेत्यर्थः । सशाखाहिमे हस्तपादशैत्यसहिते ॥ ९२।९३ ॥

सन्निपातगजाङ्कुशे—लाङ्गली चव्यं कलिकारिका वा । वह्निः चित्रकः । रामठं हिङ्गु । वन्ध्या वन्ध्याकर्कटकी । सुगन्धा रास्ना । पल्लवशब्दः वन्ध्यादिभिः निम्बान्तैः प्रत्येकं सम्बध्यते । क्ष्वेलं गरलम् । बोलः गन्धबोलः । तण्डुलः तण्डुलीयकः । शृङ्गी कर्कटशृङ्गी । मधूकसारः गुडपुष्पवृक्षसारः ॥९४—९६॥

त्रिभागं तालकं विन्द्यादेकभागन्तु पारदम्।
तदर्द्धं गन्धकञ्चैव तदर्द्धन्तु मन:शिला ॥ ९८ ॥
कारवल्लीदलरसैर्मर्दयेत् प्रहरत्रयम्।
पाचितो बालुकायन्त्रे चातुर्थिकनिवारण: ॥ ९९ ॥

अथ चातुर्थिकगजाङ्कुश:।—

स्याद्रसेन समायुक्तो गन्धक: सुमनोहर:।
ह्रियावल्लित्रिगुणिता निर्गुण्डीरसमर्दित: ॥ १०० ॥
सप्तवाराणि तद्योज्यमार्द्रकस्वरसेन तु।
सन्ततादिज्वरं हन्याच्चातुर्थिकगजाङ्कुश: ॥ १०१ ॥

अथ द्वितीयमृत्युञ्जयरस:।—

ताप्यतालकजैपाल-वत्सनाभमन:शिला:।
ताम्रगन्धकसूतश्च मुषलीरसमर्दित: ॥
मृत्युञ्जय इति ख्यात: कुक्कुटीपुटपाचित: ॥१०२ ॥

---

चातुर्थिकहररसे—ससारा सार: पारद:, सारत्वञ्चास्य शिववीर्य्यत्वात्, तत्सहिता पारदसंयुक्ता इत्यर्थ:। वैष्णवीसेना हरिताल:, विष्णुवीर्य्यत्वाच्चास्य वैष्णवीसेनत्वम्। चपला मन:शिला, अत्रापि लक्ष्मीवीर्य्यत्वम् मन:शिलाया चपलत्वे हेतुरन्वेय:। कादि कारवल्लीरस:। कट्वणा गन्धक:; यत्तु केनचित् कादिकं कणा इति पदभेदेन कणाशब्देन पिप्पली इत्युक्तं तन्न मनोरमम्; "त्रिभागम्" इत्यादिनोक्ते सारादीनां भागविवरणे पिप्पल्या अदृष्टत्वात् गन्धकस्य च ग्रहणादिति। नाग: ताम्रपात्र, रुद्रोपमा बालुका च ताभ्यामुपेता। प्रौढामस्तकशालिनी शालिस्फुटनमात्रम् इत्यर्थ:। अथैषां भागयुक्तिमाह, त्रिभागमिति।—तालकं हरितालम्। तालकादिकं यथोक्तमानं गृहीत्वा कारवल्लीपत्ररसेन प्रहरत्रयं विमर्दयेत्, तत: ताम्रपात्रे संस्थाप्य रुद्धा च बालुकायन्त्रे पचेत्, बालुकोपरि कति व्रीहीन् संस्थापयेच्च, यावत्ते न स्फुटन्ति तावत् रसोऽयं पक्तव्य: इति निष्कर्ष: ॥९७—९९॥

चातुर्थिकगजाङ्कुशे—ह्रियावल्लि: हरितालं, स च रसभागापेक्षया त्रिगुणित: ग्राह्य: ॥ १००।१०१ ॥

द्वितीयमृत्युञ्जयरसे—ताप्यं स्वर्णमाक्षिकम्। जैपालं जैपालबीजम्; "जैपाल"

वल्लद्वयं प्रयुञ्जीत यथेष्टं दधिभोजनम्।
नवज्वरं सन्निपातं हन्यादेष महारसः ॥ १०३ ॥

अथ पञ्चवक्त्ररसः।—

शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं कणाम्।
मर्दयेद्धूर्त्तजद्रावैर्दिनमेकन्तु शोषयेत् ॥१०४॥
पञ्चवक्त्रो रसो नाम द्विगुञ्जः सन्निपातजित्।
अर्कमूलकषायञ्च सत्र्यूषमनुपाययेत् ॥
दध्योदनं हितं तत्र जलयोगञ्च कारयेत् ॥१०५॥

अथ उन्मत्तरसः।—

रसगन्धकतुल्यांशं धत्तूरफलजैर्द्रवैः।
मर्दयेद्दिनमेकन्तु तत्तुल्यं त्रिकटु चिपेत् ॥
उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात् सन्निपातजित् ॥१०६॥

अथ सान्निपाताञ्जनरसः।—

निस्त्वग्जेपालजं बीजं दशनिष्कं प्रचूर्णयेत्।
मरिचं पिप्पली सूतं प्रतिनिष्कं विमिश्रयेत् ॥१०७॥
भाव्यं जम्बीरजैर्द्रावैः समाहं तत् प्रयत्नतः।
सन्निपातं निहन्त्याशु अञ्जने यः शिवः स्मृतः ॥ १०८ ॥
मदनफलं विड्लवणं सर्षपाः प्रतिनिष्कद्वयम्।
चूर्णयित्वा त्रिफलाक्वाथेन सटङ्कणं पिबेत् ॥ १०९ ॥

क्वचित् "नेपाल" इति पाठे—नेपालं ताम्रम्, अस्मिन् पक्षे ताम्रस्य द्वौ भागौ ग्राह्यौ। वत्सनाभः विषम्। मुषली तालमूली। कुक्कुटीपुटपाचितः "पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम। तावच्च तलविस्तीर्णं तत् स्यात् कुक्कुटकं पुटम्॥" इत्युक्तलक्षणकपुटे पाचितः ॥ १०२।१०३ ॥

पञ्चवक्त्ररसे—धूर्त्तजद्रावैः धुस्तूरपत्ररसैः। सत्र्यूषं त्रिकटुचूर्णसहितम्। जलयोगं जलसेकादिकम ॥ १०४।१०५ ॥

उन्मत्तरसे—तत्तुल्यं त्रिकटु कज्जलीतुल्यं समुदितत्रिकटुचूर्णम ॥ १०६ ॥

सन्निपाताञ्जनरसे—सूतं रससिन्दूरम्। शिवः आरोग्यप्रद इत्यर्थः। जेपाल-

अथ नस्यम्।—

कुष्ठपाण्डुज्वराजीर्ण-कामलाकण्ठरोगनुत्।
नस्ये च गिरिकर्ण्युत्थ-बीजैकं शीतवारिणा ॥११०॥

अथ प्रतापलङ्केश्वरः।—

प्रत्येकं रसगन्धयोर्द्विपलयोः कृत्वा मसीं शुद्धयो-
रस्यां म्लेच्छकुलायलोचनमनो-धात्रीप्रकुञ्चत्रयम्।
पथ्याया बदरत्रिकं त्रिकटु षट्शाणं वचा धर्मिणी
वेल्लाम्भोधरपत्रकद्विरद-किञ्जल्काख्यगन्धाह्वयम् ॥ १११ ॥
पिष्ट्वैतत् समधूकसारमखिलं कर्षोन्मितं न्यस्य तत्
प्रोन्मर्द्याद्रकरञ्जकामृतयुतं मागस्तिकत्रूषणैः।
भूधात्रीविजयासरित्पतिफलं ज्वालामुखीमार्कवैः
प्रत्येकं विदधीत निश्चलमतिः सप्त क्रमाद्भावनाः ॥ ११२ ॥
पित्तैरथो पञ्च विधाय पञ्चभिः करञ्जपत्रामृतधूपनं ततः।
दत्त्वाऽऽर्द्रकस्य स्वरसेन तण्डुलाकृतिं विदध्याद्गुटिकां भिषग्वरः
॥ ११३ ॥

बीजादिभिरादावञ्जनं दत्त्वा पश्चात् मदनफलादिटङ्कणान्तानां चतुर्णां चूर्णं योग्यमात्रया त्रिफलाक्वाथेन अनुपानं कुर्य्यात ॥ १०७—१०९ ॥

नस्यमाह, कुष्ठेति।—गिरिकर्णी अपराजिता। केवलं शीतवारिपिष्टापराजिता बीजनस्यं कुष्ठादिनाशनं भवेत ॥११०॥

प्रतापलङ्केश्वरे—मसीं कज्जलीम्। अस्यां कज्जल्याम। म्लेच्छं ताम्रम। कुलायलोचनं महिषाक्षगुग्गुलुः। मनः जटामांसी। धात्री आमलकी; मनो-धात्रीत्येकपदं वा, तत्र मनोगुप्ता, मनःशिला इत्यर्थः, आसां प्रत्येकं पलत्रयम। बदरत्रिकं कोलत्रयम्। त्रिकटु षट्शाणं त्रिकटुचूर्णं मिलितं कोलत्रयम्॥ धर्मिणी रेणुका। वेल्लं विडङ्गम्। अम्भोधरः मुस्तकम्। पत्रकं तेजपत्रम। द्विरद-किञ्जल्कः नागकेशरः। वचादयो मधूकसारान्ताः प्रत्येकं कर्षमिताः। आर्द्रेति।—करञ्जकः नक्तमालः, अस्य त्वक्। अमृतं विषम। मागस्तिकत्रूषणैरित्यत्र अगस्तिकी बकपत्रम। भूधात्री तामलकी। विजया भङ्गा। सरित्पतिफलं

देयैका सन्निपाते प्रतिहतविषये मोहनेत्रप्रसुप्तयोः
स्यान्नूलमे साजमोदा पवनविकृतिषु त्र्यूषणेन ग्रहण्याम्।
दातव्या जीरकेण द्विपतुरगनृणां प्राणसंरक्षणाय
कारुण्याम्भोधिरेतं रसकसमरसं वैद्यनाथोऽभ्यधत्त ॥ ११४॥

अथ प्राणेश्वरः।—

गन्धकाभ्रसमः सूतो वाराहीरसमर्दितः।
पाचितो वालुकायन्त्रे त्रिफलाव्योषचित्रकैः ॥ ११५ ॥
त्रिक्षारपञ्चलवण-हिङ्गुगुग्गुलुदीप्यकैः।
सजीरकैः सेन्द्रयवैः पृथग्रससमैर्युतः ॥ ११६ ॥
माषमात्रोऽनुपानेन द्विपलस्योष्णवारिणः।
अभिन्यासानलभ्रंश-ग्रहणीपाण्डुगुल्मिनाम् ॥ ११७ ॥
कुर्यात् प्राणपरित्राणमतः प्राणेश्वरः स्मृतः।
व्याधिवृद्धौ प्रयोगोऽस्य द्वौ वारौ वैद्यसम्मतः ॥ ११८ ॥

समुद्रफलम् इति नाम्ना ख्यातफलविशेषः; योगेऽस्मिन् करञ्जकामृतभृङ्गीविजया-सारत्वतिफलाना प्रत्येकं कर्षार्द्धं ग्राह्यम्। ज्वालामुखी चित्रकः। मार्कवः भृङ्गराजः, सागस्तिकत्र्यूषणैः ज्वालामुखीमार्कवैः सप्त भावना विदधीत इति योजनीयम्। पित्तैरिति।—पञ्चभिः पित्तैः पञ्च भावनाः देयाः। करञ्जेत्यादौ करञ्जः नक्तमालत्वक् एवं तेजपत्रम् अमृतं विषम् एभिर्धूपनं कार्यं संस्कारार्थम्। तण्डुलाकृतिं तण्डुलाकाराम्। प्रतिहतविषये रूपरसादीनामिन्द्रियार्थाना ग्रहणासामर्थ्ये। रसकसमरसम् अमृतवद्गुणकारकम्। अयमर्थः,—सर्वं यथोक्तमानं गृहीत्वा सागस्तिकत्र्यूषणैः ज्वालामुखीमार्कवैः प्रत्येकं सप्त सप्त वारान् भावयित्वा पञ्चभिः पित्तैश्च पञ्च वारान् भावयेत्; अनन्तरं गुणप्रकर्षाधानार्थं करञ्जादिभिर्धूपनं कर्त्तव्यम् ॥ १११—११४ ॥

प्राणेश्वरे—मिलितगन्धकाभ्रतुल्यः पारदः। वाराही वाराहीकन्दः। दीप्यकं यमानी। वाराहीकन्दरसेन मर्दितं गन्धकादिकं काचकूप्यां संस्थाप्य मृत्कर्पटाभ्यां लिप्त्वा च सिन्दूरवर्णविभवना वालुकायन्त्रे पचेत्। ततोऽवतार्य वाह्निःसार्य च त्रिफलादिभिः प्रत्येकं रससमैः संयोज्य सुगप्तं स्थापयेत्। अस्मात माषमितं गृहीत्वा द्विपलमितोष्णवारिणा अभिन्यासादौ दापयेत् ॥ ११५—११८ ॥

अथ मृतसञ्जीवनः।—

रसायोव्योषकङ्कुष्ठ-शिलातालाभ्रहिङ्गुलान्।
कुम्भ्यग्निभृङ्गमारीष-तण्डुलीयकमाक्षिकान्॥ ११९॥
हस्तिशुण्डीयुतांस्तुल्यांस्तदर्द्धशिवगन्धकान्।
त्र्यहमार्द्राम्बुना पिष्ट्वा कूपिस्थं वालुकाग्निना॥ १२०॥
जयाजम्बीरनिर्गुण्डी-चाङ्गेरीवारि निक्षिपेत्।
पक्त्वा चतुर्दशाहानि पिष्ट्वाऽऽर्द्रान्तं विशोषयेत्॥ १२१॥
मृतसञ्जीवनाख्योऽयं रसो वल्लमितोऽशितः।
द्राक् जयेदौषधं सन्निपातादीन् सकलान् गदान्॥ १२२॥

अथ द्वितीयमृतसञ्जीवनः।—

रसभागो भवेदेको गन्धको द्विगुणो मतः।
विषतालककङ्कुष्ठ-शिलाहिङ्गुललोहकम्॥ १२३॥
वाङ्गत्रिकटुभृङ्गाह्व-हेममाक्षिकमभ्रकम्।
हस्तिशुण्डी विषं कुम्भी तण्डुलीयकताम्रकौ॥ १२४॥
एषां प्रत्येकमेकैकं भागमादाय चूर्णयेत्।
आर्द्रकस्य द्रवेणैव मर्दयेच्च दिनत्रयम्॥ १२५॥
जम्बीरस्य रसो ग्राह्यः पलत्रयपरीक्षितः।
त्रिफलायाश्च निर्गुण्ड्याः प्रत्येकञ्च पलत्रयम्॥ १२६॥

---

मृतसञ्जीवने—रसः पारदः। अयः लौहम्। कङ्कुष्ठः स्वनामख्यातः। कुम्भी दन्ती, अस्याः बीजं ग्राह्यम्। अग्निः चित्रकः। भृङ्गः भृङ्गराजः। मारीषः तण्डुलीयकः। तण्डुलीयकः विडङ्गम्। तदर्द्धशिवगन्धकान् तेषां मिलितरसादीनाम् अर्द्धौ शिवगन्धकौ मिलितटङ्कणगन्धौ यत्र तान्, शिवोऽत्र टङ्कणं, स च रसादीनां मिलितानां पादांशो ग्राह्यः, एवं गन्धकोऽपि; यद्वा—शिवः पारदः गन्धकश्च, अस्मिन् पक्षे—रसः रसाञ्जनम्। रसादिकं सर्वं यथानिर्देशं गृहीत्वा आर्द्रकरसेन दिनत्रयं सम्मर्द्य काचकूप्यां निधाय च वालुकायन्त्रे चतुर्दशदिनं पचेत्। ततः जयादिरसेन पिष्ट्वा भूयोऽप्यार्द्रकरसं दत्त्वा आतपे शोषयेत् इति ॥११९—१२२॥

रसस्य पलमात्रन्तु चाङ्गेर्य्याः परिकीर्त्तितम् ।
काचकूप्यां विनिक्षिप्य यन्त्रे क्षिप्त्वा प्रयत्नवान् ॥ १२७ ॥
उद्धृत्याऽऽर्द्रकनिर्य्यासैर्मर्दयित्वा विशोषयेत् ।
मृतसञ्जीवनो नाम रसोऽयं विदितो भुवि ॥
गुञ्जाद्वयं ददीतास्य सन्निपातापनुत्तये ॥ १२८ ॥

अथ सन्निपातकुठारः ।—

वङ्गं नागञ्च सूतञ्च नेपालं गन्धकं तथा ।
शुल्वं विषं समांशेन रसेनाऽऽर्द्रेण मर्दयेत् ॥ १२९ ॥
पुनर्मर्द्येत निर्गुण्ड्याश्चाङ्गेर्य्या रसमर्दितः ।
एकवल्लप्रयोगेण रसोऽयं सन्निपातनुत् ॥ १३० ॥

अथ नवज्वरारिः ।—

गन्धकञ्च रसं शुद्धं प्रत्येकं कर्षसम्मितम् ।
एकत्र कज्जलीं कृत्वा ततः कुर्वीत गोलकम् ॥ १३१ ॥
नवभाण्डे विनिक्षिप्य ताम्रपात्रेण गोपयेत् ।
दृढं निरुध्य तत् पात्रमग्नावारोपयेत्ततः ॥ १३२ ॥
व्रीहिस्फुटनमात्रेण स्वाङ्गशीतं समुद्धरेत् ।
नवज्वरे प्रयुञ्जीत रसं पर्पटिकाह्वयम् ॥ १३३ ॥
आर्द्रकस्य रसेनैव त्रिवल्लं त्रिदिनं भिषक् ।
ज्वरितं छादयेद्गाढं यावत् स्वेदः समुद्भवेत् ॥ १३४ ॥

द्वितीयमृतसञ्जीवने—भृङ्गाह्वः भृङ्गराजः । पलत्रयपरीक्षितः पलत्रयपरिमितः इत्यर्थः । त्रिफलायाः क्वाथो ग्राह्यः । जम्बीरादीनां रसम् आर्द्रकरससमर्दितमौषधस्य काचकूप्यां स्थापयेत् । यन्त्रे वालुकायन्त्रे । "यन्त्रे क्षिप्त्वा प्रयत्नवान्" इत्यत्र "स्वेदयेत् सप्तकद्वयम्" इति पाठे—सप्तकद्वयं चतुर्दशदिनानि स्वेदयेत् पचेत्, पाकश्च वालुकायन्त्रे एव कर्त्तव्यः ॥ १२३—१२८ ॥

सन्निपातकुठारे—नागं सीसकम् । नेपालं मनःशिला । शुल्वं ताम्रम् । समांशेन तुल्यमानेन गृहीतमेतत् सर्वम् । आर्द्रेण रसेन आर्द्रकस्वरसेन ॥ १२९।१३० ॥

तक्रभक्तं भवेत् पथ्यं ज्वरमुक्तस्य देहिनः ।
नवज्वरारिरित्येष रसः परमदुर्लभः ॥
वातज्वरे विशेषेण रसः साधारणोऽप्ययम् ॥ १३५ ॥

अथ जलमञ्जरीरसः ।—

टङ्कणं रसगन्धौ च मरिचानि समांशकम् ।
सर्वं जम्बीरनीरेण दिनानि त्रीणि मर्दयेत् ॥ १३६ ॥
संशोष्य शर्करायुक्तं मत्स्यपित्तेन भावयेत् ।
भावितं तद्रसं सिद्धमार्द्रकस्वरसैस्त्र्यहम् ॥ १३७ ॥
वल्लत्रयं प्रयुञ्जीत पानार्थं वारि शीतलम् ।
तक्रभक्तं भवेत् पथ्यं वृन्ताकफलसंयुतम् ॥
सर्वान् नवज्वरान् हन्ति रसोऽयं जलमञ्जरी ॥ १३८ ॥
पित्तज्वरे ज्वरारिरप्यनुभूतः ।

अथ कान्तरसः ।—

कान्तलोहस्य पत्राणि कण्टवेध्यानि कारयेत् ।
ततः सम्पेष्य तं कल्कं मर्दयेत्त्रिदिनं पुनः ॥ १३९ ॥
रसतुल्येन मत्स्यस्य पित्तेन परिभावयेत् ।
सिद्धः कान्तरसो ह्येष प्रयोज्योऽभिनवज्वरे ॥
शृङ्गबेरानुपानेन मात्रया भिषगुत्तमैः ॥ १४० ॥

---

नवज्वरारौ—गोरयेत् छादयेत् । व्रीहिस्फुटनमात्रेण औषधस्यास्य पाकसिद्धि-निर्देशात् अनुक्तत्वेऽपि वालुकायन्त्रे एव पाको ज्ञेयः । पर्पटिका इत्यस्यैव नामान्तरम् ॥ १३१—१३५ ॥

जलमञ्जरीरसे—शर्करा विषं, सा च सर्वसमा ग्राह्या रसेन्द्रसारसंवादात्, तथायमुदकमञ्जरीरस इति प्रसिद्धः । मत्स्यपित्तेन भावयेत् इत्यत्र सप्ताहमिति शेषः । आर्द्रकस्वरसेन त्र्यहं वल्लत्रयं प्रयुञ्जीत इत्यन्वयः ॥ १३६—१३८ ॥

कान्तरसे—रसतुल्येन समपरिमितेन रसेन उपलक्षितं तं कल्कमित्यर्थः ; एवञ्च रसकान्तयोः समभागता बोध्या ॥ १३९।१४० ॥

अथ चन्द्रोदयः ।—

रसगन्धौ तथा वङ्गमभ्रकं समभागतः ।
मेलयित्वाऽथ वङ्गेन समं सूतं विमर्दयेत् ॥ १४१ ॥
तत्रैकीकृत्य गन्धाभ्रे पेष्यं जम्बीरवारिणा ।
सामान्यं पुटमादद्यात् सप्तधा साधितं रसम् ॥ १४२ ॥
कुमार्य्या चित्रकेणापि भावयित्वाऽथ सप्तधा ।
गुड़ेन जीरकेणापि ज्वरे जीर्णे प्रयोजयेत् ॥ १४३ ॥
कासे श्वासे कुमार्य्या च त्रिफलाक्वाथयोगतः ।
उन्मादश्च धनुर्वातममृताक्वाथयोगतः ॥
इत्येवं रोगतापघ्नो रसश्चन्द्रोदयाह्वयः ॥ १४४ ॥

अथ जीर्णज्वरारिः ।—

नागं वङ्गं रसं ताम्रं गन्धकं टङ्कणं तथा ।
सूतं विषञ्च नेपालं हरितालं समं तथा ॥ १४५ ॥
वटक्षीरेण मर्द्याथ सर्वं कुर्य्यात्तु गोलकम् ।
तं गोलकं भाण्डमध्ये पाचयेद्दीपवह्निना ॥ १४६ ॥
तं गोलं शीतलं कृत्वा भृङ्गराजेन मर्दयेत् ।
आर्द्रकस्य रसेनापि मर्दयेच्च पुनः पुनः ॥ १४७ ॥
चणप्रमाणवटकान् रसेनाऽऽर्द्रस्य दापयेत् ।
गुञ्जाद्वयप्रमाणेन ज्वरं जीर्णं हरत्यसौ ॥ १४८ ॥

चन्द्रोदये—समभागत इत्यत्र ग्राह्यमिति शेषः । रसादीनां मिश्रणक्रममाह, मेलयित्वेति ।—आदौ वङ्गेन समं सूतं मेलयित्वा विमर्दयेदिति योजनीयम् । ततः गन्धाभ्रे मेलयित्वा जम्बीरवारिणा पेष्यमित्यन्वयः । ततः सप्तधा सप्तवारं सामान्यं पुटं लघुपुटम् आदद्यात, प्रतिपुटमेव जम्बीररसेन पेषणं कार्य्यमिति । अनन्तर पुटादाकृष्य तं रसं पुनः कुमार्य्या चित्रकेण च प्रत्येकं सप्तधा भावयेत् । अमृताक्वाथेन आमलकक्वाथेन ॥ १४१—१४४ ॥

जीर्णज्वरारौ—नागं सीसकम् । रसं रसाञ्जनम् । नेपालं मनःशिला । दीपवह्निना प्रदीपानलेनेत्यर्थः । पुनः पुनः सप्तवारान् ॥ १४५—१४८ ॥

अथ नवज्वरमुरारिः।—

हरश्च गन्धकश्चैव कुनटी च समं समम्।
मर्द्यं कर्कोटिकायाश्च रसेन विनियोजयेत्॥ १४९॥
नवज्वरमुरारिः स्याद्दल्लं शर्करया सह।
तण्डुलीयरसेनानुपानं शर्करयाऽपि वा॥
गुञ्जाद्वयप्रमाणेन ज्वरान् हन्ति नवान् हठात्॥ १५०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये ज्वरचिकित्सितं नाम द्वादशोऽध्यायः॥ १२॥

---

# अथ त्रयोदशोऽध्यायः।

---

## अथ रक्तपित्तादिचिकित्सनम्।—

रक्तपित्तस्य निदानसम्प्राप्ती।—

कट्वम्लतीक्ष्णलवणोष्णविदाहिरूक्षैः
पित्तं प्रदुष्टमशनैरतिसेवितैस्तैः।
सन्दूष्य रक्तमनुभयमार्गवर्त्ति
निर्यात्यसृक्‌स्थलयकृत्प्लिहतोऽतिमात्रम्॥ १॥

---

नवज्वरमुरारौ—हरः पारदः। कुनटी मनःशिला। कर्कोटिका कर्कोटकं, "काँकरोल" इति भाषा॥१४९।१५०॥

इति रसरत्नसमुच्चयबोधिन्यां द्वादशोऽध्यायः॥ १२॥

---

ज्वरे रक्तपित्ते च पित्तस्य अव्यभिचारित्वेनावस्थानात् तथा प्रबलज्वरसन्तापेन रक्तपित्तप्रवृत्तिदर्शनाच्च परस्परसन्तापसाधर्म्यात् ज्वरचिकित्सानन्तरं रक्तपित्तचिकित्सां वक्तुं त्रयोदशाध्यायमारभते; तत्रादौ निदानं सम्प्राप्तिञ्च तस्याह, कट्विति।—कट्वादिभिरशनैरतिसेवितैः प्रदुष्टं पित्तं रक्तं सन्दूष्य, तिष्ठतीति शेषः। अमुना

अथ पटोलादियोगः।—

पटोलमायसं चूर्णं सूतेन्द्रं समचारितम्।
लोहारिवर्गसङ्घृष्टं रक्तपित्तहरं परम्॥ २॥

अथ रसेन्द्रयोगः।—

वृषादलानां स्वरसस्य कर्षं रसेन्द्रगुञ्जामधुशर्करायुतम्।
लिहन् प्रभाते मनुजो निहन्याद्दुःखाकरं दारुणरक्तपित्तम्॥३॥

अथ ऊर्ध्वपातितपारदादियोगः।—

पारदं हिङ्गुलकस्य ऊर्ध्वयन्त्रेण मेलयेत्।
कुक्कुटाण्डरसं भागं टङ्कणक्षारमेव च॥ ४॥
गन्धकस्य तथा भागं घृतेन परिमर्दयेत्।
मिश्रं रसं समादाय जीरतोयेन दापयेत्॥ ५॥

---

पित्तेन सह इत्यर्थः। उभयमार्गवर्त्ति नासाचक्षुर्णास्यरूपोर्ध्वमार्गेभ्यः मेढ्रयोनिगुद-रूपाधोमार्गेभ्यश्च प्रवर्त्तनशीलं, रक्तमिति शेषः। असृगिति।—रक्तवाहिशिरा-स्थानयकृत्प्लीहाभ्याम्॥ १॥

पटोलादियोगे—पटोलं पटोलपत्रम्। "पटोलम" इत्यत्र "पलैकम्" इति पाठान्तरं साधु। सूतेन्द्रं पारदभस्म, रससिन्दूरमिति यावत। समचारितं तुल्यभागेन गृहीतम्। लोहारिवर्गसङ्घृष्टं लोहमारकगणक्वाथेन मर्दितम्; लोहारि-वर्गश्च—"त्रिफला त्रिवृता दन्ती कटुकी तालमूलिका। हड्डदारकहंसीरवृषपत्रक-चित्रकाः॥ शृङ्गवेरविडङ्गौ च भृङ्गभल्लातकौषधम्। दाडिमस्य च पुष्पाणि शत-पुष्पी पुनर्नवा॥ कुठारकामकौ कन्दः तन्वी भेकस्य पर्णिका। हस्तिकर्णपलाशश्च कुलिशः कैशराजकः॥ माषः खण्डितकर्णश्च गोजिह्वा लोहमारकः। गिरि-शाल्मलकः प्रोक्तः त्रिफलादिरयं गणः॥" इति। यद्वा—लोहारिवर्गसङ्घृष्टं रक्त-रोधकगणक्वाथेन मर्दितं, स च वृषकापामार्गनीलोत्पलशतावर्य्यादिकः। मात्रा चास्य गुञ्जाचतुष्टयमिता॥ २॥

रसेन्द्रयोगे—वृषादलानां वासापत्राणाम्। रसेन्द्रेति।—रसेन्द्रगुञ्जा च मधु च शर्करा च ताभिर्युतं वृषादलानां स्वरसस्य कर्षमित्यन्वयः। रसेन्द्रशब्देनात्रापि रससिन्दूरो ग्राह्यः॥ ३॥

ऊर्ध्वपातितपारदादियोगे—पारदं हिङ्गुलकस्य समभागम्। ऊर्ध्वयन्त्रेण ऊर्ध्वपातन-

दिनानि त्रीणि माषञ्च ग्रहणीरक्तदोषजित्।
ज्वरदाहविनाशञ्च रक्तपित्तविनाशनम्॥ ६॥

अथ चन्द्रकलारसः।—

प्रत्येकं तोलमानेन सूतकं ताम्रभस्मकम्।
दिनानि त्रीणि गुटिकां कृत्वा चाग्नौ विनिक्षिपेत्॥ ७॥
ततः शुष्कं समादाय पुनरेव च मर्दयेत्।
समस्तैः समगन्धैश्च कृत्वा कज्जलिकाञ्च तैः॥ ८॥
मुस्तादाडिमदूर्वाभिः केतकीस्तनवारिभिः।
सहदेव्याः कुमार्य्याश्च पर्पटस्यापि वारिणा॥ ९॥
रामशीतलिकातोयैः शतावर्य्या रसेन च।
भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक्॥ १०॥
तिक्तां गुडूचिकासत्त्वं पर्पटोशीरमागधीः।
शृङ्गाटं सारिवा चैषां समानं सूक्ष्मचूर्णकम्॥ ११॥
द्राक्षादिककषायेण सप्तधा परिभावयेत्।
ततः पोताश्रयं चित्वा वट्यः कार्य्याश्चणोपमाः॥ १२॥
अयं चन्द्रकला नाम रसेन्द्रः परिकीर्त्तितः।
सर्वपैत्तगदध्वंसी वातपित्तगदापहः॥ १३॥

यन्त्रेण। कुक्कुटाण्डरसं कुक्कुटाण्डाभ्यन्तरस्थद्रवांशम्। जीरतोयेन जीरकक्काथेन। आदौ पारदं हिङ्गुलञ्च समभागं गृहीत्वा ऊर्द्धपातनयन्त्रेण पातयेत्, तेन एकीभूतं च तस्मिन् सहिङ्गुलपारदे कुक्कुटाण्डरसादीनामेकैकभागं मेलयेत्। मात्रा च माषमात्रा दातव्या॥ ४—६॥

चन्द्रकलारसे—समगन्धैः सूतताम्राभ्यां तुल्यैः गन्धकैः। केतकीस्तनवारिभिः केतक्याः स्तनवत् प्रतीयमानस्य अंशविशेषस्य क्वाथैः केतकीक्षीरैर्वा। सहदेव्याः बलायाः। रामशीतलिका आरामशीतलिका दाक्षिणात्ये रामशालि इति प्रसिद्धः पत्रशाकविशेष.। तिक्तां पटोलपत्रम्। गुडूचीसत्त्वं गुडूचीसारः। मागधी पिप्पली। शृङ्गाटं "शिङ्गाड़ा" "पानिफल" इति वा ख्यातम्। द्राक्षादिककषायेण

अन्तर्बाह्यमहादाह-विध्वंसनमहाक्षमः।
ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ १४ ॥
कुरुते नाग्निमान्द्यञ्च महातापज्वरं हरेत्।
भ्रमं मूर्च्छां हरत्याशु स्त्रीणां रक्तं महाश्रमम् ॥ १५ ॥
ऊर्द्धाधोरक्तपित्तञ्च रक्तवान्तिं विशेषतः।
मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥ १६ ॥

अथ पटोलकादियोगः।—

सपटोलकहिङ्गुलः सक्षौद्रो रक्तपित्तनुत् ॥ १७ ॥

अथ नवनीतादियोगः।—

नवनीतं सिता लाजा द्राक्षया सह भक्षयेत् ॥ १८ ॥

अथ शिरोलेपः।—

मस्तके च घृतं दद्याद्रक्तपित्तहरं परम् ॥ १९ ॥

अथ द्राक्षादिक्वाथः।—

द्राक्षावासायुतं क्वाथं शर्कराभावितं पिबेत् ॥ २० ॥

"द्राक्षामधूकमधुक लोध्रकाश्मर्यसारिवाः। मुस्तामलकह्रीबेर-पद्मकेशरपद्मकम् ॥ मृणालचन्दनोशीर-नीलोत्पलपरूषकम् ॥" इति वाग्भटोक्तद्राक्षादिक्वाथेन। पीताम्बुं जलम्। आदौ पारदं ताम्रञ्च जलेन सम्मर्द्य गोलकं कृत्वा अग्नौ किञ्चित् प्रतापयेत्, तेन शुष्कीभूतं तमुद्धृत्य तुल्येन गन्धकेन सह कज्जलिकां कुर्य्यात्, ततः मुस्तादीनां पृथक् पृथक् यथायोग्यं स्वरसेन क्वाथेन वा एकैकं दिनं भावयेत, ततः त्रिकादीनां प्रत्येकं सूतसमं चूर्णं तत्र मिश्रयित्वा द्राक्षादिक्वाथेन सप्तधा भावयित्वा च किञ्चित् जलं दत्त्वा चणमात्रां वटीं कुर्य्यात ॥ ७—१६ ॥

पटोलकादियोगे—पटोलं पटोलपत्रचूर्णं हिङ्गुलसमं सक्षौद्रं लिहेत्, केवलो हिङ्गुलर्वा सक्षौद्रेण पटोलपत्ररसेन पिबेत् ॥ १७ ॥

नवनीतादियोगे—सर्वं तुल्यम ॥ १८ ॥

शिरोलेपे—घृतं पुराणं शतधौतं वा ग्राह्यम ॥ १९ ॥

द्राक्षादिक्वाथे—शर्कराभावितं शर्कराप्रक्षेपयुक्तम् ; "शर्कराभावितं पिबेत्" इत्यत्र "पिबेच्च शर्करान्वितम्" इति रसरत्नाकरोक्तपाठान्तरम् ॥ २० ॥

अथ योगद्वयम्।—

वासारसं सिताक्षौद्रैर्लाजान् वा शर्करासमान्।
भक्षयन् रक्तपित्तार्त्तस्तृष्णादाहज्वरं जयेत्॥ २१॥

अथ सितामृता।—

धात्रीचूर्णं सितातुल्यं भक्षयेद्रक्तपित्तनुत्॥ २२॥

[ इति रक्तपित्तचिकित्सा ]।

अथ कासचिकित्सा।—

अथ कासस्य निदानादिकम्।—

दोषाः शोषमनोऽभितापकुपिताः कुर्वन्ति कासं ततः
पित्तं पूतिकफं प्रपीतनयनः पूयोपमं ष्ठीवति।
शीतोष्णेच्छुरकारणेन बहुभुक्स्निग्धप्रसन्नाननः
पार्श्वार्त्त्यल्पबलक्षयाकृतिरपि प्रादुर्भवत्यन्यथा॥ २३॥

अथ अर्कादियोगः।—

मार्क्ततीक्ष्णोऽभ्रकोऽगस्त्य-कासमर्दवरारसैः।
मर्दितो वेतसाम्लेन पिण्डितः कासनाशनः॥ २४॥

अथ रजतयोगः।—

तारे पिष्टशिलां क्षिप्त्वा हरितालाच्चतुर्गुणाम्।
वासागोक्षुरसाराभ्यां मर्दयेत् प्रहरद्वयम्॥ २५॥

वासारसमित्यादियोगद्वये—धात्रीचूर्णम् आमलकचूर्णम्। "लाजान् वा शर्करासमान्" इत्यत्र "वासा वा शर्करासमा" इति रसरत्नाकरोक्तपाठान्तरम्॥२१॥

सितामृतायोगे—सर्वं स्पष्टम्॥ २२॥

रक्तपित्ते कासोपद्रवो भवतीति रक्तपित्तानन्तरं कासचिकित्सितं वक्तुं प्रक्रमन् आदौ तस्य निदानादिकं सङ्क्षेपतः आह, दोषा इति।—शोषः धातुक्षय इत्यर्थः। प्रपीतनयनः अतिपीताभचक्षुः। शीतोष्णेच्छुरकारणम शीतोष्णसेवनकारणाभावेऽपि शीतोष्णसेवनाभिलाषी॥ २३॥

अर्कादियोगे—अर्कः ताम्रम्। तीक्ष्णः तीक्ष्णलौहम्। अगस्त्यः मुनितरुः। पिण्डितः वटीकृतः इत्यर्थः॥ २४॥

प्रस्विन्नो वालुकायन्त्रे गुञ्जाद्वितयसम्मितः ।
कासं त्रिकटुनिर्गुण्डी-मूलचूर्णयुतो हरेत् ॥ २६ ॥

अथ रत्नकरण्डकरसः ।—

भूनागाभ्रकयोः सत्त्वं कान्तहेमाभ्ररूपकम् ।
मुक्ताफलानि रत्नानि ताप्यं वैक्रान्तमेव च ॥ २७ ॥
भस्मीकृतमिदं सर्वं पृथङ्माषमितं मतम् ।
निष्कमात्रामितं शुद्धं राजावर्त्तरजस्तथा ॥ २८ ॥
एतत् सर्वं समं योज्यं मर्दयित्वाऽम्लवेतसैः ।
कृत्वा मूषोदरे कोष्ठ्यां धमेदाकाशदर्शनम् ॥ २९ ॥
शतवारं धमेदेवं मर्दयित्वाऽम्लवेतसैः ।
ततः सञ्चूर्णिते चास्मिन्मुक्ताभस्म द्विशाणकम् ॥ ३० ॥
मरिचं पञ्चशाणेयं क्षिप्त्वा सम्मर्द्य यत्नतः ।
रम्ये करण्डके क्षिप्त्वा स्थापयेत्तदनन्तरम् ॥ ३१ ॥
सोऽयं रत्नकरण्डको रसवरो मध्वाज्यसङ्क्रामणो
हन्याच्छ्वासगदं ज्वरं ग्रहणिकां कासञ्च हिध्मामयम् ।
शूलं शोषमहोदरं बहुविधं कुष्ठञ्च हन्याद्गदान्
बल्यो वृष्यकरः प्रदीपनतमः स्वस्थाचितो वेगवान् ॥ ३२ ॥

रसतरङ्गिणी—तारे रौप्ये । पिष्टशिलां चूर्णमनःशिलाम । अत्र तारतालयोः समत्वं मनःशिलायाश्च तालाच्चातुर्गुण्यं बोद्धव्यम ॥ २५।२६ ॥

रत्नकरण्डकरसे—भूनागाभ्रकयोः सत्त्वं प्राक्प्रदर्शितविधिना ग्राह्यम् । कान्तं कान्तलौहम् । रूपकं रौप्यम । रत्नानि मरकतपद्मरागादीनि यथालाभं ग्राह्याणि । ताप्यं स्वर्णमाक्षिकम् । अम्लवेतसैः अम्लवेतसक्वाथैः । अत्र बहुवचननिर्देशात् बहुशो मर्दनं कार्य्यम् । कोष्ठ्यां कोष्ठिकायन्त्रे । आकाशदर्शनम् अभ्रदर्शनं यावत्, यावत् कालं तन्मध्यस्थमभ्रकं किञ्चिदपि परिदृश्यमानं भवेत् तावद्धमेदित्यर्थः, अभ्रभागे सम्पूर्णतया तत्र मिलिते सति धमननिवृत्तिरिति बोध्यम । पञ्चशाणेयं पञ्चशाणपरिमाणमित्यर्थः, पञ्चशाणशब्दात् स्वार्थे ष्णेयः प्रत्ययः । रम्ये करण्डके मनोज्ञभाजने । मध्वाज्यसङ्क्रामणः मध्वाज्याभ्यां

अथ भूताङ्कुशरसः ।—

शुद्धसूतस्य भागैकं भागैकं शुद्धगन्धकम् ।
भागत्रयं मृतं ताम्रं मरिचं पञ्चभागिकम् ॥ ३३ ॥
मृताभ्रस्य चतुर्भागं भागमेकं विषं क्षिपेत् ।
भूताङ्कुशस्य भागैकं सर्वञ्चाम्लेन मर्दयेत् ॥ ३४ ॥
यामं भूताङ्कुशो नाम माषैकं वातकासजित् ।
अनुपानं लिहेत् क्षौद्रैर्विभीतकफलत्वचः ॥
पित्तकासार्त्तिविश्वासक्षयकासांश्च नाशयेत् ॥ ३५ ॥

अथ बोलबद्धरसः ।—

रसभस्म विषं तुल्यं गन्धकं द्विगुणं मतम् ।
बोलतालकबाह्लीक-कर्कोटीमाक्षिकं निशा ॥ ३६ ॥
कण्टकारीयवक्षार-लाङ्गलीक्षारसैन्धवम् ।
मधूकसारं सञ्चूर्ण्य सप्ताहञ्चाऽऽर्द्रकद्रवैः ॥ ३७ ॥
गुटिकां बदराकारां श्लेष्मकासापनुत्तये ।
भक्षयेद्बोलबद्धोऽयं रसः सश्वासपाण्डुजित् ॥ ३८ ॥

अथाग्निरसः ।—

रसगन्धकपिप्पल्यो हरीतक्यस्त्ववासकम् ।
षडुत्तरगुणं चूर्णं बब्बूलक्वाथभावितम् ॥ ३९ ॥
एकविंशतिवाराणि शोषयित्वा विचूर्णयेत् ।
भक्षयेन्मधुना हन्ति कासमग्निरसो ह्ययम् ॥ ४० ॥

---

सङ्क्रामणम् अवधारणं यस्य तथाभूतः, मधुघृताभ्यां सेवित इत्यर्थः । हिक्कामय हिक्कारोगम् । स्वस्थोचितः सुस्थशरीरेऽपि प्रयोगार्हः ॥ २७—३२ ॥

भूताङ्कुशरसे—भूताङ्कुशः गौरसर्षपः । अम्लेन काञ्जिकेन ॥ ३३—३५ ॥

बोलबद्धरसे—रसभस्म रससिन्दूरम् । बोलः गन्धरसः । बाह्लीकं हिङ्गु । कर्कोटी कर्कोटकम् । निशा हरिद्रा । लाङ्गली "ईशलाङ्गला" इति ख्याता । क्षारः चूलिकालवणम् । अत्र बोलादीनां प्रत्येकमेको भागः ग्राह्यः ॥ ३६—३८ ॥

अथ भृङ्गराजयोगः ।—

भृङ्गराजस्य पत्रन्तु चूर्णितं मधुना सह ।
गोलकं धारयेद्वक्त्रे कासविष्टम्भशान्तये ॥ ४१ ॥

अथ अर्कादियोगः ।—

अर्कैरण्डस्य पत्राणां रसं पीत्वा च कासजित् ॥ ४२ ॥

अथ कासघ्नधूमद्वयम् ।—

दन्तीमूलस्य धूमं वा निर्गुण्ड्या वा पिबेज्जयेत् ॥ ४३ ॥

अथ स्वयमग्निरसः ।—

त्रिकटु त्रिफला चैला जातीफललवङ्गकम् ।
एतेषां समभागानां समः पूर्वरसो भवेत् ॥ ४४ ॥
सञ्चूर्ण्याऽऽलोडयेत् क्षौद्रे भक्ष्यो निष्कद्वयं द्वयम् ।
स्वयमग्निरसो नाम्ना क्षयकासनिकृन्तनः ॥ ४५ ॥

अथ क्षयकासान्तको योगः ।—

इन्द्रवारुणिकामूलं भृङ्गीकृष्णातिलैः सह ।
भक्षयेत् क्षयकासार्त्तो निष्कमात्रं प्रशान्तये ॥ ४६ ॥

[ इति कासचिकित्सा ] ।

अग्निरसे—अक्षं विभीतकम् । षड्क्षगुणं चूर्णम् उत्तरोत्तर भागवृद्ध्या गृहीतं चूर्णषट्कं, तथा च रसस्य एकः गन्धकस्य द्वौ पिप्पल्याः त्रयः हरीतक्याः चत्वारः अक्षस्य पञ्च वासकस्य च षड्भागाः ॥ ३९।४० ॥

भृङ्गराजयोगे—कासविष्टम्भशान्तये कासस्य विष्टम्भः स्तब्धता तच्छान्त्यै शुष्ककासशान्त्यै इत्यर्थः ॥ ४१ ॥

अर्कादियोगे—अर्कपत्रम् अग्नौ किञ्चित् प्रताप्य तद्रसो ग्राह्यः ॥ ४२ ॥

कासघ्नधूमे—दन्तीमूलचूर्णं शरावसम्पुटस्थे निर्धूमाङ्गारे निधाय सच्छिद्रशरावेणाच्छाद्य छिद्रमुखे धूमनलिकाञ्च दत्त्वा धूमः पातव्यः, वर्त्तिवत् कृत्वा वा पातव्यः इति बोद्धव्यम् । एवं निर्गुण्ड्या अपि । जयेदित्यत्र कासमिति शेषः ॥ ४३ ॥

स्वयमग्निरसे—पूर्वरसः पूर्वोक्तः अग्निरसः, स च समः त्रिकट्वादिभिस्तुल्यः, तथा —[illegible]लिखितरसादीनां षण्णां मिलित्वा त्रिकट्वादिसमानं त्रिकट्वादेश्च

अथ श्वासचिकित्सा ।—

अथ श्वासस्य सम्प्राप्तिः ।—

श्लेष्मोपरुद्धगमनः पवनोऽतिदुष्टः
सन्दूषयन्ननु जलान्नवहाश्च नाडीः ।
आमाशयोद्भवमिमं विदधात्युरःस्थः
श्वासञ्च वक्रगमनो हि शरीरभाजाम् ॥ ४७ ॥

अथ ऊर्द्ध्वश्वासारिः ।—

इन्द्रवारुणिकामूलं देवदारु कटुत्रयम् ।
शर्करासहितं खादेदूर्द्ध्वश्वासप्रशान्तये ॥ ४८ ॥

अथ सूर्य्यावर्त्तरसः ।—

सूतार्द्धं गन्धकं मर्द्यं यामैकं कन्यकाद्रवैः ।
द्वयोः समं ताम्रपत्रं पूर्वकल्केन लेपयेत् ॥ ४९ ॥

प्रत्येकं समभागं गृहीत्वा चीद्रेण मर्दयेत ; एवञ्च विकट्वादीनां प्रत्येकमेकैकभागः अग्निसोक्तानां रसादीनां चत्वाश्च प्रत्येकं सार्द्धैकभागो ग्राह्यः ॥ ४४ ४५ ॥

त्र्यश्वासान्तकयोगे—इन्द्रवारुणिका गौरत्वक्कर्कटी । भृङ्गी अतिविषा । कृष्णा पिप्पली । अत इन्द्रवारुणिकादीनां प्रत्येकं समभागः ॥ ४६ ॥

तुल्यनिदानत्वात् प्राणोदानदुष्टिसाधर्म्याच्च कासानन्तरं श्वासचिकित्सितं वक्तुं चिकित्साया विशिष्टसम्प्राप्तिज्ञानमूलकत्वात् आदौ सम्प्राप्तिमाह, श्लेष्मेति ।— श्लेष्मोपरुद्धगमनः कफावृतमार्गः, अत एव अतिदुष्टः उरःस्थः वक्षःश्रितः पवनः प्राणवायुः, तस्य उरःस्थानत्वात् ; वक्रगमनः प्रतिलोमगामी ऊर्द्धगामीत्यर्थः, भवतीति शेषः, अनु पश्चात् जलान्नवहाः नाडीः उदकवाहिन्यः अन्नवाहिन्यश्च शिराः सन्दूषयन् श्वासं विदधाति । शरीरभाजां देहिनाम् इमं श्वासम् आमाशयोद्भवम् आमाशयसमुद्भूतं, जानीयादिति शेषः ॥ ४७ ॥

ऊर्द्धश्वासारियोगे—शर्करासहितं शर्कराप्रक्षेपयुक्तम् ; तेन च क्वाथेनायं योगो बोध्यः ॥ ४८ ॥

सूर्य्यावर्त्तरसे—सूतः अर्द्धो यत्र तादृशं गन्धकं, तेन सूतस्य एको भागः गन्धकस्य च भागद्वयम् ; अथवा—सूतार्द्धं सूतः अर्द्धं समांशः यत्र तादृशम् ; "अर्द्धं समेंऽशके" इत्यमरः ; तेन सूतगन्धकयोः समभागः, न तु सूतस्य अर्द्धं गन्धकं,

दिनैकं हण्डिकायन्त्रे पक्वमादाय चूर्णयेत् ।
सूर्य्यावर्त्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत् ॥ ५० ॥

अथ सौगन्धिकयोगः ।—

गन्धकं मरिचं साज्यं पिबेच्छ्वासकफापहम् ॥ ५१ ॥

अथ शिलादिचूर्णम् ।—

शिला हिङ्गु विडङ्गञ्च मरिचं कुष्ठसैन्धवम् ।
मध्वाज्याभ्यां लिहेत् कर्षं श्वासकासकफापहम् ॥ ५२ ॥

अथ सूतपञ्चकम् ।—

सूतः षोड़श तत्समो दिनकरस्तस्यार्द्धभागो बलिः
सिन्धुस्तस्य समः सुसूक्ष्ममृदितः षट् पिप्पलीचूर्णितः ।
जम्बीरस्वरसेन मर्दितमिदं तप्तं सुपक्वं भवेत्
कासश्वासकगुल्मशूलजठरं पाण्डुं लिहन्नाशयेत् ॥ ५३ ॥

अथ श्वासारिवटकः ।—

साधारणन्तु वटकं वक्ष्यामि शृणु तत्त्वतः ।
पारदं गन्धकञ्चैव पलमेकं पृथक् पृथक् ॥ ५४ ॥
पलत्रयं त्रिकटुकं वङ्गमेकपलं क्षिपेत् ।
सर्वमेकत्र संयोज्य दिनानि त्रीणि मर्दयेत् ॥ ५५ ॥

---

तन्त्रान्तरसंवादात्, तथा च रसेन्द्रसारसङ्ग्रहे—"गन्धकं सूतकं मर्द्यं यामैकं कन्यकाद्रवैः" इति । पूर्वकल्केन रसगन्धककल्केन । हण्डिकायन्त्रे स्थालीयन्त्रे ; तल्लक्षणञ्च यन्त्राध्याये अनुसन्धेयम् ॥ ४९।५० ॥

सौगन्धिकयोगे—साज्यं सघृतम ॥ ५१ ॥

शिलादिचूर्णे—शिला शिलाजतु ॥ ५२ ॥

सूतपञ्चके—तत्समः सूतसमः दिनकरः ताम्रम् । तस्यार्द्धभागो बलिः तस्य मिलितसूतताम्रस्य अर्द्धभागः गन्धकः, तेन सूतताम्रगन्धकानां प्रत्येकं समभागः ; यद्वा—"अर्द्धं समेंऽशके" इत्यमरवचनात् अर्द्धभागः समभागः । षट्पिप्पलीचूर्णितः पिप्पलीचूर्णस्य षड्भागाः । तप्तम् अग्निसंयोगेन किञ्चिदुत्तप्तीकृतम् । सुपक्वं सुनिष्पन्नमित्यर्थः ॥ ५३ ॥

मूत्रेण च तथा त्रीणि दिनानि परिमर्दयेत्।
अक्षप्रमाणवटकं छायाशुष्कन्तु कारयेत्॥ ५६॥
नित्यमेकन्तु वटकं दिनानि त्रिंशदेव च।
श्वासकासज्वरहरमग्निमान्द्यारुचिप्रणुत्॥ ५७॥

अथ भार्गीसारगुडिका।—

रसभागो भवेदेको गन्धको द्विगुणो मतः।
त्रिभागा पिप्पली ग्राह्या चतुर्भागा हरीतकी॥ ५८॥
बिभीतः पञ्चभागस्तु वासा षड्गुणिता भवेत्।
भार्गी सप्तगुणा ग्राह्या सर्वं चूर्णं प्रकल्पयेत्॥ ५९॥
बब्बूलक्वाथमादाय भावयेदेकविंशतिः।
विभीतकप्रमाणेन मधुना गुटिकां चरेत्॥
एकैकां भक्षयेत् प्रातः श्वासकासनिवृत्तये॥ ६०॥

अथ नीलकण्ठः।—

सूतं शुल्वं सुलौहं बलिममृतयुतं त्रित्रिकं रेणुकाब्दं
गण्डीरं केशराग्निं द्विगुणगुड़युतं मर्दयित्वा समस्तम्।
कुर्य्यात् कोलास्थिमात्रान् सुरुचिरवटकान् भक्षयेत् प्राग्दिनादौ
पथ्याशी सर्वरोगान् हरति च नितरां नीलकण्ठाभिधानः॥६१॥

अथ श्वासकासकरिकेशरी रसः।—

तारताम्ररसपिष्टिकाशिला-गन्धतालसमभागिकं रसैः।
आटरूषसुरसार्द्रसम्भवैर्मर्दय प्रकुरु गोलकं ततः॥ ६२॥

---

श्वासारिवटके—फलत्रयं त्रिकटुकमिति मिलित्वा। मूत्रेण गोमूत्रेण॥ ५४—५७॥

भार्गीसारगुडिकायां—भार्गी ब्रह्मयष्टिका॥ ५८—६०॥

नीलकण्ठे—शुल्वं ताम्रम्। सुलौहं कान्तलौहम्। बलिं गन्धकम। अमृतं विषम्। त्रित्रिकं त्रिकटु त्रिफला त्रिमदश्चेति त्रिकत्रयम्। गण्डीरं शमठम्। केशराग्निं नागकेशरं चित्रकञ्च। द्विगुणगुडयुतमिति एकभागापेक्षया द्विगुणो गुडः॥ ६१॥

श्वासकासकरिकेशरीरसे—तारं रौप्यम्। रसपिष्टिका "अर्कांशतुल्यात् रसतात्पगन्धात्" इत्यादिना अष्टमाध्याये उक्तः पारिभाषिकरसविशेषः। शिला

मृत्स्नया च परिवेष्ट्य गोलकं याममुग्ममथ भूधरे पचेत्।
गन्धकेन कुरु तत्समं ततश्चाऽऽटरूषकटुकैश्च भावयेत् ॥६३॥
श्वासकासकरिकेशरो रसो वल्लमस्य परिसेवयेद्बुधः ॥ ६४ ॥

अथ सूर्य्यरसः ।—

रसगन्धकताम्राभ्रं कणाशुण्ठूषणं समम्।
भूतमेकं विषञ्चैकं सूर्य्यः कासादिनाशनः ॥ ६५ ॥

[ इति श्वासचिकित्सा ]।

## अथ हिक्काचिकित्सा ।—

अथ भार्गीश्वररसः ।—

रसगन्धकधान्याभ्र-तालताप्योपलं क्रमात्।
भागवृद्धं वचाकुष्ठ-हरिद्राक्षारचित्रकैः ॥ ६६ ॥
सपाठालाङ्गलीव्योष-सैन्धवाक्षविषैः समम्।
भावितं भृङ्गनीरेण हिक्काविस्वर्य्यकासनुत् ॥ ६७ ॥

अथ कज्जलयोगः ।—

पक्वताम्रे रसः पिष्टो बलिना हिक्किनां हितः ॥ ६८ ॥

---

मनःशिला। आटरूषः वासकः। मुरमा तुलसी। "गन्धकेन" इत्यत्र "गोलकेन" इति पाठे—तदर्थन्तु गोलकेन समं तुल्यं गोलाकारमित्यर्थः। तारादिकं समभागम् आटरूषादीनां रसैर्मर्दयित्वा गोलकं कारयेत्, ततस्तत् मूषायां संस्थाप्य मृत्तिकया परिवेष्ट्य च भूधरे यन्त्रे प्रहरद्वयं पचेत्, ततश्च वह्निर्निःसार्य्य गन्धकेन एकभागेन समं मिश्रयित्वा वासारसेन त्रिकटुक्वाथेन च सप्तकृत्वः भावयेत ॥ ६२—६४ ॥

सूर्य्यरसे—ऊषणं मरिचम्। भूत सुतकम्। विषम् अमृतम्। सूर्य्यः सूर्य्योरस इत्यर्थः ॥ ६५ ॥

तुल्यनिदानचिकित्सितत्वात् श्वासानन्तरं हिक्काचिकित्सितं विवक्षुः भार्गीश्वररसमाह, रसेति।—उपलं शिला, मनःशिलेति यावत्। रसादीन्युपलान्तान्युत्तरोत्तरम् एकैकभागवृद्ध्या ग्राह्याणि। वचादीनां प्रत्येकमेकभागतुल्यता। अक्षं सौवर्चलम्; सैन्धवसाहचर्य्यात् ॥ ६६।६७ ॥

कज्जलयोगे—पक्वताम्रे नेपालदेशजताम्रपात्रे; शीघ्रत्वघनघातक्षमत्वादिगुणयुक्तत्वात् तस्य पक्वत्वं बोद्धव्यम्। बलिना गन्धकेन। हिक्किनां हिक्किनाम् ॥ ६८ ॥

अथ शिलापूतरसः ।—

चूर्णं पाठेन्द्रवारुण्योर्भाण्डे दत्त्वाऽथ कुनटीम् ।
तत्पृष्ठे शुद्धसूतन्तु कुनट्यंशं प्रदापयेत् ॥ ६९ ॥
सूतार्द्धं कुनटीचूर्णं तस्यार्द्धं पूर्वमूलिका ।
चूर्णं दत्त्वा पचेच्चुल्यां यामाष्टं मृदुवह्निना ॥
शिलापूतो रसो नाम हन्ति हिक्कां त्रिगुञ्जकः ॥ ७० ॥

अथ रास्नादिक्षीरम् ।—

क्वाथं रास्नाबृहत्यग्नि-बलाद्दुग्धैश्च पाययेत् ॥ ७१ ॥

अथ हिक्काघ्नधूमः ।—

हिक्किनं पाययेद्धूमं पत्रैः शिखिनिशोद्भवैः ॥ ७२ ॥

[ इति हिक्काचिकित्सा ] ।

## अथ कासश्वासहिक्कास्वरभेदचिकित्सा ।—

अथ पर्पटीरसः ।—

रसं द्विगुणगन्धेन मर्दयित्वा सभृङ्गकम् ।
लोहपात्रे घृताभ्यक्ते द्रावितं बदराग्निना ॥ ७३ ॥
ऊर्द्ध्वाधो गोमयं दत्त्वा कदल्याः कोमले दले ।
स्निग्धे पटे ह्ययोदर्व्या पर्पटाकारतां नयेत् ॥ ७४ ॥
लोहपात्रे विनिक्षिप्ता लोहपर्पटिका भवेत् ।
ताम्रपात्रे विनिक्षिप्ता ताम्रपर्पटिका भवेत् ॥ ७५ ॥

---

शिलापूतरसे—कुनटी मनःशिला । पूर्वमूलिका पाठेन्द्रवारुणीमूलम् । भाण्डमध्ये पाठेन्द्रवारुण्योर्मूलचूर्णं सूतसमं संस्थाप्य तदुपरि मनःशिलाचूर्णं तत्समं दापयेत, ततश्च मनःशिलासमं शुद्धसूतं तदुपरि विन्यस्य सूतार्द्धेन मनःशिलाचूर्णेन छादयित्वा च पाठादि-चूर्णं कुनट्यर्द्धं दत्त्वा भाण्डमुखं निरुध्य च मृद्वग्निना दिनमेकं साधयेत् ॥ ६९।७० ॥

रास्नादिक्षीरे—अग्निः चित्रकः । क्षीरपाकयोगोऽयम् ; तेन रास्नादीनां बलान्तानां मिलित्वा दुग्धादष्टमांशं गृहीत्वा क्षीरपाकविधिना पक्त्वा च पाययेत् इति ॥ ७१ ॥

हिक्काघ्नधूमे—शिखी चित्रकः । निशा हरिद्रा ॥ ७२ ॥

पर्पटीरसे—सभृङ्गकं भृङ्गराजरससहितम् । बदराग्निना बदरकाष्ठाङ्गारेण ।

विषपादञ्च युञ्जीत तत्साध्येष्वामयेषु च ।
सुरसाया जयन्त्याश्च कन्यकाटरूषयोः ॥ ७६ ॥
त्रिफलाया मुनेर्भार्ङ्ग्या मुण्ड्यास्त्रिकटुचित्रयोः ।
भृङ्गराजस्य वह्नेश्च प्रत्यहं द्रवभावितम् ॥ ७७ ॥
आर्द्रकस्य रसेनापि सप्तधा भावयेत् पुनः ।
अङ्गारैः स्वेदयेदीषत् पर्पटीरसमुत्तमम् ॥ ७८ ॥
गुञ्जाष्टकं ददीतास्य ताम्बूलीपत्रसंयुतम् ।
पिप्पलीदशकैः क्वाथं निर्गुण्ड्याश्चानुपाययेत् ॥ ७९ ॥
त्रिकण्टकस्य मूलानि शुण्ठीं सङ्कुद्य निक्षिपेत् ।
अजाक्षीरे सनीरार्द्धे यावत् क्षीरं विपाचयेत् ॥ ८० ॥
तत् क्षीरं पाययेद्रात्रौ सकणं भोजनेऽपि च ।
कुष्माण्डं वर्जयेच्चिञ्चां वृन्ताकं कर्कटीमपि ॥ ८१ ॥
आरनालञ्च तैलञ्च संसर्गञ्च विवर्जयेत् ।
मासत्रयञ्च सेवेत कासश्वासनिवृत्तये ॥ ८२ ॥
स हिङ्गुजीरकव्योषैः शमयेत् ग्रहणीं रसः ।
दशमूलाम्भसा वात-ज्वरं त्रिकटुना कफम् ॥ ८३ ॥
ज्वरं मधुकसारेण पञ्चकोलेन सर्वजम् ।
यक्ष्माणं मधुपिप्पल्या गोमूत्रेण गुदाङ्कुरान् ॥ ८४ ॥
शूलमेरण्डतैलेन पाण्डुशोफं सगुग्गुलुः ।
कुष्ठानि भृङ्गभल्लात-वाकुचीपञ्चनिम्बकैः ॥ ८५ ॥
धत्तूरबीजसंयोगात् महोन्मादविनाशनो ।
अपस्मारं निहन्त्याशु व्योषनिम्बुदलैः सह ॥ ८६ ॥

विषपादं दातव्यपर्पटीमात्रामपेक्ष्य विषस्य पादांशम् । तत्साध्येषु आमयेषु विषसाध्येषु रोगेषु । सुरसायाः तुलस्याः । मुनेः वकपुष्पस्य । मुण्ड्याः मुण्डिर्य्याः । वह्नेः भल्लातकस्य । त्रिकण्टकस्य गोक्षुरकस्य । पञ्चकोलेन सर्वजं पञ्चकोल-क्वाथानुपानेन त्रिदोषजं ज्वरं शमयेत् । गुदाङ्कुरान् अर्शांसि । वाकुची सोम-

स्तनन्धयशिशूनान्तु नितरां पर्पटी हिता।
पथ्याच्चचूर्णादिवशात् व्याधींश्चान्यान् सुदुस्तरान् ॥ ८७ ॥
सजातीफलशीतोदं योजयेत् पर्पटीरसम्।
पित्ताजीर्णे शिरश्चास्य शीततोयेन सेचयेत् ॥ ८८ ॥

अथ कफरोगे क्रियासूत्रम्।—

नस्यं निष्ठीवनं धूमं तीक्ष्णं वमनरेचनम्।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥
चिरकालस्थितं मद्यं योजयेत् कफरोगिणे ॥ ८९ ॥

अथ मन्थानभैरवः।—

मृतसूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम्।
सैन्धवं गन्धकं तालं कटुकं चूर्णयेत् समान् ॥ ९० ॥

राजी। पञ्चनिम्बकैः निम्बस्य त्वक्पत्रपुष्पफलमूलरूपपञ्चभिरङ्गैः। स्तनन्धयशिशूनां स्तन्यपशालानाम्। सजातीफलशीतोदं जातीफलस्य शीतकषायेण सह। अयमर्थः,—द्विगुणगन्धेन सह रसं सम्मर्द्य कज्जलीं कुर्य्यात्, ततो भृङ्गराजरसेन मर्दयित्वा वादरवह्निस्थे घृताक्ते लौहपात्रे तां निधाय द्रावयेत्। कदलीपत्रस्थ ऊर्द्धमधस्य आर्द्रगोमयपिण्डं संस्थाप्य पिण्डोपरि घृताक्तं वसनखण्डं दापयेत, ततो द्रवीभूतां तां वस्त्रोपरि पातयित्वा लौहदर्व्या संपीड्य पर्पटाकारतां नयेत। विषसाध्येषु ज्वरातीसारादिषु पर्पटीभागमपेक्ष्य पादिकविषेण संयोज्य, अन्यत्र च केवलामेव तां सुरसादिभिरेकैकदिनम् आर्द्रकस्वरसेन च सप्ताहं भावयित्वा निर्धूमाङ्गाराग्नौ किञ्चित् प्रताप्य च स्थापयेत्। कासे श्वासे च पर्णेन सह पाययित्वा सपिप्पलीदशकायाः निर्गुण्ड्याः मिलित्वा कर्षमात्रायाः क्वाथमनुपाययेत्। रात्रौ च त्रिकण्टकमूलशुण्ठीकल्काभ्याम् षडगुणमजाक्षीरं क्षीरशेषं पक्त्वा पिप्पलीचूर्णं प्रक्षिप्य पाययेत, एवं भोजनकालेऽपि। कुष्माण्डादिकञ्च निरामयं यावत् वर्जयेत। ताम्रभाजने पक्त्वा ताम्रदर्व्या च पीडिता इयमेव ताम्रपर्पटिका भवेत् ॥ ७२—८८ ॥

कफरोगे क्रियासूत्रमाह, नस्यमिति।—चिरकालस्थितं मद्यं पुरातनं सुरासवादिकं, "पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः" इत्युक्तेः पुरातनस्यैव तस्य गुणवत्त्वात् ॥ ८९ ॥

मन्थानभैरवरसे—मृतसूतं रससिन्दूरम्। कटुकं त्रिकटु। पुष्करमूलाभावे सर्वत्र

देवदालीपुनर्नव्योर्निर्गुण्डीमेघनादयोः ।
तिक्तकोशातकीद्रावैर्दिनैकं मर्दयेद्दृढम् ॥ ९१ ॥
माषमात्रं लिहेत् क्षौद्रे रसं मन्थानभैरवम् ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ॥ ९२ ॥

अथ गन्धपाषाणयोगः ।—

कर्षैकं गन्धकं शुद्धं घृतेनोष्णोदकैः पिबेत् ।
कफं हन्ति—"

अथ कफे भेषजविशेषनिर्देशः ।—

"—अथवा क्षौद्रैः पञ्चवक्त्ररसः खलु ॥ ९३ ॥

अथ विश्वादिवटिका ।—

विश्वादित्रिक-निर्गतद्रवनिशा-कीरप्रियोत्थं दलं
नीलग्रीवगलालयं सुरपतेस्तार्त्तीयनेत्राभिधम् ।
विद्वत्पञ्चवती क्रमिप्रतिभटं निर्गुण्डिकावारिणा
तुल्यांशाश्चणकप्रमाणवटिकाः सश्वासकासापहाः ॥ ९४ ॥

[ इति कासश्वासहिक्कास्वरभेदचिकित्सा ] ।

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रक्तपित्त-कासश्वासहिक्कावैस्वर्यचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

शुद्धं ग्राह्यम् । देवदाली हस्तिघोषकः । मेघनादः तण्डुलीयः । तिक्तकोशातकी तिक्तघोषा । देवदाल्यादीनां रसेन एकैकदिनं मर्दनं कार्यम ॥ ९०—९२ ॥

गन्धपाषाणयोगे—घृतोष्णोदकाभ्यां शुद्धगन्धककर्षं पिबेत् । कफरोगे भेषजविशेषं निर्दिशति, अथवेति ।—पञ्चवक्त्ररस' ज्वराधिकारोक्तः ग्राह्यः ॥ ९३ ॥

विश्वादिवटिकायां—विश्वादित्रिकं त्रिकटु । निर्गतद्रवनिशा निर्गतद्रवा उत्स्वेदनेन द्रवांशपरिहीना हरिद्रा । कीरप्रियोत्थं दलं कीरप्रियः कीरेष्टः निम्बवृक्ष इत्यर्थः, तत्पत्रम् । नीलेति ।—नीलग्रीवस्य नीलकण्ठस्य हरस्य गले कण्ठदेशे आलयो यस्य तादृशं विषमित्यर्थः । सुरपतेरिति ।—सुरपतेः हरस्य, तृतीयनेत्रसादृश्यात् सुरपतिशब्देनात्र हरार्थता एव बोद्धव्या, तार्त्तीयनेत्रं ललाटस्थतृतीयचक्षुरेव अभिधा यस्य तं वह्निमित्यर्थः, चित्रकमिति यावत् । विद्वदिति ।—विदुषां वैद्यानां

*

# अथ चतुर्दशोऽध्यायः ।

## अथ राजयक्ष्मादिचिकित्सनम् ।

अथ राजयक्ष्मलक्षणम् ।—

अग्निमान्द्यं ज्वरं शैत्यं वान्तिः शोणितपूययोः ।
सत्त्वहानिश्च दौर्बल्यं रोगराजस्य लक्षणम् ॥ १ ॥

अथ कनकसुन्दरः ।—

रसस्य तुल्यभागेन हेमभस्म प्रकल्पयेत् ।
तालकं गन्धकं तुत्थं माक्षिकं रसकं शिलाम् ॥ २ ॥
रससाम्येन युञ्जीत तुत्थं भस्मीकृतं न्यसेत् ।
वङ्गौ भस्मीकृतश्चैव मयूरकसुतुल्यकम् ॥ ३ ॥
किञ्चिट्टङ्कणकं दत्त्वा मार्जारस्य विशा युतम् ।
प्रथमं पुटयेद्दध्ना द्वितीयं मधुना सह ॥ ४ ॥

पुत्रः समुद्रः यत्र अस्तीति सा विद्रत्पुञ्जवती बाला तस्या वैद्यमातृत्वात् । क्रिमि-प्रतिभटं क्रिमिशत्रुं, विडङ्गमित्यर्थः ॥ ९४ ॥

इति रसरत्नसमुच्चयबोधिन्यां त्रयोदशोऽध्यायः ॥ १३ ॥

———

यक्ष्मरूपेषु कासस्वरभेदरक्तागमादिदर्शनात् रक्तपित्तेऽपि तत्तल्लक्षणसद्भावेन उभयोः साम्यात् तथा दूरूपचरितरक्तपित्तात् यक्ष्मोत्पत्तिसम्भावनया च रक्तपित्तादि-चिकित्सितानन्तरं राजयक्ष्मादिचिकित्सितं वक्तुं चतुर्दशाध्यायमारभते ; तत्रादौ यक्ष्मणो लक्षणमाह, अग्निमान्द्यमिति ।—सत्त्वहानिः स्वभावविपर्ययः । रोगराजस्य राजयक्ष्मणः । क्वचित् एतच्छ्लोकानन्तरं "पञ्चामृतरसः । रसस्य भस्मना युक्तं लोहं कृष्णाभ्रकं मृतम् । शिलाजतुशर्कैशीरं समभागञ्च कल्पयेत ॥ एष पञ्चामृतो नाम रोगराजनिकृन्तनः । पिप्पलीमधुसर्पिर्भिः प्रयोज्यो भिषजा द्रुतम् ॥" इत्यधिकः पाठः ॥ १ ॥

कनकसुन्दरे—"रसस्य तुल्यभागेन" इत्यत्र "रसस्य तुर्य्यभागेन" इति रसेन्द्रसारे पाठः । रसकं खर्परम् । शिलां मनःशिलाम् । रससाम्येन युञ्जीत इति छेदः, तेन तालकादीनां प्रत्येकं रससमत्वम् । तुत्थादीनां विशेषणोपक्रममाह, तुत्थं

तालकं शोधयेदग्रे कुष्माण्डक्षीरपाचनात् ।
तैले पचेत्ततः सम्यक् चूर्णे वा परिशोधयेत् ॥ ५ ॥
गन्धकं शोधयेद्दुग्धे रसकं नरवारिणा ।
माक्षिकं सिन्धुसंयुक्तं वीजपूररसे पचेत् ॥ ६ ॥
जयन्तीद्रवसम्पिष्टां शिलां तत्रैव पाचयेत् ।
एकीकृत्य ततः सर्वमर्कक्षीरेण मर्दयेत् ॥ ७ ॥
जयन्तीभृङ्गराजाभ्यां वासापाठाक्रशानुभिः ।
अगस्तिलाङ्गलीभ्याञ्च प्रत्येकं दिवसं शनैः ॥ ८ ॥
ततस्तु गोलकं बद्धा पचेत् पूर्ववदाहृतः ।
चूर्णयित्वा ततः सम्यक् भावयेदार्द्रकाम्बुना ॥ ९ ॥
सप्तधा व्योषनिर्य्यासे रसः कनकसुन्दरः ।
गुञ्जाद्वयं त्रयं वाऽस्य राजयक्ष्मापनुत्तये ॥ १० ॥
मधुना पिप्पलीभिश्च मरिचैर्वा घृतान्वितैः ।
लेहयेद्रोगिणं वैद्यो वयोबलविशेषवित् ॥ ११ ॥
जयपालरजोभिर्वा शुण्ठ्या गव्यघृताक्तया ।
दद्यीत शूलिने प्राज्ञो गुल्मिने च विशेषतः ॥ १२ ॥
कादिवर्ज्यं चरेत् पथ्यं हृद्यं बल्यञ्च पूर्ववत् ।
सन्निपाते दद्यीतैनमार्द्रकद्रवसंयुतम् ॥
गुड़ूचीत्रिफलाक्वाथैः संस्कृतो गुग्गुलुर्वरः ॥ १३ ॥

भस्मीकृतमिति ।—मयूरकण्ठतुल्यकं मयूरग्रीवाभं तुल्यकम् । मार्जारस्य विशा विडालपुरीषेण, मयूरग्रीवाभं तुत्थं तुल्येन विडालपुरीषेण टङ्कणपादेन च सह मिश्रयित्वा दध्ना सह सम्मर्द्य प्रथमपटं दद्यात्, ततः पुनश्च ताभ्यां सह सञ्चीय मधुना सम्मर्द्य द्वितीयपटं दद्यात् । हरितालशोधनमाह, तालकमिति ।—कुष्माण्डक्षीर-पाचनात् कुष्माण्डसलिले पाकात ; "नीरक्षीराम्बुशम्बरम्" इत्यमरः । तैले तिल-तैले । चूर्णे चूर्णोदके, वा-शब्दोऽत्र चाप्यर्थे, चूर्णोदकेऽपीत्यर्थः ; तालकं कुष्माण्डसलिलादिषु दोलायन्त्रे यामं पाचयेत । नरवारिणा नरमूत्रेण खर्परं सप्ताहं त्रिदिनं वा भावयित्वा ग्राह्यम् । तत्रैव जयन्तीद्रवे एव । कृशानुः

अथ राजमृगाङ्कः।—

रसभस्म त्रयो भागा भागैकं हेमभस्मकम्।
मृततास्रस्य भागैकं शिलागन्धकतालकम्॥ १४॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत्।
वराटान् पूरयेत्तेन अजाक्षीरेण टङ्कणम्॥ १५॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तान्निरोधयेत्।
शुष्कं गजपुटे पच्याच्चूर्णयेत् स्वाङ्गशीतलम्॥ १६॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः।
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः॥
सघृतैर्दापयेद्वाऽथ रोगराजप्रशान्तये॥ १७॥

अथ शङ्खेश्वरः।—

शङ्खस्य वलयान्निष्कं चतुर्निष्कं वराटकम्।
निष्कार्द्धं नीलतुत्थस्य सर्वतुल्यन्तु गन्धकम्॥ १८॥
गन्धतुल्यं मृतं नागं नागतुल्यं मृतं रसम्।
टङ्कणं मृततुल्यं स्यात्सर्वं पाच्यं मृगाङ्कवत्॥
राजयक्ष्महरः सोऽयं नाम्ना शङ्खेश्वरो मतः॥ १९॥

चित्रकः। अगस्तिः वकपुष्पवृक्षः, तस्य पत्रं ग्राह्यम्। लाङ्गली "ईशलाङ्गला" इति ख्याता। गुडूचीति।—गुडूचीत्रिफलाक्काथे दोलायन्त्रे शुद्धः गुग्गुलुरस्मिन् प्रयोगे हितः॥ २—१२॥

राजमृगाङ्के—रसभस्म रससिन्दूरम्॥ १४—१७॥

शङ्खेश्वरे—शङ्खस्य वलयात् वलयाकारशङ्खात् शङ्खस्य मुखदेशादित्यर्थः, तस्य आवर्त्तमयत्वेन वलयाकारतया परिदृश्यमानत्वात्; "शाँकेर मुटो" इति भाषा। निष्कं शाणः। नीलतुत्थस्य मयूरकण्ठाभतुत्थस्य। टङ्कणं मृततुल्यं मृतरसतुल्यमित्यर्थः; "मृततुल्यम" इत्यत्र "रसतुल्यम" इति पाठकल्पना साध्वी। गन्धकादिटङ्कणान्तानां चतुर्णां समभागो बोध्यः॥ १८।१९॥

अथ मृगाङ्कपोटली।—

शङ्खनाभिं गवां क्षीरैः पेषयेन्निष्कषोडश।
तेन मूषा प्रकर्त्तव्या तन्मध्ये भस्मसूतकम्॥ २०॥
निष्कार्द्धं गन्धकात्त्रीणि चूर्णीकृत्य विनिक्षिपेत्।
रुद्ध्वा तद्वेष्टयेद्वस्त्रे मृत्तिकां लेपयेद्बहिः॥ २१॥
शोष्यं गजपुटे पश्चान्मूषया सह चूर्णयेत्।
गुञ्जैकमनुपानेन क्षयं हन्ति मृगाङ्कवत्॥ २२॥

अथ मातुलुङ्गादियोगः।—

मातुलुङ्गस्य मूलानि लाजचूर्णं ससैन्धवम्।
पिप्पलीमधुना युक्तं खादेद्वान्तिप्रशान्तये॥ २३॥

अथ रजन्यादियोगः।—

रजनीशङ्खपूगञ्च निष्कैकं वान्तिनाशनम्॥ २४॥

अथ सौभाग्ययोगः।—

निष्कार्द्धं टङ्कणं वाऽथ काकमाचीद्रवैः पिबेत्॥ २५॥

अथ सुगन्धायोगः।—

सुगन्धां वा पिबेत् खादेत् सर्ववान्तिप्रशान्तये॥ २६॥

---

मृगाङ्कपोटल्या—निष्कषोडश अष्टतोलकम्। गन्धकात् त्रीणि निष्काणि। मूषया सह चूर्णयेदिति शङ्खनाभिकृतमूषया सहैव औषधं चूर्णयेत्। मृगाङ्कवदनुपानेन इति राजमृगाङ्कस्य यदनुपानमुक्तं, तेनैवानुपानेन॥ २०—२२॥

यक्ष्मणि कासवेगेन वान्तिर्जायते रक्तवान्तिश्च भवेत्, अतः तत्प्रशमनार्थं कतिपयान् योगान् उपदिदिक्षुरादौ मातुलुङ्गादियोगमाह, मातुलुङ्गस्येति।—मातुलुङ्गमूलादीनां चूर्णं प्रत्येकं समभागं गृहीत्वा मधुना सह लिह्यात्॥ २३॥

रजन्यादियोग—रजनी हरिद्रा। शङ्खं शङ्खभस्म। पूगं गुवाकः, रजन्यादित्रयाणां मिलित्वा निष्क[illegible]मम॥ २४॥

सौभाग्य[illegible]—वा-शब्दः पूर्वयोगापेक्षया बोध्यः॥ २५॥

सुगन्धायो[illegible] सुगन्धा सुगन्धतृणभेदः। पिबेत् खादेद्वा इति सुगन्धाया रसं पिबेत् फलं वा खादेत्॥ २६॥

अथ रक्तवान्तिहरो योगः।—

अलक्तकरसं क्षौद्रे रक्तवान्तिहरं पिबेत्॥ २७॥

अथ मृगाङ्कपोटलीरसः।—

द्विनिष्कं भस्मसूतस्य निष्कैकं स्वर्णभस्मकम्।
शुद्धगन्धकनिष्कौ द्वौ चूर्णयित्वा चित्रकद्रवैः॥ २८॥
द्वियामान्ते विशोष्याथ तेन पूर्य्या वराटिकाः।
वराटान् मृण्मये भाण्डे रुद्ध्वा गजपुटे पचेत्॥ २९॥
स्वाङ्गशीतं विचूर्ण्याथ पोटलीं हेमगर्भिताम्।
मृगाङ्कवच्चतुर्गुञ्जं भक्षितं राजयक्ष्मनुत्॥ ३०॥

अथ यक्ष्मणि औषधविशेषसेवनोपदेशः।—

स्वयमग्निरसं खादेत्त्रिनिष्कं राजयक्ष्मनुत्॥ ३१॥

अथ पञ्चामृतरसः।—

भस्म सूताभ्रलोहानां शिलाजतु विषं समम्।
गुडूचीत्रिफलाक्वाथैः संस्कृतं गुग्गुलुं तथा॥ ३२॥
मृतं नेपालताम्रञ्च सूतस्थाने नियोजयेत्।
एकीकृत्य द्विगुञ्जं तद्भक्षयेद्राजयक्ष्मनुत्॥
पञ्चामृतरसो नाम ह्यनुपानञ्च पूर्ववत्॥ ३३॥

---

रक्तवान्तिहरयोगे—अलक्तकरसं लाक्षाद्रवम्॥ २७॥

मृगाङ्कपोटलीरसे—सर्वं सुगमम्॥ २८—३०॥

यक्ष्मणि अधिकारान्तरोक्तमौषधविशेषमुपदिशति, स्वयमिति।—स्वयमग्निरसः कासाधिकारोक्तः। त्रिनिष्कमिति पूर्वयुगीयमात्रा, आधुनिकी तु माषकं माषकद्वयं वा॥ ३१॥

पञ्चामृतरसे—नेपालताम्रं सूतस्थाने नियोजयेदित्यत्र इति केचिद्वदन्तीति शेषः॥ ३२।३३॥

अथ जयन्तीयोगः।—

हरेत् चीराजगन्धाभ्यां जयन्ती वा क्षयापहा ॥ ३४ ॥

अथ लोकनाथरसः।—

तुल्यं पारदगन्धकं त्रिकटुकं ताभ्यां रजः कम्बुजं
तैस्तुल्यञ्च भवेत् कपर्दभसितं स्यात् पारदाट्टङ्कणम्।
पादांशं सकलैः समानमरिचं लिह्यात् क्रमात् साज्यकं
यावन्निष्कमितं भवेत् प्रतिदिनं मासात् क्षयः शाम्यति ॥ ३५ ॥

अथ लोकेश्वररसः।—

रसस्य भस्मना हेम पादांशेन प्रकल्पयेत्।
गन्धकं द्विगुणं दत्त्वा मर्दयेच्चित्रकाम्बुना ॥ ३६ ॥
चराचरास्ये सम्पूर्य टङ्कणेन निरुध्य च।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्ता रुन्धीत मृत्स्नया ॥ ३७ ॥
शोषयित्वा पुटेद्गर्त्तेऽरत्निमात्रेऽपराह्णके।
स्वाङ्गशीतलमुद्धृत्य चूर्णयित्वाऽथ विन्यसेत् ॥ ३८ ॥
एष लोकेश्वरो नाम पुष्टिवीर्य्यविवर्द्धनः।
गुञ्जाचतुष्टयञ्चाऽऽज्यं मरिचैश्च समन्वितम् ॥ ३९ ॥

---

जयन्तीयोगे—जयन्तीपत्ररसम् अजगन्धाचूर्णेन दुग्धेन च सम्मिश्र्य पाययेत्। क्षयापहा जयन्ती चीराजगन्धाभ्यां हरेत्, क्षयमिति शेषः ॥ ३४ ॥

लोकनाथरसे—तुल्यं पारदगन्धक त्रिकटुकमिति पारदगन्धकयोः मिलित-त्रिकटोश्च समभागः। ताभ्यामिति।—समाहारद्वन्द्वेन पारदगन्धकमित्यस्य एकत्वात् ताभ्यामिति द्विवचनेन मिलितरसगन्धकत्रिकटुभ्यामित्यर्थो बोध्यः। ताभ्यामित्यनन्तरं तुल्यमिति शेषः, कम्बुजं रजः इत्यनेनान्वयः। कम्बुजं रजः शङ्खभस्म। तैस्तुल्यं पारदाद-शङ्खान्तैस्तुल्यं कपर्दभसितं वराटिकाभस्म। पादांशमित्यस्य पारदात् टङ्कणमित्यनेन सम्बन्धः। सकलैः पारदादिटङ्कणान्तैः सकलैः। यावदिति।—सपादरक्तिकामारभ्य प्रतिदिनं तावन्मानेन वर्द्धयित्वा मासेन निष्कमितं खादेत् इति। अस्य पत्री यथा—पारद मा २, गन्धक मा २, त्रिकटुचूर्ण मिलित मा ४, शङ्खभस्म मा ८, वराटिकाभस्म मा १६, टङ्कण र ५, मरिच चूर्ण २ र ५ इति ॥ ३५ ॥

लोकेश्वररसे—पादांशेन रसभस्मभागमपेक्ष्य चतुर्थांशेन उपलक्षितं हेम इति

खादेत् परमया भक्त्या लोकेशे सर्वदर्शिनि।
अङ्गकार्श्येऽग्निमान्द्ये च कासहिक्के रसो ह्ययम्॥ ४०॥
मरिचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम्।
लवणं वर्जयेत्तत्र साज्यं सदधि भोजनम्॥ ४१॥
एकविंशद्दिनं यावन्मरिचं सघृतं पिबेत्।
पथ्यं मृगाङ्कवद्देयं शयीतोत्तानपादतः॥ ४२॥
वमने सम्प्रवृत्ते तु गुडूचीद्रवमाहरेत्।
मधुना पाययेत् सार्द्धं दग्धवृन्ताकमाशयेत्॥ ४३॥
स्नानं शीतलतोयेन मूर्द्ध्नि धारां विनिक्षिपेत्।
जाते श्लेष्मविकारे तु कदलीफलमाहरेत्॥ ४४॥
भृष्ट्वा तन्मरिचैः सार्द्धं भोजयेत् श्लेष्मनुत्तये।
आर्द्रकं मधुमिश्रं वा गुडार्द्रकमथापि वा॥ ४५॥
भृष्ट्वा कुस्तुम्बरीमाषान् निस्तुषांश्चूर्णयेत्ततः।
शर्कराघृतमिश्रं तद्दद्यात्तापशान्तये॥ ४६॥
भृष्ट्वा कुस्तुम्बरीं सम्यक् घृतं शर्करया पिबेत्।
एलां मरिचसंयुक्तां यावद्भ्रान्तिः प्रशाम्यति॥ ४७॥
अजमोदं विडङ्गञ्च पिष्ट्वा तक्रेण पाययेत्।
कृमिकोपप्रशान्त्यर्थं क्वाथं वातघ्नमस्तयोः॥ ४८॥
संस्कृत्य दुग्धिकां वह्नौ विरेकं च प्रयोजयेत्।
ईषद्भृष्टा जयाचूर्णं मधुना खादयेन्निशि॥ ४९॥

योजनीयम्। वराचरास्ये कपर्दकमुखे। अरत्निमाने निर्गतकनिष्ठाङ्गुलिक-मुष्टिपरिमिते गर्त्ते, वाराहपुटे इत्यर्थः। रसेन्द्रसारसङ्ग्रहे तु गजपुटे इत्युक्तम्। शयीतोत्तानपादतः पादावुत्तानीकृत्य शयीत। वमने इति।—रसस्यास्य सेवनात् यदि वमनं जायते तदा समधु गुडूचीरसं पाययेत् दग्धवार्त्ताकुञ्च भोजयेत्। वमननिवारणार्थं शीतक्रियया यदि श्लेष्मविकारो जायते तदा किं कर्त्तव्यमित्याह, जाते इति।—कदलीफलम् अपक्वकदलीफलम्। औषधसेवनेन श्लेष्मवृद्धौ ता

अङ्कोटे घृतनाङ्कं मर्दयित्वोष्णवारिणा।
स्नापयेद्रोगिणं वैद्यो लोकनाथञ्च संस्मरेत्॥ ५०॥

अथ वैद्यनाथरसः।—

शङ्खस्य वलयं निष्कं चतुर्निष्कं वराटिकाः।
कर्षांशं नीलतुत्थञ्च तालं गन्धाश्मटङ्कणम्॥ ५१॥
तुत्थं नागं रसश्चार्द्धं निष्कांशं पूर्ववत् पुटेत्।
वराटचूर्णं मण्डूरकल्पितालेपने पचेत्॥ ५२॥
अस्यार्द्धमाषं मरिचार्द्धमाषं ताम्बूलवल्लीरसभावितञ्च।
तत्पत्रलिप्तं मधुनाऽवलिह्याद्धैयङ्गवीनेन घृतेन वाऽपि॥ ५३॥
नाडीमार्गे निर्गते चाल्पमल्पं पथ्यं भोज्यं लोकनाथोपदिष्टम्।
यामे यामे चैवमामण्डलान्तात् सिद्धं सद्यः शोषजिद्वैद्यनाथः॥ ५४॥

यद्यर्शांसि जायन्ते, तदा किं कर्त्तव्यमित्याह, भृष्टेति।—कुस्तुम्बरी धन्याकं, सा च माषमिता ग्राह्या। पुनरपि वमनशान्त्यै योगान्तरमाह,—भृष्टेति। हिक्कापदवी दृश्यते चेत् तदा कर्त्तव्यमाह, अजमोदामिति।—अजमोदं यवयमानी। वातघ्नः एरण्डमूलम्। अतीसारापदवे कर्त्तव्यमाह, संस्कृत्येति।—दुग्धिका क्षीरिका, "खिरुइ" इति वङ्गीयैराख्याता, तां वङ्गौ संस्कृत्य क्वाथयित्वा इत्यर्थः। जयाचूर्णं वर्णीक्वाथजयापत्रचूर्णम्। अङ्गमर्दे कार्य्यमाह, अङ्कोटे इति।—अङ्कोटे अपामार्गादिशूल॥ ३६—५०॥

वैद्यनाथरसे—शङ्खस्य वलयं शङ्खस्य मुखदेशः, तस्य आवर्त्तमयत्वेन वलयाकारतया परिदृश्यमानत्वात्, "शाँखेर मुटो" इति वङ्गदेशे प्रसिद्धम्। वराटिकाः "पीताभा ग्रन्थिलाः पृष्ठे" इत्यादिभिरुक्तलक्षणाः कपर्दभेदाः, "गँटे कड़ि" "घेँषि कड़ि" इति वा वङ्गदेशप्रसिद्धाः। नीलतुत्थं मयूरग्रीवाभं तुत्थमित्यर्थः। नीलतुत्थादीनां चतुर्णां प्रत्येकं कर्षमानम्। तुत्थं खर्परीतुत्थम्। तुत्थादीनां रसान्तानां त्रयाणां प्रत्येकम् अर्द्धं शङ्खवलयभागापेक्षया अर्द्धमित्यर्थः। "तुल्यं नागम्" इत्यत्र "तुल्यभागम" इति पाठे—रसम् अर्द्धं तुल्यभागं कर्षार्द्धमित्यर्थः। वराटचूर्णं वराटकान्तर्गतपादितकपर्दचूर्णं, निष्कांशं निष्कचतुर्थभागं, माषमात्रमिति यावत्। मण्डूरेति।—मण्डूरेण कल्पितम् आलेपनं यत्र तस्मिन्, भाजने इति शेषः, मूषामध्ये औषधं संस्थाप्य चूर्णितमण्डूरपङ्केन आलेपयेत्। हैयङ्गवीनेन सद्यो गोदोहोद्भवेन,

अथ लोकनाथः।—

अध्यर्द्धनिष्कौ रसतुल्यभागौ पृथक् पृथग्गन्धकटङ्कवर्षम्।
शङ्खस्य कर्षं मृतताम्रतो द्वौ वराटिकानां नव सम्पुटस्थान् ॥५५॥
पक्त्वा पचेदर्कदलद्रवार्द्रान् भूयोऽर्द्धभागेन करीषकाणाम्।
अस्यार्द्धपादं मरिचार्द्धभागं गन्धाश्मनिष्कञ्च घृतेन लिह्यात् ॥५६॥
अश्नीयात् पूर्ववत् पथ्यं वासराण्येकविंशतिः।
लोकनाथो रसो नाम्ना रोगराजनिकृन्तनः ॥ ५७ ॥

अथ प्राणनाथः।—

अयोरजो विंशतिनिष्कमानं विभावितं भृङ्गरसाढ़केन।
धत्तूरभार्ङ्गित्रिफलारसार्द्रं तुल्यांशताप्यं विपचेत् पुटेषु ॥ ५८ ॥
सूतश्च निष्कं समभागतुल्यं गन्धोपलौ द्वौ चतुरो वराटान्।
पक्त्वा पुटाग्नौ समलोहचूर्णान् पचेत्तथा पूर्वरसेन मिश्रान् ॥५९॥

सद्यस्केनेत्यर्थः। आमण्डलान्तादित्यत्र मण्डलशब्दो अष्टचत्वारिंशद्दिनवाची "संस्थाप्य मण्डलं पश्चादर्कं निष्काशयेत्ततः" इत्यर्काचार्यस्मायां मण्डलशब्देन तावत्सङ्ख्यकदिनग्रहणात्। एव सिद्धस्य अस्य चूर्णस्य माषार्द्धं मरिचचूर्णस्य च माषार्द्धं संकीकृत्य पर्णपत्ररसेन मर्दयित्वा तस्यैव पत्रे लिप्त्वा च मधुना हैयङ्गवीनेन घृतेन वा अष्टचत्वारिंशद्दिनं यावत् लिह्यात्। प्रतिप्रहरञ्च स्तोकं स्तोकं लोकेश्वरोपदिष्टं पथ्यं कार्य्यम्; लोकनाथशब्देनात्र लोकेश्वरो बोध्यः, लोकनाथे पथ्यविधेर्दृष्टत्वात् ॥ ५१—५४ ॥

लोकनाथे—अध्यर्द्धनिष्कौ सार्द्धमाषौ। मृतताम्रतो द्वौ मृतताम्रस्य कर्षद्वयम्। वराटिकानाञ्च नव इत्यत्र कर्षाणि इति शेषः। करीषकाणाम् अर्द्धभागेनेति प्रथमपुटापेक्षया अर्द्धभागः। अस्य सिद्धस्य औषधस्य। अर्द्धपाद पादार्द्धं, समुदितौषधात् अष्टमांशमिति यावत्। मरिचार्द्धभागमिति षोडशांशं मरिचचूर्णम्। रसादिवराटिकान्तान् औषधजातान् अर्कपत्राम्बुपिष्टान् पुटे पक्त्वा स्वाङ्गशीतान् बहिष्कृत्य पुनरपि अर्कपत्ररसपिष्टान् कृत्वा प्रथमपुटमपेक्ष्य अर्द्धपुटे पचेत् इति ॥ ५५—५७ ॥

प्राणनाथे—भृङ्गरसाढ़केन षोड़शशरावमितभृङ्गराजरसेन। धत्तूरेति।—धत्तूरादीनां रसः भृङ्गराजरसादर्द्धो ग्राह्य इति। पूर्वरसेन भृङ्गादीनां रसेन। सप्त दश

चूर्णेऽस्मिन् मरिचाः सप्त तुल्यटङ्कणयोर्दश ।
संसृजेत्तत् पृथङ्निष्कान् प्राणनाथाह्वयोदितः ॥ ६० ॥
अर्द्धपादो रसाङ्कस्य: केवलाद्राजयक्ष्मभः ।
शोषोदरार्शोग्रहणी-ज्वरगुल्माद्युपद्रुतैः ॥ ६१ ॥

अथ वज्ररसः ।—

कर्षं खर्परसत्त्वस्य षण्मासि हेम्नि विद्रुते ।
षण्निष्कसूतं गन्धाश्मन्यष्टनिष्के प्रवेशितम् ॥ ६२ ॥
प्रवालमुक्ताफलयोश्चूर्णं हेमसमांशयोः ।
क्रमाद्द्वित्रिचतुर्निष्कं मृताग्रः सोमभास्करम् ॥ ६३ ॥
चाङ्गेर्यम्लेन यामांस्त्रीन् मर्दितं चूर्णितं पृथक् ।
द्वौ निष्कौ नीलवटक-व्योमायस्कान्ततालकात् ॥ ६४ ॥
अङ्कोल्लकङ्गुणीबीज-तुल्येभ्यश्चतुरः पृथक् ।
अष्टौ च टङ्कणक्षाराद्वराटानाञ्च विंशतिः ॥ ६५ ॥
मल्लाजक्षीरनीरस्य प्रस्थद्वन्द्वेन पेषयेत् ।
एतदष्टशरावस्थं शुद्धं क्षार्यास्तुषस्य च ॥ ६६ ॥
करीषभारे च पचेदथ माषद्वयं ततः ।
एतावद्गन्धकात् पादं मरिचाद्भावितादपि ॥ ६७ ॥

---

इत्यनयोः निष्कानित्यनेनान्वयः, तेन मरिचस्य सप्त निष्कान् तुल्यटङ्कणयोर्मिलितयोर्दश निष्कानित्यर्थः । रसात् सूतात् । अर्द्धपादः पादार्द्धः, निष्कमानात् सूतात् अष्टमांशः, माषार्द्धमिति यावत् । प्राणनाथो भवत्य इत्यन्वयः । आदौ लौहचूर्णं मासिकञ्च षोडशशरावमितेन भृङ्गराजरसेन अष्टशरावमितेन च धुस्तूरादीनां रसेन भावयित्वा पुटे पचेत् । ततो निष्काश्य सूतादिकं यथोक्तमानं तत्र दत्वा पुनश्च पुटे पचेत् । ततश्च पुनरपि औषधं निःसार्य्य सर्वतुल्यं लौहचूर्णं मिश्रयित्वा पूर्वोक्तद्रवेण सम्मर्द्य च पुटाग्नौ पुनः पचेत् । ततो निष्काश्य मरिचादिचूर्णं यथोक्तमानं दत्वा मिश्रयित्वा च यथोक्तमानेन भक्षयेदिति ॥ ५८—६१ ॥

वज्ररसे—विद्रुते गलितस्वर्णे, स्वर्णद्रवे इत्यर्थः ; विद्रुते हेम्नि खर्परसत्त्वस्य कर्षं

मधुनाऽऽलोड़ितं लिह्यात्ताम्बूलोपवलेपितम् ।
गतेऽस्य घटिकामात्रे प्रतियामश्च पथ्यभुक् ॥ ६८ ॥
नो चेद्दोपितो वह्निः क्षणाद्धातून् पचत्यतः ।
दिनमेकं निषेव्यैनं त्याज्यान्यामण्डलात्त्यजेत् ॥ ६९ ॥
ततः परं यथेष्टाशी द्वादशाब्दं सुखी भवेत् ।
एकमेकं दिनं भुक्त्वा वर्षे वर्षे महारसम् ॥ ७० ॥
वर्षादौ च त्यजेत्त्याज्यं द्वादशाब्दं जरां जयेत् ।
एष वज्ररसो नाम क्षयपर्वतभेदनः ॥ ७१ ॥

अथ महावीरः ।—

निष्कौ द्वौ तुल्यभागस्य रसादेकं सुसंस्कृतात् ।
निष्कं विषस्य द्वौ तीक्ष्णात् कर्षांश गन्धमौक्तिकात् ॥ ७२ ॥
अग्निपर्णीहरिलता-भृङ्गार्द्रसुरमारसैः ।
मर्दितं लाङ्गलीकन्द-प्रलिप्ते सम्पुटे पचेत् ॥ ७३ ॥

गन्धाश्मनि च षण्णिष्कमितं प्रदर्शितं कृत्वा इत्यन्वयः। भास्करं ताम्रम्। चाङ्गेर्य्यम्लेन अम्लगोणीरसेन। नीलवटकः "नीलवडी" इति प्रसिद्धः। व्योम अभ्रम्। अङ्कोलः "धाँकोड" इति ख्यातः, कङ्गुणी तृणधान्यविशेषः, तयोर्बीजम्। चतुरः अष्टौ विंशतिः इत्येतेषु निष्कानिति शेषः। महाजम्बीरनीरस्य बृहज्जम्बीररसस्य। एतदष्टशरावस्थम् अष्टमहाके शरावपात्रे चर्वास्थितमेतच्चूर्णम्। तुषस्य खार्य्याम् अष्टाविंशत्यधिकशतशराविका। करीषभारे द्विसहस्रपलमाने आरण्यगोमये। ततः औषधात् माषद्वयम्। गन्धकात् एतावत् माषद्वयमित्यर्थः। भाविताम् संस्कृतात् कीटाद्यभक्षितात् मरिचात् पादं माषद्वयमपेक्ष्य चतुर्थांशं, तेन च मरिचस्य माषार्द्धं ग्राह्यम्। दिनमेकमिति।—रसमिममेकं दिनं सेवित्वा अष्टाचत्वारिंशद्दिन यावत् अपथ्यानि परिहरेत्, अष्टचत्वारिंशद्दिनानन्तरं यथेप्सिताहारविहारी स्यात्, एवं द्वादशवर्षं व्याप्य नीरुक् तिष्ठेत्। प्रतिवर्षादौ च एकदिनमात्रं सेवित्वा पूर्वकल्पेन निषिद्धाहारं त्यजेत्, तेन च द्वादशवर्षं व्याप्य जरा आक्रमितुं न शक्नुयात् ॥ ६२—७१ ॥

महावीरे—तीक्ष्णात् तीक्ष्णलौहात्, द्वौ निष्कौ। गन्धमौक्तिकात् गन्धकात् मौक्तिकाच्च, कर्षांशमिति प्रत्येकम्। अग्निपर्णी "आगिया" इति लोके। हरिलता

अर्द्धपादश्च पोटल्याः काकिन्यौ द्वे विषस्य च ।
लिह्यान्मरिचचूर्णञ्च मधुना पोटलीसमम् ॥ ७४ ॥
क्षयग्रहण्यतीसार-वह्निदौर्बल्यकामिनाम् ।
पाण्डुगुल्मवतां श्रेष्ठो महावीर्यो हितो रसः ॥ ७५ ॥
अतिस्थूलस्य पुयाम्लकफानुद्गमतः क्षये ।
न योजयेत् चोररसान् विरुद्धोपक्रमस्त्वतः ॥ ७६ ॥

अथ पञ्चामृतपर्पटी ।—

सुवर्णं रजतं ताम्रं सत्त्वाभ्रं कान्तलोहकम् ।
क्रमवृद्धमिदं सर्वं शाणेयौ नागवङ्गकौ ॥ ७७ ॥
द्रावयित्वैकतः सर्वं रेतयित्वा ततश्चरेत् ।
पृथक् पलमितं गन्धं शिलालं विनिधाय च ॥ ७८ ॥
सर्वं खल्ले विनिक्षिप्य मर्दयेदम्लवर्गतः ।
ताप्यं नीलाञ्जनं तालं शिलागन्धञ्च चूर्णितम् ॥ ७९ ॥
दत्त्वा दत्त्वा पुटेत्तावद्यावद्विंशतिवारकम् ।
लोहाद्द्विगुणसूतेन ततो द्विगुणगन्धतः ॥ ८० ॥
विधाय कज्जलीं श्लक्ष्णां क्षिप्त्वा तां लोहपात्रके ।
द्रावयेद्बदराङ्गारैर्मृदुभिश्चाथ निक्षिपेत् ॥ ८१ ॥
हेमादिपञ्चलोहानां भस्म चाथ विलोडयेत् ।
अथ तत् कदलीपत्रे गोमयस्थे विनिक्षिपेत् ॥ ८२ ॥
पत्रेणान्येन सञ्छाद्य चिपिटीं कुरु यत्नतः ।
तस्योपरि क्षिपेत् सद्यो गोमयं स्तोकमेव च ॥ ८३ ॥

ब्राह्मी। सुरसा तुलसी। अर्द्धपादमिति काकिणीद्वयापेक्षया पादार्द्धमित्यर्थः। पोटलीति अस्य योगस्य संज्ञान्तरं, तेन औषधस्यास्य सार्द्धसर्षपचतुष्टयं ग्राह्यम्। काकिण्यौ द्वे रक्तिकाद्वयम्। एतदौषधसेवनकाले दुग्धं मांसरसञ्च परित्यजेत् ॥ ७२—७६ ॥

पञ्चामृतपर्प्यां—सत्त्वाभ्रम् अभ्रसत्त्वमित्यर्थः। क्रमवृद्धमिति सुवर्णादिलोहान्-

स्रुतः शीतां समाहृत्य पटचूर्णां विधाय च।
निक्षिपेदूर्द्ध्वदण्डायां पलिकायां ततः परम् ॥ ८४ ॥
पूर्ववद्वदराङ्गारैर्मृदुभिर्द्रावयेच्छनैः।
तुल्याऽऽलकशिलागन्धं पलार्द्धं विषभावितम् ॥ ८५ ॥
पूर्वपर्पटिकातुल्यं तस्मादल्पं मुहुर्मुहुः।
जारयेत् पलिकामध्ये यथा दह्येन्न पर्पटी ॥ ८६ ॥
पलिकेति विनिर्दिष्टा स्नेहक्षेपणयन्त्रिका।
जीर्णे तालादिके चूर्णे पटचूर्णां विधीयताम् ॥ ८७ ॥
पूतीकरञ्जषट्कोल-व्याघ्रीशोभाञ्जनाद्रिभिः।
एतैः पञ्चपलैः क्वाथं षोडशांशावशेषितम् ॥ ८८ ॥
तेन क्वाथेन संस्वेद्य शोषयेत् सप्तधा हि ताम्।
विषतिन्दुफलोद्भूतै रसैर्निर्गुण्डिकारसैः ॥ ८९ ॥
विभाव्य पलिकामध्ये क्षिप्त्वा बदरवह्निना।
ईषत् प्रस्वेदनं कृत्वा स्थापयेदतियत्नतः ॥ ९० ॥
उक्ता भैरवनाथेन स्यात् पञ्चामृतपर्पटी।
व्योषाज्यसहिता लीढ़ा गुञ्जाबीजेन सम्मिता ॥ ९१ ॥
सर्वलक्षणसम्पूर्णं विनिहन्ति क्षयामयम्।
श्वासं कासं विसूचीञ्च प्रमेहमुदरामयम् ॥ ९२ ॥
अरोचकञ्च दुःसाध्यं प्रसेकं छर्दिमुद्भवम्।
अधिकं गुदरोगञ्च शूलकुष्ठान्यशेषतः ॥ ९३ ॥
वातज्वरञ्च विड्बन्धं ग्रहणीं कफजान् गदान्।
एकद्वन्द्वत्रिदोषोत्थान् रोगानन्यान् महागदान् ॥ ९४ ॥

द्रव्यपञ्चकम् उत्तरोत्तरम् एकैकभागवृद्धम्। आद्यौ आद्यभागिकौ। रेतयित्वा चालोडयित्वेत्यर्थः। ताप्यं माक्षिकम्। हेमादिपञ्चलोहानां सुवर्णादिकान्तलोहान्तानां पञ्चानामित्यर्थः। ऊर्द्ध्वदण्डायां पलिकायां "पला" इति प्रसिद्धे भाण्डात् तैलाद्युत्क्षेप-णार्थयन्त्रविशेषे। का तावत् पलिका इति वक्तुमाह, पलिकेतीति।—स्नेहक्षेपण-

अग्निमान्द्ये विशेषेण रसोऽयं परमो मतः।
एवं सम्मूर्च्छ्य दातव्यो रसोऽयं भिषगुत्तमैः ॥ ९५ ॥
तत्तद्रोगहरैर्योगैस्तत्तद्रोगानुपानतः।
क्षयादिसर्वरोगघ्नो स्यात् पञ्चामृतपर्पटी ॥ ९६ ॥
तिलसर्षपबिल्वाम्ल-कारवेल्लकुसुम्भकम्।
त्यजेत् पारावतं मांसं वृन्ताकं कुक्कुटं तथा ॥ ९७ ॥

अथ गन्धकपिष्ट्यादियोगः।—

युक्तं गन्धकपिष्ट्याऽयस्तालकं गन्धमाक्षिकम्।
युक्त्या तद्भस्मतां नीतं तृषाच्छर्दिनिवारणम् ॥ ९८ ॥

यन्त्रिका तैलाद्युत्क्षेपणार्थयन्त्रविशेषः। पटचूर्णं वस्त्रगालितचूर्णम्। तुल्येति।—विषभावितं विषमिश्रितमित्यर्थः. तालकशिलागन्धं पलार्द्धमिति मिलित्वा पलार्द्धमित्यर्थः, तेन चतुर्णां प्रत्येकं कोलभागः। पूतीकरञ्जः नाटाकरञ्जः। षट्कोलं षडूषणम्। पञ्चपलैरिति मिलित्वा। औषधसेवनकाले वर्जनीयान्याह,—तिलेति। अस्य पर्वो यथा—शोधितसुवर्णं तो १, शोधितरौप्यं तो २, शोधिततास्रं तो ३, अभ्रसत्त्वं तो ४, शोधितमारितकान्तलौहं तो ५, सीसकं तो ॥, वङ्गं तो ॥, सर्वमग्नौ द्रावयित्वा आलोड्य च तत्र शुद्धगन्धकमनःशिलाहरितालानां प्रत्येकं पलमानं प्रक्षिप्य खल्ले संस्थाप्य च अम्लवर्गरसेन मर्दयेत्। ततो मूषायां संस्थाप्य ऊर्द्धाधः ताप्यादिचूर्णम् अनुरूपं दत्त्वा पुटेत, एवं विंशतिवारं कुर्यात्। ततः सुवर्णादिलोहभागमपेक्ष्य द्विगुणसूतेन सूता द्विगुणगन्धकेन च कज्जलीं विधाय लौहपात्रे बादराङ्गारैर्द्रावयित्वा च पूर्वोक्तसुवर्णादीनां भस्म तत्र प्रक्षिप्य रसपर्पटीवत् कुर्यात। अनन्तरं शीतीभूतां तां चूर्णयित्वा वस्त्रेण गालयेत। ततः ऊर्द्धदण्डायां पलिकायां निक्षिप्य पूर्ववत् बदराङ्गारैः द्रवीकृत्य च तत्र हरितालादिविषान्तं द्रव्यचतुष्टयं प्रत्येकं कोलमानं मुहुर्मुहुरल्पमल्पं दत्त्वा पूर्ववत् पर्पटिकां कुर्यात्। ततः पुनरपि शीतां तां विचूर्ण्य वस्त्रेण गालयित्वा च पूतिकरञ्जादीनां पञ्चपलानां चत्वारिंशत्पलतोयक्वथितानां षोडशांशावशिष्टेन क्वाथेन तथा विषतिन्दुकफलरसेन निर्गुण्डीरसेन च प्रत्येकं सप्तधा भावयेत्। पुनरपि तां पलिकायां निक्षिप्य बादरवह्निना ईषत् प्रस्वेद्य सुगुप्तं स्थापयेत् ॥ ७७—९७ ॥

गन्धकपिष्ट्यादियोगे—गन्धकपिष्ट्या "खल्ले विमर्द्य गन्धेन दुग्धेन सह पारदम्" इत्याद्युक्तपिष्टीभूतगन्धकेन। गन्धमाक्षिकं गन्धकं माक्षिकञ्च ॥ ९८ ॥

अथ राजावर्त्तरसः।—

राजावर्त्तो रसः शुल्वं मधुकं घृतपाचितम्।
मध्वाज्यशर्करायुक्तं हन्ति सर्वान् मदात्ययान्॥ ९९॥

अथ द्वितीयराजावर्त्तरसः।—

राजावर्त्तरसः शुल्वं सूतगर्भे नियोजितम्।
यष्टीमधुरसैर्घृष्टं घृतमध्ये विपाचितम्॥
मध्वाज्यशर्करायुक्तं हन्ति सर्वान् मदात्ययान्॥ १००॥

इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये राजयक्ष्मादिचिकित्सितमदात्ययप्रकरणं नाम चतुर्दशोऽध्यायः॥ १४॥

# अथ पञ्चदशोऽध्यायः।

अथार्शसां चिकित्सनम्।—

अथ अर्शसां स्वरूपलक्षणम्।—

गुदस्य बहिरन्तर्वा जायन्ते चर्मकीलकाः।
सर्वरोगकराः पुंसामर्शांसीति हि विश्रुताः॥ १॥

राजावर्त्तरसे—राजावर्त्तः कान्तपाषाणः। रसः रससिन्दूरम्। घृतपाचितं घृतेन यथाविधि भावितमित्यर्थः, उत्तप्तघृतमध्ये स्थापितमित्यर्थो वा॥ ९९॥

द्वितीयराजावर्त्तरसे—राजावर्त्तरसः पूर्वोक्तप्रकारेण कल्पितः रसः। पूर्वोक्तराजावर्त्तरसं ताम्रञ्च द्वयं यष्टीमधुरसघृष्टं पिष्टसूतभस्मान्तः संस्थाप्य शोषयित्वा च उत्तप्तघृतमध्ये स्थापयेत्, ततः शीतीभूते घृते तदुत्तोल्य स्थापयेत्, ततो मात्रां गृहीत्वा मध्वादिभिः पाययेदिति॥ १००॥

इति रसरत्नसमुच्चयबोधिन्यां चतुर्दशोऽध्यायः॥ १४॥

त्रिदोषजत्वसाधर्म्यात् रोगाणां सर्वदेहव्यापित्वसाधर्म्याच्च राजयक्ष्माद्यनन्तरम् अर्शश्चिकित्सितं वक्तुं पञ्चदशाध्यायमारभते; तत्रादौ अर्शसां स्वरूपमाह, गुदस्येति।—चर्मकीलकाः चर्ममयकीलाकाराः, अङ्कुरा इति शेषः॥ १॥

अथ पित्तार्शोलक्षणम् ।—

रुधिरस्राविणस्तेषां पित्तजाः परिकीर्त्तिताः ॥ २ ॥

अथ वातार्शोलक्षणम् ।—

वातजा निःसत्त्वोत्थाना उदावर्त्तं प्रकुर्वते ॥ ३ ॥

अथ श्लेष्मार्शोलक्षणम् ।—

श्वयथुं श्लेष्मजाः कुर्य्युः—"

अथ त्रिदोषजार्शोलक्षणम् ।—

"—सर्वं कुर्य्युस्त्रिदोषजाः ॥ ४ ॥

अथ अर्शःकुठारः ।—

शुद्धसूतं पलैकन्तु द्विपलं शुद्धगन्धकम् ।
मृतं ताम्रं मृतं लोहं प्रत्येकन्तु पलत्रयम् ॥ ५ ॥
त्र्यूषणं लाङ्गली दन्ती पीलुकं चित्रकं तथा ।
प्रत्येकं द्विपलं योज्यं यवक्षारश्च टङ्कणम् ॥ ६ ॥
उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकम् ।
द्वात्रिंशत्पलगोमूत्रं स्नुहीक्षीरश्च तत्समम् ॥ ७ ॥
मृद्वग्निना पचेत् स्थाल्यां सर्वं यावत् सुपिण्डितम् ।
माषद्वयं सदा खादेद्रसो ह्यर्शःकुठारकः ॥
तक्रेण दाड़िमाम्भोभिः पक्वकन्देन वाऽथ तत् ॥ ८ ॥

---

पित्तार्शसां लक्षणमाह, रुधिरस्राविण इति ।—पित्तार्शःसु रक्तस्रावस्तु पित्तस्य विशेषेण रक्तदूषकत्वादिति ॥ २ ॥

वातार्शोलक्षणमाह, वातजा इति ।—निःसत्त्वोत्थाना: कठिनमलाः ॥ ३ ॥

श्लेष्मार्शसां सन्निपातार्शसाञ्च लक्षणमाह, श्वयथुमिति ।—सर्वं वातजादीनां त्रयाणां मिश्रितलक्षणमित्यर्थः ॥ ४ ॥

अर्शःकुठारे—पीलुश्च औत्तरापथिकः फलविशेषः, "आख्रोट्" इति लोके । पक्वकन्देन पुटपक्वशूरणरसेन ॥ ५—८ ॥

अथ वचादिमोदकः।—

वचाहिङ्गुविडङ्गानि सैन्धवं जीरनागरम्।
मरिचं पिप्पली कुष्ठं पथ्या वह्न्यजमोदकम्॥ ९॥
क्रमोत्तरगुणं चूर्णं सर्वेषां द्विगुणं गुडम्।
कर्षश्चोष्णजलेनानुपिबेद्वाताऽर्शसां जये॥ १०॥

अथ तीक्ष्णमुखो रसः।—

मृतसूताभ्रहेमार्क-तीक्ष्णमुण्डं सगन्धकम्।
मण्डूरं माक्षिकं तुल्यं मर्द्यं कन्याद्रवैर्दिनम्॥ ११॥
अन्धमूषागतं पाच्यं त्रिदिनं तुषवह्निना।
चूर्णितं सितया माषं खादेत् पित्तार्शसां जये॥ १२॥

अथ लौहाष्टकम्।—

मृतं लौहश्चेन्द्रयवं शुण्ठी भल्लातचित्रकम्।
बिल्वमज्जाविडङ्गानि पथ्या तुल्यं विचूर्णयेत्॥
सर्वतुल्यं गुडं योज्यं कर्षं भुक्त्वाऽर्शसां जयेत्॥ १३॥

अथ श्लेष्मार्शसि औषधविशेषनिर्देशः।—

श्लेष्मार्शसः प्रशान्त्यर्थं देयमानन्दभैरवम्।
मृतताम्रेण सन्तुल्यं देयं गुञ्जात्रयं हि तत्॥ १४॥

---

वचादिमोदके—वह्निः चित्रकः। क्रमोत्तरगुणमुत्तरोत्तरमेकैकभागवृद्धम्॥ ९।१०॥

तीक्ष्णमुखरसे—तीक्ष्णं तीक्ष्णलौहम्। मुण्डं मुण्डलौहं, बोलनामा सुगन्धिद्रव्यविशेषो वा। क्वचिदेतदनन्तरं—"भल्लातक तिलं पथ्याचूर्णं गुडसमायुतम्। मोदकं भक्षयेन्मासात् पित्तरक्तार्शसां जयेत॥" इत्यधिकः पाठः॥ ११।१२॥

लौहाष्टके—बिल्वमज्जा बिल्वपेषिका॥ १३॥

श्लेष्मार्शसि चिकित्सान्तरोक्तमौषधविशेषमुपदिशति, श्लेष्मार्शस इति।—आनन्दभैरवः वक्ष्यमाणातिसारचिकित्सोक्तः, अस्य गुञ्जात्रयं मृतताम्रस्य गुञ्जात्रयं मिलित्वानुपानेन प्रयोज्यम्॥ १४॥

अथ सर्वलोकाश्रयो रसः ।—

शुद्धं सूतं पलं गन्धं गन्धार्द्धं तालताप्यकम् ।
अमृतं रसकञ्चैव तालकार्द्धविभागिकम् ॥ १५ ॥
एतेषां कज्जलीं कुर्याद्दृढं सम्मर्द्य वासरम् ।
त्रिदिनं मर्दयेच्चाथ दत्त्वा निम्बुजलं खलु ॥ १६ ॥
वटीकृत्य विशोष्याथ काचकूप्यां निधापयेत् ।
निष्कतुल्यार्कपत्रेण पिधायाऽऽस्यं प्रयत्नतः ॥ १७ ॥
मात्राङ्गुलमितोत्सेधं मृत्स्नया तां विलेप्य च ।
ततो भाण्डस्थितोयांशे सिकतापरिपूरिते ॥ १८ ॥
निधाय सिकतामूर्ध्नि सिकताभिः प्रपूरयेत् ।
रुद्ध्वाऽऽस्यं तदधो वह्निं ज्वालयेत् सार्द्धवासरम् ॥ १९ ॥
स्वाङ्गशीतलितं काच-घटादाकृष्य तं रसम् ।
पटचूर्णं विधायाथ ताम्रमभ्रं पलद्वयम् ॥ २० ॥
पलार्द्धममृतञ्चैव मरिचञ्च चतुष्पलम् ।
एकीकृत्य क्षिपेत् सर्वं नारिकेलकरण्डके ॥ २१ ॥
साज्यो गुञ्जाद्विमानो हरति रसवरः सर्वलोकाश्रयोऽयं
वातश्लेष्मोत्थरोगान् गुदजनितगदं शोथपाण्ड्वामयञ्च ।
यक्ष्माणं वातशूलं ज्वरमपि निखिलं वह्निमान्द्यञ्च गुल्मं
तत्तद्रोगघ्नयोगैः सकलगदचयं दीपनं तत्क्षणेन ॥ २२ ॥

अथ अर्शोघ्नः वटकः ।—

अर्शोघ्नं वटकं वक्ष्ये पुत्रक ! शृणु भद्रक ! ।
पिप्पली पिप्पलीमूलं वनशूरणचित्रकम् ॥ २३ ॥

---

सर्वलोकाश्रयरसे—गन्धमपि पलं ग्राह्यम् । गन्धार्द्धं तालताप्यकमिति माक्षिक-हरितालयोः मिलित्वा गन्धकार्द्धत्वम् । रसकं खर्परम्; अमृतरसकयोः प्रत्येकं तालार्द्धमानता ज्ञेया । निष्कतुल्यार्कपत्रेण शाणमितताम्रपत्रेण । मृत्स्नया मृत्तिकया । तां काचकूपीम् । नारिकेलकरण्डके नारिकेलकपाले, एतच्च गुण-विशेषाधानार्थं बोद्धव्यम् ॥ १५—२२ ॥

मरिचं कण्टकारी च रक्तपुष्पी समांशका।
पलमेकं पृथक् सर्वं श्लक्ष्णं दृषदि पेषयेत्॥ २४॥
गजाजपशुमूत्रेषु शुभे भाण्डे विनिक्षिपेत्।
मृदग्निना पचेत् सर्वं चूर्णशेषं यथा भवेत्॥ २५॥
लवणत्रयञ्च तत्रैव पलमेकन्तु निक्षिपेत्।
अक्षप्रमाणवटकान् कुर्य्यादेवं पृथक् पृथक्॥ २६॥
त्रिंशद्दिनानि मतिमानर्शोघ्नं दीपनं परम्।
घृततक्रसमायुक्तं भोजनं सम्प्रदापयेत्॥ २७॥

अथ अर्शोघ्नी वटिका।—

गन्धकं तारताम्रञ्च कृत्वा चैकत्र पिष्टिकाम्।
तत्समञ्चाभ्रक तीक्ष्णं गन्धकं पञ्चमांशकम्॥ २८॥
विषञ्च षोड़शांशेन द्वौ भागौ सूतकस्य च।
एकीकृत्य प्रयत्नेन जम्बीरद्रवमर्दितम्॥ २९॥
भाजने मृन्मये स्थाप्य वराक्वाथेन भावयेत्।
दशमूलशतावर्य्याः क्वाथे पाच्यः क्रमेण हि॥ ३०॥
अर्शोत्ताम्ये प्रयत्नेन वटिकां कारयेद्बुधः।
गुञ्जात्रयप्रमाणेन गुदव्याधिञ्च शूलनुत्॥ ३१॥

अथ शूलकुठारः।—

वरनागं तथा व्योम-सत्त्वं शुल्वञ्च तीक्ष्णकम्।
सर्वमेकत्र विद्राव्य क्षिप्त्वाऽऽलञ्चाल्पमल्पकम्॥ ३२॥

अर्शोघ्नवटके—रक्तपुष्पी रक्तार्कमूलम्, अर्शोघ्नत्वात्। गजाजपशुमूत्रेषु गजा-जादीनां पशूनां मूत्रेषु, अष्टविधमूत्रेषु इत्यर्थः। लोणत्रयं लवणत्रयं, विड़सैन्धव-सौवर्चलभेदात्। पलमेकमिति प्रत्येकम्॥ २३—२७॥

अर्शोघ्नीवटिकायां—तत्समिति गन्धकादीनां त्रयाणां समम्। तीक्ष्णं तीक्ष्ण-लौहमपि भस्मसमम्। पञ्चमांशकमिति प्रथमभागापेक्षया पञ्चमो भागः, एवं षोड़शांशोऽपि। सूतस्य द्वौ भागौ इति प्रथमगन्धकभागापेक्षया बोध्यौ। वराक्वाथेन त्रिफलाक्वाथेन। भावयेत् इति सप्ताहम्॥ २८—३१॥

चालयेद्दानिशं यावत्तालकं त्रिगुणं खलु ।
ततस्तेन विमर्द्याथ पिष्टीं कुर्य्याद्रसेन हि ॥ ३३ ॥
ततो भल्लातकीवृक्ष-मूलान्तःस्थां खनेच्च ताम् ।
मासादाकृष्य तां पिष्टिं गव्यदुग्धे विनिक्षिपेत् ॥ ३४ ॥
ततो भल्लातकीतैलं हृतं पातालयन्त्रतः ।
आयसे भाजने स्निग्धे पिष्टिकां तां निवेश्य च ॥ ३५ ॥
प्रस्थमात्रं हि तत्तैलं जारयेदतियत्नतः ।
तत्तैलभावितैर्गन्धैः पुटित्वा भस्मतां व्रजेत् ॥ ३६ ॥
ततः कार्त्तिकमासोत्थ-कौरण्टदलजै रसैः ।
रसं सम्मर्द्य सम्मर्द्य घर्मे संस्थाप्य मारयेत् ॥ ३७ ॥
तद्भस्म मेलयेत् पूर्व-भस्मना समभागिकम् ।
वनशूरणनिर्गुण्डी महाराष्ट्रीभकण्टिका ॥ ३८ ॥
वज्रवल्ली शिखी चैषां रसैः पिष्ट्वा विशोषयेत् ।
त्रिवारं मार्कवद्रावैर्द्रावयित्वा विशोषयेत् ॥
चूर्णीकृत्य प्रयत्नेन क्षिपेत् क्वापि करण्डके ॥ ३९ ॥

सोऽयं मूलकुठारको रसवरो दीप्याग्निवल्लोत्तमा-
संयुक्तः सघृतश्च वल्लतुलितः संसेवितो नाशयेत् ।

मूलकुठारे—वरनागं "तीक्ष्णं नीलाञ्जनोपेतम्" इत्यादिना अष्टमाध्यायोक्तं सीसकम् । व्योमसत्त्वं सत्त्वपातनविधिना गृहीतमभ्रसत्त्वम् । शुल्वं ताम्रम् । क्षिप्तेति ।—तालं हरितालम् ; अल्पाल्पं हरितालं क्षिपेत् निरन्तरं चालयेच्च । कियन्मानं हरितालं तत्र देयमित्याह, यावदिति ।—त्रिगुणमिति एकभागापेक्षया त्रैगुण्यम् । ततः इति ।—सर्वतुल्येन पारदेन सह विमर्द्य पिष्टिकां कुर्य्यात् । जारयेदिति भल्लातकतैलमध्ये तावत् स्थापयेत्, यावता सा पिष्टिका जीर्णीभवति । तत्तैलभावितैः भल्लातकतैलभावितैः । कौरण्टदलजैः पीतपुष्पझिण्टीपत्रजैः । घर्मे आतपे । महाराष्ट्री जलपिप्पली "काँचड़ा" इति लोके । इभः नागकेशरः । कण्टिका अतिबला । "इभकण्टिका" इत्यत्र "इभकर्णिका" इति पाठे—करिकर्णिका हस्तिकर्णवत् पत्रविशिष्टः कन्दशाकविशेषः, गोरक्षकर्कटी वा । वज्रवल्ली अस्थि-

अर्शांस्यानननासिकाक्षिगुदजान्यत्युग्रपीड़ानि च
प्लीहानं ग्रहणीञ्च गुल्मयकृतौ मान्द्यञ्च कुष्ठामयान् ॥४०॥

अथ महोदयप्रत्ययसारः ।—

रसग्रस्तसमुद्गीर्ण-गन्धकस्य पलत्रयम् ।
मृतसूताभ्रताम्राय: कर्षं कर्षं पृथक् पृथक् ॥ ४१ ॥
पलं हिङ्गुलचूर्णस्य माक्षिकस्य पलत्रयम ।
पलं काम्पिल्लकस्यापि विषस्यार्द्धपलं तथा ॥ ४२ ॥
सप्ताहं मर्दयेत् सर्वं दत्त्वा चूर्णोदकं मुहुः ।
ततस्तद्गोलकं कृत्वा सप्ताहञ्चाऽऽतपे क्षिपेत् ॥ ४३ ॥
गुड़चूर्णं शिलाचूर्णं लिम्पेटङ्कलिकाघनम् ।
त्रिपलं गन्धकं दत्त्वा क्रौञ्चयामथ च गोलकम् ॥ ४४ ॥

संहारः । शिखी चित्रकः । दीप्यं यमानिका । वैश्यं दिङ्गम् । फलत्रिका त्रिफला आमलकी वा । अस्य क्रमो यथा—नागादिकं सर्वं द्रावयित्वा उत्तमानं किञ्चित् किञ्चित् हरितालं तत्र प्रक्षिपन् प्रक्षिपन् दर्व्या चालयेत्, ततः अवतार्य्य सर्वतुल्यपारदेन सह मर्दयित्वा पिष्टिकां कुर्य्यात । अनन्तरं भल्लातकतरुमूल-काष्ठं खनित्वा तन्मूलान्तः तां पिष्टिकां मासं स्थापयेत्, मासादूर्द्धं पिष्टिकां तामाकृष्य गव्यदुग्धमध्ये निक्षिपेत, मासानन्तरञ्च पातालयन्त्रनिःसारिते भल्लातकतैले लौह-पात्रस्थे प्रज्वलिते यावत् जीर्णीभावात तां पिष्टिका न्यसेत् । अनन्तरं जीर्णीभूतां तां पिष्टं भल्लाततैलभावितेन गन्धकेन मर्दयित्वा पुटेन भस्मताञ्च नयेत । अनन्तरं कार्त्तिकमासजभिण्टीरसैः पारदं पुनः पुनः सम्मर्द्य आ भस्मीभावात् आतपे रक्षेत् । अथ एतत् रसभस्म पूर्वोक्तभस्मना तुल्यभागेन मिश्रयित्वा वन्य-शूरणादिरसैः एकैकवारं मर्दयित्वा शोषयेत्, भृङ्गराजरसेन च एवं त्रिधा भावयेत् शोषयेच्च ॥ ३२—४० ॥

महोदयप्रत्ययसारे—रसग्रस्तसमुद्गीर्णगन्धकस्य आदौ रसेन ग्रस्तस्य मूर्च्छनकर्मणा कवलितस्य पश्चात् समुद्गीर्णस्य उत्थापनकर्मणा उद्वान्तस्य गन्धकस्य ; तादृशश्च गन्धकः ऊर्द्धपातनायन्त्रेण कज्जल्याः पातनात् रसे ऊर्द्धलग्ने यः अंशः अवशिष्यति स एवेति । मृतसूतः रससिन्दूरम् । गुड़चूर्णं गुड़ं चूर्णञ्च, चूर्णं सुधा । शिलाचूर्णं

गोलकस्योपरिष्टाच्च क्षिपेत्तालपलत्रयम् ।
संरुध्यातिप्रयत्नेन दद्याद्गजपुटं खलु ॥ ४५ ॥
स्वाङ्गशीतलमाहृत्य गोलकं लेपनैः सह ।
विचूर्ण्य सप्तवारं हि विषतिन्दुफलोद्भवैः ॥ ४६ ॥
द्रवैरथाऽऽतपे शुष्कं क्षिपेद्रस्ये करण्डके ।
त्रिंशदंशेन वैक्रान्त-भस्म तस्मिन् विनिक्षिपेत् ॥ ४७ ॥
अयं हि नन्दीश्वरसम्प्रदिष्टो रसो विशिष्टः खलु रोगहन्ता ।
निःशेषरोगेष्वहतप्रतापो महोदयप्रत्ययसारनामा ॥ ४८ ॥
हन्यात् सर्वगुदामयान् क्षयगदं कुष्ठञ्च मन्दाग्नितां
शूलाध्मानगदं कफं श्वसनतामुन्मादकापस्मृती ।
सर्वा वातरुजो महाज्वरगदान्नानाप्रकारांस्तथा
वातश्लेष्मभवं महामयचयं दुष्टग्रहण्यामयम् ॥ ४९ ॥

अथ कनकसुन्दरः ।—

स्याद्रसं धौतमाक्षीकं कान्ताभ्रं नागहाटकम् ।
पृथ्वीभटेन सन्तुल्यं सर्वतुल्यञ्च गन्धकम् ॥ ५० ॥
दत्त्वा विद्याधरे यन्त्रे पुटेदारण्यकोत्पलैः ।
स्वाङ्गशीतलमुद्धृत्य त्र्यूषणेन विमिश्रयेत् ॥ ५१ ॥
अर्शोव्याधौ कटीशूले चक्षुःशूले च दारुणे ।
सन्निपाते क्षये श्वासे कासे मन्दानले ज्वरे ॥ ५२ ॥
कर्णशूले शिरःशूले दन्तशूले प्रयोजयेत् ।
पीनसे श्लेष्मिक हृच्छूले ग्रन्थिवाते च दारुणे ॥ ५३ ॥

मनःशिलाचूर्णम् । लिम्पेदिति ।—एतत्त्रयं सम्मर्द्य तैः अङ्गुलिमात्रोत्सेधं यथा तथा गोलकं लिम्पेदित्यर्थः । कोष्ठ्यां मूषायाम् । विषतिन्दुफलं "कुँचिला" इति ख्यातम् । त्रिंशदंशेन इति समुदितभेषजापेक्षया बोद्धव्यम् ॥ ४१—४९ ॥

कनकसुन्दरे—धौतमाक्षिकं रौप्यं सुवर्णमाक्षिकञ्च, रौप्यमाक्षिकमित्यर्थो वा । कान्ताभ्रं कान्तलौहम् अभ्रञ्च । नागहाटकं सीसकं सुवर्णञ्च । पृथ्वीभटेन मृदारश्च,

एकाङ्गे वा धनुर्वाते कम्पवाते च मूर्च्छिते।
ज्वरांश्च विषमान् सर्वान् हन्ति रोगाननेकधा ॥ ५४ ॥
सेवितः पथ्ययोगेन रसः कनकसुन्दरः।
गुञ्जामात्रं ददीतास्य यथायुक्तानुपानतः ॥ ५५ ॥
घृतेन संयुतो वाते मधुना पैत्तिके ज्वरे।
पिप्पल्या श्लैष्मिके देयः पित्तोद्भूते सचन्दनः ॥ ५६ ॥
तक्रेण श्लेष्मवातोत्थे वातपित्ते घृतान्वितः।
श्लेष्मपित्ते चाऽऽर्द्रकेण निर्गुण्ड्या सान्निपातिके ॥ ५७ ॥
फलत्रयेण शूलेषु विषमेषु ज्वरेष्वथ।
आर्द्रकेणाथवा दद्यादग्निमान्द्ये विशेषतः ॥ ५८ ॥
अभिष्यन्दे शिरःशूले गायत्रीबोलसंयुतम्।
पश्चिमांससमायुक्तं कफवाते च मूर्च्छिते ॥ ५९ ॥
एकाङ्गे च धनुर्वाते चोरयुक्तश्च पीनसे।
पाण्डुरोगे क्षये कासे मरिचाद्यैश्च कामले ॥ ६० ॥
अजमोदाविडङ्गैश्च नाभिशूलेऽग्निमान्द्यजित्।
रूक्षज्वरेऽरुचौ देयः कटलीफलसंयुतः ॥
बोलेनार्द्धकटीशूले भाषितं नागबोधिना ॥ ६१ ॥

अथ अर्केशः।—

नागं पारदगन्धकं त्रिलवणं वार्य्यर्कजं मेलये-
ट्टङ्कैकञ्च पलं पलं त्रयमतः पञ्च क्रमान्मर्दयेत्।

वराङ्गैरित्यर्थः, कोलमानेन इति यावत्; रसादिटङ्कणान्तं सर्वं तोलकमानमित्यर्थः। व्यूषणेनेति मिलितत्रिकटुचूर्णेन सर्वतुल्येनेत्यर्थः। पैत्तिके ज्वरे मधुना दद्यात्। पित्तोद्भूते प्रवृद्धपित्ते अन्यस्मिन् रोगे चन्दनेन सह देयः। गायत्री खदिरः। बोलः स्वनामख्यातः गन्धद्रव्यविशेषः। कफवाते च मूर्च्छिते प्रवृद्धकफवाते इत्यर्थः ॥ ५०—६१ ॥

अर्केशे—त्रिलवणं सैन्धवं सौवर्चलं विड्ञ्च। वार्य्यर्कजं वारिजम् अर्कजञ्च,

सर्वं तद्दिवसत्रयं तदनु तद्दत्त्वा पुटं भावनाः
कुर्यात् सत्रिफलाग्निवेतसरसैः पञ्चाधिका विंशतिः ॥६२॥

पश्चैतत् क्रमशस्ततो गुडभवैर्दत्तोऽस्य वल्लो जलै-
र्हन्त्यर्शांस्यखिलानि शूरणघृतैस्तस्यानुपानेऽस्मिन् हितम् ।
अर्कांशः परिवर्ज्यतामिति मुनिः श्रीवासुदेवोऽवदत्
कुष्माण्डीफलमाषपायसमतिव्यायाममर्कातपम् ॥ ६३ ॥

अथ तीक्ष्णमुखः ।—

रसेन्द्रहेमार्कविडालगोला-सुरायसं लोहमलाभ्रगन्धाः ।
ताप्यञ्च कन्यारसमर्दितोऽयं पक्वः पुटेत्तीक्ष्णमुखोऽर्शसां स्यात् ॥६४॥

अथार्शःकुठारः ।—

श्रेष्ठादन्त्यग्नियुग्मत्रिकटुकहलिनीपीलुकुम्भं विपक्वं
प्रस्थे मूत्रस्य सस्नुक्पयसि रसपलं द्वे पले गन्धकस्य ।
लोहस्य त्रीणि ताम्रात् कुडवमथ रजःक्षारयोश्चापि पञ्च
क्षिप्त्वा स्थाल्यां पचेत्तु ज्वलति दहनतश्चूर्णमर्शःकुठारः ॥६५॥

तत्र वारिजं शङ्खम् अर्कजं तुत्थं, तस्य ताम्रसत्त्वत्वात्, तथा च —"तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत्" इति । पञ्चैकांशमिति ।—नागादीनां त्रयाणां प्रत्येकं पलं पलम् ; अतः पञ्चोऽन्यानि पञ्च लवणत्रयशङ्खतुल्यानि प्रत्येकं पलत्रयमितानि ग्राह्याणि । कुर्यादिति ।—त्रिफलया व्यस्तया भाव्या, न तु मिलितया । वेतसः अम्लवेतसः । गुडभवैर्जलैः गुडोदकैः ॥ ६२।६३ ॥

द्वितीयतीक्ष्णमुखे—रसेन्द्रः रससिन्दूरः, तथा च रसरत्नाकरः,—"मृतसूताभ्रहेमार्क" इति । रसेन्द्रसारसङ्ग्रहेऽपि—"मृतसूतार्कहेमाभ्रम्" इति । विडालं हरितालम् । गोला मनःशिला । सुरायसं तीक्ष्णलोहम् । रसेन्द्रादयः ताप्यान्ताः एवं समानाः । पुटेत् इति अन्धमूषायां पुटेत्, तथा च रसेन्द्रसारसङ्ग्रहे—"अन्धमूषागतं सर्वं ततः पाच्यं दृढाग्निना" इति । रसरत्नाकरेऽप्युक्तम्,—"अन्धमूषागतं पश्चात् त्रिदिनन्तु तुषाग्निना" इति ॥ ६४ ॥

अर्शःकुठारे—श्रेष्ठा मेदा, अर्शोहरत्वात् । अग्नियुग्मं चित्रकमूलं भल्लातकास्थि च । हलिनी लाङ्गलिकी । कुम्भं त्रिवृत् । प्रस्थे इति सुधाक्षीरसहिते गोमूत्र-

अथ त्रैलोक्यतिलकः ।—

वज्रकृष्णाभ्रजं सत्त्वं शोधितं काचटङ्कणम् ।
रेतयित्वा रजः कृत्वा भर्जयित्वा घृतेन तत् ॥ ६६ ॥
अष्टांशरसकोपेतं पुटेद्वारत्रयं ततः ।
त्रिवारं नृपवर्त्तेन लुङ्गस्वरसयोगिना ॥ ६७ ॥
चतुर्वारञ्च वर्षाभू-वामामत्स्याक्षिकारसैः ।
गुग्गुलुत्रिफलाक्वाथैस्त्रिंशद्वाराणि यत्नतः ॥ ६८ ॥
तुल्यांशरसगन्धोत्थ-कज्जल्याऽष्टांशभागया ।
पुटेत् पञ्चाशतं वारान्मर्दयेच्च पुटे पुटे ॥ ६९ ॥
शोधितं रेतितं कान्तसत्त्वञ्च घृतमर्दितम् ।
पुटेदष्टांशदरदैः संयुतं लकुचाम्बुना ॥ ७० ॥
दशवारं तथा सम्यक् तारं शुद्धं मनोह्वया ।
तथा विंशतिवाराणि बलिना मीनदृग्रसैः ॥ ७१ ॥
दशवाराणि ताप्येन कृष्णगोघृतयोगिना ।
उभयं समभागं तत् पुटेन्निर्गुण्डिकारसैः ॥ ७२ ॥
रसगन्धोत्थकज्जल्या दशवारं पुटेत् पुनः ।
तस्मिन्नष्टांशभागेन क्षिपेद्वैक्रान्तभस्मकम् ॥ ७३ ॥

---

प्रस्थे ; अत्र स्नुहीक्षीरस्यापि मात्रा प्रस्थमिता ग्राह्या "द्वाविंशत्पलगोमूत्रं स्नुहीक्षीरञ्च तत्समम" इति रसरत्नाकरसंवादात्, सम्यक्पयसि इति सहार्थबलाच्च । तस्मात् रजः कुडवम् इति योजनीयम् । क्षारयोः यवक्षारटङ्कणक्षारयोः "यवक्षारञ्च टङ्कणम् । उभे पञ्चपले योज्ये" इति रसरत्नाकरसंवादात् ॥ ६५ ॥

त्रैलोक्यतिलके—वज्रकृष्णाभ्रजं सत्त्वं वज्राऽऽख्यकृष्णवर्णाभ्रसत्त्वं, सत्त्वपातनविधिश्च प्रागेव प्रदर्शितः । काचटङ्कणं काचाख्यलवणं टङ्कणञ्च । रेतयित्वा मिश्रयित्वा इत्यर्थः, शोधिताभ्रसत्त्वचूर्णं काचचूर्णं टङ्कणचूर्णञ्च एकत्र सम्मर्द्य इति समुदितार्थः । सम्यकं तुत्थकविशेषः । अष्टांशमिति अभ्रसत्त्वापेक्षया बोध्यम् । नृपवर्त्तेन राजावर्त्तेन । लुङ्गस्वरसयोगिना मातुलुङ्गरसयुक्तेन । मत्स्याक्षिका शालिञ्चः । "चतुर्वारञ्च वर्षाभूवामामत्स्याक्षिकारसैः" इत्यत्र "चतुर्वारञ्च ताप्येन शातारिक्षेदयोगिना ।

राजावर्त्तकलांशेन समभागेन पर्पटी ।
तत् सर्वं परिमर्द्याथ भावयित्वाऽऽर्द्रकाम्बुना ॥ ७४ ॥
गुडूच्याः स्वरसेनापि भूकदम्बरसेन वा ।
भृङ्गराजरसेनापि चित्रमूलरसेन च ॥ ७५ ॥
व्योषगञ्जाकिनीकन्दैर्भूयोऽप्यार्द्रद्रवेण च ।
पटचूर्णमतः कृत्वा क्षिपेत्कूपककरण्डके ॥ ७६ ॥
त्रैलोक्यतिलकः सोऽयं ख्यातः सर्वरसोत्तमः ।
सर्वव्याधिहरः श्रीमान् शम्भुना परिकीर्त्तितः ॥ ७७ ॥
उदावर्त्तञ्च विड्बन्धं व्यथाञ्च जठरोद्भवाम् ।
लाहलं मन्दबुद्धित्वं शूलित्वमपि बन्ध्यताम् ॥ ७८ ॥
सूतिरोगानशेषांश्च शूलं नानाविधं तथा ।
परिणामाख्यशूलञ्च तथा भिन्द्यात् समुत्कटम् ॥ ७९ ॥
रक्तगुल्मञ्च नारीणां रजःशूलञ्च दुःसहम् ।
अनुपानञ्च पथ्यञ्च तत्तद्रोगानुरूपतः ॥ ८० ॥

अथ अर्शोहरयोगः ।—

कुसुम्भमृदुपत्राणि काञ्जिकेनैव पाचयेत् ।
शाकवद्भक्षयेन्नित्यमर्शोरोगप्रशान्तये ॥ ८१ ॥

---

दशवारञ्च वर्षाभुवासामत्स्याक्षिकारमैः” इति क्वचित पाठः । तारं रौप्यम् । मनोह्वा मनःशिला । बलिना गन्धकेन । मीनदृक् मत्स्याची । समभागेन इति तारकान्तसत्त्वयोः समभागेन । पर्पटी पङ्कपर्पटी । गञ्जा संविदा “गाँजा” इति ख्याता । किनी बृहतीभेदः । कन्दः शूरणः । लाहलं दुष्टरक्तज-व्याधिम् । क्वचिदेतदनन्तरं—“कान्तवैक्रान्तशुल्वाभ्ररसगन्धकभस्मना । सैषा वाग्निर्मितं धार्य्यां सक्तुक्षीरेण सेवया ॥ शूरणं कासमर्दन्तु शिग्रुवार्त्ताक-वास्तुकम । सुपक्कं योजयेच्छाकं पथ्यं गोधूमतण्डुलैः ॥” इत्यधिकः पाठः ॥ ६६—८०

अर्शोहरयोगे—कुसुम्भमृदुपत्राणि कुसुम्भस्य कोमलपत्राणि ॥ ८१ ॥

अथ देवदार्व्यादिलेपः।—

देवदार्व्याश्च बीजानि सैन्धवेन सुचूर्णितः।
आरनालेन लेपोऽयं मूलरोगनिकृन्तनः॥ ८२॥

अथार्शःकुठारलेपः।—

काञ्चनीकुसुमं चूर्णं शङ्खचूर्णं मनःशिलाम्।
गजपिप्पलिकातोयैर्लेपो ह्यर्शःकुठारकः॥ ८३॥

अथ अर्शोघ्नशौचः।—

देवदार्व्याः कषायेण ह्यर्शोघ्नं शौचमाचरेत्।
गुदनिःसरणञ्चाथ शान्तिमायाति नान्यथा॥ ८४॥

अथ दुर्नामहरलेपः।—

आरनालेन सम्पिष्टा सबीजा कटुतुम्बिका।
सगुड़ा हन्ति लेपेन दुर्नामानि समूलतः॥ ८५॥

अथ अर्शोघ्नी वर्त्तिः।—

पीलुतैलेन संलिप्ता वर्त्तिका गुदमध्यगा।
घातयत्यर्शसां शीघ्रं सकलां वेदनां क्वचित्॥ ८६॥

अथ अर्कक्षीरादिलेपः।—

अर्कक्षीरं स्नुहीकाण्डं कटुकालावुपत्रकम्।
करञ्जं छागमूत्रेण लेपः स्यादर्शसां हितः॥ ८७॥

---

देवदार्व्यादिलेपे—देवदारी हस्तिघोषकः। मूलरोगनिकृन्तनः अर्शोरोगविनाशनः, अर्शसां बद्धगाढमूलत्वात्॥ ८२॥

अर्शःकुठारलेपे—काञ्चनीकुसुमं हरिद्रापुष्पम्॥ ८३॥

अर्शोघ्नशौचे—देवदार्व्याः कषायेण षडङ्गपरिभाषया षडङ्गतेन क्वाथेनेत्यर्थः॥८४॥

दुर्नामहरलेपे—सबीजा कटुतुम्बिका बीजसहितकटुतुम्बीशस्यम्॥ ८५॥

अर्शोघ्नवर्त्त्यां—वर्त्तिका पीलुफलादिकृतवर्त्तिका॥ ८६॥

अर्कक्षीरादिलेपे—"स्नुहीकाण्डम्" इत्यत्र "स्नुहीक्षीरम्" इति चरकादिसम्मतः पाठः॥ ८७॥

अथ शिग्रुमूलादिलेपः।—

शिग्रुमूलार्कजैः पत्रैर्लेपनं हितमर्शसाम् ॥ ८८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये अर्शोऽधिकारो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

# अथ षोड़शोऽध्यायः।

## अथोदावर्त्तादिचिकित्सनम्।—

अथोदावर्त्तनिदानम्।—

रूक्षैः कोद्रवजीर्णमुद्गचणकैः क्रुद्धोऽनिलोऽधो वहन्
रुद्ध्वा वर्त्म मलं विशोष्य कुरुते विण्मूत्रसङ्गं ततः।
हृत्पृष्ठोदरवस्तिमस्तकरुजः सश्वासकासं ज्वरं
गच्छन्नूर्द्ध्वमसौ हि नूनमनिशं कोपादुदावर्त्तयेत् ॥ १ ॥

अथोदावर्त्तहरं घृतम्।—

कुष्ठहिङ्गुसिन्धूत्थ-विड्दन्तीवचाभयाः।
चित्रकस्य तु मूलञ्च कल्कीकृत्य पचेद्घृतम् ॥ २ ॥
चतुर्गुणे गवां क्षीरे युक्तं स्नुक्क्षीरमात्रया।
उदावर्त्तोदरानाहान् हन्ति पानेन सर्वथा ॥ ३ ॥

शिग्रुमूलादिलेपे—शिग्रुपत्रं मूलकपत्रमर्कपत्रञ्चेत्यर्थः ॥ ८८ ॥

इति रसरत्नसमुच्चयबोधिन्यां पञ्चदशोऽध्यायः ॥ १५ ॥

मलविबद्धतादिलक्षणसाधर्म्यात् अर्शसामनन्तरम् उदावर्त्तादिचिकित्सितं वक्तुं षोडशाध्यायमारभते; तत्रादौ उदावर्त्तस्य निदानादिकमाह, रूक्षैरिति।—वर्त्म मलवाहिस्रोतः। उदावर्त्तयेत् ऊर्द्ध्वमानयेत्, मलादिकमित्यर्थः ॥ १ ॥

उदावर्त्तहरे घृते—युक्तं स्नुक्क्षीरमात्रया इति कोष्ठादिकं विविच्य यथोपयुक्तमात्रया स्नुक्क्षीरं प्रक्षिप्य ॥ २।३ ॥

## अथातिसारचिकित्सा।—

अथातीसारनिदानम्।—

अत्यम्बुपानतिलपिष्ट-विरूढरूक्ष-
शुष्कामिषाध्यशन-वक्रमलग्रहाद्यैः।
क्रुद्धोऽनिलोऽतिसरणाय च कल्पतेऽग्निं
हत्वा मलं शिथिलयन्नपि तोयधातून्॥ ४॥

अथ दर्दुररसः।—

सुश्लक्ष्णतीक्ष्णचूर्णन्तु रसेन्द्रसमभागिकम्।
काञ्चनाररसैर्घृष्टं सर्वातीसारनाशनम्॥ ५॥

अथ द्वितीयदर्दुररसः।—

पिष्टः समेन तीक्ष्णेन काञ्चनाराम्बुमर्दितः।
पुटपक्वोऽतिसारघ्नः सूतोऽयं दर्दुराह्वयः॥ ६॥

अथाऽऽनन्दभैरवः।—

हिङ्गुलं वत्सनाभञ्च मरिचं टङ्कणं कणा।
मर्दयेत् समभागञ्च रसो ह्यानन्दभैरवः॥ ७॥
गुञ्जैकां वाऽर्द्धगुञ्जां वा बलं ज्ञात्वा प्रदापयेत्।
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम्॥ ८॥
चूर्णितं कर्षमात्रन्तु त्रिदोषोत्थातिसारजित्।
दध्यन्नं दापयेत् पथ्यं गवाज्यं तक्रमेव वा॥
पिपासायां जलं शीतं विजया च हिता निशि॥ ९॥

---

अतीसारपूर्वरूपे विट्सङ्गो भवति, अतः उदावर्त्तानन्तरम् अतीसारचिकित्सितं विवक्षुः प्राक् तस्य निदानादिकमाह, अत्यम्बुपानेति।—विरूढम् अङ्कुरितधान्यम्। अध्यशनं "भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम्" इत्युक्तलक्षणकम्। मलग्रहः पुरीषवेगविधारणम्। अतिसरणाय अतीसाराय। तोयधातून् स्वेदमूत्रादीन्॥४॥

दर्दुररसे—रसेन्द्रसमभागिकं रससिन्दूरतुल्यम्। काञ्चनाररसैः रक्तकाञ्चन-पुष्पद्रवैः॥ ५॥

द्वितीयदर्दुररसे—सूत इत्यस्य समेन तीक्ष्णेन पिष्ट इत्यनेनान्वयः। पूर्वः दर्दुरः अपाकनिष्पन्नः द्वितीयः पाकनिष्पन्न इत्यनयोर्भेदः॥ ६॥

अथ सुधासाररसः।—

पृथक् पलिकगन्धाश्म-सूतसञ्जातकज्जलीम्।
प्रद्राव्य निक्षिपेत् व्योम पलैकं गतचन्द्रिकम्॥ १०॥
काष्ठेनाऽऽलोड्य तत् सर्वं क्षिपेत् कुटजपल्लके।
पुनः सञ्चूर्ण्य यत्नेन भावयेत्तदनन्तरम्॥ ११॥
बालतिन्दुफलद्रावैः क्षीरकौडुम्बरैस्तथा।
अरलुत्वग्रसैश्चापि दुग्धिनीस्वरसैस्तथा॥ १२॥
पुटपक्वस्य बालस्य दाड़िमस्य रसैः शुभैः।
कृष्णाकाम्बोजिकामूल-रसैः कुटजवल्कजैः॥ १३॥
तुल्यांशविश्वगान्धारी-चूर्णं द्विपलिकं क्षिपेत्।
मुस्तावत्सकदीप्याग्नि-मोचसारं सजीरकम्॥ १४॥
वत्सनाभञ्च कर्षांशं प्रत्येकं तत्र निक्षिपेत्।
विचूर्ण्य भावयेद्भूयः शुण्ठीक्काथेन सप्तधा॥ १५॥
इत्थं सिद्धो रसः पिष्टः करण्डे विनिवेशयेत्।
सुधासार इति ख्यातः सुधारससमद्युतिः॥ १६॥
दीपनः पाचनो ग्राही हृद्यो रुचिकरस्तथा।
दोषत्रयातिसारघ्न दुर्जयं भेषजान्तरैः॥ १७॥
आमञ्चैवाऽऽमरक्तञ्च ज्वरातीसारमेव च।

---

आनन्दभैरवे—वत्सनाभं विषम्। विजया भङ्गा॥ ७—९॥

सुधासारे—गन्धाश्म गन्धकम्। गतचन्द्रिकं व्योम निश्चन्द्रमभ्रम्। क्षीरकौडुम्बरैः राजादनफलरसैः उडुम्बरफलरसैश्च। अरलुः श्योनाकः। दुग्धिनी स्वनामख्याता "क्षीट खिबडू" इति वङ्गभाषा। कृष्णाकाम्बोजिकामूलरसैः कृष्णः करमर्दः अस्य फलं, तथा काम्बोजिका रक्तगुञ्जा अस्या मूलं तयोः रसैः। गान्धारी कण्टकारी। वत्सकः इन्द्रयवः। दीप्यं यमानिका। अग्निः चित्रकः। मोचसारः मोचरसः। वत्सनाभं विषम्। "दुर्जयं भेषजान्तरैः" इत्यनन्तरं क्वचित्—"प्रवाहिकाञ्च निर्वाहीं विश्विमीं गुदशूलकम्" इत्यधिकः पाठो विद्यते।

सातिसारां विसूचीञ्च प्रतिबध्नाति तत्क्षणात् ॥
मान्यमानव्यतिक्रान्तिरिव पुण्यफलोदयम् ॥ १८ ॥

अथ रसोत्तमः।—

पिष्टविश्वाब्दकल्केन विधाय खलु चक्रिकाम्।
निक्षिपेत् स्वेदनीयन्त्रे पक्काऽर्द्धघटिकावधि ॥ १९ ॥
आकृष्य तज्जलैरेव सम्यमर्घ्याहरेद्रसम्।
सुधासाररसं तत्र क्षिप्त्वा धान्यकसम्मितम् ॥ २० ॥
पूर्व्वोदितेषु रोगेषु प्रददीत भिषग्वरः।
शीतकेणाजदघ्ना वा पथ्यं देयं हितं मितम् ॥ २१ ॥
बालरम्भाफलं गुर्व्वी-फलं विल्वफलं तथा।
आम्रपेशी च मधुकं वृन्ताकञ्च प्रशस्यते ॥ २२ ॥
सर्व्वातिसारं ग्रहणीञ्च हिक्कां मन्दाग्निमानाहमरोचकञ्च।
निहन्ति सद्यो विहितामपाके द्विविप्रयोगेण रसोत्तमोऽयम् ॥२३॥

अथ स्वेदनीयन्त्रलक्षणम्।—

साम्बुस्थालीमुखाबद्धे वस्त्रे पाक्यं निधाय च।
पिधाय पच्यते यत्र स्वेदनीयन्त्रमुच्यते ॥ २४ ॥

इदमेव तिन्दुकयन्त्रम्।

---

मान्येति।—मान्यस्य मानव्यतिक्रान्तिः पूज्यपूजाव्यतिक्रमः। अस्यार्थः,—रसपर्पटी प्रस्तुतक्रमेण कज्जलीं विद्राव्य तत्र अभ्रकञ्च प्रक्षिप्य काष्ठदण्डेनालोडयेत्, एकीभूतञ्च तत् सर्व्वं कुटजपत्रके ढालयित्वा पर्पटिकाकारं कुर्य्यात्। ततः सम्पूर्णं भावनादिकं दद्यादिति ॥ १०—१८ ॥

रसोत्तमे—अर्द्धघटिकावधि दण्डं यावत्। तज्जलैः यन्त्रस्थजलैः। पूर्व्वोदितेषु रोगेषु सुधासारोक्तरोगेषु। गुर्व्वीफलं गुवाकफलं, तच्च बालमेव ग्राह्यम्। अयमर्थः,—विश्वाब्दे समपरिमिते पिष्ट्वा चक्रिकां कुर्य्यात्, ततः तां स्वेदनीयन्त्रे दण्डमेकं पक्का स्थालीमुखादानीय च यन्त्रस्थैरेव जलैः सम्पेषयेत्, वस्त्रगालिते च तास्मिन् जले पूर्व्वोक्तं सुधासाररसं धान्यप्रमाणं मिश्रयित्वा प्रयुञ्जीत इति ॥ १९—२३ ॥

अल्पमेधस्कविद्यार्थिनां सुखबोधनार्थमुक्तमपि स्वेदनीयन्त्रलक्षणं पुनराह, साम्बुस्थालीति।—व्याख्यातपूर्व्वम्। तिन्दुकयन्त्रमित्यस्य नामान्तरम् ॥ २४ ॥

अथ लोकेश्वरः।—

द्वौ भागौ गन्धकस्याष्टौ शङ्खचूर्णस्य योजयेत्।
एकमेव रसस्यांशमर्कक्षीरेण मर्दयेत्॥ २५॥
चित्रकस्य द्रवेणैवं शोषयित्वा पुनः पुनः।
एकीकृत्य रसेनाथ क्षारं दत्त्वा तदर्द्धकम्॥ २६॥
अर्कक्षीरेण कुर्वीत गोलकानथ शोषयेत्।
निरुध्य चूर्णलिप्तेऽथ भाण्डे दद्यात् पुटं ततः॥ २७॥
लोकेश्वररसो ह्येष ग्रहणीरोगकृन्तनः।
गुञ्जाचतुष्टयञ्चास्य मरीचाज्यसमन्वितम्॥
दद्यीत दधिभक्तञ्च पथ्यं लोकेश्वरे तथा॥ २८॥

अथ लोकनाथः।—

मृतपारदभागैकं चत्वारः शुद्धगन्धकात्।
यामञ्च मर्दयेत् खल्ले तेन पूर्य्या वराटकाः॥ २९॥
टङ्कणन्तु गवां क्षीरैः पिष्ट्वा तेन मुखं लिपेत्।
वराटानां प्रयत्नेन रुद्ध्वा भाण्डे पुटे पचेत्॥ ३०॥
स्वाङ्गशीतं समुद्धृत्य ततश्चूर्ण्या वराटकाः।
लोकनाथरसो नाम्ना क्षौद्रैर्गुञ्जाचतुष्टयम्॥ ३१॥
नागरातिविषामुस्ता-देवदारुवचान्वितम्।
कषायमनुपानं स्याद्वातातीसारनाशनः॥ ३२॥

अथ पञ्चिष्कतैलम्।—

पञ्चिष्कं तिलतैलस्य निष्कं जम्बीरजं रसम्।

---

लोकेश्वरे—अर्कक्षीरेण मर्दयेत् इत्यत्र सप्तवारमिति शेषः। चित्रकस्य द्रवेणापि एवं सप्तवारं मर्दयेत्। ततः पुनः पुनः शोषयित्वा रसेन द्रवेण एकीकृत्य च सप्तवारान् भावनां दत्त्वा शोषयेत्। तदर्द्धकं मिलितौषधार्द्धभागम्॥ २५—२८॥

लोकनाथे—सर्वं सुगमम्॥ २९—३२॥

लवणं पञ्चगुञ्जञ्च अङ्गुल्या मर्दयेत् दृढ़म् ॥
आमवातातिसारघ्नं लिहेत् पथ्यञ्च पूर्ववत् ॥ ३३ ॥

अथ नागसुन्दरः।—

नागभस्मरसव्योम-गन्धैरर्द्धपलोन्मितैः।
कुर्वीत कज्जलीं श्लक्ष्णां प्रक्षिपेत्तदनन्तरम् ॥ ३४ ॥
द्विपलोन्मितरालायां द्रुतायां परिमिश्रिताम्।
भृष्टैर्यक्षाक्षसिन्धूत्थ-वचाव्योषद्विजीरकैः ॥ ३५ ॥
सपथ्याविजयादीप्यैस्तुल्यांशैरवचूर्णितैः।
मेलयेत् प्राक्तनं कल्कं भावयेत्तदनन्तरम् ॥ ३६ ॥
महानिम्बत्वचासारैः काम्बोजीमूलजद्रवैः।
रसैर्नागबलायाश्च गुडूच्याश्च त्रिधा त्रिधा ॥
ततश्च गुटिका कार्य्या बदरास्थिप्रमाणतः ॥ ३७ ॥
हन्यादेव हि नागसुन्दररसो वल्लोन्मितः सेवितो
नानातीसरणामयं गुदपरिभ्रंशं तथा विम्बिशिम् ॥ ३८ ॥

---

पञ्चिपक्वतैले—पञ्चिपक्वं तोलकत्रयम् ॥ ३३ ॥

नागसुन्दरे—द्विपलोन्मितरालायां द्रुतायां द्रवीभूतपलद्वयमितसर्ज्जरसे। यक्षः न्यग्रोधः। अक्षः विभीतकः। विजया भङ्गा। दीप्यं यमानिका। प्राक्तनं कल्कं नागादिभिः कृतां कज्जलीम्। महानिम्बः पर्वतनिम्बः तस्य त्वचासारैः वल्कलरसैः। काम्बोजीमूलजद्रवैः माषपर्णीमूलरसैः, सङ्गाहित्वात् काम्बोजीशब्देनात्र माषपर्णी एव ग्राह्या। विम्बिशिं प्रवाहिकाम्। एवं कार्य्यं—नागादिभिः कज्जलीं कृत्वा द्रवीभूतसर्ज्जरसे तां प्रक्षिप्य मिश्रयेत्। अनन्तरं भल्लातकादि यक्षादिकमौषधं भर्जयित्वा चूर्णीकृत्य च त्रिपलमितं तच्चूर्णं सर्जरसमिश्रितेन नागादिना मेलयेत् महानिम्बरसादिभिः प्रत्येकं वारत्रयं भावयेच्च। "गुदपरिभ्रंशं तथा विम्बिशिम्" इत्यनन्तरं क्वचित्—"दुर्नामग्रहणीविकारमुदजाम् ये चापि मूलोद्भवाः। सर्वे ते विलयं प्रयान्ति मनुजे श्रीशम्भुनोक्तं पुरा ॥" इत्यधिकः पाठः ॥ ३४—३८ ॥

अथ ग्रहणीचिकित्सा ।—

अथ ग्रहणीलक्षणम् ।—

मलं मङ्क्त्वा सङ्क्त्वा कदाचिद्यदि रेचयेत् ।
अरुचिः श्वयथुर्मान्द्यं ग्रहणीरोगलक्षणम् ॥ ३९ ॥

अथ ग्रहणीवज्रकपाटः ।—

मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम् ।
वचा जया समं सर्वं जयन्तीभृङ्गजद्रवैः ॥ ४० ॥
मजम्बीरैस्त्र्यहं मर्द्यं शोषयेत्तच्च गोलकम् ।
मन्दवह्नौ शनैः स्वेद्यं यामार्द्धं लोहपात्रके ॥ ४१ ॥
रसमाम्ये प्रतिविषा देया मोचरसस्तथा ।
भावयेद्विजयाद्रावैः शोष्यं पेष्यञ्च सप्तधा ॥
रसो वज्रकपाटोऽयं निष्कार्द्धं मधुना लिहेत् ॥ ४२ ॥
वह्निशुण्ठी विडं विल्वं लवणं पेषयेत् समम् ।
पिबेदुष्णाम्भसा चानु वातोत्थां ग्रहणीं जयेत् ॥ ४३ ॥

अथ अग्निकुमारः ।—

दग्धां कपर्दिकां पिष्ट्वा त्र्यूषणं टङ्कणं विषम् ।
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः ॥ ४४ ॥
मर्दयेद्भक्षयेन्माषं मरिचाज्यं लिहेदनु ।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ॥ ४५ ॥

---

ध्वनिःसरणसाधर्म्यात् अन्योऽन्यसम्भवत्वाच्च अतीसारानन्तरं ग्रहणीचिकित्सितं विवक्षुरादौ तल्लक्षणमाह, मलमिति ।—मलमित्यादौ दोष इति कर्त्तृपदमध्याहरणीयम् । सङ्क्त्वा संरुध्य । मान्द्यं मन्दाग्निता ॥ ३९ ॥

ग्रहणीवज्रकपाटे—जया त्रैलोक्यविजया । भृङ्गजद्रवैः भृङ्गराजरसैः । जयन्त्यादीनां प्रत्येकं द्रवेण एकैकं दिनं मर्दयेत् । लोहपात्रके शरावाच्छादितमुखे लोहभाजने ; उक्तञ्च रसेन्द्रचिन्तामणौ—"लौहपात्रे शरावञ्च दत्त्वोपरि विमर्दयेत्" इति । प्रतिविषा अतिविषा ॥ ४०—४२ ॥

अग्निकुमारे—सर्वं स्पष्टम् ॥ ४४।४५ ॥

अथ शम्बूकादिचूर्णम्।—

दग्धशम्बूकसिन्धूत्थं तुल्यं क्षौद्रेण लेहयेत्।
निष्कैकैकं निहन्त्याशु ग्रहणीरोगमुत्कटम्॥ ४६॥

अथ कनकसुन्दरः।—

हिङ्गुलं मरिचं गन्धं पिप्पली टङ्कणं विषम्।
कनकस्य च वीजानि समांशं विजयाद्रवैः॥ ४७॥
मर्दयेद्यामामात्रन्तु चणमात्रं वटीकृतम्।
भक्षयेद्ग्रहणीं हन्ति रसः कनकसुन्दरः॥ ४८॥
अग्निमान्द्यं ज्वरं तीव्रमतिसारञ्च नाशयेत्।
दध्यन्नं दापयेत् पथ्यं गव्याजं तक्रमेव वा॥ ४९॥

अथ ग्रहणीकपाटः।—

रसाभ्रगन्धाः क्रमवृद्धभागा जयारसेन त्रिदिनं विमर्द्याः।
गद्याणकार्द्धं मधुना समेतं ददीत पथ्यं दधिभक्तकञ्च॥५०॥
सौवर्चलं जीरकयुग्मधान्य-जयायवानीकणनागरञ्च।
कपित्थसारेण समं प्रगृह्य ददीत चूर्णं निशि तीव्रपित्ते॥५१॥
गद्याणमात्रं मधुखण्डयुक्तं तक्रेण युक्तं त्वरुचिप्रशान्त्यै।
वातप्रधाने च कफप्रधाने रात्रौ कषायं कुटजस्य दद्यात्॥५२॥
कृशान्वजाजीद्वयमाक्षिकेण कटुत्रयेणापि युतं त्वनुष्णम्।
चाङ्गेरिकाजीरकयुग्मधान्यं दुग्धेन्दुशाकाय ददीत दध्ना॥५३॥

---

शम्बूकादिचूर्णे—दग्धशम्बूक शम्बूकमुखभस्म॥ ४६॥

कनकसुन्दरे—कनकस्य वीजानि धुस्तूरवीजानि॥ ४७—४९॥

ग्रहणीकपाटे—गद्याणकार्द्धं माषद्वयम्। कपित्थसारेण कपित्थमज्जना। तीव्रपित्ते पित्ताधिके ग्रहणीरोगे सौवर्चलादिचूर्णं कपित्थफलमध्यतुल्यं गृहीत्वा रात्रौ रसस्यास्य अनुपानं दद्यात्। गद्याणमात्रम् इत्यत्र भेषजमिति ऊहनीयम्। वातप्रधाने इति छेदः; तेन च वातप्रधाने अरुचिप्रशान्त्यै गद्याणमात्रं भेषजं मध्वादिभिः संयोज्य देयम्। कृशानुः चित्रकः। कफाधिके कृशान्वादियुतम् ईषदुष्णं कुटजकषायमनुपाययेत्। चाङ्गेरी अम्ललोणिका॥ ५०—५३॥

अथ चण्डसङ्ग्रहगदैककपाटः।—

हिङ्गुलोत्थितमहेश्वरबीजं पाततन्त्रविधिना हरणीयम्।
गन्धटङ्कणमृताभ्रकतुल्यं कोकिलाक्षमथ चाऽऽयसखल्वे ॥५४॥
मर्दनीयमभिधारणयुक्ते धूमहीनदहनोपरिसंस्थे।
यावदेष जलशोषणदक्षो जीरकार्द्रकयुतेन स वल्लः ॥ ५५ ॥
सङ्ग्रहज्वरमतिस्रुतिगुल्मानर्शसाञ्च विनिहन्ति समूहम्।
वासुदेवकथितो रसराजश्चण्डसङ्ग्रहगदैककपाटः ॥ ५६ ॥

अथ लघुसिद्धाभ्रकः।—

समांशं रसगन्धाभ्र-दरदञ्च विशोधितम्।
लोहखल्वे विनिक्षिप्य गवाज्येन समन्वितम् ॥ ५७ ॥
मर्दकेनापि लौहेन मर्दयेद्दिवसद्वयम्।
द्रोणीचुल्ल्यां न्यसेत् खल्वं साङ्गारायां प्रयत्नतः ॥ ५८ ॥
इति सिद्धो रसेन्द्रोऽयं लघुसिद्धाभ्रको मतः।
वल्लतुल्यो रसो जीर-वारिणा सहितः प्रगे ॥ ५९ ॥
पीतो हरति वेगेन ग्रहणीमतिदुर्धराम्।
अतिसारं महाघोरं सातिसारं ज्वरं तथा ॥ ६० ॥
पाचनो दीपनो हृद्यो गात्रे लाघवकारकः।
नागार्जुनेन कथितः सद्यः प्रत्ययकारकः ॥ ६१ ॥

---

चण्डसङ्ग्रहगदैककपाटे—हिङ्गुलोत्थितमहेश्वरबीजं हिङ्गुलाकृष्टरसम्। पाततन्त्रविधिना ऊर्द्ध्वपातनयन्त्रेण। आयसखल्वे लोहखल्वे। अभिधारणयुक्ते अभि समन्तात् धार्य्यते अनेन इति अभिधारणं दण्डविशेषः तद्युक्ते मर्दनीयुक्ते इत्यर्थः। यावदेष इति।—अङ्गारोपरिस्थापनात् यावत् जलादिकं सर्वमेव शुष्यति तावत् अवतार्य्य जीरकादिभिः सह दातव्यः। सङ्ग्रहः सङ्ग्रहग्रहणी। अतिस्रुति-रतीसारः। चण्डेति।—चण्डः प्रबलः यः सङ्ग्रहगदः सङ्ग्रहग्रहणीरोगः तस्य एकः मुख्यः कपाटः कपाटतुल्यः ॥ ५४—५६ ॥

लघुसिद्धाभ्रके—दरदः हिङ्गुलः। मर्दकेन मर्दनसाधनेन दण्डेन इत्यर्थः। "दिवसद्वयम्" इत्यत्र "दिवसत्रयम्" इति पाठान्तरम्। द्रोणीचुल्ल्यां द्रोणी प्रस-

अथ सर्वारोग्यवटी ।—

रसं पलमितं तुल्यं शुद्धनागेन संयुतम् ।
द्रावयित्वाऽऽयसे पात्रे सतैले निक्षिपेत् क्षितौ ॥ ६२ ॥
ततो द्रुते विनिक्षिप्य गन्धके तत् विलोड्य च ।
पुनरायसपात्रे तत् क्षिप्त्वा प्रद्राव्य निक्षिपेत् ॥ ६३ ॥
तत्तुल्यं जारयेत्तालं पुनः सञ्चूर्ण्य पूर्ववत् ।
तत्तुल्यां जारयेत् सम्यक्कुनटीं परिशोधिताम् ॥ ६४ ॥
तत्तुल्यं चूर्णिते तस्मिन् क्षिपेन्नागं निरुत्थकम् ।
तावदेव मृतं ताप्यं सर्वमन्यच्च तत्समम् ॥ ६५ ॥
तीक्ष्णायः खर्परं व्योम हिङ्गुलञ्च शिलाजतु ।
पृथक्कर्षांशमानेन षट्कोलं कट्फलं मिषीम् ॥ ६६ ॥
दीप्यकञ्च चतुर्जातं रेणुकोशीरवेल्लकम् ।
तुम्बुरुं भार्ङ्गिकां रास्नां कङ्कोलं चोरपुष्करम् ॥ ६७ ॥
रिङ्गणीं चिरतिक्तञ्च वीजान्युन्मत्तकस्य च ।
पलद्वयञ्च लाङ्गल्याः सर्वेषां द्वादशांशकम् ॥ ६८ ॥
वत्सनाभं सितं भूरि विनिक्षिप्य ततः परम् ।
त्रिफलानां दशाङ्घ्रीणां कषायेण ततः परम् ॥ ६९ ॥
जयन्त्यार्द्रकवासानां मार्कवस्य रसैस्तथा ।
भावयित्वा च कर्त्तव्या वटकाश्चणकोन्मिताः ॥ ७० ॥

सेके जलसिञ्चनार्थं काष्ठनिर्मितापात्रविशेषः. तदाकारायां चुल्ल्याम् । साङ्गारायां निर्धूमाङ्गारपूर्णायाम् । क्षीरवारिणा क्षीरकक्काथेन । प्रगे प्रभाते ॥ ५७—६१ ॥

सर्वारोग्यवट्यां—द्रुते गलिते । तत्तुल्यं रसतुल्यं, पलमितमिति यावत् । तालं हरितालम् । कुनटीं मनःशिलाम् । ताप्यं स्वर्णमाक्षिकम् । षट्कोलं षडूषणम् । मिषी मधुरिका । वेल्लकं विडङ्गम् । तुम्बुरु स्वनामख्यातम् । भार्ङ्गिका भार्गी । चोरपुष्करं चोरः चोरकः ग्रन्थिपर्णं इत्यर्थः, पुष्करं कुष्ठम् ; चोरपुष्करं चोरपुष्पीति केचित्, तन्मते तु चोरपुष्पिका इति पाठः साधुः । रिङ्गणी

एकैका वटिका सेव्या कुर्य्यात्तीव्रतरां क्षुधाम् ।
रुचिञ्च सर्वतो वह्निं सेव्यं स्वादु च शीतलम् ॥ ७१ ॥
सामाञ्च ग्रहणीं सदाऽङ्कतुदनं शोषोत्कटं पाण्डुता-
मार्त्तिं वातकफत्रिदोषजनितां शूलञ्च गुल्मामयम् ।
हिक्काऽऽनाहविसूचिकाञ्च कसनं श्वासार्शसां विद्रधिं
सर्वारोग्यवटी क्षणाद्विजयते रोगांस्तथाऽन्यानपि ॥ ७२ ॥

अथ ग्रहणीगजकेशरी ।—

रसगन्धकयोः कृत्वा कज्जलीं तुल्यभागयोः ।
द्रावयित्वाऽऽयसे पात्रे रसतुल्यं विनिक्षिपेत् ॥ ७३ ॥
चराचरभवं भस्म तत्र माक्षिकसम्भवम् ।
गन्धपाषाणसहितं पात्रे लोहमये क्षिपेत् ॥ ७४ ॥
तत् काष्ठेन विलोड्याथ निक्षिपेत् कदलीदले ।
तत आच्छाद्य सञ्चूर्ण्य निधायाऽऽयसभाजने ॥ ७५ ॥
अक्षमात्रं क्षिपेद्भस्म तत्र माक्षिकसम्भवम् ।
सम्यङ्निश्चन्द्रतां नीतं व्योमभस्म पलोन्मितम् ॥ ७६ ॥

---

मुद्गपर्णी मुस्ता वा । चिरतिक्तं किराततिक्तकम् । उन्मत्तकस्य धुस्तूरस्य । सितं रजतम् । भूरि सुवर्णम् । एतद्द्वयमपि शोधितं वत्सनाभसमञ्च ग्राह्यम् । दशाङ्गीणां दशमूलानाम् । अयमर्थः,—शुद्धरसं शुद्धसीसकञ्च प्रत्येकं पलमानं गृहीत्वा तैल-लिप्तोदरे लौहपात्रे द्रावयित्वा अनन्तरं भूमौ निक्षिपेत् । ततः शीतीभूतं तं भूमेरुत्तोल्य रससमे द्रुते गन्धके क्षिप्त्वा आलोड्य च सगन्धकं तं पूर्ववत् तैललिप्ते लौहपात्रे द्रवीकृत्य पुनर्भूमौ निक्षिपेत् । एवम् आलादिकं शिलाजत्वन्तं सर्वमेव पूर्ववत् पृथक् पृथक् द्रावयित्वा भूमौ निक्षिपेत् । अनन्तरमेकीभूते तस्मिन् षट्-कोलादीनां पञ्चविंशतिद्रव्याणां प्रत्येकं कर्षं लाङ्गल्याश्च पलद्वयं चूर्णं मिश्रयेत् । अनन्तरं सर्वेषां द्वादशांशकं वत्सनाभं सुवर्णं रौप्यञ्च पृथक् पृथक् दत्त्वा त्रिफलादिभिः षड्भिः प्रत्येकं सप्तधा भावयेदिति ॥ ६२—७२ ॥

ग्रहणीगजकेशरिणि—रसगन्धकयोः नामैकत्वेऽपि पूर्वयोगात् पलमानत्वं

विषं विषाञ्च गन्धारीं मोचसारं सजीरकम् ।
सर्वं समांशकं ज्ञात्वा रसे चार्द्धांशतः क्षिपेत् ॥ ७७ ॥
सर्वमेतन्मर्द्दयित्वा भावयेदतियत्नतः ।
जयन्त्या च महाराष्ट्रया गजाङ्किन्याऽश्वगन्धया ॥ ७८ ॥
पञ्चकोलकषायैश्च कुर्य्याच्चूर्णं ततः परम् ।
इति सिद्धो रसः सोऽयं ग्रहणीगजकेशरी ॥ ७९ ॥
नामतो नन्दिना प्रोक्तः कर्मतश्च सुधानिधिः ।
वल्लेन प्रमितश्चायं रसः शुण्ठ्या घृताक्तया ॥ ८० ॥
सेवितो ग्रहणीं हन्ति सत्सङ्ग इव विग्रहम् ।
पथ्यमत्र प्रदातव्यं स्वल्पाज्यं दधितक्रयुक् ॥८१॥
हितं मितञ्च विशदं लघु ग्राहि रुचिप्रदम् ।
पाचनो दीपनोऽत्यर्थमामघ्नो रुचिकारकः ॥८२॥
तत्तदौषधयोगेन सर्वातीसारनाशनः ।
बध्नन्नपि मलं शीघ्रं नाऽऽध्मानं कुरुते नृणाम् ॥ ८३ ॥

---

शल्लकशो बोद्धव्यम्। चराचरभवं भस्म कपर्दकभस्म। आच्छाद्य इति गोमयगर्भेण कदलीदलान्तरेण रसपर्पटीवत् निपीड्येत्यर्थः। विषा अतिविषा। गन्धारी दुरालभा। मोचसारं शाल्मलीवेष्टकम्। भावयेदित्यस्य जयन्त्या इत्यारभ्य पञ्चकोलकषायैः इत्यन्तेन सम्बन्धः। सर्वमिति।—विषादिकं द्रव्यपञ्चकं प्रत्येकं समांशं गृहीत्वा व्योमभस्मान्तात् मिलितरसात् अर्द्धांशमानेन रसे क्षिपेत् इत्यर्थः; ततश्च रसादीनां प्रत्येकं पलमानेन कर्षाधिकपलषट्कमानं विषादीनाञ्च प्रत्येकं सार्द्धकर्षद्वयमानेन ग्रहणात् रसमानात् अर्द्धांशं तोलाधिकपलत्रयमानं भवति। महाराष्ट्री जलपिप्पली। गजाङ्किनी गजाङ्कः गजचिह्नं शुण्डारूपमस्यामस्तीति सा शीहस्तिनी, "हातिशुँडा" इति वङ्गभाषा। "गजाङ्किनी" इत्यत्र "गञ्जा कन्या" इति पाठे—गञ्जा विजया, कन्या कुमारिका, "घृतकुमारी" इति वङ्गभाषा; पक्षेऽस्मिन्—गञ्जया कन्यया अश्वगन्धया च भावयेत्। तत्तदौषधयोगेन तत्तद्दोषनाशकानुपानयोगेन ॥ ७२—८३ ॥

अथ शीघ्रप्रभावः ।—

पारदं गन्धकं व्योम तीक्ष्णं तालं मनःशिला ।
सौवीरमञ्जनं शुद्धं विमलञ्च समांशकम् ॥ ८४ ॥
एभिः कज्जलिकां कृत्वा स्वल्पतैलेन भर्जयेत् ।
ग्रन्थिकं जीरकं चित्रं दीप्यकं मुस्तकं विषम् ॥ ८५ ॥
बालाम्रं बालबिल्वञ्च मोचसारं समांशकम् ।
विचूर्ण्य पूर्ववत् कल्कं तदर्द्धेन विनिक्षिपेत् ॥ ८६ ॥
पुनर्विमर्दयेद्यत्नादेकरूपं भवेद्यथा ।
भावयेत् सप्त वाराणि पञ्चकोलकषायतः ॥८७॥
अरलुत्वग्रसेनापि दश वाराणि भावयेत् ।
अनेन क्रमयोगेन रसो निष्पद्यते ह्ययम् ॥ ८८ ॥
अश्नो विश्वघनाम्बुना स हि रसः शीघ्रप्रभावाभिधो
निष्कार्द्धप्रमितो महाग्रहणिकारोगेऽतिसारामये ।
आध्माने ग्रहणीभवे रुचिहते वाते च मन्दानले
मुक्ते चापि मले पुनश्चलमलाशङ्कासु हिक्कासु च ॥ ८९ ॥

---

शीघ्रप्रभावे—तीक्ष्णं तीक्ष्णलौहम्। सौवीरमञ्जनं स्रोतोऽञ्जनम्। विमलं रौप्यमाक्षिकम्। ग्रन्थिकं पिप्पलीमूलम्। दीप्यकं यमानी। बालाम्रं तरुणाम्रं, तस्य फलास्थिमज्जा ग्राह्यः। मोचसारं मोचरसः। पूर्ववत् ग्रहणीगजकेशरीवत्। तदर्द्धेन पारदादीनां मिलितानामर्द्धेन, ततश्च ग्रन्थिकादीनां प्रत्येकं व्यावहारिकमानेन यवद्वयाधिकरक्तिचतुष्टयसमन्वितं माषकत्रयं (/० आना, ४ रति, २ यव) भवतीति बोध्यम्। अरलुत्वक् श्योनाकवल्कलम्। विश्वघनाम्बुना शुण्ठीमुस्तयोः क्वाथेन। रुचिहते अरुचौ। पारदादिकं सर्वमेकत्र मर्दयित्वा किञ्चित्तैलेन मनाक् भर्जयेत्, ततः ग्रन्थिकादीनां प्रत्येकं समांशानां चूर्णं मिलित्वा पारदादीनां सर्वेषामर्द्धभागं तत्र दत्त्वा गाढं विमर्दयेत्, अनन्तरं पञ्चकोलक्वाथेन सप्त श्योनाकत्वग्रसेन च दश भावना दद्यादिति निष्कर्षः ॥८४—८९॥

अथ पोटली ।—

कपर्दतुल्यं रसगन्धकल्कं लोहं मृतं टङ्गणकञ्च तुल्यम् ।
जयारसेनैकदिनं विमर्द्य चूर्णेन सम्पिष्य पुटेत्तु भाण्डे ॥९०॥
ददीत तां पोटलिकाञ्च दोष-त्रयप्रधानग्रहणीनिवृत्त्यै ॥९१॥

अथ वह्निज्वाला वटी ।—

नष्टपिष्टी चतुर्माषौ प्रत्येकं रसगन्धकौ ।
अभ्रकं माषमानञ्च मातुलुङ्गाम्लमर्दितम् ॥ ९२ ॥
शोधितं सप्तधा चैव द्विमाषं तूषणं पृथक् ।
त्रिशूली भृङ्गचाङ्गेरी सातला तीक्ष्णपर्णिका ॥ ९३ ॥
श्वेतापराजिता कन्या मत्स्याक्षी ग्रीष्मसुन्दरा ।
करिणी कर्णमोटी च रुदन्ती चित्रकार्द्रकात् ॥ ९४ ॥
धुस्तूरकाकमाचीभ्यां मुषल्याश्च पृथग्रसैः ।
मर्दितं द्विपलैः कुर्य्याद्वटिका माषसम्मिता ॥ ९५ ॥
ग्रहण्यां पर्णखण्डेन व्योषयुक्ता निषेविता ।
अरुचिं राजयक्ष्माणं मन्दाग्निं सूतिकागदान् ॥
शमयेद्वटिका नाम्ना वह्निज्वालेति गीयते ॥ ९६ ॥

पोटल्यां—रसगन्धकल्कं कज्जली । जयाशब्देनात्र विजया गृह्यते ग्रहणी-हन्तृत्वात्, न तु जयन्ती । चूर्णेन चूर्णादिकेन । "चूर्णेन सम्पिष्य" इत्यत्र "चूर्णेन संवेष्ट्य" इति रसेन्द्रसारसङ्ग्रहधृतपाठः, तत्र—ऊर्द्धाधो शङ्खशुक्त्यादिकृतं चूर्णं दत्त्वा मध्ये औषधं संस्थाप्य पुटेत् । तत्र चास्य "ग्रहणीकपर्दपोट्टली" इति संज्ञा ॥९०।९१॥

वह्निज्वालायां—नष्टपिष्टी इति पूर्वोक्तप्रकारेण नवनीतादिभिः सह मर्दित-पिष्टीकृतौ । अभ्रकमिति ।—सप्तधा मातुलुङ्गाम्लमर्दितं शोधितं माषमानमभ्रकमिति योजनीयम् । त्रिशूलीशब्देनात्र शिवलिङ्गी इष्टा, तस्य पत्ररसेन ; यद्वा—त्रिशूली शिवः धुस्तूर इति यावत् । सातला चर्मकषा, "चैँटकोल" इति प्रसिद्धम् । तीक्ष्णपर्णिका रक्तेक्षुः । कन्या कुमारी । मत्स्याक्षी शालिञ्चः । ग्रीष्मसुन्दरा "गिमा" इति प्रसिद्धम् । करिणी शोहञ्जिनी, "हातिसुँड़ा" इति भाषा । कर्णमोटी वर्व्वुरः, अस्य त्वक् ग्राह्यम् । रुदन्ती स्वनामख्यातक्षुप-

अथ वज्रधरः ।—

रसगन्धकताम्राभ्रं क्षारांस्त्रीन् वरुणो वृषम् ।
अपामार्गस्य च क्षारं लवणं द्विद्विमाषकम् ॥ ९७ ॥
चाङ्गेर्या हस्तिशुण्ड्याश्च रसैः पिष्टं पचेत् पुटे ।
भक्षयित्वा ततो गुञ्जां ग्रहण्यां काञ्जिकं पिबेत् ॥ ९८ ॥
पक्तिशूले च कासे च मन्दाग्नावार्द्रकद्रवम् ।
अम्लपित्ते च धारोष्णं क्षीरं वज्रधरो ह्ययम् ॥ ९९ ॥

अथ ग्रहणीकपाटः ।—

रसेन्द्रगन्धातिविषाऽभयाभ्रं
क्षारद्वयं मोचरसो वचा च ।
जया च जम्बीररसेन पिष्टं
पिण्डीकृतं स्याद्ग्रहणीकपाटः ॥१००॥
तस्यार्द्धमाषं मधुना प्रभाते
अम्बूकभस्माज्यमधूनि लिह्यात् ।
सचौरिणीजीरकमाणिमन्थ-
तीक्ष्णानि चादौ दधिभोजनञ्च ॥१०१॥

अथ मुस्तादिचूर्णम् ।—

मुस्तावत्सकपाठाग्नि-व्योषप्रतिविषाविषम् ।
धातकीमोचनिर्य्यासभूताह्वि ग्रहणीहरम् ॥ १०२ ॥

विशेषः. तल्लक्षणं यथा राजनिघण्टौ—"वरुणपत्रसमं पत्रं क्षुपश्चैव तथाविधः । शैशिरे जलबिन्दूनास्रवन्तीति वदन्तिका ॥" इति । मुषली तालमूली ॥ ९२—९६ ॥

वज्रधरे—क्षारांस्त्रीन् "स्वर्जिका टङ्कणश्चैव यवक्षार उदाहृतः" इत्युक्तक्षारत्रयम् । वरुणः स्वनामख्यातः । वृषं वासकम् । लवणं सैन्धवम् ॥ ९७—९९ ॥

ग्रहणीकपाटे—क्षारद्वयमिति सर्जिकाक्षारयवक्षाररूपम् । जया विजया । सचौरिणी चौरिका । माणिमन्थं सैन्धवम् । तीक्ष्णानि तीक्ष्णवीर्य्यद्रव्याणि सर्षपाणि वा । चादाविति ।—चादौ चौषधसेवनात् प्राक् दधिभोजनं कर्त्तव्यम् ॥१००।१०१॥

मुस्तादिचूर्णे—भूताह्वि भावाह्विमन्था । कर्षं चूर्णीकृत्य उपयोज्यम् ॥ १०२ ॥

## अथाजीर्णचिकित्सा ।—

अथ अजीर्णलक्षणम् ।—

विरेको जठरे शूली वमनश्च मुहुर्मुहुः ।
हस्तपादादिसङ्कोचः सर्वाजीर्णस्य लक्षणम् ॥ १०३ ॥

अथाजीर्णकण्टकः ।—

शुद्धसूतं विषं गन्धं सर्वं समविचूर्णितम् ।
मरिचं सर्वतुल्यांशं कण्टकार्य्याः फलद्रवैः ॥१०४॥
मर्दयेद्भावयेत् सर्वमेकविंशतिवारकम् ।
वटीं गुञ्जात्रयं खादेत् सर्वाजीर्णप्रशान्तये ॥ १०५ ॥
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ।
वारिणा तिलपर्ण्युत्थ-मूलं पिष्ट्वा पिबेदनु ॥ १०६ ॥

अथ विध्वंसनामा रसः ।—

विमर्द्य गन्धोपलटङ्कणेन
सम्भाव्य वारानथ सप्त जात्याः ।
तोयैः फलानामथ चैव सिद्धो
विध्वंसनामा शमनो विसूच्याः ॥१०७॥
अमुष्य गुञ्जा नव दापनीया
हन्तुं विसूचीं सितया समेताः ।
तक्रौदनं स्यादिह भोजनाय
पथ्यञ्च शाकं किल वास्तुकस्य ॥१०८॥

---

ग्रहणीविकृत्या अजीर्णः सम्भवतीति ग्रहण्यनन्तरमजीर्णचिकित्सितं विवक्षुरादौ तस्य लक्षणमाह, विरेक इति ।—स्पष्टम् ॥ १०३ ॥

अजीर्णकण्टके—तिलपर्ण्युत्थमूलं तिलपर्णी रक्तचन्दनं, तिलोनीति प्रसिद्धः शाकभेदो वा, तस्या मूलम् ॥ १०४—१०६ ॥

विध्वंसनाम्नि रसे—गन्धोपलः गन्धकः । जात्या. फलानां जातीफलानां तोयैः क्वाथैः सप्तवारान् सम्भाव्य इत्यन्वययुक्तिः ॥ १०७।१०८ ॥

अथ वृहद्विध्वंसनामा रसः।—

रसगन्धटङ्कभसितं समांशकं
परिमर्द्य जातिफलसप्तभावितम्।
सितयोपयुज्य नवरक्तिकोन्मितं
मथितान्नभुग्विजयते विसूचिकाम्॥१०९॥

अथाग्निकुमारः।—

हंसपादीरसैः सिद्धं रसगन्धकयोः पलम्।
कोलञ्च विषचूर्णस्य बालुकायन्त्रपाचितम्॥११०॥
आद्यं विषस्यार्द्धपलं मरिचस्य विमिश्रयेत्।
दीपनोऽग्निकुमारोऽयं ग्रहण्याञ्च विशेषतः॥१११॥
स वातश्लेष्मजान् रोगान् क्षणादेवापकर्षति।
सन्निपातज्वरश्वास-क्षयकासांश्च नाशयेत्॥ ११२ ॥

अथ वड़वाग्निरसः।—

टङ्कणं मरिचं तुल्यं पृथक्कर्षत्रयं भवेत्।
सुन्दरं द्वादशं निष्कं त्रिंशन्निष्कमयोमलम्॥११३॥
कान्तं पञ्चरसे घृष्टं पुटपक्कं वरारसे।
मार्कवस्वरसे घृष्टं सप्तकृत्वस्त्वयोमलम्॥ ११४ ॥

---

वृहद्विध्वंसनाम्नि रसे—टङ्कभसितं शोधितटङ्कणम्। मथितान्नभुक् मथितेन उद्धृतस्नेहेन निर्जलेन च तक्रेण, "मथितन्त्वमुदकम्" इति वचनात्; सह अन्नभुक् तक्रौदनाशी॥ १०९ ॥

अग्निकुमारे—हंसपादी गोधापदी, "गोद्दालिया" इति ख्यातम्। रसगन्धकयोरिति मिलितयोः पलमानं बोध्यम्। अयमर्थः,—यथाविधिशुद्धयोः रसगन्धकयोः पलं गृहीत्वा हंसपादीरसैः मर्दयेत्, तदनु कोलमानं विषचूर्णं तेन सह मिश्रयित्वा काचकूपिकायां संस्थाप्य च बालुकायन्त्रे यामचतुष्टयं पचेत्। स्वाङ्गशीतञ्च तत् समुद्धृत्य आद्यमानेन विषेण मरिचस्य चार्द्धपलेन योजयेदिति॥ ११०—११२ ॥

वड़वाग्निरसे—सुन्दरं ताम्रं कान्तलौहमित्यर्थः। द्वादशं निष्कं कर्षत्रयम्।

चूर्णान्येतानि संयोज्य स्थापयेच्छुद्धभाजने।
शुद्धदेहो नरस्तस्य पानं यद्भोजनोत्तरम् ॥ ११५ ॥
अद्यात् पथ्यं ततः स्वल्पं ततस्ताम्बूलभाग्भवेत्।
उदराग्निर्नरस्यास्य बड़वाग्निसमो भवेत् ॥
बहुनाऽत्र किमुक्तेन रसायनमयं नृणाम् ॥ ११६ ॥

अथ वराटीलक्षणम्।—

पीतवर्णा गुरुस्निग्धा पृष्ठतो ग्रन्थिलाऽमला।
चराचरेति सा प्रोक्ता वराटी नन्दिना खलु ॥११७॥

अथ श्रेष्ठमध्यमाधमवराटिकाया लक्षणम्।—

सार्द्धनिष्कमिता श्रेष्ठा मध्यमा निष्कमानिका।
पादोननिष्कमाना च कनिष्ठाऽत्र वराटिका ॥११८॥

अथ वराटलक्षणम्।—

निष्फलाश्च ततो न्यूनाः पुंवराटाश्च पित्तलाः।
दत्त्वा दत्त्वा गुणान् भूयो विकारान् कुर्वते हि ते ॥११९॥

त्रिंशन्निष्कं पञ्चदशतोलकम्। अयोमलं मण्डूरम्। कान्तं कान्तलौहम्। पद्मरसे पद्मपुष्पस्वरसे। मार्कवरसे भृङ्गराजरसे। मारितपुटितकान्तलौहचूर्णं पद्मपुष्पस्वरसेन त्रिफलाक्काथेन च प्रत्येकं सप्तवारं मर्दयित्वा पुटपाकेन साधयेत्। मण्डूरमपि शोधितं भृङ्गस्वरसेन सम्मर्द्य पुटपाकं कुर्य्यात्। अनन्तरं टङ्कणादिकं सर्वं यथोक्तमानं गृहीत्वा एकीकृत्य स्थापयेत्। भोजनोत्तरभक्तिकमस्य प्रयोगः कर्त्तव्यः। प्रयोगकाले हितमितभोजिना च भाव्यम्; अनन्तरं ताम्बूलसेवी च स्यात् ॥११३—११६॥

वक्ष्यमाणवैश्वानरपोटल्यां वराटिकायाः ग्रहणोपदेशात् वराटीवराटभेदेन द्विविधयोस्तयोः वराटीलक्षणमाह, पीतवर्णेति।—सुगमम् ॥ ११७ ॥

उत्तमादिभेदेन त्रिविधाया वराटिकाया लक्षणमाह, सार्द्धेति।—सार्द्धनिष्कमिता षण्माषका। पादोननिष्कमाना माषत्रयमिता ॥ ११८ ॥

वराटलक्षणमाह, निष्फला इति।—ततो न्यूनाः वराटीमानात् स्वल्पमानाः पुंवराटाः; वराट इति संज्ञाविशिष्टाः न तु वराटिकाः; ते निष्फलाः न्यूनलाभ

अथ वैश्वानरपोटली ।—

शुद्धौ सूतबली चराचररजः कर्षांशतः कज्जलीं
कृत्वा गोपयसा विमर्द्य दिवसं कृत्वा च मूषोदरे ।
सिद्धा कुम्भिपुटे स्वतश्च शिशिरा पिष्टा करण्डे स्थिता
स्याद्वैश्वानरपोटलीति कथिता तीव्राग्निदीप्तिप्रदा ॥१२०॥

एकोनविंशतैश्चूर्णैर्मरिचानां घृतान्वितैः ।
देयेयं वल्लमानेन वयोबलमवेक्ष्य ताम् ॥ १२१ ॥
गिलेद्गलविशुद्ध्यर्थं दधिभक्तमनुत्तमम् ।
कवलत्रयमानेन दुर्गन्धोद्गारशान्तये ॥ १२२ ॥
मध्यन्दिने ततो भोज्यं घृततक्रोपदंशयुक् ।
रात्रौ च पयसा सार्द्धं यद्वा रोगानुसारतः ॥ १२३ ॥
विदाहि विदलं भूरि-लवणं तैलपाचितम् ।
बिल्वञ्च कारवेल्लञ्च वृन्ताकं काञ्जिकं त्यजेत् ॥१२४॥
इयं हि पोटली प्रोक्ता सिंहलेन महीभृता ।
मन्दाग्निप्रभवाशेष-रोगसङ्घातघातिनी ॥ १२५ ॥
सिंहलस्यापि निर्दिष्टा भैरवानन्दयोगिना ।
लोकनाथोक्तपोटल्या उपचारा इह स्मृताः ॥
पोटल्यो दीपनाः स्निग्धा मन्दाग्नौ नितरां हिताः ॥१२६॥

---

स्वल्पगुणाः तथा पित्तलाश्च, यतः गुणान् दत्त्वा दत्त्वाऽपि भूयः पुनरपि विकारान् कुर्वते स्वल्पगुणवत्त्वात् न स्थायिगुणभाजो भवन्तीत्यर्थः ॥ ११९ ॥

वैश्वानरपोटल्यां—सूतबली रसगन्धकौ । चराचररजः शोधितवराटीभस्म । कुम्भिपुटस्तु कुम्भपुट इति प्रसिद्धः । स्वतश्च शिशिरा स्वाङ्गशीता । करण्डे भाजने । गिलेदिति ।—औषधसेवनजनितमुखविकृतिनाशनार्थं तथा दुर्गन्धोद्गारनाशनार्थञ्च दधिभक्तं कवलत्रयं भोक्तव्यम् । घृततक्रोपदंशयुक् घृततक्रे एव उपदंशौ व्यञ्जने, भोजनोपकरणे इत्यर्थः, यद्वा—उपदंशो चक्षणे "चाट्" इति प्रसिद्धं, तद्युक् तद्युक्तमित्यर्थः । रोगानुसारतः व्याधेरवस्थां विविच्य भोज्यं कल्पनीयमित्यर्थः ॥ १२०—१२६ ॥

अथ बड़वामुखी गुटिका।—

शुल्वायोघनभस्म वेल्लहलिनी-व्योषाम्बुनिम्बच्छदैः
संयुक्तेष हरिद्रया समलवैः सार्द्धं सशुभ्रामृतैः।
भृङ्गाम्भोविषतिन्दुकार्द्रकरसैः सम्पिष्य गुञ्जामिता
संशुष्का बड़वामुखोति गुटिका नाम्नोदिता तारया ॥१२७॥
चिप्रं चुत्परिबोधिनी खलु मता सर्वामयध्वंसिनी
श्लेष्मव्याधिविधूननी कसनहृच्छ्वासापहा शूलनुत्।
कुष्ठैषम्यहरा च गुल्मशमनी मूलार्त्तिमूलङ्कषा
शोफव्याधिहराऽत्र किं बहुगिरा सर्वामयोत्सादनी ॥१२८॥

अथ क्रव्यादनामा रसः।—

त्रिपलं गन्धकं शुद्धं द्रावयित्वा विनिचिपेत्।
पारदं पलमानेन मृतशुल्वायसं पुनः ॥ १२९ ॥
तोलमानेन सङ्क्षिप्य पञ्चाङ्गुलदले चिपेत्।
ततो विचूर्ण्य यत्नेन निचिप्याऽऽयसभाजने ॥१३०॥
चुल्ल्यां निवेश्य यत्नेन ज्वालयेन्मृदुवह्निना।
पात्रमात्रं हि जम्बीर-रसं सम्यक् विजारयेत् ॥ १३१ ॥
सञ्चूर्ण्य पञ्चकोलाद्यैः कषायैः साम्लवेतसैः।
भावनाः खलु कर्त्तव्याः पञ्चाशत्प्रमितास्ततः ॥ १३२ ॥

बड़वामुख्यां—शुल्वं ताम्रम्। वेल्लं विड़ङ्गम्। हलिनी लाङ्गली। अम्बु बालकम्। निम्बच्छदं निम्बपत्रम्। समलवैः समांशैरैः। सशुभ्रामृतैः शुभ्रा सैन्धवलवणम् अमृतं विषं ताभ्यां सहितैः। भृङ्गः भृङ्गराजः। अम्भो बालकम्। विषतिन्दुकः "कुँचिला" इति प्रसिद्धः। मूलार्त्तिमूलङ्कषा मूलार्त्तेः अर्शोव्याधेः मूलङ्कषा मूलनाशिनी ॥ १२७।१२८ ॥

क्रव्यादरसे—"मृतशुल्वायसं पुनः तोलमानेन" इत्यत्र "शुल्वायसी चार्द्धपलप्रमाणे" तथा "पात्रमात्रं हि जम्बीररसम्" इत्यत्र "जम्बीरजं पक्करसं पलानां शतम्" इति रसेन्द्रसारसङ्ग्रहीतः पाठः। पञ्चाङ्गुलदले एरण्डपत्रे। पात्रमात्रम् आढकमानम्। विजारयेत् विशोषयेदित्यर्थः। सञ्चूर्ण्येत्यादि।—पञ्चकोलाम्लवेतसयोः

भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ।
तदर्द्धं कृष्णलवणं सर्वतुल्यं मरीचकम् ॥ १३३ ॥
सप्तधा भावयेत् पश्चाच्चणकक्षारवारिणा ।
ततः संशोष्य सम्पेष्य कूपिकाजठरे क्षिपेत् ॥१३४॥
अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः ।
भुक्त्वा च कण्ठपर्य्यन्तं चतुर्वल्लमितं रसम् ॥ १३५ ॥
पटुम्लतक्रसहितं पिबेत्तदनुपानतः ।
१ क्षिप्रं तज्जीर्य्यते भुक्तं जायते दीपनं पुनः ॥१३६॥
रसः क्रव्यादनामाऽयं प्रोक्तो मन्थानभैरवैः ।
सिंहलक्षौणिपालस्य भूरिमांसप्रियस्य च ॥
दिष्टो ग्रामं समासाद्य भैरवानन्दयोगिना ॥ १३७ ॥
कुर्य्याद्दीपनमुद्धतञ्च पचनं दुष्टामसंशोषणं
तुन्दस्थौल्यनिवर्हणं गरहरं मूलार्त्तिशूलापहम् ।
गुल्मप्लीहविनाशनं ग्रहणिकाविध्वंसनं स्रंसनं
वातग्रन्थिमहोदरापहरणं क्रव्यादनामा रसः ॥ १३८ ॥

प्रत्येकं क्वाथैः पञ्चाशद्भावना देयाः ; तथा च रसेन्द्रसारसङ्ग्रहे—"सुपक्वकोलोद्भव-वारिपूरैः । सवेतसाम्लैः शतमत्र योज्यम्" इति । अत्र शतमिति प्रत्येकक्वाथेन पञ्चाशत् पञ्चाशत् कृत्वा बोद्धव्यम् । कृष्णलवणं विड्लवणम् । चणकक्षारवारिणा चणकवृक्षं दग्ध्वा तद्भस्मकृतक्षारोदकेन । "चणकक्षारवारिणा" इत्यत्र "चणकाम्लकेन" इति रसेन्द्रसारसङ्ग्रहे तथा "चणकपुष्परसेन" इति रसकौमुद्याञ्च पाठः । द्विपलं गन्धकम् अग्नौ द्रवीकृत्य पलप्रमाणं शुद्धपारदं तथा मृतं ताम्रं मृतं लौहञ्च प्रत्येकं तोलकमितं तत्र प्रक्षिप्य एरण्डपत्रे पातयित्वा पर्पटिकाकारं कुर्य्यात्, ततो विचूर्ण्य लोहभाजने संस्थाप्य आढकमानं जम्बीररसं दत्त्वा मृद्वग्निना पाचयेत् । रसे सम्यक् शुष्के अवतार्य्य पुनः सञ्चूर्ण्य अम्लवेतसपक्वकोलयोः क्वाथैः प्रत्येकं पञ्चाशत् भावनाः दापयेत् । ततः सर्वतुल्यं टङ्कणं टङ्कणार्द्धं कृष्णलवणं मरिचञ्च गन्धकादिभिः सर्वैः तुल्यं तत्र दत्त्वा चणकक्षारोदकेन सप्तवारान् भावयित्वा च शुष्कीकुर्य्यात्, ततः सञ्चूर्ण्य काचकूप्यां स्थापयेदिति ॥ १२९—१३८ ॥

अथ राजशेखरवटी।—

भागोऽमृतरसस्यैको वत्सनाभांशकद्वयम्।
रसतुल्यं शिवाचूर्णं गन्धकं त्र्यूषणं तथा॥ १३९॥
विचूर्ण्यातिप्रयत्नेन भावयेत् सप्तवारकम्।
ताम्बूलीपत्रतोयेन स्वर्णधुस्तूरजद्रवैः॥
पिष्ट्वा चणमिताः कुर्य्याच्छायाशुष्कास्तु गोलिकाः॥१४०॥
उष्णाम्भोयुतराजशेखरवटी मन्दाग्निनिर्नाशिनी
नानाकारमहाज्वरार्त्तिशमनी निःशेषमूलापहा।
पाण्डुव्याधिमहोदरार्त्तिशमनी शूलान्तकृत् पाचनी
शोफघ्नी पवनार्त्तिनाशनपटुः श्लेष्मामयध्वंसिनी॥१४१॥

अथ द्वितीयाग्निकुमारः।—

शुद्धं सूतं विषं गन्धं त्रिक्षारं पटुपञ्चकम्।
दशकं तुल्यतुल्यांशं भर्जिता विजया नवा॥ १४२॥
दशानां तुल्यभागा च तस्यार्द्धं शिग्रुमूलकम्।
तत् सर्वं विजयाद्रावैः शिग्रुचित्रकभृङ्गजैः॥ १४३॥
द्रावैर्दिनत्रयं मर्द्यं कृत्वा भाण्डे पचेल्लघु।
दीपाग्निना तु यामैकं शुष्कं यावत् समुद्धरेत्॥१४४॥

---

राजशेखरे—वत्सनाभः विषम। शिवाचूर्णं हरीतकीचूर्णम। त्र्यूषणं तदिति त्र्यूषणचूर्णं प्रत्येकं रससमम्। स्वर्णधुस्तूरजद्रवैः पीतपुष्पधुस्तूरमूलरसैः॥१३९—१४१॥

अग्निकुमारे—"शुद्धं सूतं विषं गन्धम" इत्यत्र "विषम्" इति प्रामादिकः पाठः, "दशकं तुल्यतुल्यांशम्" "दशानां तुल्यभागा च" इत्याद्युत्तरवचनविरोधात्, विषेण सह गणनया सूतादीनामेकादशत्वप्रसङ्गाच्च। यत्तु केनचित् "शुद्धं सूतं विषं गन्धं द्विक्षारं पटुपञ्चकम्" इति पाठं प्रकल्प्य दशसङ्ख्यावत्त्वं समञ्जसीकृतं, तदपि न समीचीनं, "शुद्धसूतं मृतं गन्धं त्रिक्षारं पटुपञ्चकम्" इति रसरत्नाकरवचनविरोधात्। त्रिक्षारं "क्षारद्वयं टङ्कणाच्च क्षारत्रयमुदाहृतम्" इत्युक्तरूपम्। पटुपञ्चकं पञ्चलवणम्। तस्यार्द्धं तस्य सर्वतुल्यस्य भृष्टविजयाचूर्णस्य अर्द्धम्। दीपाग्निना दीपशिखया; "दीपाग्निना"

सप्तधा चाऽऽर्द्रकद्रावैर्भावयेच्चूर्णयेद्भिषक् ।
दीपकोऽग्निकुमारोऽयं निष्कैकं मधुना लिहेत् ॥
प्रतिकर्षं गुडं शुण्ठी अनुपानञ्च दीपनम् ॥ १४५ ॥

अथामृतवटी ।—

कुष्ठगन्धविषव्योम-त्रिफलापारदैः समैः ।
भृङ्गाम्बुमर्दितैर्मुद्ग-मानाऽमृतवटी शुभा ॥
अजीर्णश्लेष्मवातघ्नी दीपनी रुचिवर्द्धनी ॥ १४६ ॥

अथ राक्षसनामा रसः ।—

ताम्रं पारदगन्धकौ त्रिकटुकं तीक्ष्णञ्च सौवर्चलं
खल्वे मर्द्य दृढं विधाय सिकताकुम्भेऽष्टयामं ततः ।
स्विन्नं तस्य च रक्तशाकिनिभवं क्षारं समं मेलयेत्
सर्वं भावितमातुलुङ्गजरसैर्नाम्ना रसो राक्षसः ॥१४७॥
मन्दाग्नौ सततं ददौ स मुनये प्रातः पुरा शङ्करः
सख्येऽस्मै च्यवनाय मन्दहुतभुग्वर्य्याय नष्टौजसे ।
तेनादाय समस्तलोकगुरवे सूर्य्याय तस्मै नमो
मर्त्यानामपि चास्य दानसमये गुञ्जाष्टकं वर्जयेत् ॥१४८॥

---

इत्यत्र "दीप्ताग्निना" तथा "आर्द्रकद्रावैर्भावयेच्चूर्णयेत् भिषक्" इत्यत्र "आर्द्रकद्रावे-र्भिवकैर्भावयेद्भिषक्" इति रसरत्नाकरे पाठद्वयम् । प्रतिकर्षमिति गुडशुण्ठ्योः प्रत्येकं कर्षमानमनुपानं कार्य्यम् ॥ १४२—१४५ ॥

अमृतवट्यां—व्योम अभ्रम् ; "व्योम" इत्यत्र "व्योष" इति रसेन्द्रचिन्तामणिधृत-पाठः । समैः समभागैः ॥ १४६ ॥

राक्षसनाम्नि रसे—तीक्ष्णं तीक्ष्णलौहम् । सिकताकुम्भे बालुकापूर्णभाण्डे । तस्य ताम्रादिसर्वचूर्णस्य, सममित्यनेन अन्वयः ; समं तुल्यम् । रक्तशाकिनी रक्त-पुनर्नवा । वर्जयेत् त्यजेत्, दापयेदित्यर्थः, मर्त्येभ्यः अष्टगुञ्जापरिमितम् एतस्य दापयेदिति ॥ १४७।१४८ ॥

अथ जीवननामा रसः।—

रसगन्धौ सिन्धुकणाटङ्कणमभयाग्निहियावलीकतकफलम्।
क्रमशोत्तरं विचूर्णितया वह्नीरससंयुतभावनया॥१४९॥
आर्द्रकहिङ्गुपुनर्नवपूतिच्छिन्नरसैः क्रमशस्तु भावनया।
तस्य कलांशविंशञ्च विमिश्रं तद्रसमानं मानवविधया॥१५०॥
सर्वमजीर्णं कफमारुतपाण्डुशोफहलीमककामलाशूलम्।
नाशयते क्षुदग्निकरोऽयं दीपनश्च जीवननामरसेन्द्रः॥१५१॥

अथ वडवानलः।—

शुल्वं तालकगन्धकौ जलनिधिः फेनोऽग्निगर्भाशयः
कान्तायो लवणानि हेमपयसी नीलाञ्जनं तुत्थकम्।
भागो द्वादशको रसस्य तु दिनं वज्राम्बुघृष्टं शनैः
सिद्धोऽयं वडवानलो गजपुटे रोगानशेषान् जयेत्॥१५२॥

जीवनरसे—गन्धः गन्धकः। हियावली ईश्वरजटा नामप्रसिद्धा। "हियावली" इत्यत्र "हिंतावली" इति पाठः समीचीनः, राजनिघण्टौ हिंतावलीति नामदर्शनात्, हियावल्याश्च कोषग्रन्थादौ कुत्राप्युल्लेखाभावादिति। कतकफलं जलप्रसादनफलम्। क्रमशोत्तरं भार्गीस्वरसम्। पूति नाटाकरञ्जः। छिन्ना गुडूची। तस्य मिलितरसगन्धादिचूर्णसमुदायस्य, कलांशविंशं षोडशभागविंशतिमम्। तद्रसमानमिति।—मानवविधया मनुष्यबुद्ध्या, युक्त्यनुसारेणेत्यर्थः, तद्रसमानं जीर्णरसस्य परिमाणं, योज्यमिति शेषः, रौप्यभस्मादिमानं सिद्धस्यास्य रसस्य योग्यमात्रा प्रयोज्या इत्यर्थः। "तद्रसमानं मानवविधया" इत्यत्र "तद्रसमाषसमानवटी या" इति पाठे—तस्य रसस्य माषसमाना वटी कार्या, या वटी, सर्वमजीर्णं नाशयते इत्याद्युत्तरेणान्वयः॥ १४९—१५१॥

वडवानले—जलनिधिः फेनः समुद्रफेनः। अग्निगर्भाशयः अग्निः गर्भाशये यस्य सः शमी इत्यर्थः, अस्य वल्कलं ग्राह्यम्। लवणानीति पञ्चानां लवणानां मिलितानामेको भागः। हेम स्वर्णम्। पयः क्षीरकाकोली। भागो द्वादशको रसस्य इति रसभागद्वादश, शुल्वादीनामेकैको भागः रसेन सह द्वादशभागः, तेन रसस्य एकभागसमता इत्यर्थः। वज्राम्बुघृष्टं च सिंहानुकाम्लमर्दितम्। "वह्न्यम्बुघृष्टम्" इत्यत्र "वज्राम्बुघृष्टम्" इति पाठे—वज्राम्बु स्नुहीपत्ररसः॥ १५२॥

अथाग्निजननी वटी।—

कणानागरगन्धकपारदकं गरलं मरिचं समभागयुतम्।
लकुचस्य रसैश्चणकप्रमिता गुटिका जनयत्यचिरादनलम् ॥१५३॥

अथ सर्वरोगान्तका वटी।—

मृतसूतं विषं गन्धमजमोदं फलत्रयम्।
सर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम् ॥१५४॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम्।
विषमुष्टिः सर्वतुल्या जम्बीराम्लेन मर्दितम् ॥१५५॥
मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये।
पथ्या शुण्ठी गुडश्चानु पलार्द्धं भक्षयेत् सदा॥
अग्निमान्द्ये वटी ख्याता सर्वरोगकुलान्तका ॥१५६॥

अथाग्निकरम्।—

मृतं ताम्रं कणातुल्यं चूर्णं क्षौद्रविमिश्रितम्।
निष्कार्द्धं भक्षयेन्नित्यं नष्टवह्निप्रदीप्तये ॥ १५७ ॥
आर्द्रकस्वरसं क्षौद्रं पलमात्रं पिबेदनु।
यथेष्टं घृतमांसाशी शक्तो भवति पावकः ॥ १५८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये उदावर्त्तातिसारग्रहणीविसूचीवह्निमान्द्यचिकित्सितं नाम षोडशोऽध्यायः॥ १६ ॥

---

अग्निजनन्यां—लकुचः डहुः ॥ १५३ ॥

सर्वरोगान्तकायाम्—अजमोदं सैवयमानी। वह्निः चित्रकः। सामुद्रं "करकच" इति प्रसिद्धम्। सूतादीनां त्र्यूषणान्तानां प्रत्येकं समभागः। विषमुष्टिः "कुँचिला" इति प्रसिद्धं, सा च सर्वचूर्णसमाना। रसेन्द्रसारे योगोऽयम् अग्नितुण्डीति नाम्ना ख्यातम् ॥ १५४—१५६ ॥

अग्निकरे—चूर्णं चूर्णीकृतं मृत ताम्रम् ॥ १५७।१५८ ॥

इति रसरत्नसमुच्चयबोधिन्यां षोडशोऽध्यायः॥ १६ ॥

# अथ सप्तदशोऽध्यायः ।

## अथ मूत्रकृच्छ्राश्मर्यादिचिकित्सनम् ।—

### अथाश्मरीनिदानम् ।—

कटौ कुक्षिप्रदेशे च शूलं प्रथमतो भवेत् ।
पश्चाद्रोधो ज्वलन्मूत्रमश्मरीरोगलक्षणम् ॥ १ ॥

## अथाश्मरीमूत्रकृच्छ्रचिकित्सा ।—

### अथ पाषाणभेदी रसः ।—

रसं हिङ्गुलगन्धेन मर्दयित्वा प्रयत्नतः ।
वसुः पुनर्नवा वासा श्वेता ग्राह्या प्रयत्नतः ॥ २ ॥

---

मूत्रशुक्रादिवेगधारणजादुदावर्त्तात् अश्मरीमूत्रकृच्छ्रादिकं जायते, अतः उदावर्त्तानन्तरं मूत्रकृच्छ्रादीनां चिकित्सितं विवर्णिषुः सप्तदशाध्यायप्रारम्भे अश्मरीनिदानमाह, कटाविति ।—रोध इत्यत्र मूत्रस्येति शेषः । ज्वलन्मूत्रमिति मूत्रत्यागकाले लिङ्गस्रोतसि दाहो भवति । क्वचिदेतच्छ्लोकानन्तरं—"मातापितृजदोषेण अथवा मूत्ररोधनात् । अपथ्यादभिचाराच्च जायते चाश्मरीगदः ॥ मूत्राविष्टौ च पितरौ सुरतं क्रियते यदि । मूत्रेण सहितं शुक्रं च्यवते गर्भसम्भवे ॥ यत्र यस्य च देहस्य तत्र तस्य च जायते । मूत्रं मूत्रस्य संस्थाने करोति बन्धनं दृढम् ॥ सोऽप्यसाध्यो मूत्रगदो बाल्ये द्रवति मानुषम् । तारुण्येऽप्यपचारेण जायते मूत्रशर्करा ॥ विपरीतरतेनापि उत्तानपुरुषेण वा । शुक्रं प्रच्यवते तस्य स्त्री शुक्रञ्च प्रमुञ्चति ॥ पुनश्च मेहनस्थञ्च ततो वातेन शोषितम् । दृषदत्वं प्रपद्येत मूत्रद्वारं प्ररुध्य च ॥ तेन मूत्रनिरुद्धत्वं जायते तीव्रवेदना । अङ्गमध्ये स्थिता याति शर्करा शस्त्रसाध्यताम् ॥ अथवा चतुरा नारी मैथुनं विदधाति च । तत्सौख्येन भवेत् सौख्यं स्त्रीणां योनिविमर्दनम् ॥ अथ मूत्रदोषाङ्कुशो रसः । अभ्रकं पारदं रुक्मं लौहं वङ्गं शिलाजतु । समभागानि चैतानि वरुणीरैर्विमर्दयेत् ॥ विदिग्धं मुसलीतोयैस्त्रिकण्टकरसेन च । मूत्रदोषाङ्कुशस्यास्य वल्लयुग्मं प्रदापयेत् ॥ वातकुण्डलिकाऽऽनाहमूत्रसङ्गाश्मरीगदान् । वातोल्बणान् जयेद्दोषान् वह्निसन्दीपनः परः ॥ शैवसिद्धान्तआम्नातात् मूत्रदोषाङ्कुशो रसः ॥" इत्यधिकः पाठः ॥१॥

तद्द्रवैर्भावयेदेनं प्रत्येकन्तु दिनत्रयम् ।
पक्वं मूषागतं शुष्कं स्वेदयेज्जलयन्त्रतः ॥ ३॥
पाषाणभेदो नामायं नियुञ्जीतास्य वल्लयुक् ।
गोपालकर्कटीदुग्धं भूम्यामलकमूलिका ॥
कुलत्थक्वाथतोयेन पिष्ट्वा तदनुपाययेत् ॥ ४ ॥

अथ गोक्षुरप्रयोगः ।—

गोक्षुरस्य कषायञ्च सघृतं पाययेन्निशि ॥ ५ ॥

अथ पाण्डुरादियोगः ।—

पाण्डुरफलमूलञ्च भूम्यामलकमूलिका ।
वंशस्य पेटकार्य्याश्च मूलं पिष्ट्वा जलं पिबेत् ॥ ६ ॥

अथ शुक्लपिण्याकादियोगः ।—

शुक्लपिण्याकपिच्छिली-चूर्णकुष्णेन वारिणा ।
पिबन् विमुच्यते रोगान्मूत्रकृच्छ्रात् सुदारुणात् ॥७॥

अथ मूत्रकृच्छ्रान्तको रसः ।—

शतावरीरसे पिष्ट्वा तुल्यसूतार्कपिष्टिका ।
पाचिता कटुतैलेन मूत्रकृच्छ्रे प्रशाम्यति ॥ ८ ॥

पाषाणभेदरसे—वसुः वसुकः "वकफूल" इति प्रसिद्धः, तस्य पत्रं ग्राह्यम् । श्वेता श्वेतापराजिता । जलयन्त्रतः दोलायन्त्रतः, "स्वेदयेद्दोलिकायन्त्रे दिनैकं सं विचूर्णयेत" इति रसरत्नाकरदर्शनात् । वल्लयुक् वल्लद्वयम् । गोपालकर्कटीदुग्धं गोपालकर्कटी आरण्यकर्कटीविशेष., "कुन्दरुकी" "कँकुड़ा" इति वा प्रसिद्धः, गोरक्षकर्कटी वा, तस्या दुग्धं क्षीरम् । औषधसेवनानन्तरं कुलत्थक्वाथेन भूम्यामलकमूलं गोपालकर्कटीक्षीरञ्च पिष्ट्वा अनुपानं कुर्य्यात् ॥ ३—४ ॥

गोक्षुरप्रयोगे—घृतं प्रक्षेप्यम् ॥ ५ ॥

पाण्डुरादियोगे—पाण्डुरफलमूलं पाण्डुरः धवः तस्य फलं मूलञ्च । पेटकारी ज्योतिष्मती "टेपारी" इति भाषा ॥ ६ ॥

शुक्लपिण्याकादियोगे—शुक्लपिण्याकपिच्छिलीचूर्णे शुक्लपिण्याकः शुक्लतिलकल्कः, पिच्छिली अतसी, "मसिना" "तिसि" इति लोके, तयोः चूर्णम् ॥७॥

मूत्रकृच्छ्रान्तकरसे—तुल्यपारदताम्राभ्यां शतावरीरसेन पिष्ट्वा पिष्टिकां कुर्य्यात्, ततः

अथ द्वितीयपाषाणभेदी रसः।—

रसेन सितवर्षाभ्वा रसं द्विगुणगन्धकम्।
घृष्टं पचेच्च मूषायां द्वौ माषौ तस्य भक्षयेत् ॥९॥
पातालकर्कटीमूलं कुलत्थोदैः पिबेदनु।
गोकण्टकसदाभद्रा-मूलक्काथं पिबेन्निशि ॥
अयं पाषाणभिन्नाम्ना रसः पाषाणभेदकः ॥१०॥

अथ गोक्षुरादिचूर्णम्।—

गोक्षुरबीजसमुत्थं चूर्णमविक्षीरसमायुक्तम्।
रसवरमिश्रं पिबतश्चूर्णीभूत्वाऽश्मरी पतति ॥ ११ ॥

अथ त्रिविक्रमः।—

मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे।
तत्ताम्रं शुद्धसूतञ्च गन्धकञ्च समं समम् ॥१२॥
निर्गुण्ड्युत्थद्रवैर्मर्द्यं दिनं तद्गोलमन्धयेत्।
यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम् ॥१३॥

---

कटुतैले यामं पक्त्वा चूर्णीकृत्य च गुञ्जाचतुष्टयं प्रयोजयेत्। रसेन्द्रसारे चरकस्थाने "तालकम्" इति पाठः; किन्तु उक्तग्रन्थे रसरत्नाकरे च अस्य मात्रामनुपानञ्च उक्तवान्, तद्यथा—"मूत्रकृच्छ्रान्तकस्यास्य चौद्रैर्गुञ्जाचतुष्टयम्।···। तुलसी तिलपिण्याकं विल्वमूलं तुषाम्बुना। कर्षैकं वाऽनुपानेन सुरया वा सुवर्चलैः॥" इति ॥ ८ ॥

द्वितीयपाषाणभेदिरसे—सितवर्षाभूः श्वेतपुनर्नवायाः। पातालकर्कटीमूलम् इन्द्रवारुणीमूलम्। गोकण्टकः गोक्षुरीबीजम्। सदाभद्रा गाम्भारी। अस्यौषधस्य उपयोगसमये निशि गोकण्टकादिरयं योगः पातव्यः। रसेन्द्रसारे "पाषाणवज्रकः" इति ख्यातस्यास्य भूधरयन्त्रे पाकः पाकानन्तरं गुडेन मर्दनञ्च विहितम् इति। "सदाभद्रा" इत्यत्र "शुभा भद्रा" इति रसरत्नाकरोक्तपाठे—शुभा वंशरोचना भद्रा गाम्भारी ॥९।१०॥

गोक्षुरादिचूर्णे—अविक्षीरसमायुक्तं मेषीदुग्धसहितम्। रसवरमिश्रमित्यत्र रसः कुसुमरसः, मधु इत्यर्थः, चक्रसङ्ग्रह-रसरत्नाकरसंवादात्, यदुक्तं—"त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्। अविक्षीरेण सप्ताहं पिबेदश्मरीनाशनम्॥" इति। एवञ्च उत्कृष्टमाक्षिकसंयुतमित्यर्थः, रसवरः रससिन्दूरो वा ॥ ११ ॥

बीजपूरस्य मूलन्तु सजलञ्चानुपाययेत् ।
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत् ॥१४॥

अथानन्दभैरवी वटी ।—

तिलापामार्गकाण्डञ्च कारवेल्ल्या यवस्य च ।
पलाशकाष्ठसंयुक्तं सर्वं तुल्यं दहेत् पुटे ॥ १५ ॥
तन्निष्कैकमजामूत्रैर्वटीञ्चानन्दभैरवीम् ।
पाययेदश्मरीं हन्ति सप्तरात्रान्न संशयः ॥१६॥

अथ अश्मरीहरयोगः ।—

पाण्डुरं फलिकामूलं जलेनैवाश्मरीहरम् ॥ १७ ॥

अथ यवक्षारप्रयोगः ।—

मधुना च यवक्षारं लीढं स्यादश्मरीहरम् ॥ १८ ॥

अथ लघुलोकेश्वरः ।—

मृतसूतस्य भागैकं चत्वारः शुद्धगन्धकात् ।
पिष्ट्वा वराटिकास्तेन रसपादञ्च टङ्कणम् ॥ १९ ॥
क्षीरैः पिष्ट्वा मुखं रुद्ध्वा तासां भाण्डे न्यसेत् पुटेत् ।
स्वाङ्गशीतं विचूर्ण्याथ लघुलोकेश्वरो रसः ॥२०॥
चतुर्गुञ्जा रसस्यायं मरिचैकोनविंशतिः ।
जातीमूलपलैकन्तु अजाक्षीरेण पेषयेत् ॥
शर्कराभावितञ्चानु पीत्वा कृच्छ्रहरं ध्रुवम् ॥ २१ ॥

त्रिविक्रमे—मृतताम्रमजाक्षीरञ्च तुल्यमानं गृहीत्वा तावत् पचेत यावत् क्षीरं न शुष्यति । बन्धयेत् रुन्ध्यादित्यर्थः । बीजपूरस्य मूलं मातुलुङ्गमूलम् ॥१२—१४॥

आनन्दभैरवीवटिकायां—कारवेल्ली-यवयोरपि काण्डं ग्राह्यम ॥ १५।१६ ॥

अश्मरीहरयोगे—पाण्डुरं धवलम् । फलिकामूलं फलिका अश्मन्तकविशेषः "पलाश-पिपुल" इति प्रसिद्धं, तस्या मूलम् । "पाण्डुरफलिकामूलम्" इति समस्तपाठे—पाण्डुरफलिका स्वनामख्यातक्षुपविशेषः, "पोटरफलम्" इति प्रसिद्धम् ॥ १७ ॥

यवक्षारप्रयोगे—यवक्षारस्य मात्रा माषमिता ग्राह्या ॥ १८ ॥

लघुलोकेश्वरे—तेन सूतगन्धककल्केन वराटिकाः, पूर्या इति शेषः । तासां

अथ विदार्य्यादि कषायः ।—

विदारीं गोक्षुरं यष्टिं कसेरुञ्च समं पचेत् ।
तं कषायं पिबेत् क्षौद्रं रसभस्मयुतं तथा ॥
मूत्रकृच्छ्रहरं ख्यातं समाह्वात् पित्तसम्भवम् ॥२२॥

अथ क्षारप्रयोगः ।—

तिलापामार्गकदली-पलाशयवकाण्डकान् ।
दग्ध्वा तद्भस्म तोयेन वस्त्रपूतञ्च कारयेत् ॥२३॥
तं पचेत्तोयशोषान्तं ततश्चूर्णं द्विगुञ्जकम् ।
दापयेदविमूत्रेण शर्कराकृच्छ्रहृद्भवेत् ॥२४॥

अथ हारिद्रप्रयोगः ।—

हरिद्रागुड़कर्षैकञ्चारनालेन वा पिबेत् ॥२५॥

---

वराटिकानाम । ताः वराटिकाः । अन्धयेत् मूषायां रुन्ध्यात । जातीमूलपलैकमित्यत्र जाती आमलकी, रसरत्नाकरे "धात्रीमूलफलैः कल्कम्" इति पाठदर्शनात् ; यद्यपि तत्र पाठभेदः, तथाऽपि साहश्यात् मूत्रकृच्छ्रहरत्वाच्च जातीशब्देन धात्री एव ग्राह्या, तस्या मूलस्य पलमेकम् । रसेन्द्रसारे तु "जातीमूलफलैर्युक्तम्" इति पाठान्तरम् । शर्कराभावितं शर्करामिश्रितम् । चतुर्गुञ्जामितोऽयं रसः एकोनविंशतिभिः मरिचैः सह सेव्यः, पश्चात् जातीमूलपलकल्कम् अजाक्षीरपिष्टं शर्करायुतं पिबेदिति । रसरत्नाकरे तु घृतैर्मरिचैश्च योगोऽयं दातव्य इति पठितम । केचित्तु—"अजाक्षीरेण सह औषधं पीत्वा पश्चात् सशर्करम् अजाक्षीरं पेयम् इत्यर्थः" इति व्याचक्षते ॥ १९—२१ ॥

विदार्य्यादिकषाये—यष्टिं यष्टिमधु । कसेरु "केशुर" इति प्रसिद्धम् । रसभस्मयुतं रससिन्दूरविमिश्रम् ॥ २२ ॥

क्षारप्रयोगे—तिलादिकाण्डाम् भस्मीकृत्य तत् क्षारं षड्गुणतोये एकविंशतिवारं वस्त्रपरिस्रुतं कृत्वा क्षारपाकविधिना जलशोषणं यावत् पचेदिति । अविमूत्रेण मेषीमूत्रेण । शर्कराकृच्छ्रहृत् शर्कराख्यमूत्रकृच्छ्रनाशनम् ॥ २३।२४ ॥

हारिद्रप्रयोगे—हरिद्रागुड़योर्मिलितयोः कर्षमानता बोद्धव्या । वा-शब्दोऽत्र पूर्वयोगापेक्षया, तेन च तिलादिक्षारं हरिद्रागुड़ं वा शर्कराकृच्छ्रहृदित्यर्थः ॥२५॥

अथ शैवयोगः ।—

बन्ध्याकर्कोटकीकन्दं भक्ष्यं क्षौद्रमितायुतम् ।
अश्मरीं हन्ति नो चित्रं कर्षमात्रं शिवोदितम् ॥ २६ ॥

अथ प्रमेहनिदानम् ।—

शोषस्तापोऽङ्गकार्श्यञ्च बहुमूत्रत्वमेव च ।
अस्वास्थ्यं सर्वगात्रेषु मूत्रमेहस्य लक्षणम् ॥ २७ ॥

अथ प्रमेहचिकित्सा ।—

अथ वङ्गेश्वरो रसः ।—

रसस्य भस्मना तुल्यं वङ्गभस्म समाहरेत् ।
मधुना लेहयेत् प्राज्ञो वातमेहप्रशान्तये ॥२८॥
मुद्गामलकयूषेण पथ्यं देयं सतक्रकम् ।
तिलपिण्डीञ्च तक्रेण पक्त्वा दद्यान्न हिङ्गुकम् ॥
घृतं बहु न दद्याच्च तिलतैलेन भोजयेत् ॥ २९ ॥

अथ गुडमार्कण्डी ।—

मार्कण्डीचूर्णमादाय सगुडं खादयेन्निशि ॥ ३० ॥

---

शैवयोगे—बन्ध्याकर्कोटकी तिक्तकर्कोटकी, "तित्-कॉंकडी" "तित्-कॉंक्रोल" इति वा भाषा ॥ २६ ॥

बस्तिविकृतिसाधर्म्यात् अश्मर्य्यनन्तरं प्रमेहचिकित्सितं विवक्षुरादौ तस्य निदानमाह, शोष इति ।—सुगमम् ॥ २७ ॥

वङ्गेश्वरे—वातमेहप्रशान्तये इत्यस्य मेहेषु अतिकर्षणात् कुपितवातानुबन्धयुक्तमेहशान्तये इत्यर्थः, न तु स्वकारणकुपितवातमेहशान्तये, तस्य असाध्यत्वात् ; यदुक्तं चरके —"या वातमेहान् प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्षितानां कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥" इति। रसेन्द्रसारसङ्ग्रहे इक्षुमेहे अस्य माषद्वयं प्रयोज्यमिति पठितम्। वङ्गेश्वररससेवनकाले उपचारविशेषमाह, मुद्गेति ।—तिलपिण्डीं तिलपिष्टम्। न हिङ्गुकम् अल्पहिङ्गुसंयुतम् ; नञत्र ईषदर्थवाची। "दद्यादहिङ्गुकम्" इति पाठेऽपि स एवार्थः। घृतं बहु न दद्याच्च इत्यनेन अल्पमितं घृतं दद्यादित्यवगम्यते ॥ २८।२९ ॥

गुडमार्कण्ड्यां—मार्कण्डी कर्कोटकम् ॥ ३० ॥

अथ ताम्रयोगः।—

ताम्रेण तुर्य्यभागेण कुर्वीत रसपिष्टिकाम्।
गोक्षुरस्य द्रवे चैव निक्षिपेत् सप्तकद्वयम् ॥३१॥
निम्बुमध्ये विनिक्षिप्य स्वेदयेत् काञ्जिकेऽहनि।
निम्बन्तरे विनिक्षिप्य वक्त्रे सन्धारयेन्निशि ॥ ३२ ॥

अथ रक्तमेहे वङ्गप्रयोगः।—

रक्तमेहेऽपि भस्मैव वङ्गस्य मधुना चरेत् ॥ ३३ ॥

अथ शुक्लमेहे वङ्गप्रयोगः।—

शुक्लमेहप्रशान्त्यर्थं हरिद्राचूर्णसंयुतम् ॥ ३४ ॥

अथ मधुमेहे वङ्गप्रयोगः।—

मधुमेहापनुत्त्यर्थं समालार्जुनचूर्णकम्।
वङ्गभस्मसमायुक्तं खादयेच्छर्कराऽन्वितम् ॥ ३५ ॥

अथ शाल्मलीप्रयोगः।—

शाल्मलीद्रुतिमादाय पाययेन्मधुना सह ॥ ३६ ॥

अथ रक्तमेहे बोलबद्धरसस्य प्रयोगोपदेशः।—

बोलबद्धं रसं जग्ध्वा रक्तमेहाद्विमुच्यते।
बीजकस्य कषायञ्च पिबेदनु सबालकम् ॥ ३७ ॥

---

ताम्रयोगे—पादिकेन ताम्रेण सह रसस्य पिष्टिकां कृत्वा अग्नौ प्रताप्य प्रताप्य चतुर्दशवारं गोक्षुरक्वाथे निक्षिपेत्, ततो निम्बुमध्ये संस्थाप्य दिवा काञ्जिकेन दोलायन्त्रे स्वेदयेत्, रात्रौ च निम्बुकात् तां पिष्टिकां बहिष्कृत्य निम्बुकान्तरे संस्थाप्य च मुखे धारयेत् इति ॥ ३१।३२ ॥

रक्तमेहे वङ्गप्रयोगे—सर्वं स्पष्टम् ॥ ३३ ॥

शुक्लमेहे वङ्गप्रयोगे।—हरिद्राचूर्णसंयुतं वङ्गभस्म मधुना चरेत् इति पूर्वेण योजनीयम्। शुक्लमेहः पिष्टमेहः ॥ ३४ ॥

मधुमेहे वङ्गप्रयोगे—समालार्जुनचूर्णकमित्यत्र माला भूम्यामलकी ॥ ३५ ॥

शाल्मलीप्रयोगे—शाल्मलीद्रुतिं शाल्मलीमूलरसम् ॥ ३६ ॥

रक्तमेहे अधिकारान्तरोक्तबोलबद्धरसस्य प्रयोगमुपदिशति, बोलबद्धमिति।—

अथ श्लेष्मातकक्काथः।—

श्लेष्मातमूलजक्काथं सघृतं निशि पाययेत् ॥ ३८ ॥

अथ कुष्माण्डस्वरसप्रयोगः।—

कुष्माण्डस्य रसं वेल्ल-खण्डयुक्तन्तु पाययेत् ॥ ३९ ॥

अथ स्त्रीणां रक्तस्रावे तौवरयोगः।—

स्त्रियं वा रुधिरस्रावामामदुग्धेन पाययेत्।
तुवरीमूलमुद्घृष्टं सम्यक् शर्करयाऽन्वितम् ॥ ४० ॥

अथ चन्द्रप्रभा गुटिका।—

बोलं जातिफलं मधूकयुगलं सारं तथा खादिरं
कर्पूरामलकी-शटी-बहुसुता-घोण्टाम्लसार-स्थिराः।
कासीसं भववीज-दाडिम-सहा सर्वं समं कल्पितं
प्रत्येकं दधिदुग्धलाङ्गलिरसैस्तुम्बस्य मूलस्य च ॥४१॥
रसेन भावितं तस्य गुटिका सम्प्रकल्पिता।
जयेच्चन्द्रप्रभा नाम तीव्रान् मेहादिकान् गदान् ॥४२॥

---

बोलबद्धं रसं कासाधिकारोक्तम्। वीजकस्य असनस्य। सबीलकं गन्धबोलचूर्णप्रक्षेप-युक्तम्; बोलबद्धरसं जग्ध्वा सबीलकं बीजकक्काथमनुपानं कुर्य्यात् ॥ ३७ ॥

श्लेष्मातकक्काथे—श्लेष्मातमूलजक्काथं बहुवारमूलक्काथम्। अयमपि योगः रक्तमेहे प्रयोज्यः ॥ ३८ ॥

कुष्माण्डस्वरसप्रयोगे—वेल्लखण्डयुक्तं विडङ्गशर्कराभ्यां युक्तं विडङ्गतण्डुलयुक्तं वा। अयमपि रक्तमेहे ॥ ३९ ॥

तौवरयोगे—रुधिरस्रावां स्रुतरुधिरां, 'रक्तमेहवतीं प्रदरव्याधिमतीं वा। तुवरीमूलमुद्घृष्टं घृष्टमाढकीमूलम्; रक्तमेहार्त्तां प्रदररोगार्त्तां वा अपक्वदुग्धेन आढकीमूलं घृष्ट्वा सशर्करं पाययेदिति योज्यम् ॥ ४० ॥

चन्द्रप्रभायां—मधूकयुगलं मधूकं गुडपुष्पं, "महुया" इति ख्यातम्; तच्च जलजस्थलजभेदात् द्विविधम्। बहुसुता शतावरी। घोण्टा भारण्यबदरं पूगफलं वा। अम्लसारः अम्लवेतसः। स्थिरा शालपर्णी। भववीजं शिवलिङ्गीबीजं

अथ प्रमेहगजसिंहः ।—

चाण्डालीराक्षसीपुष्प-रसमध्वाज्यटङ्कणम् ।
रसं समांशोपरसं समं हेम्ना विमर्दितम् ॥४३॥
समांशं पूतिलोहं वा मूषायां विपचेत् क्रमात् ।
प्रमेहगजसिंहोऽयं रसः क्षौद्रैर्द्विमाषकम् ॥४४॥

अथ महाविद्या गुटिका ।—

मर्दितं किंशुकरसैः कान्तनागाभ्रपारदम् ।
कषायैः छिन्ननाकुल्या वालुकायन्त्रपाचितम् ॥४५॥
राजावर्त्तशिलाधातु-ताप्यमण्डूरमाक्षिकैः ।
तुल्यवैक्रान्तकासीसैः समैः सर्वैरिमैः समम् ॥४६॥
आधारो कृष्णमूला तु कपित्थश्रावणी हिमम् ।
नारिकेलस्य मूलानां मुस्ताचन्दनसारयोः ॥ ४७ ॥

---

अङ्कवारबीजं वा । सहा माषपर्णी । लाङ्गली कलिकारिका । तुम्बरु तिक्तालाब्वाः ; एषां प्रत्येकं रसेन सप्त सप्त वारान् भावना दातव्या ॥ ४१।४२ ॥

प्रमेहगजसिंहे—चाण्डाली लिङ्गिनी, "पञ्चगुरिया" इति ख्यातं, तस्या बीजं, राक्षसीपुष्प राक्षसी चण्डा तस्याः पुष्पम्, एतयोः रसः । रसं रससिन्दूरम् । समांशोपरसं तुल्याभ्रकम् ; अत्र रसोपरसशब्दाभ्यां रससिन्दूराभ्रे ग्राह्ये, "पारदाभ्रकयोर्भस्म" इति रसरत्नाकरदर्शनात् । रसरत्नाकरे "समं हेम्ना" इति पाठो न दृश्यते, दृश्यते च "मृतलौहाष्टकं समम्" इति पाठः । पूतिलोहं "पूतिलोहं द्वितयमुदितं नागवङ्गाभिधानम्" इत्युक्त्या नागं वङ्गञ्चेत्यर्थः । पूतिलोहं वा इत्यत्र वा-शब्दः समांशोपरसमित्यपेक्षया बोध्यः, समांशोपरसं समांशं पूतिलोहं वा । योगोऽयं गजपुटे पक्तव्यः शुक्रमेहे च प्रयोज्यः । रसरत्नाकरे अस्यानुपानमप्युक्तं यथा— "लिहेत्तामुपिबेत्तक्रैर्निष्कैकं टङ्कणं सदा ।" इति । तत्रास्य "मेहद्विरदसिंहः" इति नाम ॥ ४३।४४ ॥

महाविद्यागुटिकायां—किंशुकरसैः पलाशपुष्पस्वरसैः । कान्तं कान्तलौहम् । नागः सीसकम् । छिन्ननाकुल्याः कथितरास्नायाः । शिलाधातुः सुवर्णगैरिकम् । ताप्यं स्वर्णमाक्षिकम् । माक्षिकं रौप्यमाक्षिकम् । आधारो देशान्तरे प्रसिद्धा ।

काकजम्बूप्रसूनानां रसैः सप्त विमर्दयेत् ।
गुटिकां भक्षयेदस्य माषद्वितयसम्मिताम् ॥४८॥
धात्रीरसस्यानुपिबेन्नाकुलीचूर्णमात्रया ।
रात्रौ धात्रीरसो देयो महाविद्या प्रमेहजित् ॥ ४९ ॥

अथ बहुभाविततप्रमेहारिः ।—

शौर्य्यं पुरारेर्बलिमल्लसंज्ञं जम्बीरनीरेण विमर्द्य भस्म ।
रसार्द्धभागेन ददीत शुल्वं सर्वं ततो गोपयसा विमर्द्य ॥५०॥
खर्जूरमत्स्याण्डिककर्कटाख्यधात्री-द्राक्षेण भल्लेन गुडूचिकायाः ।
मांसीशिवाकर्कटकच्चटङ्गी-बीजैस्तदीयैः सलिलैर्विभाव्य ॥५१॥
ततो रसः सिध्यति बल्लमस्य भुक्तप्रमेहे सति शाल्मलीनाम् ।
मूलाम्बुना वा कुसुमाम्बुना वा दद्यात् पयोभक्तकमत्र योज्यम् ॥५२॥
क्षौद्रेण दुर्नाम्नि तथाऽश्मरीषु गवां पयोभिर्निखिलप्रमेहे ॥५३॥

कृष्णमूला कृष्णसारिवा; श्यामा मञ्जिष्ठा। हिमम् उशीरम्। काकजम्बूप्रसूनानां भूमिजम्बूपुष्पाणाम्। अयं क्रमः,—कान्तादिभस्मनः किंशुकरसेन नाकुलीकषायेण च मर्दयित्वा मूषायां संस्थाप्य च बालुकायन्त्रे पचेत्, स्वाङ्गशीतस्य तं समुद्धृत्य शालावर्त्तादिचूर्णं प्रत्येकं कान्तादिसमं तत्र मिश्रयित्वा धात्र्यादीनां प्रत्येकं रसेन दिनमेकं विमर्द्य च माषद्वयमिता गुटिका कुर्यात्। औषधसेवनानन्तरं नाकुलीचूर्ण-मात्रामामलकीरसेनानुपिबेत् रात्रौ च केवलं धात्रीरसं पिबेदिति ॥ ४५—४९ ॥

बहुभाविततप्रमेहारौ—पुरारेर्वीर्य्यं पारदम्। बलिमल्लसंज्ञं नवनीताख्यं गन्धकम्, "आमलासा गन्धक" इति प्रसिद्धम्। "बल्लसंज्ञम्" इत्यत्र "अभ्रसंज्ञम्" इति पाठे—अभ्रस्यैको भागः ग्राह्यः। भस्म इत्यस्य शुल्वमित्यनेन सम्बन्धः। गोपयसा गव्यदुग्धेन। मत्स्यण्डिका: "इक्षो रसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः। मन्दं यत स्यन्दते तस्मात् तन्मत्स्यण्डीति गीयते ॥" इत्युक्तलक्षणकं फाणितं "राव गुड़" इति भाषा; फलत्वक् कान्दमः। हंसपादी गोधापदी "गोयालिया" इति ख्यातम्। कर्कटः कर्कोटकं "काँकरोल" इति भाषा। कच्चं कतकफलम्। खर्जूरादीनां यथायोग्यं रसेन क्वाथेन वा प्रत्येकं सप्त भावना देया इति। कुसुमाम्बुना इत्यस्यापि शाल्मलीनामित्यनेनैव सम्बन्धः। पयोभक्तकं वारिसिक्तमन्नम् ॥ ५०—५३ ॥

अथ उमाशम्भुः।—

रसाभ्रकौ तुल्यसमानभागौ जम्बीरनीरैस्त्रिदिनं विमर्द्य।
कुर्वीत मूषां कुहरे निवेश्य वह्नौ ततस्तस्य पुटानि सप्त ॥५४॥
बीजाम्लमुष्काक्षयुगैश्चतस्रः स्युर्भावना द्वे ककुभा त्रिवारम्।
यष्टीसिताकेतकजीररम्भा-खर्जूरिकाजातिदलैः प्रतिस्वम् ॥५५॥
एवं हि सिद्धस्य रसस्य वल्लो मधुप्रयुक्तः सहमा शिशूनाम्।
सन्तापशोषौ बलहीनताञ्च तृषाञ्च वासासलिलैः प्रमेहान् ॥५६॥
निवर्त्तयेद्दासरसप्तकेन दुग्धौदनं स्यादिह भोजनाय।
नीरेण बब्बूलनवप्रवालान्निषेव्य तैः शर्करया समन्वितैः ॥५७॥
सर्वप्रमेहान् विनिहन्ति दत्तो दिनत्रयं विंशतिवत्सरस्य।
अन्नं ससर्पिः ससितं प्रयोज्यं दिनानि सप्त त्रिगुणानि चात्र ॥५८॥
वरामधुभ्यां सहितस्य यस्य पञ्चाधिका वत्सरविंशतिः स्यात्।
हैयङ्गवीनेन गवाञ्च पथ्यं त्रिःसप्तसङ्ख्यानि दिनानि कार्य्यम् ॥५९॥
प्रक्षिप्तगोधूमरसेन हन्ति स त्रिंशदब्दस्य दिनत्रयेण।
अन्नं ससर्पिः सगुड़ं हि देयं मध्विक्षुखण्डैस्त्रिदिनं विधातुम् ॥६०॥

उमाशम्भौ—मूषां कुर्वीत मूषाबद्धं कुर्य्यादित्यर्थः। कुहरे गर्त्ते। बीजाम्लः मातुलुङ्गः तस्य मूलम्। मुष्कः मुष्ककं, घण्टापाटला; "मुष्क" इत्यत्र "मुस्त" इति पाठान्तरम्। अक्षयुगः अक्षद्वयं, विभीतकबीजं रुद्राक्षबीजञ्च; यद्वा—अक्षः विभीतकबीजं, युगम् ऋद्धिनामौषधम्। चतस्रः इति एषां चतुर्णां पृथक् पृथक् क्वाथेन एकैकवारं भावना दातव्या। ककुभा अर्जुनत्वचा द्वे, भावने दातव्ये इति योज्यम्। सिता दूर्वा। जातिदलैः जातिपत्रैः। प्रतिस्वं स्वं स्वमिति वाक्येन प्रत्येकमित्यर्थः, त्रिवारमित्यनेन योज्यम्। नीरेणेति।—बब्बूलनवप्रवालान् बब्बूलस्य कोमलपत्राणि; आदौ बब्बूलकोमल-पत्राणि जलेन निषेव्य पश्चात् शर्करायुक्तैः तत्पत्ररसैः सह दिनत्रयं दत्तः इत्यन्वयः। विंशतिवत्सरस्य विंशतिवर्षवयस्कस्य पुंसः इत्यर्थः, विंशतिवत्सरोत्थि-तान् प्रमेहानिति वा अर्थः; एवं पञ्चविंशतिवर्षादावपि बोध्यम्। दिनानि सप्त त्रिगुणानि एकविंशतिदिनानीत्यर्थः, अन्नं प्रयोज्यमित्यनेनान्वयः। वरा त्रिफला।

अङ्गानि सम्यग्विनिद्राघसङ्ग-गतानि खानि स्फुटनं ददीत ।
चिञ्चागुडाभ्यां युतमन्नमस्मिन् द्राक्षादिनीरेण विमिश्रितः सन् ॥ ६१ ॥
दिनत्रयं लङ्घनजं विशोषं विनाशयेद्गोस्तनिकासिताभ्याम् ॥ ६२ ॥
पथ्यं देयमुमाशम्भो वासुदेवेन निर्मिते ।
पातु जगन्ति कृपया मेहध्वान्तविवस्वति ॥ ६३ ॥

अथ नागमृतयोगः ।—

नागं कपालमध्ये चिञ्चा चाम्लं विशोधयेत् क्रमशः ।
चिञ्चाकवचक्षारं स्वल्पं स्वल्पं विकीर्य कुन्तलेन ॥ ६४ ॥
भागं पारदसीसं घृष्ट्वा घृष्ट्वा विचूर्णितं सम्यक् ।
तिलमानमादिमधुना तरवटबीजेन मिश्रितं क्रमशः ॥
मेहगणार्तिविनाशं सपिटकं कुष्ठमनिलञ्च ॥ ६५ ॥

---

हैयङ्गवीनेन सद्यःकृतेन घृतेन । सखिन्नगोधूमरसेन गोधूमक्वाथेन । सखित्यादि ।—विनिद्राघसङ्गगतानि प्रबलघर्मप्रपीडितानि अङ्गानि तथा खानि स्रोतांसि च सम्यक् विधातुं स्वच्छानि कर्तुमित्यर्थः, तथा स्फुटनं दोषकद्दस्रोतसां विकासनं, विधातुमिति शेषः, सखिसुखखण्डैः त्रिदिनं ददीत इत्यन्वयः । चिञ्चा तिन्तिडी । अस्मिन् एतदौषधसेवनकाले । द्राक्षादिनीरेण इत्यत्र आदिपदेन खर्जूरपरूषकादीनां ग्रहणम्; द्राक्षादिक्वाथेन विमिश्रितः, एष योग इति शेषः, दिनत्रयं दत्तः सन् लङ्घनजं विशोषं विनाशयेदित्यन्वयः । वासुदेवेन कृपया जगन्ति पातुं निर्मिते मेहध्वान्तविवस्वति मेहरोगतिमिरनाशनसूर्यस्वरूपे उमाशम्भौ तदाख्ये अस्मिन् योगे गोस्तनिकासिताभ्यां पथ्यं देयमिति ॥ ५४—६३ ॥

नागमृतयोगे—कपालमध्ये खर्परमध्ये । चिञ्चाकवचक्षारं चिञ्चा तिन्तिडी, कवचः भूर्जत्वक् तयोः क्षारं, तिन्तिडीत्वक्कृतं क्षारं वा । कुन्तलेन दर्व्या इत्यर्थः । पारदसीसं पारदेन सह सीसकं, कथितप्रक्रियया भस्मीभूतं सीसकं पारदस्य भागं समभागं गृहीत्वा कुन्तलेन सम्यक् घृष्ट्वा घृष्ट्वा विचूर्णितमित्यन्वयः कार्यः; अत्र खर्परमध्ये पारददानोक्त्यभावेऽपि "भागं पारदसीसं कुन्तलेन घृष्ट्वा घृष्ट्वा विचूर्णितं सम्यक्" इति वाक्यबलात् नागभस्मकाले पारदमपि तत्समं खर्परे देयम् इति बोद्धव्यम । तिलमानम् एतं-सिद्धस्यौषधस्य तिलप्रमाणम् । आदिमधुना पुराण-मधुना इत्यर्थः; तिलमानमादि तिलमानप्रभृति, तिलप्रमाणमारभ्येत्यर्थो वा ।

अथ कान्तादिगुड़िका।—

कान्ताभ्रमण्डूरहरीतकीनां विचूर्णितानां क्रमशः शरांशम्।
रसेन भूतांशमथो दशांशं द्वात्रिंशदष्टोत्तरमुत्तमायाः॥६६॥
श्लक्ष्णं मृदित्वा गुड़िकां विधाय तक्रेण पीतं तलपोटकस्य।
बीजस्य तेषां द्विगुणं प्रकल्प्य मेहामयानाशु जयेत् प्रमेही॥६७॥

अथ कासीसादिमोदकम्।—

कासीसं कृष्णनागं चितिधररुधिरं नीलमभ्रं सुकान्तं
हैमाङ्गं भूमिसारं सलिलरिपुदलं मेहतिष्यारिबीजम्।
गोरिक्षा चारिमेदः चितिरुहसहितं श्वेतगुञ्जाङ्घ्रिबीजं
कापित्थास्टग्विमिश्रं चितिफलसहितं रोहिणी चाक्षमिश्रम्॥६८॥
सर्वं सम्पिष्य तोये करिविजयभुवा मोदकानक्षमात्रान्
कुर्य्यात्तक्रेण देयं क्षपयति निखिलं मूत्ररोगं चिरात्तात्।

तरवटबीजेन चाहुल्याख्यक्षुपविशेषस्य बीजेन। क्रमशः क्रमवर्द्धितमित्यर्थः। सपिटकं पिड़कासहितम्॥६४।६५॥

कान्तादिगुड़िकायां—कान्तादीनां क्रमशः शरांशं पञ्चांशं, रसेन इत्यत्र मितमंश-मिति शेषः, षड़ंशमित्यर्थः, भूतांशं पञ्चभागम्; एवं कान्तचूर्णस्य पञ्च भागाः अभ्रस्य षड़्भागाः मण्डूरस्य पञ्च भागाः हरीतक्याश्च दश भागाः ग्राह्याः। द्वात्रिंशदिति।— उत्तमायाः त्रिफलायाः, मेहघ्नत्वात् उत्तमाशब्देनात्र त्रिफला एव ग्राह्या; द्वात्रिंशदष्टोत्तरं चत्वारिंशत् भागाः। तलपोटकस्य तन्नाम्ना प्रसिद्धस्य। तेषां समुदितकान्तादिचूर्णानाम्॥६६।६७॥

कासीसादिमोदके—कृष्णनागं कृष्णं नीलाञ्जनं तेन सह नागं सीसकम्। चितिधररुधिरं गैरिकम्। नीलमभ्रं कृष्णाभ्रम्। सुकान्तं कान्तलौहम्। हैमाङ्गं चम्पकं तस्य त्वक्। भूमिसारम् आस्फोता अतिमुक्तकलता वा। सलिलरिपुदलं कुम्भिकपत्रं "पाना" इति भाषा। मेहतिष्यारिबीजं मेहः अक्षोटः "पेयारा" इति प्रसिद्धं, तिष्यः आमलकम्, अरिः खदिरविशेषः तेषां बीजम्। गोरिक्षा "गोजो" इति प्रसिद्धम्। अरिमेदः विट्खदिरः। चितिरुहसहितं श्वेतगुञ्जा-ङ्घ्रिबीजं सपत्रनालं श्वेतगुञ्जाया मूलं बीजञ्च। कापित्थास्टक् कपित्थफलमज्जा। चितिफलसहितं भूमिजम्बूसहितम्। रोहिणी कटुका। अक्षमिश्रं बिभीतकयुतम्।

सप्ताहात् कल्पनाशं व्रणमतिबहुलं हन्ति पक्षाद्विपक्षे
मासात् सर्वाङ्गवृद्धिं मुनिभिरभिहितो मेहिनां गुह्ययोगः ॥६८॥

अथ भीमपराक्रमः।—

तुल्याभ्यां रसगन्धाभ्यां कृत्वा कज्जलिकां वरम्।
द्रावयित्वाऽऽयसे पात्रे मृदुना बदराग्निना ॥७०॥
निरुत्थमष्टमांशेन सीसभस्म विनिक्षिपेत्।
सम्मिश्र्य कदलीपत्रे निक्षिप्य तदनन्तरम् ॥७१॥
आकृष्य परिपिष्टाऽथ सीसभस्मप्रमाणतः।
कान्ताभ्रमस्ययोर्भस्म राजावर्त्तकभस्म च ॥७२॥
परिगृह्य गोमूत्रे शिलाधातुं निधाय च।
खल्ले निक्षिप्य तत् सर्वं यत्नेन परिमर्दयेत् ॥७३॥
तुल्यगुञ्जाकुलीबीज-चूर्णकल्कोत्थवारिणा।
कतकाङ्कुरकषायेण निम्बपत्ररसेन च ॥७४॥
ततः संशोष्य सञ्चूर्ण्य क्षिप्त्वा लोहस्य भाजने।
त्रिफलानां कषायेण सप्तधा परिभावयेत् ॥७५॥

---

करिविजयभुवा करिविजयः नागदमनाख्यः क्षुपः शिवलिङ्गी लता वा तद्भुवा तदुत्थचूर्णेन। अत्र काशीशादीनां करिविजयान्तानां सर्वेषां समभागः; किञ्च शर्करायाः उल्लेखाभावेऽपि मोदकपदसामर्थ्यात् सर्वचूर्णात् द्विगुणशर्करया मोदकः कल्पनीयः। कल्पनाशं कल्पते अनेन इति व्युत्पत्त्या कल्पः मनः, मनोविकार इत्यर्थः, तस्य नाशं लिङ्गनाशमिति वा; "कल्कनाशम्" इति पाठे—पुरीषसङ्ग्रहमित्यर्थः ॥ ६८।६९ ॥

भीमपराक्रमे—निरुत्थं सम्यक् मृतम्। अष्टमांशेन इति कज्जलीभूतयोः रसगन्धयोरपेक्षया। शिलाधातुं शिलाजतु। अत्र कान्तादिशिलान्तानां चतुर्णां प्रत्येकं सीससाम्यं बोद्धव्यम्। तुल्येति।—आकुलीबीजं देशान्तरे प्रसिद्धम्; कोकिलाक्षबीजमिति केचित्; तुल्ययोः गुञ्जाकुलीबीजयोः चूर्णे एव कल्कौ, "अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम्। तत् स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मिता" इत्युक्त्या चूर्णस्यापि कल्करूपत्वात्, न तु "द्रव्यमार्द्रं शिलापिष्टम्" इत्यादिरूपः; तदुत्थवारिणा

आकुलीवीजबर्बूर-निर्य्यासौ भृष्टचूर्णितौ।
समौ रससमौ कृत्वा रसेन सह मर्दयेत् ॥७६॥
इति सिद्धरसः सोऽयं भवेद्भीमपराक्रमः।
नामतः सर्वमेहघ्नो दृष्टप्रत्ययकारकः ॥७७॥
वल्लद्वयमितो ग्राह्यो जलैः पर्य्युषितैः सह।
पथ्यं मेहोचितं देयं वर्ज्यं सर्वं विवर्जयेत् ॥ ७८ ॥

अथ सञ्जीवनः।—

पलमात्रं रसं शुद्धं वरनागसमन्वितम्।
निक्षिप्य पातनायन्त्रे त्रिंशद्वाराणि पातयेत् ॥ ७९ ॥
समाहरेद्रसं सम्यक् पातनायन्त्रके मृतम्।
मृते रसे क्षिपेत्तुल्यं भूपालावर्त्तभस्मकम् ॥ ८० ॥
निरुत्थं त्रपुभस्मापि निक्षिपेदष्टमांशतः।
ततो निम्बदलद्रावैस्त्रिंशद्वारं हि भावयेत् ॥
ततः संशोष्य सञ्चूर्ण्य क्षिपेद्वरकरण्डके ॥८१॥
सञ्जीवनोऽयं खलु वल्लमानो निशाकुलीचूर्णयुतः सतक्रः।
निहन्ति सर्वानपि मेहरोगान्नृणां नितान्तं कुरुते क्षुधाञ्च ॥८२॥

अथ मेहमर्दनः।—

शुद्धसीसोद्भवं भस्म निर्व्यूढं व्योम्नि सप्तधा।
ततो विचूर्ण्य तन्मध्ये कान्तभस्म समं क्षिपेत् ॥८३॥

---

चूर्णालोडितजलेन। कतकं जलप्रसादनफलं तस्य पादिककषायेण मूलकाथेन। बर्बूरनिर्य्यासः बब्बीलनिर्य्यासः। समौ रससमौ इति उभयोः मिलित्वा रससमौ इत्यर्थः। पर्य्युषितैः निशोषितैः ॥ ७०—७८ ॥

सञ्जीवने—रसनागयोः मिलित्वा पलमात्रम्। वरनागसमन्वितम् अष्टमाध्यायोक्त-लक्षणाक्रान्तनागविशेषसहितम्। पातनायन्त्रे "अष्टाङ्गुलपरिणाहम" इत्यादिना नवमाध्यायोक्ते। तुल्यं मृतरससमानम्। भूपालावर्त्तभस्मकं राजावर्त्तभस्म। त्रपुभस्म वङ्गभस्म। अष्टमांशतः इति मृतरसापेक्षया बोध्यम्। वरकरण्डके उत्तम-भाजने ॥ ७९—८२ ॥

गोमूत्रकशिलाधातु-द्रवेण परिमर्दयेत् ।
शोषयित्वा विचूर्ण्याथ क्षिपेन्नागकरण्डके ॥८४॥
मेहमर्दननामाऽयं दिष्टो भालुकिना खलु ।
गुञ्जाद्वयमितो देयो निम्बामलकसंयुतः ॥८५॥
निहन्ति सकलान् मेहान् सर्वोपद्रवसंयुतान् ।
तत्तद्रोगहरैर्द्रव्यैः सर्वरोगनिवर्हणः ॥
रोगानुरूपं दातव्यं पथ्यमत्र यथोचितम् ॥ ८६ ॥

अथ रामबाणरसः ।—

त्रपुणा निहतं तारं स्वर्णं नागहतं तथा ।
मृतसूतं तयोस्तुल्यं मर्दयेद्दिवसत्रयम् ॥८७॥
आकुलीमूलजैः क्वाथैः शोषयित्वा मुहुर्मुहुः ।
ताप्यवैक्रान्तराड्वर्त्त-भस्म सर्वसमं क्षिपेत् ॥८८॥
विमर्द्य बलिना सर्वं षोढ़ा तुषपुटैः पचेत् ।
आकुलीबीजबर्बूर-क्वथितैर्भावयेत्त्रिधा ॥८९॥

मेहमर्दने—निर्व्यूढं निक्षिप्तं, मिश्रितमित्यर्थः । व्योम्नि अभ्रे । सप्तधा इति पदं भस्म इत्यनेन सम्बध्यते, ततश्च सप्तकृत्वः कृतं शुद्धसीसोद्भवं भस्म इत्यन्वयः ; शुद्धसीसकं सप्तवारान् भस्मीकृत्य अभ्रेण सह मिश्रयित्वा इत्यर्थः । गोमूत्रकशिलाधातुद्रवेण गोमूत्रगन्धिशिलाजतुक्वाथेन । नागकरण्डके सीसकभाजने, हस्तिदन्तनिर्मितभाजने वा । दिष्टः उपदिष्टः ॥ ८३—८६ ॥

रामबाणरसे—त्रपुणा निहतं तारं वङ्गेन सह मारितं रौप्यम् । नागहतं स्वर्णं सीसकेन सह पुटितं स्वर्णम् । मृतसूतं रससिन्दूरम् । ताप्यं स्वर्णमाक्षिकम् । राड्वर्त्तः राजावर्त्तः । सर्वसमं तारादीनां त्रयाणां तुल्यं मिलित-ताप्यादित्रयम् ; तेन तारस्वर्णयोः प्रत्येकं माषषट्कं रससिन्दूरस्य सार्द्धतोलकं ताप्यादीनाञ्च प्रत्येकं तोलकमानम् इति । बलिना गन्धकेन, मृतसूततुल्येन इत्यर्थः, सह इति शेषः । षोढ़ा षड्वारान् । तुषपुटैः तुषकृतैः पुटैः, "गोवरैर्वा तुषैर्वापि पुटं यत्र प्रदीयते । तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥" इति-लक्षणे तुषपुटस्य विशेषत्वेन यद्यप्यभावेऽपि तुषैर्वाऽपि इति वा-शब्दप्रयोगसामर्थ्यात् यत्र गोवरेण पुटं दीयते तत्र

तं रसं परिचूर्ण्याथ स्थापयेत् कूपिकोदरे।
गुडूचीसत्त्वसंयुक्तो वल्लतुल्यो रसस्त्वयम् ॥९०॥
निहन्ति सकलं मेहं मोहं ध्यात इवेश्वरः।
बाणवद्रामचन्द्रस्य सज्जनस्येव भाषितम् ॥
न याति जातु मेहित्वं रामबाणो रसोत्तमः ॥ ९१ ॥

अथ राजमृगाङ्कः।—

सुवर्णं रजतं कान्तं ताम्रं त्रपु ससीसकम्।
भस्मीकृत्वा च तत् सर्वं क्रमवृद्ध्या कृतांशकम् ॥९२॥
व्योमसत्त्वभवं भस्म सर्वैस्तुल्यं प्रकल्पयेत्।
कज्जलीं सूतराजस्य सर्वैरेतैः समांशिकाम् ॥९३॥
प्रद्राव्य लोहभस्माथ पूर्वभस्म विनिक्षिपेत्।
काष्ठेनाऽऽलोड्य तत् सर्वं सद्रवं हि समाहरेत् ॥९४॥

गोबरयोगात् गोबरपुटं, यत्र च तुषेण पुटं दीयते तत्र तुषयोगात् तुषपुटमिति मन्तव्यम्। गुडूचीसत्त्वं गुडूचीसारम्। मोहमिति।—ध्यातः चिन्तितः स्मृतः ईश्वरः मोहमिव, ईश्वरध्यानेन यथा मोहो नश्यति, तथा रसोऽयं सकल मेहं निहन्ति। "मोहध्वान्तमिवेश्वरः" इति पाठे—ईश्वरः शङ्करः मोहध्वान्तमिव अज्ञानान्धकारं यथा निहन्ति तथा इत्यर्थः; "ज्ञानमिच्छेत्तु शङ्करात्" इति वचनेन शङ्करस्य ज्ञानप्रदत्वात् अज्ञानान्धकारनाशकत्वं बोद्धव्यम्। बाणवदिति।—रामचन्द्रस्य बाणो यथा महावीर्य्यः सज्जनस्य भाषितं वचनं यथा नासत्यं तथा महावीर्य्यः सत्यप्रयोगश्च अयं रसोत्तमः रामबाणः, सेवितश्चेदिति शेषः, तदा स जनः जातु मेहित्वं न याति मेहरोगं न प्राप्नोति ॥ ८७—९१ ॥

राजमृगाङ्के—क्रमवृद्ध्या कृतांशकम् उत्तरोत्तरं भागवृद्धियुतम्, एवञ्च सुवर्णस्य एकः रजतस्य द्वौ कान्तस्य त्रयः इत्यादिरीत्या इत्यर्थः। व्योमेति।—अभ्रसत्त्वभस्मनः एकविंशतिभागा ग्राह्याः। कज्जलीं सूतराजस्य इत्यत्र गन्धकस्य उल्लेखाभावेऽपि कज्जलीपदप्रयोगसामर्थ्यात् तुल्याभ्यां रसगन्धाभ्यां कृता कज्जलीति मन्तव्यम्। सर्वैरेतैः सुवर्णादिव्योमभस्मान्तैः सर्वैः, तेन कज्जल्याः द्विचत्वारिंशद्भागा बोद्धव्याः। अयमर्थः,—रसपर्प्पटीविधानेन आदौ कज्जलीं द्रवीकृत्य तत्र पूर्वं लोहभस्म निक्षिप्य काष्ठदण्डेन किञ्चिदालोडयेत्, अनन्तरं सुवर्णादीनां भस्म तत्र दत्त्वा द्रवीभूतमेव तत् सर्वं पुनरपि काष्ठ-

ततो विचूर्ण्य तत् सर्वं सप्तवारं विभावयेत् ।
आकुलीबीजसम्भूत-क्वाथलेहेन यत्नतः ॥९५॥
रुद्ध्वं तन्मल्लमूषायां सर्वं संस्वेदयेच्छनैः ।
इति सिद्धो रसेन्द्रोऽयं चूर्णितः पटगालितः ॥९६॥
कान्तपात्रस्थिते रात्रौ जलैस्त्रिफलसंयुतैः ।
वल्लद्वयमितः प्रातर्दातव्यो मेहरोगिणाम् ॥९७॥
मृगचारिमुनीन्द्रेण मेहव्यूहविनाशनः ।
निर्दिष्टोऽयं रसो राज-मृगाङ्क इति कीर्त्तितः ॥९८॥
दीपनः पाचनो वृष्यो ग्रहणीपाण्डुनाशनः ।
तापघ्नो रुचिकृत् सर्व-रोगघ्नो योगसंस्तुतः ॥९९॥

अथ मेहहरः ।—

राजावर्त्तस्य रत्नस्य भस्म गन्धकसाधितम् ।
हतञ्च भस्मना तेन घनसत्त्वञ्च कान्तकम् ॥१००॥
निहतं तेन सूतञ्च तत्तन्मारणकैः सह ।
सत्त्वतुल्येन सूतेन तावता गन्धकेन च ॥१०१॥

---

खण्डेनालोड्य च कदलीपत्रोपरि सम्पात्य पर्पटीविधिना पचेत्, ततो विचूर्ण्य विभावयेदिति । आकुलीत्यत्र क्वाथलेहेन लेहीभूतेन क्वाथेन रसक्रियारूपेणेत्यर्थः । मल्लमूषायां "निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात् । पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्त्तिता ॥" इत्युक्तलक्षणे शरावद्वयकृते मूषाविशेषे शनैः संस्वेदयेत् मृदुवह्निना पाचयेत् ॥ ९२—९९ ॥

मेहहरे—राजावर्त्तस्य भस्म इति गन्धकेन सह पिष्टः मारितश्च राजावर्त्त इत्यर्थः । तेन भस्मना राजावर्त्तभस्मना । तेन अभ्रसत्त्वभस्मना कान्तभस्मना च । तत्तन्मारणकैः पूर्वोक्तरसमारकैः । सत्त्वतुल्येन अभ्रसत्त्वतुल्येन । तावता तत्परिमितेन । पञ्चाढ़कमितैः चत्वारिंशच्छरावपरिमितैः । अयमर्थः,—आदौ गन्धकेन सह राजावर्त्तं भस्मीकुर्य्यात्, ततः भस्मीभूतेन तेनैव राजावर्त्तेन समम् अभ्रसत्त्वं कान्तलोहञ्च पृथक् पृथक् मर्दयित्वा भस्मीकृत्य च स्थापयेत् । अथ तेनैव अभ्रसत्त्वभस्मना लौहभस्मना यथाप्राप्तेन रसमारकद्रव्यगणेन च पारदं सम्मर्द्य भस्मीभूतं कुर्य्यात् । ततः उक्तरीत्या मृतं सूतम्

कज्जल्या कृतया सार्द्धं पूर्वभस्म नियोजयेत्।
त्रिदिनं मर्दयित्वा तु मूषायां विनिरुध्य च ॥१०२॥
पश्चाद्‌ढकमितैः शालि-तुषैश्च पुटमाचरेत्।
स्वाङ्गशीतं समाहृत्य भावयेत्तदनन्तरम् ॥१०३॥
आकुलीमूलबब्बूर-वीजगुञ्जाजटोद्भवैः।
कषायैरष्टवाराणि पटचूर्णं विधाय तत् ॥१०४॥
विनिक्षिपेत् करण्डान्ते यत्नेन स्थापयेत्ततः।
सत्त्वमेहहरैर्द्रव्यैः संयुक्तो रसराड़यम् ॥१०५॥
निहन्ति सकलान् रोगान् दुरात्मोपकृतीरिव।
अयं हि सर्वरोगघ्नो भेषजेषु प्रशस्यते ॥१०६॥
धार्मिकेष्विव सर्वेषु दयावानिव मानवः।
रसोऽयं नन्दिना दिष्टः प्रशस्तो मेहहारिषु ॥ १०७ ॥

अथोदयभास्करः।—

पारदं भागमेकन्तु गन्धकं टङ्कणं तथा।
अभ्रकं लोहमेवन्तु भागमेकं पृथक् पृथक् ॥१०८॥
शिलाधातुस्तथा भागमश्वेतसभागकम्।
कट्फलं भागमेकन्तु वङ्गेन सह योजयेत् ॥१०९॥
रसञ्च पञ्चमूत्रेण दिनानि त्रीणि मर्दयेत्।
सर्वमेकत्र संयोज्य जम्बीररससंयुतम् ॥११०॥

---

अभ्रसत्त्वतुल्यं गृहीत्वा समेन गन्धकेन कज्जलीं कुर्य्यात्; अनन्तरं तथाकृतं राजावर्त्तादीनां भस्म प्रत्येकं समभागं कज्जल्या सह दिवसत्रयमामर्द्य मूषाबद्धं कृत्वा च तुषपुटे पचेत्; स्वाङ्गशीतञ्च तं गृहीत्वा आकुलीमूलादीनां प्रत्येकं क्वाथेन अष्टौ वारान् भावयेत्, ततः संशोष्य सञ्चूर्ण्य च वस्त्रपूतं कृत्वा स्थापयेदिति ॥ १००—१०७ ॥

उदयभास्करे—वङ्गेन इत्यत्र भागैकेन इति शेषः। पारदादीनां मिश्रणक्रम-माह, रसमिति।—पञ्चमूत्रेण "गवामजानां मेषीणां महिषीणाञ्च भिःसृतम्।

मर्दयेद्दिनचत्वारि खल्लके बुद्धिमान् भिषक् ।
मूषिकालेपनं कुर्य्यात् मांसीगोक्षुरसंयुतम् ॥१११॥
मर्दयेच्च यथायोग्यं दिनानामेकविंशतिः ।
पुटमध्ये परिस्थाप्य कुक्कुटीमात्रके दहेत् ॥११२॥
शीतलं तं समादाय भावयेच्च यथाक्रमम् ।
कुमारीचित्रकव्योष-जातीफलह्रियावलीम् ॥११३॥
विषमुष्टिं नवश्चाम्ल-वेतसं परिमर्दयेत् ।
शोषं कृत्वा यथायोग्यं दिनमेकं पृथक् पृथक् ॥११४॥
तं सिद्धं वल्लमात्रन्तु दापयेत् बुद्धिमान् भिषक् ।
मेहस्य मधुना युक्तः प्रयोज्यो भिषजां वरैः ॥११५॥
शर्करार्द्रकसंयुक्तं रक्तपित्ते प्रयोजयेत् ।
त्रिंशद्दिनानि दातव्यः शूले च त्रिफलाजलैः ॥११६॥
मधुना चातिसारस्य श्वासकासस्य शर्करा ।
क्षीरेण चाग्निमान्द्यस्य तैलकाञ्जिकसंयुतः ॥
सिद्धनाथेन सम्प्रोक्तो नाम्ना हृदयभास्करः ॥११७॥

मूत्रेण गर्दभीणाञ्च तन्मतं मूत्रपञ्चकम् ॥" इत्युक्तेन मूत्रपञ्चकेन। कुक्कुटीमात्रके पुटमध्ये "पुटं भूमितले यत्र तत् वितस्तिद्वितयोच्छ्रयम्। तावच्च तलविस्तीर्णं तत् स्यात् कुक्कुटकं पुटम् ॥" इत्युक्तलक्षणे कुक्कुटपुटे। ह्रियावलीम् अम्ल-वेतसञ्च इत्यनयोः दत्त्वा इति शेषः; "ह्रियावलीम्" इत्यत्र "ह्रिमावलीम्" इति पाठः साधुः, तच्च प्रागेव प्रदर्शितम्। शर्करार्द्रकसंयुक्तं शर्करापानीयमिश्रितमित्यर्थः, नात्र आर्द्रकशब्देन आर्द्रकद्रव्यमेव अभिहितः, रक्तपित्तविरोधित्वात्। श्वासकासस्य क्षीरेण सह शर्करा, अनुपानं दातव्यमिति योजनीयम्। अयं क्रमः,—रसं दिवसत्रयं पञ्चमूत्रेण मर्दयित्वा प्रक्षाल्य च गन्धकेन सह कज्जलीं कुर्य्यात्, ततः टङ्कणादिकं तत्र मेलयित्वा जम्बीररसेन दिनचतुष्टयं मर्दयेत्, अनन्तरं मांसीगोक्षुरक्वाथेन एकविंशतिदिनानि शनैर्मर्दयित्वा तेनौषधेन मूषोदरमालिप्य कुक्कुटपुटे पचेत्, ततः स्वाङ्गशीतं समुद्धृत्य कुमार्य्यादीनां पृथक् पृथक् रसैः क्वाथैर्वा एकमेकं दिनं मर्दयित्वा वल्लमानां वटीं कुर्य्यात् ॥ १०८—११७ ॥

अथ मेहकुठारः।—

पिष्ट्वा कार्पासतक्रे रसधरणदृशा तुल्यनागं कपित्था-
न्निर्य्यासं पञ्चनिष्कं निहितशतजलारातिवीजञ्च पश्चात्।
कृत्वा पिण्डानि तेन प्रतिदिनमथ तत् पिण्डमेकं कपित्था-
न्निर्य्यासं पादनिष्कं मथितमधुयुतं मेहजालं रुणद्धि ॥११८॥

अथ हिमांशुः।—

रसस्य कर्षमादाय खल्ले निक्षिप्य बुद्धिमान्।
रक्तागस्त्यप्रसूनस्य स्वरसेन विमर्दयेत् ॥११९॥
सप्तवारं तथा साधु श्वेतदूर्वारसेन च।
निष्कद्वयं टङ्कणाच्च कर्षं खादिरसारतः ॥१२०॥
कर्पूरं रसतुल्यञ्च सर्वमेकत्र मर्दयेत्।
यावच्चिक्कणतां याति युक्त्या चन्दनवारिणा ॥१२१॥
हरेणुमात्रान् वटकांश्छायायां परिशोषितान्।
प्रातः प्रातश्च सेवेत मध्याह्ने च विशेषतः ॥१२२॥
निशायाञ्च विशेषेण सेवनीयाः प्रयत्नतः।
एतद्धि मेहनुद्द्रव्यं मुखशोषहरं परम् ॥
सोमरोगहरं सर्व-पिटिकानाशनं परम् ॥१२३॥

---

मेहकुठारे—कार्पासतक्रे कार्पासेन सहितं तक्रं तस्मिन्, कार्पासपुष्पस्वरसे तक्रे चेत्यर्थः। रसधरणदृशा धरणं शाणः पलदशमांशो वा, रसस्य धरणदृशा धरणत्रयेण। कपित्थान्निर्य्यासं कपित्थमज्जा, तच्च पञ्चनिष्कमितं ग्राह्यम्। निहितेति।—निहितं निक्षिप्तं शतं शतगुणकं जलारातिवीजं जडारातिवीजं, डलयोरैक्यात् भल्लातकबीज-मित्यर्थः, शतसङ्ख्याकं कपिकच्छुवीजम् आमलकं वा, रसायनत्वेन मेहनाशित्वेन च आद्यापहत्वादिति; यद्वा—जलारातिः कुम्भीकः "पाना" इति भाषा, तस्य वीजम्। पादनिष्कं निष्कचतुर्थांशं, पादनिष्कं तत्पिण्डमेकम् इत्यन्वयः। कपित्थान्निर्य्यासस्यापि पादनिष्कत्वं बोद्धव्यम्। मथितमधुयुतं सतक्रमधुसंयुतम् ॥ ११८ ॥

हिमांशौ—रक्तागस्त्यप्रसूनस्य रक्तवर्णवकपुष्पस्य। चन्दनवारिणा घृष्टचन्दनाम्बुना;

अथ वसन्तकुसुमाकरः।—

द्विभागौ हेमभूतेश्च गगनस्यापि तत्समम्।
लोहस्य च त्रयो भागाश्चत्वारो रसभस्मनः ॥१२४॥
वङ्गभस्म त्रिभागं स्यात् सर्वमेकत्र कारयेत्।
प्रवालं मौक्तिकञ्चैव रससाम्येन योजयेत् ॥१२५॥
भावना गव्यदुग्धेन इक्षवामारसेन च।
हरिद्रावारिजेनैव मोचाकन्दरसेन च ॥१२६॥
शतपत्ररसेनैव मालत्याः कुसुमेन च।
उशीरद्वयनीरेण सप्त सप्त च सङ्ख्यया ॥१२७॥
पश्चात् मृगमदा भाव्यं सुसिद्धो रसराड् भवेत्।
कुसुमाकरविख्यातो वसन्तपदपूर्वकः ॥१२८॥
गुञ्जामात्रं ददीतास्य मधुना सर्वमेहजित्।
क्षयकासतृषाश्वास-रक्तपित्तविषार्त्तिजित् ॥
सिताचन्दनसंयुक्तश्चाम्लपित्तादिरोगनुत् ॥१२९॥

अथ मेहहरः।—

पारदभस्मशिलाजतुकृष्णा-लोहमलत्रिफलाकुलिवीजम्।
ताप्यनिशारजकोपलकान्त-व्योषरजः खपुरश्च कपित्थात् ॥१३०॥

---

क्षोडितोदकेन चन्दनचूर्णमिश्रितोदकेन वा चन्दनक्वाथेन वा। हरेणुमात्रान् कलाय-मानान् ॥ ११९—१२३ ॥

वसन्तकुसुमाकरे—हेमभूतेः स्वर्णभस्मनः। गगनम् अभ्रम्। रसभस्मनः रस-सिन्दूरस्य। रससाम्येन रससिन्दूरतुल्येन। हरिद्रावारिजेनैव हरिद्रारसेन तथा वारिजेन रसेन वालकक्वाथेन। मोचाकन्दरसेन कदलीमूलरसेन। शतपत्ररसेन पद्मपुष्परसेन। उशीरद्वयनीरेण उशीरद्वयं स्वल्पबृहत्त्वभेदात् द्विविधं वीरणमूलं तन्नीरेण तत्क्वाथेन ॥ १२४—१२९ ॥

मेहहरे—कृष्णा कृष्णजीरकम्। रजकः रञ्जकः कम्पिल्लकः इत्यर्थः। उपलं मनःशिला। कान्तः कान्तलौहम्; उपलकान्त इति समस्तपदं वा, तथात्वे कान्त-पाषाण इत्यर्थः। खपुरः गुवाकः, अस्य द्रवस्य मानकं ग्राह्यं, मेहहरत्वात्।

सर्वमिदं परिचूर्ण्य समांशं भावितभृङ्गरसं दिवसादौ।
विंशतिवारमिदं मधुलेहं विंशतिमेहहरं हरिदृष्टम् ॥१३१॥

अथ मेहारिः।—

सूतं बाहुमितं बलिं शशिमितं सम्मर्द्य तत् कज्जलीं
कृत्वा कृष्णहिरण्यतोयसहितां सम्मर्द्य घस्रं पुनः।
कूप्यामभ्रककालिकां सुपिहितां मृत्स्नांशुकैः सप्तभिः
संवेष्ट्य त्रिदिनं विशोष्य लवणापूर्णे क्षिपेद्भाण्डके ॥१३२॥
दग्ध्वा यामचतुष्टये तु शिशिरां भित्त्वा च तां कूपिकां
तं सूतं द्विलवं लवञ्च गगनं लोहं लवं मर्दयेत्।
सिद्धो वल्लमितः सिता च मधुना वत्सादनीसत्त्वतो
नो चेत् क्षौद्रकषायुतश्च तरसा सर्वप्रमेहान् जयेत् ॥१३३॥
रोगाधीश्वरपाण्डुकामलहरिद्राभत्वपित्तोद्भवान्
सर्वांश्च प्रदरामयान् विजयते मेहारिनामा रसः ॥१३४॥

कपित्थात् इत्यत्र मज्जा इति शेषः। भावितभृङ्गरसं भावितः भृङ्गरसो यत्र तत्, चूर्णमित्यस्य विशेषणम्; विंशतिवारमित्यस्य भावितभृङ्गरसमित्यनेन सम्बन्धः। दिवसादौ इति पदं मधुलेहमित्यनेन सम्बध्यते; मधुलेहं मधुना लिहन् लिह्यादित्यर्थः। "हरिदृष्टम्" इत्यत्र "परिदृष्टम्" इति युक्तः पाठः। "हरादिष्टम्" इति पाठे— हरेण उपदिष्टमित्यर्थः॥ १३०।१३१॥

मेहारौ—बाहुमितं भागद्वयमित्यर्थः। शशिमितम् एकभागम। कृष्णहिरण्य-तोयसहितां कृष्णधुस्तूररससहिताम्। घस्रं दिनम्। अभ्रककालिकां कृष्णाभ्रखण्डम्। मृत्स्नांशुकैः सप्तभिः सप्तभिः मृल्लिप्तवस्त्रखण्डैः। यामचतुष्टये चतुष्प्रहराभ्यन्तरे। तं सूतम् उक्तप्रकारेण भस्मीभूतं सूतं द्विलवं लवः चतुर्थांशः तद्द्वयम्, उक्तप्रकारेण भस्म-सूतस्य अर्द्धमित्यर्थः। लवञ्च गगनं सूताच्चतुर्थांशम् अभ्रकम्। वल्लमितः रक्तित्रयमितो रसः। वत्सादनीसत्त्वतः गुडूचीशर्करातः गुडूचीरसतो वा। कज्जलीं कृष्णधुस्तूर-पत्ररसेन एकदिनं मर्दयित्वा कूपिकायां संस्थाप्य च कृष्णाभ्रखण्डेन कूपिकामुखं रुन्ध्यात्, ततः सप्तभिः मृल्लिप्तवस्त्रखण्डैः कूपिकां तां संवेष्ट्य त्रिदिनम् आतपे शोषयित्वा च लवणयन्त्रे चतुःप्रहरं पचेत्। ततः स्वाङ्गशीतां तां कूपिकां भङ्क्त्वा

अथ मेहवज्ररसः।—

भस्मसूतं मृतं कान्तं मुण्डभस्म शिलाजतु।
ताप्यं शुद्धं शिला व्योषं त्रिफलाऽङ्कोलबीजकम्॥ १३५॥
कपित्थरजनीचूर्णं समं सम्भाव्य भृङ्गिणा।
त्रिंशद्वारं विशोष्याथ मधुयुक्तं लिहेत् सदा॥१३६॥
निष्कमात्रं हरेन्मेहान् मेहवज्रो रसो महान्।
महानिम्बस्य बीजानि षण्निष्कं पेषितानि तु॥१३७॥
पलतण्डुलतोयेन घृतनिष्कद्वयेन च।
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरन्तनम्॥१३८॥

अथ हरिशङ्कररसः।—

मृतं सूताभ्रकं तुल्यं धात्रीफलनिजद्रवैः।
सप्ताहं भावयेत् खल्वे रसोऽयं हरिशङ्करः॥१३९॥
माषमेकां वटीं खादेत्सर्वमेहप्रशान्तये।
पूर्वयोगानुपानं स्यादसाध्यं साधयेत् क्षणात्॥ १४०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये मूत्रकृच्छ्राश्मरी-मेहसोमरोगपिटिकाचिकित्सितं नाम सप्तदशोऽध्यायः॥ १७॥

---

भस्मीभूतरसस्य भागद्वयं गगनस्य लौहस्य च एकैकभागं मिश्रयित्वा सिद्धात् रसात् रक्तिद्वयं सितादिभिः सह भक्षणीयम्॥ १३२—१३४॥

मेहवज्ररसे—मृतं कान्तं कान्तलौहभस्म। मुण्डभस्म मुण्डलौहभस्म। रसेन्द्रसारे—"मृतं कान्तं मुण्डभस्म" इत्यत्र "मृतं कान्तलौहभस्म" इति पाठान्तरम्। रसरत्नाकरे "मुण्डभस्म" इत्यत्र "तीक्ष्णभस्म" इति पाठः। अङ्कोलबीजकम् अङ्कोठबीजम्। "अङ्कोलबीजकम्" इत्यत्र "बिल्वजीरकम्" इति रसेन्द्रसारसङ्ग्रहे पाठः। भृङ्गिणा भृङ्गराजरसेन। रसेन्द्रसारे मेहवज्राख्योऽयम्॥ १३५—१३८॥

हरिशङ्कररसे—धात्रीफलनिजद्रवैः आमलकस्वरसैः। "धात्रीफलनिजद्रवैः" इत्यत्र "धात्रीफलनिशाद्रवैः" इति रसेन्द्रसारोक्तः पाठः। पूर्वयोगानुपानं "महानिम्बस्य" इत्यादिना मेहवज्रोक्तमनुपानम्॥ १३९।१४०॥

इति रसरत्नसमुच्चयबोधिन्यां सप्तदशोऽध्यायः॥ १७॥

# अथाष्टादशोऽध्यायः ।

---

## अथ विद्रध्यादिचिकित्सनम् ।—

### अथ विद्रधेर्निदानं सम्प्राप्तिश्च ।—

अन्नैरध्युषितोष्णशुष्कपरुषैरन्यैरसृग्दूषणै-
र्वक्रैर्वा शयनादिभिस्तनुभृतामन्तर्वहिर्वोत्थितः ।
मेदस्त्वक्पलकण्डरास्थिरुधिरं गाढं प्रदूष्य क्षतो
वृत्तः स्यादथवायतोऽधिकरुजः शोथस्त्वसौ विद्रधिः ॥ १ ॥

### अथ विद्रधिचिकित्सा ।—

#### अथ सर्वेश्वरपर्पटी ।—

रसोपरसलोहानि कार्षिकाणि पृथक् पृथक् ।
तेषु लोहानि सर्वाणि पाषाणाः कठिनास्तथा ॥२॥

---

प्रमेहोपेक्षया पिड़का जायते, विद्रधेश्च पिडकासामान्यात् दशविधपिडकाऽन्तर्गतत्वाद्वा प्रमेहानन्तरं विद्रध्यादिचिकित्सितं विवक्षुः अष्टादशाध्यायमारभते, तत्र औषधप्रयोगस्य व्याधिनिर्णयापेक्षित्वात् आदौ विद्रधेर्निदानं सम्प्राप्तिञ्चाह, अन्नैरिति ।—अध्युषितोष्णशुष्कपरुषैः पर्युषितैः उष्णवीर्य्यैः उष्णस्पर्शैश्च तथा शुष्कैः परुषैः कठिनैश्च अन्नैः, तथा असृग्दूषणैः रक्तदूषकैः अन्यैः अन्यविधैः भोज्यैः, तथा वक्रैः कुटिलैः, उच्चावचैरित्यर्थः, विषमैरिति यावत्, शयनादिभिः शयनासनस्थानादिभिः कुपितेन दोषेणेति शेषः, तनुभृतां देहिनां मेदस्त्वक्पल मांसं कण्डरा स्थूलशिरा अस्थि रुधिरञ्च गाढ़म् अत्यर्थं प्रदूष्य अन्तः देहाभ्यन्तरे गुदवस्तिमुखादिदेशे, बहिः क्वचित् गात्रप्रदेशे वा उत्थितः उत्थापित इत्यर्थः, वृत्तः अथवा आयतः दीर्घाकारः अधिकरुजः अतिक्लेशप्रदः यः शोथः स्यात्, क्षतः दोषेणैव जनितः इत्यर्थः, असौ शोथः विद्रधिः ॥ १ ॥

सर्वेश्वरपर्पट्यां—रसशब्देन रसमहारसयोः तथा उपरसशब्देन च उपरससाधारणरसयोः ग्रहणम् ; ततश्च रसः पारदः, तथा "अभ्र-वैक्रान्त-माक्षीक-विमला-ऽद्रिज-सस्यकम् । चपलो रसकश्चेति ज्ञात्वाऽष्टौ सङ्ग्रहेत् रसान् ॥" इत्यष्टमहारसाश्च, तथा उपरसाः "गन्धाश्म गैरि-कासीस-काक्षी-ताल-शिलाऽञ्जनम् । कङ्कुष्ठञ्चेत्युप-

घनसत्त्वञ्च तत् सर्वं भस्मीकृत्य प्रयोजयेत् ।
रत्नानि वज्रतुल्यानि भस्मीकृत्य च सर्वशः ॥३॥
एभ्यश्चतुर्गुणः सूतो गन्धस्तस्माच्चतुर्गुणः ।
कृत्वा कज्जलिकां ताभ्यां क्षिपेल्लोहस्य भाजने ॥४॥
प्रद्राव्य बदराङ्गारैर्निक्षिपेत्तदनन्तरम् ।
रसोपरसलोहानां रत्नानामपि सर्वशः ॥५॥
चूर्णं भस्म च निक्षिप्य काष्ठेनाऽऽलोड्य मेलयेत् ।
ततश्च षोडशांशेन मिश्रयित्वाऽरुणं विषम् ॥६॥
गोमयोपरि निक्षिप्य निक्षिपेत् कदलीदले ।
पत्रेणान्येन रम्भायाः समाच्छाद्य प्रयत्नतः ॥७॥
कराभ्यां चिपिटीकृत्य क्षिपेदुपरि गोमयम् ।
ततः शीतं समाकृष्य चूर्णयित्वा च पर्पटीम् ॥८॥
विनिक्षिपेत् करण्डान्तः सम्पूज्य रसभेषजम् ।
सर्वेश्वराभिधानेयं पर्पटी परिकीर्त्तिता ॥९॥
सर्वलोकहितार्थाय नन्दिनेयं प्रकीर्त्तिता ।
रक्तियुक्तसमानेयं मरिचार्द्रसमन्विता ॥१०॥

---

रसाश्चाष्टौ पारदकर्मणि ॥" इत्यष्टौ तथा "कम्पिल्लश्च परो गौरी-पाषाणो नरसारकः । कपर्दो वह्निजारश्च गिरिसिन्दूरहिङ्गुलौ ॥ मृद्दारशृङ्गमित्यष्टौ साधारणरसाः स्मृताः । रससिद्धिकराः प्रोक्ता नागार्जुनपुरःसरैः ॥" इत्यष्टौ साधारणरसाश्च, तथा लोहानि "शुद्धं लोहं कनकरजतम्" इत्यादिना पञ्चमाध्यायोक्तानि स्वर्ण-रौप्य-ताम्र-कान्त-मुण्ड-तीक्ष्ण-नाग-वङ्ग-कांस्य-पित्तल वर्त्तलोहाख्यानि पृथक् पृथक् कार्षिकाणि, यान्यानि इति शेषः । तेषु रसोपरसलोहेषु मध्ये सर्वाणि लोहानि, तथा कठिनाः पाषाणाः रसोपरसयोर्मध्ये ये पाषाणाकाराः दृढाः माक्षिकादयः, तथा घनसत्त्वञ्च सर्वं भस्मीकृत्य प्रयोजयेत्, एतेन रसोपरसयोः ये मृदवः तान् संशोध्य चूर्णीकृत्यैव प्रयोजयेत्, न तु भस्मीकृत्येति मन्तव्यम् ; अयमेवार्थः "चूर्णं भस्म च निक्षिप्य" इत्यादिना स्फुटीकृतः चाचार्येणैवोपरिष्टात् । रत्नानि "वैक्रान्तः सूर्यकान्तश्च" इत्यादिना चतुर्थाध्यायोक्तानि । एभ्यः रसादिसमुदायेभ्यः । गन्धस्तस्माच्चतुर्गुणः

विद्रधौ षट्प्रकारे स्याद्देया वर्श्मसु सप्तसु।
क्षयरोगेषु सर्वेषु पाण्डुरोगे विशेषतः ॥११॥
ग्रहणीरोगभेदेषु गुल्मेष्वष्टविधेषु च।
मूत्ररोगेष्वशेषेषु प्लीहार्थे यकृदामये ॥१२॥
प्रमेहे सोमरोगे च प्रदरे जठराग्निषु।
विशेषेण च मन्दाग्नौ सर्वेष्वावर्त्तकेषु च ॥१३॥
अनुक्तेष्वपि रोगेषु तत्तदौचित्ययोगतः।
रसोऽयं खलु दातव्यः शिवतुल्यपराक्रमः ॥१४॥
यद्यद्द्रव्यमसात्म्यं हि जनानामुपजायते।
तत् सर्वं सात्म्यमायाति रसस्यास्य निषेवणात् ॥१५॥
पीतं हालाहलं तोयं पर्वताग्रे वरोद्भतम्।
सलिलं तैलतत्तुल्यं तज्जलं स्यात् सुधोपमम् ॥
दुःसाध्यो विद्रधिर्मासाच्छान्तिमाप्नोति निश्चितम् ॥ १६ ॥

---

सूताद्द्विगुणो गन्धकः। वत्स्यं विषम् अहिफेनं दारुमोषं वा। रक्तियुक्तमसाना रक्तिमाना इयं पर्पटी। वर्श्मसु सप्तसु सप्तविधेषु हृद्रिरोगेषु ; वर्श्मशब्देनात्र हृद्रिरोग एवाभिप्रेतः न तु अर्शः, तस्य सप्तविधत्वादर्शनात वृद्धेश्च सप्तविधत्वादिति। गुल्मेषु अष्टविधेषु वातपित्तकफद्वन्द्वसन्निपातरक्तजेषु अष्टविधेषु गुल्मेषु। आवर्त्तकेषु पुनः प्रत्यावर्त्तनशीलेषु, ये रोगाः एकवारं प्रशान्ताः पुनः प्रत्यावर्त्तन्ते ते आवर्त्तकाः ज्ञेयाः। पीतमिति।—वरोद्भतं सुतीव्रं हालाहलं गरलमपि पीतं, चेदिति शेषः, तत पर्वताग्रे यत् तोयं निर्झरोदकं तत्तुल्यं, भवेदिति शेषः, अस्मिन् औषधे सेविते असात्म्य सुतीव्रं हालाहलं पीतमपि तत् निर्झरोदकवत् सात्म्यमदोषञ्च सम्पद्यते इत्यर्थः। तथा तैलतत्तुल्यं तैलवर्णं विवर्णमित्यर्थः, यत सलिलं तज्जलमपि सुधोपमं सुधावत् गुणकारि स्यात्, अस्यौषधस्य सेवनात् असात्म्यम् अतीवविकृतं जलमपि पीतम् अमृतवत् सात्म्यमदोषञ्च सम्पद्यते इत्यर्थः। क्वचिदेतच्छ्लोकानन्तरं "भुक्ता अपि च पाषाणा जीर्य्यन्ते चणमात्रतः। नैतस्मिन्नियतः क्वापि विहाराहारकर्मणि ॥ लोकनाथरसोऽप्यत्र चौद्रैर्गुञ्जाचतुष्टयम्। पाठामूलस्य कर्षैकं पिबेत्तण्डुलवारिणा ॥" इत्यधिकः पाठो दृश्यते ॥ ९—१६ ॥

अथ वरुणकषायः ।—

वरुणावल्कलक्काथे हिङ्गुकासीससैन्धवम् ।
शिलाजतुसमायुक्तमसाध्यं विद्रधिं जयेत् ॥१७॥

अथ शोभाञ्जनादिक्काथः ।—

क्काथं शिग्रुवचाश्वत्थं हिङ्गुसैन्धवचूर्णितैः ।
संयुक्तं पाययेच्छान्त्यै विद्रधीरोगपीड़ितम् ॥१८॥

अथ सर्वामयहरो रसः ।—

हरिद्राकन्दमङ्कोल-तण्डुलं गन्धकं गुड़म् ।
मूलानि च महाभर्य्याः पृथगर्द्धपलान्वितम् ॥१९॥
तुल्यञ्च पञ्चपलिकं नारीस्तन्येन पेषितम् ।
लिप्तं नालान्ध्रमूषासु धमनात् सत्त्वमाहरेत् ॥२०॥
शस्तं चारं रसेष्वेतत् पोटल्या पचनादनु ।
घृतनाऽऽवर्त्तिते तस्मिन्निष्कद्वितयसम्मिते ॥२१॥

---

वरुणकषाये—वरुणावल्कलक्काथे वरुणत्वक्काथे ; प्रयोगदर्शनात् वरुणशब्दः आदन्तोऽप्यस्तीति मन्तव्यम् ; यद्वा—वरुणस्य आवल्कलम् आ सम्यक् पुष्ट. घनमित्यर्थः, वल्कलम् । हिङ्ग्वादीनामत्र प्रक्षेपः बोध्यः ; तेन हिङ्गु र २ सैन्धव र ६ कासीस र २ शिलाजतु र ६ अत्र देय इत्याहुर्वृद्धाः । योगोऽयमाभ्यन्तरविद्रधौ प्रयोज्यः ॥ १७ ॥

शोभाञ्जनादिक्काथे—शिग्रुवचाश्वत्थं शिग्रुवचाश्वत्थकृतमित्यर्थः । "शिग्रुवचाश्वत्थम्" इत्यत्र "शिग्रुत्वचोत्थश्च" इति पाठान्तरम् ॥ १८ ॥

सर्वामयहररसे—अङ्कोलतण्डुलम् अङ्कोलमूलं विड़ङ्गतण्डुलश्चेत्यर्थः ; अङ्कोलबीजमित्यर्थो वा । मूलानि च महाभर्य्याः "महाभरी" इति प्रसिद्धायाः वचायाः मूलानि । नालान्ध्रमूषासु नालयुक्तासु गोस्तनाकारासु अन्धमूषासु, तल्लक्षणञ्च "मूषा या गोस्तनाकारा" इत्यादिना दशमाध्याये प्रदर्शितम् । शस्तमिति ।—एतत् चारं हरिद्राकन्दादीनां चारं रसेषु रसकर्मसु शस्तं प्रशस्तम् । एवं सत्त्वकृद्विधिमुक्त्वा अनन्तरकर्त्तव्यमाह, पोटल्या इति ।—पोटल्या मूषया इति यावत्, पचनादनु पाकानन्तरं निष्कद्वितयसम्मिते तोलकपरिमिते तथा घृतेनावर्त्तिते आलोड़िते तस्मिन् सत्त्वे

प्रवेशितं निष्कारसं महाजम्बीरनीरतः।
अम्लपिष्टं शरावान्तर्लिप्तं मृद्वस्त्रमुद्रितम् ॥२२॥
अधरोत्तरदत्तानां भ्रष्टानामाढ़के स्थितम्।
वालुकानां तथाभूतैः खारीपरिमितैस्तुषैः ॥२३॥
पक्वं शीतं कृतं क्षुस्समष्टौ निष्काणि खर्परात्।
चत्वारि सुरभि स्थूल-घनवर्त्तुलनीरुजाम् ॥२४॥
पीताभानां सगर्भत्वाद्वराटानाञ्च षोड़श।
अम्लस्य सार्द्धप्रस्थेन श्लक्ष्णपिष्टानि पात्रयोः ॥२५॥
जम्बीरमूलिकाकल्केनान्तर्लिप्तानि लिप्तयोः।
पचेच्छुष्ककरीषाणामर्द्धभारेण यत्नतः ॥२६॥
कृष्णवर्णोऽनुपक्वोऽसौ सुपक्वः शङ्खपाण्डुरः।

---

निष्कारसं निष्कमानं पारदं प्रवेशितं मिश्रितं, कृत्वेति शेषः, महाजम्बीरनीरतः महज्जम्बीररसात् अम्लपिष्टं शरावान्तर्लिप्तं तथा मृद्वस्त्रमुद्रितं मृल्लिप्तवस्त्रवेष्टितं, तत् सत्त्वं भ्रष्टानां स्थालीमध्ये निक्षिप्तानाम अधरोत्तरदत्तानां शरावस्य ऊर्द्ध्वाधोदत्तानां वालुकानामाढ़के आढ़कपरिमितायां वालुकायां स्थितं रचितं कृत्वा तथाभूतैः स्थाल्या अधरोत्तरदत्तैरित्यर्थः, खारीपरिमितैः द्वादशशरावाधिकैः शरावशतपञ्चमितैः तुषैः पक्वं शीतं कृतं शीतीभूतं क्षुस्स चूर्णीकृतं तद्भस्मजं, तथा खर्परात् अष्टौ निष्काणि, सुरभि गन्धकं चत्वारि, निष्काणीति शेषः, अम्लस्य काञ्जिकस्य सार्द्धप्रस्थेन श्लक्ष्णपिष्टानि, कृत्वेति शेषः, सगर्भत्वात् मध्ये औषधपूरणार्थं रन्ध्रवत्त्वात् स्थूलघनवर्त्तुलनीरुजां स्थूलानां घनानां मांसलानां वर्त्तुलानां गोलानां नीरुजाम् अखण्डितानां पीताभानां वराटानां षोडश, गृहीत्वा इति शेषः, अश्मलिप्तानि वराटोदरप्रवेशितानि तानि हरिद्राकन्दसत्त्वादिसुरभ्यन्तानि औषधानि जम्बीरमूलिकाकल्केन लिप्तयोः पात्रयोः पिष्टजम्बीरमूलेन लिप्तोदरयोः शरावयोः, स्थापितानि कृत्वा इति शेषः, लिप्तयोः पात्रयोः कृतसन्धिकयोः पात्रयोः, स्थितानीति शेषः, पात्रमध्ये औषधं संस्थाप्य सन्धिं निरुध्य च; "सुरभिस्थूलघनवर्त्तुलनीरुजाम्" इति समस्तपाठे—नीरुक् कुष्ठं, सुगन्धिस्थूलघनवर्त्तुलकुष्ठानां चत्वारि निष्काणीत्यर्थः। शुष्ककरीषाणाम् अर्द्ध-भारेण सहस्रपलेन, "पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः" इति लक्षणात्,

काचशङ्खमये पात्रे धारणीयः सुरक्षितः ॥
पटचूर्णवशात् सर्वानामयान् विनियच्छति ॥२७॥

अथ वृद्धिचिकित्सा ।—

अथ दार्वीप्रयोगः ।—

चूर्णं दारुहरिद्राया गवां मूत्रैस्त्रिनिष्ककम् ।
चिरं चिरोत्थितां हन्ति अन्त्रवृद्धिं न संशयः ॥२८॥

अथ वातारिरसस्य प्रयोगोपदेशः ।—

रसो वातारिनामा यः सोऽत्र देयः पिबेदनु ।
एरण्डतैलकर्षकं गवां क्षीरं पलद्वयम् ॥
अण्डवृद्धिहरं ख्यातं मासमात्रान्न संशयः ॥ २९ ॥

अथ वातारिः ।—

रसभागो भवेदेको द्विगुणो गन्धको मतः ।
त्रिभागा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः ॥३०॥
गुग्गुलुः पञ्चभागः स्यादेरण्डस्नेहमर्दितः ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥३१॥
गुटिकां कर्षमात्रान्तु भक्षयेत् प्रातरेव हि ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥३२॥

---

यवतः पर्यन्त् । असौ भस्मीभूतः रसः कृष्णवर्णश्चेत् अनुपक्वः हीनपक्वः "अनु हीने सहार्थे च" इति विश्ववचनादनुशब्दोऽत्र हीनार्थकः । सुपक्वश्चेत् शङ्खपाण्डुरः, भवेदिति शेषः ॥ १९—२७ ॥

शोथत्वसामान्यात् विद्रध्यनन्तरं वृद्धिचिकित्सितं विवृण्वन् आदौ अन्त्रवृद्धिनाशनं दार्वीप्रयोगमाह, चूर्णमिति ।—सुगमम् ॥ २८ ॥

वातारिरसस्य अनुपानं निर्दिशति, रस इति ।—अत्र अन्त्रवृद्धिरोगे वातारिनामा यो रसः वक्ष्यमाणः स देयः । एरण्डेति ।—गोक्षीरे एरण्डतैलं प्रक्षिप्य पिबेत् ॥ २९ ॥

प्राक् वातारिरस इत्युक्तं, तमेव वातारिरसमाह, रसभाग इति ।—त्रिभागा त्रिफला इति मिलितायास्त्रिफलायाः भागत्रयं, तेन प्रत्येकं रससमो भागः । अत्र एरण्ड-स्नेहमर्दिते गुग्गुलौ । पूर्वकं चूर्णं रसादि चित्रकान्तचूर्णम् । तेनैव एरण्डस्नेहेनैव ।

अभ्यज्यैरण्डतैलेन स्वेदयेत् पृष्ठदेशकम् ।
विरिक्ते तेन सञ्जाते स्निग्धमुष्णञ्च भोजयेत् ॥३३॥
वातारिसंज्ञको ह्येष: रसो निर्वातसेवित: ।
मासेन सुखयत्येव ब्रह्मचर्य्यपुर:सर: ॥
विजयागुटिकां रात्रौ स्वल्पमात्राञ्च भक्षयेत् ॥३४॥

अथ तैलार्द्रकप्रयोग: ।—

कर्षिकं तिलतैलन्तु पलिकञ्चाऽऽर्द्रकद्रवम् ।
य: पिबेत् प्रातरुत्थाय तस्यान्त्रवृद्धिर्हृद्भवेत् ॥३५॥

अथ अन्त्रवृद्धौ पानीयतैलम् ।—

गोमूत्रैरण्डतैलञ्च छागमांसरसं तथा ।
त्रिफलाक्वाथतुल्यांशं तैलशेषं विपाचयेत् ॥
तत्तैलन्तु पिबेत् कर्षमन्त्रवृद्धिप्रशान्तये ॥ ३६ ॥

अथ अन्त्रवृद्धौ पानीयतैलान्तरं घृतञ्च ।—

दध्यारनालमदिरा-मातुलुङ्गरसै: समै: ।
ताम्रचूड़रसैस्तुल्यं तैलं वा घृतमेव वा ॥
स्नेहशेषं पचेत् सर्वं तत् पिबेदन्त्रवृद्धिजित् ॥ ३७ ॥

---

निर्वातसेवित: प्रवातरहिते देशे अवस्थित: । ब्रह्मचर्य्यपुर:सर: उपस्थसंयमपूर्वक: । विजयागुटिकां पिष्टविजयया कृतां गुटिकाम् । पञ्चभागं विशोधितं गुग्गुलुमादौ एरण्डतैलेन मर्दयित्वा पश्चात् तत्र रसादिकं मिश्रयित्वा पुन: एरण्डतैलेन मर्दयेत् ॥ ३०—३४ ॥

तैलार्द्रकप्रयोगे—अन्त्रवृद्धिहृत्, योगोऽयमिति शेष: ॥ ३५ ॥

अन्त्रवृद्धौ पानीयतैले—त्रिफलाक्वाथतुल्यांशं त्रिफलाक्वाथ: तुल्यांश: समो यत्र तादृशम् एरण्डतैलम्, एतेन एरण्डतैलादीनां त्रयाणां तुल्यत्वं गोमूत्रस्य च चातुर्गुण्यं बोद्धव्यम् ॥ ३६ ॥

अन्त्रवृद्धिहरपानीयतैलघृतयो:—समै: समपरिमितै: दध्यादिभि: । ताम्रचूड़रसै: कुक्कुटमांसरसै: । अक्षतार्थमिदम् ॥ ३७ ॥

अथ अन्त्रवृद्धौ मांसरसः।—

अन्त्रवृद्धिहरः पाने मयूरात्तित्तिराद्रसः ॥ ३८ ॥

अथ अन्त्रवृद्धौ द्वितीयमांसरसः।—

वार्त्ताकं कुक्कुटं पक्त्वा तद्रसं पानभोजने।
योजयेदन्त्रवृद्ध्यार्त्तः शममाप्नोति नान्यथा ॥ ३९ ॥

अथ गुल्मपूर्वरूपम्।—

उद्गारबाहुल्यपुरीषबन्ध-तृप्त्यक्षमत्वान्त्रविकूजनानि।
आटोपमाध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥४०॥

अथ गुल्मचिकित्सा।—

अथ गन्धकादिपोटलीरसः।—

गन्धकं तालकं ताप्यं शिलाह्नं पिप्पलीकृते।
कषाये भावयेत् सुधाः चीरे मूत्रे च सप्तशः ॥४१॥
निष्कार्द्धमस्याः पोटल्याः स्यादर्द्धं साज्यमाक्षिकम्।
प्रयोज्यं सयकृत्प्लीह्नि पञ्चकोलपशालिना ॥४२॥

अन्त्रवृद्धिहरमांसरसे—मयूरतित्तिरयोः मिलितयोः रसः पक्तव्यः ॥ ३८ ॥

अन्त्रवृद्धिहरे द्वितीयमांसरसे—वार्त्ताकं तित्तिरम्। अत्रापि वार्त्ताककुक्कुटयोः मिलितयोः रसः ज्ञेयः ॥ ३९ ॥

अथ वायोरव्यभिचरितत्वसाधर्म्यात् हृद्रोगानन्तरं गुल्मचिकित्सितं विवक्षुरादौ तस्य पूर्वरूपमाह, उद्गारेति।—तृप्तिः सौहित्यं गतस्येव अन्नानाकाङ्क्षा। अक्षमत्वं कर्मस्व-सामर्थ्यम्। आटोपं सरुजमुदरक्षोभं तलतलं वा, न तु गुडगुडाध्वनिः, "अन्त्र-विकूजनानि" इत्यनेनैव तस्य गतार्थत्वात् ॥ ४० ॥

गन्धकादिपोटल्यां—मूत्रे गोमूत्रे, "मूत्रे गोमूत्रमादेयम्" इति परिभाषाबलात्। सप्तशः पिप्पलीकषायादिना प्रत्येकं सप्तवारान्। स्यादर्द्धमिति।—घृतमधुनोः मिलित्वा पोटलीमानार्द्धं ग्राह्यम्। पञ्चकोलप-शालिना पञ्चकोलक्वाथपायिना; "पञ्चकोलपशालिना" स्थाने "पञ्चकोलपलाशिना" इति पाठे—पलमितपञ्चकोलक्वाथ-पायिनेत्यर्थः ॥ ४१।४२ ॥

अथ गन्धकादिपोटल्याः प्रयोगान्तरम्।—

वर्षाभूः कारवी शौण्डी सूची वचफलासनम्।
तिलाश्चियुगमाषाणा-निशाककन्धुसूरिका ॥४३॥
रक्तागस्त्येन्दुरेखाब्द-नीलज्योतिरयो मृतम्।
वल्कलं बहुवल्लर्य्याः कृष्णः काम्बोजिकाफलम् ॥४४॥
गवाचीरजनीकृष्णा-निम्बवेल्लकठिल्लकम्।
मानिकांशं पृथक् चूर्णं तुल्यं भूशर्करा घृतम् ॥४५॥
त्रिफलाबीजतैलेन भावितं कर्षसम्मितम्।
प्राह्णे घृतेन मध्याह्ने गुडेन मधुना निशि ॥४६॥
पादं पादार्द्धमात्रं वा पोटल्याश्च रजो भवेत्।
हैयङ्गवीनशाल्यन्न-कृष्णगोचीरवर्त्तिनः ॥४७॥

---

गन्धकादिपोटल्याः प्रयोगान्तरे—कारवी कृष्णजीरकम्। शौण्डी पिप्पली। सूची कुशः। वचः वचा। फलं त्रिफला। असनं स्वनामख्यातम्; "फलासनम्" इत्यत्र "किलासनम्" इति पाठे—किलः किलपादिका, चुद्रलज्जालुलता इत्यर्थः। तिलाश्चि तिलनेत्रं, तिलनालमूलमित्यर्थः। युगः ऋद्धिः, तदभावे बला ग्राह्या। माषाणा शरपुङ्खाभेदः; "तिलाश्चियुगमाषाणा" इत्यत्र "तिलाश्चिहवुषाषाणा" इति पाठान्तरम्। निशा हरिद्रा। कर्कन्धुः आरण्यबदरम्। सूरिका राजिका। रक्तागस्त्यः रक्तवकः। इन्दुरेखा सोमराजी। अब्दः मुस्तकम्। नीलज्योतिः रसाञ्जनम्; नीलः नीलीवृक्षः, ज्योतिः चित्रक इत्यर्थौ वा। अयो मृतं मृतलौहम्। वल्कलं बहुवल्लर्य्याः शोभाञ्जनत्वक्। कृष्णं मरिचम्। काम्बोजिकाफलं गुञ्जाबीजम्; "कृष्ण-काम्बोजिकाफलम्" इति समस्तपाठे—कृष्णवर्णगुञ्जाफलम्। गवाची गोरक्षकर्कटी। रजनी दार्वी। कृष्णा गान्धारी पिप्पली वा। वेल्लं विडङ्गम्। कठिल्लकं पुनर्नवा। मानिकांशं शरावमितम्। भूशर्करा इक्षुविकारजा शर्करा, न तु पुष्परसादिभ्यो जाता शर्करा इति विशेषेण ज्ञापनार्थं भूपदोपादानं बोद्धव्यम्; शर्करकन्दाख्यः आलुक-विशेषः इत्यर्थौ वा। अत्र शर्कराघृतयोर्मिलितयोः सर्वचूर्णसमानत्वं बोद्धव्यम्। त्रिफलाबीजतैलेन त्रिफलाबीजभवतैलेन। भावितमिति सप्ताहम्। पादमिति।—वर्षाभ्वादियोगस्य कर्षमात्रापेक्षया पादं पादार्द्धमात्रं वा पोटल्या रजः गन्धकादि-पोटलीचूर्णम्; योगमिमं कर्षमात्रं पोटल्याः माषद्वयेन माषचतुष्टयेन वा सह पिबेत्।

एवं वर्षत्रयं कुर्यात् स्याद्वलीपलितोज्झितः ।
प्रत्यहं मण्डलं खादेत् पथ्यं त्यक्त्वा ततःपरम् ॥
इष्टाहारविहारी च सहस्रायुर्भवेद्ध्रुवम् ॥४८॥

अथ वङ्गेश्वरः ।—

भस्मसूतं वङ्गभस्म पलैकैकं प्रकल्पयेत् ।
गन्धकं मृतताम्रञ्च प्रत्येकञ्च पलं पलम् ॥४९॥
अर्कक्षीरैर्दिनं मर्द्यं सर्वं तत् गोलकीकृतम् ।
कृत्वा तद्भूधरे पश्चात् पुटैकेन समुद्धरेत् ॥५०॥
एष वङ्गेश्वरो नाम प्लीहगुल्मोदरापहः ।
घृतैर्गुञ्जाद्वयं लेह्यं निष्कं श्वेतपुनर्नवा ॥
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः ॥ ५१ ॥

अथ देवदालीपञ्चाङ्गचूर्णम् ।—

पञ्चाङ्गदेवदाल्यास्तु चूर्णकर्षं शिवाम्बुना ।
मासमात्रं पिबेद्यस्तु प्लीहा तस्य करोति किम् ? ॥५२॥

अथ तक्रासवः ।—

लवणं रजनी राजी प्रत्येकं पलपञ्चकम् ।
चूर्णितं निक्षिपेद्भाण्डे शततक्रपलान्विते ॥५३॥

---

हैयङ्गवीनं सद्योजातं घृतम्; हैयङ्गवादिना वर्त्तते जीवति इति तस्य हैयङ्गवादिसेविनः इत्यर्थः। प्रत्यहमिति वर्षत्रयमित्यनेन सम्बध्यते; एवञ्च वर्षत्रयं यावत् प्रतिदिनं खादेदित्यर्थः। मण्डलं खादेत् पथ्यं मण्डलम् अष्टचत्वारिंशद्दिनं यावत् पथ्य खादेत् पथ्यभुक् स्यात्, ततः परम् अष्टचत्वारिंशद्दिनानन्तरं, त्यक्त्वा, पथ्यमिति शेषः, इष्टाहारविहारी भवेत् यथाकाममाहारविहारं कुर्यादित्यर्थः ॥ ४३—४८ ॥

वङ्गेश्वरे—गवां जलैः गोमूत्रैः ॥ ४९—५१ ॥

देवदालीपञ्चाङ्गचूर्णे—देवदाली हस्तिघोषकं तस्याः पञ्चाङ्गं पत्रपुष्पफलमूलत्वग्रूपम्। शिवाम्बुना हरीतकीक्वाथेन ॥ ५२ ॥

तक्रासवे—लवणं सैन्धवम्। राजी राजिका, "राइसरिषा" इति

त्रिदिनं मुद्रितं रक्षेत् पश्चात् पञ्चपलं सदा।
पीत्वा विनाशयेत् प्लीहं त्रिःसप्ताहान्न संशयः ॥५४॥

अथ एरण्डक्षारम्।—

समूलपत्रमेरण्डं कृत्वा भाण्डे पुटे पचेत्।
तत्कर्षं पलगोमूत्रैः पीतं प्लीहविनाशनम् ॥५५॥

अथ शरपुङ्खादियोगः।—

शरपुङ्खार्कयोर्मूलं चिरं दन्तैश्च चर्वितम्।
गिलितं नाशयेत् प्लीहं यवागूपानमाचरेत् ॥ ५६ ॥

अथ वज्रक्षारप्रयोगोपदेशः।—

वज्रक्षारन्तु कर्षैकं भक्ष्यं प्लीहविनाशनम् ॥ ५७ ॥

अथ काञ्चनीप्रयोगः।—

काञ्चनीमूलचूर्णन्तु निष्कमात्रं सदा पिबेत्।
सुरया काञ्जिकैर्वाऽथ हन्ति प्लीहं चिरन्तनम् ॥ ५८ ॥

अथ प्लीह्नि रक्तमोक्षणोपदेशः।—

प्लीहानां पृष्ठदेशे तु रक्तस्रावञ्च कारयेत्।
अर्कक्षीरं ससिन्धूत्थं क्षिपेत्तत्र रुजापहम् ॥ ५९ ॥

---

ख्यातम्। शततक्रपलान्विते शतपलतक्रान्विते। प्लीहमिति अकारान्तप्लीहशब्दस्य रूपम् ॥ ५३।५४ ॥

एरण्डक्षारे—तत्कर्षम् एरण्डक्षारकर्षम् ॥ ५५ ॥

शरपुङ्खादियोगे—शरपुङ्खार्कमूलं दन्तैः चर्वित्वा गिलेत् न तु जलादिना कल्कीकृत्य ॥ ५६ ॥

वज्रक्षारप्रयोगोपदेशे—वज्रक्षारम् उदरचिकित्सिते वक्ष्यमाणम् ॥ ५७ ॥

काञ्चनीप्रयोगे—काञ्चनीमूलचूर्णं स्वर्णक्षीरीमूलचूर्णं हरिद्राकन्दचूर्णं वा ॥५८॥

प्लीह्नि रक्तमोक्षणस्य कर्त्तव्यतामाह, प्लीहानामिति।—प्लीहानां प्लीहरोगिणामित्यर्थः, प्लीहः अस्ति एषामिति अर्श-आदिभ्यः अच्; "प्लीहिनाम" इति पाठान्तरेऽपि स एवार्थः। तत्र रक्तस्रावणार्थम् उत्पादिते व्रणे। रुजापहं व्रणवेदनापहम् ॥ ५९ ॥

अथ शिखिवाडवः ।—

मारितं सूततानाभ्रं गन्धकं माक्षिकं समम् ।
मर्दयित्वाऽऽर्द्रकद्रावैर्यवक्षारयुतैर्दिनम् ॥ ६० ॥
त्रिगुञ्जं भक्षयेन्नित्यं नागवल्लीदलेन च ।
वातगुल्महरः ख्यातो रसोऽयं शिखिवाडवः ॥ ६१ ॥
विडङ्गं दाडिमं हिङ्गु सैन्धवैलासुवर्चलम् ।
मातुलुङ्गरसैः पिष्ट्वा कर्षकं सुरया सह ॥
वातगुल्महरं देयमनुपानं सुखावहम् ॥ ६२ ॥

अथ दीप्तामरः ।—

शुद्धं सूतं समं गन्धं सूतांशं मृतताम्रकम् ।
शाकवृक्षोत्थपञ्चाङ्ग-द्रवैर्मर्द्यं दिनत्रयम् ॥ ६३ ॥
दिनं मर्पाक्षिजैर्द्रावै रुद्ध्वा गजपुटे पचेत् ।
पञ्चधा भूधरे चाथ चूर्णं जैपालतुल्यकम् ॥ ६४ ॥
द्विगुञ्जं भक्षयेच्चाऽऽज्यैः पित्तगुल्मप्रशान्तये ।
द्राक्षाहरीतकीक्काथमनुपानं प्रकल्पयेत् ॥
रसो दीप्तामरो नाम पित्तगुल्मं नियच्छति ॥ ६५ ॥

---

शिखिवाडवे—मर्दयित्वाऽऽर्द्रकद्रावैर्यवक्षारयुतैर्दिनमित्यस्य आर्द्रकरसेन यवक्षारोदकेन च एकैकं दिनं मर्दयित्वा इत्यर्थः ; "यवक्षारयुतैः" इत्यत्र "यवक्षारयुतम" इति पाठे—यवक्षारयुतं सूतताम्राभ्रमिति योजनीयम् । "आर्द्रकद्रावैः" इत्यत्र "चित्रकद्रावैः" इति रसरत्नाकरे पाठः । अस्यानुपानमाह, विडङ्गमिति ।—सुवर्चलं सौवर्चललवणम् आदित्यभक्ता वा । रसेन्द्रसारेऽस्य "वडवानल" इति संज्ञा दृश्यते ॥ ६०—६२ ॥

दीप्तामरे—सूतांशं सूतभागं, तेन त्रयाणामपि समभागता ज्ञातव्या । शाकेति ।—शाकः सकलद्रुमविशेषः, "शेगुन" इति भाषा, तस्य पञ्चाङ्गद्रवैः त्वक्पत्रपुष्पफलमूलरसैः । मर्पाक्षी गन्धनाकुली, रास्नाभेदः । भूधरे भूधरयन्त्रे । चूर्णं जैपालतुल्यकमिति शोधितजयपालबीजचूर्णं प्रक्षेपधतुल्यम् । रसरत्नाकरेऽस्य "वह्न्यामरः" इति संज्ञा ॥ ६३—६५ ॥

अथ विद्याधरः।—

गन्धकं तालकं ताप्यं मृततास्रं मनःशिलाम्।
शुद्धं सूतञ्च तुल्यांशं मर्दयेद्भावयेद्दिनम्॥६६॥
पिप्पल्यास्तु कषायेण भावयेत् स्नुग्भवेन च।
निष्कार्द्धं भक्षयेत् क्षौद्रैर्गुल्मं प्लीहं विनाशयेत्॥
रसो विद्याधरो नाम गोमूत्रञ्च पिबेदनु॥ ६७॥

अथ व्योषादिचूर्णम्।—

तिलक्वाथो गुड़स्वाऽऽज्यं व्योषभार्गीरजोऽन्वितम्।
पानं रक्तभवे गुल्मे नष्टे पुष्पे तु योषितः॥ ६८॥

अथ देवदार्वादिचूर्णम्।—

देवदारु कणा भार्गी शुण्ठी करञ्जवल्कलम्।
चूर्णं तिलानां क्वाथेन रक्तगुल्महरं भवेत्॥ ६९॥

अथ रक्तोदरकुठारः।—

पारदं शिखितुल्यञ्च जैपालं पिप्पली समम्।
आरग्वधफलामज्जा वज्रोदुग्धेन भावयेत्॥७०॥
सूक्ष्ममात्रां वटीं खादेत् स्त्रीणां हन्याज्जलोदरम्।
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम्॥
रक्तोदरं हरेत् सैव कठिनं रेचयेदनु॥ ७१॥

विद्याधरे—"मृततास्रम्" इत्यत्र "स्वर्णम्" इति तथा "गोमूत्रम्" इत्यत्र "गोदुग्धम्" इति च रसेन्द्रसारसङ्ग्रहे पाठान्तरम्। शीतोत्तरोऽयं योगः॥ ६६।६७॥

व्योषादिचूर्णे—गुड़ादिकं प्रक्षेपविधया योज्यम्। "गुडस्वाज्यं व्योषभार्गीरजोऽन्वितम्" इत्यत्र "गुडव्योषहिङ्गुभार्गीयुतो भवेत्" इति चक्रसङ्ग्रहोक्तपाठान्तरम्॥६८॥

देवदार्वादिचूर्णे—सर्वं स्पष्टम्॥ ६९॥

रक्तोदरकुठारे—शिखितुल्यं मयूरग्रीवाभं तुत्थम्। "जैपालं पिप्पली समम्" इत्यत्र "जैपालं गन्धकं समम्" इति रसरत्नाकरे पाठः। वज्रोदुग्धेन स्नुहीक्षीरेण। "सूक्ष्ममात्रां वटीं खादेत् स्त्रीणां हन्यात् जलोदरम्" इत्यत्र "धात्रीफलरसैः खादेत् स्त्रीणां रक्तोदरं हरेत्" इति रसरत्नाकरोक्तः पाठः युक्तः, "स्त्रीणां हन्यात् जलोदरम्"

अथ वैश्वानररसः।—

विष्णुक्रान्ता च जैपालं लाङ्गली सुरदारिका।
यवचिञ्चाऽम्बुसारेण तासां द्विगुणगन्धकम् ॥७२॥
पक्वं विमर्दितं सूतं स्वेदयेन्मृदुनाऽग्निना।
गुल्मे गुञ्जात्रयञ्चास्य सोष्णाम्बुघृतसैन्धवम् ॥७३॥
वातजे कफजे लिह्यान्मध्वार्द्रकसमन्वितम्।
ससितामाक्षिकं पैत्ते सोऽयं वैश्वानरो रसः ॥ ७४ ॥

अथ अग्निकुमारः।—

नेपालवैगन्धरसत्रयाणां फलत्रयस्यापि कटुत्रयस्य।
मूत्रे गवां षोडशभागमाने भागात्रवैकत्र दिनत्रयञ्च ॥७५॥
विमर्द्य तेषां बदरप्रमाणां बद्ध्वा वटीमुष्णजलानुपानात्।
एकत्र युक्ता सहसा निहन्ति सा रेचयित्वा मलजालमादौ ॥७६॥
गुल्मं यकृत् पाण्डुविबन्धशूलं मान्द्यं ज्वरञ्चाथ जलोदरञ्च।
अग्नेः कुमारः सहसा निहन्यादुद्दीपितो दीप इवान्धकारम् ॥७७॥

---

इत्यस्य असङ्गतत्वात्। रक्तोदरं रक्तगुल्मम् इति यावत्। सा एव सा वटी एव। काठिन्यमिति रक्तोदरमित्यस्य विशेषणम्। रेचयेदनु इति वटीभक्षणात् पश्चात् रक्तं स्रावयेत् इत्यर्थः। "रेचयेदनु" इत्यत्र "लेपनेन तु" इति रसरत्नाकरोक्तपाठः सुगमः युक्तश्च। रसेन्द्रसारसङ्ग्रहे अस्य "उदरारिरसः" रसरत्नाकरे च "नाराचको रसः" इति संज्ञा ॥ ७०।७१ ॥

वैश्वानररसे—विष्णुक्रान्ता अपराजिता। सुरदारिका सूक्ष्मा। "सुरदारिका" इत्यत्र "सुरदालिका" इति पाठे—देवदालिका, पीतघोषक इत्यर्थः। यवचिञ्चाम्बुसारेण यवचिञ्चा चिरिञ्ची अस्याः अम्बुसारेण क्वाथोदकेनेत्यर्थः; यवचिञ्चा चीरिची अम्बु वालकं तयोः सारेण क्वाथेन इत्यर्थो वा, मर्दयेदिति शेषः। तासां विष्णुक्रान्तादीनां सुरदारिकान्तानां मिलितानामित्यर्थः। सूतमपि गन्धकतुल्यं ग्राह्यम्। अयमर्थः,—विष्णुक्रान्तादीनां द्विगुणेन गन्धकेन समं पारदं गृहीत्वा कज्जलीं कुर्यात्, ततः चूर्णसमूहं तत्र निक्षिप्य यवचिञ्चाक्वाथेन पक्वं विमर्द्य च लघुपुटे पचेत्। वातजे इति सोष्णाम्बुघृतसैन्धवमित्यनेन सम्बध्यते॥ ७२—७४ ॥

अग्निकुमारे—नेपालं ताम्रम्। वैगन्धः गन्धकः। षोडशभागमाने इत्येक-

अथ सर्वाङ्गसुन्दरः प्राणेश्वरो रसः।—

शुद्धमभ्रं रसं गन्धं मेलयित्वा समांशकम्।
तालमूलीरसैर्मर्द्यं कल्कं सम्पादयेच्छुभम् ॥७८॥
तत् कल्कं कूपिकामध्ये कृत्वा वक्त्रं निरुन्धयेत्।
खटिन्या मुखमाच्छाद्य मृदा खर्परसंज्ञया ॥७९॥
कूपिकां लेपयेत् सर्वां शोषयेदातपे खरे।
कूपिकां भूगतायाञ्च कृत्वा तां पुटयेत्ततः ॥८०॥
कूपिकां मर्दयेत् कृत्स्नां खटिन्या सह संयुताम्।
त्रिभिः क्षारैस्तु तच्चूर्णं पञ्चभिर्लवणैस्तथा ॥८१॥
त्र्यूषणं त्रिफला हिङ्गु पुरमिन्द्रयवास्तथा।
गुञ्जाकिनी तथा चित्रमजमोदा यमानिका ॥८२॥
एतानि समभागानि समादाय विचूर्णयेत्।
योजयेत् सह सूतेन ततः सिध्यति सूतकः ॥८३॥
सिद्धसूतस्य चूर्णेन माषं सर्वरुजापहम्।
भक्षयेत् प्रातरुत्थाय रसः सर्वाङ्गसुन्दरः ॥८४॥
उष्णोदकानुपानन्तु पाययेच्चुलुकद्वयम्।
भक्षयेदेकवारन्तु द्विवारं न कथञ्चन ॥८५॥

भागापेक्षया षोडशगुणगोमूत्रे। भागाम् नव इति नेपालादीनां कटुत्रयान्तानां नवानां प्रत्येकमेकैकभाग इत्यर्थः॥ ७५—७७॥

सर्वाङ्गसुन्दरप्राणेश्वरे—मृदा खर्परसंज्ञया कङ्करमृत्तिकया भग्नस्थाल्यादिचूर्णेन वा। "कूपिकां भूगतायाञ्च कृत्वा तां पुटयेत्ततः" इत्यत्र "कूपिकां भूगतां कृत्वा तां सम्यक् पुटयेत्ततः" इति पाठकल्पना समीचीना। पुरम् अगुरु गुग्गुलुर्वा। गुञ्जाकिनी गुञ्जा, तस्याः फलं ग्राह्यम्। अजमोदा यमानी, अन्तःपरिमार्जकत्वात्; बहिः-परिमार्जने तु अजमोदायाम् आरण्ययमानी गृह्यते इति वृद्धवैद्याः; तथा च—"अन्तःसम्मार्जने प्रायोऽजमोदा च यमानिका। बहिःसम्मार्जने ज्ञेया चाजमोदाऽजमोदिका॥" इति; एवञ्च यमान्याः भागद्वयम्। सिद्धसूतस्य सम्यक् पक्वस्य अस्य रसस्य इत्यर्थः। चूर्णेन क्षारादिचूर्णेन सह, सिद्धसूतस्य

दिनमध्ये वारमेकं दातव्यो भिषजा रसः ।
शीतोदकं सकृद्देयं दृढभावेऽप्यहर्निशम् ॥८६॥
भोजने वर्जयेत्तत्र शाकाम्लं द्विदलं तथा ।
तैलाभ्यङ्गं ब्रह्मचर्य्यं वर्जयेच्छयनं दिवा ॥८७॥
हितं तत् सेवयेत् पथ्यमहितञ्च विवर्जयेत् ।
अनेनैव प्रकारेण योजयेत् प्रतिवासरम् ॥८८॥
यस्त्वचेतनतां याति सन्निपातो कथञ्चन ।
तस्य नातिप्रयोक्तव्यो रसो यत्नाद्भिषग्वरैः ॥८९॥
देवाग्निऋषिविप्रांश्च कुमारीयोगिनीगणान् ।
पूजयित्वा यथाशक्त्या सेव्यः प्राणेश्वरो रसः ॥९०॥
गुल्मञ्चाष्टविधं वातं शूलञ्च परिणामजम् ।
सन्निपातज्वरञ्चैव प्लीहानमपकर्षति ॥९१॥
कामला पाण्डुरोगञ्च मन्दाग्निं ग्रहणीं तथा ।
शिववत् सेवितो हन्ति रसः प्राणेश्वरस्त्वयम् ॥९२॥

अथ गुल्मनाशनः ।—

गन्धकं रसतुल्यञ्च द्विभागं सैन्धवस्य च ।
त्रिभागं टङ्कणं प्रोक्तं चतुर्भागञ्च तुत्थकम् ॥९३॥

---

इति योजना । "चूर्णेन" इत्यत्र "पर्णेन" इति पाठः साधुः । माषं माषकमानम् । उष्णोदकानुपानमिति भक्षयेदित्यनेन सम्बध्यते, न तु पाययेदित्यनेन, तस्य च चुलुकद्वयमित्यनेन सम्बन्धः । कियन्मानमुष्णोदकमनुपिबेदित्याकाङ्क्षायामाह, पाययेत् चुलुकद्वयमिति ।—चुलुकद्वयं गण्डूषद्वयम् । शीतोदकमित्यादौ अहर्निशं सकृद्देयमिति योजना कार्य्या, दिवारात्रिमध्ये एकवारं शीतलजलमवश्यमेव दातव्यमित्यर्थः । ब्रह्मचर्य्यम् उपस्थनिग्रहं, प्रायेण सर्वत्रैव रोगे तस्य विहितत्वेऽपि योगप्रभावादत्र तस्य वर्जनीयता ज्ञातव्या । पथ्यं पादाहारं, मितमित्यर्थः, "पादाहारं पथ्यमाहुः" इति राजनिघण्टुस्मरणात् ; यद्धितं तत् पथ्यं सेवयेत् हितमपि न त्वमितं सेवेतेत्यर्थः । नातिप्रयोक्तव्यः 'अल्पमात्रया देय इत्यर्थः ; यद्वा—नातिप्रयोक्तव्यः नातिचिरेणैव प्रयोक्तव्यः इत्यर्थः ॥ ७८—९२ ॥

पञ्चमन्तु वराटं स्यात् षड्भागं शङ्खमेव च।
वह्निमूलकषायेण चिरविल्वरसेन च ॥९४॥
आर्द्रकस्य रसेनात्र प्रत्येकन्तु पुटत्रयम्।
तत्समं मारिचं चूर्णं शाणार्द्धं भक्षयेन्नरः॥
पञ्चगुल्मं क्षयं श्वासं मन्दाग्निञ्चाशु नाशयेत्॥ ९५॥

अथ शूलचिकित्सा।—

अथ अग्निमुखः।—

मृतसूताभ्रकं ताम्रं गन्धकञ्चाम्लवेतसम्।
विषं फलत्रयं तुल्यं सर्वं मर्द्यं दिनावधि ॥९६॥
विषमुष्टिर्जया वासा विजया रक्तशाकिनी।
बृहती च महाराष्ट्री धुस्तूरः पद्मपत्रकः॥९७॥
नागवल्ली शमी जम्बू भाव्यमेभिर्द्रवैस्त्र्यहम्।
समांशं पञ्चलवणं दत्त्वाऽऽर्द्रकरसेन च ॥९८॥

गुल्मनाशने—चिरविल्वरसेन करञ्जत्वग्रसेन। प्रत्येकन्तु पुटत्रयमिति प्रत्येकद्रवेण एकैकदिनं मर्दयित्वा पुटो दातव्यः एवं दिनत्रयं कार्य्यम्। तत्समिति।—तेन सिद्धेनौषधेन समं तुल्यं मरिचचूर्णं गृहीत्वा मिश्रयेत्, ततः अस्य शाणार्द्धं भक्षयेदित्यर्थः ॥ ९३—९५ ॥

कुक्षिगतात्वसाधर्म्यात् गुल्मानन्तरं शूलचिकित्सितं विवरीतुं प्रक्रमते ; तत्राग्निमुखे —विषमुष्टिः कुपीलुः, "कुचिला" इति ख्यातम्। जया जयन्ती। रक्तशाकिनी रक्ततण्डुलीयकः रक्तपुनर्नवा वा। महाराष्ट्री जलपिप्पली। भाव्यमेभिर्द्रवैस्त्र्यहमिति विषमुष्ट्यादीनां प्रत्येकं क्वाथेन स्वरसेन वा दिनत्रयं भावना दातव्या इत्यर्थः। "विषमुष्टिः" इत्यादि "जम्बू" इत्यन्तस्थले रसेन्द्रसारसङ्ग्रहे "कनकभुजगवल्ली-काकमाचीजयाग्निः। कमलसलिलवासा-मुष्टिवज्राम्बुपूरैः॥ अरुणसहदशपाकैर्मातुलुङ्गैश्च योज्यः" इति तथा रसरत्नाकरे "विषमुष्टितिका वासा विजया रक्तशालिनी। बृहती च महाराष्ट्री धुस्तूरं पद्मपत्रकम्॥ यस्यावस्थान्तरा जम्बुर्भव्यं नीलोत्पलद्रवैः" इति पाठः। समांशमिति।—भावनानन्तरं मिलितपञ्चलवणं सर्वचूर्णसमं दत्त्वा

दिनं पेष्यं ततः कुर्याद्वटिकाश्चणमात्रकाः ।
भक्षयेद्वातशूलार्त्तः सोऽयमग्निमुखो रसः ॥९९॥
हरीतकी प्रतिविषा हिङ्गु सौवर्चलं वचा ।
कलिङ्गेन्द्रयवास्तुल्यं पाययेदुष्णवारिणा ॥
कर्षैकमनुपानं स्याद्वातशूलहरं परम् ॥१००॥

अथ क्षारप्रयोगः ।—

चिञ्चाक्षारं जलैः पीतं शूलं शान्तिमवाप्नुयात् ॥ १०१ ॥

अथ त्रिनेत्रः ।—

खण्डितं ह्वारिणं शृङ्गं स्वर्णं शुल्वं मृतं रसम् ।
दिनैकञ्चाऽऽर्द्रकद्रावैर्मर्द्यं कृत्वा पचेत् पुटे ॥१०२॥
त्रिनेत्राख्यो रसः सोऽयं माषं मध्वाज्यकैर्लिहेत् ।
सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु ॥
पक्तिशूलहरं ख्यातं मासमात्रान्न संशयः ॥१०३॥

अथ सौभाग्ययोगः ।—

टङ्कणं मूर्च्छितं सूतं यवक्षारं समं समम् ।
चूर्णितं भक्षयेन्माषं मधुना पक्तिशूलनुत् ॥
जम्बूमांसाज्ययोर्यूषमनुपानं पिबेत् सदा ॥१०४॥

---

दिनं यावत् आर्द्रकरसेन मर्दयेत् इति । प्रतिविषा अतिविषा । अग्निमुखरसस्य अनुपानत्वेन कल्पनीयोऽयं योगः ॥ ९९—१०० ॥

क्षारप्रयोगे—चिञ्चाक्षारं तिन्तिडीत्वक्कृतं क्षारम् ॥ १०१ ॥

त्रिनेत्रे—खण्डितं त्रुटितम्, अणूकृतमित्यर्थः; "खण्डितम्" इत्यत्र "टङ्कणम्" इति रसेन्द्रसारसङ्ग्रहे रसरत्नाकरे च पाठः । मृतं रसं रससिन्दूरः । "शुल्वम्" इत्यत्र "गन्धः" इति रसेन्द्रसारसङ्ग्रहे तथा "शुद्धम्" इति च रसरत्नाकरे पाठः । रसेन्द्रेऽस्य "त्रिगुणाख्यो रसः" इति संज्ञान्तरम् ॥ १०२।१०३ ॥

सौभाग्ययोगे—मूर्च्छितं सूतं रससिन्दूरः । जम्बूमांसाज्ययोः यूषं शृगाल-मांसच्छागमांसयोः रसम् । अजाया इदमिति आज्यं छागमांसम् ॥ १०४ ॥

अथ चिन्तामणिः।—

सूतेन गन्धं द्विगुणं विमर्द्य कोरण्टनिम्बूत्थरसैर्दिनं तत्।
चिञ्चाङ्गवच्छिन्नरसेन चैकं दिनञ्च गोलं रविसम्पुटस्थम्॥१०५॥
लिप्त्वा मृदा शुष्कमतीव कृत्वा सामुद्रयन्त्रेण पुटं ददीत।
उद्धृत्य शीतं रसपादभागं प्रक्षिप्य गन्धं विपचेन्मनाक् च॥१०६॥
विषञ्च दत्त्वा रसपादभागं लौहस्य पात्रे तु कषायतोयैः।
रसस्तु चिन्तामणिरेष उक्तो वातारितैलेन समाप्लिकेण॥१०७॥
वल्लेन मानं प्रददीत चाम्लं तैलञ्च शीतं परिवर्जयेच्च॥१०८॥
हन्ति गुल्मं महाध्मानं तूनीं प्रतितूनीमपि॥१०९॥

अथ शूलकेशरी।—

शुद्धं सूतं द्विधा गन्धं यामैकं मर्दयेद्दृढम्।
द्वयोस्तुल्यं शुद्धताम्रं सम्पुटे तन्निरोधयेत्॥११०॥
ऊर्द्धाधो लवणं दत्त्वा मृद्भाण्डे धारयेद्भिषक्।
रुद्ध्वा गजपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत्॥१११॥
सम्पुटं चूर्णयेत् सूक्ष्मं पर्णखण्डे द्विगुञ्जकम्।
भक्षयेत् सर्वशूलार्त्तो हिङ्गु शुण्ठी च जीरकम्॥११२॥
वचामरिचसञ्चूर्णं कर्षमुष्णजलैः पिबेत्।
असाध्यं नाशयेच्छूलं रसः स्याच्छूलकेसरी॥११३॥

चिन्तामणौ—कोरण्टनिम्बूत्थरसैः कोरण्टः बदरं, कोरण्टरसेन निम्बुकरसेन च। चिञ्चाङ्गवच्छिन्नरसेन तिन्तिडीत्वग्रसेन। रविसम्पुटस्थं ताम्रपात्रनिहितम्। सामुद्रयन्त्रेण यन्त्रविशेषेण, तदभावे लवणयन्त्रेणापि पाकमर्हत्ययं रसः, तत्र ताम्रपात्रान्तः रसादिकं संस्थाप्य पुटनोपदेशात्। कषायतोयैः मनाक् विपचेत् इति सम्बन्धः, कषायतोयैः त्रिफलाक्वाथैः। तूनीप्रतितून्यौ वातव्याधिकथिते। प्रतितूनीमित्यत्र छन्दोभङ्गश्छान्दसः॥ १०५—१०९॥

शूलकेशरीति—सम्पुटे इति ताम्रसम्पुटे, पूर्वयोगसंवादात्। अत्र हिङ्ग्वादिकमनुपेयम्॥ ११०—११३॥

अथ वन्ध्यादिचारः ।—

वन्ध्यालाङ्गलिकामूलं शङ्खन्तु द्विगुणं तयोः ।
त्रयाणां भावयेच्चूर्णं त्र्यहं जम्बीरजद्रवैः ॥११४॥
कृत्वा गजपुटे पश्चात् तत् चारं मरिचैर्घृतैः ।
कर्षमात्रं पिबेच्छूली तत्क्षणात् सुखमाप्नुयात् ॥११५॥

अथ मृतोत्थापनः ।—

अभ्रं ताम्रं तथा लौहं प्रत्येकं संस्कृतं पलम् ।
सर्वमेतत् समाहृत्य गृह्णीयात् कुशलो भिषक् ॥११६॥
आज्ये पलद्वादशके दुग्धे तत्स्वरसङ्ख्यके ।
पक्त्वा तत्र चिपेच्चूर्णं सुपूतं घनतन्तुना ॥११७॥
विडङ्गत्रिफलावह्नि-त्रिकटूनां तथैव च ।
पिष्ट्वा पलोन्मितानेतान् यथा सम्मिश्रतां नयेत् ॥११८॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेत्तद्विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा गुरुं रविम् ॥११९॥

---

वन्ध्यादिचारे—वन्ध्या वन्ध्याकर्कोटकी, तस्याः मूलम् ॥ ११४।११५ ॥

मृतोत्थापने—संस्कृतं मारणपुटनादिभिः कृतसंस्कारम् । "अभ्रं ताम्रं तथा लौहम्" इत्यत्र रसेन्द्रचिन्तामणिरसरत्नाकरकृद्भ्याम् "अभ्रं ताम्रं रसं लौहम्" इति पठित्वा योगस्यास्य चतुःसमलौहम् इति संज्ञा कृता। रसेन्द्रसारव्याख्याकारस्तु "अभ्रं ताम्रं रसं गन्धं लौहं प्रत्येकशः पलम्" इति रामसेनधृतपाठमङ्गीकृत्य तत्कृतं व्याख्यानमेव "अप्रतिषिद्धं परमतमनुमतमेव" इति न्यायात् स्वीकृतवान्, तत्र खलु एषा व्याख्या यत् "अभ्रादिगन्धान्तानां लिखितानां चतुर्णां द्रव्याणां तुल्यं लौहं गृह्णाति, अतस्तस्य चतुःसमलौहमिति संज्ञा इति वदति" इति । एतत्तु न मनोरमं, यतः प्रत्येकशः पलम् इति अन्त्यस्थितेन प्रत्येकशः इति पदेन पञ्चानामेव पलमानता स्वीकर्तव्या, न तु लौहस्य सर्वतुल्यमानता इति। दुग्धे तत्स्वरसङ्ख्यके तच्छब्दसङ्ख्यकमाने, पलद्वादशमाने इत्यर्थः ; "दुग्धे वत्सरसङ्ख्यके" इति रसेन्द्रसारसङ्ग्रह-रसेन्द्रचिन्तामणिसंवादात्, "दुग्धेऽपि घृतसङ्ख्यके" इति रसरत्नाकरदर्शनाच्च । घनतन्तुना सूक्ष्मवस्त्रेण । पलोन्मितानिति विडङ्गादीनां लिखित्वा पलमानत्वं द्रव्यप्रधाननिर्देशात्

घृतेन मधुना सार्द्धं पाययेन्माषकादिकम्।
अष्टौ माषान् क्रमेणैव वर्द्धयेत्तत् समाहितः॥१२०॥
अनुपानञ्च दुग्धेन नारिकेलोदकेन वा।
जीर्णे शर्करशाल्यन्न-मुद्गमांसरसादयः॥१२१॥
रसपानाविरुद्धानि द्रव्याण्यन्यानि योजयेत्।
हृच्छूलं पार्श्वशूलञ्च आमवातं कटिग्रहम्॥१२२॥
गुल्मशूलं शिरःशूलं यकृत्प्लीहानमेषतः।
अग्निमान्द्यं क्षयं कुष्ठं कासं श्वासं विचर्चिकाम्॥
अश्मरीं मूत्रकृच्छ्रञ्च योगेनानेन साधयेत्॥१२३॥

अथ क्षारताम्रम्।—

रसेन ताम्रस्य दलानि लिप्त्वा गन्धेन ताम्रं द्विगुणेन पश्चात्।
वस्त्रेण बद्धाऽथ समुद्रजेन क्षारत्रयेणापि च वेष्टयित्वा॥१२४॥
मृदा च संलिप्य पुटं ददीत दलानि ताम्रस्य विचूर्णयेत।
धुस्तूरचित्रार्द्र-कटुत्रयैश्च विमर्दयेत्तत् त्रिदिनप्रमाणम्॥१२५॥
कलाप्रमाणेन विषञ्च दत्त्वा वल्लं ददीतास्य च वातशूले॥१२६॥

"विडङ्गादीनामष्टानां मिलित्वा पलमानत्वम्" इति विविक्तसंवादाश्च। आत्मनः शोभने चाह्नि स्वस्य शोभनचन्द्रताराादिसमन्विते दिवसे। पाययेदिति।—प्रथमेऽह्नि माषमितं भक्षयित्वा क्रमशः मात्रावृद्धिं कृत्वा अष्टौ माषकान् यावत् वर्द्धयेत्। "शर्करशाल्यन्न" इत्यत्र "लोहितशाल्यन्न" इति रसेन्द्रसारसङ्ग्रह-रसरत्नाकरादौ पाठान्तरम्। रसपानाविरुद्धानि रसप्रयोगे अनिषिद्धानि॥ ११६—१२३॥

क्षारताम्रे—समुद्रजेन सामुद्रलवणेन। क्षारत्रयेण स्वर्जिकायावशूकटङ्कणेन। कलाप्रमाणेन ताम्रापेक्षया षोडशांशेन। आदौ द्विगुणेन गन्धेन पारदं कज्जलीकृत्य पश्चात् तया सूक्ष्माण्यपि ताम्रपत्राणि लिम्पेत्. तानि च ताम्रदलानि समुद्रजादिना आलिप्य वस्त्रखण्डेन बध्नीयात्, ततस्तदुपरि मृदा आलिप्य पुटेत्; अथ तानि ताम्रदलानि विचूर्ण्य धुस्तूरादीनां प्रत्येकद्रवेण त्रिदिनं मर्दयित्वा तत्र ताम्रषोडशांशं विषं मिश्रयेदिति॥ १२४—१२६॥

अथ शूलान्तकः ।—

भस्मसूतस्य खस्यापि पलमेकं पृथक् पृथक् ।
ताम्रभस्मपले तु द्वे गन्धकस्य पलत्रयम् ॥१२७॥
हरितालस्य कर्षांशं विमलं हेममाक्षिकम् ।
पलार्द्धं हलिनीकन्दं नागवल्ली पलार्द्धकौ ॥१२८॥
चतुष्पलन्तु त्रिवृतमेतत् सर्वं विचूर्णयेत् ।
भूधात्रीस्वरसेनैव भावयेत् सप्तधा भिषक् ॥१२९॥
तथा दन्तीरसैर्वल्लं दद्यादार्द्रकवारिणा ।
तेन कोष्ठे विशुद्धे तु दधिभक्तन्तु भोजयेत् ॥
हरेच्छूलानि सर्वाणि रसः शूलान्तको मतः ॥१३०॥

अथ द्वितीयोऽग्निमुखः ।—

पारदं माक्षिकं ताम्रं कृष्णाभ्रं गन्धकत्रयम् ।
माणिमन्थं विषं हिङ्गु त्वग्निशाकन्धकाञ्चनान् ॥१३१॥
रक्तमारीषनिर्गुण्डी-महाराष्ट्राटरूषकम् ।
जयाजयन्तीनिर्य्यासैस्तथा च विषतिन्दुकान् ॥१३२॥
मर्द्दितं कुक्कुटपुटे पचेदग्निमुखाह्वयः ।
अष्टगुञ्जामितः सोऽयं प्रयोज्यः साज्यनागरः ॥
हिङ्गुसौवर्चलोष्णाम्बु-युतो वा गुल्मशूलजित् ॥१३३॥

शूलान्तके—भस्मसूतस्य रससिन्दूरस्य । खस्य अभ्रभस्मनः । विमलं रौप्यमाक्षिकं, विमल-हेममाक्षिकयोरपि प्रत्येकं कर्षांशः ग्राह्यः । हलिनीकन्दं लाङ्गलीमूलम । नागवल्ली पलार्द्धकौ इति प्रत्येकम् । भूधात्री तामलकी ॥ १२७—१३० ॥

द्वितीयाग्निमुखे—गन्धकत्रयं गन्धकस्य त्रयो भागा इत्यर्थः ; श्वेतरक्तपीतभेदेन त्रिविधगन्धकमित्यर्थो वा । "गन्धकत्रयम" इत्यत्र "गन्धकं समम्" इति पाठः युक्तः, समानतन्त्रे एतत्सदृशयोगान्तरदर्शनात् । माणिमन्थं सैन्धवम । अग्निः चित्रकः शाकन्धः शूरणविशेषः काञ्चनः धत्तूरः तान् । "त्वग्निशाकन्धकाञ्चनान्" इत्यत्र "त्वङ्गिशाकन्द-काञ्चनान्" इति पाठकल्पना साधीयसी स्वर्थ्या च । "त्वग्निशाकाम्लकाञ्चनान्" इति कस्यचित् पाठः । रक्तमारीषः रक्ततण्डुलीयः । महाराष्ट्री जलपिप्पली । जया विजया । विषतिन्दुकान् कुचेलकान् । पारदादीनां विषतिन्दुकान्तानां प्रत्येकमेको

अथ द्वितीयत्रिनेत्रः।—

रसताम्रगन्धकानां त्रिगुणोत्तरवर्द्धितांशानाम्।
अम्लेन मर्दितानां पुटपक्वानां निषेवितं भस्म॥१३४॥
गुञ्जाप्रमाणमार्द्रक-सिन्धूत्थचूर्णसंयुक्तम्।
एरण्डतैलमाक्षिकमथ वा पटुहिङ्गुजीरकोपेतम्॥१३५॥
शमयति शूलमशेषं तत्तद्रसभावितं बहुशः।
उपचूर्णैरनुपानैस्तैस्तैः सहितं कफानिलार्त्तिहरम्॥१३६॥
एतच्च हरिणशृङ्ग-मृतकाञ्चनटङ्कणोपेतम्।
सघृतमधु पक्तिशूलं शमयति शूलं त्रिनेत्ररसः॥१३७॥

अथ उदयभास्करः।—

तोलतुल्यं रसं शुद्धं गन्धकं तच्चतुर्गुणम्।
विधाय कज्जलीं श्लक्ष्णां ततो निम्बुकवारिणा॥१३८॥
कल्कं कुर्वीत संखल्ले यावद्यामचतुष्टयम्।
द्वितोलमथ ताम्रस्य तनुपत्राणि सर्वशः॥१३९॥
कल्केन तेन निम्बूक-रसेनाप्लाव्य खल्लके।
स्थापयेदातपे तोल्ले पिण्डीकृत्य ततः परम्॥१४०॥
मूषामध्ये निरुध्याथ कुक्कुटाख्यैस्त्रिभिः पुटैः।
पचेच्चुल्ल्यां विनिक्षिप्य चुल्लीपरिमितोपलैः॥१४१॥

भागः, गन्धकस्य च भागत्रयम् एकत्र सम्मर्द्य जयाजयन्त्योः रसेन एकैकदिनं मर्दयित्वा कुक्कुटपुटे पचेत्॥१३१—१३३॥

द्वितीयत्रिनेत्रे—त्रिगुणोत्तरवर्द्धितांशानाम् उत्तरोत्तरत्रिगुणवृद्धांशानाम्; तेन रसस्य एको भागः ताम्रस्य भागत्रयं गन्धकस्य च नव भागा ग्राह्याः। अम्लेन काञ्जिकेन। पटु लवणं, शूलहरत्वात् सौवर्चलमेवात्र ग्राह्यम्। तत्तदिति।—कफवातनाशनद्रव्याणां रसैः सप्तवारं भावितं रसादिभस्म सुचूर्णिततत्तद्द्रव्यानुपानैः सह प्रयुक्तं कफवातजगदापहं भवेत्। एतत् त्रिनेत्रम्। पक्तिशूलं परिणामशूलम्॥१३४—१३७॥

उदयभास्करे—कल्कमिति।—यावद्यामचतुष्टयं प्रहरचतुष्टयं यावत् निम्बुकरसेन मर्दयित्वा कल्कं कुर्यात्। तेन कल्केन निम्बुकरसपिष्टकज्जलीकल्केन।

तत आकृष्य सम्मर्द्य करण्डे तं विनिक्षिपेत् ।
रसोऽयं सर्वरोगघ्नो नृणामुदयभास्करः ॥१४२॥
हन्ति शूलानि सर्वाणि तमांसीव दिवाकरः ।
पर्णखण्डिकया सार्द्धं देयश्चेत्यपरे जगुः ॥
पथ्यं रोगोचितं देयं रसस्यानुचितं त्यजेत् ॥१४३॥

अथ शूलगजकेशरी ।—

पलप्रमाणसूतेन बलिना द्विगुणेन च ।
शुद्धत्रिपलतालेन कृत्वा कज्जलिकां त्र्यहम् ॥१४४॥
पलमानेन कर्त्तव्यः शुद्धताम्रस्य सम्पुटः ।
पिधानपात्रसङ्क्लृप्त-तलपात्रास्यवान् खलु ॥१४५॥
कज्जलीं सम्पुटस्यान्तर्निदध्यात्तदनन्तरम् ।
अधस्तादुपरिष्टाच्च सम्पुटस्य क्षिपेत् खलु ॥१४६॥
आकण्ठं पटुचूर्णं तं पिधाय च निरुध्य च ।
विशोष्य गजसञ्ज्ञेन पुटेन पुटयेत्ततः ॥१४७॥
पटचूर्णं विधायाथ सिन्धुमध्ये विनिक्षिपेत् ।
पथ्याऽऽर्द्रकरसोपेतो वल्लमानेन सेवितः ॥
रसो निःशेषशूलघ्नः स्याच्छूलगजकेशरी ॥ १४८ ॥

चुल्लीपरिमितोपलैः यावता उपलेन चुल्ली परिपूर्णा भवेत्, तावता उपलेन पचेदित्यर्थः ॥ १३८—१४३ ॥

शूलगजकेशरिणि—बलिना गन्धकेन । पिधानेति ।—पिधानपात्रेण आच्छादनपात्रेण, सङ्क्लृप्तं संयुक्तमित्यर्थः, तलपात्रम् अधःस्थभाजनम्, आधारभूतपात्रमित्यर्थः, यस्य तत्, तच्च तत् आस्यवच्चेति विग्रहः, आस्यवान् मुखवान्, उपरि छिद्रविशिष्टसम्पुट इत्यर्थः ; पलमानताम्रेण एवं सम्पुटं कुर्यात्, यस्य उपरि द्वारं स्यात् इति । गजसञ्ज्ञेन पुटेन गजपुटेन । पटचूर्णं वस्त्रपूतं चूर्णमित्यर्थः ; "पटुचूर्णम्" इति पाठे—श्लक्ष्णचूर्णमित्यर्थः । सिन्धुमध्ये सैन्धवाभ्यन्तरे, तच्च शलाकात्वार्थे कर्त्तव्यम् । अथ विधिः,—सूतादित्रयं कज्जलीकृत्य साच्छिद्रताम्रपुटाभ्यन्तरे निधाय च तच्छिद्रं निरुन्ध्यात्, ततः स्थाल्यां तं पुटं निधाय पुटस्य उपर्यधः लवणं निदध्यात्, अधः

अथ द्वितीयक्षारताम्रम्।—

पलमितमृतशुल्वं तन्मितं गन्धचूर्णं
वसुमितपलमानं तिन्तिड़ीक्षारचूर्णम्।
त्रयमिदमभिदिष्टं क्षारताम्राख्यमेत-
द्धरति सकलशूलं पीतमुष्णोदकेन ॥ १४९ ॥

अथ ताम्राष्टकम्।—

हिङ्गु व्योषं मधुकरुचकं तिन्तिड़ीक्षारताम्रं
सर्वञ्चैतन्मसृणमृदितं पीतमुष्णोदकेन।
क्षिप्रं शूलं क्षपयति नृणां तीव्रपीडासमेतं
ध्वान्तं भानोरिव समुदयः साधु ताम्राष्टकं हि ॥१५०॥

अथ वड़वानलगुटिका।—

तालं ताप्यं कनककुनटी-कान्तगन्धार्कसूतै-
स्तुल्यांशैस्तैरुरणमधुरं दीप्यकं सर्वतुल्यम्।

शरावेण स्थालीमुखं पिधाय मृद्वस्त्रेणालिप्य च गजपुटं दद्यात्। अनन्तरं स्वाङ्गशीतं समुद्धृत्य ताम्रपुटसहितमौषधं चूर्णयित्वा कूपिकायां संस्थाप्य च सैन्धवचूर्णमध्ये स्थापयेदिति ॥१४४—१४८॥

द्वितीयक्षारताम्रे—वसुमितपलमानम् अष्टपलमानम्। तिन्तिड़ीक्षारचूर्णं तिन्तिडी-त्वक्क्षारम् ॥ १४९ ॥

ताम्राष्टके—मधुकरुचकं मधुकेन यष्टिमधुना सह रुचकं सौवर्चललवणम्। मसृणमृदितं श्लक्ष्णपिष्टम्। ध्वान्तमिति।—भानोः सूर्य्यस्य समुदयः प्रकाशः ध्वान्तं तिमिरमिवेति योजना ॥ १५० ॥

वड़वानलगुटिकायां—कुनटी मनःशिला। तुल्यांशैरिति कनकादिभिः सम्बध्यते। अत्र तालताप्ययोः पृथङ्निर्देशेऽपि कनकादीकभागसमता बोद्धव्या विशेषानिर्देशात्। तैः कनकादिभिः सूतान्तैः, न तु तालादिभिः, तालताप्ययोर-समासनिर्देशात्, उरणमधुरं, तुल्यमिति शेषः; उरणम् उरणमूला विरन, मधुरं मधुरिका, उरणेन सह मधुरमिति विग्रहः; तेन च उरणमधुरयोर्मिलितयोः कनकादितुल्यता। दीप्यकं सर्वतुल्यमिति तालादिमधुरान्तानां चूर्णानां तुल्यं

एतैः सर्वैस्त्रिकटु च समं कज्जलीकृत्य सर्वं
हिङ्ग्वम्भोभिर्मुनिमितदिनैर्भावयेत् मस्रकल्वः ॥१५१॥

जयन्त्याः काकमाच्याश्च निर्गुण्ड्याश्चाऽऽर्द्रकस्य च।
स्वरसैर्भावयेत् पिष्ट्वा सकृदेव दिने दिने ॥
कर्त्तव्या मरिचैस्तुल्याश्छायाशुष्काश्च गोलिकाः ॥१५२॥

हन्त्येषा बड़वानलाख्यगुटिका संसेवितोष्णाम्बुना
सर्वं शूलगदं क्रमिश्च सकलं वैषम्यवृत्तिं क्षुधः।
मन्दाग्निं ग्रहणीगदं श्वयथुरुक्पाण्डुञ्च गुल्मार्शसी
वातश्लेष्मगदं तथोदररुजं श्वासञ्च कासं ज्वरम् ॥१५३॥

अथ अग्निकुमारः।—

रसगन्धकयोः कृत्वा कज्जलीं तुल्यभागयोः।
पादांशममृतं दत्त्वा शुक्तिभस्म कलांशकम् ॥१५४॥
हंसपादीरसैः सम्यङ्मर्दयित्वा दिनत्रयम्।
स्थूलगोलं ततः कृत्वा परिशोष्य खरातपे ॥१५५॥
निरुध्य वालुकायन्त्रे क्रमपुष्टेन वह्निना।
पचेदेकमहोरात्रं स्वतः शीतं विचूर्ण्य च ॥१५६॥
तुल्यांशममृतं दत्त्वा मर्दयेदार्द्रकद्रवैः।
विलिप्य स्थालिकामध्ये ततोऽन्यस्थालिकोदरे ॥१५७॥
पलार्द्धममृतं क्षिप्त्वा रसस्थालीञ्च तन्मुखे।
न्युब्जां दत्त्वा दृढं रुद्ध्वा चुल्लयामारोप्य यत्नतः ॥१५८॥

---

यमानीचूर्णम्। एतैः सर्वैः त्रिकटु च सममिति मिलितत्रिकटुचूर्णं सर्वचूर्णसमानम्। कज्जलीकृत्य इत्यत्र कज्जलीशब्दः सुष्ठु मर्दनस्योपलक्षणं, कज्जली यथा दृढं मर्दयित्वा क्रियते, तथा सम्मर्द्य इत्यर्थः, अथवा—योगेऽस्मिन् सूतगन्धकसद्भावात् कज्जलीकृत्येति पदम्। हिङ्ग्वम्भोभिः हिङ्गुनः शीतकषायैः फाण्टकषायैर्वा। मुनिमितदिनैः सप्तभिर्दिनैः ॥ १५१—१५२ ॥

अग्निकुमारे—पादांशममृतमिति कज्जलीभागमपेक्ष्य विषस्य तुर्यांशम्। एवं

यामं प्रज्वालयेदग्निं विचूर्ण्य तदनन्तरम्।
करण्डके विनिक्षिप्य स्थापयेदतियत्नतः॥
रसो ह्यग्निकुमाराख्यो दिष्टो मन्थानभैरवैः॥१५९॥

हन्यादत्यग्निमान्द्यं ज्वरहरमखिलं वातजातं क्षयार्त्तिं
शोफाढ्यं पाण्डुरोगं कफजनितगदान् प्लीहगुल्मं गुदार्त्तिम्।
सर्वाङ्गोत्थञ्च शूलं जठरभवरुजं खञ्जतां पङ्गुलत्वं
सर्वांश्चासाध्यरोगान् हरिरिव दुरितं रक्तगुल्मं वधूनाम्॥१६०॥

अथ शम्बूकादिलौहम्।—

शम्बूकं त्र्यूषणं पञ्च लवणानि मृतायसम्।
समांशं पेषयेन्मूत्रैः कृष्णाजस्य दिनावधि॥
भक्षयेत् कर्षमात्रन्तु परिणामाख्यशूलनुत्॥१६१॥

अथेन्द्रवारुणिकादिचूर्णम्।—

इन्द्रवारुणिकामूलं कटुत्रयसमायुतम्।
पिबेदुष्णाम्बुना हन्ति शूलमत्यन्तदुःसहम्॥१६२॥

अथ भूदार्वादियोगः।—

भूदारुवटमूलञ्च शूलजित् सोष्णवारिणा॥१६३॥

अथ सद्यःशूलहरो योगः।—

सद्योभवं हरेच्छूलं लवणं वाऽऽरनालकैः॥१६४॥

---

कलांशकमपि कज्जलीभागापेक्षया षोडशांशम्। हंसपादी मण्डूकपर्णी। क्रमपुष्टेन क्रमवर्द्धितेन। रसस्याग्नेम् औषधलिप्तभाण्डम्। न्युब्जाम् अधोमुखीम्॥१५४—१६०॥

शम्बूकादिलौहे—शम्बूकं शम्बूकभस्म। कृष्णाजस्य कृष्णवर्णच्छागस्य। "कृष्णाजस्य" इत्यत्र "कृष्णाजाया:" इत्येव युक्तः पाठः, गोऽजादीनां स्त्रीणामेव मूत्रस्य ग्रहणानुशासनात्॥१६१॥

इन्द्रवारुणिकादिचूर्णे—इन्द्रवारुणिकादीनां चतुर्णां समत्वम्॥१६२॥

भूदार्वादियोगे—भूदारु काष्ठदारु, देवदारुभेद इति यावत्, "भूदारु" इत्यत्र "भूदार" इति पाठे—भूदारः भूमिस्फोटः भुवं दारयति इति विग्रहे भूच्छत्राक इत्यर्थः॥१६३॥

सद्यःशूलहरयोगे—लवणं सैन्धवं सौवर्चलं वा॥१६४॥

अथ सद्यःशूलहरयोगद्वयम् ।—

घृतेन सैन्धवं वाऽथ उष्णतोयैः सुवर्चलम् ॥ १६५॥

अथ क्षारवटी ।—

अमृतं हेमभस्माथ शङ्खं चिञ्चा सुभास्करम् ।
क्रमाद्द्विगुणितं कृत्वा तत्तुल्यञ्च कटुत्रिकम् ॥१६६॥
तुलसी भृङ्गराजश्च मातुलुङ्गार्द्रकद्रवैः ।
भावितं बहुशश्चूर्णं रजो वा गुलिकाऽपि वा ॥१६७॥
गुञ्जामात्रन्तु सेवेत गुल्माष्ठीलां विनाशयेत् ।
मन्दाग्निं ग्रहणीमर्शो शूलरोगमरोचकम् ॥
एषा क्षारवटी नाम कृशदेहेषु युज्यते ॥१६८॥

---

सद्यःशूलहरयोगद्वये—घृतेन इत्यादिना एकः उष्णतोयैरित्यादिना च द्वितीयो योगः। क्वचिदेतच्छ्लोकानन्तरं "नागं वङ्गं सुताम्रं दरदमनःशिला तुल्यतार्प्याभगन्धं भस्म स्वर्णेन तुल्यं रसकमपि रजिचीरघृष्ट सुगोलम् । कृत्वा पक्वा च यन्त्रे लवणविरचिते भावयेदार्द्रकाभिर्वारान् सप्त द्विवल्लं समधुमगधया योजितः सेवनीयः ॥ कार्श्ये शूलेऽग्निमान्द्ये विविधसमुचितैरौषधैः सन्निपाते हृद्रोगे गुल्मसेहे कफपवनभवे सर्ववातज्वरेऽपि । देयो युक्त्या रसेन्द्रस्त्रिभुवनविदितो भोगिलोके प्रसिद्धो नागानां वल्लभो यो गरगदगलना-रक्तपित्तप्रहन्ता ॥ इति नागवल्लभो रसः। अथ द्वितीयः,—नागं सुवङ्गं रसभस्म ताम्रं सारं शिलाहिङ्गुलमाक्षिकञ्च । घनं सुगन्धं मृतहेम खर्परं सर्वं समं खल्लतले विघृष्टम् ॥ अर्केण ताम्रेण विधाय गोलं मृत्स्नांशुकैः सप्तमितैः सुघर्मे। भाण्डे त्रिभागलवणोपरि सन्निवेश्य सम्पूर्णयेच्च लवणेन निरुध्य यत्नात् ॥ सिद्धं भवेत् भानुमितैस्तु यामकैश्चुल्लीपरिस्थं मृदुमध्यतीव्रकैः। शीतं समाकृष्य विचूर्ण्य सप्तधा चण्डांशुसंशोषितशृङ्गवेरकैः। नागवल्लभरसो द्विवल्लको मागधीमधुयुतश्च सर्वजित् ॥ इति द्वितीयो नागवल्लभरसः।" इत्यधिकः पाठो दृश्यते ॥ १६५ ॥

क्षारवट्यां—चिञ्चा तिन्तिडीत्वग्भस्म। सुभास्करं प्रशस्तताम्रं, तच्च मारितपुटितं ग्राह्यम्। तत्तुल्यञ्च कटुत्रिकं सर्वचूर्णसमान त्रिकटुचूर्णं ग्राह्यम्। भावितं बहुशश्चूर्णमिति तुलस्यादीनां प्रत्येकद्रवेण सप्तवारान् भावितम् ॥१६६—१६८॥

अथ कार्श्यचिकित्सा।—

अथामृतार्णवः।—

रसभस्म त्रयो भागा भागैकं हेमभस्मकम्।
सर्वांशममृतासत्त्वं सितामध्वाज्यमिश्रितम् ॥१६९॥
दिनैकं मर्दयेत् खल्ले माषैकं भक्षयेत् सदा।
कृशानां कुरुते पुष्टिं रसोऽयममृतार्णवः॥
अश्वगन्धापलार्द्धञ्च गवां क्षीरैः पिबेदनु ॥१७०॥

अथ पूर्णचन्द्रः।—

मृतसूताभ्रलोहं वै शिलाजतु विडङ्गकम्।
ताप्यं क्षौद्रं घृतं तुल्यमेकीकृत्य विमर्दयेत् ॥१७१॥
पूर्णचन्द्ररसो नाम्ना माषैकं भक्षयेत् सदा।
शाल्मलीपुष्पचूर्णञ्च क्षौद्रैः कर्षं पिबेदनु ॥१७२॥
दुर्बलो बलमाप्नोति मासैकेन यथा शशी।
कृशानां बृंहणं देयं सर्वं पानान्नभेषजम्॥
निद्रा चैव दिवा रात्रौ छागमांसाशनं तथा ॥१७३॥

अथ स्थौल्यचिकित्सा।—

अथ वड़वाग्निमुखः।—

शुद्धसूतं मृतं ताम्रं तालं बोलं समं समम्।
अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रैर्लेह्यं द्विगुञ्जकम् ॥१७४॥

रुक्षान्नपानादिनिदानसाधर्म्यात् वातजन्यत्वसाधर्म्याच्च शूलानन्तरं कार्श्यचिकित्सितमाह। तत्र अमृतार्णवे—सर्वांशममृतासत्त्वम् अमृतासत्त्वं गुडूचीसारः, तस्य च चत्वारो भागाः ॥ १६९।१७० ॥

पूर्णचन्द्रे—मृतसूतः रससिन्दूरः। ताप्यं सुवर्णमाक्षिकम्। बृंहणं पुष्टिजननम् ॥ १७१—१७२ ॥

कार्श्यप्रतियोगित्वात् तथा "स्थौल्यकार्श्ये वरं कार्श्यम्" इत्यत्र "स्थौल्य-

वडवाग्निमुखो नाम स्थौल्यं तुन्दं नियच्छति ।
पलं क्षौद्रं पलं तोयमनुपानं पिबेत् सदा ॥१७५॥

अथ स्थौल्ये पूर्वकृत्यनिर्देशः ।—

तत्राऽऽदौ पञ्चकर्माणि लङ्घनाद्यैरुपाचरेत् ॥१७६॥

अथ मध्वार्द्रकप्रयोगः ।—

आर्द्रकं मधुना खादेन्मेदोऽनिलकफान् जयेत् ॥१७७॥

अथ अग्निकुमारः ।—

गन्धकेन द्विकर्षेण शुद्धसूतेन तावता ।
विधाय कज्जलीं सूक्ष्मामेकवासरमर्दनात् ॥१७८॥
कर्षमात्रं विषं दत्त्वा मर्दयित्वा दृढं पुनः ।
हंसपादीरसैस्तैर्वा स्तोकं स्तोकं मुहुर्मुहुः ॥१७९॥
कुडवार्द्धमितैः पश्चाद्गोलं कृत्वा विशोष्य च ।
काचकूप्यां विनिक्षिप्य शुल्वे नाड़ीं विधाय च ॥१८०॥
देवीशास्त्रे पुनः प्रोक्तं विषं कर्षत्रिचूर्णितम् ।
ऊर्द्धाधो गोलकानां हि काचकूप्यां विनिक्षिपेत् ॥१८१॥

पदोपादानाच्च कार्श्यानन्तरं स्थौल्यचिकित्सितमुच्यते । तत्र वडवाग्निमुखे—बोलं गन्धरसः । तुन्दं स्थूलोदरताम् ॥ १७४।१७५ ॥

स्थौल्यचिकित्सायां प्रथमकृत्यमुपदिशति, तत्रेति ।—पञ्चकर्माणि वमनविरेचनादीनि, कुर्य्यादिति शेषः । लङ्घनाद्यैरित्यत्रादिपदेन विरूक्षणादीनां परिग्रहः ॥१७६॥

मध्वार्द्रकप्रयोगे—सर्वं स्पष्टम् ॥ १७७ ॥

अग्निकुमारे—सूक्ष्मां श्लक्ष्णामित्यर्थः । हंसपादीति ।—कुडवार्द्धमितैः पलद्वयप्रमाणैः हंसपादीरसैः मण्डूकपर्णीरसैः; कुडवार्द्धमितं रसं कृत्स्नमेव युगपद्दत्त्वा मर्दयेत्, अथवा मुहुर्मुहुः स्तोकं स्तोकं दत्त्वा मर्दयेदित्यर्थः । शुल्वे नाड़ीं विधाय च नाड़ीं कूपिकायाः नालं, नालवत् ऊर्द्ध्वीभूतांशविशेषमित्यर्थः, शुल्वे ताम्रपत्रे विधाय स्थापयित्वा, कूपिकायाः मुखं ताम्रपत्रेणाच्छाद्य इत्यर्थः । एवं स्वमतमभिधाय इदानीं देवीशास्त्रोक्तमतं दर्शयितुमाह, देवीति ।—देवीशास्त्रे पार्वतीप्रोक्ततन्त्रे । स्वमते सविषमेव कज्जलीगोलकं काचकूप्यां स्थापयेत्, देवीशास्त्रे तु मर्दनकाले

निक्षिपेत् कज्जलीं मध्ये यतस्त्वाग्रं प्रजायते।
ततश्च द्व्यङ्गुलोत्सेध-मृदा कूपीं विलिप्यताम् ॥१८२॥
विशोष्य वालुकायन्त्रे यन्त्रवर्गप्रकाशिते।
अधोमुखीं घटीं क्षिप्त्वा क्षिपेदुपरि वालुकाम् ॥१८३॥
निरुध्य भाण्डवक्त्रञ्च चुल्ल्यामारोप्य यत्नतः।
वह्निं प्रज्वालयेत् सार्द्धं दिनं क्रमविवर्द्धितम् ॥१८४॥
स्वाङ्गशीतलमाकृष्य सह ताम्रेण मर्दयेत्।
पलार्द्धं मरिचं सूक्ष्मं कर्षार्द्धं वत्सनाभकम् ॥१८५॥
विनिक्षिप्य विमर्द्याथ क्षिपेद्रम्यकरण्डके।
नन्दिना तु समुद्दिष्टं रसतुल्यं मरीचकम् ॥
वत्सनाभन्तु कर्षांशं मिश्रयेत विचूर्ण्य तत् ॥१८६॥
निर्दिष्टोऽग्निकुमारको रसवरो देव्या तथा नन्दिना
सेव्यो वैद्ययशःप्रभूतफलदश्चाऽऽनाहविध्वंसनः।
सद्यः पाचनदीपनो रुचिकरः शोथं तथाऽष्ठीलिकां
सामाञ्च ग्रहणीं हरेत् कफरुजः कण्ठामयध्वंसनः ॥१८७॥
वल्यो भोजनतोयभक्ष्यसुखदः श्रेष्ठो रसानां प्रभु-
र्मन्दाग्निं कफवातजं क्षयगदं निःशेषशूलामयान्।
श्वासं कासगदं तथा गुदरुजं स्थौल्यञ्च पाण्डुं तथा
शोफं वातगदं तथा खलु रतोतुल्योऽर्द्धपर्णान्वितः ॥१८८॥

कज्जल्या सह विषचूर्णकर्षमदत्त्वा केवलरसगन्धककृतकज्जलीगोलकस्य ऊर्द्धाधः तत् दत्त्वा कूप्यां स्थापयेदिति। अग्रं गुणोत्कर्षम्। यन्त्रवर्गप्रकाशिते यन्त्राध्यायोक्ते। अधोमुखीं घटीं क्षिप्त्वा वालुकायन्त्रस्थकूपिकाया मुखोपरि स्वल्पघटमेकमधोमुखं दत्त्वा, कूपिकामुखं घटान्तरेणाच्छाद्य इत्यर्थः। सार्द्धमित्यस्य दिनमित्यनेनान्वयः, सार्द्धं दिनमित्यर्थः। क्रमविवर्द्धितं मृदुमध्यतीक्ष्णक्रमेण विवर्द्धितम्। सह ताम्रेण कूपिकामुखस्थताम्रपत्रेण सह। मरिचवत्सनाभमिश्रणे नन्दिमतमाह,—नन्दिनेति। रतोति।—रक्तिमितः रसः ताम्बूलदलार्द्धेन सहित

कणया सितयाऽऽज्येन दातव्योऽसौ महारसः।
प्रत्यष्ठीलादिरोगेषु जलकूर्मगदेषु च ॥१८९॥
नन्दिना तु पुनः प्रोक्तस्तत्तद्रोगहरौषधैः।
निहन्ति सकलान् रोगान् दुष्यतीव मनोरथान् ॥१९०॥

रसजनितविदाहे शीततोयाभिषेको
मलयजघनसारालेपनं मन्दवातः।
तरुणदधि सिताक्तं नारिकेलीफलाम्भो
मधुरशिशिरपानं शीतमन्यच्च शस्तम् ॥१९१॥

सौभाग्यं मेघनादाङ्घ्रि-सितामधुकचन्दनम्।
तुषोदकेन दातव्यं सर्वस्मिन् रसवैकृते ॥१९२॥
छर्द्यां तृष्णासु दातव्यं कपित्थं वा सिताऽन्वितम्।
कुमारीशीतलेपश्च सर्वाङ्गीणः प्रशस्यते ॥१९३॥
क्षीरं मधुसितापीतं क्वाथो वाऽमृतबन्धुकः।
उपचारा अमी सर्वे प्रशस्ता रसतापिनाम् ॥१९४॥
रसस्याग्निकुमारस्य प्रभावं वेत्ति तत्त्वतः।
गिरिजा नन्दिकेशो वा यद्वा नारायणः प्रभुः ॥१९५॥

इत्यर्थः। प्रत्यष्ठीला वातव्याधिर्निर्दिष्टा। जलकूर्मगदेषु कमठाख्यरोगेषु। रसव्यापत्तौ प्रतीकारमाह, रसेति।—रसजनितविदाहे एतदौषधसेवनात् दाहसन्तापादिकं जायते चेत् तदा इत्यर्थः। मलयजः श्वेतचन्दनं घनसारः कर्पूरः। तरुणदधि सप्तरात्रपर्य्युषितं दधि, "सप्तरात्रव्यतीते तु दधि तरुणमुच्यते" इति लक्षणात्। सौभाग्यं टङ्कणम्। मेघनादाङ्घ्रिः रक्ततण्डुलीयमूलम्। तुषोदकेन सतुषयवकृतकाञ्जिकेन। रसवैकृते रससेवनजातविदाहादिषु। कुमारीशीतलेपः घृतकुमार्य्याः शीतलप्रलेपः। क्वाथो वाऽमृतबन्धुकः अमृता गुडूची, छन्दोऽनुरोधादत्र ह्रस्वः; "अमृतष्टपटोलम्" इत्यादावपि गुडूच्यर्थकः अमृतशब्दो दृश्यते; बन्धुकः बन्धुजीवाख्यः, तौ स्तः यत्र क्वाथे सः अमृताबन्धुककृतक्वाथ इत्यर्थः॥ १८८—१९५॥

अथाम्लपित्तनिदानम्।—

अम्लोद्गारवमी हस्त-पादकुक्षिविदाहता।
अम्लपित्ते मुखं तिक्तं भवेच्छूलमरोचकम् ॥१९६॥

अथ अम्लपित्तचिकित्सा।—

अथाम्लपित्तोपचाराः।—

अम्लपित्ते तु वमनं तदन्ते मृदुरेचनम्।
ऊर्द्धगं वमनैर्हन्यादधोगं रेचनैर्जयेत् ॥
तिक्तभूयिष्ठमाहारं पानञ्चापि प्रकल्पयेत् ॥१९७॥

अथ वमनयोगः।—

अम्लपित्ते च वमनं पटोलारिष्टवारिभिः ॥१९८॥

अथ विरेचनयोगः।—

विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलैर्भवेत् ॥१९९॥

अथ लीलाविलासः।—

शुद्धसूतं शुद्धगन्धं मृतं ताम्राभ्ररौप्यकम्।
तुल्यांशं मर्दयेद्यामं कृत्वा लघुपुटे पचेत् ॥२००॥
अक्षधात्रीहरीतक्याः क्रमवृद्ध्या विपाचयेत्।
जलेनाष्टगुणेनैव ग्राह्यमष्टावशेषितम् ॥२०१॥

---

तृषामोहस्वप्रस्वेदादिलक्षणैः स्थौल्याम्लपित्तयोः लक्षणसाधर्म्यात् स्थौल्यचिकित्सानन्तरम् अम्लपित्तचिकित्सां विवक्षुरादौ तल्लक्षणमाह, अम्लोद्गारेति।—सुगमम् ॥१९६॥

अम्लपित्तस्य क्रियासूत्रमाह, अम्लेति।—तदन्ते वमनान्ते। ऊर्द्धगमिति।—ऊर्द्धगस्य कफसंसृष्टत्वात् तत्र कफहरं वमनं विहितम्। अधोगमिति।—अधोगस्य वातसंसृष्टत्वेऽपि विरेकविधानं योगवाहस्य वायोः पित्तप्रशमनेनैव प्रशमाभिप्रायात्, विरेचनस्याग्र्यं पित्तहरेषु ॥ १९७ ॥

"ऊर्द्धगम्" इत्यादिना वमनविरेचनयोः विधानमुक्त्वा आदौ वमनयोगमाह, अम्लपित्ते इति।—सुगमम् ॥ १९८ ॥

विरेचनयोगमाह, विरेचनमिति।—त्रिवृच्चूर्णस्य माषकत्रयं माषकचतुष्टयं वा प्रयोज्यम्। धात्रीफलैः आमलकस्वरसैः तत्क्वाथैर्वा ॥१९९॥

लीलाविलासे—अक्षेति।—क्रमवृद्ध्या उत्तरोत्तरभागवृद्ध्या अक्षधात्रीहरीतक्याः, भागमिति शेषः, अष्टगुणेन जलेन विपाचयेदिति योजना। अक्षादीनाञ्च "माध्यद्रव्य-

अनेन भावयेत् सर्वं पूर्वं सूतं पुनः पुनः ।
पञ्चविंशतिवारञ्च तावद्भिर्भृङ्गजैर्द्रवैः ॥२०२॥
शुष्कं तच्चूर्णितं खादेत् पञ्चगुञ्जं मधुप्लुतम् ।
रसो लीलाविलासोऽयमम्लपित्तं नियच्छति ॥२०३॥

अथ कुष्माण्डखण्डम् ।—

कुष्माण्डस्य रसस्य सत्पलशतं तुल्यं गवां क्षीरकं
धात्रीचूर्णपलाष्टकं लघु पचेद्यावत् कृतं पिण्डितम् ।
धात्रीतुल्यसितं पलार्द्धममृतं तल्लेहकं लेहयेत्
ख्यातं कुष्माण्डखण्डं क्षपयति नितरामम्लपित्तं न चान्यत् ॥२०४॥

अथ ताम्रद्रुतिः ।—

पलं नेपालशुल्वस्य पत्राणि सुतनूनि च ।
कृत्वा कण्टकवेध्यानि कारयेत्तदनन्तरम् ॥२०५॥
कर्षैकं द्विगुणं ग्राह्यं क्रमात् सूतकगन्धयोः ।
मर्दितव्यं शिलाखल्ले रसैर्दन्तशठस्य वै ॥२०६॥
तत् कल्कं पङ्कवत् कृत्वा तेन पत्राणि सर्वशः ।
लेपयित्वा शिलाखल्ले स्थापयेदातपे खरे ॥२०७॥

समं कार्य्यम्" इत्यादिपरिभाषानुसारेण सूतादिभिः पञ्चभिः सह समभागता ज्ञातव्या । पूर्वं सूतं लघुपुटे पक्वं सूतादिकम् । पुनः पुनः पञ्चविंशतिवारमित्यर्थः, अनन्तरोक्त-भृङ्गजद्रवेण पञ्चविंशतिवारभावनादर्शनात् । तावद्भिर्भृङ्गजैर्द्रवैः यावद्भिः त्रिफला-क्वाथैः भावना कृता तावत्परिमितैः भृङ्गराजरसैरित्यर्थः ॥ २००—२०३ ॥

कुष्माण्डखण्डे—सत्पलशतं यथाविधि गृहीतं पलशतमित्यर्थः, एतेन "स्विन्न-पीडितकुष्माण्डात्" इत्यादिना तन्त्रान्तरोक्तं रसग्रहणविधानमुक्तं भवति । तुल्यं कुष्माण्डरसतुल्यम् । लघु पचेत मृदुवह्निना पचेत; यद्वा—मृदुपाकं कुर्य्यात न तु खरमित्यर्थः । धात्रीतुल्यसितं धात्रीतुल्या सिता यत्र रसपलशते तदिति विग्रहे सितायाः पलाष्टकमित्यर्थः । अमृतम् अमृता, गुडूचीत्यर्थः । गुडूच्यर्थक-स्यामृताशब्दस्य अकारान्तप्रयोगोऽपि दृश्यते तच्च प्रागेव प्रदर्शितम् । न चान्यत् अन्यत् अमार्थेत्यर्थः, न च नैव, भवतीति शेषः ॥ २०४ ॥

ताम्रद्रुतौ—नेपालशुल्वस्य नेपालदेशजातताम्रस्य । कर्षैकमिति ।—सूतस्य कर्षं

यामैकेन समुद्धृत्य द्रवीभवति नान्यथा।
वान्तिं विरेचनं कृत्वा शुद्धकायो यथाविधि ॥२०८॥
पूजयित्वा सुरान् वैद्यान् विप्रान् हेमाम्बरादिभिः।
तां द्रुतिं मधुसर्पिर्भ्यां रक्तिकामाषकादिभिः ॥२०९॥
लीढ्वा तत्र पिबेत्तक्रं धान्याम्लकमथापि वा।
जीर्णे सायं समश्नीयाच्छाल्यन्नन्तु पुरातनम् ॥२१०॥
सेव्यमानं निहन्त्येतदम्लपित्तं सुदारुणम्।
कासं क्षयं तथा शोषमर्शांसि ग्रहणीं तथा ॥२११॥
कामलां पाण्डुरोगञ्च कुष्ठान्येकादशैव च।
रक्तपित्तं सवातिस्यं शूलञ्चैवोदराणि च ॥२१२॥
वातरोगं प्रतिश्यायं विद्रधिं विषमज्वरम्।
सततभ्यासयोगेन वलीपलितवर्जितः ॥२१३॥
ताम्रवत् कुरुते देहं सर्वव्याधिविवर्जितम्।
जीवेद्वर्षशतं साग्रं द्वितीय इव भास्करः ॥२१४॥

अथ पित्तरोगचिकित्सा।—

अथ पित्तान्तकरसः।—

मृतसूताभ्रमुण्डार्क-तीक्ष्णमाक्षिकतालकम्।
गन्धकञ्च भवेत्तुल्यं यष्टीद्राक्षामृताद्रवैः ॥२१५॥
जलमण्डपिकावासा-द्रावैः क्षीरविदारिजैः।
दिनैकं मर्दयेत् खल्ले सिताक्षौद्रयुता वटी ॥२१६॥

गन्धकस्य च कर्षद्वयम्। दन्तशठस्य चाङ्गेर्य्याः। पर्णानि कण्टकवेध्यानि ताम्र-पत्राणि। रक्तिकामाषकादिभिः दोषबलादिकं विविच्य रक्तितो माषकपर्य्यन्तमादौ सेवेत इत्यर्थः। जीवेत् वर्षशतं साग्रं शतवर्षाधिकं जीवेदित्यर्थः, तेन पञ्च-दिनाधिकसविंशतिवर्षशतं जीवेदिति निष्कर्षः; यदुक्तं वराहेणायुर्निरूपणे,—"समाः षष्टिर्द्विगुणा मनुजकरिणां पञ्च च निशाः" इति ॥२०५—२१४॥

अम्लपित्तस्य विदग्धपित्तजन्यत्वेन निर्देशात् तदनन्तरं पित्तजानामन्येषां रोगाणां चिकित्सितमुच्यते। तत्र पित्तान्तकरसे—मुण्डं मुण्डलौहम्। तीक्ष्णं तीक्ष्णलौहम्।

निष्कमात्रं निहन्त्याशु पित्तं पित्तज्वरं क्षयम् ।
दाहं तृष्णां भ्रमं शोषं वेगात् पित्तान्तको रसः ॥२१७॥
सिताक्षीरं पिबेच्चानु यष्टीं सिताऽन्वितां जलैः ।
पिबेद्वा पित्तशान्त्यर्थं शीततोयेन चन्दनम् ॥२१८॥

अथ दशसारम् ।—

यष्टी द्राक्षा फलं धात्र्या एलाचन्दनबालकम् ।
मधूकपुष्पं खर्जूरं दाडिमं पेषयेत् समम् ॥२१९॥
सर्वतुल्या सिता योज्या पलार्द्धं भक्षयेत् सदा ।
दशसारमिदं ख्यातं सर्वपित्तविकारजित् ॥
मेहतृष्णाऽरतीश्चैव दाहं मूर्च्छां ज्वरं जयेत् ॥२२०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये विड्भेदि-गुल्मयकृत्प्लीहशूलकार्श्यस्थौल्याश्मरीप्रत्यष्ठीलाजलकूर्मरसवैकृतानाहाम्ल-पित्त-पित्तचिकित्सानामाष्टादशोऽध्यायः ॥ १८ ॥

---

अमृता आमलकी गुडूची वा । जलमण्डूपिका वारिपर्णी, "पाना" इति लोके । "जलमण्डूपिकावामाद्रावैः" इत्यत्र "धात्रीशतावरीद्रावैः" इति रसरत्नाकरे पाठः । क्षीरविदारीजैः भूमिकूष्माण्डरसैः । पिबेद्वा इत्यत्र अनु इति शेष, पित्तान्तक-रससेवनानन्तरं शीततोयेन चन्दनमनुपिबेदित्यर्थः । रसरत्नाकरे रसोऽयं वात-पित्तान्तकरस इति नाम्ना पठितः । रसेन्द्रसारसङ्ग्रहे वातव्याध्युक्तगगनादिवटिकया सह अस्य सर्वथा साम्यं दृश्यते, केवलं तालकामृताद्रवयोरभ्रोक्तयोः तत्राभावः इति ॥२१५—२१८॥

दशसारे—फलं धात्र्याः आमलकी । रसेन्द्रसारसङ्ग्रहे "यष्टी······बालकम्" इत्यत्र "यष्टिं धात्रीं बलां द्राक्षामेलां चन्दनबालुकम्" इति पाठः । क्वचिदेतत्-श्लोकानन्तरं "हेमभस्मममतारमृतकं मौक्तिकञ्च विषगन्धकं कुरु । चित्रकार्द्रक-रसेन पेषयेच्छोषयेच्च परिपेषयेन्मृदु ॥ भाजने च लवणोदरे क्षिपेदङ्गुलित्रितयमायते तथा ॥" इत्यधिकपाठः ॥ २१९।२२० ॥

इति रसरत्नसमुच्चयबोधिन्याम् अष्टादशोऽध्यायः ॥ १८ ॥

# अथैकोनविंशोऽध्यायः ।

## अथोदरादिचिकित्सनम् ।—

### अथ जलोदरलक्षणम् ।—

उदरं सजलं यस्य सदोषं बलिवर्जितम् ।
श्वयथुः पादयोः शोफः स्याज्जलोदरलक्षणम् ॥ १ ॥

### अथ वातोदरलक्षणम् ।—

उदरं वातसम्पूर्णं सव्यथञ्च कृशाङ्गता ।
मुहुर्मुहुः श्वसित्येव तत् वातोदरलक्षणम् ॥ २ ॥

## अथात उदरपाण्डुशोफकामलाकुम्भकामलाहलीमकचिकित्सा ।—

### अथ जीमूतकादिगुडिका ।—

जीमूतलोहरसगन्ध-शिलाजताभ्र-
व्योषाग्निकुष्ठमुषली-विषदीप्यचूर्णम् ।
निम्बूकनीरलुलितं गुटिकीकृतं तत्
भुक्तं निशासु मधुना सकलोदरघ्नम् ॥ ३ ॥

---

शोथत्वसामान्यात् कुक्षिगतरोगसामान्याच्च विद्रध्याद्यनन्तरम् उदरादिचिकित्सितं विवक्षुः एकोनविंशाध्यायमारभते ; तत्रादौ जलोदरलक्षणमाह, उदरमिति ।— सदोषं दोषो मलं वातादिश्च तत्सहितं, विबद्धमलं दुष्टवातादिलक्षणसमन्वितञ्चेत्यर्थः । बलिवर्जितं बलिः उदररेखात्रयं त्रिबलीति ख्यातं तद्रहितम् । श्वयथुः शोथः सर्वाङ्गे एव, अत्र श्वयथुशब्देनैव सर्वाङ्गशोथे लब्धे पुनः पादयोः शोफ, इति ग्रहणं पादयोर्विशेषेण शोफवत्त्वावबोधनार्थम् ॥ १ ॥

वातोदरलक्षणमाह, उदरं वातसम्पूर्णमिति ।—सुगमम् ॥ २ ॥

जीमूतकादिगुडिकायां—जीमूतम् अभ्रम् । शिला शिलाजतु । ताल हरितालम् । मुषली तालमूली । दीप्यं यमानी ॥ ३ ॥

अथ विनोदविद्याधरः।—

रसेन्द्रबलिटङ्कणैः सजयपालबीजैः समैः
रसः सुमर्दितो भवेत् खलु विनोदविद्याधरः।
पयोगुड़युतो हरेत् सकलरेचनीयामयान्
ज्वरञ्च जठरामयान् गुदगदं सशूलं नृणाम् ॥४॥
सम्यग्विरेचनाभावे मुद्गक्वाथं पिबेदनु।
भेदाधिक्ये पिबेत्तक्रं बब्बूराणां त्वचो रसम् ॥ ५ ॥

अथ दन्तिबीजादिरसः।—

अष्टौ निस्तुषदन्तिबीजमपि चेच्छुण्ठ्यास्त्रयो गन्धकात्
द्वौ च द्वौ मरिचस्य टङ्कणरसश्चैकैकभागं पृथक्।
गुञ्जामात्रमिदं सुरेचनकरं देयञ्च शीताम्बुना
शोफं गुल्मजलोदरं प्रशमयेत् प्लीहामयञ्चं परम् ॥ ६ ॥

अथ मृत्युञ्जयः।—

हिङ्गुलं त्र्यूषणं पञ्च-लवणं शतपुष्पिकाम्।
समभागमिदं सर्वं पटचूर्णं समाचरेत् ॥७॥
तत्समौ रसगन्धौ च कृत्वा कज्जलिकां शुभाम्।
सर्वमेकत्र सम्मेल्य मर्दयेत् दिवसत्रयम् ॥८॥

---

विनोदविद्याधरे—रसः गरसारः, शोधादिहन्तृत्वात, स च सर्वद्रव्यतुल्यः। सकलरेचनीयामयान् विरेचनसाध्यरोगान्। गुदगदम् अर्शोरोगम्। बब्बूराणां त्वचः बब्बोलवल्कलस्य ॥ ४।५ ॥

दन्तिबीजादिरसे—अष्टौ इत्यत्र भागाः इति शेषः, एवं त्रयः द्वौ इत्यादिष्वपि। दन्तीबीजादिकं सर्वं यथोक्तमानं चूर्णं कुर्यात्, गुञ्जामात्रम् इदं चूर्णमपि शीताम्बुना देयं भवेत् चेत्, तदा तत् सुरेचनकरं भवेत् इति "अपि चेत्" इत्यस्यार्थः; जयपालबीजसंयुक्तः योगस्तु विरेचक एव, दन्तीबीजसंयुक्तयोगोऽपि विरेचनकरः इत्यपिशब्दस्याशयः ॥ ६ ॥

मृत्युञ्जये—हिङ्गुलं खर्जिकाक्षारं यवक्षारञ्च। पटचूर्णं वस्त्रपूतचूर्णम्; "पटचूर्णम्" इत्यत्र "पटुचूर्णम्" इति पाठे—सूक्ष्मचूर्णमित्यर्थः। तत्समौ रसगन्धौ च इति

अयं मृत्युञ्जयो नाम्ना रसः शीघ्रफलप्रदः।
कथितो मथिनार्य्येण सन्निपातहरः परम् ॥९॥
सन्निपाते प्रयोक्तव्यः रक्तिकापञ्चमात्रिकः।
चित्रकार्द्रकसिन्धूत्थ-कटुभिर्वा समन्वितः ॥१०॥
पीततोयं त्रिदोषार्त्तं निर्वाते वासयेत्ततः।
पथ्यं दध्योदनं देयं याचमानाय नान्यथा ॥
गुणो न जायते यस्य तस्य देयो रसः पुनः ॥११॥
हन्त्याद्यातगदं तथा कफगदं मन्दानलत्वं ज्वरं
शूलं सर्वमहामयान् जठरजां पीड़ां यकृत् पाण्डुताम्।
शोफं गुल्मरुजं तथा ग्रहणिकां प्लीहामयं विड्ग्रहं
वान्तिं गुल्मकृतां सकासमभितः श्वासञ्च हिक्कामपि ॥१२॥

अथ उदरे विरेचनविधिः।—

आदौ सर्वोदराणाञ्च देयमुक्तं विरेचनम्।
गोमूत्रैर्वाऽथ गोक्षीरैर्योज्यमेरण्डतैलकम् ॥
कर्षमात्रं प्रयत्नेन शुद्धे देयो रसः पुनः ॥१३॥

अथ त्रैलोक्यसुन्दरः।—

शुद्धसूतं तथा गन्धं मृताभ्रं सैन्धवं विषम्।
कृष्णाजीरं विड़ङ्गञ्च गुड़ूचीसत्त्वचित्रकम् ॥१४॥

मिलित्वा सर्वचूर्णसमौ रसगन्धकौ। कटुभिर्वा इत्यत्र वा-शब्देन रक्तिकापञ्चमात्रिकः रसः केवलमपि प्रयोक्तव्यः इत्यर्थः प्रतीयते। पीततोयम औषधसेवनानन्तरं जलं पाययित्वेत्यर्थः। याचमानाय नान्यथा भोजनं याचमानाय दध्योदनं देयम्, अन्यथा अयाचमानाय न देयमित्यर्थः ॥ ७—१२ ॥

उदरिणे रसप्रयोगात् प्राक् उपक्रमं निर्दिशति, आदाविति।—कर्षमात्रमिति एरण्डतैलकमित्यनेन सम्बध्यते। शुद्धे देयो रसः पुनः विरेचनेन शुद्धकोष्ठे पुनः अनन्तरं मृत्युञ्जयरसादिः उदरहरो रसो देयः इत्यर्थः ॥ १३ ॥

त्रैलोक्यसुन्दरे—तथा गन्धमिति सूततुल्यं गन्धमित्यर्थः। "तथा गन्धम्"

एला चैव यवक्षारं प्रत्येकं स्याद्रसार्द्धकम् ।
दिनं निर्गुण्डिकाद्रावैर्बीजपूररसैर्दिनम् ॥१५॥
मर्दयेच्छोषयेत् सोऽयं रसस्त्रैलोक्यसुन्दरः ।
गुञ्जाद्वयं घृतैर्लेह्यो वातोदरकुलान्तकः ॥१६॥
पलमेकं चित्रमूलं द्विगोमूत्रैश्चतुर्जलैः ।
पाच्यं यावद्भवेत् कल्कं घृतं कल्कञ्च योजयेत् ॥१७॥
वल्लैकञ्च यवक्षारं क्षिप्त्वा पक्त्वाऽवतारयेत् ।
तत् कर्षैकं पिबेच्चानु स्निग्धमुष्णञ्च भोजयेत् ॥१८॥

अथ महावह्निः ।—

चतुः सूतस्य गन्धोऽष्टौ रजनी त्रिफला शिवा ।
प्रत्येकञ्च द्विभागं स्यात्त्र्यूषजीरकदन्तिकाः ॥१९॥
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ।
जयन्तीस्नुक्पयोभृङ्ग-वह्निवातारितैलकैः ॥२०॥

इत्यत्र "द्विधा गन्धम्" इति रसेन्द्रसारसङ्ग्रह-रसरत्नाकरादौ पाठः; "मृताभ्रम्" इत्यत्र रसेन्द्रसारे "ताम्राभ्रम्" इति पाठः। अभ्रादियवक्षारान्तं सर्वं रसार्द्धकम्। "एला" इत्यत्र रसरत्नाकरे "वचा" रसेन्द्रसारसङ्ग्रहे च "उग्रगन्धा" तथा "प्रत्येकं स्याद्रसार्द्धकम्" इत्यत्र "प्रत्येकं कर्षमात्रकम्" इति पाठान्तरम्। एतस्यौषधस्य अनुपानमाह, पलमेकमिति।—चित्रकमूलपलकल्केन द्विगुण-गोमूत्रेण चतुर्गुणजलेन च घृतात् प्रस्थो विपक्तव्यः, अवतार्य्य च वल्लमानं यवक्षारं प्रक्षिप्य स्थापयेदिति प्रचारः; अथवा—सङ्कुण्णं चित्रकमूलपलं पलद्वयगोमूत्रेण चतुःपलजलेन च द्रवक्षय यावत् पचेत्। ततः तत् कल्कं चतुर्गुणघृतेन घृताच्चतुर्गुणेन जलेन च पक्त्वा आसन्नपाके वल्लमितं यवक्षारं तत्र प्रक्षिप्य अवतारयेत् इति। "वल्लैकम्" इत्यत्र "पलैकम्" इति रसरत्नाकरे पाठः ॥ १४—१८ ॥

महावह्नौ—शिवा हरीतकी तस्याश्च चत्वारो भागाः; त्रिफलायाः प्रत्येकं भागद्वयविधानात्। "शिवा" इत्यत्र "शिला" इति रसरत्नाकर-रसेन्द्रसारसङ्ग्रहधृतः पाठः। "प्रत्येकञ्च द्विभागं स्यात्" इत्यनन्तरं "त्रिवृद्दन्तीपाठाचित्रकम्। प्रत्येकञ्च त्रिभागं स्यात्" इत्यधिकः पाठः रसेन्द्रचिन्तामणि-रसेन्द्रसारसङ्ग्रह रसरत्नाकरादिषु

प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक्।
महावह्निरसो नाम निष्कमुष्णजलैः पिबेत् ॥२१॥
विरेचनं भवेत्तेन तक्रभक्तं ससैन्धवम्।
दिनान्ते भोजयेत् पथ्यं वर्जयेत् शीतलं जलम्॥
नाभ्युत्तरे जलस्रावं कुर्य्याद्धन्ति जलोदरम् ॥२२॥

अथ गुडनागरप्रयोगः।—

सर्वोदरहरं योज्यं गुड़नागरयोः पलम् ॥२३॥

अथ वज्रक्षारः।—

सामुद्रं सैन्धवं काचं यवक्षारं सुवर्च्चलम्।
टङ्कणं सर्जिकाक्षारं तुल्यं चूर्णं विभावयेत् ॥२४॥
अर्कक्षीरैः स्नुहीक्षीरैरातपे शोषयेत्त्र्यहम्।
अर्कपत्रं लिपेत्तेन रुद्ध्वा चान्तः पुटे पचेत् ॥२५॥
तत् क्षारं चूर्णयित्वाऽथ त्र्यूषणं त्रिफलारजः।
जीरकं रजनीवह्नि-चव्यकं स्यात् समं समम् ॥२६॥
क्षारमेव तदर्द्धञ्च एकीकृत्य प्रयोजयेत्।
अग्निमान्द्येष्वजीर्णेषु भक्ष्यं निष्कद्वयं द्वयम् ॥२७॥
वाताधिके जलैः कोष्णैर्घृतैः पित्ताधिके हितम्।
कफे गोमूत्रसंयुक्तमारनालैस्त्रिदोषजे ॥२८॥
वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना।
सर्वोदरेषु गुल्मेषु शोफशूलेषु योजयेत् ॥२९॥

दृश्यते। त्र्यूषणस्यापि प्रत्येकं भागाष्टकम्। स्नुक्पयः स्नुहीक्षीरम्। भृङ्गं भृङ्गराजः। वह्निः चित्रकः। वातारितैलम् एरण्डतैलम्। नाभ्युत्तरे जलस्रावं कुर्य्यात् नाभेरधोदेशे व्रीहिमुखेन शस्त्रेण जलं स्रावयेदित्यर्थः। रसरत्नाकरेऽयं वह्निवीर्य्यरसः इति प्रसिद्धम् ॥ १९—२२ ॥

गुडनागरप्रयोगे—गुड़नागरयोः मिलित्वा पलमानत्वम् ॥ २३ ॥

वज्रक्षारे—काचः लवणविशेषः "काच लवण" इति ख्यातम्। अर्कपत्रं

अथ खदिरादियोगः ।—

खदिरं देवदारुञ्च कर्षं गोमूत्रतः पिबेत् ।
उदरं पाण्डुरोगञ्च हन्ति शूलञ्च प्लीहकम् ॥३०॥

अथ पिप्पलीप्रयोगः ।—

दिनैकं पिप्पलीचूर्णं स्नुहीक्षीरेण भावयेत् ।
निष्कं जलोदरं हन्ति महिषीमूत्रतः पिबेत् ॥३१॥

अथ वैश्वानरः ।—

रसगन्धकताम्राणि शिलाजित् कान्तलोहकम् ।
त्रिकटु चित्रकं कुष्ठं निर्गुण्डी मुषली विषम् ॥३२॥
अजमोदश्च सर्वेषां द्वौ द्वौ भागौ प्रकल्पयेत् ।
चूर्णीकृत्य ततः सर्वं निम्बक्वाथेन भावयेत् ॥३३॥
एकविंशत्प्रकारेण भृङ्गराजेन सप्तधा ।
मधुना गुटिकां शुष्कां रजन्यान्तु प्रदापयेत् ॥
वैश्वानराभिधो योगो जलोदरविशोषणः ॥३४॥

---

मृतमृताम्रपत्रम् । क्षारं पूर्वोक्तं सामुद्रादिकल्कानितार्कपत्रक्षारम् । तदर्द्धमिति तेषां चूर्णानामर्द्धं, तेन सर्वचूर्णात् अर्द्धं क्षारमिति निष्कर्षः ॥ २४—२९ ॥

खदिरादियोगे—खदिरस्य सारः ग्राह्यः "सारः स्यात् खदिरादीनाम्" इति वचनात् ॥ ३० ॥

पिप्पलीप्रयोगे—महिषीमूत्रतः पिबेत् महिषीमूत्रेण सह स्नुहीक्षीरभावितां पिप्पलीं पिबेत् ॥ ३१ ॥

वैश्वानरे—रसादीनां लोहान्तानां प्रत्येकं समता, त्रिकट्वादीनाञ्च प्रत्येकं भागद्वयम् ; तथा च रसरत्नाकरे—"शुद्धसूतं समं गन्धं मृताकाय: शिलाजतु । रससाम्यं प्रदातव्यं रसस्य द्विगुणं विषम् । त्रिकटु चित्रकं कुष्ठं निर्गुण्डी मुषलीरजः । अजमोदा विषांशेन प्रत्येकञ्च प्रकल्पयेत् ॥" इति । "विषांशेन" इत्यत्र "दशांशेन" इति मुद्रितरसरत्नाकरपाठस्तु लिपिकरप्रमादविजृम्भितः, एतत्तन्त्रसंवादात् रसेन्द्रसारसङ्ग्रहसंवादाच्च । रसेन्द्रसारसङ्ग्रहे तु "द्विधा गन्धम्" इति पाठः । "कुष्ठम्" इत्यत्र "वीरा" इति तन्त्रोक्तपाठस्तु न मनोरमः, सर्वतन्त्रासंवादात् । निम्बक्वाथेन निम्बपत्रक्वाथ-

अथ सूर्य्यप्रभा गुटिका।—

भार्गीवह्निजयायुगाभ्रकदली पाठा वचा रोचना
चव्यं पत्रकचित्रकं त्रिकटुकं चारद्वयं गन्धकम्।
त्रायन्तीहरबीजकेसरिविषद्वन्द्वं लवङ्गं कणा
कुष्ठं शल्लफलं फलत्रययुतं फेनः समुद्रादपि ॥३५॥
ब्राह्मी बीजं लताबीजं बालबिल्वं विरूढ़कम्।
लवणानि तथा पञ्च जात्यादिकुसुमाष्टकम् ॥३६॥
वातारितैलैनैतेषां कल्पिता भिषजां वरैः।
एषा सूर्य्यप्रभा नाम गुटिकाऽग्निप्रदीपनी ॥३७॥

अथ उदयमार्त्तण्डरसः।—

पलोन्मितस्य शुल्वस्य सूक्ष्मपत्राणि कारयेत्।
तत्समं गन्धकं दत्त्वा खल्ले सर्वं विमर्दयेत् ॥३८॥
जम्बीररससंयुक्तं दिनं घर्मे निधापयेत्।
ततः शुल्वे द्रवीभूते रसकर्षं नियोजयेत् ॥३९॥
तत् सिद्धमुदरे योज्यं शोफे चैव भगन्दरे।
नाम्ना तूदयमार्त्तण्ड-रस एष प्रकीर्त्तितः ॥४०॥

---

क्काथेन इत्यर्थः, "पञ्चाङ्गनिम्बक्काथेन" इति रसरत्नाकरदर्शनात्। रसेन्द्रसारसङ्ग्रहे तु "निम्बपञ्चाङ्गुलक्काथैः" इति पाठः। श्लेष्मोदरे चायं योगः प्रयोज्यः। मात्रा च बदरास्थि-माना। वैश्वानरी बटीति नामान्तरमस्य रसेन्द्रे रसरत्नाकरे च दृश्यते ॥३२—३४॥

सूर्य्यप्रभायां—वह्निः भल्लातकः। जयायुगः जयन्ती हरीतकी च। कदली रम्भा, तस्या मूलम्। त्रायन्ती त्रायमाणा, "बला डुमुर" इति ख्यातम्। हरबीजं पारदम्। केसरी रक्तशोभाञ्जनः। विषद्वन्द्वं विषद्वयं, सर्पविषं मीनविषञ्चेत्यर्थः। शल्लफलं शल्लकीबीजम्। फेनः समुद्रादपीति समुद्रफेन इत्यर्थः। बीजं पुष्कर-मूलम्। ब्राह्मीबीजमित्येकपदं वा, ब्राह्मीशाकबीजम्। लताबीजं लताकस्तूरी-बीजम्। विरूढ़कम् अङ्कुरितधान्यम्। जात्यादिकुसुमाष्टकं "जाती यूथी राजवल्ली क्षुद्रयूथी त्रिधा मता। चम्पको नागचम्पश्च बकुलश्च कदम्बकः॥" इत्युक्ताष्टपुष्पम्। भार्ग्यादीनां जात्यादिकुसुमाष्टकान्तानां सर्वेषां तुल्यमानता ॥ ३५—३७ ॥

उदयमार्त्तण्डरसे—सर्वं सुगमम् ॥ ३८—४० ॥

अथ पाण्डुरोगस्य साङ्ख्यलक्षणम् ।—

विवर्णता शरीरे स्याच्छ्वयथुः कार्श्यमेव हि ।
सत्त्वहानिरथाऽऽलस्यं पाण्डुरोगस्य लक्षणम् ॥४१॥

अथ पाण्डुरोगचिकित्सा ।—

अथ हंसमण्डूरः ।—

मण्डूरं मर्दयेच्छ्लक्ष्णं गोमूत्रेऽष्टगुणे पचेत् ।
त्र्यूषणं त्रिफलां मुस्तां विडङ्गं चव्यचित्रकौ ॥४२॥
दार्वीं ग्रन्थीं देवदारु तुल्यं तुल्यं विचूर्णयेत् ।
घृतं मण्डूरतुल्यञ्च पाकान्ते मिश्रयेत्ततः ॥४३॥
भक्षयेत् कर्षमात्रञ्च जीर्णान्ते तक्रभोजनम् ।
पाण्डुरोगं हलीमञ्च ऊरुस्तम्भञ्च कामलाम् ॥
अर्शांसि हन्ति नो चित्रं हंसमण्डूरकाह्वयम् ॥४४॥

अथ कालविध्वंसनः ।—

शुद्धसूतं हेम तारं ताम्रं तुल्यञ्च मर्दयेत् ।
जम्बीरनीरसंयुक्तमातपे मर्दयेद्दिनम् ॥४५॥
सर्वतुल्यं पुनः सूतं चिञ्चा पिष्टं प्रकल्पयेत् ।
धुस्तूरफलमध्ये तु दोलायन्त्रे त्र्यहं पचेत् ॥४६॥

---

उदरवत् पाण्डुरोगेऽपि शोथः तथा पीताभत्वं भवति इति उदरानन्तरं पाण्डुरोगचिकित्सा। तत्रादौ तल्लक्षणमाह, विवर्णतेति ।—सत्त्वहानिः बलहानिः ॥४१॥

हंसमण्डूरे—दार्वीं दारुहरिद्राम्। ग्रन्थीं पिप्पलीमूलम्। त्र्यूषणादीनां देवदार्वन्तानां मिलितानां मण्डूरतुल्यता, रसरत्नाकरसंवादात्; तथा च—"त्र्यूषणं त्रिफलां मुस्तं विडङ्गं चव्यचित्रकम्। दार्वीं ग्रन्थिं देवदारु तुल्यं सर्वं विचूर्णयेत् ॥ चूर्णं मण्डूरतुल्यञ्च पाककाले विमिश्रयेत् ॥" इति। तत्र च "घृतम्" इत्यत्र "चूर्णम्" तथा "पाकान्ते" इत्यत्र "पाककाले" इति पाठान्तरम्, एवञ्च तत्र घृतस्य अनुक्तत्वेऽपि सर्वत्र मण्डूरयोगे घृतं विना पाकासिद्धेः उत्सर्गसिद्धमेव घृतमित्यविरोधः। पाककाले इति पाकान्तसमये चासन्नपाके इति व्याख्यानात् तुल्यार्थता बोद्धव्या। जीर्णान्ते सेवितौषधपरिपाकान्ते इत्यर्थः। रसेन्द्रसारसङ्ग्रहे अयं "त्र्यूषणादिमण्डूरम्" इति ख्यातं, परन्तु तत्र ग्रन्थस्य उल्लेखो नास्ति इति ॥४२—४४॥

धुस्तूरोत्थद्रवैरेव यत्नं पूर्य्यं पुनः पुनः।
आदाय बन्धयेदस्य इष्टिकायन्त्रगं पचेत् ॥४७॥
जम्बीरैर्गन्धकं पिष्ट्वा अधश्चोर्द्ध्वञ्च दापयेत्।
तुल्यं पुनः पुनर्देयं कृत्वा लघुपुटे पचेत् ॥४८॥
षड्गुणे गन्धके जीर्णे तत्तुल्यं मृतलोहकम्।
दत्त्वा मर्द्यं दिनैकञ्च कण्टकार्य्या द्रवैर्दिनम् ॥४९॥
कृत्वाऽथ करिषाग्निस्थ-कपोताख्यपुटे पचेत्।
पुनर्मर्द्यं पुनः पाच्यं त्रिवारं पूर्वजैर्द्रवैः ॥५०॥
हस्त्यश्वरसैस्तद्वत्त्रिधाऽऽमर्द्य पुटेत्त्रिधा।
वह्न्यर्कनक्तमालानां पृथग्द्रावैर्द्विधा द्विधा ॥५१॥
मर्द्यं कृत्वा पुटेत्तद्वद्दशांशं वत्सनाभकम्।
दत्त्वा तस्मिन् विचूर्ण्याथ गुञ्जामात्रं प्रयोजयेत् ॥५२॥
कालविध्वंसनो नाम रसः पाण्डामयापहः।
अभयाऽथ गवां मूत्रैः पिष्ट्वा चानु प्रदापयेत् ॥५३॥

कालविध्वंसने—तारं रौप्यम्। इष्टिकायन्त्रगं "विधाय वर्त्तुलं गर्त्तम्" इत्यादिना नवमाध्याये प्रदर्शितयन्त्रमध्यगतम्। "षड्गुणे" इत्यत्र "शतधा" इति रसरत्नाकरे पाठः। तत्तुल्यम् औषधतुल्यम्। पूर्वजैः द्रवैः कण्टकारीद्रवैः। वह्नीति।—वह्निः चित्रकः। अर्कः "आकन्द" इति प्रसिद्धम्। नक्तमालः "डहरकरञ्ज" इति प्रसिद्धम्। अयमर्थः,—सूतादिचतुष्टयं जम्बीररसेन दिनमेकं मर्दयित्वा आतपे मनाक् संशोष्य च पुनः सर्वतुल्येन रसेन सम्मर्द्य पिण्डं कुर्य्यात्। ततः निर्बीजीकृतधुस्तूरफलमध्ये कृत्वा बाह्यं धुस्तूरपत्ररसेन दोलायन्त्रे पचेत्, शुष्कीभूते पूर्वरसे पुनः पुनः रसो दातव्यश्च। चतुर्थेऽहनि धुस्तूरफलादौषधपिण्डं गृहीत्वा वस्त्रे बद्ध्वा च इष्टकायन्त्रे पचेत्। अनन्तरं पिण्डतुल्यं गन्धकं जम्बीर-रसमर्दितम् ऊर्द्ध्वमधश्च दत्त्वा मृत्कर्पटादिना आलिप्य च लघुपुटे पचेत्, एवं षड्वारान् कुर्य्यात्। ततः लोहं तुल्यमानमौषधेन मिश्रयित्वा कण्टकारीरसेन दिनमेकं मर्दयेत्, कृत्वा च कपोतपुटे गोमयाग्निना पुनः पचेत्, एवं वारत्रयं

अथ पञ्चाननः।—

मृतं कान्तं सुवर्णञ्च शुल्वतारात्रभस्मकम्।
पृथगक्षमितं सर्वं पटचूर्णं कृतं मुहुः ॥५४॥
रसगन्धककज्जल्या तुल्यया सह मर्दितम्।
सार्द्धद्विपलमानेन ताप्यचूर्णेन मर्दयेत् ॥५५॥
द्विपलं मूषिकामध्ये विनिक्षिप्यालचूर्णकम्।
ततस्तु कज्जलीं क्षिप्त्वा मनोह्वां तावतीं क्षिपेत् ॥५६॥
ततो निरुध्य यत्नेन परिशोष्य पुटेन्निशि।
पुटेन गजसंज्ञेन स्वतः शीतं विचूर्णयेत् ॥५७॥
चतुर्गुणेन गन्धेन निर्मितां रसकज्जलीम्।
क्षिप्त्वा पूर्वरसे लुङ्गवारिणा परिमर्दयेत् ॥५८॥
पचेत् क्रोड़पुटेनैव दशवारमतः परम्।
एवं तालककज्जल्या दशवारं पुटेत्ततः ॥५९॥
ततश्च मृतवैक्रान्त-भस्मना च कलांशतः।
ततो विचूर्ण्य यत्नेन करण्डान्तर्विनिक्षिपेत् ॥६०॥

कुर्यात्। अथ बृहतीरसेन त्रिवारं मर्दयेत् पुटेच्च। पुनः वज्रादीनां पृथक् पृथक् रसेन द्वौ द्वौ वारौ मर्दयित्वा त्रिस्त्रिः पचेत्। अनन्तरं दशमांशं विषं दत्त्वा विचूर्ण्य च स्थापयेदिति ॥ ४५—५३ ॥

पञ्चानने—पटचूर्णं वस्त्रपूतं चूर्णम्। रसगन्धककज्जल्या तुल्यया कान्तादि-सर्वचूर्णतुल्यया कज्जल्या इत्यर्थः, तेन च रसगन्धकयोः प्रत्येकं सार्द्धकर्षद्वयम्। मूषिकामध्ये मूषामध्ये। आलचूर्णकं हरितालचूर्णम्। कज्जलीमिति कान्तादिताप्यान्तैः कृतां कज्जलीमित्यर्थः। मूर्च्छितरसगन्धकयोरेव कज्जलीसंज्ञायां रूढ़त्वेऽपि अत्र कज्जल्या सह कान्तादीनां मिश्रणेन कृष्णवर्णभावात् कज्जलत्वं बोद्धव्यम्। मनोह्वां मनःशिलाम्। तावतीं द्विपलमित्यर्थः। पूर्वरसे पुटपाकेन निष्पन्ने औषधे। लुङ्गवारिणा मातुलुङ्गरसेन। क्रोड़पुटेन "दत्त्वं आरण्यके" इत्यादिना दशमाध्यायोक्तवराहपुटेन। तालककज्जल्या तालकयुक्तया कज्जल्या, सा च समभागयोः कज्जलीतालकयोः मिश्रणेन कार्या। कलांशतः षोडशांशेन।

अयं पञ्चाननो नाम देवराजेन कीर्त्तितः।
श्रेष्ठः सर्वरसेन्द्रेषु महारससमो गुणैः ॥६१॥
पथ्याशूरणशुण्ठीभिः सघृताभिर्निषेवितः।
सर्वान् पाण्डुगदान् हन्ति कृतघ्न इव सत्कृतिम् ॥६२॥
यक्ष्माणं जठरं हलीमकरुजं वातार्त्तिविड्बन्धनं
कुष्ठञ्च ग्रहणीं ज्वरातिसरणं श्वासञ्च कासारुचौ।
श्लेष्मव्याधिमशेषतो गलगदान् दुर्नाम मन्दाग्नितां
मेहं गुल्मरुजञ्च किं बहुगिरा हन्याद्गदांश्चापरान् ॥६३॥
सेव्यमाने रसे चास्मिन् विल्वमेकञ्च वर्जयेत्।
स्वस्थः सर्वं समश्नीयाद्गदी पथ्यं गदापहम् ॥६४॥

अथ आरोग्यसागरः।—

एकैकपलगन्धाश्म-रससम्भवकज्जलीम्।
तस्या मध्ये द्विपलिकं ताप्यं तालं पलोन्मितम् ॥६५॥
पलमात्रं मनोह्वाञ्च पलमभ्रकभस्मकम्।
सुखस्पर्शस्य कर्षञ्च निक्षिप्य परिमर्द्य च ॥६६॥
मूषामध्ये विनिक्षिप्य पिनद्धान्तर्मुखीं ततः।
पत्रेण शुद्धताम्रस्य निर्मलेन त्रिकार्षिणा ॥६७॥

---

सत्कृतिं शोभनं कर्म, उपकारमित्यर्थः। अत्रायं विधिः—सुचूर्णितं कान्तादिपञ्चकं प्रत्येकमचसमांशं गृहीत्वा पञ्चकर्षमितया कज्जल्या सार्द्धद्विपलेन माक्षिकचूर्णेन च सह मर्दयेत्। ततो मूषायां द्विपलं हरितालचूर्णं तदुपरि औषधं तदुपरि च पलद्वयं मनःशिलाचूर्णं दत्त्वा मृत्स्नेनालिप्य आतपे शोषयित्वा च निशि गजपुटे पचेत्। स्वाङ्गशीतमादाय चूर्णयित्वा च चतुर्गुणगन्धककृतया कज्जल्या औषधतुल्यया सह मातुलुङ्गरसेन मर्दयेत्, ततः पुनर्मूषायां संस्थाप्य वराहपुटेन पचेत्; एवं दशवारान् कुर्य्यात्। ततः तालककज्जल्या अपि औषधतुल्यया मिश्रयित्वा मातुलुङ्ग-रसेन मर्दयेत् वराहपुटेन पचेच्च; एवं दशवारान् कुर्य्यात्। ततः कान्तादिताम्रान्तानां मिलितानां षोडशांशेन वैक्रान्तभस्मना सह मर्दयित्वा स्थापयेत् इति ॥ ५४—६४ ॥

आरोग्यसागरे—सुखस्पर्शस्य सुभगस्य, टङ्कणस्येत्यर्थः। पिनद्धम् आबद्धम्

मूषां मृद्भिः सवस्त्राभिः परिरुध्य यथा दृढम् ।
परिशोष्य गिरण्डैश्च पुटेत् गजपुटेन हि ॥६८॥
स्वाङ्गशीतं समुद्धृत्य खोटीभूतं विचूर्णयेत् ।
गन्धतालशिलाचूर्णैः सहितं खल्लचूर्णकम् ॥६९॥
पुटेत् क्रोड़पुटे चैव दशवारं ततः परम् ।
क्षिपेद्विंशतिभागेन वैक्रान्तं भस्मतां गतम् ॥७०॥
विमर्द्य गालितं कृत्वा क्षिपेत् रौप्यकरण्डके ।
आरोग्यसागरो नाम रसोऽतिगुणवत्तरः ॥७१॥
हन्यात् पाण्डुमरोचकं गुदगदं वातञ्च पित्तं कफं
गुल्माध्मानकशोफरोगमथ च श्वासं शिरोऽर्त्तिं वमिम् ।
अत्यर्थानलमन्दतां गुरुमुदावर्त्तं विचित्रज्वरान्
रोगानप्यपरान् रतिद्वयमितः सूतौ मरीचाज्यवान् ॥७२॥

अथ पाण्डुसमाभिलरसः ।—

ताम्रभस्म रसभस्म गन्धकं वत्सनाभमथ तुल्यभागतः ।

अन्तर्मुखम अधःस्थमूषाया उपरिभागमित्यर्थः, यस्याः ता, मूषामित्यस्य विशेषणम् । विकर्षिणा कर्षतर्यामितेन, कर्षत्रयांमितेन निर्मलेन ताम्रपत्रेण आधारमूषायाः मुखमाच्छाद्य तदुपरि आवरणञ्च दत्वा मृद्वस्त्रादिभिर्मूषां लिम्पेत इति निष्कर्षः । गिरण्डैः आरण्यगोमयैः । खोटीभूतं गन्धाश्मादिद्रव्यजातमेकीभूय कठिनीभूतमित्यर्थः । गन्धेति ।—शिला मनःशिला ; गन्धादयः प्रत्येकं रसभागाः ग्राह्याः । खल्लचूर्णकं खल्ले चूर्णं कृत्वेत्यर्थः । सूतौ सूतिकारोगे, प्रसवकाले इत्यर्थो वा, प्रसवे क्लेशः चेत तदा मरीचाज्यवान् घृतमरिचाभ्यां रक्तिद्वयमितः अयं रसः प्रयोक्तव्यः । अयं विधिः,—गन्धादिकं यथोक्तमानं मर्दयित्वा मूषायां संस्थापयेत, ततः ताम्रपत्रेण मूषामुखं वेष्टयित्वा मूषान्तरेणाच्छाद्य च मृत्कर्पटेन लेपयेत् । अथ आतपे संशोष्य गजपुटं दद्यात् । ततः स्वाङ्गशीतं समुद्धृत्य रसमानैः गन्धादिभिः सह खल्ले चूर्णयित्वा वराहाख्यपुटे पचेत्, एवं दशवारान् कुर्यात । ततः औषधात विंशत्यंशेन वैक्रान्तभस्मना विमर्द्य वस्त्रपूतञ्च कृत्वा रौप्यभाजने स्थापयेत् । पाण्डुादिरोगे रक्तिद्वयमानं तत् यथाव्याध्यनुपानेन प्रयुञ्ज्यात । सूतिकारोगे तु मरिचाज्याभ्यां दापयेदिति ॥६५—७२॥

वह्नितोयपरिमर्दितं पचेत् यामपादमथ मन्दवह्निना ॥७३॥
रक्तिकायुगलमानतो भवेच्छोफपाण्डुघनपङ्कशोषणः ॥७४॥

अथ पाण्डुहारिहरीतकी।—

कौरण्टो भृङ्गराजश्च शतावरिपुनर्नवौ।
एते सप्तपला ग्राह्याः प्रत्येकं सूक्ष्मचूर्णिताः ॥७५॥
एतत्क्वाथे पचेत् सम्यक् हरीतक्याः शतत्रयम्।
षष्ठ्याऽधिकं ततः शुष्कं गव्यदुग्धेन पाचयेत् ॥७६॥
शोषयित्वा शनैर्हृत्वा वटिकाभिः प्रपूरयेत्।
रसस्य त्रिपलं दत्त्वा गन्धके त्रिपलात्मके ॥७७॥
पक्त्वाऽथ पातयेत् पत्रे चूर्णयित्वा ततः पुनः।
गुडूचीसत्त्वमादाय शुभ्रं सत्त्वं पलाष्टकम् ॥७८॥
चूर्णयित्वा ततः सर्वं मधुना गुटिकाः किरेत्।
तास्तु सूत्रे समाबद्धा मधुभाण्डे विनिक्षिपेत् ॥
एकैकां भक्षयेन्नित्यं शुष्कपाण्डुविनाशिनीम् ॥७९॥

---

पाण्डुघनानिलरसे—वह्नितोयपरिमर्दितं चित्रकमूलक्वाथमर्दितम्। यामपादं प्रहरस्य चतुर्थांशपरिमितकालम्। शोफेति।—शोफपाण्डुः सशोथपाण्डुः. घनपङ्कः गाढकर्दम इव, तस्य शोषणः ॥ ७३।७४ ॥

पाण्डुहारिहरीतक्यां—कुरण्टः सितपुष्पा झिण्टी, तस्यायमिति कौरण्टः कुरण्टमूलमित्यर्थः। कौरण्टमिति भवितुमुचितत्वेऽपि यत् कौरण्ट इति पुंलिङ्गनिर्देशः कृतः तत् लिङ्गमशिष्टमिति लिङ्गे अनादरात्; एवं पला इत्यत्रापि। हृत्वा आहृत्य इत्यर्थः। वटिकाभिः शुष्कीभूताभ्यां क्वाथदुग्धाभ्यां कृताभिरित्यर्थः। प्रपूरयेत्, हरीतकीरिति शेषः। पक्त्वा रसपर्पटीवत् पक्त्वेत्यर्थः। पत्रे कदलीपत्रे, गोमयोपरि विन्यस्ते इति शेषः। किरेत् मिश्रयेदित्यर्थः। शुष्कपाण्डुविनाशिनीं चिरोत्पन्नत्वात् खरीभूतपाण्डुनाशिनीमित्यर्थः। कौरण्टादीनां प्रत्येकं सप्तपलानि चूर्णानि अष्टगुणतोये पक्त्वा पादावशेषे तस्मिन् हरीतकीनां निरस्थ्नां षष्ट्यधिकं शततयं पचेत्, शुष्कीभूते च द्रवे क्वाथतुल्येन गव्यदुग्धेन पुनः पचेत् आदुग्धशोषात्, ततः घनीभूतं ं समाहृत्य स्वल्पा वटिकाः कृत्वा हरीतक्यन्तः ताः

अथ पित्तपाण्डुरिगुटिका।—

रसस्य भागाश्चत्वारो लोहस्य द्वौ प्रकीर्त्तितौ।
वह्निमुस्ताविडङ्गानां त्रिकटुत्रिफलस्य च ॥८०॥
भागास्त्वनेकशो ग्राह्या: कुटजस्य तथाऽपर:।
चूर्णयित्वा तत: सर्वं मधुना गुटिका: किरेत् ॥
एकैकां भक्षयेत् प्रात: पित्तपाण्डुपनुत्तये ॥८१॥

अथ त्रैलोक्यसुन्दर:।—

रसगन्धकलोहाभ्र-गुडूचीसत्त्वसूकर:।
त्रिफलाशिग्रुमूलानि भृङ्गसारेण भावयेत् ॥८२॥
त्रैलोक्यसुन्दर: सोऽयं सघृतक्षौद्रशर्कर:।
मृगाङ्कवत् पथ्यभुज: पाण्डुशोफं नियच्छति ॥८३॥

अथ पाण्डुशोथे त्रिनेत्ररसस्य प्रयोगविधि:।—

युत: किञ्चिद्घृतक्षौद्र-गुड़तिन्तिरिगुग्गुलै:।
त्रिनेत्राख्यो रसो योज्य: शोफे तोयानुपानत: ॥८४॥

प्रपूरयेत्। तत: त्रिपलरसगन्धयो: कज्जलीं कृत्वा रसपर्पटीवत् पाकं कुर्य्यात्। अनन्तरं विचूर्णितया अष्टपलेन शुष्कगडूचीसारेण मधुना च सह मर्दितया तया पर्पट्या ता: हरीतकी: लिम्पा सूत्रेण बद्धा च मधुभाण्डे निक्षिप्य स्थापयेत् इति ॥ ७५—७९ ॥

पित्तपाण्डुरिगुटिकायां—रसस्य रससिन्दूरस्य। भागास्त्वनेकश: वह्न्यादीनां प्रत्येकं वौ द्वौ भागौ इत्यर्थ:, लौहभागसाहचर्य्यात। कुटजस्य तथाऽपर: द्वावेव भागावित्यर्थ:। गुटिका: किरेत् कुर्य्यादित्यर्थ: ॥ ८०।८१ ॥

त्रैलोक्यसुन्दरे—सूकर: ग्रन्थिपर्ण:। भृङ्गसारेण भृङ्गराजद्रवेण। मृगाङ्कवत् पथ्यभुज: मृगाङ्करसे यानि पथ्यान्युक्तानि, तद्वत् पथ्यभुजो जनस्येत्यर्थ: ॥ ८२।८३ ॥

अनुपानविशेषेण त्रिनेत्ररसस्यापि पाण्डुशोफे प्रयोज्यतामाह, युत इति।— तिन्तिरि: जैपालबीजम्। त्रिनेत्राख्यो रस: शूलाधिकारोक्त:। शोफे पाण्डुशोथे। शूलाधिकारोक्तं त्रिनेत्ररसं युक्त्या किञ्चित् घृतादिभि: सह सेवित्वा तोयानुपानं कुर्य्यात् इति ॥ ८४ ॥

अथ विजया गुटिका।—

पलत्रयं हरीतक्याश्चित्रकस्य पलत्रयम्।
एलात्वक्पत्रमुस्तानां भागोऽर्द्धपलिको मतः॥८५॥
रेणुकार्द्धपलं प्रोक्तं तदर्द्धं नागकेशरम्।
व्योषञ्च पिप्पलीमूलं विषञ्च पलमात्रकम्॥८६॥
समः पलो महागन्धः सूक्ष्मचूर्णानि कारयेत्।
पुरातने गुड़े पक्के तुलार्द्धे तद्विनिक्षिपेत्॥८७॥
हिमस्पर्शन्तु गृह्णीयात् घृतेनाक्ता करं बुधः।
बदरास्थिप्रमाणेन विजया गुटिका मता॥
निशायां खादयेदेनां शोफपाण्डुविनाशनीम्॥८८॥

अथ टङ्कणादियोगः।—

टङ्कणं मेघनादञ्च भक्षयेद्विषशान्तये॥८९॥

अथ जयपालरसः।—

रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलुम्।
समांशमाज्यसंयुक्तां गुटिकां कारयेन्मिताम्॥
एकैकां खादयेद्वैद्यः शोफपाण्डुपनुत्तये॥९०॥

अथ देवदारुपञ्चाङ्गप्रयोगः।—

देवदार्व्यास्तु पञ्चाङ्गं चूर्णं क्षीरेण वा जलैः।
निष्कमात्रं पिबेन्नित्यं मासात् पाण्डुगदापहम्॥९१॥

---

विजयागुटिकायां—भागोऽर्द्धपलिक इति प्रत्येकमर्द्धपलमानमित्यर्थः। तदर्द्धं नागकेशरं कर्षमात्रं नागकेशरम्। पलमात्रकमिति प्रत्येकं, व्योषादीनां पृथङ्निर्देशात्। महागन्धः नवनीताख्यगन्धकः। विनिक्षिपेदित्यत्र चासन्नपाके इति शेषः॥८५—८८॥

टङ्कणादियोगे—मेघनादं तण्डुलीयमूलम्। विषशान्तये शत्रुप्रयुक्तगरदोषशान्तये इत्यर्थः, तस्य च पाण्डुशोथोदरादिहेतुत्वात्॥ ८९ ॥

जयपालरसे—मितां वयोबलाद्यनुरूपां मात्रामित्यर्थः। प्रयोगेऽस्मिन् शीतलजल-मज्जनं वर्जनीयं, रसेन्द्रचिन्तामणि-रसेन्द्रसारसङ्ग्रहसंवादात्। तत्र तत्र चास्य पाण्डु-सूदनरस इति संज्ञा॥ ९० ॥

अथ कामलालक्षणम् ।—

दग्धमांसरुधिरास्रपित्ततः कामला भ्रमतृषाविदाहिनी ।
पीतनेत्रमलवत्युपेक्षया शोफयुग्भवति कुम्भकामला ॥९२॥

अथ अपामार्गादियोगः ।—

अपामार्गं शमीमूलं पिष्ट्वा तक्रेण पाययेत् ।
कामलां श्वयथुं पाण्डुं कर्षमात्रं नियच्छति ॥९३॥

अथ पञ्चाम्यरसः ।—

तीक्ष्णमाक्षिककान्ताभ्र-शुल्वसूतकतालकम् ।
देवदालीरसैः पिष्टं वालुकायन्त्रमूर्च्छितम् ॥९४॥
अमृतोत्पलकह्लार-कन्दद्राक्षासमन्वितम् ।
पिष्टं यष्ट्यम्भसा क्षौद्र-सिताभ्यां कामलाप्रणुत् ॥९५॥

देवदालीपञ्चाङ्गप्रयोगे—देवदाल्याः पीतघोषायाः पञ्चाङ्गं त्वक्पत्रपुष्पमूलफलरूपम् । क्षीरैश्च वा मलैरिति व्यक्त्यपेक्षया बहुत्वम् ॥ ९१ ॥

पाण्डुतोऽपि कामला जायते इति पाण्डुनन्तरं कामलाचिकित्सिते वक्तव्ये पूर्वं तस्याः लक्षणमाह, दग्धेति ।—दग्धात् पाण्डुरोगावस्थायामत्यर्थपित्तकरद्रव्यसेवनात् वर्द्धितपित्तेन दुष्टादित्यर्थः, मांसरुधिरास्रपित्ततः मांसात् रुधिरात् दुष्टात् केवलरक्तात् तथा अस्रपित्ततः दुष्टात् सपित्तात् रक्तादित्यर्थः । उपेक्षयेति कामलोपेक्षया कुम्भकामला भवति, सा च शोफयुक् शोथसमन्विता । कुम्भः कोष्ठः, अन्तश्छिद्रसाधर्म्यात्, तद्गता कामला कुम्भकामला कोष्ठाश्रयेत्यर्थः ॥ ९२ ॥

अपामार्गादियोगे—सर्वं सुगमम् ॥ ९३ ॥

पञ्चाम्यरसे—तीक्ष्णं तीक्ष्णलौहम् । कान्तं कान्तलौहम् । वालुकायन्त्रमूर्च्छितं वालुकायन्त्रे पक्वमित्यर्थः, स च पाकः दिवसत्रयं कार्य्यः ; तथा च रसरत्नाकरे—"पाचयेत् वालुकायन्त्रे त्रिदिनान्ते समुद्धरेत्" इति । अमृता गुडूची धात्री वा, कह्लारं कोकनदम्, उत्पलकह्लारयोः कन्दः ; यद्वा—कन्दः कसेरुणम् । अत्र अमृतादीनां मिलित्वा पलमानता, रसरत्नाकरसंवादात् ; यद्यपि तत्र "अमृतोत्पलकह्लारकन्दद्राक्षासमन्वितम्" इत्यत्र "अमृतोत्पलकन्दातिबलाचैवपलं युतम्" इति पाठभेदः, तथाऽपि अन्याङ्गसामान्यात् पलमानता ज्ञातव्या । वालुकायन्त्रे पक्वमौषधमुद्धृत्य अमृतादिभिः संयोज्य च यष्टिमधुक्वाथेन पिष्ट्वा क्षौद्रशर्कराभ्यामुपयोक्तव्यमित्याशयः ॥ ९४।९५ ॥

अथ त्रियोनिः।—

ताम्रस्य तुर्य्यभागेन रसेनोत्प्लुत्य लेपयेत्।
निम्बद्रावेण संयोज्य सूर्य्यतापे विनिक्षिपेत् ॥९६॥
ऊर्द्धाधो गन्धकं दत्त्वा पाचयेदतियत्नतः।
मल्ल्याश्चीमभितो दत्त्वा मृत्स्नया सन्निरुध्य च ॥९७॥
यामद्वयन्तु पक्वञ्च स्वाङ्गशीतं समुद्धरेत्।
गुञ्जामात्रं ददीतास्य साभयं गुडसंयुतम् ॥
त्रियोन्याख्यो रसो ह्येष शोफपाण्डुपनोदनः ॥९८॥

अथ मुस्तादिचूर्णम्।—

मुस्तामृताचित्रकयष्टिपिप्पली-विडङ्गशुण्ठीत्रिफलैर्यथोत्तरम्।
चूर्णं सहायोरजसा च संयुतं समाक्षिकं पाण्डुगदापहं परम् ॥९९॥

अथ कामेश्वरः।—

पलं सूतं पलं गन्धं वज्री पथ्या त्रयं त्रयम्।
मुस्तैलापत्रकाणाञ्च प्रति सार्द्धपलं क्षिपेत् ॥१००॥

---

त्रियोनौ—तुर्य्यभागेन चतुर्थांशेन रसेन ; रसशब्देनात्र रसगन्धकयोः कज्जली विवक्षिता, केवलरसेन लेपासम्भवात् ; ताम्रस्य, पत्राणीति शेषः, लेपयेत्, ततः निम्बद्रवेण उत्प्लुत्य आप्लुत्येत्यर्थः, सूर्य्यतापे संयोज्य स्थापयित्वा, संशोष्य इत्यर्थः, विनिक्षिपेत्, मूषायामिति शेषः। मल्ल्याश्ची हिलमोचिका काकमाची वा। चतुर्थांशकज्जलिकया ताम्रस्य पत्राणि आलिप्य जम्बीररसेनाप्लुत्य च आतपे शोषयेत् ; ततो मूषायां संस्थाप्य ऊर्द्धाधो गन्धकं समन्तात् चूर्णं मल्ल्याश्चीञ्च दत्त्वा मृत्कर्पटे-नालिप्य च गजपुटे यामद्वयं पचेत्, अथ स्वाङ्गशीतमादाय गुडाभयाभ्यां गुञ्जामात्रमौषधं दद्यादिति। त्रीणि रसगन्धकताम्राणि योनयः उपादानकारणान्यस्य इति त्रियोनिः ॥ ९६—९८ ॥

मुस्तादिचूर्णे—यथोत्तरं चूर्णमिति उत्तरोत्तरभागवृद्धं चूर्णम्। सहायोरजसा च संयुतं सर्वचूर्णतुल्यं लौहचूर्णमित्यर्थः, "सर्वांशं मृतलौहकम्" इति रसरत्नाकर-दर्शनात् ; तत्र च "यथोत्तरम्" इत्यत्र "समम्" इति पाठः "लौहामृतम्" इति संज्ञा च दृश्यते ॥ ९९ ॥

कामेश्वरे—वज्री स्नुही, तस्याः क्षीरं ग्राह्यम्। त्रयं त्रयमित्यस्य वज्रीपथ्ययोः प्रत्येकं

ऊषणं पिप्पलीमूलं विषञ्चैव पलं पलम् ।
नागकेशरकर्षैकं रेणुकार्द्धपलं तथा ॥१०१॥
पुरातनगुडेनैव तुलार्द्धेन विपाचयेत् ।
मर्दयेत् कन्यकाद्रावैर्यामैकान्ते घृतेन च ॥१०२॥
गुटिकां बदराभान्तु कारयेद्भक्षयेन्निशि ।
शोफपाण्डुहर: सोऽयं रस: कामेश्वर: स्वयम् ॥१०३॥

अथ पाण्डुघ्नानिलरस: ।—

ताम्रभस्म रसभस्म गन्धकं वत्सनाभमथ तुल्यभागत: ।
वह्नितोयपरिमर्दितं पचेद्यामपादमथ मन्दवह्निना ॥१०४॥
रक्तिकाद्वितयमानतोऽनिलान् शोफपाण्डुघनपङ्क्तिशोषण: ॥१०५॥

---

पलत्रयमित्यर्थ:। "त्र्यूषणं पथ्या त्रयं त्रयम" इत्यत्र "पथ्याचित्रकयो: पलम्" इति रसेन्द्रसारसङ्ग्रहे पाठ:। ऊषणमिति।—ऊषणस्य प्रत्येकं पलमानता। कन्यकाद्रावै: कुमारीरसै:। यामैकान्ते कन्यकाद्रावै: प्रहरं मर्दयित्वा तदन्ते इत्यर्थ:। "रेणुकार्द्धपलं तथा" इत्यत्र "एरण्डस्य पलं तथा" इति तथा "तुलार्द्धेन विपाचयेत...घृतेन च" इत्यत्र "तुल्येनैव विमिश्रयेत्। मर्दयेत् कनकद्रावैर्यामैकं वा घृतान्वितम्" ("भावयेच्च घृतान्विताम्") इति रसेन्द्रसारसङ्ग्रह-रसरत्नाकरयो: पाठान्तरम्। गुडपाकाभिज्ञो भिषक् सपादशरावषट्कं गुडमादाय किञ्चित् जलं दत्त्वा पचेत्, घनीभूते च तस्मिन् आसन्नपाके सूतादिकं दत्त्वा अवतारयेत्। अनन्तरं कुमारीरसेन यामं मर्दयित्वा तदन्ते घृतेन सह बदरास्थिनिभां वटीं कुर्यात् इति ॥ १००—१०३ ॥

ताम्रभस्मेति।—पाण्डुघ्नानिलरसनामाऽयं प्रागेव (७३।७४) श्लोके व्याख्यात:। पुनरुक्तोऽयम्; अथवा—वक्ष्यमाणकंसादिपञ्चकेन सह प्रयुक्तोऽयं श्लीपदहृत् भवतीति ज्ञापनार्थमस्य पुनरुल्लेखो न दोषाय इति मन्तव्यम्। अस्मिन् पक्षे कंसादिपञ्चकेन सह एक एवायं योग:, तथा च कंसेन मृतेन कांस्येन शिलया मन:शिलया च सहित: पिष्ट: मर्दित: रस: अनिलरस: पाचित: पुन: पुटपाकेन पक्व: इताभ्यां तीक्ष्णताम्राभ्यां लौहताम्रभस्मभ्यां युत: श्लीपदं हन्ति ॥ १०४।१०५ ॥

अथ कंसादिपञ्चकम्।—

कंसेन पिष्टः शिलया सहितः पाचितो रसः।
हताभ्यां तीक्ष्णताम्राभ्यां युतो हन्ति हलीमकम् ॥१०६॥

अथ सिन्दूरभूषणः।—

शुद्धसूतञ्च सिन्दूरं पलैकैकं विमर्दयेत्।
वासारसेन यामैकं तेन कुर्य्याच्च चक्रिकाम् ॥१०७॥
सुपक्कां कारयेन्मूषामुत्तानां द्वादशाङ्गुलाम्।
तन्मध्ये गन्धकं शुद्धं क्षिपेत् पलचतुष्टयम् ॥१०८॥
पूर्वोक्तां चक्रिकां कृत्वा तत् क्षिप्त्वा प्रपुटेल्लघु।
जीर्णे गन्धे समुद्धृत्य चक्रिकां तां विचूर्णयेत् ॥१०९॥
चूर्णाद्दशगुणं योज्यं मृतलौहञ्च मर्दयेत्।
लशुनेन दशांशेन चणमात्रा वटीः किरेत् ॥११०॥
वातपाण्डुहरः सिद्धो रसः सिन्दूरभूषणः।
पिबेच्चानु ह्यपामार्गस्यैरण्डस्य च मूलिकाम् ॥
तक्रैः पिष्ट्वाऽथ कर्षैकं हन्ति पाण्डुं सकामलम् ॥१११॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये उदरपाण्डु-शोफकामलाकुम्भकामलाहलीमकचिकित्सितं नामैकोनविंशोऽध्यायः ॥१९॥

---

कंसादिपञ्चके—रसः पारदः. एतत्तु अस्य स्वतन्त्रयोगत्वे एव बोद्धव्यम्। अन्यत्तु पूर्वयोगे व्याख्यातमिति ॥ १०६ ॥

सिन्दूरभूषणे—सिन्दूरं प्रसिद्धम्। "सुपक्काम्" इत्यत्र "अपक्काम्" इति रसरत्नाकरोक्तः पाठः। उत्तानाम उन्नतां विस्तृतां वा। जीर्णे भस्मीभूते ॥१०७—१११॥

इति रसरत्नसमुच्चयबोधिन्याम् एकोनविंशोऽध्यायः ॥ १९ ॥

# अथ विंशोऽध्यायः।

## अथ विसर्पादिचिकित्सनम्।—

### अथ विसर्पकुष्ठाग्निदग्धचिकित्सा।—

#### अथ कालाग्निरुद्ररसः।—

कान्तगन्धकतीक्ष्णाभ्र-विषताप्यसमन्वितः।
वन्ध्याकर्कोटिकाकन्दे पक्वः सूतो विसर्पजित् ॥१॥

#### अथ एरण्डबीजादि तैलम्।—

एरण्डतुम्बिनीनिम्ब-वाकुचीचक्रमर्दकम्।
तिक्तकोशातकीबीजमङ्कोलस्याक्षबीजकम् ॥२॥

---

शोथत्वसामान्यात् रक्तदुष्टसामान्याच्च उदराद्यनन्तरं विसर्पादिचिकित्सितं वक्तुं विंशाध्यायमारभते। तत्र कालाग्निरुद्ररसे—वन्ध्याकर्कोटिकाकन्दे वन्ध्याकर्कोटकी तिक्तकर्कोटकी, "तित् काँकड़ो" "तित् काँक्रोल" इति लोके; तस्याः कन्दे कन्दोत्थकल्के इत्यर्थः। पक्व इति भूधराख्यपुटे पक्वः, तन्त्रान्तरेषु तथा दर्शनात्। तत्रायं विधिः,—आदौ रसगन्धकयोः कज्जलीं कृत्वा कान्तादिकं तत्र दत्त्वा च सम्मर्दयेत्. ततः वन्ध्याकर्कोटिकाकन्दकल्कोदरे संस्थाप्य मृदा आलिप्य॰ च भूधर-पुटे दिनैकं पक्त्वा उचितानुपानेन प्रयुञ्ज्यादिति। रसेन्द्रसारसङ्ग्रहादिषु चायं किञ्चित् वैषम्येण पठितः; तथा च "सूताभ्रकान्तलौहानां भस्म गन्धकमाक्षिकम्। वन्ध्याकर्कोटकाद्रावैस्तुल्यं मर्द्यं दिनावधि॥ वन्ध्याकर्कोटिकाकन्दे क्षिप्त्वा लिप्त्वा मृदा बहिः। भूधराख्ये पुटे पश्चाद्दिनैकं तद्विपाचयेत्॥ दशमांशं विषं योज्यं माषमात्रन्तु भक्षयेत्। रसः कालाग्निरुद्रोऽयं दशाहेन विसर्पनुत्॥ पिप्पलीमधु-संयुक्तमनुपानं प्रकल्पयेत॥" इति। प्रचारस्तु इत्थमेव॥ १ ॥

एरण्डबीजादितैले—तुम्बिनी कटुतुम्बी। वाकुची सोमराजी। तिक्तकोषातकी तिक्तघोषकः। बीजमिति पदम् एरण्डादिभिः कोशातक्यन्तैः सर्वैः सम्बध्यते। अङ्कोलः अङ्कोठ., तस्य बीजम्। अक्षुः क्षुद्रक्षुः, "घेँचको" इति प्रसिद्धः

गोमूत्रदधिदुग्धैस्तु भावयेत्तिलजेन च ।
मूत्रेणाजाप्रसूतेन तैलं पातालयन्त्रजम् ॥
विसर्पं नाशयत्याशु श्वेतकुष्ठञ्च तत्क्षणात् ॥ ३ ॥

अथ द्वितीयैरण्डबीजादि तैलम् ।—

एरण्डतुम्बीकटुबिम्बचक्र-मर्दोत्थबीजानि च सोमराजी ।
अङ्कोलबीजानि समानि कृत्वा पातालयन्त्रेण सुतैलमेषाम् ॥४॥
प्रगृह्य तेनाथ विमर्दयेत विसर्पकादीनि क्षतं प्रयान्ति ॥५॥

अथ गलत्कुष्ठलक्षणम् ।—

पादयोः श्वयथुस्तोदो गलन्त्यङ्गुलयो यदि ।
नासिकास्वरयोर्भङ्गो गलत्कुष्ठस्य लक्षणम् ॥६॥

अथ कुष्ठेषु क्रियासूत्रम् ।—

सर्वेषां कुष्ठिनामादौ पञ्चकर्माणि कारयेत् ।
पक्षे पक्षे च वमनं मासि मासि विरेचनम् ॥७॥

---

शाकविशेषः तस्याः बीजकम् । तिलजेन तिलतैलेन तिलक्वाथेन वा । मूत्रेणाजाप्रसूतेन छागीमूत्रेण । पातालयन्त्रजं पातालयन्त्रे निष्कासितम् । "तत्क्षणात्" इत्यत्र "सक्षणात्" इति पाठान्तरम् । कल्पना चास्य एवंविधा—मनाक् क्षुण्णम् एरण्डादीनां बीजं प्रत्येकं तुल्यांशं गृहीत्वा गोमूत्रादिभिः सप्त सप्तवारान् भावयेत । ततो भूम्यधोनिहितस्नेहभावितस्थालीमुखे बहुच्छिद्रां स्थालीमन्यां संस्थाप्य तन्मध्ये औषधं निदध्यात्, ततः शरावेण स्थालीमुखमाच्छाद्य मृद्वस्त्रादिना सन्धिं निरुध्य च उपरिष्टात् पुटं दद्यात् । एवञ्च अग्निसन्तापेन तस्मादौषधात् तैलं निःसृत्य अधःस्थाल्यां निपतेदिति ॥२।३॥

द्वितीयैरण्डबीजादितैले—तुम्बीकटु कटुतुम्बी, रोहिणीकटुका इत्यादिवत् परनिपातः; यद्वा—कटु इति पृथक् पदं, राजिका इत्यर्थः । बिम्बम् ओष्ठोपमाफलम्; "बिम्ब" इत्यत्र "निम्ब" इति पाठान्तरम् । विमर्दयेत इति महाजनप्रयोगात् साधु मन्तव्यम् । "क्षतम्" इति "सुतैलम्" इत्यनेन सम्बध्यते; पातालयन्त्रेण क्षतं विहितं, निःसारितमित्यर्थः । तैलनिष्कासनप्रकारस्तु पूर्ववदेव ॥ ४।५ ॥

तुल्यदोषदूष्यत्वात् रक्तदुष्टिसाधर्म्याच्च विसर्पानन्तरं कुष्ठचिकित्सितं विवक्षुरादौ गलत्कुष्ठलक्षणमाह, पादयोरिति ।—सर्वाणि प्रतीतानि ॥ ६ ॥

षष्ठे मासि शिरामोक्षो नस्यं सप्तदिनान्तरे।
इदं चिरस्थिते कार्य्यं कुष्ठे स्वल्पेऽल्पशः क्रिया ॥८॥

अथ वातकुष्ठारिः।—

विपचेद्गन्धकमध्ये घनपिष्टीं शुल्वपिष्टीं वा।
सङ्कोच्य कोलकोऽयं शमयति वातोत्थकुष्ठानि ॥९॥

अथ पित्तकुष्ठारिः।—

कामलाऽभ्रकसङ्कोचो घृतगन्धकपाचितः।
व्योषाग्निवेल्लत्वक्मुस्ता-व्याधिघातविषैः समः ॥१०॥
त्रिगुणः प्राणदो रेणुः पञ्चाशन्मृतकाञ्चनः।
बदरास्थिमितो मूत्रेणाजेन गुटिकीकृतः।
नाशनः पित्तकुष्ठानामेकविंशतिवासरात् ॥११॥

---

क्रियासूत्रमाह, सर्वेषामिति।—पञ्चकर्माणि वमनविरेचनास्थापनानुवासनशिरोविरेचनरूपाणि। शिरामोक्षः दुष्टरक्तस्रावणार्थं कार्य्यः। इदमिति।—चिरस्थिते दीर्घकालोत्पन्ने अत एव बहुदोषे इत्यर्थः, इदं पक्षे पक्षे वमनमित्यादिरूपम्। यदुक्तं चरकेण—"बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्" इति। स्वल्पे अल्पदोषे क्षुद्रे च कुष्ठे अल्पशः क्रिया मासान्ते मासद्वयान्ते वा पूर्वोक्ता क्रिया कार्य्या ॥ ७।८ ॥

वातकुष्ठारौ—घनपिष्टीं मारकवर्गद्रवेण पिष्टं पिण्डीकृतमभ्रमित्यर्थः, शुल्वपिष्टीं वा पूर्वोक्तप्रकारेण सिद्धं ताम्रपिण्डं वेत्यर्थः, गन्धकमध्ये विपचेत् मूषायाम् अधः गन्धकं संस्थाप्य तदुपरि औषधं निधाय पुनर्गन्धकं दत्त्वा च गजपुटे पचेत्। सङ्कोच्य दग्ध्वा इत्यर्थः, दग्धस्य अवयवसङ्कोचात्; सङ्कोच्य इति वातोत्थकुष्ठानि इत्यनेन सम्बध्यते वा, वातोत्थकुष्ठानि सङ्कोच्य अल्पीकृत्येत्यर्थः। कोलकोऽयं कोलकाख्यः अयं योगः, कोलप्रमाणः अयं योगः इति वा ॥ ९ ॥

पित्तकुष्ठारौ—कामलाभ्रकम् अभ्रकविशेषः, मरुदेशजमभ्रं वा; केचित्तु कामलाभ्रकशब्देन पीताभ्रं गृह्णन्ति; तस्य सङ्कोचः भस्म इत्यर्थः। व्याधिघातः आरग्वधः। प्राणदो रेणुः जीवकचूर्णम्; यद्वा—प्राणदः जीवकः, रेणुः रेणुकः, स च व्योषादीनामेकभागसमः। "पञ्चाशत्" इत्यत्र "पञ्चांशम्" इति पाठान्तरम्। घृतगन्धकाभ्यां पाचितस्य कामलाभ्रकस्य भस्म समैः व्योषादिभिः त्रिगुणप्राणदेन

अथ श्लेष्मकुष्ठारिः।—

कनकाभ्रकसङ्कोचस्तैलगन्धकपाचितः।
विषव्योषाब्दवेल्लत्वक् तुल्यस्त्रिगुणचित्रकः॥
गुञ्जामानोऽजमूत्रेण पिण्डितः श्लेष्मकुष्ठनुत्॥१२॥

अथ त्रिदोषकुष्ठारिः।—

तीक्ष्णाभ्रहेमसङ्कोचस्तैलगन्धकपाचितः।
ताम्रताप्यविशालाग्नि-बोलपाठाजटाविषैः॥१३॥
शृङ्गीटङ्कणयष्ट्याह्व-सिन्धुवारैः समन्वितः।
रसेन शृङ्गवेरस्य बद्धो बदरसन्निभः॥
छायाविशोषितः कुष्ठं निहन्यात् सन्निपातजम्॥१४॥

अथ विजयवटिका।—

रेणुका पिप्पलीमूलं वाकुची विषतिन्दुकम्।
अश्वगन्धा पलाशास्थि व्योषादिनवकं वचा॥१५॥
विशाला गन्धकं कुष्ठं सविषं रसभस्म च।
गुड़ेन गुटिकां कुर्य्यात् समेन मधुमिश्रिताम्॥१६॥

पश्चाच्छ्रागस्वर्णभस्मना च संयोज्य छागमूत्रेण पेषयेत्, ततः कोलास्थिमानां गुड़िकां विधाय प्रयोजयेदिति॥ १०।११॥

कफकुष्ठारौ—कनकाभ्रकयोः सुवर्णाभ्रयोः सङ्कोचः। केचित्तु कनकाभ्रक-शब्देन रक्ताभ्रं गृह्णन्ति। कल्पना तु पूर्ववदेव कार्य्या॥१२॥

त्रिदोषकुष्ठारौ—तीक्ष्णं तीक्ष्णलौहम्; केचित्तु तीक्ष्णाभ्रशब्देन कृष्णवर्णवज्राभ्रं गृह्णन्ति। विशाला इन्द्रवारुणी। अग्निः भल्लातः, कुष्ठहरत्वात्। बोलः गन्धरसः, गन्धबोल इति ख्यातः वणिग्द्रव्यविशेषः। जटा जटामांसी, पाठाजटा इत्येकपदं वा, तत्र पाठामूलमित्यर्थः॥ १३।१४॥

विजयवटिकायां—रेणुका कोन्ती। वाकुची सोमराजी। विषतिन्दुकं विषमुष्टिः, "कुँचिला" इति ख्यातम्। पलाशास्थि पलाशबीजम्। व्योषादिनवकं त्रिकटुत्रिफलात्रिमदात्मकं त्रिकत्रयमित्यर्थः। समेन सर्वचूर्णतुल्येनेत्यर्थः, न त्वेकभाग-समेन, "गुड़ेन गुटिकां कुर्य्यात्" इत्युक्त्या एकभागतुल्यस्य गुड़स्य गुटिकाकर-

तां भक्षयेत् सितासर्पिः-क्षीरशाल्यन्नभाग्भवेत् ।
जलौदनं वा भुञ्जानो ब्रह्मचर्य्यपरायणः ॥ १७ ॥
खादेत्तापे सिताधान्य-सर्पिर्नागबलारजः ।
वटिका विजयाख्येयं सप्तकुष्ठान्नियच्छति ॥ १८ ॥

अथ सर्वेश्वरः ।—

पालिकं ताम्रगन्धाभ्रं कर्षांशं लोहपारदम् ।
स्नुह्यर्कक्षीरवातारि-जम्बीराशीरवारिभिः ॥१९॥
मर्दितं वालुकायन्त्रे स्वेदयेत् दिवसत्रयम् ।
कर्षं कणाया निष्कञ्च विषस्यास्मिन् विनिक्षिपेत् ॥
एष सर्वेश्वरः सद्यो गुञ्जामात्रः प्रसुप्तिजित् ॥२०॥

अथ सुप्तिकुष्ठदलनो रसः ।—

गन्धो रसश्च कटुतैलमृतो मृतोऽर्कौ
व्योषाग्निवेल्लविषमेघभयावचाभिः ।
ज्वालामुखीरसविमर्दितमाक्षिकाढ्यः
पिण्डीकृतः शमयति स्थिरसुप्तकुष्ठम् ॥ २१ ॥

---

स्यानुपपत्तेः । जलौदनं जलधौतमन्नम् । "जलौदनम्" इत्यत्र "यवौदनम्" इति पाठः समीचीनः । तापे औषधसेवनजनितोष्मायाम् । नागबला गोरक्षतण्डुला । धान्यनागबलाचूर्णं शर्कराघृताभ्यामालोड्य लिह्यात् । सप्तकुष्ठान् सप्तमहाकुष्ठानीत्यर्थः ॥ १५—१८ ॥

सर्वेश्वरे—पालिकमिति ताम्रादीनां त्रयाणां प्रत्येकं पलमानता । एवं लोहपारदयोरपि प्रत्येकं कर्षांशता । वातारिः एरण्डमूलम् । प्रसुप्तिजित् सुप्तिकुष्ठनाशनः ॥ १९।२० ॥

सुप्तिकुष्ठदलनरसे—कटुतैलमृतः कटुतैलपक्कः सार्षपतैले शोधित इत्यर्थः, अर्क इत्यस्य विशेषणम्; ताम्रपत्राणि अग्नौ प्रताप्य कटुतैले निषिञ्चेत्, एवञ्च कटुतैलमृतः अर्कौ निष्पद्यते । अग्निः चित्रकः भल्लातको वा । वेल्लं विडङ्गम् । मेघः मुस्तकम् । भया अभया इत्यर्थः, "नामैकदेशग्रहणेन नामसमुदायग्रहणम्"

अथ प्रतापलङ्केश्वरः।—

विषादिकाग्नी रसगन्धटङ्कणं सताम्रकुष्ठायसपिप्पलीरजः।
विमर्दितं काञ्चनपत्रवारिणा प्रतापलङ्केश्वरसंज्ञितो रसः ॥२२॥

अथ किटिमारितैलम्।—

सुह्याः कुडवं पयसः प्रस्थं दुग्धस्य नारिकेलस्य।
गन्धकनिशयोः कर्षं पारदकर्षञ्च साधु संयोज्यम् ॥२३॥
खरतरकिरणातापात् पक्वं तैलं विलेपितं प्राज्ञैः।
कुष्ठकिटिमेऽपहन्ति प्रबलञ्च समीरणं हन्यात् ॥ २४ ॥

अथ सिध्मे गन्धपाषाणलेपः।—

मर्दितो मूलकक्षारस्याऽऽर्द्रकस्य च वारिणा।
अमयेद्गन्धपाषाणः पिष्टः सिध्मं विलेपनात् ॥ २५ ॥

---

इति न्यायात्। "विषमेघभया" इत्यत्र "विषमेदभया" इति पाठे—भेदी चक्रवेतसः। ज्वालामुखी लाङ्गली, तस्याः रसः। पिण्डीकृतः गुडीकृत इत्यर्थः ॥ २१ ॥

प्रतापलङ्केश्वरे—काञ्चनपत्रवारिणा धुस्तूरपत्ररसेन ; तथा च रसरत्नाकरे—"भस्म सूताभ्रलोहानां कृत्वा गन्धकटङ्कणम्। कुष्ठतुल्यकतुल्यांशं मर्द्यं धुस्तूरजैर्द्रवैः ॥ दिनैकं मदर्टीं कुर्यात् माषमात्रञ्च भक्षयेत। रसो लङ्केश्वरो नाम्ना प्रसुप्तमण्डलप्रणुत् ॥ गन्धकं त्रिफलाचूर्णं निर्विषीं गुग्गुलुं समम्। लिहेद्दैरण्डतैलेन कर्षैकमनुपानकम् ॥" इति। तत्रायं "लङ्केश्वररसः" इति ख्यातम् ॥ २२ ॥

किटिमारितैले—गन्धकनिशयोः प्रत्येकं कर्षः। खरतरकिरणातापात् खरतरकिरणः सूर्यः तस्य आतापात् सम्यक् तापात्। तैलं सार्षपं, कुष्ठहितत्वात्; तैलञ्चात्र प्रस्थमितं ग्राह्यम्, "अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते" इति परिभाषाबलात्। अस्य पक्वौ—कटुतैलं १ प्र० सुह्यीक्षीरं ४ प० नारिकेलक्षीरं १ प्र० निशागन्धकपारदानां प्र० १ क० आद्रवक्षयात् रौद्रसन्तापे स्थापनीयम् इति ॥ २३।२४ ॥

गन्धपाषाणलेपे—वारिणा इति पदं मूलकक्षारस्य आर्द्रकस्य च इत्युभयत्रापि सम्बध्यते; मूलकभस्मकृतक्षारोदकेन आर्द्रकस्वरसेन च। गन्धपाषाणः गन्धकः ॥ २५ ॥

अथ सिध्मे वराटिकालेपः।—

वराटपिष्टी जम्बीरनीराद्रा वाऽऽतपे धृता ॥ २६ ॥

अथ दद्रुकुष्ठे मयूरक्षारादिलेपः।—

मयूरमोचकक्षारं मेषशृङ्गीरसो रसः।
विचारहिनिशाव्योष-शुल्वं लेपेन दद्रुजित् ॥२७॥

अथ चर्मकुष्ठे पर्पटीरसप्रयोगविधिः।—

चतुर्थांशेन ताम्रस्य भस्मना मक्तुकेन च।
कृतावापो हरेत् कुष्ठं चर्माख्यं पर्पटीरसः ॥ २८ ॥

अथ चर्मकुष्ठे मेघनादाद्युद्वर्त्तनम्।—

मेघनादामृतानीली-गदाः कृष्णतिला मधु।
अश्वमेधामृतश्वेतैर्युक्ता गन्धककज्जली ॥
उद्वर्त्तनेन षण्मासाद्गजचर्मविनाशनी ॥ २९ ॥

अथ शताकषि रसादिषट्कम्।—

रसगन्धकताप्यार्क-शिलाजत्वम्लवेतसम्।
अष्टमांशगुडं साज्य-माक्षिकं स्याच्छताहषि ॥३०॥

वराटिकालेपे—जम्बीरनीराद्रा जम्बीररससिक्ता वराटपिष्टी वराटकचूर्णम् आतपे धृता, विलेपनात् सिध्मं शमयेत् इति पूर्वेणान्वयः। अत्र वा-शब्दः पूर्वयोगापेक्षया ॥ २६ ॥

मयूरक्षारादिलेपे—मयूरः अपामार्गः मोचकः घण्टापाटला तयोः क्षारम्। रसः रसभस्म ॥ २७ ॥

पर्पटीरसप्रयोगविधौ—पर्पटीरसापेक्षया ताम्रभस्मनः चतुर्थांशता, एवं मक्तुकस्यापि। मक्तुकः विषभेदः, यवसक्तुको वा। कृतावापः कृतप्रक्षेपः मिश्रित इत्यर्थः। पर्पटीरसः "रसं द्विगुणगन्धेन" इत्यादिना रक्तपित्तादिचिकित्सितोक्तः। यथोक्तमानताम्रभस्मादिना मिश्रितः पर्पटीरसः चर्मकुष्ठे प्रयुञ्जीत इत्यर्थः ॥ २८ ॥

मेघनादाद्युद्वर्त्तने—मेघनादः अल्पमारिषः। अमृता गुडूची। नीली नीलवृक्षः। गदः कुष्ठम्। अश्वमेधः करवीरः। अमृतं विषम्। गन्धककज्जली द्विगुणगन्धककृता कज्जलीचूर्णः। गजचर्मविनाशिनी चर्माख्यकुष्ठविनाशिनी ॥२९॥

रसादिषट्के—अष्टमांशगुडमिति मिलितरसादिचूर्णापेक्षया बोध्यम्। साज्य-

अथ कुष्ठविधूननो रसः ।—

हेममाक्षिकगन्धाश्म-तीक्ष्णकान्ताभ्रकं समम् ।
द्विगुणं हरवीर्य्यञ्च दशमांशञ्च सक्तुकम् ॥३१॥
मञ्जिष्ठादिकषायेण वालुकायन्त्रपाचितम् ।
कृष्णवर्णैकसङ्काशमिदं भस्मैव कुष्ठजित् ॥ ३२ ॥

अथ मञ्जिष्ठादिगणः ।—

मञ्जिष्ठाघनदारुकुष्ठखदिर-श्रेष्ठावचावाकुची
पाठापर्पटराजवृक्षकटुका-यष्ट्याह्वमूर्वानिशा ।
त्रायन्तीकिटिमारवेल्लवृषकं निम्बामृतावत्सकं
काकोली सदुरालभा च परमं कुष्ठक्षयघ्नो गणः ॥३३॥

अथ सिध्मोडुम्बरघ्नं कङ्गुणीतैलम् ।—

आरग्वधरसो गुञ्जा-वाकुचीगन्धकं त्रयैः ।
सरसैः कङ्गुणीतैलं जयेत् सिध्ममुडुम्बरम् ॥३४॥

अथ पामारि तैलम् ।—

विपक्वा कटुतैलेन पामाह्वन्त्यपिष्टिका ॥३५॥

---

माक्षिकं यावद्ग्रामाज्यमाक्षिकाभ्यां मर्दनार्हता जायते, तावन्मानमाज्यमाक्षिक-मित्यर्थः । श्वेताकृष्णि तदाख्यकुष्ठविशेषे । भक्षणविधया योज्योऽयम् ॥३०॥

कुष्ठविधूननरसे—दशमांशञ्च सक्तुकमिति एकभागापेक्षया दशमांशता । सक्तुकं विषभेदः यवशक्तुः वा । मञ्जिष्ठादिकषायेण मञ्जिष्ठाघनेत्यादिना वक्ष्यमाण-कषायेण । कृष्णवर्णैकसङ्काशं कृष्णवर्णमित्यर्थः । अयमपि भक्षणविधया प्रयोज्यः ॥३१।३२ ॥

मञ्जिष्ठादिगणे—श्रेष्ठा त्रिफला । राजवृक्षः आरग्वधः । त्रायन्ती त्रायमाणा । किटिः वाराहीकन्दः । मारः धुस्तूरः । वेल्लः विडङ्गः । वत्सकः इन्द्रयवः ॥३३॥

कङ्गुणीतैले—आरग्वधरसः आरग्वधमूलक्वाथः, स च स्नेहचतुर्गुणः । गुञ्जा-वाकुचीगन्धकरसानां चतुर्णां कल्कः स्नेहपादिकः । कङ्गुणी तृणधान्यविशेषः, तस्य तैलं, तच्च प्रस्थम् । उडुम्बरं कुष्ठविशेषम् ॥ ३४ ॥

पामारितैले—विपक्वा आदित्यकिरणपक्वा इत्यर्थः ; तथा च सिद्धयोगे—"पिबति सकटुतैलं गन्धपाषाणचूर्णं रविकिरणसुतप्तं पामलो यः पलार्द्धम् । त्रिदिन-

अथ तालेश्वरः।—

हरितालपले द्वे द्वे टङ्कणे रसगन्धयोः।
कुकुंटीपत्रसारेण पिष्टं ताम्रमयोरजः ॥३६॥
पञ्चशो मर्दितं धात्री-कुकुंटीरसमार्द्रकैः।
वर्षाभूचित्रपत्राढ्यं मूषागर्भे निवेशितम् ॥३७॥
पाचितं भूधरे संस्थं पर्णखण्डेन भक्षयेत्।
हिङ्गुजम्बीरवातारि-तैलैः पवनपीडितैः ॥३८॥
माषकमारमिन्धत्थ-वचाव्योषैर्घृतौजसि।
शोफे भल्लाम्बुना कुष्ठे घृतेन पयसाऽथवा ॥३९॥
धारोष्णेनाऽऽर्द्रकस्यास्तु कामलायां रसेन च।
रसस्तालेश्वराख्योऽयं सर्वकुष्ठहरः परम् ॥४०॥

तदनुमितः चौरभोगी च शीघ्रं भवति कनकदीप्त्या कामयुक्तो मनुष्यः॥" इति। गन्धपिष्टिका गन्धपाषाणचूर्णम्। त्रिभिर्दिनैः पलार्द्धं पातव्यमिति केचित; व्यवहारस्तु शोधितगन्धकचूर्णस्य माषकचतुष्टयं कटुतैलस्य च कर्ष एक इति। एतेन गात्रं मर्दयित्वा प्रभूतदुग्धपायी भवेत् निवाताातपे च तिष्ठेदित्युपदेशः॥ ३५॥

तालेश्वरे—द्वे टङ्कणे रसगन्धयोरिति मिलित्वा। टङ्कणं कोलः; एवञ्च रसगन्धयोः प्रत्येकं तोलकं ग्राह्यम्। कुकुंटीपत्रसारेण कुकुंटी कुकुन्दरः, "कुकशिमा" इति प्रसिद्धं, तस्याः पत्ररसेन। ताम्रायोरजसोरपि रसगन्धसाहचर्यात् द्वे टङ्कणे। पञ्चशः पञ्च पञ्च वारान्। वर्षाभूचित्रपत्राढ्यं वर्षाभूः पुनर्नवा, चित्रः चित्रकः एरण्डो वा, तत्पत्राढ्यं पत्रबहुलम्। पवनपीडितैः वातरोगिभिः। "पवनपीडितैः" इत्यत्र "पवनपीडिते" इति पाठः समीचीनः। आर्द्रकस्यास्तु इत्यत्र अस्तु क्रियापदं, कामलायामार्द्रकरसेन प्रयुक्तो भवतु इत्यर्थः। हरितालपलद्वयं रसगन्धकयोः तथा कुकुंटीपत्ररसेन पिष्टयोः मारितयोश्च ताम्रायोरजसोः प्रत्येकं कर्षार्द्धं धात्र्यादिभिः पञ्च पञ्च वारान् भावयित्वा गोलकं कुर्य्यात्, ततः प्रभूतवर्षाभूचित्रपत्राभ्यां समावेश्य मूषायां निबध्य च भूधरपुटे पचेदिति निष्कर्षः॥ ३६—४०॥

अथ महातालेश्वरः।—

तालताप्यशिलाटङ्क-रसेन्द्रलवणं समम्।
तालकाद्द्विगुणं ताम्रं मृतं तद्वच्च गन्धकम् ॥४१॥
अम्लेन पञ्चशः पिष्टं जम्बीरस्य पुटे पचेत्।
मदनेन वमिं कुर्य्याद्विरेकं पथ्ययाऽपि च ॥४२॥
लोहचूर्णस्य चत्वारो भागाः सिद्धरसस्य षट्।
अष्टौ नेपालताम्रस्य गन्धकेन हृतस्य च ॥४३॥
जम्बीराम्लेन तत् सर्वं मर्दितं पुटपाचितम्।
एकत्रिंशांशगरलं माषद्वितयसम्मितम् ॥४४॥
शुद्धः संशोधनं कुर्वन् मध्ये मध्ये च भक्षयेत्।
सन्निपाते मधूकेन व्योषेण पवने हितः ॥४५॥
ग्रहणीकामलापाण्डु-गुल्मार्शांसि हलीमकम्।
क्षयञ्च शमयत्येष महातालेश्वरो रसः ॥४६॥

---

महातालेश्वरे—शिला मनःशिला। लवणं सैन्धवम्। तद्वत ताम्रवदित्यर्थः। पुटे पचेत् भूधराख्यपुटे षड्वारं पचेत्, प्रतिपुटावसरे जम्बीरद्रवैर्मर्दयेच्च, रसरत्नाकर-संवादात्। मदनेन मदनफलभक्षणेन। कुर्य्यात, कुर्वीति शेषः। एवं विरेकं पथ्यया इत्यत्रापि योजनीयम्। मदनेन इत्यादिग्रन्थः समानतन्त्रेषु न दृश्यते, न सुष्ठु सङ्गच्छते चायमत्र, औषधप्रस्तुतप्रकरणे प्रसङ्गान्तरापातात्; "मध्ये मध्ये च भक्षयेत" इत्यनन्तरमस्य निवेशः युक्तः। सिद्धरसस्य तालताप्येत्यादिना निष्पन्नस्य औषधस्य। "अष्टौ नेपालताम्रस्य" इत्यत्र "द्विपलं मारितं ताम्रम्" इति तथा "एकत्रिंशांश-गरलम्" इत्यत्र "त्रिंशदंशं विषस्यास्य" इति च रसरत्नाकरे पाठः। शुद्धः स्नेहा-दिभिः कृतदोषानुलोमनः। "शुद्धः" इत्यत्र "स्निग्धः" इति पाठकल्पना साधीयसी। संशोधनं कुर्वन् मदनादिना वमनादिभिरात्मानं शोधयन्नित्यर्थः; अथवा—आदौ शुद्धः सन् मध्ये मध्ये संशोधनं कुर्वंश्च औषधसेवनस्य मध्ये मध्ये आत्मानं वमना-दिभिः पुनः शोधयन्नित्यर्थः। अत्र मध्वाज्याभ्यां वाकुचीचूर्णकर्षानुपानं तन्त्रान्तर-विहितमनुसर्त्तव्यम्। तथा च रसरत्नाकरे—"तालं ताप्यं शिला सूतं शुद्धं सैन्धव-टङ्कणम्। समांशं चूर्णयेत् खल्वे सूताद्द्विगुणगन्धकम्॥ गन्धतुल्यं मृतं ताम्र जम्बीरै-

अथ सर्वकुष्ठान्तकतैलम् ।—

कृष्णाभ्रकं बलिवसां नीलज्योतीरसं रसम् ।
कङ्गुणीनिम्बकार्पास-तैलस्त्र्यायसि मर्दयेत् ॥
तज्जयेत् सर्वकुष्ठानि वहिरन्तश्च सेवितम् ॥४७॥

अथ कुष्ठविध्वंसनो लेपः ।—

रसटङ्कणगन्धार्क-पिप्पलीकुष्ठचन्दनम् ।
कुष्ठविध्वंसनो लेपो मातुलुङ्गाम्बुमर्दितः ॥४८॥

अथ कनकसुन्दरः ।—

समतुलकनकोत्थ-व्योमसत्त्वोत्थपिष्टीं
द्विगुणरससमेतां गोलमध्ये विपाच्य ।

दिनपञ्च च। मर्द्यं षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे ॥ पुटे पुटे द्रवैर्मर्द्यं सर्वमेतच्च षट्पलम् । द्विपलं मारितं ताम्रं लोहभस्म चतुःपलम् ॥ जम्बीराम्लेन तत् सर्वं दिनं मर्द्यं पुटेल्लघु । त्रिंशदंशं विषञ्चास्य क्षिप्यं सर्वं विचूर्णयेत् ॥ महिषाज्येन सम्मिश्रा निष्काद्धं पुण्डरीकानुत । मध्वाज्यैः बाकुचीचूर्णं कर्षमात्रं लिहंदनु ॥ सर्वान् कुष्ठान् निहन्त्याशु सत्यतालेश्वरो रसः ॥" इति । ताम्रादिकं यथोक्तमानं जम्बीराम्लेन पञ्चवारान् मर्दयित्वा भूधरपुटे पचेत्, एवं षड्वारान् कुर्यात् । ततः पक्वौषधस्य षड्भागान् लौहस्य चतुरः ताम्रस्य चाष्टौ एकीकृत्य जम्बीराम्लेन दिनं मर्दयित्वा लघुपुटे पुनः पचेत् । स्वाङ्गशीतमादाय विचूर्ण्य च सिद्धौषधात् एकत्रिंशांशेन विषेण सह मर्दयित्वा स्थापयेत् । ततः स्निग्धतनुरूर्द्धाधःशोधनेनात्मानं शोधयन् माषद्वयमितं यथोक्तानुपानेन खादेत्, मध्ये मध्ये संशोधनं कुर्याच्च इति ॥ ४१—४६ ॥

सर्वकुष्ठान्तकतैले—बलिवसा गन्धकः, तथा चोक्तं प्राक् तृतीयाध्याये—"बलिना सेवितः पूर्वं प्रभूतबलहेतवे । वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता ॥ वसा गन्धकगन्धाढ्या सर्वतो निःसृता ततोः । गन्धकत्वञ्च सम्प्राप्ता गन्धोऽभूत् सविषः स्मृतः ॥ तस्माद्बलिवसेत्युक्तो गन्धकोऽतिमनोहरः ॥" इति । नीलज्योतीरसं तुत्थकं, कुष्ठहरत्वात् । रसं पारदम् । त्र्यायसि लौहभाजने । वहिरन्तश्च सेवितं लेपाभ्यङ्गादिविधया वहिःप्रयोगेण पानविधया च अन्तःप्रयोगेण व्यवहृतम् ॥ ४७ ॥

कुष्ठविध्वंसनलेपे—रसादीनां सर्वेषां समभागता ॥ ४८ ॥

त्रिकटुदहनवेल्लैर्वत्सनाभार्द्धभागै-
रससमनवशृङ्गी-दारुयुक्तैः समस्तैः ॥४९॥
अजसलिलविपिष्टैर्गुञ्जया तुल्यगोलः
कुपितकफसमुत्थं हन्ति कुष्ठं गरिष्ठम् ।
तदपरमथ वात-श्लेष्मजत्वग्विकारं
गुदगदमपि सर्वं वह्निमान्द्यं सुनिन्द्यम् ॥५०॥
तुष्टेन शम्भुना दिष्टः सोऽयं कनकसुन्दरः ।
त्वग्विकारविनाशाय कुबेराय महात्मने ॥५१॥

अथ हरिबलाङ्कुशः ।—

घनभवमृतसत्त्वं कान्तलोहार्कभस्म
त्रिगुणरससमेतं तुल्यगन्धेन युक्तम् ।
समतुलकृतमेभिष्टङ्कणं ताप्यचूर्णं
हरिदलमथ बोलं खण्डसंज्ञं मनोज्ञम् ॥५२॥

कनकसुन्दरे—स्वर्णपिष्ट्यभ्रसत्त्वपिष्ट्योः समभागता । द्विगुणरससमेतामिति एक-भागापेक्षया रसस्य द्वैगुण्यं बोद्धव्यम् । गोलमध्ये गोलमूषामध्ये । दहनः चित्रकः भल्लातकों वा । वत्सनाभार्द्धभागैः वत्सनाभः अर्द्धभागो यत्र तादृशैरिति त्रिकटु-दहनवेल्लैरित्यस्य विशेषणम्; तेन त्रिकट्वादीनां प्रत्येकमेकभागः वत्सनाभस्य चार्द्ध-भाग इति । रसेति ।—रससमा रसभागा नवा प्रत्यग्रा शृङ्गी स्थावरविषभेदः, दारु दारुमूषाख्यं विषञ्च तद्युक्तैः, अत्र च शृङ्गिदारुणोः मिलित्वा रससाम्यं बोद्धव्यम् । अजसलिलविपिष्टैः छागमूत्रपिष्टैः । अयमर्थः,—स्वर्णपिष्ट्यभ्रसत्त्वपिष्ट्योरेकैकभागं द्विभागपारदसम्मिश्रं गोलमूषायां पक्त्वा स्वाङ्गशीतलमादाय च त्रिकट्वादीनामेकैकभागेन वत्सनाभस्य चार्द्धभागेन शृङ्गिदारुणोश्च मिलित्वा भागत्रयेण सह पचेत्, ततः तदौषधं छागमूत्रेण पिष्ट्वा गुञ्जामानां वटीं कृत्वा च स्थापयेदिति ॥४९—५१॥

हरिबलाङ्कुशे—घनभवमृतसत्त्वं मारिताभ्रसत्त्वम्, अत्र घनसत्त्वादीनां त्रयाणां तुल्यता । त्रिगुणरससमेतमिति घनसत्त्वापेक्षया रसस्य त्रैगुण्यम् । तुल्यगन्धेन सर्वतुल्येन गन्धकेनेत्यर्थः । समेति ।—घनादिभिर्गन्धान्तैः सर्वैस्तुल्यं टङ्कणं ताप्यञ्च ॥ ५२ ॥

अथ त्रिपुरान्तकः ।—

रसममृतमथापि शृङ्गवेरं विडङ्गं
मधुरदहनपाठा-सिन्धुवारश्च बन्ध्या ।
त्रिफलकनकबीजं ऋद्धिवृद्धी निशे द्वे
छगलसलिलपिष्टं सर्वमेतत्र जाता ॥५३॥
सुलघुबदरबीज-स्थूलगोली नराणां
हरति पवनपित्त-श्लेष्मसञ्जातकुष्ठम् ॥५४॥
उक्तस्त्रिपुरया पूर्वं रसोऽयं त्रिपुरान्तकः ।
सर्वदोषोत्थकुष्ठघ्नः कृपानिघ्नमनस्कया ॥५५॥

अथ विश्वहितः ।—

रसेन्द्रलिप्तताम्रस्य पत्रं गन्धकमारितम् ।
तत्ताम्रं पलमात्रं हि पलमात्रं हि यावकम् ॥५६॥
पलं चूर्णितशुद्धालं मर्दयेत्तु दिनत्रयम् ।
इति सिद्धो रसः प्रोक्तो नाम्ना विश्वहितो हितः ॥
वल्लाभ्यां तुलितः सेव्यो मरीचघृतसंयुतः ॥५७॥

त्रिपुरान्तके—रसं रसभस्म । अमृतं विषम् । मधुरः मधुरिका काकोली वा । दहनः चित्रकः भल्लातको वा । सिन्धुवारः निर्गुण्डी । बन्ध्या बन्ध्याकर्कोटकी । कनकबीजं धुस्तूरबीजम् । ऋद्धिवृद्धी स्वनामख्याते, तदप्राप्तौ बला-महाबले ग्राह्ये ; यदुक्तं परिभाषायाम्—"ऋद्ध्यभावे बला देया वृद्ध्यभावे महाबला" इति । निशे द्वे हरिद्रा दारुहरिद्रा च । छगलसलिलपिष्टं छागमूत्रपिष्टम् । सुलघ्विति ।—सुलघुबदरः क्षुद्रकोलः, "सेटीकुल" इति भाषा, तस्य बीजवत् अस्थिवत् स्थूला गोली गुडिका । त्रिपुरया देव्या दुर्गया । कृपानिघ्नमनस्कया दयार्द्रचित्तया ॥ ५३—५५ ॥

विश्वहिते—रसेन्द्रलिप्तताम्रस्य पत्रमित्यत्र रसेन्द्रशब्देन रसगन्धकयोः कज्जली अभिप्रेता, केवलरसेन्द्रेण लेपनासम्भवात् ; अथवा रसेन्द्रलिप्तताम्रस्य पारदेन सह मर्दितताम्रस्येत्यर्थः । गन्धकमारितम् ऊर्ध्वाधो गन्धकं दत्त्वा पुटितम् इत्यर्थः । यावकं यवक्षारम् । आलं हरितालम् ॥ ५६।५७ ॥

अथ निर्गुण्ड्यादिप्रलेपः ।—

निर्गुण्डीतैलमध्वाज्य-कुमारीशाल्मलीरसः ।
यवो गन्धकपिष्टश्च लेपः कुष्ठक्षयापहः ॥ ५८ ॥

अथ कुष्ठराक्षसः ।—

महानिम्बस्य सारेण मर्दितां गन्धपिष्टिकाम् ।
अमृतावाकुचीकान्ता-त्रिफलाचूर्णसंयुताम् ॥५९॥
भक्षयेदायसे न्यस्तां कुष्ठे पाणितलोन्मिताम् ।
सा कुर्य्याल्लेपनात् कान्तिं षण्मासाद्वृद्धिमायुषः ॥ ६० ॥

अथ व्योषादि गुडिका ।—

पालिकं व्योषसूताग्नि-गन्धकं सफलत्रयम् ।
काकोडुम्बरिकाक्षीरैर्मर्दितं गुटिकीकृतम् ॥
माषप्रमाणं सक्षौद्रं कुष्ठार्शःश्वासकासजित् ॥ ६१ ॥

अथ कुष्ठकुठाररसः ।—

रसस्य कर्षः कर्षौ द्वौ गन्धकात् कज्जलं तयोः ।
तिलपर्ण्यलिमुण्डीनां स्वरसैः कृतभावनम् ॥६२॥
कर्षः कर्षौ वचाधात्री-कणातीक्ष्णक्रिमिच्छिदाम् ।
प्राणं विषस्य कर्षार्द्धं जीरकस्य सितस्य च ॥६३॥

निर्गुण्ड्यादिप्रलेपे—तैलं कटुतैलम् । कुष्ठक्षयापहः कुष्ठे यः क्षयः क्षीणगति-क्षयनासाभङ्गादिरूपः इत्यर्थः, तमपहन्ति इति तथाभूतः ॥ ५८ ॥

कुष्ठराक्षसे—महानिम्बस्य सारेण पर्वतनिम्बत्वग्रसेन । वाकुची सोमराजी । कान्ता प्रियङ्गुः । आयसे न्यस्तां लौहपात्रे स्थापितां, लौहकटाहादौ निम्बस्य निम्बरसेन मर्दितामित्यर्थः । पाणितलोन्मितां कर्षप्रमाणाम् । सा अमृतादिचूर्णसंयुता गन्धकपिष्टिका । बहिरन्तरुभयथैव प्रयोज्याऽयम् ॥ ५९।६० ॥

व्योषादिगुडिकायां—पालिकं प्रत्येकं पलमानम् । काकोडुम्बरिकाक्षीरैः काकोडुम्बरत्वङ्निःसृतक्षीरैरित्यर्थः ॥ ६१ ॥

कुष्ठकुठारे—तिलपर्णी रक्तचन्दनम्, अलिः अरिः, रलयोरभेदात् खदिरविशेष इत्यर्थः, मुण्डी मुण्डिरी तासाम् । तीक्ष्णं राजिका लौहं वा । क्रिमिच्छित्

पलार्द्धं मृतताम्रस्य तथा शुण्ठ्याश्च मर्दितम् ।
भृङ्गाम्भसि घटे स्निग्धे पचेच्चणकसम्मिताः ॥६४॥
वटिकाः कुष्ठविश्वाग्नि-त्रिफलासैन्धवान्विताः ।
कुर्य्यात् कुष्ठकुठाराख्यो रसोऽयं सर्वकुष्ठजित् ॥ ६५ ॥

अथ गुञ्जाद्युद्वर्त्तनम् ।—

गुञ्जाचित्रकशङ्खचूर्णरजनी भल्लातकं लाङ्गली
सक्षीरोत्तमकन्यका घनरवा धूमोद्गमः सूतकः ।
गोमूत्रैडगजं विडङ्गमरिचं सक्षौद्रखारीजलं
पामादद्रुविचर्चिकाकिटिभजित् कण्डूघ्नमुद्वर्त्तनात् ॥६६॥

अथ वज्रशेखरः ।—

विष्णुक्रान्ता घनरसः सर्पाक्षी शङ्खपुष्पिका ।
गोजिह्वा क्षीरिणी नीली ब्रह्मवृक्षी रुदन्तिका ॥६७॥
निचुलः काकमाची च रसैरेषां विमर्दितम् ।
पक्वं तुषकरीषाग्नौ रसाद्द्विगुणगन्धकम् ॥६८॥

विडङ्गम् । तथा पलार्द्धमित्यर्थः । विश्वं शुण्ठी । अयमर्थः,—रसगन्धयोः कज्जलीं कृत्वा तिलपर्ण्यादिस्वरसैः प्रत्येकं सप्तवारान् भावयेत् । अनन्तरं वचादिचूर्णं यथोक्तमानं तत्र दत्त्वा विमर्दयेत । ततः घृतभावितायां स्थाल्यां भृङ्गराजस्वरसेन चूर्णादष्टगुणेन सह औषधं तत् आघनीभावात् पचेत् । ततः अवतार्य्य युक्त्या किञ्चित् किञ्चित् कुष्ठादिचूर्णानि दत्त्वा मर्दयेत्, चणकमिताश्च वटीं कृत्वा स्थापयेदिति ॥ ६२—६५ ॥

गुञ्जाद्युद्वर्त्तने—उत्तमकन्यका उत्तमा मनःशिला, कन्यका घृतकुमारी । घनरवा घनध्वनिः, मुस्तकमित्यर्थः, मेघनाद इति वा, तण्डुलीय इत्यर्थः । धूमोद्गमः वज्रक्षार इति मालवे प्रसिद्धः क्षारविशेषः, गृहधूमो वा । सूतकः पारदः भस्मसूत इत्यर्थः । एडगजं चक्रमर्दः । खारीजलं जलविशेषः, लवणविशेषो वा खारी तस्या जलम् । उद्वर्त्तनात् घर्षणात् मर्दनादित्यर्थः ॥ ६६ ॥

वज्रशेखरे—विष्णुक्रान्ता अपराजिता । घनरसः मूर्वा मालकं वा । सर्पाक्षी गन्धनाकुली, रास्नाविशेष इत्यर्थः । ब्रह्मवृक्षः बकपुष्पवृक्षः, कुष्ठहरत्वात्, तस्य मूलत्वक् । रुदन्तिका—"अश्वपत्रसमं पत्रं क्षुपश्चैव तथाऽल्पकम् । शिशिरे जल-

पर्पटीरसवत् पक्कं खसत्त्वेनारुणेन च।
पृथक् गन्धकतुल्येन ताप्येन च रसाद्विधा ॥६९॥
कृतावापं गता मुण्डी-हस्तिकर्णमृतालिका:।
मूर्वाविदार्य्योश्च रसैर्मर्दितं घृतमिश्रितम् ॥७०॥
कषाये दशमूलस्य विपक्कं लेहतां गतम्।
रसतुल्यत्रिजाताग्नि-व्योषयष्ट्याह्वसंयुतम् ॥७१॥
स्निग्धभाण्डगतं कुष्ठी क्षयी च कृतशोधनः।
मञ्जिष्ठादिकषायस्य कृत्वा मासं निषेवणम् ॥
माषप्रमाणं सेवेत रसोऽयं वज्रशेखरः ॥७२॥

अथ कुष्ठविद्रावणतैलम्।—

द्वात्रिंशत्पलवाकुचोशृतजलद्रोणाङ्घ्रिशेषे चतु-
र्विंशत्या दनुजस्य कान्तरसयोर्निष्कैः पृथक् पञ्चभिः।
ताम्बूलीरसमर्दितैस्तिलभवप्रस्थं शृतं चिक्कणे
पाके सत्यवतार्य्य कल्कसहितं धान्ये द्विपक्षं क्षिपेत् ॥७३॥

---

विष्णुनामस्वर्णोति रुदन्तिका ॥" इत्युक्तलक्षणः स्वनामप्रसिद्धः क्षुपविशेषः। मिचुल: इज्जल: "हिजल" इति ख्यातम्। खसत्त्वेन अभ्रसत्त्वेन। अरुणेन सिन्दूरेण। आलिका वृश्चिकपत्री। मञ्जिष्ठादिकषायस्य पूर्वोक्तमञ्जिष्ठादिगण-कृतकषायस्य निषेवणं कृत्वा माषप्रमाणं सेवेत इत्यन्वयः। अस्यार्थः,—द्विगुण-गन्धकं पारदं विष्णुक्रान्तादीनां रसेन पृथक् पृथक् मर्दयित्वा तन्त्रकारोक्तां पर्पटी-रसवत् पाचयेत्। ततः विचूर्ण्य पृथक् पृथक् गन्धकतुल्यम् अभ्रसत्त्वम् अरुणञ्च तथा रसपादिकं माक्षिकभस्म च तत्र दत्त्वा मुण्ड्यादीनां रसेन पृथक् पृथक् मर्दयेत्। अथ मर्दितं तत् घृतमिश्रितं कृत्वा चतुर्गुणे दशमूलक्काथे यावत् लेहीभूतं पचेत्। अनन्तरं त्रिजातादिचूर्णं पृथक् रसतुल्यं तत्र दत्त्वा आलोड्य च स्निग्धे भाण्डे स्थापयेदिति ॥६७—७२॥

कुष्ठविद्रावणतैले—द्वात्रिंशत्पलवाकुच्याः द्वात्रिंशत्पलमानायाः सोमराज्याः, शृताय पाकाय जलद्रोणे द्रोणपरिमिते जले, अङ्घ्रिशेषे पादावशेषे सति। दनुजस्य हिङ्गुलस्य चतुर्विंशत्या निष्कैः। कान्तरसयोः लौहपारदयोः। तिलभवप्रस्थं

तत् चीराब्धाग्निना पीतं लिप्तं कुष्ठकुलान्तकम् ।
श्वित्रं दारुजमश्वेतं रूपमूलञ्च लुम्पति ॥७४॥

अथ दद्रुकुष्ठविद्रावणरसः ।—

रसगन्धकताप्याभ्र-कान्तकृष्णाभ्रभस्मकम् ।
हिङ्गुलं मधुकं कुष्ठं सर्वं समविभागिकम् ॥७५॥
अम्लवेतसतोयेन त्रिदिनं परिमर्दयेत् ।
विशोष्याऽऽज्यमधुभ्याञ्च मृदित्वा त्रिदिनं पुनः ॥७६॥
दत्त्वा जीर्णं गुडं तुल्यं कोलास्थिप्रमिता वटीः ॥
छायाशुष्काः प्रकुर्वीत शम्भोरग्रे च पूजयेत् ॥७७॥
इयं हि पञ्चाङ्गकृताभिधाना नागार्जुनोक्ता गुटिका च नूनम् ।
सर्वाणि कुष्ठानि विचर्चिकाञ्च दद्रूणि विद्रावयति क्षणेन ॥७८॥

तिलतैलप्रस्थम् । श्वित्रं, दोषजमिति शेषः, दारुजम् अग्निदग्धजं, श्वित्रमिति शेषः । अश्वेतम् अरुणं ताम्रवर्णं वा किलासं, रक्तमांसगतं श्वित्रमित्यर्थः ; तथा च वाग्भटः, —"कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत् । निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम ॥ वातात् रूक्षारुणं पित्तात् ताम्रं कमलपत्रवत् । सदाहं रोमविध्वंसि कफात् श्वेतं घनं गुरु । सकण्डुरं क्रमात् रक्त-मांसमेदःसु चादिशेत ॥" इति । चरकेणाप्युक्तं—"दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते । श्वेतं मेदःश्रिते श्वित्रं गुरु तच्चोत्तरोत्तरम ॥" इति । अत्र अश्वेतशब्देन अरुणं ताम्रवर्णञ्च श्वित्रं लक्ष्यते । रूपमूलं रूपस्य रजतस्य, रजतवर्णश्वित्रस्येत्यर्थः, मूलम् । अयमर्थः,—द्वात्रिंशत्पलवाकुचीं जलद्रोणे निष्क्वाथ्य पादावशेषे षोडशशरावे अवतार्य्य वस्त्रपूतं कुर्य्यात् । ततः तैलप्रस्थे तं क्वाथं गन्धकादीनां कल्कञ्च ताम्बूलीरसमर्दितं यथामानं दत्त्वा विपचेत् । सम्यक् पाके सति अवतार्य्य सकल्कमेव तत्तैलं धान्यराशौ मासं यावत् स्थापयेत् । मासानन्तरम् उद्धृत्य उपयुक्तमानेन पिबेत् लिम्पेच्च तेन कुष्ठश्वित्रादिकम इति ॥ ७३।७४ ॥

दद्रुकुष्ठविद्रावणे—अभ्रस्य भागद्वयं ग्राह्यम । कान्तं कान्तलौहम् । दत्त्वा जीर्णं गुडं तुल्यमिति सर्वचूर्णतुल्यः पुराणगुडो योज्यः, "चूर्णे चूर्णसमो देयो मोदके द्विगुणो गुडः" इति परिभाषास्मरणात् । पञ्चाङ्गकृताभिधाना पञ्चाङ्गकृता गुटिका इत्यपराख्या ॥ ७५—७८ ॥

अथ माणिक्यतिलकः।—

रसगन्धकताप्यालकान्ततीक्ष्णाभ्रभस्मकम्।
हिङ्गुलं मधुकं कुष्ठं सर्वं समविभागिकम्॥७९॥
शतमूलीनिजद्रावैर्मञ्जिष्ठादिकषायतः।
त्रिदिनं त्रिदिनं सम्यक् परिमर्द्य विशोष्य च॥८०॥
ततस्तु पक्वमूषायां सन्निरुध्यातियत्नतः।
प्रक्षिप्य वालुकायन्त्रे प्रपुटेत् दिवसद्वयम्॥८१॥
माणिक्यतिलको नाम रसो नासत्यकीर्त्तितः।
एष कुष्ठं हरत्याशु सन्तितमिव ह्रदयथाम्॥८२॥

अथ पर्पटीः।—

श्वेतः पाठा जटा श्वेता श्वेता चैव पुनर्नवा।
पिष्ट्वा जलेन तत्कल्कैः प्रकुर्य्यान्नालमूषिकाम्॥८३॥
स्थालीमध्ये च तां क्षिप्त्वा क्षिपेत् संशोधितं रसम्।
क्षिपेदुपरि सम्पेष्य द्व्यञ्जलिप्रमितं पटु॥८४॥
पिधानं तन्मुखे दत्त्वा सन्निरुध्यातियत्नतः।
अधस्ताज्ज्वालयेद्वह्निं पिधान्यामम्बु निक्षिपेत्॥८५॥
यामत्रितयपर्य्यन्तं जातेऽथ शिशिरे ततः।
क्रोड़कोशैः समाकृष्य मृतं पारदमाहरेत्॥
न चेदेतावता भस्म पुनरेव पुटेद्रसम्॥८६॥

---

माणिक्यतिलके—कान्ततीक्ष्णाभ्रभस्मकं कान्तलौहभस्म तीक्ष्णलौहभस्म अभ्रभस्म च। नासत्यकीर्त्तितः अश्विनीकुमारद्वयकथितः॥ ७९—८२॥

पर्पटीते—श्वेतः श्वेतार्कः। पाठा स्वनामख्याता। जटा जटामांसी; श्वेतपाठाजटेति समस्तपदत्वे श्वेतपाठाया मूलमित्यर्थः। श्वेता श्वेतापराजिता। नालमूषिकां नालयुक्तां मूषिकां, वृन्ताकमूषिकामित्यर्थः; सा च "वृन्ताकाकारमूषायाम्" इत्यादिना १०माध्याये उक्ता। "नालमूषिकाम्" इत्यत्र "मल्लमूषिकाम्" इति पाठान्तरम्। द्व्यञ्जलीति।—कुड़वद्वयमानं सैन्धवलवणमित्यर्थः।

तद्भस्मातिविषं विषं क्रिमिहरं व्योषोत्तमा गन्धजं
चूर्णं द्वादशहाटकं खलु गुडो द्वात्रिंशदंशोन्मितः ।
तत् सर्वं परिचूर्णितं प्रतिदिनं वल्लैश्चतुर्भिर्मितं
चेत्थं हन्ति समस्तरोगनिवहं नागं गरुत्मानिव ॥८७॥
विशेषात् सर्वकुष्ठघ्नो रसोऽयं परिकीर्त्तितः ।
ख्यातः परहितो नाम्ना भानुना भूरिभानुना ॥ ८८ ॥

अथ तालकेश्वरः ।—

वीर्य्यं पुरारेरिह नागतुल्यं भागद्वयञ्चाप्यथ तालकस्य ।
शुद्धेन नागेन रसो विशुद्धो विमर्दनीयो हरितालिकश्च ॥८९॥
मूत्रं गवां षोडशभागमानं निधाय भाण्डेऽथ पिधाय तस्मिन् ।
दीपाग्निना तत् परिशोष्य सर्वं मूत्रं ततस्तालकशुद्धता स्यात् ॥९०॥
ततस्तु जम्बीररसेन सर्वं विमर्दनीयं त्रिदिनं त्रिवारम् ।
भाव्यं कुमार्य्याः सलिलेन भृङ्ग-वज्राह्वकन्देन च वारयुग्मम् ॥९१॥

क्रोडकेशो वराहक्रान्तेति । क्रिमिहरं विडङ्गम् । उत्तमा त्रिफला मन शिला वा । गन्धजं गन्धकजातं, चूर्णमित्यनेनान्वयः । द्वादशहाटकं द्वादशसुवर्णं, द्वादशकर्षमित्यर्थः, तत्तु पृथगेव शोध्यं, परिचूर्णितमिति वक्ष्यमाणवाक्यस्वरसात्, मिलित्वा द्वादशहाटकत्वे गुडभागस्य द्विगुणादप्यधिकत्वेन चूर्णनिष्पत्तिसम्भावनाभावात् इति । द्वात्रिंशदंशोन्मित द्वात्रिंशद्धाटकोन्मितः, यद्वा—द्वादश हाटकमिति पृथक् पदं, हाटकं स्वर्णं द्वादश द्वादशसङ्ख्यापूरणं, रसभस्मादि गन्धान्तानि एकादश द्रव्याणि द्वादशं च स्वर्णमित्यर्थः, अस्मिन् पक्षेऽपि—भस्मादीनां प्रत्येकमेको भागः गुडस्य च द्वात्रिंशत् भागा इति । भानुना भूरिभानुना प्रभूततेजसा भानुनाम्ना ॥ ८३—८८ ॥

तालकेश्वरे—वीर्य्यं पुरारेः पारदः । नागतुल्यं सीसकसमम्, तेन शुद्धो रसः सीसश्च तुल्यौ ग्राह्यौ । रसेन्द्रचिन्तामणौ रसेन्द्रसारसङ्ग्रहे च नागस्य रसार्द्धता तालकस्य च रसतुल्यत्वं पठितं, तद्यथा—"नागस्य भस्म भागैकं तोलैकं पारदस्य च । (रसेन्द्रसारसङ्ग्रहे "पारदस्य" इत्यत्र "गन्धकस्य" इति पाठः) त्रिनिष्कं शुद्धतालस्य" इति । षोडशभागमानमिति सर्वद्रव्यापेक्षया षोडशगुणमित्यर्थः, तथा च रसेन्द्रचिन्तामणौ रसेन्द्रसारसङ्ग्रहे च—"विपचेत् षोडशगुणे." इति । दीपाग्निना दीप्तवह्निना । त्रिवारमिति कुमार्य्याः सलिलेनेत्यनेन सम्बध्यते ।

कुष्ठे ददीतास्य रसस्य वल्ल-त्रयं रसैरार्द्रककन्दजैर्विजेतुम् ।
शाखासु पक्वत्वमथो सुषुप्तिं स्तम्भञ्च मन्यास्वथ मण्डलानि ॥८२॥
गवां पयः शर्करया समेतं स्तम्भातिरेके सति सन्नियोज्यम् ।
औडुम्बरं हन्ति सितामधुभ्यां कृष्णञ्च कुष्ठं त्रिफलारसेन ॥८३॥
गुडार्द्रकाभ्यां गजचर्मसिध्म-विचर्चिकास्फोटविसर्पदद्रून् ।
निहन्ति पाण्डुं विविधां विपादीं सरक्तपित्तां कटुकीसिताभ्याम् ॥८४॥
रोगेषु सर्वेष्वपि वासराणि त्रिसप्तसङ्ख्यानि रसः प्रदेयः ।
रसप्रयोगावसितौ सुषुप्त्यां क्वाथं पिबेच्छिन्नरुहासनोत्थम् ॥८५॥
मासद्वयं मुद्गघृतान्वितान्नं पथ्यं ततो डुम्बरभेषजान्ते ।
अङ्गानि पञ्चापि पलोन्मितानि दद्यादरिष्टस्य तथाऽऽढकीनाम् ॥८६॥
क्वाथेन युक्तं सघृतौदनञ्च पथ्याय कृष्णेऽप्यथ कृष्णवर्णे ।
रसावसाने सितया समेतां पादोन्मितामामलकीं प्रदद्यात् ॥८७॥

---

वज्राह्वकन्देन स्नुहीकन्दरसेन वन्यशूरणकन्दरसेन वा । शाखासु हस्तयोः पादयोश्च, हस्तपादाङ्गुलीषु इत्यर्थः, पक्वत्वं क्षतभावम् । सुषुप्तिं स्पर्शानभिज्ञताम् । स्तम्भातिरेके स्तब्धातिशय्ये । "स्तम्भातिरेके" इत्यत्र "स्तम्भाय रेके" इति पाठे—रेके विरेके सति, स्तम्भाय मलस्तम्भायेत्यर्थः । "सितामधुभ्याम्" इत्यत्र "शिवामधुभ्याम्" इति रसेन्द्रचिन्तामणौ रसेन्द्रसारसङ्ग्रहे च पाठान्तरम् । कृष्णञ्च कुष्ठमिति कापालकुष्ठं किटिमकुष्ठं वा । "कृष्णम्" इत्यत्र "कृत्स्नं" "कृच्छ्रम्" इति पाठद्वयं सुगमम् । गजचर्म हस्तिचर्मवत् घनचर्मसंयुतं कुष्ठं चर्मकुष्ठमित्यर्थः । रसप्रयोगेत्यादि ।—सुषुप्त्यां सुप्तिकुष्ठे रसप्रयोगावसितौ रसप्रयोगानन्तरमित्यर्थः, छिन्नरुहासनोत्थं छिन्नरुहा गुडूची आसनं स्वनामख्यात तदुत्थं क्वाथं पिबेत् अनुपिबेदित्यर्थः ; अथवा—रसप्रयोगावसितावपि सुषुप्त्यां विद्यमानायां छिन्नरुहासनोत्थं क्वाथं पिबेदिति । मासद्वयमिति क्वाथं पिबेदित्यनेन सम्बध्यते । डुम्बरभेषजान्ते डुम्बरे उडुम्बरकुष्ठे भेषजान्ते औषधसेवनानन्तरम् अरिष्टस्य निम्बस्य पञ्चापि अङ्गानि पत्रपुष्पत्वक्फलमूलात्मकानि पलोन्मितानि दद्यात्, तथा पथ्याय आढकीनां क्वाथेन युक्तं सघृतौदनञ्च दद्यात् ; यद्वा—अरिष्टाढक्योः पञ्चाङ्गानि पृथक् पलोन्मितानि गृहीत्वा तत्क्वाथेन ओदनं पक्त्वा सघृतं तदोदनं पथ्याय भोज्यम् इति । कृष्णे कापालकुष्ठे किटिमकुष्ठे वा, "कृष्णवर्ण-

अन्नं समुद्गं सघृतं नियोज्यं मासद्वयं स्यादथवा विचिह्नम् ।
रसप्रयोगावसितौ प्रयुञ्ज्यादङ्गानि पञ्च स्रवनिःसृतानि ॥९८॥
पादोन्मितानीह च मासयुग्मं पथ्याय दुग्धौदनमाददीत ।
स्यात्तालकेशाख्यरसप्रयोगे तक्रञ्च मांसञ्च विवर्जनीयम् ॥९९॥

अथ खगेश्वरः ।—

पलेन प्रमितः सूतः पलेन प्रमिता वसा ।
खगः पलमितः सर्वं मर्दयेदर्जुनद्रवैः ॥ १०० ॥
गोलीकृत्य विशोष्याथ गोलं मूष्यां निरुध्य च ।
ततस्तां सुदृढे भाण्डे मूषां चिप्त्वा निरुध्य च ॥१०१॥
पचेत् मार्त्तण्डदिनं पश्चात् स्वाङ्गशीतं विचूर्णयेत् ।
खगेश्वरो रसो वल्ल-प्रमितः कुटजान्वितः ॥१०२॥
श्वेतकुष्ठं निहन्त्याशु श्वासकासगदानपि ।
सघृतः पित्तजं कुष्ठं मधुना मेहमेव च ॥
पथ्यं दोषानुरूपेण वृद्धेन मुनिनोदितम् ॥१०३॥

---

कपालाभं यद्रूक्षं परुषं तम् । कापालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम् ॥" तथा "श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम्" इत्यनेन कापालकिटिमयोः कृष्णता चरकादिभिः प्रदर्शिता । अथ कृष्णवर्णे कुष्ठरोगे रसस्य कृष्णवर्णाभावात् अङ्ग-कार्ष्ण्य । कृष्णोऽपीत्यादि ग्रन्थः विचिह्नमित्यनेन सम्बध्यते । पादोन्मितामामलकीं-मिति रसापेक्षया चतुर्थभागप्रमिताम् । मासद्वयमिति ।—मासद्वयं यावत् अथवा विचिह्नं यावता कालेन कृष्णवर्णता नश्येत् तावत्कालपर्य्यन्तमित्यर्थः, सचिताम् आमलकीं दद्यात, समुद्गं सघृतमन्नञ्च नियोज्यमिति सम्बन्धः । रसप्रयोगावसितौ इत्यत्र सर्वेष्वेव कुष्ठेषु इति शेषः । अङ्गानीति ।—स्रवनिःसृतानि स्रवः स्रवन्तीगरा, कदलीति प्रसिद्धम् ; स्रवन्ती वा, मुण्डिरीति प्रसिद्धं, तन्निःसृतानि पञ्चाङ्गानि पत्रपुष्पफलमूलत्वग्रूपाणि । पादोन्मितानीति रसापेक्षया बोध्यम् । रसेन्द्रसारे त्वस्य राजमौलीश्वर इति संज्ञा ॥ ८९—९९ ॥

खगेश्वरे—वसा वसिवसा, गन्धक इत्यर्थः । खगः माक्षिकं रसाञ्जनं वा । कुटजान्वितः कुटजस्य त्वग्रसेन फलरसेन वा युक्तः, फल-त्वचोरुभयोरेव कुष्ठहरत्वात् अत्र यौगिकत्वं बोद्धव्यम् ॥ १००—१०३ ॥

अथ कुष्ठनाशनः।—

सूतभस्म द्विनिष्कं स्याद्गन्धकञ्च चतुष्पलम्।
माक्षं चतुष्पलं चित्रं चतुर्विंशत् पलं भवेत् ॥१०४॥
बाकुचीबीजचूर्णं स्याद्द्वादशघ्नं मरीचकम्।
सर्वमेकत्र संयोज्य निष्कद्वितयसम्मितम् ॥
मधुना लेहयेत् प्रातः सर्वकुष्ठविनाशनम् ॥१०५॥

अथाऽऽरोग्यवर्द्धनी गुटिका।—

रसगन्धकलोहाभ्र-शुल्वभस्म समांशकम्।
त्रिफला द्विगुणा प्रोक्ता त्रिगुणञ्च शिलाजतु ॥१०६॥
चतुर्गुणं पुरं शुद्धं चित्रमूलञ्च तत्समम्।
तिक्ता सर्वसमा ज्ञेया सर्वं सञ्चूर्ण्य यत्नतः ॥१०७॥
निम्बवृक्षदलाम्भोभिर्मर्दयेत् द्विदिनावधि।
ततश्च वटिका कार्य्या राजकोलफलोपमा ॥१०८॥
मण्डलं सेविता सैषा हन्ति कुष्ठान्यशेषतः।
वातपित्तकफोद्भूतान् ज्वरान्नानाप्रकारजान् ॥१०९॥
देया पञ्चदिने जाते ज्वरे रोगे वटी शुभा।
पाचनी दीपनी पथ्या हृद्या मेदोविनाशिनी ॥११०॥
मलशुद्धिकरी नित्यं दुर्द्धर्षक्षुत्प्रवर्त्तिनी।
बहुनाऽत्र किमुक्तेन सर्वरोगेषु शस्यते ॥१११॥

कुष्ठनाशने—चित्रं चित्रकमूलम्। द्वादशघ्नं मरीचकं द्वादशान् द्वादशभागान् हन्ति इति व्युत्पत्त्या द्वादशपलानि इत्यर्थः, चतुर्विंशत्पलबाकुचीभागापेक्षया मरीचं द्वादशभागहीनं, तेन च द्वादशपलानि मरिचस्येति निष्कर्षः; "द्वादशघ्नम्" इत्यत्र "द्वादशान्तम्" इति पाठे—द्वादश द्वादशपलानीत्यर्थः, अन्तम् अन्तिमं मरीचकम् अन्तस्थितस्य मरिचस्य द्वादशपलानीत्यर्थः। अत्र "द्वादशांशम्" इति पाठो युज्यते ॥ १०४।१०५ ॥

आरोग्यवर्द्धन्याम्—त्रिफला द्विगुणा इति त्रिफलायाः प्रत्येकं भागद्वयम्।

आरोग्यवर्द्धनी नाम्ना गुटिकेयं प्रकीर्त्तिता ।
सर्वरोगप्रशमनी श्रीनागार्जुनयोगिना ॥ ११२ ॥

अथ नारायणः ।—

रसभस्म समानेन गन्धकेन समन्वितम् ।
तुल्यभागपुरोपेतं तुल्यत्रिफलयाऽन्वितम् ॥११३॥
वातारितैलसंयुक्तं सेवितञ्च पलोन्मितम् ।
मासेन नाशयेत् कुष्ठं दुःसाध्यमपि देहिनाम् ॥ ११४ ॥
क्षयं भगन्दरं शूलं मूलं गुल्मञ्च पाण्डुताम् ।
ग्रहणीञ्च महाघोरां मन्दाग्निमपि दुस्तरम् ॥११५॥
एवंविधान् महारोगान् विनिहन्ति न संशयः ।
श्लेष्मरोगान् हरेत् सर्वान् रसो नारायणाभिधः ॥११६॥

अथ मैदिनीसाररसः ।—

पलत्रयं मृतं लोहं मृतं शुल्वं पलत्रयम् ।
भृङ्गराजाम्बुगोमूत्र-त्रिफलाक्कथितैः पृथक् ॥११७॥
पुटेत्त्रिवारं यत्नेन ततस्तस्मिन् विनिक्षिपेत् ।
अत्यम्लकाञ्जिकं पश्चात् पचेद्यामचतुष्टयम् ॥११८॥
ततश्च तुल्यगन्धेन पुटानां विंशतिं पचेत् ।
पलमात्रं मृतं सूतं रुद्रांशममृतं तथा ॥११९॥

पुरं गुग्गुलम् । तत्समं गुग्गुलमसम् । तिक्ता कटुकी सर्वसमा सर्वचूर्णतुल्या । राजकोलफलोपमा बृहद्बदरतुल्या ॥ १०६—११२ ॥

नारायणे—रसभस्म इति विशेष्यपदम् । रसभस्मादीनां सर्वेषां तुल्यभागता । मूलम् अर्शांसि । अत्र "विनिहन्ति न संशयः" इत्यनन्तरं क्वचित् "भगन्दरव्रणश्चापि व्रणश्चापि विशेषतः । षण्मासेन जरां मृत्युं पलितं वलितं हरेत् ॥" इत्यधिकः पाठः ॥११३—११६॥

मैदिनीसाररसे—रुद्रांशम् एकादशभागम् । लोहं ताम्रञ्च भृङ्गरसादिना पृथक् पृथक् मर्दयित्वा वारत्रयं गजपुटे पचेत् । ततः पुटितमौषधमादाय अत्यम्ल-काञ्जिकेन सह यामचतुष्टयं पक्त्वा सर्वतुल्येन गन्धेन सह पुनः सम्मर्द्य च गजपुटे विंशतिवारान् पचेत्, प्रतिपुटं गन्धकेन सह चामर्दयेत् । ततः पुटादौषधमादाय

कटुत्रयं समं सर्वैः पिष्ट्वा सम्यक् विधारयेत् ।
रसोऽयं मेदिनीसारो नन्दिना परिकीर्त्तितः ॥१२०॥
सेविता वल्लमानेन घृतत्रिकटुकान्वितः ।
हन्ति कुष्ठानि सर्वाणि श्वित्राणि विविधानि च ॥१२१॥
गुल्मं प्लीहामयं हिक्कां शूलरोगं क्षयं तथा ।
उदावर्त्तं महावातं कफं मन्दानलं तथा ॥१२२॥
गलग्रहं मदोन्मादं कर्णदन्तामयं तथा ।
सर्वाधिकं विषं घोरं व्रणं लूताभगन्दरम् ॥
विद्रधिञ्चान्त्रवृद्धिञ्च शिरस्तोदञ्च नाशयेत् ॥१२३॥

पलमानेन पारदेन एकादशपलेन विषेण त्रिकटुना च सर्वतुल्येन सह मिश्रयित्वा व्यापयेदिति । महावातं मेदःकफावृतवातव्याधिम् । मदोन्मादं मदेन सह उन्मादम् अप्रवृद्धलक्षणोन्मादो मद "स चाप्रवृद्धलक्षणो मदसंज्ञां बिभर्त्ति च" इति सुश्रुतसंवादात् । लूताम ऊर्णनाभम्, ऊर्णनाभविषमित्यर्थः । लूताया ऐतिह्यं सुश्रुते यथा—"विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् । वशिष्ठं कोपयामास गत्वाऽऽश्रमपदं किल ॥ कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः । अपतन् दर्शनादेव मधस्तात्तीव्रवर्चसः ॥ लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च । ततो जातास्त्विमा घोरा नानारूपा महाविषाः ॥ अपकाराय वर्त्तन्ते नृपसाधनवाहने । यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ॥ तस्माल्लूतास्तु भाष्यन्ते सङ्ख्यया ताश्च षोडश ॥......। त्रिमण्डला तथा श्वेता कपिला पीतिका (पीतका) तथा । आल (लाला) मूत्रविषा रक्ता कसना (कठिना) चाष्टमी स्मृता ॥ सौवर्णिका लाजवर्णा जालिन्येणी (क) पदी तथा । कृष्णाग्निवर्णा (र्णा) काकाण्डा (काण्डा च) मालागुणा (णा) ष्टमी स्मृता (मता) ॥" इति । अत्र मधुकोषः,—"इति किल श्रुतिः, विश्वामित्रो नरपतिः कामधेनोर्बलात्कारपरिग्रहेण मुनिसत्तमं वशिष्ठं कोपयाञ्चकार । कुपितेन तेन अनार्द्धज्वलदभ्रकोपानलज्वलितं तडिल्लताङ्गारमिव निरवग्रहपटलं लोचनद्वयं वहता भगवान् रविरवलोकितः । ततस्तस्य भ्रुकुटिकुटिलोद्भवो भयङ्करो ललाटतटप्रस्यन्दी स्वेदबिन्दूत्करः प्रचण्डतरः प्रत्यग्रलूनदर्भे धेन्वर्थमुपात्ते निपतितो लूताऽभूदिति" इति ॥ ११७—१२३ ॥

अथ जन्तुघ्नी गुटिका।—

सूतगन्धौ समौ ताभ्यां मण्डूरं सप्तमांशतः।
विधाय कज्जलीमाखु-कर्ण्या सम्मर्दयेद्दिनम् ॥१२४॥
ततो मण्डूरमानेन क्षुद्रदीप्यं विनिक्षिपेत्।
आरुष्करकषायेण दिनमेकं विमर्दयेत् ॥१२५॥
ब्रह्मबीजं समुद्रस्य फलं जातीफलं तथा।
विषतिन्दुकबीजञ्च ताप्यं सर्वं समांशकम् ॥१२६॥
विडङ्गं सममेतैश्च सूक्ष्मचूर्णं प्रकल्पयेत्।
रसतुल्यं हितं चूर्णं रसेन सह मेलयेत् ॥१२७॥
वासा च निम्बत्वग्वंशो वेल्लव्योषाम्बुदं तथा।
एषां क्वाथेन सप्ताहं त्र्यहं मूर्वाऽऽढकी रसे ॥१२८॥
भावयित्वा चणप्रायाः कर्त्तव्या वटिकाः शुभाः।
अश्वनिम्बादिजक्वाथे प्रदत्तैका वटी शुभा ॥१२९॥
पातयेज्जठराज्जन्तून् सर्वदेहगदान् हरेत्।
कुष्ठजन्तून्निहन्त्याशु द्वित्रिवारप्रयोगतः ॥१३०॥

जन्तुघ्नीगुटिकायां—ताभ्यां मण्डूरं सप्तमांशतः मिलितसूतगन्धयोः सप्तमभागैकभागं मण्डूरचूर्णम्। आखुकर्ण्या मूषिकपर्ण्याः, रसेनेति शेषः। क्षुद्रदीप्यं क्षुद्रयमानीम् अजमोदामित्यर्थः। आरुष्करकषायेण भल्लातकक्वाथेन। ब्रह्मबीजं पलाशबीजम्। समुद्रस्य फलं "समुद्रफल" इति प्रसिद्धम्। ब्रह्मबीजादीनां ताप्यान्तानां सर्वेषां रससमानता। विडङ्गञ्च ब्रह्मबीजादीनां मिलितचूर्णानां समम्। हितं चूर्णं हितकरं ब्रह्मबीजादीनां चूर्णमित्यर्थः। वंशः वंशनेत्री। मूर्वाढकी रसे मूर्वा "मूँचमुखी" इति प्रसिद्धम्, आढकः "अरहर" इति प्रसिद्धं, तद्युग्मे रसे। अश्वेति।—अश्वनिम्बः "घोँडानिम" इति प्रसिद्धं, तस्य आदि मूलं तज्जक्वाथे मूलत्वक्-क्वाथे इत्यर्थः। जन्तून् क्रिमीन्। सर्वदेहगदान् सर्वानेव शारीररोगानित्यर्थः; "सर्वदेहगतान्" इति पाठे—सर्वदेहगतान् सर्वस्मिन्नेव शरीरे सञ्जातान्। कुष्ठजन्तून् कुष्ठजनकक्रिमीन् केशादादीनित्यर्थः, यदुक्तं वाग्भटे—"केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः। षट् ते कुष्ठैककर्माणः सहसौरसमातरः॥" इति ॥ १२४—१३० ॥

अथ धन्वन्तरिः।—

सूतगन्धार्कसौभाग्य-कङ्कुष्ठं रक्तचन्दनम्।
कणा चैतानि तुल्यानि मर्दयेल्लुङ्गवारिणा ॥१३१॥
एकाहमथ संशोष्य स्थापयेदतियत्नतः।
रसो निःशेषकुष्ठघ्नो धन्वन्तरिरिति स्मृतः ॥१३२॥
निर्दिष्टः शम्भुना सर्व-रोगभीतिविनाशनः।
पथ्याघृतयुतो वाद्यं सिन्धुविश्वान्वितोऽपि वा ॥१३३॥

अथ वज्रधारः।—

वज्रसूताभ्रहेमाच्च भस्म योज्यं समं समम्।
सर्वांशं तालकं तुल्यं शिग्रुधुस्तूरजद्रवैः ॥१३४॥
मर्द्यं स्नुह्यर्कजैः क्षीरैर्दिनैकञ्चाथ भावयेत्।
सप्ताहं बाकुचीतैलैस्तन्माषैकन्तु भक्षयेत् ॥
वज्रधारो रसः ख्यातः सर्वकुष्ठनिकृन्तनः ॥१३५॥

अथ सर्वकुष्ठाङ्कुशः।—

मुषलीबाकुचीबीजं निर्गुण्डीमूलतुल्यकम्।
मध्वाज्याभ्यां लिहेत् कर्षमनु स्यात् सर्वकुष्ठनुत् ॥१३६॥

---

धन्वन्तरौ—सौभाग्यं टङ्कणम्। कङ्कुष्ठं स्वनामख्यातं, तदभावे स्वर्णक्षीरी ग्राह्या। लुङ्गवारिणा मातुलुङ्गरसेन। पथ्येति।—घृतहरीतकीभ्यां शुण्ठीसैन्धवाभ्यां वा युतः धन्वन्तरिरसः वाद्यं, इत्यादिति शेषः ॥ १३१—१३३ ॥

वज्रधारे—वज्रं हीरकम्। स्नुह्यर्कजैः क्षीरैः स्नुहीक्षीरैः अर्कक्षीरैश्च। भावयेदित्यस्य बाकुचीतैलैः सप्ताहमित्यनेन सम्बन्धः ॥ १३४।१३५ ॥

सर्वकुष्ठाङ्कुशे—मुषली तालमूली, मुषलीबाकुचीबीजं मिलित्वा निर्गुण्डी-मूलतुल्यम्; "मुषलीबाकुचीबीजनिर्गुण्डीमूलमेव च" इति पाठे—मुषल्यादित्रयाणां समत्वम्। अनु इति वज्रधारसेवनात् पश्चात् लिहेदित्यर्थः; अथवा—अनु-शब्दोऽत्र सहार्थे, मुषल्यादिचूर्णकर्षं मध्वाज्याभ्यामनु सह लिहेत्; यद्वा—अनु समकालमेव, लेहनसमकालमेव इत्यर्थः, सर्वकुष्ठनुत् स्यात्। "मुषलीचूर्णम्" इति पाठान्तरमस्य ॥ १३६ ॥

अथ द्वितीयमहातालेश्वरः ।—

तालं तार्प्यं शिला सूतं शुद्धं सैन्धवटङ्कणम् ।
समांशं चूर्णयेत् खल्वे सूताद्द्विगुणगन्धकम् ॥१३७॥
गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम् ।
मर्द्यं षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे ॥१३८॥
पुटे पुटे द्रवैर्मर्द्यं सर्वमेतत्तु षट्पलम् ।
द्विपलं मारितं ताम्रं लोहभस्म चतुष्पलम् ॥१३९॥
जम्बीराम्लेन तत् सर्वं दिनं मर्द्यं पुटेल्लघु ।
त्रिंशदन्तं पुटञ्चास्य चिप्त्वा सर्वं विचूर्णयेत् ॥१४०॥
महिष्याज्येन सम्मिश्रं निष्कार्द्धं भक्षयेत् सदा ।
मध्वाज्यैर्बाकुचीचूर्णं कर्षमात्रं लिहेदनु ॥
सर्वकुष्ठं निहन्त्याशु महातालेश्वरो रसः ॥१४१॥

अथ द्वितीयकुष्ठकुठारः ।—

सूतभस्मसमं गन्धं मृतायस्ताम्रगुग्गुलुः ।
त्रिफला विषमुष्ठी च चित्रकश्च शिलाजतु ॥१४२॥
प्रत्येकं चूर्णितं कुर्य्यात् प्रत्येकं निष्कषोडश ।
चतुःषष्टि करञ्जस्य बीजचूर्णं प्रकल्पयेत् ॥१४३॥

---

द्वितीयमहातालेश्वरे—सर्वमेतत्तु षट्पलं पुटपक्कस्यैतस्य रसस्य पलषट्कम् । मर्द्यमित्यादि ।—जम्बीररसेन दिनपञ्चकं मर्दयित्वा मूषायां संस्थाप्य च भूधरयन्त्रे पचेत्, ततो निष्काश्य पुनः जम्बीररसेन दिनपञ्चकं मर्दयित्वा पूर्ववत् पचेत्, एवं षड्वारान् कुर्य्यात् । त्रिंशदिति ।—जम्बीराम्लेन दिनं मर्दयित्वा लघुपुटे पचेत्, एवं त्रिंशत्पुटं दद्यादित्यर्थः । "त्रिंशदन्तं पुटञ्चास्य" इत्यत्र "त्रिंशदंशं विषञ्चास्य" इति रसरत्नाकरादिपाठः समीचीनः । योगोऽयं प्रायेणानुरूपः पूर्वोक्तमहातालेश्वरस्य ॥ १३७—१४१ ॥

द्वितीयकुष्ठकुठारे—"विषमुष्ठी" इत्यत्र "महानिम्बः" इति रसेन्द्रचिन्तामणि-रसेन्द्रसारसङ्ग्रहधृतपाठः । रसरत्नाकरे तु "विषमुष्टिः" इति पाठः । "प्रत्येकं चूर्णितम्" इत्यत्र "इत्येतच्चूर्णितम्" इति पाठान्तरम् । चतुःषष्टि इत्यत्र निष्कमिति

चतुःषष्टि मृतं ताम्रं मध्वाज्याभ्यां विलोडयेत् ।
स्निग्धभाण्डगतं खादेद्विनिष्कं सर्वकुष्ठजित् ॥१४४॥
रसः कुष्ठकुठारोऽयं गलत्कुष्ठनिकृन्तनः ।
पथ्यं त्रिमधुरैर्देयात्तदभावे गुडौदनम् ॥१४५॥
पातालगरुड़ीमूलं मधुपर्णीञ्च धान्यकम् ।
सितया भक्षयेत् कर्षमतितापप्रशान्तये ॥
लिह्याद्वानागबलामूलं मध्वाज्यैर्वान्तितापनुत् ॥१४६॥

अथ वज्रतैलम् ।—

वज्रक्षीरं रविक्षीरं धुस्तूरं चित्रकद्रवम् ।
महिषीविड्भवं द्रावं सर्वांशं तिलतैलकम् ॥१४७॥
पचेत्तैलावशेषन्तु तत्तैलं प्रस्थमात्रकम् ।
गन्धकाग्निशिलातालं विडङ्गातिविषाविषम् ॥१४८॥
तिक्तकोशातकी कुष्ठं वचा मांसी कटुत्रयम् ।
हरिद्रादारु यष्ट्याह्वं सर्जीक्षारश्च जीरकम् ॥१४९॥

---

ध्नः । मृतं ताम्रमपि चतुःषष्टिनिष्कम्; एवञ्च ताम्रभागः अशीतिनिष्कः ग्राह्यः । रसेन्द्रचिन्तामण्यादिषु तु "ताम्रम्" इत्यत्र "अभ्रम्" इति पाठान्तरं समीचीनं, ताम्रभागस्यातिबाहुल्यात् । त्रिमधुरैः सिताक्षौद्राज्यैः, तदुक्तं—"सितामाक्षिकसर्पींषि मिलितानि यदा तदा । मधुरत्रयमाख्यातं त्रिमधु स्यात् मधुत्रयम् ॥" इति, "घृतं गुडो माक्षिकञ्च विज्ञेयं मधुरत्रयम्" इति च । पातालगरुडीमूलं पातालगरुडी छिलहिण्टः तस्या मूलम् । "पातालगरुडीमूलम्" इत्यत्र "पञ्चाङ्ग-तण्डुलीमूलम्" इति रसरत्नाकरे पाठः । मधुपर्णीम् अर्कपुष्पीं, "चांरहुली" इति प्रसिद्धां, दन्तीमूलं वा । अतितापप्रशान्तये औषधसेवनजनितसन्तापनिवृत्तये इत्यर्थः, एवं वान्तितापनुत् इत्यस्यापि अर्थो बोध्यः ॥ १४२—१४६ ॥

वज्रतैले—वज्रक्षीरं स्नुहीक्षीरम् । धुस्तूरं धुस्तूरद्रवम् । सर्वांशं सर्वतुल्यं, तेन वज्रक्षीरादीनामेकैकभागः तिलतैलस्य च पञ्च भागाः । रसरत्नाकरे तु—"महिषीविड्भवं द्रावं सर्वांशं तिलतैलकम्" इत्यत्र "सर्वांशं तिलतैलञ्च गोमूत्रेण समं पचेत्" इति पाठान्तरं, तत्र—वज्रक्षीरादीनि मिलित्वा तैलतुल्यानि

कर्षांशं देवकाष्ठञ्च चूर्णं तैले विमिश्रयेत् ।
वज्रतैलमिदं ख्यातं मर्दनात् सर्वकुष्ठनुत् ॥१५०॥

अथ स्वर्णक्षीरः ।—

क्षिप्त्वा तक्रघटे पश्चात् काञ्चनीपलपञ्चकम् ।
तक्रे जीर्णे समुद्धृत्य पुनः क्षीरघटे पचेत् ॥१५१॥
क्षीरे जीर्णे समुद्धृत्य जलैः प्रक्षाल्य शोषयेत् ।
तच्चूर्णितं पञ्चपलं मरिचानां पलद्वयम् ॥१५२॥
पलैकं मूर्च्छितं सूतमेकीकृत्य तु भक्षयेत् ।
निष्कैकं सुप्तकुष्ठार्त्तः स्वर्णक्षीररसो ह्ययम् ॥१५३॥

अथ महाभल्लाततैलम् ।—

यत्नाद्द्विखण्डितं कुर्य्याद्भल्लातशतपञ्चकम् ।
क्षिप्त्वा पश्चाच्छनैर्वह्नौ तैले द्वादशपालिके ॥१५४॥
यावत्तरन्ति ते पक्वा तत्तैलं पाचयेत् पुनः ।
मधुपाके तु सम्प्राप्ते ह्यवतार्य्य तु तत्क्षणात् ॥
सर्वकुष्ठानि हन्त्याशु महाभल्लाततैलकम् ॥१५५॥

गोमूत्रञ्च तैलात्सप्तगुणम् इति । निक्तकोशातकी तिक्तघोषकः, "तित्पोरला" इति भाषा । हरिद्रादारु दारुहरिद्रा ; "हरिद्रादारु" इत्यत्र "दारुहरिद्रा" इति पाठो न युज्यते छन्दोभङ्गप्रसङ्गात् । गन्धकादीनां देवकाष्ठान्तानां प्रत्येकं कर्षप्रमाणं चूर्णं तैले दत्त्वा आलोड्य स्थापयेत् । अकल्कमिदं तैलम्, "अकल्कोऽपि भवेत् स्नेहः यः साध्यः केवले द्रवे" इति वचनात् ॥ १४७—१५० ॥

स्वर्णक्षीरे—तक्रघटे द्रोणप्रमिते तक्रे । काञ्चनी स्वर्णक्षीरी । जीर्णे शुष्के इत्यर्थः । मूर्च्छितं सूतं कज्जलीभूतं पारदम् ; तथा च रसेन्द्रसारसङ्ग्रहे— "गन्धकेन रसं प्राज्ञः सुदृढं मर्दयेत् भिषक् । कज्जलाभो यदा सूतो विहाय घनचापलम् ॥ दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो रसकोविदैः ॥" इति ; स्थलान्तरेऽप्युक्तं— "मर्दनादिष्टभैषज्यैर्नष्टपिष्टत्वकारकम् । तन्मूर्च्छनं हि वङ्गाहि-मलादिदोषनाशनम् ॥" इति ॥ १५१—१५३ ॥

महाभल्लाततैले—भल्लातशतपञ्चकं भल्लातकगुटिकां पञ्चशतसङ्ख्यकम् । तैले

अथ त्रैलोक्यविजयतैलम्।—

रसं गन्धं विषं तालं स्वर्णक्षीरी कटम्भिका।
वरुणाम्लेन सञ्चूर्ण्य प्रतिनिष्कद्वयं द्वयम्॥१५६॥
क्षिपेत्तस्मिन् विंशोष्याथ क्रमान्निष्कं सदा लिहेत्।
त्रैलोक्यविजयं तैलं सर्वकुष्ठहरं ध्रुवम्॥१५७॥

अथ महामार्त्तण्डतैलम्।—

शाकं निम्बाङ्कोल्लवह्नि-राजवृक्षाक्षसम्भवम्।
गर्भशुष्कं शुभं खण्डं नारिकेलप्रियालकम्॥१५८॥
वातारिचक्रमर्दस्य वीजं वाकुचिजं तथा।
समं पातालयन्त्रेण तैलं ग्राह्यं प्रयत्नतः॥१५९॥
प्रस्थौ द्वौ तिलतैलस्य कुष्ठचूर्णं पलद्वयम्।
स्वर्णक्षीरीपलैकञ्च क्षिप्त्वा पक्वाऽवतारयेत्॥१६०॥
पूर्वतैले चतुष्प्रस्थे तैलीभूते विनिर्क्षिपेत्।
महामार्त्तण्डतैलोऽयं लेपात् कुष्ठं नियच्छति॥
अतिकण्डूं क्रिमिं पाकं स्फोटकानि च नाशयेत्॥१६१॥

---

कटुतैले। द्वादशपालिके द्वादशपलपरिमिते। तरन्ति उत्प्लवन्ते। मधुपाके पुनः पाकात् यदा मधुवर्णं मधुवद्गन्धञ्च जायते तदा इत्यर्थः॥१५४।१५५॥

त्रैलोक्यविजयतैले—"स्वर्णक्षीरी कटम्भिका" इत्यत्र "स्वर्णक्षीरी च टम्भिका" इति पाठान्तरम्। वरुणाम्लेन मदोनेत्यर्थः; अम्लजलेन वा, काञ्जिकेनेत्यर्थः। तस्मिन् पूर्वोक्तमहाभल्लाततैले॥१५६।१५७॥

महामार्त्तण्डतैले—शाकमित्यस्य वीजमित्यनेनान्वयः, शाकः सवजद्रुमविशेषः, "शेगुन्" इति ख्यातं, तद्भवं वीजमित्यर्थः। वह्निः भल्लातकः, राजवृक्षः आरग्वधः, अक्षः विभीतकः, सुक्, सुही एषां वीजम्। गर्भेति।—गर्भशुष्कम् आवरणाभ्यन्तरे स्वयमेव शुष्कमित्यर्थः, नारिकेलप्रियालकं नारिकेल-पियालफलमज्जि शुभं प्रशस्तं पूतिदोषादिरहितमित्यर्थः, खण्डम्। वातारिचक्रमर्दस्य वातारिः एरण्डः चक्रमर्दः "चाकुन्दा" इति प्रसिद्धं, तस्य। समं समभागम्। पातालेति।—पातालयन्त्र-विधिस्तु प्रागेव प्रदर्शितः। पूर्वतैले शाकादिवीजानां तैले। तैलीभूते पाक-

अथ काञ्चनीतैलप्रयोगोपदेशः ।—

कुष्ठञ्च काञ्चनीतैलैर्मर्द्यंल्लेप्यं सुघर्षितम् ॥१६२॥

अथ शुष्ककण्डूहरकुमार्य्यादिलेपः ।—

कुमारीसैन्धवं लेप्यं शुष्ककण्डूहरं परम् ॥१६३॥

अथ विपादिकायां सैन्धवादिलेपः ।—

सैन्धवेन महामुण्डी-लेपो हन्ति विपादिकाम् ॥१६४॥

अथ कण्डूव्रणादौ शिलादिः ।—

शिला शम्भुवीजं वरं कुष्ठगन्धं
मरीचं तथा जीरकं देवधूपः ।
निशा सर्पिषा मर्दितो मन्दवारे
हरेत् कायकण्डूव्रणस्फोटगण्डान् ॥१६५॥

अथ कुष्ठान्तपर्पटी ।—

पलैकं शुद्धसूतस्य कर्षैकं शुद्धगन्धकम् ।
गन्धतुल्यं मृतं ताम्रं सूतांशं मर्दयेद्विषम् ॥१६६॥

---

सिद्धलक्षणे समुदिते सतीत्यर्थः । विनिक्षिपेत, सुभाजने इति शेषः । आदौ पातालयन्त्रेण शाकादिबीजेभ्यः तैलं निष्काश्य, चतुःप्रस्थमिते तस्मिन् तिलतैलादिकं यथोक्तमानं दत्त्वा पचेत्, सुसिद्धे च अवतार्य्य सुभाजने स्थापयेदिति ॥१५८—१६१॥

काञ्चनीतैलप्रयोगोपदेशे—काञ्चनीतैलैः स्वर्णक्षीरीबीजोत्थतैलैः सह कुष्ठं तदाख्यौषधविशेषं मर्द्यात, ततः कुष्ठं व्याधिं सुघर्षितं गोजीशाखोटकादिपत्रैः सुलिखितमित्यर्थः, कृत्वा लेप्यं, काञ्चनीतैलमृष्टकुष्ठेनेति शेषः ; यद्वा—काञ्चनीतैलैः कुष्ठं कुष्ठव्याधिं मर्द्यात्, मर्द्यात् इति प्रयोगस्तु शिष्टप्रयोगानुसारात् सहनीयः ; तथा सुघर्षितं कुष्ठं लेप्यं, काञ्चनीतैलैरेवेति बोध्यम् ॥ १६२ ॥

कुमार्य्यादिलेपे—शुष्ककण्डूः स्रावादिविरहितकण्डूरित्यर्थः ॥ १६३ ॥

सैन्धवादिलेपे—महामुण्डी महाश्रावणिका ॥ १६४ ॥

शिलादौ—शिला मनःशिला । शम्भुवीजं पारदः । वरं कुङ्कुमं सैन्धवं वा । देवधूपः सर्जरसः । मन्दवारे शनैश्चरवासरे । कायकण्डूः कायी सर्वदेहः तद्गतकण्डूः । "काय" इत्यत्र "कोठ" इति पाठान्तरम् । लेपविधया अयं योगः ॥ १६५ ॥

सर्वतुल्यं पुनर्गन्धं दत्त्वा किञ्चिद्विशोषयेत् ।
घृताभ्यक्ते लोहपात्रे पश्चाद्यावद्द्रवीभवेत् ॥१६७॥
रम्भापत्रे पटे वाऽथ पातयेत् पर्पटीं तदा ।
माषैकं चूर्णितं खादेद्गजचर्म नियच्छति ॥
निष्कैकं बाकुचीचूर्णं लेहयेदनुपानकम् ॥१६८॥

अथ काशीशबद्धो रसः ।—

पलं रसं हि काशीशैर्युतं पञ्चगुणैः सह ।
मर्दयेद्यामपर्य्यन्तमर्जुनस्य त्वचो रसैः ॥१६९॥
शरावसम्पुटे रुद्ध्वा पुटेत् क्रोड़पुटेन हि ।
रसः काशीशबद्धोऽयं मधुना वल्लतुल्यकः ॥१७०॥
शाणबाकुचिकायुक्तः सेवितो हन्ति निश्चितम् ।
त्रिभिर्मासैः किलासं हि दद्रूण्यपि विशेषतः ॥१७१॥

अथ द्वितीयसर्वेश्वरः ।—

शुद्धसूतं चतुर्गन्धं खल्ले यामं विमर्दयेत् ।
मृतताम्राभ्रलोहानि हिङ्गुलञ्च पलं पलम् ॥१७२॥
सुवर्णं रजतञ्चैव प्रत्येकं दशनिष्ककम् ।
माषैकं मृतवज्रञ्च तालसत्त्वं पलद्वयम् ॥१७३॥
जम्बीरोन्मत्तवासाभिः स्नुह्यर्कविषमुष्टिभिः ।
मर्द्यं हयारिजैर्द्रावैः प्रत्येकेन दिनं दिनम् ॥१७४॥
एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्रवेष्टितम् ।
वालुकायन्त्रगं स्वेद्यं त्रिदिनं लघुनाऽग्निना ॥१७५॥

---

कुष्ठान्तपर्पट्याः—गजचर्म चर्मकुष्ठम् ॥ १६६—१६८ ॥

काशीशबद्धरसे—रसं रससिन्दूरम् । क्रोड़पुटेन वराहपुटेन ॥ १६९—१७१ ॥

द्वितीयसर्वेश्वरे—शोधितरसस्य पञ्चमाणता बोद्धव्या, समनन्तरमेव ताम्रादीनां समानतादर्शनात् "भागेऽप्यनुक्ते समता विधेया" इति परिभाषाबलाच ;

आदाय चूर्णयेत् सूक्ष्मं पलैकं योजयेद्विषम् ।
द्विपलं पिप्पलीचूर्णं मिश्रं सर्वेश्वरो रसः ॥१७६॥
द्विगुञ्जं भक्षयेत् क्षौद्रैः सुप्तिमण्डलकुष्ठजित् ।
बाकुचीं देवकाष्ठञ्च कर्षमात्रं सुचूर्णितम् ॥
लिहेदेरण्डतैलेन ह्यनुपानं सुखावहम् ॥१७७॥

अथ योगराजगुग्गुलप्रयोगोपदेशः ।—

गुग्गुलुर्योगराजो वा योज्यो मण्डलशान्तये ॥१७८॥

अथ श्वित्रलक्षणम् ।—

श्वित्रन्तु कृष्णमरुणं मरुदस्रगामि
पित्तेन रोमशतनञ्च विदाहिताञ्च ।
मांसाश्रितं बहुसितं कफतः सकण्डु
मेदोगतं बलवदेव यथोत्तरं स्यात् ॥१७९॥

---

एवञ्च गन्धस्य पलचतुष्टयं ग्राह्यम् इति । उन्मत्तः धुस्तूरः । हयारिजैः करवीरजैः ॥ १७२—१७७ ॥

मण्डलकुष्ठे अधिकारान्तरोक्तमौषधविशेषमुपदिशति, गुग्गुलुरिति ।—वा-शब्दः पूर्वयोगापेक्षया ; मण्डलकुष्ठशान्तये सर्वेश्वरः योज्यः वक्ष्यमाणवातव्याध्यधिकारोक्तः योगराजो गुग्गुलुर्वा योज्यः इति ॥ १७८ ॥

तुल्यनिदानत्वात् कुष्ठचिकित्सानन्तरं श्वित्रचिकित्सितं विवक्षुस्तस्य लक्षणमाह, श्वित्रमिति ।—मरुता वातेन असं रक्तं दूष्यमिति यावत्, गच्छतीति तथाभूतं, वातेन रक्तगतमित्यर्थः । मरुत्-शब्दोऽत्र समासान्तर्गतोऽपि पृथगन्वेतव्यः । वातात् श्वित्रं रक्ताश्रितं कृष्णम् अरुणञ्च भवेत् इति योजनीयम् । "कृष्णम्" इत्यत्र "रूक्षम्" इति पाठः वाग्भटसम्मतः । तथा पित्तेन दोषेण श्वित्रं रोमशतनं, शातनमिति छन्दोऽनुरोधात् ह्रस्व, शातनमित्यर्थः, एवञ्च रोमशातनं रोमविध्वंसनं, तथा विदाहिताञ्च, कुर्यादिति शेषः । तत्र मांसाश्रितं मांसधातुमाश्रित्य वर्त्तते इत्यर्थः, तथा कमलपत्रवत् वर्णतः ताम्रञ्च भवति वाग्भटसंवादात् । कफतः बहुसितं सुशुभ्रं, सकण्डु च, तत्र मेदोगतं मेदःश्रितम् । यथोत्तरम् उत्तरोत्तरं, रक्तगतात् श्वित्रात् मांसगतं मांसगताच्च मेदोगतमित्यर्थः, बलवदेव कृच्छ्रसाध्यमेवेत्यर्थः, स्यात् । वाग्भटेऽप्युक्तं—
"वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् । सदाहं रोमविध्वंसि कफात् श्वेतं

अथ श्वित्रारिः ।—

काशीशरसगन्धानि मर्दयेत् सुरसारसैः ।
सम्पुटे पुटयेद्दत्त्वा चाङ्गेरीमधरोत्तरम् ॥१८०॥
सर्वमेतच्च सञ्चूर्ण्य तण्डुलान् दश सप्त वा ।
आरभ्य वर्द्धयेद्यावत् पञ्चषष्टिं क्रमेण हि ॥१८१॥
अनुपानाय मध्वाज्यं दध्याज्यं नवनीतकम् ।
धात्र्यार्द्रकरसैश्चैव तिन्दुकं कदलीफलम् ॥
श्वित्रारिसंज्ञितो ह्येष चित्रकुष्ठनिसूदनः ॥१८२॥

अथ श्वित्रे निम्बादिचूर्णम् ।—

निम्बपत्रनिशाकृष्णा-वाकुचीवीजकं समम् ।
चूर्णयित्वा पिबेद्दुग्धैः प्रभाते श्वित्रनाशनम् ॥१८३॥

अथ श्वित्रकुष्ठारिः ।—

रसगन्धकतुल्यांशं वाकुचीक्वाथमर्दितम् ।
सेवितं सोमतैलेन श्वित्रकुष्ठं नियच्छति ॥१८४॥

---

घनं गुरु ॥ सकण्डूं क्रमात् रक्त-मांसमेदःसु चादिशेत् । वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥" इति ॥ १७९ ॥

श्वित्रारौ—सुरसारसैः तुलसीपत्ररसैः । चाङ्गेरीम् अम्ललोनीम् । दश सप्त वा इति विकल्पस्तु दोषव्याधिबलाबलानुसारात् अवधातव्यः । चित्रकुष्ठम् इति श्वित्रस्यैव नामान्तरम् । "चित्र" इत्यत्र "श्वित्र" इति पाठान्तरम् । अयमर्थः,—काशीशादिकं समभागं तुलसीपत्ररसेन मर्दयित्वा मूषायामधरोत्तरं दत्तस्य अम्ललोनी-चूर्णस्य काशीशादितुल्यस्य मध्ये संस्थाप्य च गजपुटे पचेत्, ततः सर्वमेव भेषजं पुटादाकृष्य सञ्चूर्ण्य च सप्ततण्डुलमानेन दशतण्डुलमानेन वा आरभ्य एकैक-तण्डुलवृद्ध्या पञ्चषष्टितण्डुलं यावत् वर्द्धयेत्, अनुपानार्थं मध्वाज्यादीनामेकतमच्च पिबेदिति ॥ १८०—१८२ ॥

निम्बादिचूर्णे—सर्वं सुगमम् ॥१८३॥

श्वित्रकुष्ठारौ—सोमतैलेन सोमं रक्तचन्दनं तस्य तैलेन, सोमः सोमराजी वा, नात्रैकदेशग्रहणेन नामग्रहणमित्यपदत्वनियमात् ॥ १८४ ॥

अथ चन्द्रप्रभा वटिका।—

पिष्टो निम्बुकगोमयूरसलिले सार्द्धो रसो गन्धकात्
मूषायां घननादपिण्डसहितं पक्वं करीषे तिलान्।
बाकुच्याश्च फलानि गोजलकृता चन्द्रप्रभेति श्रुता
श्वित्रं तक्रभुजो निहन्ति वटिका चाराम्लतैलं त्यजेत्॥१८५॥

अथ ताम्रलिप्तकज्जली।—

रसद्विगुणगन्धकं त्रिगुणताम्रलिप्तं पचेत्
गृहीतमनु कज्जलीं खदिरबाकुचीनिम्बजैः।
रसैः पुटविपाचितं समलयाकषायं पिबेत्
किलासमरुणं सितं जयति शुद्धतक्राशिनः॥१८६॥

चन्द्रप्रभायां—निम्बुकगोमयूरसलिले निम्बुकरसे गोमयूरयोः मूत्रे च पिष्टः गन्धकात् गन्धकभागापेक्षया सार्द्धः सार्द्धभागः रसः पारदः, ग्राह्य इति शेषः ; तेन गन्धकस्य एकः रसस्य च सार्द्धैकभागो ग्राह्यः। ततः घननादपिण्डसहितं घननादः मेघनादः, तण्डुलीयमूलमित्यर्थः, तत्पिण्डसहितं तत्कल्कमध्ये निहितमित्यर्थः, मूषायां करीषे करीषाग्नौ, पक्वं, तं रसगन्धकमिति शेषः, तिलान् बाकुच्याः फलानि च प्रत्येकं पक्वौषधतुल्यानि, एकीकृत्य इति शेषः, गोजलकृता गोमूत्रमर्दिता, चन्द्रप्रभेति श्रुता वटिका इत्यन्वयः॥ १८५॥

ताम्रलिप्तकज्जल्यां—त्रिगुणताम्रलिप्तं रसापेक्षया त्रिगुणताम्रपत्रे लिप्तम्। पचेत् गजपुटे पचेदित्यर्थः। अनु पश्चात् पाकानन्तरं, गृहीतं, पुटात् बहिष्कृत्य इति शेषः, कज्जलीम् ; गृहीतं विपाचितमिति कज्जलीविशेषणयोः पुंलिङ्गतानिर्देशस्य महाजनप्रयोगात् साधुत्वमवगन्तव्यम्। "कज्जलीम्" इत्यत्र "कज्जलम्" इति साधुः। खदिरादीनां रसैः मर्दयित्वा पुटविपाचितं पुनः गजपुटे पक्वं तं, समलयाकषायं मलया सोमराजी तत्कषायसहितम्। किलासमिति।—"किलासमेव मांसमेदः-समाश्रयत्वात् अरुणं श्वित्रञ्च भण्यते" इति मधुकोषः, विस्तरस्तु तत्रैव मृग्यः। सितं श्वित्रम्। शुद्धतक्राशिनः केवलतक्रेण सहान्नभोजिनः, न तु व्यञ्जनान्तरैरित्याशयः॥ १८६॥

अथोदयादित्यः ।—

शुद्धसूतं द्विधा गन्धं मर्द्दं कन्याद्रवैर्दिनम् ।
तद्गोलं हण्डिकामध्ये ताम्रपात्रेण रोधयेत् ॥१८७॥
सूतकाद्द्विगुणेनैव शुद्धेनाधोमुखेन वै ।
पार्श्वे भस्म निधायाथ पात्रेऽर्द्धे गोमयं जलम् ॥१८८॥
किञ्चित् किञ्चित् प्रदातव्यं चुल्ल्यां यामद्वयं पचेत् ।
चण्डाग्निनोद्धृत्य ततः स्वाङ्गशीतं विचूर्णयेत् ॥१८९॥
काकोडुम्बरिकावह्नि-त्रिफलाराजवृक्षकम् ।
विडङ्गं बाकुचीबीजं क्काथयेत्तेन भावयेत् ॥१९०॥
दिनैकमुदयादित्यो रसो भक्ष्यो द्विगुञ्जकः ।
खदिरस्य कषायेण बाकुचीबीजचूर्णकम् ॥१९१॥
तुल्यं मृद्वग्निना पिण्डं जातं यावत् पचेत्तथ ।
त्रिनिष्कं तत् रविक्षीरैः क्काथैर्वा त्रैफलैरनु ॥१९२॥
त्रिदिनान्ते भवेत् स्फोटः सप्ताहे वा न संशयः ।
नीलीं गुञ्जाञ्च काशीशं धुस्तूरं हंसपादिकाम् ॥१९३॥
सूर्य्यावर्त्तञ्चाम्लपर्णी-तुल्यं पिष्ट्वा प्रलेपयेत् ।
स्फोटस्थाने प्रशान्त्यर्थं सप्तरात्रं पुनः पुनः ॥
श्वेतकुष्ठं निहन्त्याशु साध्यासाध्यं न संशयः ॥१९४॥

---

उदयादित्ये—राजवृक्षकम् आरग्वधम् । खदिरस्य कषायेण चतुर्गुणेनेत्याशयः, तुल्यं खदिरतुल्यं बाकुचीबीजचूर्णकम् । केचित् खदिरस्य कषायेण तुल्यं बाकुचीबीजचूर्णकमित्यन्वेति, तदयुक्तम्; क्काथचूर्णयोस्तुल्यतायां पाकानुपपत्तेः । सूर्य्यावर्त्तम् आदित्यभक्ता "हुड़हुड़े" इति देशभाषया प्रसिद्धम् । अम्लपर्णीतुल्यम् अम्लपर्णी चाङ्गेरी चुक्रिका वा, तत्तुल्यम् । "अम्लपर्णी" इत्यत्र "ताम्रपर्णी" इति पाठान्तरम् । अयमर्थः,—कन्यारसमर्दितं रसगन्धपिण्डं हण्डिकायां संस्थाप्य सूतात् द्विगुणमितशुद्धताम्रनिर्मितपात्रविशेषेण अधोमुखेन आच्छाद्य च सन्धिं निरोधयेत्, ततः तत्पार्श्वे पाशाशादिभस्म निधाय ताम्रपात्रस्य उपरार्द्धे किञ्चित् किञ्चित् गोमयमिश्रं जलं सिञ्चेत्, एवं चुल्ल्यां तीव्राग्निना प्रहरद्वयं पक्त्वा स्वाङ्गशीतमादाय विचूर्णयेत्, काकोडुम्बरिका-

अथ अल्पश्वित्रे शिलादिलेपः ।—

अल्पं श्वेतं निघृष्याऽऽदौ रक्तामण्डलपल्लवैः ।
शिलाऽपामार्गभस्मापि लिप्ता श्वित्रं विनाशयेत् ॥१९५॥

अथ अङ्कोलतैलादिलेपद्वयम् ।—

लेपो वाऽङ्कोलतैलेन काञ्चन्या काञ्जिकेन वा ।
गुञ्जाफलाग्निमूलञ्च लेपितं श्वेतकुष्ठजित् ॥१९६॥

अथ चतुर्गुणगन्धककज्जली ।—

सूते पले भूधरयन्त्रमध्ये सञ्जारयेद्गन्धपलं ततश्च ।
सूतेन गन्धस्य पलत्रयञ्च दत्त्वाऽथ निम्बूत्थरसैर्विमर्द्य ॥१९७॥
खराश्मिकावाकुचिकाग्निभृङ्ग-कोरण्टनीरैः परिमर्दयेत ।
दिनैकमेकं कटुतुम्बिनीजलैर्मर्द्यं ततः काञ्चनकूपिकान्तः ॥१९८॥
निक्षिप्य भाण्डे सिकतोदरान्तर्यामद्वयं स्वेदय तं ततश्च ।
दद्यीत वल्लद्वयमस्य कृष्णा-पर्णेन सार्द्धं त्वथवा तदर्द्धम् ॥१९९॥

दीनां मिलितानां क्वाथेन दिनमेकं मर्दयित्वा स्थापयेच्च । तच्च रसं द्विगुञ्जं भक्षयित्वा खदिरक्वाथपाचितवाकुचीचूर्णनिष्कद्वयमर्कक्षीरैः त्रिफलाकषायैर्वा अनुपिबेत्, तेन च दिनत्रयान्ते सप्ताहान्ते वा श्वित्रोपरि स्फोटो भविष्यत्येव । जाते च तस्मिन् तत्प्रशमाय नील्यादिकं समभागं पिष्ट्वा सप्ताहं यावत् स्फोटं लिम्पेदिति ॥१८७—१९४॥

शिलादिलेपे—अल्पम् अप्रवृद्धं, नवमित्यर्थः, श्वेतं श्वेतकुष्ठम्; यद्वा—श्वेतम् अल्पं निघृष्य इति योजना कार्य्या । रक्तामण्डलपल्लवैः रक्तलज्जावतीपत्रैः रक्तकरवीरपत्रैर्वा । शिला मनःशिला ॥ १९५ ॥

अङ्कोलतैलादिलेपद्वये—काञ्चन्या स्वर्णक्षीरीबीजेन, अङ्कोलतैलेन सह पिष्टेन स्वर्णक्षीरीबीजेन लेपः इत्यर्थः । काञ्जिकेन वा गुञ्जाफलाग्निमूलञ्च इति द्वितीयो लेपः, अग्निमूलं चित्रकमूलम् ॥ १९६ ॥

चतुर्गुणगन्धककज्जल्यां—गन्धपलमित्यत्र दत्त्वा इति शेषः । दत्त्वा मिश्रयित्वेत्यर्थः । खराश्मिका समभागः, समगुण इत्यर्थः; देशान्तरप्रसिद्धः औषधिविशेषः खराश्मिका इति केचित्, सप्तपर्णं इत्यन्ये । कोरण्टनीरैः कुरण्टः कुटजः तद्रसनीरैः; कौटजत्वग्रसैरित्यर्थः । "काञ्चनकूपिकान्तः" इत्यत्र "काचमृत्कूपिकान्तः" इति

पलाशमूलं त्वनुपाययीत तक्रेण साईञ्च ददीत पथ्यम्।
उष्णे क्षिपेत्तैलविमर्दितञ्च स्फोटा यदि स्युः सहसा च गात्रे॥२००॥

अथ श्वेतारियोगः।—

पलत्रयं गन्धकभृङ्गकृष्णा-तिलोत्थतैलं कटुतुम्बिनी च।
भल्लाततैलं कटुनिम्बवीजं सर्वं समानं परिभावयेत॥२०१॥
त्रिःसप्तकं भृङ्गरसैस्तु तोयं श्वेतारियोगः समुपैति सिद्धिम्।
पलार्द्धमानेन ददीत चामुं सिताघृताक्तं दिनजन्मकाले॥२०२॥
विवर्जयेत् शूरणमाषमांस-वृन्ताकमुद्गानि कषायकादि॥२०३॥

अथ कृष्णीकरणयोगः।—

कुमार्गजन्तोनुरपत्रसागरैर्वरुष्टिशाभास्करलोकभासया।
कल्कीकृतं यन्मधुना च संयुतं करोति तारं भ्रमरप्रभञ्च तत्॥२०४॥

पाठान्तरम्। उष्णे आतपे घर्मे इत्यर्थः। अयमर्थः,—पारदपलं गन्धकपलञ्च एकीकृत्य भूधरयन्त्रे पचेत, ततः पाकसिद्धेन तेन पारदेन सह पलत्रयं गन्धकं पुनर्मिश्रयित्वा निम्बरसेन मर्दयेत्। ततो वाकुचिकादीनां प्रत्येकरसेन कज्जल्यपेक्षया सप्तगुणेन एकमेकं दिनं, तिक्ततुम्बीरसेन च दिनमेकं मर्दयित्वा स्वर्णपात्रे काचपात्रे वा मृद्वस्त्रेण वेष्टिते निधाय च वालुकायन्त्रे यामद्वयं पचेत्, स्वाङ्गशीतं तमादाय विचूर्ण्य च द्विवल्लमेकवल्लं वा कृष्णपर्णेन सह भक्षयेत्, पलाशमूलञ्च किञ्चित जलेन पिष्ट्वा अनुपिबेत्, तक्रेण सार्द्धं पथ्यञ्च ददीत। औषधसेवनेन यदि गात्रे स्फोटाः निर्गच्छेयुः, तदा तं तैलाभ्यक्तं रौद्रे वासयेदिति॥ १९७—२००॥

श्वेतारियोगे—"कृष्णातिलोत्थतैलम्" इत्यत्र "कृष्णा तिलोत्थतैलम्" इति पाठे— कृष्णा पिप्पली। कटुतुम्बिनी तिक्तालावुः। कटुनिम्बवीजं पर्वतनिम्बवीजम्, अतितिक्तत्वात्। पलत्रयमित्युक्तोऽपि यत् सर्वं समानमित्युक्तं, तत् मिलित्वा पलत्रयबोधनार्थमिति। तोयं वालुकम्। दिनजन्मकाले प्रभाते इत्यर्थः। अयमर्थः,—गन्धकादिकं तोयान्तं सर्वं मिलितं पलत्रयं गृहीत्वा एकविंशतिवासरं भृङ्गराजरसेन भावयेत्। ततः पलार्द्धमानमौषधं शर्कराघृतसंयुक्तं प्रभातकाले उपयुञ्जीत, आ प्रकृतिभावं यावत् शूरणादिकञ्च विवर्जयेदिति॥ २०१—२०३॥

कृष्णीकरणयोगे—कुः मृत्तिका कृष्णमृत्तिका इत्यर्थः; द्रव्यगुणे अस्या रक्तद्वीपहरत्वश्रुतेः अत्र यौगिकत्वं बोद्धव्यम्। मार्गः अपामार्गः। जन्तो जयन्ती,

अथ गन्धकादिक्षारः ।—

गन्धकाश्वत्थरुचक-श्वेतशूरणटङ्कणाः ।
तिलपुष्पश्च तत्क्षारः सप्तधा गोजलाप्लुतः ॥२०५॥
तत्कर्षं मधुना लिप्त्वा तैलाद्यामं खरातपे ।
विकृते पतिता ह्येवं स्फोटाः स्युस्तान् वरोदकैः ॥२०६॥
सिञ्चेत्तुर्य्यदिनाल्लिप्ते निशातण्डुलतालकैः ।
गोतक्रकोद्रवान्नाशी सप्ताहाच्छित्रजित् खलु ॥२०७॥

अथ उडुम्बरादिचूर्णम् ।—

उडुम्बरस्य मूलानि चित्रमूलञ्च निम्बजम् ।
अवल्गुजस्य वीजानि चूर्णयित्वा विचक्षणाः ॥२०८॥

---

अश्नातीति पठितव्ये अश्नीति पाठस्तु छान्दसः, यथा—काकमाचीति वक्तव्ये कामाचीति प्रयोगः। शरः देशान्तरप्रसिद्धः तृणविशेषः। पक्षः पक्षी, स्वर्णमाक्षिक इत्यर्थः। सागरः सामुद्रलवणं तैः। वक्रः वरुणः तस्य त्वक्; "वक्र" इत्यत्र "वसु" इति पाठे—वसुः वसुकः। छिक्का देशान्तरप्रसिद्धा। भास्करः अर्कः तस्य मूलम्। लोकः लोकसंज्ञिका, वन्दगङ्गीत्यर्थः। भासा कुमारिका तया। "सागरैः" इत्यत्र बहुवचनमेषां प्रत्येकशो मिलित्वा वा तथा "भासया" इति एकवचनञ्च मिलित्वैव प्रयोगबोधनार्थमिति मन्तव्यम्। कल्कीकृतम् एतैः सह पिष्टं पूर्वोक्तश्वेतारियोग-पठितद्रव्यजातमित्यर्थः। तारं रजतं, रजतप्रभं यत् श्वित्रमित्यर्थः, तत् भ्रमरपक्षं भ्रमरवत् कृष्णवर्णमित्यर्थः ॥ २०४ ॥

गन्धकादिक्षारे—रुचकं सौवर्चलम्। श्वेतशूरणः श्वेतसूरणः। तत्क्षारः तैर्गन्धकादिभिः कृतः क्षारः। गोजलाप्लुतः गोमूत्रसिक्तः। मधुना इत्यत्र लिप्त्वेति शेषः। तैलात् तैलाभ्यङ्गं कृत्वेत्यर्थः, यामं खरातपे तीव्ररौद्रे, तिष्ठेदिति शेषः। विकृते इति। —एवम् अनया क्रियया विकृते श्वित्रयुक्ते, अङ्गे इति शेषः, स्फोटाः पतिताः निर्गता इत्यर्थः, स्युः, तान् वरोदकैः त्रिफलाजलैः सिञ्चेत्। तुर्य्यदिनात् चतुर्थदिनमारभ्य; चतुर्थदिनन्तु स्फोटनिर्गमदिनापेक्षयेति मन्तव्यम्; गोतक्रकोद्रवान्नाशी सन् निशा-तण्डुलतालकैः निशा हरिद्रा तण्डुलः विडङ्गः तालकं हरितालं तैः लिप्ते अङ्गलेपे कृते सतीत्यर्थः, सप्ताहात् श्वित्रजित् श्वित्रजयी श्वित्ररोगात् विमुक्तः इत्यर्थः, भवतीति शेषः ॥२०५—२०७॥

उष्णेन वारिणाऽर्धांशं सेवितं क्षीरभोजिना ।
क्रिमिजालं श्वेतकुष्ठं सहसा तद्विनिर्हरेत् ॥२०९॥

अथ अङ्कोलादितैलम् ।—

अङ्कोलनिम्बनिर्गुण्डी-पत्रकाष्ठाद्यथोचितम् ।
पातालयन्त्रविधिना तैलं श्वित्रनिवर्हणम् ॥२१०॥

अथ कुष्ठारितैलम् ।—

नारिकेलं हरिद्रे द्वे बाकुची वचया सह ।
अक्षभृङ्गकभल्लातं शाककाष्ठञ्च काञ्चनम् ॥२११॥
एतानि समभागानि तैलं पातालयन्त्रतः ।
सङ्गृह्य लेपयेत्तेन कुष्ठाष्टादशनाशनम् ॥२१२॥

अथ क्रिमिलक्षणम् ।—

ज्वरो विवर्णता शूलं हृद्रोगः श्वमनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम् ॥२१३॥

---

उडम्बरादिचूर्णे—निम्बजं निम्बवीजं, कुष्ठहरत्वात् । अर्धांशं कर्ष-प्रमाणम् ॥ २०८।२०९ ॥

अङ्कोलादितैले—काष्ठं दारुहरिद्रा, वक्ष्यमाणयोगदर्शनात शाककाष्ठं वा ; अङ्कोलादीनां पत्रेण सह काष्ठं तस्मात अङ्कोलादिपत्रात काष्ठाच्चेत्यर्थः ; यद्वा —अङ्कोलादित्रयाणां वीजं पत्रं तैलपत्रं तथा काष्ठं तस्मात् । यथोचितं यथाविधि ॥ २१० ॥

कुष्ठारितैले—अक्षः विभीतकः । भृङ्गकं भृङ्गराजः । शाककाष्ठं शाकः महाद्रुमविशेषः "शेगुन्" इति ख्यातं, तत्काष्ठम् । काञ्चनं पुन्नागः काञ्चन-क्षीरी वा ॥ २११।२१२ ॥

वाग्भटे "षट् ते कुष्ठैककर्माणः" इत्यनेन कुष्ठस्य क्रिमिकार्य्यत्वेनोक्तत्वात तथा अस्थिमज्जसमाश्रितस्य कुष्ठस्य लक्षणे "व्रणेषु क्रिमिसम्भवः" इति क्रिमिशब्दोल्लेखाच्च कुष्ठानन्तरं क्रिमिचिकित्सितं विवक्षुरादौ तल्लक्षणमाह, ज्वर इति ।—विवर्णता शरीरस्य मालिन्यम् । शूलमिति उदरे । "श्वसनम्" इत्यत्र "छर्दनं" तथा "सदनम्" इति च पाठान्तरम् ॥ २१३ ॥

## अथ क्रिमिचिकित्सा ।—

### अथ क्रिमिशूलहरो रसः ।—

अजमोदा फलास्थीनि चोरिणी रसगन्धकम् ।
आखुपर्णीरसं खादेत् सताम्रं क्रिमिशूलनुत् ॥२१४॥

### अथ अग्नितुण्डरसः ।—

रसगन्धाजमोदानां क्रिमिघ्नब्रह्मबीजयोः ।
एकद्वित्रिचतुःपञ्च-भागान् सविषतिन्दुकान् ॥२१५॥
सञ्चूर्ण्य मधुना सर्वं गुटिकां क्रिमिनाशिनीम् ।
खादयित्वाऽनु तोयञ्च मुस्तानां क्रिमिशान्तये ॥२१६॥
उदराध्मानहृत्यर्थं रसो ह्येष निगद्यते ।
अग्नितुण्डेति विख्यातः सर्वोदरगदापहः ॥२१७॥

### अथ क्रिमिज्वरे आखुपर्णीप्रयोगः ।—

आखुपर्णीकषायञ्च शर्करां पिब सर्वथा ।
क्रिमिज्वरोपशान्त्यर्थं खण्डामलकमत्ति वा ॥२१८॥

---

क्रिमिशूलहररसे—अजमोदा यमानी। फलं त्रिफला इन्द्रयवो वा, अस्थि अस्थिसंहारः तानि ; फलास्थीनि त्रिफलामज्जा इत्यर्थो वा। चोरिणी "खिरइ" इति प्रसिद्धम्। आखुपर्णी मूषिकपर्णी। अजमोदादि ताम्रान्तं सर्वं तुल्यभागम् आखुपर्णीरसेन पिष्ट्वा वटी कार्य्या॥ २१४ ॥

अग्नितुण्डरसे—क्रिमिघ्नब्रह्मबीजयोः विडङ्गतण्डुल-पलाशबीजयोः। सविषतिन्दुकान् विषमुष्टिभागसहितान् ; अत्र विषतिन्दुकस्य षड्भागाः ग्राह्याः ; यदुक्तं रसेन्द्रचिन्तामणौ—"रसगन्धाजमोदानां क्रिमिघ्नब्रह्मबीजयोः। एकद्वित्रिचतुःपञ्च तिन्दोर्बीजस्य षट् क्रमात् ॥" इति। तिन्दोः विषतिन्दुकस्य। तत्र चायं क्रिमिघातिनी गुटिका इति प्रसिद्धम्। रसेन्द्रसारसङ्ग्रहे रसरत्नाकरे च योगोऽयं विषतिन्दुकस्य पञ्च पलाशबीजस्य च षड्भागाः इति भागवैषम्येण यथाक्रमं "क्रिमिमुद्गररसः" "कीटभद्ररसः" च इति संज्ञान्तरेण लभ्यते ॥ २१५—२१७ ॥

आखुपर्णीप्रयोगे—शर्करा प्रक्षेपविधया प्रयोज्या। खण्डामलकं तन्त्रान्तरे अम्लपित्ताधिकारे लिखितम् ॥२१८॥

अथ क्रिमौ पर्पटीप्रयोगोपदेशः।—

स जग्ध्वैवं पर्पटीञ्च सुहीरसं पिबेदनु।
सुहीरसं विना कश्चिज्जन्तून् च्छेत्तुमर्हति ॥२१९॥

अथ क्रिमिशूलसंहारः।—

रसस्य निष्कमादाय गन्धकं तत्समं कुरु।
ताम्रं देहि तदर्धञ्च पञ्चाङ्गशाकवारिणा ॥२२०॥
मर्दयेदेकदिनं रात्रौ क्षिपेत्तत्रैव यत्नतः।
क्षीरिणीकाथमादाय तथा कुरु दिनान्तरे ॥ २२१॥
दत्त्वा लघुपुटं पञ्च जयपालान् विमर्दयेत्।
देहि गुञ्जाद्वयञ्चास्य साज्यं शूलच्छिदे तथा ॥२२२॥

अथ अजमोदादिवटिका।—

अजमोदा पलाशास्थि क्षीरिणी रसगन्धकम्।
आखुपर्णीरसं खादेत् सताम्रं क्रिमिशूलवान् ॥२२३॥

अथ सूतभस्मप्रयोगः।—

मधुमिश्रनिम्बपल्लव-सत्त्वयुतो यदा सूतः।
क्रिमिसङ्घातान्नाशयति त्रिभिरह्नोभिरसौ ॥२२४॥

---

क्रिमिरोगेऽपि अनुपानविशेषेण पर्पटीरसस्य उपयोगितामाह, स इति।—सः क्रिमिरोगवान्। पर्पटीं पर्पटीरसं रक्तपित्ताद्यधिकारोक्तम्। जन्तून् क्रिमीन् ॥२१९॥

क्रिमिशूलसंहारे—तदर्धं गन्धकार्धम्। पञ्चाङ्गशाकवारिणा शाकवृक्षस्य पत्र-पुष्पादिपञ्चाङ्गक्काथेन। तत्रैव शाकवारिण्येव। पञ्च जयपालान् पञ्चनिष्कमित-जयपालबीजानीत्यर्थः। शूलच्छिदे क्रिमिशूलनाशनाय ॥ २२०—२२२ ॥

अजमोदादिवटिकायां—पलाशास्थि पलाशबीजम्। योगोऽयं "पलाशास्थि" इत्यत्र "फलाख्योनि" इति पाठान्तरेण क्रिमिशूलहररसे प्रागेव प्रदर्शितः ॥२२३॥

सूतभस्मप्रयोगे—समधुनिम्बपत्ररसेन सूतः सूतभस्म इत्यर्थः। "मधुमिश्रं निम्बबीजं पलाशेन्द्रयवादपि। क्रिमिदोषान् नाशयति त्रिभिरेव दिनैस्तथा ॥" इति वा पाठः ॥ २२४ ॥

अथ क्रिमिहरो रसः ।—

शुद्धसूतश्चेन्द्रयवमजमोदा मनःशिला ।
पलाशबीजं तुल्यांशं देवदाल्या द्रवैर्दिनम् ॥२२५॥
मर्दयेत् भक्षयेन्नित्यमाखुकर्णीकषायकम् ।
सितायुतं पिबेच्चानु क्रिमिपातो भवत्यलम् ॥२२६॥

अथ कीटमर्दो रसः ।—

शुद्धसूतं शुद्धगन्धमजमोदो विडङ्गकम् ।
विषमुष्टिब्रह्मबीजं क्रमादुत्तरगुणं भवेत् ॥२२७॥
चूर्णयेन्मधुना लेह्यं निष्कैकं क्रिमिजिद्भवेत् ।
कीटमर्दो रसो नाम मुस्तातोयं पिबेदनु ॥२२८॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये विसर्प-कुष्ठश्वित्रक्रिमिचिकित्सा नाम विंशतितमोऽध्यायः ॥२०॥

---

क्रिमिहररसे—शुद्धसूतं रससिन्दूरमित्यर्थः। "तुल्यांशम्" इत्यत्र "भागश्च" इति रसेन्द्रसारसङ्ग्रहपाठे—शुद्धसूतं शुद्धपारदम्। "आखुकर्णीकषायकम्" इत्यत्र रसरत्नाकरे "मुद्गपर्णीकषायकम्" तथा रसेन्द्रसारसङ्ग्रहे "शालपर्णीरसैः सह" इति पाठान्तरम् ॥ २२५।२२६ ॥

कीटमर्दरसे—ब्रह्मबीजं पलाशबीजं, भार्गीबीजमित्यन्ये। "क्रमादुत्तरगुणम्" इति पाठः न मनोरमः, इतः पूर्वं गुणानुल्लेखात्; "क्रमाद्द्विगुणितम्" इति रसेन्द्रसारसङ्ग्रहधृतः तथा "क्रमोत्तरगुणम्" इति रसरत्नाकरधृतो वा पाठोऽत्र युज्यते। क्रमोत्तरगुणम् उत्तरोत्तरभागवृद्धमित्यर्थः। अयमेव योगः एकद्व्यादिभागनिर्देशेन प्राक् अग्नितुण्डरसनाम्ना प्रदर्शितः ॥ २२७।२२८ ॥

इति रसरत्नसमुच्चयबोधिन्यां विंशोऽध्यायः ॥ २० ॥

# अथैकविंशोऽध्यायः ।

## अथ वातव्याध्यादिचिकित्सनम् ।—

अथ महारोगनामानि ।—

वातव्याध्यश्मरीकुष्ठ-मेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः ॥१॥

अथ शीतवातलक्षणम् ।—

तत्रानेकानिलगदाः शीतवातादयः स्मृताः ।
हिमवन्ति हि गात्राणि रोमाञ्चस्फुरितानि च ॥
शिरोऽक्षिवेदनाऽऽलस्यं शीतवातस्य लक्षणम् ॥२॥

अथ वातारिः ।—

रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः ॥३॥
गुग्गुलुः पञ्चभागः स्यादेरण्डस्नेहमर्दितः ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥४॥

---

क्रिमिलक्षणे श्लेष्मविट्कादेर्वातकार्य्यस्य दर्शनात् क्रिम्यनन्तरं वातव्याधिचिकित्सितं विवक्षुरादौ वातव्याधेरष्टमहारोगान्तर्गतत्वेन तेषां महारोगाणां नामान्याह, वातव्याधीति ।—महत्त्वञ्चैषां चिरकालानुबन्धित्वात् दुःखातिशय्यजनकत्वाच्च ॥ १ ॥

तेषु शीतवातस्य लक्षणमाह, तत्रेति ।—तत्र वातव्याधिषु । रोमाञ्चस्फुरितानि रोमाञ्चेन रोमहर्षेण सह स्फुरितानि स्फुरणानि स्पन्दनानीत्यर्थः । "रोमाञ्च-स्फुरितानि" इत्यत्र "रोमाणि स्फुरितानि" "रोमाञ्चज्वरितानि" इति च पाठान्तरद्वयम् ॥ २ ॥

वातारौ—त्रिभागा इति मिलितायास्त्रिफलायाः भागत्रयम्; उक्तञ्च रस-रत्नाकरे—"पथ्येति सङ्ख्याकरणात् त्रिफला एकभागकः" इति । एकभागकः प्रत्येकमेकभाग इत्यर्थः । पूर्वकं चूर्णं रसादिचित्रकान्तं चूर्णम् । रसरत्नाकरे तु—

गुटिकां कर्षमात्रान्तु भक्षयेत् प्रातरेव हि ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥५॥
अभ्यज्यैरण्डतैलेन स्वेदयेत् पृष्ठदेशकम् ।
विरेके तेन सञ्जाते स्निग्धमुष्णञ्च भोजयेत् ॥६॥
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः ।
मासेन सुखयत्येव ब्रह्मचर्य्यपुरःसरम् ॥७॥

अथ विजयागुटिकाप्रयोगोपदेशः ।—

विजयागुटिकां रात्रौ स्वल्पमात्राञ्च भक्षयेत् ॥८॥

अथ शीतारिः ।—

रसेन गन्धं द्विगुणं प्रगृह्य पुनर्नवावह्निरसैर्विमर्द्य ।
पक्वार्कपत्रोत्थरसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ॥९॥
रसार्द्धभागेन विषञ्च दत्त्वा विपाचयेद्वह्निजलैः क्षणं तत् ।
शीतारिसंज्ञो हि रसोऽयमस्य वल्लं तदर्द्धं यदि-वाऽऽर्द्रकेण ॥१०॥
मरीचचूर्णेन घृतप्लुतेन सेवेत मासं सघृतञ्च पथ्यम् ॥११॥

"स्निग्धाऽव···मर्दयेत्" इत्यत्र "पुन्नागव्रह्नतीयुग्म-देवदारु सुचूर्णितम् । एतत् पूर्व्वौषधि-समं मर्दयेत् याममात्रकम् ॥" इति पाठः दृश्यते । तेनैव एरण्डस्नेहेनैव । आदौ एरण्डतैलेन गुग्गुलुं पिष्ट्वा पश्चात् रसादिकं दत्त्वा मर्दयेदिति ॥ ३—७ ॥

रोगेऽस्मिन् अधिकारान्तरोक्तमगदमुपदिशति, विजयेति ।—विजयागुटिका पाण्डु-रोगाधिकारोक्ता ॥ ८ ॥

शीतारौ—वह्निः चित्रकः । पक्वेति ।—परिणतत्वात् पीताभार्कपत्ररसेन । विपाचयेत् इत्यस्य मृत्पात्रे द्रवक्षयं यावत् पचेदित्यर्थः । अष्टगुणेन इति रसगन्ध-भागापेक्षया इति मन्तव्यम् । वह्निजलैः चित्रकमूलक्वाथैः । तदर्द्धं वल्लार्द्धम् ; "वल्लं तदर्द्धं यदि-वाऽऽर्द्रकेण" इत्यत्र "वल्लञ्च सार्द्धं मरिचार्द्रकेण" इति रसेन्द्र-सारपाठदर्शनात् वल्लं तदर्द्धञ्च सार्द्धवल्लमित्यर्थः । यदि-वा-शब्दः मरिचचूर्णेन सम्बध्यते, यदि-वा अथवा इत्यर्थः । "मासम्" इत्यत्र "मांसम्" इति रसेन्द्रसारे पाठः । एषः क्रमः,—द्विगुणगन्धकं रसं पुनर्नवाचित्रकक्वाथाभ्यां मर्दयित्वा गोलं कुर्य्यात्, ततः तं पिण्डं भाण्डोदरे संस्थाप्य अष्टगुणेन परिणाम-

अथ स्पर्शवातलक्षणम्।—

अङ्गेषु तोदनं प्रायो दाहः स्पर्शं न विन्दति।
मण्डलानि च दृश्यन्ते स्पर्शवातस्य लक्षणम्॥१२॥

अथ सर्वेश्वरः।—

कर्षमात्रं रसस्य स्याल्लोहहिङ्गुलयोरपि।
भास्वद्गगनयोश्चात्र गन्धकस्य पलं मतम्॥१३॥
व्योषगन्धकताम्राणां प्रत्येकन्तु पलं पलम्।
निम्बुद्रावेण सम्मर्द्य भावयेत् सप्तधा पृथक्॥१४॥
हेमार्कस्नुक्पयोवासा-हयारिविषमुष्टिभिः।
पिण्डितं वालुकायन्त्रे स्वेदयेद्दिवसद्वयम्॥१५॥
कर्षमात्रन्तु पिप्पल्या निष्कमात्रं विषस्य च।
सञ्चूर्ण्य दापयेदत्र सर्वेश्वररसाख्यके॥
गुञ्जामात्रं ददीतास्य स्पर्शवातापनुत्तये॥१६॥

अथ चर्केश्वरः।—

रसेन गन्धं द्विगुणं प्रमर्द्य ताम्रस्य चक्रेण सुतापितेन।
आच्छाद्य भूत्या तु ततः प्रयत्नाच्चक्रोविलग्नन्तु रसं प्रगृह्य॥१७॥

---

पीतवर्णार्कपत्ररसेन आद्रवक्षयात् पचेत्, एकीभूते चार्कपत्ररसे अवतार्य्य रसार्द्धमात्रं विषं दत्त्वा मर्दयेत्, ततः भूयोऽपि किञ्चिच्चित्रकमूलक्वाथेन चणं पक्त्वा अवतार्य्य स्थापयेदिति। क्वचिदेतच्छ्लोकात् प्राक् "रसं पुनर्नवरसैर्विमर्द्य त्रिकगन्धकैः। पचेत् पक्वार्कपत्रोत्थ-रसैर्यन्त्राच्चित्रय च॥" इत्यधिकपाठः॥ ९—११॥

वातव्याधिभेदस्य स्पर्शवातस्य लक्षणमाह, अङ्गेष्विति।—तोदनं सूचीविद्धवत् वेदनाविशेषः। स्पर्शवातस्य स्पर्शे त्वचि वातः तस्य स्पर्शानभिज्ञताकपस्य सुप्तिवातस्येत्यर्थः॥ १२॥

सर्वेश्वरे—रसादीनां गगनान्तानां प्रत्येकं कर्षः। भास्वदिति।—भास्वान् ताम्रम्। गगनम् अभ्रम्। अत्र गन्धकताम्रयोर्द्विरुक्तत्वात् गन्धकस्य पलद्वयं, ताम्रस्य च सपादपलमानता बोद्धव्या। व्योषस्य च प्रत्येकं पलमानता, निर्देशस्य मानप्राधान्यात्। हेम धुस्तूरः, तस्य पत्ररसोऽत्र इष्टः। हयारिः करवीरः, तस्य मूलम्॥१३—१६॥

विचूर्ण्य तद्द्वादशधाऽर्कदुग्धैः पुटेत वह्निस्त्रिफलाजलैश्च ।
सम्भावितोऽर्केश्वर एष सूतो गुञ्जाद्वयश्चास्य फलत्रयेण ॥१८॥
दद्यीत मासत्रितयेन सुप्त-वातादिमुक्तो हि भवेद्धिताशी ॥१९॥

अथ तारादिगुडिका ।—

तारं रसेनाष्टगुणं जयांशं विमर्द्य यत्नाद्गुलिकां गुडेन ।
निबध्य तां सेवय मासयुग्मं दिनोदये स्पर्शविकारनुत्त्यै ॥२०॥

अथ स्पर्शवाते राजवृक्षप्रयोगः ।—

मूलं पिबेद्राजतरोः शरीरं मासद्वयं तेन विलेपयेत ॥२१॥

अथ स्पर्शवाते चक्रमर्दादिः ।—

यद्वा सुचूर्णीकृतचक्रमर्द-बीजं सुगोमूत्रपरिप्लुतञ्च ।
अर्कस्नुहीक्षीरनिशाद्वयेन युक्तं भजेन्मण्डलनाशनाय ॥२२॥

अर्केश्वरे—चक्रेण चक्राकारक्षुद्रभाजनविशेषेण । सुतापितेन इति अग्निसम्पर्कात्, सन्तापनञ्च रसगन्धकसङ्ग्रहणार्थं शक्तिविशेषाधानार्थञ्च मन्तव्यम् । भूत्या भस्मना । आच्छाद्य इति चक्रेण भूत्या इत्युभयत्रापि सम्बध्यते । अयमर्थः,—कज्जलिकाम् अग्नि-प्रतप्तेन ताम्रचक्रेण आच्छाद्य तदुपरि भस्मावरणं दद्यात, तेन च सा कज्जलिका ताम्रचक्रे सक्ता भवेत्, ततः तां कज्जलिकां ताम्रपात्रादाकृष्य चूर्णयित्वा च अर्कक्षीरेण मर्दयित्वा द्वादशवारान् गजपुटे पचेत, अनन्तरं चित्रकमूलत्रिफलाक्वाथेन सप्तधा भावयित्वा गुञ्जाद्वयमितां वटीं कुर्य्यादिति ॥ १७—१९ ॥

तारादिगुडिकायां—तारं रौप्यं, तच्च रसभागापेक्षया अष्टगुणम् । रसेनेति ।—रसशब्देनात्र रससिन्दूरः ग्राह्यः । जयांशं जया विजया तस्याः अंशं भागं तार-भागमित्यर्थः ; जयायाः अंशः चतुर्थो भागः यत्र तादृशमिति वा, तारापेक्षया पादिका-विजयाचूर्णम् । गुडोऽत्र गुडिकाकरणोपयोगी देयः । "तारम्" इत्यत्र "तालम्" इति पाठे—तालं रसेन, तुल्यमिति शेषः । जयांशं विजयाभागम् अष्टगुणं, रसापेक्षयेति शेषः ; तथा च रसेन्द्रसारे रसेन्द्रचिन्तामणौ च—"एकभागो रसस्य स्यात् शुद्धतालैक-भागिकः । अष्टौ स्युर्विजयायाश्च गुड़िकां गुडतश्चरेत् ॥ एकैकां भक्षयेत् प्रातश्छायाया-मुपवेशयेत् । तालकेश्वरनामायं योगस्त्वाक्स्पर्शनाशनः ॥" इति । दिनोदये प्रत्यूषे ॥२०॥

राजवृक्षप्रयोगे—राजतरोः आरग्वधस्य । तेन राजतरुमूलकल्केन ॥ २१ ॥

चक्रमर्दादौ—यद्वा-शब्दः पूर्वयोगापेक्षया ; ततश्च मण्डलनाशनाय राजतरोर्मूलं

अथ स्पर्शवातान्तकृद्वटिका।—

अष्टौ भागा रसस्य स्युर्विषातिन्दोर्दशैव च।
गन्धकस्य दश द्वौ च कटुत्रिफलयोस्त्रयः॥२३॥
वह्निचित्रकमुस्तानां वचाऽश्वगन्धयोरपि।
रेणुकाविषकुष्ठानां पिप्पलीमूलनागयोः॥२४॥
एकैकस्तु भवेद्भाग इत्याद्यायास्तथैव च।
चतुर्विंशद्गुडस्यात्र वटिका चणकाकृतिः॥
क्रमेणैवानुसेवेत स्पर्शवातापनुत्तये॥२५॥

अथ अस्पर्शवातारितैलम्।—

त्रिगन्धकं तुल्यकमश्वगन्धा-हयारिनागाग्नितिवायसीनाम्।
मूलानि सञ्चूर्ण्य सुभाण्डके च तैलं क्षिपेत्तेन चतुर्गुणेन॥२६॥

पिबेत चक्रमर्दबीजादिकं वा गोमूत्रेण पिबेदित्याशयः। मण्डलनाशनाय स्पर्शवात-लक्षणोक्तमण्डलचिह्नापनोदनाय॥ २२॥

स्पर्शवातान्तकृद्वटिकायां—गन्धकस्य दश द्वौ च इति द्वादशभागा इत्यर्थः। कटुत्रिफलयोस्त्रयः त्रिकटोस्त्रिफलायाश्च पृथक् पृथक् भागत्रयम। वह्निः भल्लातकः; वह्न्यादिपञ्चकानामपि प्रत्येकं भागत्रयम, अपि-शब्दप्रयोगसामर्थ्यात्। नागः नागकेशरः; रेणुकादीनां पञ्चानां प्रत्येकमेकैकभागः। क्वचिदेतदनन्तरं—"पञ्चार्कतैलम्। मूलैः सपुष्पैः फलपत्रसारैरर्कस्य निष्पीड्य रसाढके तु। भूपालका-वह्निपुनर्नवानां तुरङ्गगन्धाऽऽसगन्धस्य मूलम॥ निर्गुण्डिकायाश्च तथैव पृष्ठे मूलानि पिष्टा पृथगाददीत। एला लवङ्गं तगरञ्च कुष्ठं ससैन्धवं कर्षमितं पृथक् स्यात्॥ सुक्क्षीरपिष्टाश्मपयो द्विभागं प्रस्थेन तैलस्य पचेद्धि पक्वम। पञ्चार्कतैलं प्रवदन्ति तज्ज्ञाः शोथिगतान् सन्धिगतान् निहन्ति॥ अभ्यञ्जनैश्च त्रिभिरेव सद्यो वातांश्च वेगांश्चिरजानशीतिः॥ द्वितीयपञ्चार्कतैलम्। पाठान्तरम्—अर्कद्रवस्य पञ्चाङ्ग-माढके विपचेज्जले। चतुर्गुणे वह्निसिन्धु-निर्गुण्ड्यग्नि च पीलुकम॥ वर्षाभूवाजि-गन्धासगन्धं तेषां पृथक् पृथक्। स्नुक्क्षीरं कुडवं दत्त्वा शनैर्मन्दाग्निना पचेत्॥ एतदभ्यञ्जनेनैव निहन्यादाशु सन्धिगाम्। स्पर्शवातोत्थरोगांश्च कटीपार्श्वगतांस्तथा॥ ब्रुवन्ति तज्ज्ञाः पञ्चार्क-तैलं श्रेष्ठं समीरनुत्॥" इत्यधिकपाठः॥ २३—२५॥

अस्पर्शवातारितैले—त्रिगन्धकं त्रिजातकम्; यदुक्तं राजनिघण्टौ—"त्वगेला-

पश्चार्कपत्रोत्थरसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ।
अस्पर्शवाताय भवेद्धि तैलं विलेपयेत्तेन च तत् प्रदेशम् ॥२७॥

अथ अस्पर्शवाते त्रिगन्धप्रयोगः ।—

ह्रियावलीक्वाथविपाचिताज्याप्यस्पर्शनाशाय ददेत्त्रिगन्धम् ॥२८॥

अथ अस्पर्शवाते ह्रियावलीप्रयोगः ।—

ह्रियावलीकन्दविलेपनाच्च अस्पर्शदेशः स्वरमेति यत्नात् ।
यवानिकासिद्धघृतेन पश्चादस्पर्शनाशाय विलेपयेत ॥२९॥

अथ अस्पर्शवाते अर्कदुग्धप्रयोगः ।—

अर्कोत्थदुग्धेन विलेपनाच्च स्फोटोभवेत्तस्य ततः प्रदेशः ।
घृतेन चोक्तेन विलेपनाद्वा स्पर्शो लयं याति च तत्क्षणेन ॥३०॥

अथ अस्पर्शवाते हल्यादिलेपः ।—

यद्वा हलीशूरणकं सिताश्चास्पर्शातकः स्यात् खलु लेपनेन ॥३१॥

---

पत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्" इति, त्रिभागगन्धकं वा ; श्वेतादिभेदेन त्रिविधगन्धकं वा ; त्रिलातालगन्धकरूपं वा । हयारिः करवीरकम् । नाग नाकुली, रास्नाभेद इत्यर्थः । शिलिः भूर्जत्वक् । वायसी काकमाची । तेन तैलेन । चतुर्गुणेन इति त्रिगन्धकादिकल्कापेक्षया चतुर्गुणेन "कल्कस्तु स्नेहपादिकः" इति वचनात् । विपाचयेत् इत्यत्र त्रिगन्धकादिद्रव्यजातमिति शेषः । अष्टगुणेनेति तैलापेक्षया ॥ २६।२७ ॥

त्रिगन्धप्रयोगे—ह्रियावली देशान्तरप्रसिद्धः लताविशेषः ; "ह्रियावली" इत्यत्र "हिमावली" इति पाठकल्पना सुगमार्था, एष चार्थः प्रागेव प्रतिपादितः । अस्पर्शनाशाय सुप्तिवातनाशाय । लेपयोगोऽयम् ॥ २८ ॥

ह्रियावलीप्रयोगे—स्वरं स्वशमित्यर्थः । यवानिकेति ।—यवानिका यमानी तत्कल्कसिद्धेन घृतेन, अलस्वाच चतुर्गुणं पाकार्थं देयम् । पश्चात् ह्रियावलीकन्दविलेपनानन्तरमित्यर्थः ॥ २९ ॥

अर्कदुग्धप्रयोगे—स्फोटोभवेत् स्फोटयुक्तो भवेत् । ततः स्फोटीभवनानन्तरम् । प्रदेशः अस्पर्शदेशः । घृतेन चोक्तेन यवानिकासिद्धघृतेनेत्यर्थः । अत्र वा-शब्दः ह्रियावलीकन्देत्यादिनोक्तपूर्वयोगापेक्षया बोध्यः । स्पर्शः स्पर्शवातः ॥ ३० ॥

हल्यादिलेपे—हली लाङ्गलिका । सिता सितशर्करा सोमराजी वा । अस्पर्शातकः अस्पर्शं स्पर्शवाताभावाय अतति गच्छति इति तथाभूतः ॥३१ ॥

अथ चक्षुर्दाहे रसेन्द्रलेपः।—

आदौ शिरामोक्षणतो रसेन्द्रं विलेपनञ्चापि नियोजयन्ति ॥२२॥

अथ गन्धाश्मगर्भरसः।—

गन्धं रसेनाष्टगुणं विमर्द्य क्रमानुतोयेन विपाचयेत।
मृद्वग्निना लोहमयेऽथ पात्रे विषेण पश्चादपि सिद्धिमेति ॥२३॥
गन्धाश्मगर्भो हि रसोऽस्य सर्वाक्षिरोगप्रणुत्त्यै भज वल्लयुग्मम्।
सक्षीरमन्नं सघृतञ्च भोज्यं वर्ज्यञ्च सर्वं परिवर्जनीयम् ॥२४॥

अथ द्वितीयगन्धाश्मगर्भरसः।—

गन्धकं चूर्णितं कृत्वा सूक्ष्मवस्त्रेण बध्य च।
भाण्डे गोदुग्धकं दत्त्वा प्रावृतं खर्परेण च ॥२५॥
अग्निं प्रज्वालयेदूर्द्ध्वं पश्चाच्छीतं समुद्धरेत्।
गन्धकाष्टकभागेन रसं दत्त्वाऽथ पाचयेत् ॥२६॥
मृद्वग्निना शीतभूमावुत्तार्योत्तार्य्य यत्नतः।
यावद्गन्धकरूपस्य पूर्वस्य ह्यन्यथा भवेत् ॥२७॥
सप्तगुञ्जं ददीतास्य यावत् स्यादेकविंशतिः।
प्रत्यहन्तु हरीतक्या गुञ्जा देयैकविंशतिः ॥२८॥

रसेन्द्रलेपे—शिरामोक्षणतः शिरामोक्षणं कृत्वा। रसेन्द्रं पारदं, स च भस्मीकृतो ग्राह्यः ॥ २२ ॥

गन्धाश्मगर्भरसे—क्रमानुतोयेन चित्रकमूलक्वाथेन। विषेण वत्सनाभेन योजयेदिति शेषः; विषञ्च रसतुल्यं ग्राह्यम् ॥ २३।२४ ॥

द्वितीयगन्धाश्मगर्भरसे—बध्य इति प्रयोगश्चिन्त्यः। प्रावृतमित्यत्र कुर्य्यादिति शेषः। खर्परेण शरावेणेत्यर्थः। उत्तार्य्य अवतार्य्य। अयमर्थः,—नूतनभाण्डे गोदुग्धं दत्त्वा सूक्ष्मवस्त्रखण्डेन तन्मुखमावृत्य वस्त्रोपरि गन्धकचूर्णं स्थापयेत, ततः सूक्ष्मं द्वितीयं वस्त्रखण्डं गन्धकोपरि दत्त्वा बध्नीयात, अथ शरावेण आच्छाद्य स्थाली तां भूमौ निखन्य च उपरिष्टात् पुटं दद्यात, शीतीभूतञ्च तम् उद्धृत्य अष्टमांशेन रसेन सह मर्दयित्वा मृद्वग्निना लौहपात्रे पाचयेत्, अन्तराऽन्तरा शीतभूमावत्तारयेत्, एवं गन्धकस्य स्वरूपविपर्य्ययं यावत् कुर्य्यात्। ततः सप्तगुञ्जामारभ्य क्रमवृद्ध्या एकविंशतिगुञ्जां यावत् तं रसं हरीतकीचूर्णस्यैकविंशत्या गुञ्जाभिः

सक्षीरं सघृतञ्चान्नं भोजयीत सशर्करम् ।
निर्वाते चावतिष्ठेत कम्पस्वर्गापनुत्तये ॥
गन्धाश्मगर्भसंज्ञोऽयं योगिभिः परिकीर्त्तितः ॥३९॥

अथ अस्पर्शारिरसः ।—

पलाशबीजोत्थरसेन सूतं गन्धेन युक्तं त्रिदिनं विमर्द्य ।
श्लक्ष्णीकृते तद्विषमुष्टिबीजं संयोजनीयञ्च कलाप्रमाणम् ॥४०॥
मासत्रयं निष्कमितं प्रयत्नादस्पर्शनुत्त्यै खलु सेवयेत्तत् ॥४१॥

अथ रक्तवातलक्षणम् ।—

पादयोश्च भवेत्तापः श्वयथुश्च प्रजायते ।
रक्तच्छाया शरीरे च रक्तवातस्य लक्षणम् ॥४२॥

अथ रक्तवातचिकित्सा ।—

अथ हरीतक्यादिचूर्णम् ।—

त्रियोनिरसगुञ्जैकां प्रथमं दापयेद्भिषक् ।
हरीतक्यामलक्यौ च गुडूचीं कटुकां तथा ॥
पञ्चाङ्गानि च निम्बस्य चूर्णयित्वा च पाययेत् ॥४३॥

---

सह संवर्तेति । रसेन्द्रचिन्तामणि-रसरत्नाकरयोः "त्रिगुणाख्यरसः" रसेन्द्रसारे च "द्विगुणाख्यरसः" इति नाम्ना प्रसिद्धोऽयं, तत्र च हरीतकीचूर्णं रसगन्धकतुल्यमादौ मिश्रयित्वा पश्चात् सप्तगुञ्जामारभ्य सेवनोपदेशः । रसेन्द्रसारे तु षड्भागगन्धकस्थले "गन्धकात् द्विगुणं सूतम्" इति पाठो दृश्यते ॥ ३५—३९ ॥

अस्पर्शारिरसे—सूतगन्धयोः समभागता । तदित्यव्ययं, तस्मिन्नित्यर्थः । कलाप्रमाणं षोडशांशम् ; तत्तु एकभागापेक्षया बोध्यम् । "मासत्रयम्" इत्यत्र "मासद्वयम्" इति रसेन्द्रसारसङ्ग्रहे पाठः, तत्र च पलाशादिवटीति संज्ञावानयम् ॥ ४०।४१ ॥

वातव्याधिविशेषत्वात् तदनन्तरं वातरक्तविशेषस्य रक्तवातस्य चिकित्सितं विवक्षुरादौ तल्लक्षणमाह, पादयोरिति ।—पादयोस्तु तापः दुष्टरक्तस्यादौ पादयोरेव सञ्चयात् ज्ञेयः । श्वयथुः सर्वगात्रे एवेति बोद्धव्यम् । रक्तच्छाया रक्तकान्तिः, रक्तमण्डलमित्यर्थः ॥ ४२ ॥

हरीतक्यादिचूर्णे—त्रियोनिरसः कामलाधिकारोक्तः रसविशेषः, तस्यैका गुञ्जा । आदौ त्रियोनिरसं पाययित्वा पश्चात् हरीतक्यादिकं पाययेदिति ॥ ४३ ॥

अथ कोकिलाक्षादिक्वाथः ।—

कोकिलाक्षस्य मूलानि गुडूचीनागरं तथा ।
क्वाथयित्वा रजन्यान्तु पाययेदतिशीतलम् ॥४४॥

अथ संशोधनोपदेशः ।—

अग्रे शिराविमोक्षार्थं यवचिञ्चाविरेचनम् ।
वान्तिमङ्कोलबीजेन देवदालीजलेन वा ॥४५॥

अथ रक्तवाते अपथ्यम् ।—

शूरणं माषवृन्ताकं राजिकादि विवर्जयेत् ॥४६॥

अथाऽऽमवातलक्षणम् ।—

कट्यां व्यथा भवेन्नित्यं सन्धिषु श्वयथुर्भवेत् ।
उत्थानेऽप्यसमर्थत्वमामवातस्य लक्षणम् ॥४७॥

अथामवातचिकित्सा ।—

अथ आमवाते वातारिरसप्रयोगोपदेशः ।—

एरण्डतैलसंयुक्तं वातारिरसमेव च ।
आमवातप्रशान्त्यर्थं दद्यीतोष्णेन वारिणा ॥ ४८॥

---

कोकिलाक्षादिक्वाथे—अतिशीतलमिति क्वाथमेव अतिशीतलं कृत्वा पाययेत्, उष्णेन रक्तस्य प्रकोपातिशय्यभयात् ॥ ४४ ॥

संशोधनोपदेशे—यवचिञ्चाविरेचनं यवचिञ्चा यवतिक्ता, द्रव्यगुणे अस्या रेचकत्वश्रुतेः, तया विरेचनं, देयमिति शेषः । शिराविमोक्षणात् प्राक् वमनविरेचने कारयेदिति निष्कर्षः ॥ ४५ ॥

रक्तवाते वर्जनीयान्याह, शूरणमिति ।—राजिकादि इत्यत्र आदिपदेन मूलकनिष्पावादीनां ग्रहणम् ॥ ४६ ॥

पूर्वोक्तसङ्गत्या रक्तवातानन्तरमामवातचिकित्सितं विवर्णयिषुरादौ तल्लक्षणमाह, कट्यामिति ।—सुगमम् ॥ ४७ ॥

आमवाते अधिकारान्तरोक्तमौषधविशेषमुपदिशति, एरण्डेति ।—वातारिरसं कुष्ठे वातव्याधौ च उक्तम् । तस्य आदौ एरण्डतैलेनामर्दं उष्णेन वारिणा पिबेदिति ॥ ४८ ॥

अथ अनिलारियोगः ।—

आमानिलस्यास्य रसोऽनिलारिश्चैरण्डतैलेन सकौशिकेन ।
कटुत्रयेणापि सगन्धकेन वल्लैकमानं परिषेवयेत ॥४९॥

अथ आमवाते एरण्डतैलप्रशंसा ।—

आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एक एवाग्रणीर्हन्ता एरण्डस्नेहकेसरी ॥ ५० ॥

अथापस्मारलक्षणम् ।—

मूर्च्छा शरीरस्य भवेदकस्मात् गात्रेषु कम्पश्च मुखे च फेनः ।
एवन्त्वपस्मारगदं विदित्वा नियोजयेत् पर्पटिकाख्यसूतम् ॥५१॥

अथापस्मारचिकित्सा ।—

अथ अपस्मारे पर्पटीरसस्य प्रयोगविधिः ।—

पर्पटीरसगुञ्जे द्वे ब्राह्मीरससमन्विते ।
खादयेद्रोगिणं वैद्योऽपस्मारानिलशान्तये ॥५२॥

अथ ब्राह्म्यादिनस्यम् ।—

ब्राह्मीशुण्ठीवचाकुष्ठं नीलोत्पलससैन्धवम् ।
पिप्पलीमपि सञ्चूर्ण्य ब्राह्मीद्रावेण भावयेत् ॥५३॥

अनिलारियोगे—अनिलारिरसः प्रागुक्तः वातारिरसः, रसेन्द्रमारोक्तः अनिलारिरसो वा। सकौशिकेन गुग्गुलुसहितेन। सकौशिकेन सगन्धकेन सकटुत्रयेण एरण्डतैलेन वल्लैकमानम् अनिलारिरसं परिषेवयेत, एवञ्च अयमनिलारिरसः अस्यामानिलस्य, हन्ता भवेदिति शेषः, इति योजना कार्य्या ॥ ४९ ॥

आमवाते एरण्डतैलस्य विशेषेणोपयोगितामाह, आमवातेति ।—स्पष्टम् ॥५०॥

मूर्च्छानिद्रानाशादिलक्षणसाधर्म्यात "स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत" इति वचनेन तस्यापि अपस्मारवत् कदाचित् वेगकारित्वसाधर्म्याच्च आमवातानन्तरमपस्मारप्रारम्भः। तत्रादौ तस्य लक्षणमाह, मूर्च्छेति।—शरीरस्य मूर्च्छा इन्द्रियमोह इत्यर्थः ; मूर्च्छया भूमिपातादिरित्यर्थो वा। पर्पटिकाख्यसूतं पर्पटीरसम् ; स च "रसं द्विगुणगन्धेन" इत्यादिना रक्तपित्ताधिकारे प्रदर्शितः ॥ ५१ ॥

"नियोजयेत पर्पटिकाख्यसूतम्" इत्युक्तम्, अतस्तस्य प्रयोगविधिमाह, पर्पटीति।—स्पष्टम् ॥ ५२ ॥

सप्तधा नवनीतेन पचेत् चिप्त्वा घृतं शुचौ ।
वराहकर्णरक्तेन कर्कोट्या नस्यमाचरेत् ॥५४॥

अथ गवाच्यादिनस्यम् ।—

शुष्कां गवाचीमादाय घृष्टं कांस्यञ्च कम्बलम् ।
गोघृतेनाऽऽयसं पिष्ट्वाप्यागते नस्यमाचरेत् ॥५५॥

अथ श्वेतापराजितादिनस्यम् ।—

श्वेतापराजितावीजं विजयावीजमेव च ।
नरमूत्रेण सम्पिष्य नस्यं दद्याद्भिषग्वरः ॥ ५६ ॥

अथ अपस्मारहरनस्यम् ।—

उन्मत्तकशुनोऽस्थीनि घृष्ट्वा तेनैव वा कुरु ॥५७॥

अथ अपस्मारहरो योगः ।—

श्वेतापराजितामूलं कर्णे बद्ध्वा सदा बुधः ।
निर्गुण्डीमूलकं जग्ध्वा ह्यपस्माराद्विमुच्यते ॥५८॥

अथोन्मादलक्षणम् ।—

बहु कृत्वा प्रलापैश्च विस्मृतिः कार्य्यवस्तुषु ।
हन्ति धावति सर्वत्रोन्मादवातस्य लक्षणम् ॥५९॥

ब्राह्म्यादिनस्ये—सप्तधा इति पदं ब्राह्मीद्रावेण नवनीतेन च इति द्वाभ्यामेव सम्बध्यते। पचेदिति।—मर्दनानन्तरं किञ्चित् घृतं दत्त्वा शुचौ पात्रे लघु पचेत्, ततः आदाय विचूर्ण्य च वराहकर्णरक्तेन तथा कर्कोट्या देवताड़ेन, घोषकविशेषेण सहेत्यर्थः, नस्यं दद्यादिति ॥ ५३। ५४ ॥

गवाच्यादिनस्ये—गवाची गोरचककर्कटी। कांस्यं कांस्यखण्डम। एवमायसमपि। कम्बलम् ऊर्णालोम। आगते अपस्मारवेगे उपस्थिते। गवाच्यादिद्वयं यथाक्रमं गोघृतेन सह कांस्ये लौहे च भाजने घृष्ट्वा वेगोपस्थितौ नस्यं दद्यादिति ॥ ५५ ॥

श्वेतापराजितादिनस्ये—सर्वं सुगमम् ॥ ५६ ॥

अपस्मारहरनस्ये—उन्मत्तकशुनोऽस्थीनि क्षिप्तकुक्कुरास्थीनि। तेनैव नरमूत्रेणैवेत्यर्थः। कुरु, नस्यमिति शेषः ॥५७॥

अपस्मारहरयोगे—श्वेतापराजितामूलं कर्णे बद्ध्वा निर्गुण्डीमूलञ्च जग्ध्वा इत्येवं योजनीयम् ॥ ५८ ॥

मनोदुष्टिसाधर्म्यादपस्मारानन्तरमुन्मादमारम्भः। तत्र उन्मादलक्षणमाह,

अथ उन्मादचिकित्सा ।—

अथ उन्मादे पर्पटीरसस्य प्रयोगविधिः ।—

पर्पटीरसगुञ्जाष्टौ धुस्तूराह्वीजपञ्चकम् ।
गोघृतेन च संयोज्य खादेदुन्मादशान्तये ॥६०॥

अथ उन्मादे उपचारविशेषाः ।—

सघृतं माषमण्डं वा पाययेद्घृतदुग्धकम् ।
निम्बतैलं समुद्धृत्य स्वभ्यज्याऽऽपादमस्तकम् ॥६१॥
गुर्वन्नं प्रायशो दद्याच्छुष्कशाकञ्च वर्जयेत् ।
बद्ध्वाऽपि रक्षयेत्तावद्यावच्छान्तिं स गच्छति ॥६२॥

अथ माहेश्वरो धूपः ।—

माहेश्वराख्यधूपञ्च दापयेत् सततं निशि ।
श्रीवेष्टं दारु वाह्लीकं मुस्ता कटुकरोहिणी ॥६३॥
सर्षपा निम्बपत्राणि मदनस्य फलं वचा ।
बृहत्यौ सर्पनिर्मोकः कार्पासास्थि यवास्तुषाः ॥६४॥
गोशृङ्गं खररोमाणि बर्हिपिच्छं विडालविट् ।

---

बध्नीति ।—प्रलापैः, उपलक्षित इति शेषः । "प्रलापैश्च" इत्यत्र "प्रलापयेत्" इति पाठान्तरः सुगमः । हन्ति जनान्तरमात्मानं वा ताडयति ॥ ५९ ॥

पर्पटीरसस्य प्रयोगविधौ—पर्पटीरसगुञ्जाष्टौ इति रसपर्पटिकायाः रक्तपित्ताधिकारोक्तायाः अष्टौ गुञ्जाः । रसेन्द्रसारे "उन्मादपर्पटीरसः" इति नाम्ना अभिहितोऽयम् ॥ ६० ॥

उन्मादे उपचारविशेषानाह, सघृतमिति ।—माषमण्डं माषतण्डुलकृतं चतुर्दशगुणाम्बुसाधितं यवागूविशेषं, न तु केवलमाषसाधितं, मूकधान्यं विना मण्डत्वासम्भवात् । घृतदुग्धकं सघृतं दुग्धम् । समुद्धृत्य तैलपीडनचक्रात् तत्क्षणमेव गृहीत्वेत्यर्थः । निम्बतैलेनापादमस्तकं स्वभ्यज्य सघृतं माषमण्डं घृतदुग्धकं वा पाययेदित्यन्वयः ॥६१।६२॥

माहेश्वरधूपे—श्रीवेष्टं नवनीतखोटी । वाह्लीकं हिङ्गु न तु कुङ्कुमं, बृहत-

छागरोम घृतञ्चेति वस्तमूत्रेण भावितम् ॥
एष माहेश्वरो धूपः सर्वग्रहनिवारणः ॥६५॥

अथैकाङ्गवातलक्षणम्।—

एकस्मिन् देहदेशे च तोदः कार्श्यं चलात्मता।
हिमस्पर्शश्च दृश्येतैकाङ्गवातस्य लक्षणम् ॥६६॥

अथैकाङ्गवातचिकित्सा।—

अथ एकाङ्गवाते पर्पटीरसप्रयोगविधिः।—

पर्पटीरसगृह्णाति वक्ष्यमाणञ्च गुग्गुलुम्।
कर्षार्द्धं खादयेत् माज्यमेकाङ्गानिलशान्तये ॥६७॥
*एरण्डवह्निशुण्ठीनां गुडूच्याश्च कषायकम्।
अनुपानाय दातव्यं चणकक्वाथमेव च ॥६८॥

अथ सर्जतैलम्।—

नलिकायन्त्रयोगेन सर्जतैलं समुद्धरेत्।
तदभ्यङ्गप्रयोगेण वातो दुष्टः प्रशाम्यति ॥६९॥

---

योगे च्छिन्नपाठदर्शनात्। कार्पासास्थि कार्पासबीजम्। खररोमाणि गर्दभरोमाणि। बार्हपिच्छं मयूरपिच्छम्। वस्तमूत्रेण छागमूत्रेण ॥ ६३—६५ ॥

वातव्याध्यधिकारे प्रकुपितवातकार्य्यविशेष रक्तवातादिकमभिधाय पुनरपि वातव्याधिप्रारम्भः, तत्र एकाङ्गवातस्य लक्षणमाह, एकस्मिन्निति।—एकस्मिन् देहदेशे देहस्य वामे वा दक्षिणे वा भागे इत्यर्थः। चलात्मता वायोश्चलत्वेन एकत्रानवस्थितता इत्यर्थः ॥ ६६ ॥

एकाङ्गवाते पर्पटीरसप्रयोगविधौ—वक्ष्यमाणं गुग्गुलुं शतावर्य्यादिगुग्गुलुं योगराजगुग्गुलुद्वयोरेकतरं वा। रसपर्पटीं गुग्गुलुञ्च ऐकध्यमेव प्रयुञ्जीत। चणकक्वाथमेव च इत्यत्र चकारो वा-ऽर्थे, एरण्डादीनां क्वाथं चणकक्वाथं वा अनुपानं कुर्य्यादित्यर्थः ॥ ६७।६८ ॥

सर्जतैले—नलिकायन्त्रं "लौहनालगतम्" इत्यादिना नवमाध्यायोक्तम्; नलिकासंयुक्तयन्त्रमिति वा, एवञ्च नलिकायन्त्रयोगेन डेकीयन्त्रयोगेनेत्यर्थः। सर्जतैलं सर्जः धूनकः तस्य तैलम् ॥ ६९ ॥

अथ अर्द्धाङ्गवाते शतावर्य्यादिगुग्गुलुः।—

शतावरी गुडूची च सारणी गोक्षुरः कणा।
शताह्वा दीप्यका रास्ना अश्वगन्धा च संज्ञका॥७०॥
कचोरो नागरश्चैते चूर्णनीयाः समांशकाः।
एतैः सर्वैः समो ग्राह्यो गुग्गुलुर्महिषाच्छकः॥७१॥
खण्डयित्वा घृतेनार्द्रं पूर्वचूर्णं विनिक्षिपेत्।
सम्मर्द्य सर्पिषा गाढं कर्षार्द्धगुलिकां किरेत्॥७२॥

अथ विविधवातव्याधिचिकित्सा।—

अथ योगराजगुग्गुलुः।—

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः।
पाठाविडङ्गेन्द्रयव-हिङ्गुभार्गीवचान्वितैः॥७३॥
सर्षपातिविषाजाजी-रेणुकाकृष्णजीरकैः।
गजकृष्णाजमोदाभ्यां कटुकामूर्वर्मिश्रितैः॥७४॥
समभागान्वितैः सर्वैस्त्रिफला द्विगुणा भवेत्।
त्रिफलासहितैरेतैः समभागस्तु गुग्गुलुः॥७५॥
एतच्चूर्णीकृतं सर्वं मधुना च परिप्लुतम्।
योगराजमिमं विद्वान् भक्षयेत् प्रातरुत्थितः॥७६॥

---

शतावर्य्यादिगुग्गुलौ—अर्द्धाङ्गवाते एकाङ्गवातरोगे। सारणी प्रसारणी। दीप्यका यमानी। संज्ञका पीतकाष्ठं, पीतचन्दनं पद्मकाष्ठं वा इत्यर्थः; "संज्ञका" इत्यत्र "संज्ञकम्" इति पाठः साधुः; "अश्वगन्धा च संज्ञका" इत्यत्र "अश्वगन्धाश्वमारकः" इति क्वचित् पाठः। कचोरः गन्धशटी। आर्द्रं सरसं यथा तथा, न तु शुष्कमित्यर्थः, आर्द्रमिति खण्डयित्वा इति क्रियायाः विशेषणम्, खण्डयित्वा पिष्ट्वा इत्यर्थः, गुग्गुलुमिति शेषः, प्रभूतघृतेन आर्द्रं यथा भवति तथा गुग्गुलुं पिष्ट्वा। पूर्वचूर्णं शतावर्य्यादिचूर्णम्। आदौ शुद्धगुग्गुलुं घृतेन पिष्ट्वा पश्चात् चूर्णं निक्षिप्य सर्पिषा प्रगाढं मर्दयेदिति निष्कर्षः। किरेत् दद्यादित्यर्थः॥ ७०—७२॥

योगराजगुग्गुलौ—गजकृष्णा गजपिप्पली। त्रिफला द्विगुणा मिलितत्रिफला-

अर्शांसि वातगुल्मञ्च पाण्डुरोगमरोचकम् ।
नाभिशूलमुदावर्त्तं प्रमेहं वातशोणितम् ॥७७॥
कुष्ठं क्षयमपस्मारं हृद्रोगं ग्रहणीगदम् ।
महान्तमग्निसादञ्च श्वासकासभगन्दरम् ॥७८॥
रेतोदोषाश्च ये पुंसां योनिदोषाश्च योषिताम् ।
निहन्यादाशु तान् सर्वान् दुर्वारान्न च संशयः ॥७९॥
एष निष्परिहारोऽस्ति पानभोजनमैथुने ।
सतताभ्यासयोगेन वलीपलितनाशनः ॥८०॥
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतत्रयम् ।
क्षीराज्यरसभुक्तानां दोषधातुमलोचितम् ॥
बुभुक्षितो मात्रयाऽन्नमश्नाद्गुग्गुलुसेवकः ॥८१॥
दार्वीक्वाथेन मेहं जयतीत्यादि ।

अथ द्वितीययोगराजगुग्गुलुः ।—

चित्रकं पिप्पलीमूलं यवानी कारवी तथा ।
विडङ्गान्यजमोदश्च जीरकं सुरदारु च ॥८२॥
चव्यैला सैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ।
त्रिफलामुस्तकव्योष-त्वगुशीरं यवाग्रजम् ॥८३॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत् ।
एतानि समभागानि तावन्मात्रञ्च गुग्गुलुम् ॥८४॥
सम्मर्द्य सर्पिषा गाढं स्निग्धे भाण्डे विनिक्षिपेत् ।
भक्षयेत् कर्षमात्रञ्च वातरोगान् विनाशयेत् ॥८५॥

---

चूर्णस्य सर्वचूर्णात् द्वैगुण्यम् । क्षीराज्यरसभुक्तानामित्यत्र रसः मांसरसः, तेन सह भुक्तानाम् इति सम्बन्धे षष्ठी । दार्वीति ।—अत्र इत्यादिपदेन तत्तद्रोगहरानुपानेन प्रयुक्तोऽयं गुग्गुलुः तत्तद्रोगहरो भवतीत्यर्थः प्रतीयते । तन्त्रान्तरेऽस्य पिप्पल्यादि-गुग्गुलुरिति संज्ञा ॥ ७१—८१ ॥

द्वितीययोगराजगुग्गुलौ—कारवी कृष्णजीरकम् । "चव्यैला" इत्यत्र "वचैला"

ततो मात्रां प्रयुञ्जीत यथेष्टाहारसेवनात् ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥८६॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानि च ।
प्लीहगुल्मोदरानाह-दुर्नामानि विनाशयेत् ॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिबलं तथा ॥८७॥

अथ बडवानलः ।—

शुल्वं तालकगन्धकौ जलनिधेः फेनोऽग्निगर्भाश्मयः
कान्तायो लवणानि हैमवचयोर्नीलाञ्जनं तुत्थकम् ।
भागो द्वादशको रसस्य तदिदं वज्राम्बुघृष्टं शमैः
सिद्धोऽयं बडवानलो गजपुटे रोगानशेषान् जयेत् ॥८८॥
आर्द्रकस्य द्रवेणामुं दशवाराणि भावयेत् ।
दिनद्वयं चित्रकस्य द्राविणैव तु भावयेत् ॥८९॥
पादांशममृतं दत्त्वा चित्रद्रावैः क्षणं पचेत् ।
मात्रया योजयेच्चानु दशमूलशृतं पयः ॥९०॥
वातश्लेष्मप्रधाने च दद्यात्सूरणचित्रकम् ।
स्वेदञ्च कटुतुम्बिन्या प्रयुञ्जीतातियत्नतः ॥
दाहञ्च जयया हन्याच्छीतवातञ्च वर्जयेत् ॥९१॥

---

इति पाठान्तरम् । त्वक् गुडत्वक् । यवाग्रजं यवक्षारम् । तावन्मात्रं सर्वचूर्णसमम् । आढ्यवातः ऊरुस्तम्भः ॥ ८२—८७ ॥

बडवानले—जलनिधेः फेनः समुद्रफेनः । अग्निगर्भाश्मयः शमी । लवणानि इति पञ्च ; अत्र पञ्चानां लवणानां मिलितानामेको भागः । हेम स्वर्णं, तच्च भस्मीभूतं ग्राह्यम् । भागो द्वादशको रसस्य रसस्य पारदस्य द्वादशको भागः द्वादशानां पूरणः, एवञ्च रसैकभागेन सह शुल्वादीनां द्वादशभाग इत्यर्थः । वज्राम्बु स्नुहीक्षीरं तेन घृष्टं मर्दितम् । अमुं बडवानलम् । पादांशममृतमिति विषौषधापेक्षया । चित्रद्रावैः क्षणं पचेत् चित्रकमूलक्वाथैः सह मल्लकाद्ये लौहकटाहे वा मृदुपाकं कुर्यात् । दद्यात् सूरणचित्रकं सूरणचित्रकक्वाथमनुपानं कुर्यात् । दाहमिति ।—

अथ मार्त्तण्डेश्वरः।—

समताप्ययुतं शुल्वं पलविंशतिमानकम्।
प्रध्मातं हि चतुर्वारं खण्डयित्वा ततश्चरेत् ॥९२॥
तत्तुल्यमाक्षिकोपेतं पुटेद्विंशतिवारकम्।
गन्धकेन पुटेत्तावद्यावत् पलमितं भवेत् ॥९३॥
क्षिपेत् पलमितं तत्र गन्धकेन हतं रसम्।
शाणमात्रं मृतं वज्रं सर्वमेकत्र मर्दयेत् ॥९४॥
इति सिद्धो रसेन्द्रोऽयं मार्त्तण्डेश्वरनामवान्।
कीर्त्तितो लोकनाथेन लोकानां हितकाम्यया ॥९५॥
मरीचघृतसंयुक्तः सेवितो मण्डलावधि तः।
वाताद्यष्टमहारोगान् श्वासकासयुतं क्षयम् ॥९६॥
हलीमकञ्च पाण्डुञ्च ज्वरानपि सुदुस्तरान्।
इत्यादिकगदान् सर्वान् विनाशयति निश्चितम् ॥९७॥
करोति दीपनं तीव्रं दीप्तानलशतोपमम्।
सन्निपातं जयत्याशु व्योषाद्रकसमन्वितः ॥
सर्वसौख्यकरो नृणां स्त्रीणां वन्ध्यत्वनाशनः ॥९८॥

अथ चतुःसुधरसः।—

समभागौ शुभे हेम्नि निर्गूढ़ं ताप्यमुत्तमम्।
शतधा शतधा रौप्ये शुल्वे च शतवारकम् ॥९९॥

जयया जयन्त्या सह प्रयुक्तः सन् दाहं हन्यात्; "दाहे च व्यजनं कुर्यात्" इति पाठान्तरम ॥ ८८—९१ ॥

मार्त्तण्डेश्वरे—ताप्यशुल्वयोः मिलितयोः विंशतिपलमानता। प्रध्मातं भस्मीकृतं कोष्ठिकायन्त्रे आध्मापितं वा। तुल्यमाक्षिकोपेतं समभागमिश्रितेन औषधेन तुल्य-स्वर्णमाक्षिकसंयुक्तम्। गन्धकेन इति सर्वतुल्येन। पुटेदिति।—गन्धकं दत्त्वा दत्त्वा तावत् पुटेत् यावता पुटेन औषधं पलमात्रमेव अवशिष्यात्। मण्डलावधि तः चतु-र्विंशतिदिवसानित्यर्थः ॥ ९२—९८ ॥

इत्थं सिद्धमिदं बीजं पृथगक्षप्रमाणतः ।
समावर्त्त्य तदेकत्र रसे पञ्चपलात्मके ॥१००॥
वक्ष्यमाणप्रकारेण जारयेदतियत्नतः ।
तप्ते खल्वे रसं दत्त्वा बीजं निष्कमितं तथा ॥१०१॥
मर्दयेदतियत्नेन भवेद्यावद्दिनत्रयम् ।
पूर्वोक्तकच्छपे यन्त्रे वक्ष्यमाणविडान्विते ॥१०२॥
वक्ष्यमाणप्रकारेण बीजमेवमशेषतः ।
बल्लिकाशीशकव्योम-काचीसौवर्चलैः समैः ॥१०३॥
चक्राङ्गीरससम्भिन्नैः शतधा विडमिश्रवत् ।
एवं जारितसूतेन पलमात्रेण तावता ॥१०४॥
गन्धकेनापि कर्त्तव्या सुस्निग्धा वरकज्जली ।
लोहपात्रे घृतोपेतां द्रावयेत्तान्तु कज्जलीम् ॥१०५॥
तुल्यसत्त्वाभ्रभस्मितं क्षिप्त्वा सम्मिश्र्य सर्वशः ।
रम्भापत्रे विनिक्षिप्य कुर्य्यात् पर्पटिकां शुभाम् ॥१०६॥
विचूर्ण्य पर्पटीं सम्यक् वैक्रान्तं त्रिंशदंशतः ।
निक्षिप्य हिङ्गुतोयेन शतधा परिभावितम् ॥१०७॥

---

चतुःसुधरसे—निर्गूढं निःशेषेण प्रवेशितं, ग्रासितमित्यर्थः। बीजं स्वर्णादियत्नसाध्यमित्यर्थः। पूर्वोक्तकच्छपे यन्त्रे "जलपूर्णपात्रमध्ये" इत्यादिना नवमाध्यायोक्ते। वक्ष्यमाणविडान्विते बल्लिकाशीशकादिभिः कृतेन रसादीनां ग्राससामर्थ्योत्पादकेन द्रव्यविशेषेण युक्ते इत्यर्थः। काची सौराष्ट्रमृत्तिका। समैः समपरिमितैः। चक्राङ्गीरससम्भिन्नैः चक्राङ्गी सुदर्शना, पद्मगुडूचीत्यर्थः; हिलमोचिका वा, तस्याः रसेन मर्दितैरित्यर्थः। शतधा इति चक्राङ्गीरससम्भिन्नैरित्यनेन सम्बध्यते। विडमिश्रवत् इति बीजमित्यस्य विशेषणम्; विडेन मिश्रं ग्रासकरणादित्यर्थः; विड एव मिश्रं मिलनसम्पादनादित्यर्थो वा। "विडमिश्रवत्" इत्यत्र "विडयन्त्रवत्" इति पाठकल्पना साधीयसीति मन्यामहे; अष्टमाध्याये जारणाप्रकरणे "विडयन्त्रादि-योगतः" इति पाठदर्शनात्। तुल्यसत्त्वाभ्रभस्मितं कज्जलीतुल्यमभ्रसत्त्वभस्म।

निरुध्य मल्लमूषायां स्वेदयेदतियत्नतः।
पुनः सञ्चूर्ण्य यत्नेन करण्डे विनिवेशयेत् ॥१०८॥
हन्यात् सर्वमरुद्गदान् क्षयगदं पाण्डुञ्च नष्टाग्नितां
निर्वीर्यत्वमरोचकं त्वजरणं शूलञ्च गुल्मादिकम्।
अष्टौ चैव महागदानतितरां व्याधिं समोषं क्षणात्
भुक्तो मुद्गमितश्चतुःसुधरसः स्वस्थोचितो भूभुजाम् ॥१०९॥
मूलकं वर्जयेदस्मिन् रसे नान्यत् किञ्चन।
त्रिवारमेकवारेण बुभुक्षां जनयेद्ध्रुवम् ॥११०॥

अथ सर्ववातारिः।—

गन्धकाद्द्विगुणं ताम्रं तालकाद्द्विगुणा शिला।
शिलाया द्विगुणं ताप्यं ताप्याच्च द्विगुणं रसम् ॥१११॥

वैक्रान्तं त्रिंशदंशतः इति कज्जल्यपेक्षया वैक्रान्तस्य त्रिंशदंशत्वम्। हिङ्गुतोयेन हिङ्गुमिश्रितजलेन। त्रिवारमिति भुक्त इत्यनेन सम्बध्यते। "एकवारेण" इत्यत्र "द्विवारम" इति क्वचित् पाठः। अयमर्थः,—आदौ स्वर्णं तुल्यमाक्षिकेण सह मर्दयित्वा लघुपुटे पचेत्, ततः उद्धृत्य खल्लयित्वा च पुनः पचेत्, एवं शतपाकं कुर्यात। स्वर्णवत् रौप्यताम्रेऽपि। एवं-पक्वस्य रसजारणे बीजाख्यस्यास्य प्रत्येकं कर्षमात्रं पञ्चपलेन रसेन सह जारयेत; तत्र जारणाविधिश्चायं—तप्ते खल्ले पञ्चपलरसं गृहीत्वा पूर्वोक्तबीजानां प्रत्येकं शाणं तत्र निक्षिप्य मर्दयेत, एकीभूते च तस्मिन् पुनः निष्कमात्रं बीजं दत्त्वा मर्दयेत, एवं दिनत्रयेण कर्षप्रमाणं तद्बीजं रसेन ग्रासयेत, ततः कच्छपयन्त्रे तं रसं चक्राङ्कीरसेन शतधा मर्दितं वल्लिकाशीशादि-लिप्तं विडस्थं विरुध्य पुटेत, एवं-जारितस्य सूतस्य पलं गन्धकस्य च पलं कज्जली-कृत्य घृताक्ते लौहपात्रे बदराङ्गारेण तां कज्जलीं द्रवीकुर्यात्, ततः द्रवीभूतायां तस्यां कज्जलीप्रमाणम् अभ्रसत्त्वभस्म निक्षिप्य मिश्रयेत्, अथ रसपर्पटीवत् रम्भापत्रे तां निक्षिप्य पर्पटिकां कुर्यात्। ततः तां पर्पटीं खल्ले विचूर्ण्य पर्पटी-मानात् त्रिंशांशं भस्मवैक्रान्तं तत्र निक्षिप्य च हिङ्गुमिश्रितजलेन भावनाविधिनिपुणेन शतवारं भावयेत्, अनन्तरं मल्लमूषायां निरुध्य पुटेत, स्वाङ्गशीतं समुद्धृत्य विचूर्ण्य च करण्डान्तः स्थापयेदिति ॥ ९९—११० ॥

स्थापयेत् सर्वमेकत्र यावत् स्याद्दिनसप्तकम्।
सर्वस्याष्टमभागेन दत्त्वा रसामृतं शुभम्॥११२॥
विषतिन्दुकजैर्द्रावैः पिष्ट्वा गोलकमाचरेत्।
विशोष्य वालुकायन्त्रे अन्धयेद्दिवसद्वयम्॥११३॥
स्वाङ्गशीतलमुद्धृत्य तुल्यहिङ्गुष्टकान्वितम्।
भावयेद्बीजपूरस्य सप्तवारं रसेन हि॥११४॥
सप्तवारं रसैः शुण्ठ्याश्चित्रमूलस्य वारिणा।
इति सिद्धो रसेन्द्रोऽयं सर्ववातारिसंज्ञकः॥११५॥
घृतेन सहितो लीढो वल्लद्वयमितो नृभिः।
निहन्त्यशीतिवातार्त्तीर्गुल्मानष्टविधानपि॥११६॥
चतुर्विधञ्च मन्दाग्निं शूलानुदरजान् क्रिमीन्।
आध्मानञ्च तथा हिक्कां मूढवातञ्च विड्ग्रहम्॥११७॥

अथ वातविध्वंसनः।—

मृतमभ्रकसत्त्वं हि कांस्यं शुल्वञ्च माक्षिकम्।
गन्धकं तालकं सर्वं भागोत्तरविवर्द्धितम्॥११८॥
कज्जलीकृत्य तत् सर्वं वातारिस्नेहसंयुतम्।
मर्दयेत् सप्तदिवसं गोलीकृत्य तु यत्नतः॥११९॥
निम्बुद्रवेण सम्पिष्टं तालकल्केन लेपयेत्।
अर्द्धाङ्गुलदलञ्चैव परिशोष्य प्रयत्नतः॥१२०॥

---

सर्ववातारौ—रसामृतं रसवर्धं महाविषं, वक्ष्यमाणविषकल्पे "रसवर्धं महाविषम्" इति दर्शनात्। विशोष्य इत्यत्र आतपे इति शेषः। अन्धयेत् बाष्पयेदित्यर्थः। तुल्यहिङ्गुष्टकान्वितं पाचितौषधतुल्येन हिङ्गुष्टकाख्येन अग्निमान्द्याधिकारोक्तेन तन्त्रान्तरीयेण औषधेन मिश्रितम्; तच्च "त्रिकटुकमजमोदा सैन्धवं जीरके द्वे। समधरणधृतानामष्टमो हिङ्गुभागः॥ प्रथमकवलभुक्तं सर्पिषा चूर्णमेतत्। जनयति जठराग्निं वातरोगांश्च हन्यात्॥" इत्यनेन उक्तम्॥ १११—११७॥

वातविध्वंसने—मृतमिति पदम् अभ्रकसत्त्वादिभिः सर्वैः सम्बध्यते। "मृतम्"

प्रपचेद्वालुकायन्त्रे यामानां द्वादशावधि।
पटचूर्णं विधायैतद्भावयेत्तदनन्तरम् ॥१२१॥
पञ्चकोलकचित्राङ्घ्रि-वरुणादिकषायतः।
दशमूलकषायेण शृङ्गवेररसेन च ॥१२२॥
रक्षामृतं कलांशेन दत्त्वा निष्पिष्य यत्नतः।
स्थूलकोलास्थितुलितां छायाशुष्कां वटीं किरेत् ॥१२३॥
तत्तद्रोगहरैर्द्रव्यैर्नृणां देया सदा हिता।
हन्यादशीतिधा भिन्नान् वातजातान् महागदान् ॥१२४॥
गुल्मानष्टविधांश्चापि शूलानष्टविधानपि।
जठरस्य रुजः सर्वास्तथा च मलनिग्रहम् ॥१२५॥
आध्मानकमथाऽऽनाहं विसूचीं मन्दवह्निताम्।
आमदोषानशेषांश्च दाहं छर्दिञ्च दुर्धराम् ॥१२६॥
ग्रहणीं श्वासकासौ च क्रिमिरोगमशेषतः।
हन्यात् सर्वाङ्गसदनं मन्यास्तम्भञ्च वाजिनाम् ॥१२७॥

---

इत्यत्र "मृतम्" इति रसेन्द्रसारोक्तः पाठः समीचीनः; मृतमिति पाठे कज्जलीकरणानुपयोगित्वात्। "गुल्मम्" इत्यत्रापि "गुह्मम्" इति तत्र पाठः। भागोत्तरविवर्द्धितम् उत्तरोत्तरमेकैकभागवृद्धम्। वातारिस्नेहः एरण्डतैलम्। गोलीकृत्य इत्यादौ—निम्बुद्रवेण सम्पिष्टं तत् सर्वं यत्नतः गोलीकृत्य तालकल्केन लेपयेदित्यन्वयः। तालकल्कमानन्तु यावता कल्केन लेपस्य षडङ्गुलघनता भवेत् तावदिति बोद्धव्यम्। "सम्पिष्टं तालकल्केन" इत्यत्र "सम्पिष्टतालकल्केन" इति पाठे—हरितालं निम्बुद्रावेण सम्पिष्य तेन कल्केन इत्यर्थः। "तालकल्केन" इत्यत्र "तिलकल्केन" इति रसेन्द्रसारसङ्ग्रहे पाठः। षडङ्गुलदलम् इति लेपयेदिति क्रियाया विशेषणम्; षडङ्गुलदलम् षडङ्गुलोत्सेधमित्यर्थः। भावयेदिति सप्ताहं भावयेत्। चित्राङ्घ्रिः इन्द्रवारुणीमूलम्। वरुणादि वरुणादिगणः; स च "वरुणार्त्तगलौ शिग्रुमधुशिग्रुक:। मेषशृङ्गीकरञ्जौ च बिम्बाग्निमन्थमोरटाः॥ शैरीयौ वसिरो दर्भौ वरी वसुकचित्रकौ। बिल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च॥ वरुणादिर्गणः प्रोक्तः" इत्यादिना "वरुण-सङ्घरद्य-

ज्वरे चैवातिसारे च शूलरोगे त्रिदोषजे ।
पथ्यं रोगानुरूपेण दापनीयं भिषग्वरैः ॥१२८॥
श्रीमता नन्दिना प्रोक्तो वातविध्वंसनो रसः ।
क्षुधार्थिभिः सदा सेव्यः सर्वाहारपरैर्नरैः ॥१२९॥

अथ वृकोदरगुटिका ।—

सूतगन्धकतीक्ष्णाभ्रैः सताप्यैः समभागिकैः ।
रसांशमपरं सर्वं षट्कोलं जीरकद्वयम् ॥१३०॥
सौवर्चलं ससिन्धूत्थं विडङ्गञ्च हरीतकी ।
अम्लवेतसकं सर्वं वीजपूराम्बुमर्दितम् ॥
गुटिकास्तेन कल्केन कार्य्याः कोलास्थिमात्रकाः ॥१३१॥
योगिन्या बहुघातिनामयुतया त्रैलोक्यविख्यातया
निर्दिष्टा हि वृकोदरीति गुटिका सोष्णाम्बुना सेविता ।
निःशेषानिलदोषरोगजरुजः श्लेष्मामरोगोद्भवं
मन्दाग्निं ग्रहणीं चतुर्विधमहाजीर्णञ्च तूर्णं जयेत् ॥१३२॥

---

शतावरी-दहन सौरट-विल्व-विषाणिका-द्विबृहती-द्विकरञ्ज-जयाह्वय-बहुलपल्लव-दर्भ-कुशकराः" इत्यादिना वा उक्तः। पञ्चकोलक्वाथेन इन्द्रवारुणीमूलक्वाथेन वरुणादिगणक्वाथेन च इत्यर्थः। कल्पांशेन पाचितौषधापेक्षया षोडशांशेन। रसेन्द्रसारे "षट्चूर्णात्" इत्यारभ्य "शूलानष्टविधानपि" इत्यन्तस्य पाठस्य न्यूनता दृश्यते। वाजिनाम् इत्यत्र अपीति शेषः। "वाजिनाम्" इत्यत्र रसेन्द्रसारे "तथैव च" इति पाठः। क्षुधार्थिभिः मन्दाग्निभिः अत एव क्षुधावर्द्धनेच्छुभिरित्यर्थः॥ ११८—१२९ ॥

वृकोदरगुटिकायां—रसांशमपरं सर्वमिति षट्कोलादीनामम्लवेतसान्तानां सर्वेषां मिलित्वा रसभागता, सर्वेषां समभागत्वे रसांशं तथा सर्वमिति पदयोः वैयर्थ्यात्। षट्कोलं षडूषणं, तत्तु "पञ्चकोलं समरिचं षडूषणमुदाहृतम्" इत्युक्तरूपम्। बहुघातिनामयुतया बहुव्याधिहन्तृत्वात् बहुघातिनीतिसंज्ञकया। सोष्णाम्बुना इत्यत्र सा इति पृथक् पदं, वृकोदरी गुटिकेत्यर्थः। निःशेषेति।—

अथ प्रभावती वटी।—

हेमाभ्रालकतीक्ष्णताप्यकमलामेषां समं सप्तकं
सूतश्च द्विगुणं विशोधनवधूस्पृक्काशोभाञ्जनात्।
पाठाशूरणसिन्दुवारविजयैरण्डद्रवैर्मर्दितं
तैलं काङ्गुणिगन्धकं कटु भवेत् कल्कं वटीं कल्पयेत् ॥१३३॥
प्रभावतीति कथिताऽऽर्द्रकद्रावैर्निषेविता।
ततश्चानु पिबेत्तोयं दशमूलप्रसाधितम् ॥१३४॥
सपिप्पलीकं पिबतो जलं जयेत्
मरुद्विकारानुदराण्यपस्मृतिम् ॥१३५॥

---

रोगपदसामानाधिकरण्यात विकृतः दुःखकारी अनिलदोषः अनिलदोषरोगः तस्मात् जाताः रुजः अनिलदोषरोगजरुजः, निःशेषाः अशेषाः, सर्वा इत्यर्थः, अशीतिरिति यावत, अनिलदोषरोगजरुजः इति विग्रहः। श्लेष्मामरोगोद्भवामित्यत्र रुजमिति शेषः ॥ १२०—१३२ ॥

प्रभावतीवट्याम्—कमलं ताम्रं नेपाम्, अत्र स्वरान्तस्यापि कमलशब्दस्य छन्दोऽनुरोधात हलन्तत्वेन पाठः। "कमलामेषाम" इत्यत्र "कमलं सूर्य्यम" इति कस्यचित् पाठे—कमलं कुङ्कुमं, सूर्य्यं ताम्रम्। एषां हेमादीनां समं समभागता। सप्तकं सप्तानां पूरणं सप्तममित्यर्थः, सूतमित्यनेन सम्बध्यते ; सूतं द्विगुणम् इति एकभागापेक्षया ज्ञेयम। विशोधनं विशोधनी, नागवल्लीत्यर्थः, वधूः स्पृक्का शारिवा वा ; यद्वा—विशोधनवधूः इत्येकपदं, विशोधनी या वधूः सारिवेत्यर्थः ; सारिवायाः रक्तशोधकत्वात्। शोभाञ्जनात् शोभाञ्जनत्वचः, उद्धृतैः द्रवैरिति शेषः। तैलं शिह्लकम्। कङ्गुणी प्रियङ्गुः तृणधान्यविशेषो वा, तस्याः फलं बीजं वा काङ्गुणिः ; कृत्वोऽत्र छान्दसः। कटु त्रिकटु ; यद्वा—तैलमिति पदं काङ्गुण्यादिभिः सर्वैः संयोजनीयं, काङ्गुणि तैलं कङ्गुणीबीजकृतं तैलं, गन्धकं तैलं गन्धकस्य तैलं, तथा कटुतैलञ्च ; "तैलं…कल्कम्" इत्यत्र "तैलैः काङ्गुणिजैश्च गन्धकयुतात् कल्कात्" इति कुत्रचित् पाठः। विशोधनादिभिर्द्रवैः मर्दनानन्तरम् एतत् सर्वं भवेदित्यत्र देयमिति शेषः। कल्कं द्रवैः शिलायां पिष्टं हेमादिकम्। सपिप्पलीकं पिप्पलीचूर्णप्रक्षेपयुक्तम्। पिबतो जलं दशमूलक्काथं पिबतो जनस्य। अपस्मृतिम् अपस्मारम् ॥ १३३—१३५ ॥

अथ एकाङ्गवाते पर्पटीरसप्रयोगे विध्यन्तरम्।—

अष्टगुञ्जमितं खादेदेकाङ्गे पर्पटीरसम्।
अर्द्धकर्षं घृतेनानु योगराजञ्च गुग्गुलुम्॥१३६॥

अथ विजयभैरवतैलम्।—

धान्याम्लपिष्टसुरभित्रयसूतलिप्त-
तैलाक्तक्षौमपटवर्त्तिमुखात् प्रवृत्तम्।
कम्पोत्तरान् जयति पानविलेपनाभ्यां
वातामयान् विजयभैरवनाम तैलम्॥१३७॥

उक्तञ्च—

रसतालशिलागन्धं दिनं सम्चूर्ण्य काञ्जिकैः।
लिप्ता वस्त्रैः कृतां वर्त्तिं तैलाक्तां ज्वालयेत् पुनः॥१३८॥
तद्भूतं सङ्गृह्ये तैलमधःपात्रे धृते सति।
तत्तैललेपितं पत्रं नागवल्ल्याश्च भक्षयेत्॥१३९॥
बाहुकम्पं शिरःकम्पमेकाङ्गं जानुकम्पनम्।
नाशयेत् भक्षणाल्लेपात् तैलं विजयभैरवम्॥१४०॥

एकाङ्गवाते पर्पटीरसप्रयोगस्य विध्यन्तरमाह, अष्टगुञ्जेति।—पर्पटीरसेत्यादिना ६७।६८ श्लोकयोः उक्तस्यापि अस्य योगस्य योगराजगुग्गुलोः पर्पटीरसस्य अनुपानत्वेनात्र कल्पनात् पूर्वयोगापेक्षया पृथक्त्वं मन्तव्यं, तत्र उभयोः मिलितयोरेव प्रयोगविधानात्॥ १३६॥

विजयभैरवतैले—धान्याम्लं काञ्जिकम्। सुरभित्रयं गन्धकत्रयं, तत्र शिलातालगन्धकरूपं, न तु त्वगेलापत्ररूपं त्रिजातकम्; तन्त्रान्तरीयविजयभैरवदर्शनात्, व्याकरिष्यति च स्वयमेवैतदग्रे। तैलाक्ता कटुतैलाक्ता॥ १३७॥

सुरभित्रय इति पदस्य शिलातालगन्धकार्थकत्वप्रतिपादनाय तन्त्रान्तरोक्तविजयभैरवतैलस्य पाठमुपन्यस्यति, उक्तञ्चेत्यादिना।—"वस्त्रैः" इत्यत्र "वस्त्रे" तथा "तद्भूतं सङ्गृह्ये" इत्यत्र "तदुद्भुतं ग्राहयेत्" इति रसरत्नाकरोक्तः पाठः साधुः। तद्भूतं तदुद्भूतं, ततःस्रुतमित्यर्थः। सङ्गृह्ये संस्थापिते इत्यर्थः। "तत्तैललेपितं

अथ स्वच्छन्दभैरवः।—

तीक्ष्णायस्कान्तगोदन्त-माक्षिकैर्मर्दितो रसः।
समांशगन्धकः पक्वो हण्डिकायन्त्रमध्यगः ॥१४१॥
व्योषाग्निमन्थसुरसा-कन्दशृङ्गाभयाविषैः।
समैः समं त्र्यहं मुण्डी-निर्गुण्डीरसपिण्डितः ॥१४२॥
सेवितः शमयेद्वातानाम्ना स्वच्छन्दभैरवः।
विशेषात् वातरक्तञ्च द्विवल्लश्चाऽऽर्द्रकैर्ददेत् ॥१४३॥

अथ द्वितीयविजयभैरवतैलम्।—

रसगन्धशिलातालं सर्वं कुर्य्यात् समांशकम्।
चूर्णयित्वा ततः स्लक्ष्णमारनालेन मर्दयेत् ॥१४४॥
लेपयित्वा तु कल्केन सूक्ष्मवस्त्रं ततः परम्।
तैलाक्तां कारयेद्वर्त्तिमूर्द्धभागे प्रदीपयेत् ॥१४५॥
वर्त्त्यधःस्थापिते पात्रे तैलं पतति शोभनम्।
लेपयेत्तेन गात्राणि भक्षयेदातुरस्तथा ॥१४६॥

पत्रं नागवल्ल्याश्च" इत्यत्र "तत्तैलैर्लेपयेद्गावं नागवल्ल्या च" इति रसरत्नाकरे पाठान्तरम् ॥ १३८—१४० ॥

स्वच्छन्दभैरवे—तीक्ष्णं तीक्ष्णलौहम। अयस्कान्तः "चुम्बक" इति प्रसिद्धः लौहाकर्षकप्रस्तरविशेषः; तीक्ष्णायः तीक्ष्णलौहं, कान्तं कान्तलौहमिति वा। गोदन्तः स्वनामख्यातः विषविशेषः। रसः पारदः। अत्र तीक्ष्णादीनां गन्धकान्तानां सर्वेषां तुल्यता। हण्डिकायन्त्रमध्यगः स्थालीयन्त्रमध्यगः; तल्लक्षणन्तु "स्थाल्यां ताम्रादि" इत्यादिना नवमाध्याये प्रोक्तम्। सुरसा निर्गुण्डी। कन्दः शूरणम्; "कन्द" इत्यत्र "टङ्क" इति पाठान्तरम्। शृङ्गी कर्कटशृङ्गी। समं सह। तीक्ष्णादिगन्धकान्तं सर्वं तुल्यभागं खल्वे सम्मर्द्य स्थालीयन्त्रे पचेत्, ततः व्योषादीनां प्रत्येकं चूर्णमेकैकभागसमं दत्त्वा मुण्डीनिर्गुण्डीरसाभ्यां त्र्यहं सम्मर्द्य पिण्डितं कुर्य्यात; अथवा—तीक्ष्णादिकं विषान्तं सर्वं समांशं हण्डिकायन्त्रे त्रिदिनं पक्त्वा अनन्तरं मुण्डीनिर्गुण्डीरसाभ्यां मर्दयित्वा वटीं कुर्य्यादिति ॥ १४१—१४३ ॥

नाशयेत् सूततैलं तत् वातरोगाननेकधा ।
बाहुकम्पं शिरःकम्पं जङ्घाकम्पं ततः परम् ॥१४७॥
एकाङ्गञ्च तथा वातं हन्ति रोगाननेकधा ।
रोगशान्त्यै सदा देयं तैलं विजयभैरवम् ॥१४८॥

अथ द्वितीयबडवानलः ।—

सूतहाटकवज्रार्क-कान्तभस्म समांशिकम् ।
तालं नीलाञ्जनं तुत्थमब्धिफेनं समांशकम् ॥१४९॥
पञ्चानां लवणानान्तु भागैकैकं विमर्दयेत् ।
वज्रक्षीरैर्दिनैकन्तु रुद्धा तं भूधरे पचेत् ॥१५०॥
माषैकञ्चाऽऽर्द्रकद्रावैर्लेहयेत् बडवानलम् ।
पिप्पलीमूलजं क्वाथं सपिप्पल्यनुपाययेत् ॥
धनुर्वातं दण्डवातं शृङ्खलावातकम्पनुत् ॥१५१॥

अथ द्वितीयस्वच्छन्दभैरवः ।—

शुद्धं सूतं मृतं लोहं ताप्यगन्धकतालकम् ।
पथ्याग्निमन्थनिर्गुण्डी-त्र्यूषणं टङ्कणं विषम् ॥१५२॥
तुल्यांशं मर्दयेत् खल्ले दिनं निर्गुण्डिकारसैः ।
मुण्डीद्रावैर्दिनैकं तं द्विगुञ्जं वटकीकृतम् ॥
भक्षयेत् सर्ववातार्त्तो नाम्ना स्वच्छन्दभैरवः ॥१५३॥

---

द्वितीयविजयभैरवतैले—सर्वं व्याख्यातपूर्वम् । तत्र पर्णखण्डेन सह भक्षणाय उपदेशः कृतः, अत्र तु विना पर्णखण्डं केवलस्यास्य सेवनमपि रोगहृत् भवति इति प्रदर्शनार्थं पुनरुल्लेखः कृतः ॥ १४४—१४८॥

द्वितीयबडवानले—हाटकं स्वर्णम् । वज्रं हीरकम् । वज्रक्षीरैः स्नुहीक्षीरैः । रसेन्द्रसारे वातनाशनसंज्ञोऽयम् ॥१४९—१५१ ॥

द्वितीयस्वच्छन्दभैरवे—"मुण्डीद्रावैः" इत्यत्र "शुण्ठीद्रावैः" इति रसरत्नाकरे पाठान्तरम् ॥ १५२।१५३ ॥

अथ षडङ्गगुग्गुलुः ।—

रास्नामृतादेवदारु-शुण्ठीवातारितुल्यकम् ।
गुग्गुलुं सर्वतुल्यांशं कुट्टयेत् घृतवासितम् ॥
कर्षांशं भक्षयेच्चानु ख्यातः षडङ्गगुग्गुलुः ॥१५४॥

अथ षडङ्गयोगः ।—

धूमसारं वरां यष्टीं टङ्कणं पत्रकं विषम् ।
तुल्यं गुञ्जाद्वयं खादेदामवातप्रशान्तये ॥१५५॥

अथ त्रिफलाद्यं यमकम् ।—

एरण्डतैलं त्रिफलां गोमूत्रं चित्रकं विषम् ।
सर्पिषा सहितं पक्त्वा सर्वाङ्गं तेन मर्दयेत् ॥
त्वग्वातघ्नं महाश्रेष्ठं—" ॥१५६॥

*अथ त्वग्वाते आनन्दभैरवप्रयोगोपदेशः ।—

"—देयश्चाऽऽनन्दभैरवम् ।
लशुनं सैन्धवं तैलमनुपानं प्रकल्पयेत् ॥ १५७ ॥

---

षडङ्गगुग्गुलौ—वातारिः एरण्डः तस्य मूलम् । रास्नादीनां तुल्यकं तुल्यांशता इत्यर्थः । "तुल्यकम्" इत्यत्र रसरत्नाकरोक्तः "तैलकम्" इति पाठस्तु समीचीनः । घृतवासितं घृतमिश्रितम् । अनु कुट्टनानन्तरमित्यर्थः । "अमृता देवकाष्ठञ्च शुण्ठी वातारितैलकम् । गुग्गुलुं सर्वतुल्यांशं कुट्टयेच्च सदा दृढम् ॥ कर्षांशं भक्षयेच्चापि ख्यातं षडङ्गगुग्गुलम् ॥" इति रसरत्नाकरोक्तः पाठस्तु लिपिकर-प्रमादविजृम्भित इति प्रतिभाति, रास्नाभावे पञ्चाङ्गतया षडङ्गगुग्गुलुरिति नाम-वैयर्थ्यादिति ॥ १५४ ॥

षडङ्गयोगे—धूमसारं गृहधूमम् । वरां त्रिफलाम् ॥ १५५ ॥

त्रिफलाद्यमके—एरण्डतैलसर्पिषोः मिलित्वा प्रस्थः, गोमूत्रं चतुर्गुणं, त्रिफला-चित्रकविषाणां कल्कः लेहपादिकः । अथवा—एरण्डतैलमपि कल्कविधया ग्राह्यं, घृतस्यैव प्राधान्येन ग्रहणात्, एवञ्च सर्पिषः प्रस्थः, गोमूत्रं चतुर्गुणम् एरण्डतैलत्रिफला-चित्रकविषाणां कल्कः स्नेहचतुर्थांशः । त्वग्वातघ्नं रसगतवातव्याधिनाशनम्, उपधातुरूपां त्वचं प्राप्तस्य वायोः नाशनम् इति वा ॥१५६॥

त्वग्वाते अधिकारान्तरीक्तमौषधविशेषमुपदिशति, देयमिति ।—चः समुच्चये,

अथ निर्गुण्डीप्रयोगः ।—

निर्गुण्डीमूलचूर्णन्तु कर्षं तैलेन लेहयेत् ।
सन्धिवातः कटीवातः कम्पवातश्च शाम्यति ॥ १५८ ॥

अथ रक्तैरण्डप्रयोगः ।—

रक्तस्यैरण्डमूलस्य कर्षं घृष्ट्वा जलैः पिबेत् ।
सर्ववातहरं श्रेष्ठं भग्नवाते विशेषतः ॥१५९॥

अथ इन्द्रवारुणीप्रयोगः ।—

इन्द्रवारुणिकामूलं मागधीगुडसंयुतम् ।
भक्षयेत् कर्षमात्रन्तु सन्धिवातहरं भवेत् ॥ १६० ॥

अथ सर्वाङ्गवातारिरसः ।—

मृतं सूतं मृतं तीक्ष्णं मर्दयेत् कटुकोद्रवैः ।
चणमात्रां वटीं खादेत् सर्वाङ्गैकाङ्गवातनुत् ॥१६१॥

---

सर्पिषा सर्वाङ्गं मर्दयेत्, आनन्दभैरवञ्च देयमित्यर्थः ; "देयञ्च" इत्यत्र "देयं वा" इति पाठान्तरम् । आनन्दभैरवं "हिङ्गुलं वत्सनाभञ्च" इत्यादिना षोडशाध्यायोक्तम् । लशुनमिति ।—लशुनादित्रयम् आनन्दभैरवसेवनानन्तरमनुपानं कुर्य्यात् । तैलमत्र ऐरण्डं, मात्रा च कर्षमाणा ; तथा च रसरत्नाकरे—"लशुनं सैन्धवं तैलं कर्षमात्रं सुखावहम्" इति ॥ १५७ ॥

निर्गुण्डीप्रयोगे—तैलेन एरण्डतैलेन ॥ १५८ ॥

भग्नवातघ्नरक्तैरण्डप्रयोगे—सर्वं स्पष्टम् ॥ १५९ ॥

सन्धिवातहरं इन्द्रवारुणीप्रयोगे—इन्द्रवारुणिकामूलं गोरक्षकर्कटीमूलम् । मागधी पिप्पली । कर्षमात्रमिति इन्द्रवारुणिकादीनां त्रयाणां मिलित्वा कर्षमात्रता ॥१६०॥

सर्वाङ्गवातारिरसे—"तीक्ष्णम्" इत्यत्र "ताम्रम्" इति रसरत्नाकरे पाठः । कटुकोद्रवैः कटुरोहिणीक्वाथैः । कटुकोद्रवैर्भावनाश्च एकविंशतिवारान् देयाः ; तथा च रसरत्नाकरे—"मृतं सूतं मृतं ताम्रं मर्दयेत् कटुकाद्रवैः । एकविंशतिवारञ्च शोष्यं पेष्यं पुनः पुनः ॥ चणमात्रा वटी भक्ष्या रसः सर्वाङ्गकम्पजित् ॥" इति । अत्र चायं सर्वाङ्गकम्पारिरसः इति ख्यातम् ॥ १६१ ॥

अथ व्यम्बकेश्वररसः।—

सूतकस्य पलं पञ्च पलैकं ताम्रचूर्णकम्।
जम्बीराणां द्रवैः पिष्टं सूततुल्यञ्च गन्धकम् ॥१६२॥
नागवल्लीदलैः पिष्टं ताम्रपिष्टं प्रकल्पयेत्।
कृत्वा लघुपुटैः पश्चाद्भूधरे यामपञ्चकम् ॥१६३॥
आदाय चूर्णयेत्तुल्यैस्त्र्यूषणैः समर्मिश्रितैः।
अर्द्धाङ्गकम्पवातार्त्तो भक्षयेच्च द्विगुञ्जकम् ॥१६४॥

अथ गगनगर्भा वटी।—

सूताभ्रं तीक्ष्णताम्रञ्च मृतं तालकगन्धकम्।
भार्गीशुण्ठीवचाधान्य-कम्पिल्लञ्चाभयाविषम् ॥१६५॥
मर्द्यं पर्पटकद्रावैर्निष्कैकां भक्षयेद्वटीम्।
वातश्लेष्महरा ह्याशु वटी गगनगर्भिता ॥१६६॥

अथ वातगजाङ्कुशः।—

मृतं सूतं मृतं लोहं गन्धकं तालमाक्षिकम्।
पथ्याभृङ्गीविषं व्योषमग्निमन्थञ्च टङ्कणम् ॥१६७॥

---

त्र्यम्बकेश्वररसे—ताम्रपिष्टं सूतगन्धकाभ्यां पिष्टं ताम्रमित्यर्थः। तुल्यैः त्र्यूषणैः समर्मिश्रितैः प्रत्येकं समभागेन मिलित्वा पाचितौषधतुल्यैस्त्रिकटुभिरित्यर्थः। "ताम्रपिष्टम्" इत्यत्र "ताम्रपत्रीम्" इति रसेन्द्रसार-रसेन्द्रचिन्तामण्युक्तं पाठान्तरं समीचीनं सुबोधञ्च। रसेन्द्रसारसङ्ग्रहे "पिष्टीरसः" रसेन्द्रचिन्तामणौ "पिष्टीरसः" तथा रसरत्नाकरे "अर्द्धाङ्गवातारिरसः" इत्यादिभिर्विविधैः नामभिः ख्यातोऽयम्। तत्र तत्र च पाठान्तराण्यस्य विविधानि मृग्याणि ॥ १६२—१६४ ॥

गगनगर्भायां—"वचा" इत्यत्र "बला" "काम्पिल्लम्" इत्यत्र "कट्फलम्" तथा "पर्पटकद्रावैः" इत्यत्र "चपलाद्रावैः" इति पाठान्तराणि रसेन्द्रसार-सङ्ग्रह-रसरत्नाकरयोः दृश्यन्ते। पर्पटकद्रावैः क्षेत्रपर्पटीरसैः। "चपलाद्रावैः" इति पाठे—पिप्पलीक्वाथैः। तत्र तत्र चास्य महावातगजाङ्कुशः इति संज्ञा दृश्यते ॥ १६५।१६६ ॥

तुल्यं खल्वे दिनं मर्द्यं मुण्डीनिर्गुण्डिजैर्द्रवैः ।
द्विगुञ्जां वटिकां खादेत् सर्ववातप्रशान्तये ।
साध्यासाध्यं निहन्त्याशु रसो वातगजाङ्कुशः ॥१६८॥

अथ वातरक्तलक्षणम् ।—

सन्धिष्वनिलरक्ताभ्यां शोफोऽन्तर्बहिराश्रयः ।
छर्दिज्वरारुचिकरो भवेद्वातास्रसंज्ञकः ॥१६९॥

अथ वातरक्तचिकित्सा ।—

अथ वातरक्ते अन्याधिकारोक्तौषधप्रयोगोपदेशः ।—

त्रिनेत्राख्यं रसं खादेद्वातशोणितपीडितः ।
वातास्रजिच्छूलगज-केशर्युदयभास्करः ॥१७०॥
पूर्वोक्ता पर्पटी योज्या सर्वेष्वावरणेषु च ।
सर्वरोगहिता चैव नाम्ना सर्वेश्वरी शुभा ॥१७१॥

अथ पित्तरोगचिकित्सा ।—

अथ चन्द्रावलेहः ।—

एलायाश्च तुला ग्राह्या जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु शर्कराद्धतुलां क्षिपेत् ॥१७२॥

---

वातगजाङ्कुशे—भङ्गी अतिविषा । "भङ्गी" इत्यत्र "शृङ्गी" इति रसेन्द्रसार सङ्ग्रहे पाठः ॥ १६७।१६८ ॥

वातव्याधिविशेषत्वात् तदनन्तरं वातरक्तचिकित्सितं विवक्षुः तल्लक्षणमाह, सन्धिष्विति ।—वातास्रसंज्ञकः वातरक्ताख्यः ॥ १६९ ॥

वातरक्ते अधिकारान्तरोक्तानौषधविशेषानतिदिशति, त्रिनेत्राख्यमिति ।—शूल-गजकेशरी-त्रिनेत्राख्यरसौ शूलाधिकारोक्तौ । उदयभास्करः शूलाधिकारोक्तः प्रमेहाधिकारोक्तो वा । पूर्वोक्तेति ।—सर्वेषु आवरणेषु वातावरकेषु रक्तेषु, वातरक्तेष्वित्यर्थः, वातरक्ते हि दुष्टो वायुः दुष्टेन रक्तेन आवृतो भवति, यदुक्तं चरके,—"वायुः प्रवृद्धो वृद्धेन रक्तेनावरितः पथि । क्रुद्धः सन्दूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ॥" इति । पूर्वोक्ता विद्युत्प्रोक्ता सर्वेश्वरीति नाम्ना प्रसिद्धा पर्पटी सर्वेश्वरपर्पटीत्यर्थः ॥१७०।१७१॥

चन्द्रावलेहे—तुला शतपलम् । अष्टभागावशिष्टमिति विपाचयेत् इत्यत्र

शतावर्य्या विदार्य्याश्च गोक्षीरस्याऽऽढकं पृथक्।
लेहवत् साधिते तस्मिन् द्राक्षामधुकपिप्पली: ॥१७३॥
त्रिजातकञ्च खर्जूरं चन्दनद्वयसारिवा।
मुस्तापद्मकह्रीवेर-धात्री चोत्पलचोरकम् ॥१७४॥
एतेषां पलमादाय क्षिपेत् क्षीर्य्याश्चतुष्पलम्।
क्षौद्रप्रस्थेन संयुक्तं लेहयेत् प्रातरुत्थितः ॥१७५॥
पित्तोन्मादविकारेषु शिरोभ्रमणमूर्च्छिते।
हस्तपादाङ्गदाहे च पित्तरक्तोत्तरावृतौ ॥
छर्दिकासक्षये पाण्डौ चन्द्रवच्चन्द्रभाषितम् ॥१७६॥

अथ ऐलेयसर्पिः।—

ऐलेयकस्य स्वरसे घृतं क्षीरं समं पचेत्।
चन्दनं मधुकं द्राक्षा मधूकञ्च सिता तुगा ॥१७७॥
ऐलेयकमिदं सर्पिः सर्वपित्तविकारजित्।
वातपित्तविकारघ्नं शिरोभ्रमणकम्पनुत् ॥१७८॥

विशेषणम्। गोक्षीरमित्यत्र समासान्तर्गतमपि क्षीरपदं शतावरीत्यादिभिरपि संयोजनीयम्; तेन च शतावर्य्याः क्षीरं विदार्य्याः क्षीरं गोः क्षीरञ्च; क्षीरवद्दृश्यमानत्वात् शतावरीविदारीरसयोः क्षीरसंज्ञा। त्रिजातकं त्वगेलापत्रकम्। ह्रीवेरं बालकम्। चोरकं चोरपुष्पी स्पृक्का वा। पलमिति पृथक् पलमानम्। क्षीर्य्याः तुगाक्षीर्य्याः। चन्द्रवत् इति व्याधिजसन्तापनिवारणात्। चन्द्रभाषितं चन्द्रेण तन्नाम्ना रसकोविदेन चन्द्रमसा वा भाषितं कथितम् ॥ १७२—१७६ ॥

ऐलेयसर्पिषि—ऐलेयकस्य एलबालुकस्य आर्द्रस्य इत्याशयः, अन्यथा स्वरसस्य दुर्ग्राह्यत्वात्; स्वरसाभावे तु "कुडवं चूर्णितं द्रव्यं प्रक्षिप्तं द्विगुणे जले। अहोरात्रं स्थितं तस्मात् भवेद्वा रस उत्तमः॥" इत्युक्तलक्षणकः "शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे। वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥" इत्युक्तलक्षणको वा स्वरसानुकल्पः कार्य्यः। मधूकं मधुद्रुमः। सिता शर्करा। "सिता" इत्यत्र "शिला" इति पाठे—शिला मनःशिला। तुगा वंशलोचना। अत्र ऐलेयकस्वरसः चतुर्गुणः घृतस्य प्रस्थः क्षीरञ्च घृतसमं चन्दनादीनां कल्कः स्नेहपादिकः ॥ १७७।१७८ ॥

अथ ऐलेयकप्रयोगः ।—

ऐलेयकस्य स्वरसे सक्षीरां शर्करां पिबेत् ।
क्वाथं वा शर्करायुक्तं शिरोभ्रमणकम्पनुत् ॥१७९॥

अथ ऐलेयकतैलम् ।—

ऐलेयकस्य स्वरसमाढकन्तु भिषग्वरः ।
कुमार्य्याः स्वरसं शुद्धं चतुष्प्रस्थन्तु कारयेत् ॥१८०॥
आमलक्याः शतावर्य्या रसं प्रस्थद्वयं पृथक् ।
तैलाढकसमायुक्तं क्षीरद्रोणविमिश्रितम् ॥१८१॥
चोचं मलयजं वारि सरलं कुमुदोत्पलम् ।
द्वे मेदे मधुकं द्राक्षा तुगाक्षीरी मधूलिका ॥१८२॥
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ।
मृगनाभ्यजगन्धा च शशाङ्कश्च पृथक् पृथक् ॥१८३॥
एतेषाञ्चार्द्धपलकं श्लक्ष्णं चूर्णं विनिक्षिपेत् ।
एतत् सर्वं समालोड्य मन्दं मन्दाग्निना पचेत् ॥१८४॥
मुहूर्त्ते शुभनक्षत्रे नववस्त्रेण पीड़येत् ।
शिरोनेत्रविकारेषु नस्यवत् कर्णयोजितम् ॥१८५॥
अभ्यङ्गोद्वर्त्तनालेपैः शिरोभ्रमणकम्पनुत् ।
अङ्गदाहं शिरोदाहं नेत्रदाहञ्च दारुणम् ॥१८६॥
विसर्पकविकारांश्च मूर्द्ध्नि जातान् बहून् व्रणान् ।
आस्यशोषं भ्रमञ्चैवं नाशयेन्नात्र संशयः ॥
ऐलेयकमिदं तैलं प्रशस्तं पित्तरोगिणाम् ॥१८७॥

ऐलेयकप्रयोगे—सक्षीरां शर्करामिति क्षीरशर्करयोर्मिलित्वा पादिकः प्रक्षेपः । क्वाथमिति ऐलेयकस्य ॥ १७९ ॥

ऐलेयकतैले—चोचं गुडत्वक् । मलयजं श्रीखण्डं, श्वेतचन्दनमित्यर्थः । वारि बालकम् । द्वे मेदे मेदा महामेदा च । तुगाक्षीरी वंशरोचना । मधूलिका मूर्वा, कौलकं वा । अजगन्धा यमानीभेदः । शशाङ्कः कर्पूरः । मुहूर्त्ते शुभलग्ने,

अथैलेयकामृतप्राशः।—

ऐलेयकं समूलञ्च मुद्गपर्णी तथैव च।

शतावरी विदारी च वाराहीकन्दमेव च ॥१८८॥

मधुकञ्च मधूकञ्च तुगाक्षीरी च गोस्तनी।

एतानि द्विपलांशानि चूर्णीकृत्य पृथक् पृथक् ॥१८९॥

सरलं चन्दनं चोचमुत्पलं कुमुदं जलम्।

काकोली क्षीरकाकोली द्वे मेदे जीवकर्षभौ ॥१९०॥

एतेषाञ्चार्द्धपलिकं प्रत्येकं शर्करायुतम्।

ऐलेयकं विदारी च वाराही मुद्गपर्णिका ॥१९१॥

एतेषां स्वरसे शुद्धे शतावर्य्याश्च भावितम्।

एतत् सर्वं समाहृत्य छायाशुष्कन्तु सप्तधा ॥१९२॥

इक्ष्वामलकयोः क्षौद्रैर्भावितं सप्तधा पुनः।

पयसा तु पिबेत् प्रातर्यथाऽग्निबलवान्नरः ॥१९३॥

अङ्गदाहं शिरोदाहं रक्तपित्तं सुदारुणम्।

शिरोऽक्षिकम्पभ्रमणमित्यादिकगदान् जयेत् ॥१९४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये शीतवात-स्पर्शवात-रक्तवातामवातापस्मारोन्मादैकाङ्गवात-सन्धिवात-भग्न-कम्प-वातरक्त-शिरोभ्रमणचिकित्सानामैकविंशोऽध्यायः ॥ २१ ॥

पचेदित्यनेन सम्बन्धः। नववस्त्रेण पीडयेत इति पाकसिद्धौ। मूर्द्धि जातान् बहून् व्रणान् अरुंषिकाः ॥ १८०—१८७ ॥

ऐलेयकामृतप्राशे—ऐलेयकं समूलम् एलबालुकं तद्वृक्षस्य मूलञ्च। गोस्तनी द्राक्षा। चोचं त्वचम्। जलं बालकम्। काकोल्यादिषट्काभावे यथाक्रमं शतावरी शतावर्य्यश्वगन्धावारिवागुडूचीवंशलोचना ग्राह्याः। शर्करायुतम् इत्यत्र शर्करायाः अपि अर्द्धपलमानता। ऐलेयकमिति।—ऐलेयकादीनां स्वरसेन सप्तधा भावयित्वा छायायां शोषयेदिति ॥ १८८—१९४ ॥

इति रसरत्नसमुच्चयबोधिन्यामेकविंशोऽध्यायः ॥ २१ ॥

# अथ द्वाविंशोऽध्यायः।

—∞∞—

## अथ वन्ध्यादिचिकित्सितम्।—

### अथ वन्ध्याया दोषभेदादिकम्।—

भेदा वन्ध्याङ्गनानां हि नवधा परिकीर्त्तिताः।
तत्राऽऽदिवन्ध्या प्रथमा पापकर्मविनिर्मिता ॥१॥
रक्तेन च पृथग्दोषैः समस्तैः पञ्चधा भवेत्।
भूतदैवापचारैश्च तिस्रो वन्ध्याः प्रकीर्त्तिताः ॥२॥

### अथ वन्ध्यस्य दोषभेदादिकम्।—

पुमानपि भवेद्वन्ध्यो दोषैरेतैश्च शुक्रतः ॥३॥

### अथ वन्ध्यालक्षणम्।—

गर्भस्रावी स्मृता पूर्वं मृतवत्सा द्वितीयका।
तृतीया स्त्रीप्रसूतिः स्यात् काकवन्ध्या सकृत्प्रसूः ॥४॥ इत्यादि।

---

अथ वन्ध्यत्वस्य प्राधान्येन वातकार्य्यत्वात् तथा वक्ष्यमाणे वन्ध्याया दोषभेदादिनिरूपणे उक्तस्य "रक्तेन च" इति पदस्य प्रदुष्टार्त्तवरक्तहेत्वर्थकत्वेऽपि रक्तपदसामान्यात् वातव्याधिवातरक्ताद्यनन्तरं वन्ध्यादिचिकित्सितम् उपदिदिक्षुरादौ वन्ध्यायाः दोषभेदादिकमाह, भेदा इति।—आदिवन्ध्या जन्मवन्ध्या, सा पापकर्मविनिर्मिता प्राक्तनाधर्मानुष्ठानजाता। रक्तेन प्रदुष्टेनार्त्तवेनेत्यर्थः। भूतेति।—भूतेन देवयक्षयक्षग्रहादीनामावेशेनेत्यर्थः, दैवेन इहैव जन्मनि कृतेन देवगुर्वाद्यपमानेन इत्यर्थः, तथा अपचारेण मिथ्याहारविहारादिना च॥ १।२ ॥

प्रसङ्गात् पुंवन्ध्यस्य दोषभेदादिकमाह, पुमानिति।—दोषैः रक्तं विना पापकर्मादिभिः तथा शुक्रतः दुष्टशुक्रात् ॥ ३ ॥

वन्ध्यालक्षणमाह, गर्भेति।—गर्भस्रावी गर्भं चतुर्थमासपर्य्यन्तं गर्भं स्रवति या सा ईरिता, "आ चतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः" इत्युक्तेः; अथवा—स्रावशब्दोऽत्र सामान्यतः मोचनार्थे प्रयुक्तः, तेन स्रावपातयोरुभयोरपि अवरोधः। पूर्वं प्रथमा, एकविधा वन्ध्या इत्यर्थः। द्वितीयका अपरा इत्यर्थः, मृतवत्सा यथाकाले मृतसन्तानप्रसविनी, जीवत्यपि यदा सन्ताने अचिरेणैव कालेन मृतपुत्रका

अथ जयसुन्दरः ।—

सुवर्णं रजतं ताम्रं ताप्यसत्त्वञ्च वैक्रान्तम् ।
एकैकं निष्कमानेन संशुद्धं परिमारितम् ॥५॥
एतच्चतुर्गुणं सूतं सूताद्द्विगुणगन्धकम् ।
मर्दयेल्लक्ष्मणातोयैर्बन्धुजीवरसैरपि ॥६॥
काचकूप्यां ततः क्षिप्त्वा ताम्रपात्रं मुखे न्यसेत् ।
विलिम्पेदभितः कूपीमङ्गुलोत्सेधया मृदा ॥७॥
विशोष्य च पुटं दद्याद्भूमौ निक्षिप्य कूपिकाम् ।
गजाख्यपुटपर्य्याप्तिः शाणकर्षमितोत्पलैः ॥८॥
स्वाङ्गशीतं विचूर्ण्याथ भावयेल्लक्ष्मणाद्रवैः ।
सप्तवारं विशोष्याथ करण्डान्तर्विनिक्षिपेत् ॥९॥
अश्वगन्धारजोयुक्तस्ताम्रगोक्षीरसंयुतः ।
सेवितो गुञ्जया तुल्यः सितया च रसोत्तमः ॥१०॥
मासत्रयप्रयोगेण बन्ध्या भवति पुत्रिणी ।
पुत्रिण्यै स्नानशुद्धायै रजःकौशिकचक्षुषो ॥११॥

---

वा । तथा स्त्रीप्रसूतिः या केवलं स्त्र्यपत्यमेव प्रसूते सा इत्यर्थः, अपत्यसामान्यत्वेऽपि कन्यायाः केवलं स्त्र्यपत्यप्रसवकारिण्याः नार्य्याः बन्ध्यात्वं, तस्याः मुख्यतः पुन्नामनरक-त्राणासामर्थ्यात्, तृतीया अपरविधा बन्ध्या इत्यर्थः । या सकृत्प्रसूः एकवारमात्र-प्रसवकारिणी, एकमात्रपुत्रा इत्यर्थः, सा काकबन्ध्या साऽपि तृतीया बन्ध्या इत्यर्थः ; यद्वा—या स्त्री गर्भस्रावी सा पूर्वं प्रथमा स्मृता, या स्त्री मृतवत्सा सा द्वितीयका, या च प्रसूतिः स्त्री सकृत्प्रसूः सा काकबन्ध्या, सा च तृतीया इति ॥ ४ ॥

जयसुन्दरे—ताप्यसत्त्वं माक्षिकसत्त्वम् । वैक्रान्तं वैक्रान्तमित्यर्थः । एतच्चतुर्गुणं मिलितसुवर्णादिभ्यः चतुर्गुणम् ; तेन सूतस्य विंशतिनिष्कमानता । लक्ष्मणातोयैः लक्ष्मणामूलस्वरसैः, लक्ष्मणा च—"पुत्रकाकाररक्ताल्प-बिन्दुभिर्लाञ्छिता सदा । लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत् ॥" इत्युक्तलक्षणा स्वनामख्याता । बन्धुजीव-रसैः बन्धूकपुष्पस्वरसैः । भूमौ निक्षिप्य कूपिकां कूपिकां मृत्तिकायां संस्थाप्य, न तु उपलोपरि संस्थाप्य इत्यर्थः, मृत्तिकायां कूपिकां संस्थाप्य पुटं दद्यात् ।

गव्याज्येन च संसाध्य तत्तदानीं हि भोजयेत् ।
ऋतावृतावीदं देयं यावन्मासत्रयं भवेत् ॥१२॥
रसेन्द्रः कथितः सोऽयं चम्पकारण्यवासिभिः ।
पूर्णामृताख्ययोगीन्द्रैर्नामतो जयसुन्दरः ॥१३॥
सेवितेऽस्मिन् रसे स्त्रीणां न भवेत् सूतिकागदः ।
भवेत् पुत्रश्च दीर्घायुः पण्डितो भाग्यमण्डितः ॥१४॥

अथ रत्नभागोत्तरः ।—

वज्रं मरकतं पद्म-रागं पुष्पञ्च नीलकम् ।
वैदूर्य्यञ्चाथ गोमेदं मौक्तिकं विद्रुमं तथा ॥१५॥
पञ्चगुञ्जामितं सर्वं रत्नं भागोत्तरं परम् ।
तत् तन्त्रोक्तविधानेन भस्मीकुर्य्यात् प्रयत्नतः ॥१६॥
सर्वस्मादष्टगुणितं भस्म वैक्रान्तसम्भवम् ।
तत्तुल्यं ताप्यजं भस्म तद्वद्विमलभस्म च ॥१७॥
सर्वतस्त्रिगुणां तुल्यां रसगन्धककज्जलीम् ।
सर्वमेकत्र सम्मर्द्य छागीदुग्धेन तद्द्रवम् ॥१८॥

---

ताम्रगोक्षीरसंयुतः भव्यकवर्णाया: गोः क्षीरेण सहितः । पुष्पिण्यै स्नानशुद्धायै ऋतुस्नातायै पुत्रकामायै इत्यर्थः, पुत्रजन्मानन्तरं शुद्धस्नातायै इत्यर्थो वा, रजः-कौशिकचक्षुषी रजःकौशिकस्य पेचकविशेषस्य चक्षुषी नेत्रे ; रजसा सह कौशिक-चक्षुषी इत्यर्थो वा, तत्र रजः चैचपर्पटी कर्पूरी वा, कौशिकः गुग्गुलुः, चक्षुः मेषशृङ्गी । भोजयेत् भोजनं दद्यादित्यर्थः । "पुष्पिण्यै···भोजयेत्" इत्यत्र "पुष्पिणीं स्नानशुद्धाञ्च गलदार्द्रकचाम्बराम् । गव्याज्यपयसा सिद्धं तत्तदन्नं हि भोजयेत् ॥" इति क्वचित् पाठः । इदम् औषधम् ॥ ५—१४ ॥

रत्नभागोत्तरे—पुष्पं पुष्परागम् । नीलकम् इन्द्रनीलाख्यमणिम् । गोमेदं रत्नगर्भमणिविशेषं स्वनामख्यातम् । पञ्चेति ।—उत्तरोत्तरभागवृद्धिक्रमेण गृहीत्वा मिश्रितानां नवानां पञ्चगुञ्जामितत्वम् अवधेयम् ; एवञ्च वज्रस्य षोडश सर्षपाः मरकतस्य सप्तदश सर्षपाः इति-क्रमेण भागवृद्धौ मिलित्वा पञ्चगुञ्जामितत्वं भवेत् ; तत् रत्नजातम् । तत्तुल्यं वैक्रान्ततुल्यम् । तद्वत् ताप्यभस्मवत् ; तेन च ताप्यवैक्रान्त-

विधाय पर्पटीं यत्नात् परिचूर्ण्य प्रयत्नतः।
बन्ध्याककर्कोटकीपर्ण-क्वाथेन परिमर्दयेत् ॥१९॥
काननोत्पलविंशत्या पुटेत् षोडशवारकम्।
एवं रसो विनिष्पन्नो रत्नभागोत्तराभिधः ॥२०॥
महाबन्ध्यादिबन्ध्यानां सर्वासां सन्ततिप्रदः।
देवीशास्त्रे विनिर्दिष्टः पुंसां बन्ध्यत्वरोगनुत् ॥२१॥
सोऽयं पाचनदीपनो रुचिकरो वृष्यस्तथा गर्भिणी-
सर्वव्याधिविनाशनो रतिकरः पाण्डुप्रचण्डार्त्तिनुत्।
धन्यो बुद्धिकरश्च पुत्त्रजननः सौभाग्यकृद्योषितां
निर्दोषः स्मरमन्दिरामयहरो योगादशेषार्त्तिनुत् ॥२२॥

अथ चक्रिकाबन्धः।—

गन्धकः पलमात्रश्च पृथगष्टौ शिलाऽऽलकौ
त्रिदिनं मर्दयित्वाऽथ विदध्यात् कज्जलीं शुभाम् ॥२३॥
विषाणाकारमूषायां कज्जलीं निक्षिपेत्ततः।
द्विपलस्य च ताम्रस्य तन्मुखे चक्रिका न्यसेत् ॥२४॥
सन्धिरुध्यातियत्नेन सन्धिबन्धे विशोषिते।
ततः करिपुटार्द्धेन पाकं सम्यक् प्रकल्पयेत् ॥२५॥
स्वतःशीतं समुद्धृत्य चक्रिकां परिचूर्णयेत्।
स्थगयेत् कूपिकामध्ये वस्त्रेण परिगालितम् ॥२६॥

---

त्रिमलानां त्रयाणां प्रत्येकं तुल्यभागता। सर्वत सर्वेभ्य वज्रादित्रिमलान्तानां रत्नाना मिलितचूर्णेभ्य। त्रिगुणाम् इति कज्जलीविशेषणम्, तुल्या रसगन्धक-कज्जलीं तुल्यरसगन्धकयोः कज्जलीमित्यर्थः। धन्य नैरुज्यसम्पादनद्वारा धनार्जन-हेतुत्वेन धन्यत्वम्। स्मरमन्दिरामयहर योनिरोगहन्ता ॥ १५—२२ ॥

चक्रिकाबन्धे—विषाणाकारमूषायां शृङ्गाकृतिमूषायां, मुषलाख्यमूषायामित्यर्थः। द्विपलस्येति।—पलद्वयमितं ताम्रं चक्रीकृत्य कज्जल्या उपरि दत्त्वा सन्धिं लिपयेत्। करिपुटार्द्धेन अर्द्धगजपुटेन, गजपुटार्थं खनितस्य गर्त्तस्य अर्द्धभागमात्रं करीषेणा-

रसोऽयं चक्रिकाबन्धस्तत्तद्रोगहरौषधैः ।
दातव्यः शूलरोगेषु शूले गुल्मे भगन्दरे ॥२७॥
ग्रहण्यामग्निमान्द्ये च विद्रधौ जठरामये ।
नागोदरे तथैवोप-विष्टके जलकुम्भके ॥२८॥
स्कन्देनामन्दकृपया त्रिलोकत्राणहेतवे ।
चक्रिकाबन्धनामाऽयं प्रसूतस्तोगदापहः ॥२९॥

अथ वर्द्धमानः ।—

पलार्द्धप्रमिते स्वर्णे ताम्रं दत्त्वाऽष्टमांशया ।
निर्वापयेच्छतं वारं निक्षिप्य शुकपिच्छकम् ॥३०॥
ततश्च मारणायन्ते सूत्रस्थानसमीरिते ।
मारणातैलसंयुक्तं जीर्णषड्गुणगन्धकम् ॥३१॥

पूर्व्वोऽर्थः । स्थगयेत् रुन्धेत् । नागोदरे दुष्टगर्भविशेषे ; तल्लक्षणमुक्तं सुश्रुतेन यथा,—"शुक्रशोणितं वायुनाऽभिप्रपन्नम् अवक्रान्तजीवमाध्मापयत्युदरम् ; तत् कदाचित् यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते । तदेव कदाचित् प्रलीयमानं नागोदरमित्याहुः" इति । चरकेणाप्युक्तं यथा—"उपवासव्रतकर्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वातप्रकोपणोक्तान्यासेवमानाया गर्भो न वृद्धिं प्राप्नोति परिशुष्कत्वात् ; स चापि कालमवतिष्ठतेऽतिमात्रम्, अतिमात्रमस्पन्दनश्च भवति, तं नागोदर इत्याचक्षते" इति । उपविष्टक-जलकुम्भकावपि दुष्टगर्भविशेषौ, तत्र उपविष्टकलक्षणं यथा चरके—"यस्याः पुनरुष्णतीक्ष्णोपयोगात् गर्भिण्याः महति गर्भे जातसारे पुष्पदर्शनं स्यादन्यो वा योनिस्रावः, तस्या गर्भो न वृद्धिं प्राप्नोति निःस्रुतत्वात्, स कालमवतिष्ठतेऽतिमात्रम् ; तमुपविष्टक इत्याचक्षते केचित्" इति । जलकुम्भकलक्षणन्तु मृग्यम् ॥ २३—२९ ॥

वर्द्धमाने—निर्वापयेदित्यत्र अग्नौ प्रताप्य तैलतक्रादिषु इति द्रष्टव्यम् । शुकपिच्छकं गन्धकम् । "शुकपिच्छकम्" इत्यत्र "कपिकच्छुजे" इति क्वचित् पाठः । सूत्रस्थानसमीरिते सूत्रस्थानप्रोक्ते, प्रथमाध्यायात् एकादशाध्यायपर्य्यन्तेषु सूत्रस्थानेषु "नूते सतैलयन्त्रके" इत्यादिना नवमाध्यायोक्ते ; यद्यप्यत्र चरकादिवत् सूत्रस्थानादिस्थानविभागो नास्ति, तथाऽपि "सूचनात् सूत्र-

रसं हि द्विपलं क्षिप्त्वा सारणाविधियोगतः ।
सारयित्वा ततः पश्चात् पिष्टं सूतं प्रयत्नतः ॥२२॥
सूत्रप्रोतोष्ट्रिकायन्त्रे खेदावेष्टनवाससाम् ।
मातुलुङ्गरसैः पिष्टं चतुर्निष्कमितं दरुम् ॥२३॥
ऊर्द्ध्वं विनिधायाथ जारयित्वा चतुर्गुणम् ।
तमादाय रसं सम्यक् विचूर्ण्य परिगाल्य च ॥२४॥
षष्ठांशेन मृतं वज्रं समं वैक्रान्तकं मृतम् ।
निक्षिप्य लिङ्गिकापत्र-रसैरापूर्य्य वासरम् ॥२५॥

---

चैव सूतस्थानमितीरितम्" इति सूतस्थानलक्षणोक्तेः प्रथमतः एकादशाध्याय-पर्य्यन्तेषु ग्रन्थेषु एतद्ग्रन्थोक्तविषयाणां संज्ञादिनियमनात् तत्पर्य्यन्तानां सूतस्थान-मध्यगत्वमिति। सारणातैलसंयुक्तं सारणायन्त्रस्थतैलसंयुतम्। सारणार्थं यन्त्रं तैलञ्च रसेन्द्रचिन्तामणावुक्तं, यथा—"चक्रमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा। केन च्छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥" इति यन्त्रम्। "मञ्जिष्ठा किंशुकश्चैव खदिरं रक्तचन्दनम्। करवीरं देवदारु सरलो रजनीद्वयम् ॥ अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु। तैलं विपाचयेत्तेन कुर्य्यात् बीजादिरञ्जनम् ॥ द्विगुणे रक्त-पुष्पाणां रक्तपीतगणस्य च। क्वाथे चतुर्गुणं क्षीरं तैलमेकं सुरेश्वरि ! ॥ ज्योतिष्मती-करञ्जाख्य-कटुतुम्बीसमुद्भवम्। पाटलाकाकतुण्डाम्बु-महाराष्ट्रीरसैः पृथक् ॥ भेक-शूकरमेषाहि-मत्स्यकूर्मजलौकसाम्। वसया चैकया युक्तं षोडशांशैः सुपेषितैः ॥ भूलतामलमाक्षीक-इन्द्रमेलापकौषधैः। पाचितं गालितञ्चैव सारणातैलम् शुध्यति ॥" इति सारणातैलम्। सारणाविधियोगतः सारयित्वा, सारणाप्रकारोऽपि तत्रैवोक्तः, यथा—"चक्रामेव मूषायां तत्तैलमपगतकल्कविमलमापूर्य्य मन्दाग्निकमथनात् द्रुत-बीजप्रक्षेपसमकालमेव समावर्जनीयः सूतवरः, तदनु सद्यो मूषाननमाच्छादनीयम्। एतत्तैलाक्तगुणपुर्यन्थिबन्धेन चक्रासितबीजाभ्याम् चक्रनासारकर्मणा (?) निखिल-श्चेत् सारितः सम्यक् संयमितः विज्ञातव्यः। प्रतिसारितस्तु द्विगुणबीजेन, ततदनु-सारितस्तु त्रिगुणेन, अत्र त्रिविधायामेव सारणायाम् चक्रासितकर्मणोः कामचार्थ-मौषधीवत् पन्नगवक्त्रौ विज्ञापयेयाविति" इति। खेदेति।—खेदाय चावेष्टनवाससाम् चावरणवस्त्राणाम्, ऊर्द्ध्वमित्यनेन सम्बन्धः। "खेदावेष्टनवाससाम्" इत्यत्र "बेधावेष्ट्य च वाससा" इति क्वचित् पाठः। दरुं मन्दकम्। चतुर्गुणमिति रसापेक्षया। तं गन्धक-

पुटैर्द्वादशवाराणि मध्वा द्वादशकोपलैः ।
बन्धुजीवरसेनाथ लक्ष्मणास्वरसेन च ॥३६॥
पुनः सञ्चूर्ण्य सम्पूज्य योगिनीपिष्टदेवताः ।
पुत्रिण्याः पूर्णिमायाश्च पूजितायाः विधानतः ॥३७॥
इति कृत्वाऽऽप्नुयाद्गर्भं षण्मासाभ्यन्तरात् खलु ।
आदिबन्ध्यादिका बन्ध्या याश्चान्या दुष्टयोनयः ॥३८॥
प्राप्नुयुर्जीवपुत्रं हि भाग्यसौभाग्यसंयुतम् ।
पुंसामपि च बन्ध्यत्वं ह्यल्परेतस्त्वमेव च ॥
बीजदोषा विचित्राश्च विनश्यन्ति न संशयः ॥३९॥

मित्यर्थः । षष्ठांशेन इति रसापेक्षया । समं वैक्रान्तं रससमं वैक्रान्तभस्म । लिङ्गिका-पत्ररसैः शिवलिङ्गीपत्ररसैः । अत्र "मध्वा" इति पाठः समीचीनतया न भाति, व्याकरणदुष्टत्वात् मधुनः उपाविरोधित्वाच्च ; "मध्व्रद्वादशकोपलैः" इत्येव युक्तः पाठः ; मध्वप्रमाणद्वादशकरीषैरित्यर्थः । मध्वा इत्येव पाठे तु—मधु मधूकं तेन मधूकपुष्परसेन सह मर्दयित्वा इत्यर्थः ; नामैकदेशग्रहणेन नामसाकल्यग्रहणनियमात् । पुत्रिण्या इति ।—यथाविधानेन पुत्रवतीं नारीं पूर्णिमां तिथिञ्च पूजयेदित्यर्थः, एतत्तु तासां प्रसादनार्थं कार्य्यं, दृश्यते च लोके, अपुत्रिण्या पुत्रकामया पुत्रिण्या अर्चनादिकं क्रियते इति । पुत्रिण्याः पूर्णिमायाश्च इत्यत्र आशिषं गृह्णीयादिति शेषः । "पुत्रिण्याः ···पूजितायाः" इत्यत्र "पुत्रेच्छापूर्णमाध्वी च सेवितञ्च" इति क्वचित् पाठः । रोगहृद्योगयुक्तः रोगहृता तत्तद्रोगनाशिना योगेन औषधेन द्रव्येण वा इत्यर्थः, सह युक्तः प्रयुक्तः । अयमर्थः,—कर्षद्वयमिते द्रवीभूते स्वर्णे कर्षमात्रं द्रवीभूतं ताम्रं निक्षिप्य आलोड्य च तैलतक्रादिषु निक्षिपेत्, एवं शतवारं कुर्य्यात्, ततः ताम्रपरिमितेन गन्धकेन सह मर्दयित्वा सारणायन्त्रे तं संस्थापयेत् । ततः सारणातैलमर्दितं षड्गुणगन्धकजीर्णं द्विपलं पारदं तत्र दत्त्वा सारणाविधानेन सारयेत् । अनन्तरं तं पारदं स्वर्णादि-सहितं पिष्ट्वा इष्टकायन्त्रे स्थापयेत्, वस्त्रेणाच्छादयेच्च इष्टकायन्त्रगर्तमुखम । ततः मातुलुङ्गरसपिष्टं चतुर्निष्कं गन्धकं वस्त्रोपरि दत्त्वा शरावेणाच्छाद्य च शरावपालिकयोः सन्धिं मृदा निरुध्य कपोतपुटे पचेत् । एवं जारितं रसं जारितेन चतुर्गुणेन तेनैव गन्धकेन सह विचूर्ण्य वस्त्रपूतं कारयेत्, ततः षडंशेन वज्रभस्मना समेन च वैक्रान्त-भस्मना मर्दयित्वा शिवलिङ्गीपत्ररसेनाप्लाव्य च दिनमेकं स्थापयेत् । अथ द्वादशवनकरीषेण

ब्रह्मज्योतिर्मुनिवरमतो वर्द्धमानो रसोऽयं
वन्ध्यारोगं हरति सकलं योनिदोषानशेषान्।
सूतीरोगानपि बहुविधान् दुःखसाध्यान् समस्तान्
रोगानन्यानपि खलु तथा रोगहृद्योगयुक्तः ॥४०॥

अथ द्रुतिसारः।—

युक्तं हि व्योमजद्रुत्यां तुल्यांशं स्वर्णयुग्मसम्।
पिष्टीकृतं चिरं पिष्ट्वा मल्लसम्पुटके क्षिपेत् ॥४१॥
निष्कमात्रं बलिं दत्त्वा शतवारं पुटेत्ततः।
सम्यक् निष्पिष्य सङ्गाल्य करण्डान्तर्विनिक्षिपेत् ॥४२॥
इत्युक्तो द्रुतिसारनामकरसो वन्ध्यामयध्वंसनः
पुत्रीयः खलु सूतिकामयहरो वृष्यश्चिरायुष्करः।
सम्यक्सिद्धबलिद्रुतिप्रकलितो गुञ्जामितः सेवितः
कुर्य्यात्तीव्रतरां क्षुधं त्वथ महारोगादिरोगान् जयेत् ॥४३॥

---

मध्यप्रमाणोपलेन पुटं दद्यात्, एवं द्वादशवारं कुर्य्यात्, प्रतिपुटञ्च लिङ्गिनीपत्र-रसेनाप्लाव्य दिनमेकं स्थापयेत्। एवं पुटयित्वा बन्धूकपुष्पस्वरसेन लक्ष्मणास्वरसेन च सम्मर्द्य संशोष्य चूर्णयित्वा च स्थापयेदिति। "रोगहृद्योगयुक्तः" इत्यनन्तरं क्वचित् "समञ्जीवाभ्रमूतेन भक्षेतत् साधयेत् खलु। अन्यथा न यथाप्रोक्तं फलं दत्तं दुरत्ययीत् ॥ पाण्डुर्शोग्रहणीप्रमेहगुल्मातीसारयक्ष्मापहं सद्यो दीपनपाचनो रुचिकरो निःशेषगुल्मापहः। कासश्वासबलासपीनसमरुत्पित्तार्तिमात्यन्तिकं वृष्यं पुष्टिकरं समस्तगदहृद्योगेन संयोजितम् ॥ इति योगः" इत्यधिकः पाठः ॥२०—४०॥

द्रुतिसारे—व्योमजद्रुत्यां द्रुताभ्रे; अभ्रद्रुतिप्रकारास्तु रसेन्द्रचिन्तामणौ यथा—"अगस्त्यपत्रनिर्य्यासैर्मर्दितं सूरणोदरे। गोष्ठभूस्थं घनं मासं जायते जलसन्निभम् ॥" इति। अन्यच्च—"स्वरसेन वज्रवल्ल्याः पिष्टं सौवर्चलान्वितं गगनम्। पक्वञ्च शराव-पुटे बहुवारं भवति रसरूपम् ॥ निजरसबहुपरिभावितसुरदालीचूर्णवापेन। द्रवति पुनः संस्थानं भजते कनकत्वं कालेऽपि ॥" इत्यादयो बहवः। युक्तं निक्षिप्त-मित्यर्थः, तुल्यांशं द्रुताभ्रसमं स्वर्णयुग्मसं स्वर्णसंयुक्तं पारदमित्यर्थः; तुल्यांशम् अभ्रद्रुतितुल्यं स्वर्णयुग् द्विभागस्वर्णे रसमित्यर्थो वा। मल्लसम्पुटके शरावसम्पुटे।

अत: सर्व्वामयध्वंसी रसोऽयं हरिसूचित: ।
जीवत्पुत्त्रप्रद: स्त्रीणां यौवनस्थैर्य्यदायक: ॥४४॥
भूतप्रेतपिशाचानां भयेभ्योऽभयदायक: ।
जड़ानां दोहदार्त्तानां मन्दबुद्धिमतामपि ॥ ४५॥
मण्डूकीरससंयुक्तो दातव्यो वचया सह ।
जन्मवन्ध्या: काकवन्ध्या मृतवत्साश्च या: स्त्रिय: ॥
तासां पुत्त्रोदयार्थाय शम्भुना सूचित: पुरा ॥४६॥

अथ वन्ध्यागर्भसम्प्राप्ति: ।—

अथ सर्पाक्षीप्रयोग: ।—

समूलपत्रां सर्पाक्षीं रविवारे समुद्धरेत् ।
एकवर्णगवां क्षीरै: कन्याहस्तेन पेषयेत् ॥४७॥
ऋतुकाले पिबेद्वन्ध्या पलार्द्धं तद्दिने दिने ।
क्षीरशाल्यन्नमुद्गञ्च अल्पाहारं प्रकल्पयेत् ॥४८॥
उद्वेगं त्यज शोकञ्च दिवा निद्राञ्च वर्जयेत् ।
न कर्म्म कारयेत् किञ्चित् वर्जयेच्छीतमातपम् ॥
एवं सप्तदिनं कुर्य्याद्वन्ध्या भवति गर्भिणी ॥४९॥

---

बलिं गन्धकम् ; अत्र गन्धकस्य निष्कमानतोक्त्या स्वर्णाभ्रयोरपि तथात्वमधिगन्तव्यम् । शतवारं पुटेदित्यत्र प्रतिपुटं गन्धकनिष्कं दातव्यमिति बोद्धव्यम् । पुत्त्रीय: पुत्त्रहित: पुत्त्रप्रद इत्यर्थ: । सम्यगिति ।—सम्यक् यथाविधि सिद्धया निष्पादितया बलिद्रुत्या गन्धकद्रवेण, द्रुतगन्धकेन, प्रक्षालित: मिश्रित: । हरिसूचित: हरिणा प्रचारित: इत्यर्थ: ; "हरिसूचित:" इत्यत्र "नन्दिनोदित:" इति पाठान्तरम् । दोहदार्त्तानां गर्भाभिलाषापूरणजनितपीड़ितानामित्यर्थ: । मण्डूकीरससंयुक्त: मण्डूकी मण्डूकपर्णी ब्राह्मी वा तद्रससहित: ; जन्मवन्ध्यादिभ्य: वचामण्डूकीरसाभ्यां सह दातव्योऽयं रस: इत्यर्थ: । शम्भुना सूचित: पुरा पूर्व्वकाले भगवता शिवेन आविष्कृत इत्यर्थ: ॥ ४१—४६ ॥

सर्पाक्षीप्रयोगे—सर्पाक्षीं सर्पकङ्काली "पानसिउलि" इति ख्याताम् ; रास्नाविशेषं वा । कन्याहस्तेन कुमारीहस्तेन, अनूढ़ाहस्तेनेत्यर्थ: ॥ ४७—४९ ॥

अथ देवदालीप्रयोगः ।—

देवदालीयमूलन्तु ग्राहयेत् पुष्यभास्करे ।
निष्कत्रयं गवां क्षीरैः पूर्ववत्क्रमयोगतः ॥
वन्ध्या प्रलभते गर्भं दिनं पथ्यं यथा पुरा ॥५०॥

अथ शरपुङ्खाप्रयोगः ।—

शीततोयेन सम्पिष्टं शरपुङ्खीयमूलकम् ।
कर्षं पीत्वा लभेद्गर्भं पूर्ववत्क्रमयोगतः ॥५१॥
नो चेदपरमासे तु कारयेत् पूर्ववत् फलम् ।
पतिसङ्गे लभेद्गर्भं नात्र कार्य्या विचारणा ॥५२॥

अथ रुद्राक्षादिप्रयोगः ।—

एकमेव तु रुद्राक्षं सर्पाक्षी कर्षमात्रकम् ।
पूर्ववच्च गवां क्षीरैरृतुकाले प्रदापयेत् ॥५३॥
महागणेशमन्त्रेण रक्षां तस्यास्तु कारयेत् ।
एवं दिनत्रयं कुर्य्याद्वन्ध्या भवति पुत्रिणी ॥५४॥

अथ श्वेतकण्टकारीप्रयोगः ।—

सुश्वेतकण्टकार्य्याश्च मूलं तद्वच्च गर्भकृत् ॥५५॥

---

देवदालीप्रयोगे—देवदालीयमूलं हस्तिघोषकमूलम् । पुष्यभास्करे पुष्यानक्षत्रसंस्थे सूर्य्ये इत्यर्थः, भास्करस्य पुष्यर्क्षस्थितिकालस्तु सौरनभसः तृतीयांशेन-चतुर्थदिनादारभ्य सप्तदशवासरस्य चत्वारिंशद्दण्डान् यावत् । पूर्ववत्क्रमयोगतः ऋतुकाले पूर्वयोगोक्तविधानेनेत्यर्थः । एवमुत्तरत्राप्यवगन्तव्यम् ॥ ५० ॥

शरपुङ्खाप्रयोगे—अपरमासे परमासीय-ऋतुकाले इत्यर्थः ॥ ५१।५२ ॥

रुद्राक्षादिप्रयोगे—एकमेव रुद्राक्षम् एकं रुद्राक्षगुटिकाम् । महागणेशमन्त्रस्तु "ओँ नमो महाविनायकाय अमृतं रक्ष रक्ष, मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा।" इति ॥ ५३।५४ ॥

श्वेतकण्टकारीप्रयोगे—सर्वं स्पष्टम् ॥ ५५ ॥

अथ विष्णुक्रान्ताप्रयोगः ।—

पूर्वपुत्रवती तासां कर्म तद्वच्च कथ्यते ।
पेषयेन्महिषीक्षीरैर्विष्णुक्रान्तां समूलकाम् ॥५६॥
महिषीनवनीतेन ऋतुकाले तु भक्षयेत् ।
एवं दिनं दिनं कुर्य्यात् पथ्यं युक्त्या च पूर्ववत् ॥
गर्भं प्रलभते नारी काकवन्ध्या सुशोभनम् ॥५७॥

अथ अश्वगन्धाप्रयोगः ।—

अश्वगन्धीयमूलन्तु ग्राहयेत् पुष्यभास्करे ।
पेषयेन्महिषीक्षीरैः पलार्द्धं पाययेत् सदा ॥
सप्ताहाल्लभते गर्भं काकवन्ध्या चिरायुषम् ॥५८॥

अथ मृतवत्सालक्षणम् ।—

गर्भः सम्भृतमात्रस्तु पश्चात् मासाच्च वत्सरात् ।
म्रियते द्वित्रिवर्षैर्वा यस्याः सा मृतवत्सका ॥
तत्र योगः प्रकर्त्तव्यो यथा शङ्करभाषितः ॥५९॥

अथ शङ्करोक्तदैवव्यपाश्रयचिकित्सा ।—

मार्गशीर्षेऽथवा ज्यैष्ठे पूर्णायां लेपिते गृहे ।
नूतनं कलसं पूर्णं गन्धतोयेन कारयेत् ॥६०॥
शाखाफलसमायुक्तं सर्वरत्नसमन्वितम् ।
सुवर्णमुद्रिकायुक्तं षट्कोणे मण्डले स्थितम् ॥६१॥

---

विष्णुक्रान्ताप्रयोगे—पूर्वपुत्रवती पूर्वं प्रथमम् एकवारमेवेत्यर्थः, पुत्रवती या काकवन्ध्या इत्यर्थः। कर्म तद्वत् पुत्रवत् कर्म, पुत्रप्रदं कर्मेत्यर्थः। विष्णुक्रान्ताम् अपराजिताम्। दिनं दिनं दिवसत्रयमित्यर्थः ॥ ५६।५७ ॥

अश्वगन्धाप्रयोगे—अश्वगन्धीयमूलम् अश्वगन्धामूलम् ॥ ५८ ॥

मृतवत्सालक्षणे—सर्वं सुगमम् ॥ ५९ ॥

शङ्करोक्तदैवव्यपाश्रयचिकित्सायां—पूर्णायां पञ्चम्यां दशम्यां पौर्णमास्यां वा तिथौ। लेपिते इत्यत्र गोमयेन इति पूरणीयम्। सुवर्णमुद्रिकायुक्तं स्वर्णमुद्रासंयुक्तम्।

तन्मध्ये पूजयेद्देवीमेकान्तानामविश्रुताम्।
गन्धपुष्पाक्षतैर्धूप-दीपैर्नैवेद्यसंयुतैः ॥६२॥
अर्चयेद्भक्तिभावेन मत्स्यैर्मांसैः समत्स्यकैः।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥६३॥
वाराही च तथा चैन्द्री षट्पत्रेषु च मातृकाः।
पूजयेन्मन्त्रलिङ्गेन ओङ्कारैर्नामसंयुतैः ॥६४॥
दधिभक्तेन पिण्डानि सप्तसङ्ख्यानि कारयेत्।
षट्सङ्ख्या षट्सु पत्रेषु आहृत्य कल्पयेत् पृथक् ॥६५॥
उल्लिख्य सप्तकं पिण्डं शुचिस्थाने बहिः क्षिपेत्।
तैर्भुक्तैर्गृहमागच्छेच्चक्राग्रे योगमाचरेत् ॥६६॥
कन्यकायोगिनीरामा भोजयेत् सकुटुम्बकम्।
दक्षिणां दापयेत्तासां देवताग्रे निवेद्य च ॥६७॥
विसर्ज्य देवताञ्चाथ नद्यां तत् कलसोदकम्।
शकुनं वीक्षयेद्धीमान् शुभेन शुभमादिशेत् ॥६८॥
विपरीते पुनः कुर्य्याद्योगं तद्वत् सुसिद्धिदम्।
प्रतिवर्षमिदं कुर्य्यात् दीर्घजीवी सुतो भवेत् ॥६९॥

"ओँ क्रां क्रीं एकान्तदेवतायै नमः।" अनेन मन्त्रेण पूजा जपश्च कार्य्यः।

---

षट्कोणे मण्डले स्थितं षट्कोणं मण्डलं लिखित्वा तदुपरि कलसं स्थापयेदित्यर्थः। एकान्तानामविश्रुताम् एकान्ता इति नाम्ना ख्याताम्। मन्त्रलिङ्गेन तत्तद्देवताया बीजमन्त्रेण इत्यर्थः। ओङ्कारैर्नामसंयुतैः ओँ ब्राह्म्यै नमः इत्यादिरूपैरित्यर्थः। कल्पयेत् पृथक् ब्राह्म्यादिदेवताभ्य उत्सर्गं कुर्य्यादित्यर्थः। उल्लिख्य सप्तकमया एकान्ताया देव्या नामोल्लेखं कारयित्वा निवेद्येत्यर्थः। तैः सप्तभिः पिण्डैः भुक्तैः, कैश्चित् प्राणिभिरिति शेषः, तेषु भुक्तेषु सत्सु इत्यर्थः। चक्राग्रे मण्डलसम्मुखे इत्यर्थः, उपविश्येति शेषः, योगमाचरेत् देव्या ध्यानं कुर्य्यादित्यर्थः। शकुनमिति—धीमान् पुरोहितः शकुनं शुभसूचकनिमित्तं वीक्षयेत्, दृष्टवत्यामिति शेष। शुभेन शुभशकुनदर्शनेन शुभं कल्याणं पुत्रस्य दीर्घजीवनप्राप्तिरूपमित्यर्थः, आदिशेत्

अथ युक्तिव्यपाश्रये वन्ध्याकर्कोटकीप्रयोगः।—

प्राङ्मुखः कृत्तिकाऋक्षे वन्ध्याकर्कोटकीं हरेत्।
तत्कन्दं पेषयेत्तोये कर्षमात्रं पिबेत् सदा॥
ऋतुकाले तु सप्ताहं दीर्घजीवी सुतो भवेत्॥७०॥

अथ प्रथममासे पद्मकादिकल्कः।—

अकस्मात् प्रथमे मासे गर्भे भवति वेदना।
गोक्षीरैः पेषयेत्तुल्यं पद्मकोशीरचन्दनम्॥
पलमात्रं पिबेन्नारी तस्याद्गर्भः स्थिरो भवेत्॥७१॥

अथ द्वितीयमासे नीलोत्पलादिकल्कः।—

नीलोत्पलं मृणालञ्च खण्डो कर्कटशृङ्गिका।
गोक्षीरैर्द्वितीये मासि पीत्वा शाम्यति वेदना॥७२॥

अथ तृतीयमासे श्रीखण्डादिकल्कः।—

श्रीखण्डं तगरं कुष्ठं मृणालं पद्मकेशरम्।
पिबेच्छीतोदकैः पिष्टं तृतीये वेदना न हि॥७३॥

अथ तृतीयमासे नीलोत्पलादिकल्कः।—

नीलोत्पलमृणालानि गोक्षीरैश्च कशेरुकम्॥७४॥

---

आनीयात्। विपरीते दुरदृष्टवशात् अशुभशकुने दृष्टे इत्यर्थः। "क्रां क्रीम्" इत्यत्र "क्रौं क्रीम्" इति पाठान्तरम्॥ ६०—६९॥

युक्तिव्यपाश्रयचिकित्सायां वन्ध्याकर्कोटकीप्रयोगे—वन्ध्याकर्कोटकीं तिक्तकर्कोटकीम्॥ ७०॥

प्रथममासिकपद्मकादिकल्के—पद्मकं पद्मकाष्ठम्। चन्दनं रक्तचन्दनम्। पलमात्रमिति त्रयाणां मिलितानां ज्ञातव्यम्॥ ७१॥

द्वितीयमासिकनीलोत्पलादिकल्के—खण्डी मुद्गपर्णी; "खण्डम्" इति पाठे—इक्षुविकारविशेषः, "खाँड़गुड़" इति भाषा॥ ७२॥

तृतीयमासिकश्रीखण्डादिकल्के—श्रीखण्डं श्वेतचन्दनम्॥ ७३॥

तृतीयमासिकनीलोत्पलादिकल्के—मृणालानीति बहुवचनं पद्मोत्पलकुमुदादीनां मृणालग्रहणार्थम्॥ ७४॥

अथ गर्भिणीज्वरे पाठादिकषायः।—

पाठामुस्तावयःस्थाम्बु-सारिवापद्मकैः शृतम्।
शीतं तोयं निहन्त्याशु गर्भिणीज्वरवेदनाम् ॥७५॥

अथ गर्भिणीज्वरे छिन्नादिकषायः।—

छिन्नाश्रीपर्णिकाक्वाथः सिताक्षौद्रयुतो हरेत्।
गर्भिणीनां ज्वरं घोरं लङ्केशमिव राघवः ॥७६॥

अथ गर्भिणीज्वरे पयस्यादिकषायः।—

पयस्यासारिवायष्टी-बलालोध्रमधूद्भवः।
दुग्धेन मिश्रितः क्वाथो हरेद्गर्भवतीज्वरम् ॥७७॥
दुर्जयः सर्वरोगेषु गर्भिणीनां ज्वरः खलु।
तापो जूर्त्तिषु गर्भस्य विक्रियां कुरुतेतराम् ॥७८॥

अथ गर्भिण्यतिसारे ह्रीवेरकत्वगादिकषायः।—

ह्रीवेरकत्वग्घनो देव-दारुदारुविभावरी।
गर्भिण्या अतिसारघ्नः क्वाथ एषां भवेद्ध्रुवम् ॥७९॥

अथ गर्भिण्यतिसारे श्रीपर्ण्यादिबलादिक्वाथौ।—

श्रीपर्णीयष्टिगोप्यब्द-दार्वीक्वाथोऽतिसारनुत्।
बलादुरालभापाठा-शुण्ठीमुस्ताकषायवत् ॥८०॥

---

गर्भिणीज्वरे पाठादिकषाये—वयःस्था ब्राह्मी आमलकं वा। अम्बु वालकम्। सारिवा अनन्तमूलम् ॥ ७५ ॥

गर्भिणीज्वरे छिन्नादिकषाये—छिन्ना गुडूची। श्रीपर्णिका गाम्भारी। सिताक्षौद्रे प्रक्षेप्ये ॥ ७६ ॥

गर्भिणीज्वरे पयस्यादिकषाये—पयस्या क्षीरकाकोली। मधूद्भवः मधुः मधूकसारः तज्जः। दुग्धोऽत्र प्रक्षेपविधया प्रयोज्यः। जूर्त्तिषु ज्वरेषु तापः ज्वरसन्ताप इत्यर्थः। जूर्त्तिषु इत्यत्र बहुवचनं ज्वरस्य अष्टविधत्वापेक्षया अवधातव्यम् ॥ ७७।७८ ॥

गर्भिण्यतीसारे ह्रीवेरकत्वगादिकषाये—ह्रीवेरत्वक् कुटजवल्कलम्। घनः मुस्तकम्। दारुविभावरी दारुहरिद्रा ॥ ७९ ॥

गर्भिण्यतीसारे श्रीपर्ण्यादिक्वाथ-बलादिक्वाथयोः।—गोपी सारिवा। बला…

अथ गर्भिण्याः उदावर्त्तादौ पुनर्नवादिक्वाथः ।—

जातः पुनर्नवादारुभ्यां क्वाथः क्षीरयुतो निशि ।
पीतो हरेदुदावर्त्तं गुल्मार्शःशोफवेदनाम् ॥८१॥

अथ गर्भिण्याः शोथादौ अभयादिक्वाथः निर्गुण्ड्यादिचूर्णञ्च ।—

घृतक्षीरगुडाभयाऽऽर्द्र-क्वाथः सिन्धेन चूर्णिताम् ।
कणां संयोज्य सेवेत शोफपित्तापनुत्तये ॥८२॥

अथ गर्भिणीशोथे पुनर्नवादिलेपः ।—

पुनर्नवावचाकल्क-धान्यैर्लेपोऽतिशोफनुत् ॥८३॥

अथ गर्भिण्या उदावर्त्तादौ वर्षाभूक्वाथः ।—

गुडाज्यसहितं क्वाथं वर्षाभूमूलसाधितम् ।
उदावर्त्ते च शोफे च गर्भिणीं पाययेद्भिषक् ॥८४॥

अथ गर्भिण्याः पित्तार्त्तौ यष्टिकादियवागूः ।—

पित्तार्त्तिं हन्ति यष्टीका-द्राक्षामलकसाधिता ।
पीता दुग्धयवागूश्च गर्भिणीनामसंशयम् ॥८५॥

---

मुस्ताकषायवत् इत्यत्र बलादिकषायो यथा अतिसारघ्नः तथा श्रीपर्ण्यादिक्वाथोऽपि अतिसारनुत्; एवञ्च श्रीपर्ण्यादिना प्रथमो योगः बलादिना च द्वितीयो योगः अवगन्तव्यः ॥ ८० ॥

गर्भिण्या उदावर्त्तादिषु पुनर्नवादिक्वाथे—क्षीरयुतः दुग्धप्रक्षेपयुक्तः ॥८१॥

गर्भिण्याः शोथादौ अभयादिक्वाथ-निर्गुण्ड्यादिचूर्णयोः,—अभया हरीतकी; आर्द्रम् आर्द्रकम्। सिन्धेन निर्गुण्ड्या। घृतक्षीरगुडाभयार्द्रक्वाथः इत्यनन्तरं सेव्य इति शेषः; तथा चूर्णितां कणाञ्च सिन्धेन संयोज्य सेवेत इत्यन्वयः; हरीतक्यार्द्रक-क्वाथे घृतादित्रयं प्रक्षिप्य शोथादिनाशनाय पिबेत् तथा निर्गुण्डीचूर्णं पिप्पलीचूर्णञ्च ऐकध्यं सेवेत इति निष्कर्षः। "घृत…संयोज्य" इत्यत्र "घृतक्षीरगुडान् वार्द्रक्वाथः सिद्धासुचूर्णितः। संयोज्य नित्यम्" इति क्वचित् पाठः ॥ ८२ ॥

गर्भिणीशोथे पुनर्नवादिलेपे—कल्कः पिष्टकः। धान्यः धान्याम्लः। अत्र "पुनर्नवावचाकल्को धान्यैर्लेपः" इति पाठकल्पना साधीयसी; तथात्वे धान्यैः धान्ययूषैरित्यर्थः, काञ्जिकैरिति यावत् ॥ ८३ ॥

गर्भिण्याः उदावर्त्तादिषु वर्षाभूक्वाथे—गुडाज्ययोः प्रक्षेपः ॥ ८४ ॥

गर्भिण्याः पित्तार्त्तिहरयष्टिकादियवाग्वां—दुग्धयवागूः दुग्धमिश्रिता यवागूः

अथ गर्भिण्याः श्वासकासे तिक्तादिकषायः।—

तिक्ताहरीतकीभार्गी-वचाशुण्ठीकषायकम्।
सगुडं पाययेद्वैद्यः श्वासकासापनुत्तये ॥८६॥

अथ गर्भिणीकासे मरिचप्रयोगः।—

मरीचचूर्णं सक्षौद्र-सिताज्यं कासनाशनम् ॥८७॥

अथ गर्भिण्या वान्तौ लाजादिकषायः।—

लाजैलाकोलमज्जाम्बु निपीतं वान्तिनाशनम् ॥८८॥

अथ गर्भिण्याः हिक्कायां बालबिल्वप्रयोगः।—

बालबिल्वोद्भवः क्वाथो हिक्कां हन्यात् समाक्षिकः ॥८९॥

अथ गर्भिण्या अग्निमान्द्ये अजमोदादिचूर्णम्।—

अजमोदाऽश्वगन्धा च द्वे कणे जीरकं तथा।
लीढा मधुगुडोपेता निहन्युर्मन्दवह्निताम् ॥९०॥

अथ गर्भिण्या वातरोगे बालादिक्षीरं क्षीरयवागूश्च।—

बालबिल्वविदारीभिः पृश्निपर्ण्या च साधितम्।
क्षीरं क्षीरयवाग्वाऽपि पिबेद्वातकृतामये ॥९१॥

त्यर्थः. यष्टिकादीनां क्वाथेन कल्केन वा यवागूं साधयित्वा दुग्धेन सह पिबेदिति निष्कर्षः ॥ ८५ ॥

गर्भिण्याः श्वासकासे तिक्तादिकषाये—गुडः प्रक्षेप्यः ॥ ८६ ॥

गर्भिणीकासे मरिचप्रयोगे—मरिचचूर्णस्य माषकद्वयं क्षौद्रादिभिरवलेह्यम ॥८७॥

गर्भिण्या वान्तौ लाजादिकषाये—कोलमज्जा बदरफलास्थिमध्यम्। "कोलमज्जा" इत्यत्र "बकोलमज्जा" इति पाठान्तरम्। अम्बु क्वाथः ॥ ८८ ॥

गर्भिण्या हिक्कायां बालबिल्वप्रयोगे—बालबिल्वं बिल्वशलाटुः ॥ ८९ ॥

गर्भिण्या अग्निमान्द्ये अजमोदादिचूर्णे—द्वे कणे पिप्पली गजपिप्पली च ॥९०॥

गर्भिण्या वातामये बालादिक्षीरे—बालं बालकं, बिल्वं बिल्वपेशी। "विदारीभिः" इत्यत्र "विदारीभ्याम्" इति पाठकल्पना साधीयसी; तथात्वे बालबिल्वं बिल्वशलाटुः। क्षीरयवाग्वाऽपि बालबिल्वादिसाधितक्षीरेण पक्वया यवाग्वा इत्यर्थः; यवाग्वा इत्यत्र विवक्षावशात् तृतीया, यवागूं पिबेदित्यर्थः। "क्षीरयवागूं वा" इति पाठकल्पना साधीयसी ॥ ९१ ॥

अथ गर्भिण्या मूत्ररोगे श्वदंष्ट्रादिक्वाथः ।—

श्वदंष्ट्राबलयोः क्वाथो मूत्ररोगे प्रशस्यते ॥९२॥

अथ गर्भिण्याः मासानुमासिकयोगाः ।—

सुरदारु वयःस्था च शाकबीजञ्च यष्टिका ।
बला कृष्णातिलास्ताम्र-वल्ली चाश्मन्तकस्तथा ॥९३॥
नीलोत्पलं वयस्या च गुडूची सारिवा तथा ।
मधुयष्टी च पद्मञ्च रास्ना सारिवया सह ॥९४॥
काश्मर्यो बृहती चोरी शृङ्गवल्लीत्वचो घृतम् ।
मधुपर्णी बला शिग्रु श्वदंष्ट्रा पृश्निपर्णिका ॥९५॥
सितामधुकशृङ्गाट-द्राक्षाबिसकशेरुकाः ।
सप्तश्लोकार्द्धनिर्दिष्टान् योगान् सप्त पयोऽन्वितान् ॥
पिबेत् क्रमेण मासेषु गर्भस्रावादिवारणान् ॥९६॥

गर्भिण्या मूत्ररोगे श्वदंष्ट्रादिक्वाथे—मूत्ररोगे मूत्रकृच्छ्रादौ ॥ ९२ ॥

मासिकयोगेषु सुरदार्वित्यादिप्रथममासिकयोगे—वयःस्था क्षीरकाकोली ; सुश्रुते "वयःस्था" इत्यत्र "पयस्या" इति पाठः । शाकबीजं शाकः महाजद्रुमविशेषः "शेगुन्" इति भाषा, तस्य बीजम् । यष्टिका मधुयष्टिका । बलेत्यादिद्वितीयमासिकयोगे—"बला" इत्यत्र "शतावरी" इति सुश्रुते पाठः । ताम्रवल्ली मञ्जिष्ठा । अश्मन्तकः अम्ललोटकः । नीलोत्पलमित्यादितृतीयमासिकयोगे—वयस्था क्षीरकाकोली ; "वयस्था" इत्यत्र "पयस्या" इति पाठान्तरम् । "ह्लादनी पयस्या च लता चोत्पलसारिवा" इति सौश्रुतपाठे—लता दूर्वा प्रियङ्गुर्वा । उत्पलसारिवा अनन्तमूलम् । मधुयष्टीत्यादिचतुर्थमासिकयोगे—पद्मं पद्मपुष्पम् ; "पद्मम्" इत्यत्र "पद्मा" तथा "सारिवया सह" इत्यत्र "अनन्तासारिवा" इति सौश्रुतपाठे—पद्मा भार्गी । काश्मर्य इत्यादिपञ्चममासिकयोगे—काश्मर्यः गाम्भारीफलम् । चोरी क्षीरिका पञ्च क्षीरिवृक्षा वा, एकवचनन्तु क्षीरित्वसामान्यात । शृङ्गं पर्णं, जीवकं वा, वल्ली कैवर्त्तमुस्तकं, त्वक् गुडत्वक् । "काश्मर्यो······घृतम्" इत्यत्र "बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम" इति सौश्रुतपाठे तथा "बृहतीद्वयकाश्मर्यक्षीरिशुङ्गास्त्वचो घृतम्" इति वाग्भटपाठे च—क्षीरिशुङ्गास्त्वचः क्षीरिणां क्षीरिवृक्षाणां वटादीनां शुङ्गाः अविकसितपत्रमुकुलानि त्वचश्च वल्कलानि चेत्यर्थः । "घृतम्" इत्यत्र "विसम्"

अथ गर्भिणीवाते उशीरादिक्षीरम्।—

उशीरयष्टीसंसिद्धं गर्भिणीवातहृत् पयः ॥९७॥

अथ गर्भिणीवाते द्राक्षादियवागूः।—

द्राक्षायष्टिकसिद्धा च यवागूश्च तथाफला ॥९८॥

अथ गर्भिण्याः पित्ते बलादिक्वाथः।—

बला वासा पृथक्पर्णी-निर्य्यूहश्चापि पित्तनुत् ॥९९॥

अथ गर्भिण्याः कामलादौ बलादिक्वाथः।—

स पुनश्छिन्नया युक्तो गर्भिणीकामलापहः।
कासं श्वासं तथा रक्त-पित्तञ्चाशु विनाशयेत् ॥१००॥

अथ गर्भिण्याः सर्वरोगे बलाप्रयोगः।—

अशृतः सशृतो वाऽपि सदुग्धो वाऽप्यदुग्धवान्।
एक एव बलाक्वाथो गर्भिणीसर्वरोगनुत् ॥१०१॥

अथ मूढगर्भायाः लक्षणम्।—

विलोमवायुना गर्भो जीवन् यदि न निःसरेत्।
स गर्भसङ्ग इत्युक्तो मूढगर्भो—" ॥१०२॥

---

इति चक्रदत्तीयः पाठः। मधुपर्णीत्यादिषष्ठमासिकयोगे—मधुपर्णी यष्टिमधु; "मधुपर्णी" इत्यत्र "मधुयष्टिका" इति चक्रदत्तीयः पाठः। सितेत्यादिसप्तममासिकयोगे—बिसं मृणालम्। पयोऽन्वितान् दुग्धसंयुक्तान्; कल्कविषया एते उपयोज्याः; केचित्तु क्षीरपाकपरिभाषया इत्याहुः ॥ ९३—९६ ॥

गर्भिणीवाते उशीरादिक्षीरे—यष्टी यष्टिमधु ॥ ९७ ॥

गर्भिणीवाते द्राक्षादियवाग्वां—षडङ्गपरिभाषया शृतेन द्राक्षामधुकक्वाथेन सिद्धा यवागूः। तथाफला पूर्ववत् वातहरा इत्यर्थः ॥ ९८ ॥

गर्भिण्याः पित्ते बलादिक्वाथे—पृथक्पर्णी पृश्निपर्णी ॥ ९९ ॥

गर्भिण्याः कामलादौ बलादिक्वाथे—स पुनः बलादिनिर्य्यूहः पुनः। छिन्नया गुडूच्या; छिन्नाऽत्र प्रक्षेपविषया योज्या; छिन्नासहितानां बलादीनां निर्य्यूहो वा ॥ १०० ॥

गर्भिण्याः सर्वरोगे बलाप्रयोगे—सर्वं स्पष्टम् ॥ १०१ ॥

अथ अन्तर्मृतापत्याया लक्षणम् ।—

"—मृते शिशौ ।

स्तब्धाध्मानं शिशिरजठरं साश्रशोषं समूर्च्छं

गर्भास्पन्दः श्वसनकमहा-पूतिगन्धो भ्रमार्त्तिः ।

रक्तोच्छ्रामोऽसितरुचिवपुः स्तब्धनेत्रे व्यथोग्रा

विण्मूत्रार्त्तिर्भवति हि मृतापत्यगर्भाङ्गनायाः ॥१०३॥

अथ मूढगर्भाया असाध्यलक्षणम् ।—

अकालश्वाससंयुक्ता वक्रभ्रष्टभगान्विता ।

शीताङ्गी पूतितोद्गारा मूढगर्भा न जीवति ॥१०४॥

अथ मूढगर्भचिकित्सा ।—

अथ करञ्जबीजादिप्रलेपः अहिनिर्मोकसुराधूपप्रयोगौ च ।—

बीजं करञ्जमज्ञातं कपित्थतुलसीजटा ।

दुग्धे पिष्ट्वा विलिप्याथ नाभिपत्करलेपतः ॥१०५॥

सुरया वाऽहिनिर्मोकैः सम्यग्योनिप्रधूपनात् ।

सुखं सूते वधूर्मार्ष्टि स्नुक्पयःक्षेपणादपि ॥१०६॥

स्त्रीरोगसामान्यात् मूढगर्भचिकित्सितं विवक्षुः तल्लक्षणमाह, विलोमेति ।—विलोमवायुना प्रतिलोमवायुना । गर्भसङ्गः गर्भानिःसरणं मूढगर्भ इत्युक्तः ॥१०२॥

अन्तर्मृतापत्याया लक्षणमाह, मृते इति ।—शिशौ मृते गर्भान्तर्मृते इत्यर्थः । स्तब्धाध्मानं स्तब्धता देहस्य जडता आध्मानञ्च । शिशिरजठरम् उदरस्य शैत्यम् । गर्भास्पन्दः गर्भस्य निश्चलता । श्वसनकमहापूतिगन्धः श्वसनके निश्वासे महान् पूतिगन्धः दुर्गन्धः । असितरुचिवपुः कृष्णवर्णदेहः । विण्मूत्रार्त्तिः विण्मूत्रसङ्ग इत्यर्थः ॥ १०३ ॥

मूढगर्भाया असाध्यलक्षणमाह, अकालेति ।—अकालश्वाससंयुक्ता श्वासहेतोः अभावेऽपि पुनः पुनः दीर्घनिश्वासनिक्षेपिणी । वक्रेति ।—वक्रः वक्रच्छिद्र इत्यर्थः, भ्रष्टः स्वस्थानाच्चलितश्च भगः योनिः तेन अन्विता युक्ता सङ्कुचितयोनिः चलितयोनिश्च इत्यर्थः । पूतितोद्गारा पूतिता दुर्गन्धिता उद्गारे यस्याः सा ॥१०४॥

सुखप्रसवार्थं करञ्जबीजादिप्रलेपे—कपित्थतुलसीजटा कपित्थतुलस्योर्मूलम् ।

अथ हलिनीप्रयोगः।—

हलिनीमूलिका नाभि-गुह्यवस्तिप्रलेपिता।
विशल्यां कुरुते नारीं श्वेतपुष्पा च सा क्षणात् ॥१०७॥

अथ यष्ट्यादिकल्कः।—

यष्टीलुङ्गजटा पिष्टा पीता सूतिकरी ध्रुवम् ॥१०८॥

अथ लाङ्गल्यादिलेपः।—

लाङ्गलीमधुसिन्धूत्थैर्योनिलेपात् स्रवेद्वधूः ॥१०९॥

अथ मातुलुङ्गीरम्भाप्रयोगौ।—

मातुलुङ्ग्याश्च मूले च रम्भाया वा कटिस्थिते ॥११०॥

अथ सिद्धार्थादिवर्त्तिः।—

सिद्धार्थमागधीकुष्ठ-गोलोमीमिषिकल्कितः।
निरूहः स्नेहपटुयुक् जरायुं पातयेत्तराम् ॥१११॥

---

विलिप्य इत्यत्र नाभिपक्वारमिति शेषः, सुखं सूते इत्युत्तरेणान्वयः। नाभिपक्वारलेपतः इत्यस्य सुरया इत्यनेन सम्बन्धः; सुरया वा करञ्जबीजादिकं पिष्ट्वा नाभिपक्वारलेपात् सुखं सूते इति निष्कर्षः। अहिनिर्मोक-लुङ्गीचीरप्रयोगयोः,—अहिनिर्मोकैः इत्यत्र अहिशब्देन कृष्णसर्पः ग्राह्यः। लुङ्गपयः लुङ्गीचीरम् ॥ १०५।१०६ ॥

सुखप्रसवार्थं हलिनीप्रयोगे—हलिनीमूलिका लाङ्गलीमूलम्। श्वेतपुष्पा च सा श्वेतपुष्पा हलिनीत्यर्थः; श्वेतपुष्पा श्वेतापराजिता वा ॥ १०७ ॥

सुखप्रसवार्थं यष्ट्यादिकल्के—यष्टी यष्टिमधुकः, लुङ्गजटा मातुलुङ्गमूलम्; योगोऽयं मधुघृताभ्यां पातव्यः चक्रपाणिधृततन्त्रान्तरीयवचनदर्शनात्; तथा हि—"मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्। घृतेन सह पातव्यं सुखं नारी प्रसूयते॥" इति ॥ १०८ ॥

सुखप्रसवार्थं लाङ्गल्यादिलेपे—मधुना पेषणं कार्यम्। स्रवेत् गर्भं सुखे-दित्यर्थः ॥ १०९ ॥

सुखप्रसवार्थं मातुलुङ्गीरम्भाप्रयोगयोः,—कटिस्थिते इत्यस्य "वधूः स्रवेत्" इति पूर्वेण सम्बन्धः; कटिस्थिते बद्ध्वा धृते सति इत्यर्थः ॥ ११० ॥

सिद्धार्थादिवर्त्तौ—गोलोमी श्वेतदूर्वा वचा वा। मिषिः मधुरिका, एतैः कल्कितः सिद्धार्थादिकल्कसंयुतः। निरूहः आस्थापनं बस्तिरित्यर्थः। स्नेहपटुयुक्

अथ सिद्धार्थकानुवासनम् ।—

सिद्धं सिद्धार्थकं तैलं पायौ वा स्मरमन्दिरे ।
अनुवासनतः शीघ्रमपरां पातयेद्ध्रुवम् ॥११२॥

अथ सूतिकाचिकित्सा ।—

अथ कौरण्टकादिक्वाथः ।—

कौरण्टकं कुलत्थश्च सर्वैरेभिः शृतं जलम् ।
युक्तं शर्करया पीतं सूतिशूलज्वरापहम् ॥११३॥

अथ पञ्चमूलक्वाथः ।—

लोहखण्डयुतं पञ्च-मूलिकासाधितं जलम् ।
नाशयेत् सूतिकारोगान् सवातान् विविधान् खलु ॥११४॥

---

स्नेहः तैलादि पटु सैन्धवलवणं तद्युक् स्नेहपटुभ्यां युक्त इत्यर्थः । जरायुम् अमरामित्यर्थः । सिद्धार्थादिकं समभागं पिष्ट्वा जलेनालोड्य च तैलादिस्नेहं लवणञ्च अनुरूपमात्रया प्रक्षिप्य निरूहः कार्यः ॥ १११ ॥

सिद्धार्थकानुवासने—सिद्धं सिद्धार्थादिकल्कपक्वमित्यर्थः, सिद्धार्थकं तैलं सार्षपं तैलम् । अनुवासनं स्नेहवस्तिः । सिद्धार्थादिकल्कपादेन चतुर्गुणजलेन च सार्षपतैलं पक्त्वा अनुवासनं कर्त्तव्यम् । अपराम् अमराम् ॥ ११२ ॥

गर्भिणीचिकित्सानन्तरं सूतिकाचिकित्सामाह । तत्र कौरण्टकादिक्वाथे—कौरण्टकं कुरण्टकः पीतपुष्पा झिण्टी तस्य इदं कुरण्टकमूलमित्यर्थः । "सर्वैरेभिः" इत्यस्य बहुत्वे प्रयोगश्चिन्त्यः, द्रव्यबहुत्वाभावात् ॥ ११३ ॥

पञ्चमूलक्वाथे—लोहखण्डयुतं तप्तलोहखण्डसम्पृक्तम् । पञ्चमूलिकासाधितमित्यत्र पञ्चमूलं महदिति ज्ञातव्यं, दीपनत्वादुष्णवीर्य्यत्वाच्च । लोहगुडकमेकं वह्नौ प्रताप्य पञ्चमूलक्वाथे निर्वाप्य च तं क्वाथं पाययेत् । तथा च रसरत्नाकरे—"आपयित्वाऽग्नौ लोहं मुद्गयूषे निषेचयेत् । पञ्चमूलस्य वा क्वाथे पिप्पलीसलिलेऽथवा ॥ पीतं यूषादि तत्क्षीप्रं सर्वसूतीरुजापहम् ॥" इति । योगरत्नाकरेऽप्युक्तं—"पञ्चमूलस्य क्वाथं वा तप्तलोहेन सङ्गतम् । सूतिकारोगनाशाय पिबेद्वा तद्युतां सुराम् ॥" इति ॥ ११४ ॥

अथ भूनिम्बादितैलम्।—

भूनिम्बनिम्बभद्राख्य-गन्धसप्तच्छदत्वचा।
तैलं पचेत्तदभ्यङ्गात् सूतिकासर्वरोगनुत् ॥११५॥

अथ सौभाग्यशुण्ठी।—

अञ्जलिद्वितये तोये कंसमात्रपयोऽन्विते।
तुलार्द्धशर्करां दत्त्वा गुडपाके कृते क्षिपेत् ॥११६॥
एलात्रिङ्गणिकावेल्ल-व्योषजीरकदीप्यकान्।
भृङ्गं लवङ्गं बोलञ्च प्रत्येकञ्च पलं पलम् ॥११७॥
मिषिः पञ्चपला धान्यं पलत्रयमितं तथा।
शुण्ठीमष्टपलां सम्यक् विचूर्ण्य परिमिश्रयेत् ॥११८॥
एषा सौभाग्यशुण्ठीति शम्भुदेवेन कीर्त्तिता।
सेविता हन्ति सूतायाः ज्वरं रोगमनेकधा ॥११९॥

भूनिम्बादितैले—भूनिम्बं किराततिक्तकम्। भद्रं मुस्तकं, भद्रा प्रसारणीत्यर्थो वा। सप्तच्छदत्वचा सप्तपर्णवल्कलेन। भूनिम्बादीनां पादिककल्केन चतुर्गुणेन जलेन च तैलं पक्तव्यम्। क्वचिदेतदनन्तरं—"तैलं लाक्षादिकं नाम सर्वामयविनाशनम्॥ चन्दनं सारिवा लोध्रं मृद्वीकाशर्करान्वितम्। क्वाथं कृत्वा प्रदातव्यं गर्भिण्यां ज्वरशान्तये॥ ह्रीबेरारलुरक्तचन्दनबला धान्यार्कवत्सादनी मुस्तोशीरयवासपर्पटवृषा-क्वाथं पिबेद्गर्भिणी। नानावर्णकृतातिसारकगदे रक्तस्रुतौ वा ज्वरे योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः॥" इत्यधिकपाठो दृश्यते ॥११५॥

सौभाग्यशुण्ठ्याम्—अञ्जलिद्वितये कुडवद्वये, शरावमिते इत्यर्थः। तोये तोयदे घृते इत्यर्थः, "नामैकदेशग्रहणेनापि नामसमुदायग्रहणम्" इति न्यायात् तोयशब्देनात्र तोयदस्य ग्रहणं, तोयदश्च घृतं, तथा च मेदिनी—"तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्" इति। तन्त्रान्तरे घृतपाठदर्शनादत्रापि तोयशब्देन घृतस्यैव ग्रहणमभिप्रेतम्। कंसमात्रपयोऽन्विते दुग्धाढकयुक्ते, द्रवद्वैगुण्यात् षोडशशरावदुग्धसहिते इत्यर्थः। गुडपाके कृते गुडपाकलक्षणे समुदिते इत्यर्थः। त्रिङ्गणिका कैवर्त्तमुस्तकम्। वेल्लं विडङ्गम्। दीप्यकं यमानी कृष्णजीरकं वा; तन्त्रान्तरे "शाजाजी-जीरादपि" इति पाठदर्शनात्; तत्र अजाजीशब्देन कृष्णजीरकस्याभिधानम्। भृङ्गं गुडत्वक्। बोलं गन्धरसः, बोलपत्रमिति वा; तन्त्रान्तरे "दल" इति

प्लीहानं मलबन्धञ्च पाण्डुगुल्मारुचीस्तथा ।
कासश्वासक्रिमीनग्नि-मान्द्यादिकगदांस्तथा ॥
कायाग्निजननं ह्येतत् सूतिकामृतमुच्यते ॥१२०॥

अथ पर्पटीरसः ।—

मञ्जारीमितवज्रहेमजरसैर्व्योमार्ककान्तैर्मृतै-
र्भागैस्तूत्तरवर्द्धितैः समरसैर्गन्धेर्द्विकर्षान्वितैः ।
जातः पर्पटिकारसो घृतकणायुक्तो हरेत् सर्वशः
सूतीनां हि महागदान् गदचयं नानानुपानान्वितः ॥१२१॥

---

पाठदर्शनात्; चोलपत्रं तेजपत्रसदृशसुगन्धिपत्रविशेषः, "बाटियापत्र" इति ख्यातम्। मिषिः मधुरिका। कायाग्निजननं जठराग्निसन्दीपनम्। योगरत्नाकरे तु तोयस्थाने सर्पिः, कंसमात्रपयःस्थाने पयसः प्रस्थद्वयं, टीप्यकमित्यत्र यवानी, चोलमित्यत्र दलं तथा भृङ्गादिद्रव्यत्रयस्थाने नागकेशरः तेजपत्रञ्च दृश्यते, तथा हि—"आज्यस्याञ्जलियुग्ममत्र पयसः प्रस्थद्वयं खण्डतः प्रस्थार्धं पलमत्र चूर्णितमथ प्रक्षिप्यते नागरम्। प्रस्थार्द्धं गुडवद्विपाच्य विधिना सुस्थिरं भाजनात् मिष्याः पञ्चपलं पलं क्रिमिरिपोः साजाजिजीरादपि॥ व्योषाम्भोदत्वगिन्द्रसुमनः-भद्राविडीनां पलं पलं नागरखण्डसंज्ञकमिदं सौभाग्यदं योषिताम्॥" इति। कल्पना चास्य एवं—शुण्ठ्या अष्टपलं चूर्णं घृतशरावे मनाक् भृष्ट्वा सपादषट्शरावमितां शर्करां षोडशशरावदुग्धेनालोड्य तत्र निक्षिप्य गुडपाकविधिना पचेत्, आसन्नपाके च एलादिचूर्णं दत्त्वा अवतारयेदिति। क्वचिदेतदनन्तरं—"नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः। क्षीराढकेन संयुक्तं खण्डस्यार्द्धपलं तथा॥ शताह्वाजीरकव्योष-त्रिसुगन्धि यमानिका। कारवीमिशिचव्याग्नि-मुस्तानाञ्च पलं पलम्॥ लेहीभूतमिदं सर्वं घृतभाण्डे निधापयेत्। तं यथाग्निबलं खादेत् प्रसूता च विशेषतः॥ तत् वर्ण्यं बल्यमायुष्यं वलीपलितनाशनम्। वयसः स्थापनं ह्येतदग्निवृद्धिकरं परम्॥ आमवातप्रशमनं सौभाग्यकरमुत्तमम्। मक्कल्लशूलशमनं सूतिकारोगनाशनम्॥" इत्यधिकः पाठः॥ ११९—१२०॥

पर्पटीरसे—मञ्जारी सार्द्धपादद्वयं, तच्च एकभागापेक्षया बोद्धव्यं, तन्मिताः वज्रहेमजरसाः. वज्रं हीरकं, हेमजः सुवर्णमाक्षिकः, रसः रसाञ्जनं ते तैः, अत्र वज्रादीनां त्रयाणां प्रत्येकं व्योमभागापेक्षया सार्द्धपादद्वयमानं, ततश्च व्योमस्य बोध-

अथ स्वर्णादिप्रयोगः।—

स्वर्णतारघनभानुतीक्ष्णकं तेषु चैकमतिमात्रमारितम्।
सूतिकासकलरोगनाशनं रोगहारि विहितानुपानतः॥१२२॥

## अथ योनिव्यापच्चिकित्सा।—

अथ योनिशूले निर्गुण्डीप्रयोगः।—

निर्गुण्डीपत्रनिर्य्यासो गुडो जीर्णः सुरान्वितः।
सेवितस्त्र्यभक्ताभ्यां योनिशूलविनाशनः॥१२३॥

अथ प्रस्रंसिन्यां कारलीकन्दप्रयोगः।—

निर्गताऽपि विशेद्योनिः कारलीकन्दलेपिता॥१२४॥

अथ शिथिलयोनौ इन्द्रगोपप्रयोगः।—

इन्द्रगोपाग्निलेपेन श्लथयोनिर्दृढा भवेत्॥१२५॥

---

भागत्वे वज्रादीनां प्रत्येकं माषकपञ्चोन्मानं ग्राह्यम्। व्योम अभ्रं, कान्तं कान्तलौहम्। भागैरुत्तरवर्द्धितैः उत्तरोत्तरमेकैकभागवृद्धैः। समरसैरित्यादौ रसगन्धयोर्मिलित्वा कर्षद्वयमानं, प्रत्येकमित्यपरे। घृतकणायुक्तः पिप्पलीचूर्णघृतमिश्रितः। वज्रादिकं सर्वं मर्दयित्वा रसपर्पटीवत् पचेदिति॥ १२१॥

स्वर्णादिप्रयोगे—तारं रजतम्। घनम् अभ्रम्। भानुः ताम्रम्। तीक्ष्णकं तीक्ष्णलौहम्। तेष्विति।—स्वर्णादिष्वेतेषु मध्ये एकं यत्किञ्चिदेकं स्वर्णं वा तारं वा इत्यादिरूपम् अतिमात्रमारितं सुजीर्णमित्यर्थः। रोगेति।—विहितानुपानतः तत्तद्रोगविहितानुपानयोगात् रोगहारि सूतिकारोगव्यतिरिक्तान्यविधरोगनाशनं, भवेदिति शेषः॥ १२२॥

सूतिकानन्तरं स्त्रीरोगविशेषयोनिव्यापच्चिकित्सामाह। तत्र योनिशूलहरनिर्गुण्डीप्रयोगे—निर्गुण्ड्यादीनां त्रयाणां समभागता। "सुरान्वितः" इत्यत्र "सुरायुतः" इति कस्यचित् पाठः॥ १२३॥

प्रस्रंसिन्यां कारलीकन्दप्रयोगे—निर्गताऽपि योनिः कारलीकन्दलेपिता कारवेल्लीमूललेपिता विशेत् अन्तः प्रविशेत; यद्वा—या योनिः विशेत् अन्तः प्रविशेत्, साऽपि कारलीकन्दलेपिता निर्गता वहिर्निःसृता भवेदित्यर्थः, अन्तर्मुखयोनिः वहिर्भवतीति यावत्, "सुवर्चीमूललेपाच्च प्रविष्टान्तर्वहिर्भवेत्" इति सिद्धयोगदर्शनात्॥ १२४॥

शिथिलयोनौ इन्द्रगोपप्रयोगे—इन्द्रगोपाग्निलेपेन इन्द्रगोपाख्यकीटविशेषप्रलेपेन;

अथ विवृतायां माकन्दमूलादिलेपः ।—

माकन्दमूलकर्पूर-मधुभिश्च जरत्स्त्रियः ।
कुरुते संवृतां योनिं कन्यकाया इव ध्रुवम् ॥१२६॥

अथ श्रीपर्णीतैलम् ।—

श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम् ।
तत्तैलं तुलिकेनैव स्तनयोः परिदापयेत् ॥१२७॥
पतितावुच्छ्रितौ स्त्रीणां भवेयातां पयोधरौ ।
गजकुम्भसमाकारावुन्नतौ परिमण्डलौ ॥१२८॥

अथ बालचिकित्सा ।—

अथ बालस्य गर्भक्लेशनिवारणोपायः ।—

गर्भनिर्गतबालस्य कणास्वर्णं प्रदापयेत् ॥१२९॥

---

यद्यपि अग्निशब्देनैव इन्द्रगोपशब्देनैव वा इन्द्रगोपाख्यकीटविशेषो लभ्यते, तथाऽपि एकपर्यायिकस्य पदद्वयस्य युगपदभिधानं "पद्मिनीषण्डम्" इत्यादिप्रयोगवत् ज्ञातव्यम् ; अथवा—इन्द्रगोपाख्यसरीसृपविशेषस्य निषेधार्थम् अग्नेः, चित्रकस्य च निषेधार्थमिन्द्रगोपस्य ग्रहणम् । इन्द्रगोपाग्निः वार्षिककीटविशेषः, "आषाढ़े पोका" इति ख्यातम् ; इन्द्रगोपः तदाख्यकीटविशेषः, अग्निः चित्रकः इत्यर्थो वा ; "इन्द्रगोपाज्यलेपेन" इति पाठान्तरे—आज्यं घृतं, घृतेन इन्द्रगोपं पिष्ट्वा प्रलेपः दातव्यः ॥ १२५ ॥

विवृतायां माकन्दमूलादिलेपे—माकन्दमूलम् आम्रवृक्षस्य मूलम्; "माकन्दमूल" इत्यत्र "मदफल" इति चक्रोक्तपाठे—"मदः कस्तूरी, फलं जातीफलं, किं वा मदफलं मदनफलमेव, एतैर्मधुना पिष्टैर्योनिप्रपूरणम्" इति शिवदासः । संवृतां सङ्कुचिताम् । योनिं विवृतां योनिमित्यर्थः, विवृतां योनिं संवृतां कुरुते इति ॥ १२६ ॥

श्रीपर्णीतैले—श्रीपर्णी गाम्भारी तस्याः रसः त्वग्रसः तैलाच्चतुर्गुणः, कल्कोऽपि त्वच एव स्नेहपादः । तुलिकेन तुलकेनेत्यर्थः, "तुलकेन" इति चक्रधृतपाठः ॥ १२७।१२८ ॥

सूतिकावार्तायाः दुष्टस्तन्यादिपानात् बालानां रोगसम्भवात् सूतिकानन्तरं बालरोगचिकित्सिते वक्तव्ये आदौ बालस्य गर्भक्लेशनिवारणोपायमाह, गर्भेति ।—कणास्वर्णं मारितमारितस्वर्णचूर्णम् ; कणा पिप्पली, स्वर्णञ्चेति वा ॥ १२९ ॥

अथ सद्योजातबालस्य संज्ञाजननोपायः।—

पाषाणद्वितयं युञ्ज्यात् कांस्यभाजनमुच्चकैः।
तेन त्रस्तः ससंज्ञः स्याद्योनिनिर्गमपीड़ितः॥१३०॥

अथ सद्योजातबालस्य ज्वरादिनिवारणोपायः।—

सुखोष्णैः काञ्जिकैर्बालं सम्प्रोक्ष्य द्विस्त्रिवारतः।
देयः शिरसि बालस्य घृतपिण्डो ज्वरापहः॥
शिरोगतविकारघ्नो मुख्यो रक्षाकरस्तथा॥१३१॥

अथ पित्तज्वरे रोहिणीक्षीरम्।—

भक्षणं रोहिणीकल्के सिद्धं पानानुलेपतः।
ज्वरं पित्तोत्तरं हन्ति मुस्ताक्काथ इव ध्रुवम्॥१३२॥

---

निःसरणकाले अपत्यपथपीडनजनितक्लेशेन निःसंज्ञस्य संज्ञाजननमाह, पाषाणेति।—पाषाणद्वितयं प्रस्तरखण्डद्वयं कांस्यभाजनं कांस्यपात्रं वा उच्चकैः उच्चशब्दं कृत्वा युञ्ज्यात् घर्षेत्, आहन्यादित्यर्थः॥१३०॥

"प्राणिनः सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते" इति चरकोक्तेः भूमिष्ठकालिकज्वरादिनाशकमुपचारमाह, सुखोष्णैरिति।—ज्वरापहः भूमिष्ठकालिकज्वरापहः; यद्वा—ज्वरशब्दस्य रोगसामान्यवाचित्वात् ज्वरापहशब्देन गर्भजरोगापहः इत्यर्थो बोद्धव्यः। शिरोगतविकारः योनिसम्पीडनेन शिरसः चिपिटत्वादिरूपः तालुपातादिरूपो वा, तं हन्तीति तथोक्तः। मुख्यः श्रेष्ठः॥१३१॥

पित्तज्वरघ्नरोहिणीक्षीरे—रोहिणीकल्के सिद्धम् इत्यत्र अनन्तरश्लोकात् सिंहावलोकितन्यायेन क्षीरमिति पदं समाकृष्य अन्वेतव्यं, ततश्च रोहिणीकल्के सिद्धं क्षीरं भक्षणं कारयितव्यमित्यर्थः, रोहिणी कटुकी। क्षीरसाधनञ्च "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः॥" इति परिभाषानुसारेण कर्त्तव्यम्; "भक्षणम्" इत्यत्र "भक्षणे" इति कस्यचित् पाठः। पानानुलेपतः पानं रोहिणीकल्के सिद्धस्य पयसः पानं, तेनैव कल्केन अनुलेपश्च ताभ्याम्; यद्वा—रोहिणीकल्के सिद्धं भक्षणं यवाग्वादिरूपमन्नं, तथा पानानुलेपतः रोहिणीकल्के सिद्धस्य क्षीरस्य पयसो वा पानात् तस्यैव कल्कस्यानुलेपाच्च इत्यर्थः। मुस्ताक्काथ इव इति दृष्टान्तेन मुस्ताक्काथोऽपि पित्तज्वरं हन्ति इत्यर्थादेवावगम्यते॥१३२॥

अथ पित्तज्वरे अश्वत्थक्षीरम् ।—

अश्वत्थपल्लवैः साध्यः क्षीरं पक्वं निषेवितम् ।
पित्तजातं ज्वरं तीव्रं बालानां हन्ति निश्चितम् ॥१३३॥

अथ गन्धोत्पलजटादिकल्कः ।—

गन्धोत्पलजटापिष्टा कटुकी नाशयेज्ज्वरम् ॥१३४॥

अथ सहदेव्यादिचूर्णम् ।—

सहदेवीकणाभृङ्ग-क्षौद्रं लीढं हरेच्छिशोः ।
वमिकासज्वरव्याधीन् क्षौद्रेणातिविषा तथा ॥१३५॥

अथ न्यग्रोधादि क्वाथः ।—

न्यग्रोधजम्ब्वाम्रशिरीषकाणां
क्वाथो रसो वा नवपल्लवानाम् ।
पित्तातिसारज्वरवान्तिमूर्च्छा-
तृष्णां निहन्यान्मधुना शिशूनाम् ॥१३६॥

अथ रक्तातीसारहरचूर्णम् ।—

मध्वम्बुशृङ्गीपाठाब्दं रक्तातीसारहृच्छिशोः ॥१३७॥

---

पित्तज्वरघ्नाश्वत्थक्षीरे—अश्वत्थपल्लवैः पक्वमम्भः क्षीरञ्च क्षीरपरिभाषया अम्भः क्षीरञ्चेकध्यं पक्वा इत्यर्थः ; यद्वा—अश्वत्थपल्लवैः पक्वम् अम्भः क्वाथः, क्षीरं च इति योगद्वयम् ॥ १३३ ॥

गन्धोत्पलजटादिकल्के—गन्धोत्पलं कुमुदपुष्पं श्वेतपद्मं वा, तस्य जटा मूलं कन्द इत्यर्थः ; जटा जटामांसी वा ; "जटा" इत्यत्र "जलैः" इति क्वचित् पाठः ; तया ताभ्यां वा पिष्टा कटुकी ॥ १३४ ॥

सहदेव्यादिचूर्णे—सहदेवी बला दण्डोत्पला वा । भृङ्गं गुडत्वक् । अतिविषा-प्रयोगे—क्षौद्रेणातिविषा तथा वम्यादिव्याधीन् हरेदित्यर्थः ॥ १३५ ॥

न्यग्रोधादिक्वाथे—न्यग्रोधादीनां वल्कलस्य क्वाथः । रसो वा नवपल्लवानां न्यग्रोधादीनामेव नवपल्लवानां रसः ॥ १३६ ॥

रक्तातीसारहरचूर्णे—अम्बु बालकम् । शृङ्गी कर्कटशृङ्गी । मधुना लेहः कार्यः । चूर्णयोगोऽयम् ॥ १३७ ॥

अथ सक्षीरचोलप्रयोगः।—

क्षीरं सचोलं कण्ठोरः-शिरःकफहरं शिशोः॥१३८॥

अथ मधुकादिकल्कः।—

मधुकं मरिचं पिष्टं गोजलैः परिषेवितम्।
विनाशयति वेगेन बालानां मूत्रविड्ग्रहम्॥१३९॥

अथ यष्ट्यादिघृतम्।—

यष्टीलोध्रकणागन्ध-बालाशाल्मलिसारिवा।
सुगन्धा माक्षिकश्चेति सिद्धं सर्पिर्निषेवितम्॥
शुष्यद्गात्रस्य बालस्य बृंहणं बलकारि तत्॥१४०॥

अथ शङ्खनाभ्यादिवर्त्तिः।—

शङ्खनाभिकणापथ्या-रसाञ्जनविनिर्मिता।
वर्त्तिर्निहन्ति मधुना बालनेत्राखिलामयान्॥१४१॥

अथ अश्वगन्धा घृतम्।—

क्षीरेऽश्वगन्धया ताम्र-सूतान्तैः सह साधितम्।
घृतं पुष्टिकरं वर्ण्यं बलकृत् सुखकारि च॥१४२॥

सक्षीरचोलप्रयोगे—चोलं गन्धचोलं, तस्य रत्तिक रत्तिद्वयं वा क्षीरेणालोड्य पेयम्॥ १३८॥

मधुकादिकल्के—गोजलैः गोमूत्रैः, बहुवचनन्त्वत्र बहुधा पेषणबोधनार्थम्॥ १३९॥

यष्ट्यादिघृते—गन्धः गन्धाह्वः प्रियङ्गुरित्यर्थः, "गन्धा" इति पाठेऽपि—स एवार्थः, वंशलोचना वा। बाला बालकं सूक्ष्मैला वा; यद्वा—गन्धबाला इत्येकपदं, सुगन्धिबालकमित्यर्थः। "बाला" इत्यत्र "बला" इति पाठान्तरम्। शाल्मलीशब्देन तन्मूलं ग्राह्यम्। सुगन्धा सूक्ष्मा एलबालुका वा, "सुगन्धि" इति पाठेऽपि—एलबालुकं कशेरुका वा। यष्ट्यादीनां कल्कः स्नेहचतुर्थांशः जलं चतुर्गुणं, सर्पिषश्च प्रस्थमेकत्र पक्तव्यम्। बृंहणं पुष्टिकरम्॥ १४०॥

शङ्खनाभ्यादिवर्त्तौ—"पथ्या" इत्यत्र "मनःशिला" इति चक्रधृतपाठः॥१४१॥

अश्वगन्धाघृते—अश्वगन्धया ताम्रसूतान्तैश्च कल्कैः सह क्षीरे साधितं घृतमित्यन्वयः; ताम्रसूतान्तैः ताम्रं रक्तचन्दनं ताम्रभस्म वा, सूतः पारदः, पारदभस्म

अथ तालुकण्टकलक्षणम्।—

श्लेष्मा तत्तालुमांसस्थः करोति कुपितः शिशोः।
तालुकण्टकमेतेन तालुस्थाने च निम्नता ॥१४३॥
तृष्णा तालुविपाकश्च स्तन्यद्वेषश्च विड्ग्रहः।
भ्रमास्यशोषः कण्डूति-ग्रीवामूर्द्धगता वमिः॥
अक्षिरोगादिकश्चापि—" ॥१४४॥

अथ तालुकण्टकचिकित्सा।—

"—तत्र चोत्क्षिप्य तालुकम्।
प्रतिसार्य्य यवक्षार-क्षौद्राभ्यामतियत्नतः ॥१४५॥

इत्यर्थः, अन्तः सुप्ता तैः। क्षीरमत्र चतुर्गुणम्। "ताम्रसूतान्तैः सह" इत्यत्र "सार्द्धं बलाद्यार्थैश्च" इति क्वचित् पाठः॥ १४२ ॥

बालरोगविशेषस्य तालुकण्टकस्य लक्षणमाह, श्लेष्मेति।—तत् हारी नामक इत्यर्थः, क्षीर इति यावत्। "श्लेष्मा तत्" इत्यत्र "श्लेष्मा तु" इति पाठान्तरम्; "तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्" इति वाग्भटे पाठः। एतेन तालुकण्टकेन। तालुस्थाने शिरस्तालुनि; "तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते" इति वाग्भटदर्शनात्। विड्ग्रहः मलसंरोधः; "विड्ग्रहः" इत्यत्र "शकृद्द्रवम्" इति वाग्भटपाठे—शकृद्द्रवं भिन्नपुरीषता। अत्र तु विड्ग्रहः इत्यनेन शकृद्द्रवमित्यस्य विरोधः न आशङ्कनीयः, यतः द्रवमलनिःसरणात् प्राक् विट्सङ्गो भवति; यदुक्तं सुश्रुते अतीसारपूर्वरूपे—"हृन्नाभिपायूदरकुक्षितोद-गात्रावसादानिलसन्निरोधाः। विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि॥" इति। अत्र तु एतदेवाङ्गीकृत्य विड्ग्रह इत्युक्तम्; अथवा गृह्णातीति ग्रहः ग्रहणं, विषः पुरीषस्य ग्रहः अपां धातुभिः ग्रहणं मिश्रणमित्यर्थः, अब्धातुभिः सह मिश्रीभूय प्रवर्त्तनमिति यावत्; किं वा दोषाणां दुर्ज्ञेयगतिमत्वात् विड्ग्रहोऽपि कदाचित् सम्भवतीति समाधानम्। ग्रीवामूर्द्धगता कण्डूतिः ग्रीवायां मूर्ध्नि च कण्डूः। "ग्रीवामूर्द्धगता" इत्यत्र "ग्रीवादुर्वहता" इति क्वचिन्निश्चयोक्तपाठः "ग्रीवादुर्द्धरता" इति वाग्भटोक्तः पाठो वा सुगमः समीचीनश्च॥ १४३।१४४ ॥

तालुकण्टकस्य चिकित्सामाह, तत्रेति।—तत्र तालुकण्टके। उत्क्षिप्य ऊर्द्धीकृत्य।

यद्वा विश्वाकणासिन्धु-गोमयोत्थरसैस्तथा।
पथ्याकुष्ठवचाकल्कं स्तन्येन मधुना सह॥
पीतं निहन्ति वेगेन बालानां तालुकण्टकम्॥१४६॥

अथ गुदकीटस्य निदानलक्षणे।—

प्रस्वेदान्मललेपाद्वा रक्तश्लेष्मभवो गुदे।
गुदकीटो भवेद्रोगस्तीव्रव्रणसमन्वितः॥१४७॥

अथ गुदकीटचिकित्सा।—

सृतशीताम्बुशैलेय-लुकचूर्णं मधूत्कटम्।
तेनापानव्रणं सम्यक् लेपयेद्भिषगुत्तमः॥१४८॥
त्रिफलाबदरीपत्र-क्वाथेन परिषेचयेत्।
रागकण्डूमतो रक्तं जलूकाभिः समन्वितम्॥
पित्तव्रणचिकित्सा च सकलाऽत्र प्रशस्यते॥१४९॥

---

प्रतिसार्य्य उद्धृत्य। विश्वा शुण्ठी। तथा प्रतिसार्य्य इत्यर्थः। पथ्यादिकल्कपानञ्च प्रतिसारणानन्तरं कार्य्यम्। वाग्भटेन तु प्रतिसारणीयं यवक्षारादिकं विश्वादिकञ्च तथा पातव्यञ्च पथ्यादिकं पृथक् पृथक् पठितं, न तु प्रतिसार्य्य पिबेदित्येवम्॥१४५।१४६॥

गुदकीटस्य निदानं लक्षणञ्चाह, प्रस्वेदादिति।—प्रस्वेदात् अतिघर्मात्, मललेपात् शकृन्मूत्रलिप्तत्वात्। "गुदकीटः" इत्यत्र "गुदकिट्टः" इति पाठान्तरम्। सुश्रुते तु व्याधिरयम् "अहिपूतनम्" इति नाम्ना ख्यातम्; यदुक्तं—"शकृन्मूत्रसमायुक्ते धौतेऽपाने शिशोर्भवेत्। स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा॥ कण्डूयनात् ततः क्षिप्रं स्फोटः स्रावश्च जायते। एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम्॥" इति। वाग्भटे पुनरस्य विविधानि नामान्युक्तानि; तद्यथा—"केचित्तं मातृकादोषं वदन्त्यन्येऽपि पूतनम्। पृष्ठारुर्गुदकुट्टञ्च केचिच्च तमनामिकम्॥" इति॥१४७॥

गुदकीटचिकित्सायां—शैलेयः शैलजः, लुकः लुपटकः, तक्कुलीयः इत्यये; "लुक" इत्यत्र "कणा" इति क्वचित् पाठः; तयोः चूर्णं मधूत्कटं मधुप्रगाढं, शैलेयलुकचूर्णं सृतशीताम्बुना पिष्ट्वा प्रभूतमधुना चालोड्य लेपयेत्। "मधूत्कटम्" इत्यत्र "मधूत्थकम्" इति पाठे—सिक्थकमित्यर्थः। अपानव्रणं मलोद्वारस्थव्रणविशिष्टं गुदकीटमित्यर्थः। त्रिफलेत्यादौ—"बदरीपत्र" इत्यत्र

अथ गुदपाकचिकित्सा।—

गुदपाके तु कर्त्तव्या पित्तव्रणहरा क्रिया।
पानप्रलेपयोः शस्तं विशेषेण रसाञ्जनम् ॥१५०॥
अजादुग्धेन सम्मिश्र्य जीरकाञ्जनचूर्णकैः।
जातीपत्ररसोपेतैः पूर्वप्रोक्तरसैरपि ॥१५१॥

अथ मुखपाकचिकित्सा।—

मुखपाके मुखं लिम्पेद्बोधित्वग्घृतसारघैः।
जातीपत्राभयायष्टी-मधुदार्व्या च लेपयेत् ॥१५२॥

अथ नाभिपाकचिकित्सा।—

नाभिपाके प्रलेपव्यं सिक्तं तैलेन भूरिशः।
रजनीयष्टिकालोध्र-प्रियङ्गूणाञ्च कल्कतः ॥
चूर्णैनैषां सतैलेन नाभिपाकं शमं नयेत् ॥१५३॥

---

"खदिर" इति योगरत्नाकरे पाठः। रागकण्डूमतः रागकण्डूयुतात्, व्रणादिति शेषः, जलूकाभिः जलौकाभिः समन्वितं रक्तम् अशुद्धरक्तमित्यर्थः, परिषेचयेदिति पूर्ववाक्यानुसरणम्। वाग्भटे अस्य पाठान्तरादिकं यथा—"घृतशीतञ्च शीताम्बु मुक्तमन्तरपानकम्। सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ॥ त्रिफलाबदरीप्लक्ष-त्वक्क्वाथपरिषेचितम्।...॥ रागकण्डूत्कटे कुर्य्याद्रक्तस्रावं जलौकसा। सर्वञ्च पित्तव्रण-जिच्छस्यते गुदकुट्टके ॥" इति ॥१४८।१४९॥

गुदपाकचिकित्सायां—सम्मिश्र्य इति छेदः; रसाञ्जनम् अजादुग्धेन सम्मिश्र्य पानालेपनयोः विशेषेण शस्तमित्यन्वयः। जीरकेत्यादौ द्वितीययोगे—अञ्जनं रसाञ्जनं, चूर्णकः शक्तुकम्; जातीपत्ररसोपेतैः जीरकाञ्जनचूर्णकैः तथा पूर्वप्रोक्तरसैः त्रिफला-बदरीपत्रक्वाथैः सह जीरकाञ्जनचूर्णकैः प्रलेपयेत्, गुदकीटगुदपाकयोः समस्थानत्वेन तद्योक्तानामपि हितत्वात्; यद्वा—पूर्वप्रोक्तरसैः रसाञ्जनेन केवलेन जातीपत्र-रसोपेतेन, प्रलेपयेदिति शेषः। पानप्रलेपयोरित्यादिना उक्तं योगद्वयं मुखपाकेऽपि प्रयोक्तुमर्हति वृद्धव्यवहारदर्शनादिति बोद्धव्यम् ॥ १५०।१५१ ॥

मुखपाकचिकित्सायां—बोधित्वक् अश्वत्थवल्कलम्; "घृत" इत्यत्र "दल" इति पक्षोक्तपाठे—दलं पत्रम् अश्वत्थस्यैव। सारघं क्षौद्रम्। मुखपाके जातीपत्रे-त्यादिना द्वितीयो लेपः ॥ १५२ ॥

अथ कुण्डलचिकित्सा ।—

अपुष्पाश्वत्थपञ्चाङ्ग-क्वाथेनापि च कल्कतः ।
सिद्धं तैलं प्रलेपेन कुण्डलव्याधिनाशनम् ॥१५४॥

अथ बालपञ्चामृतम् ।—

हिङ्गुशुण्ठीकणापथ्या-मिषीपञ्चामृतं मतम् ।
सर्व्वबालामयान् हन्ति पाचनं दीपनं परम् ॥१५५॥

अथ तिक्ताद्यं घृतम् ।—

तिक्ताग्निव्योषमालूर-पथ्यारुचकहिङ्गुकम् ।
तुल्यदुग्धं घृतं पक्वं गुल्मानाहविलम्बिकाः ॥
कासं श्वासं गुदभ्रंशं विनिघ्नन्ति न संशयः ॥१५६॥

---

नाभिपाकचिकित्सायां—प्रलेप्तव्यमित्यस्य रजन्यादीनां कल्कत इत्यनेनान्वयः, आदौ तैलेन सिक्तं कृत्वा रजन्यादीनां कल्केन प्रलेपयेत् । तथा मतैलेन तैलमिश्रितेन एवा रजन्यादीनां चूर्णेन वा प्रलेप्तव्यमिति । चक्रेण तु रजन्यादीनां कल्कपादेन चतुर्गुणजलेन च तैलं पक्तव्यं तथा रजन्यादीनां चूर्णेन अवचूर्णनञ्च कार्य्यमित्युक्तम् ; तथा च—"नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् । तैलमभ्यञ्जने शस्तमेभि-र्वाऽप्यवचूर्णनम् ॥" इति ॥ १५३ ॥

कुण्डलचिकित्सायाम्—अपुष्पाश्वत्थपञ्चाङ्गक्वाथेन अश्वत्थस्य पुष्पहीनपञ्चाङ्गक्वाथेन, मूलफलपत्रत्वक्क्वाथेन तैलचतुर्गुणेन तथा कल्कतः अपुष्पपञ्चाङ्गकल्कात् तैलपादिकात । कुण्डलव्याधिनाशनं कुण्डलव्याधिः मूत्राघातोक्त. वातकुण्डलिकाख्यरोगः बस्तिकुण्डलाख्यरोगो वा, नाभिकुण्डलगतः शोथपाकादिरूपो व्याधिविशेषो वा ॥ १५४ ॥

बालपञ्चामृते—मिषी मधुरिका । पञ्चामृतं हिङ्ग्वादिमित्यर्थः द्रव्यपञ्चकमेव अमृतवत हितत्वात् पञ्चामृतम् । हिङ्ग्वादीनां चूर्णं मधुना लेहयितव्यं स्तन्येन पाययितव्यं वा ॥ १५५ ॥

तिक्ताद्यघृते—तिक्ता कटुकी । अग्नि. चित्रकः । मालूरं श्रीफलं, बिल्वपेशी-त्यर्थः । रुचकं सौवर्चलम् । रुचको वा बीजपूरकमित्यर्थः । तिक्तादीनां मवानां कल्कः । तुल्यदुग्धमिति घृतसमं दुग्धं, जलञ्चात्र चतुर्गुणं देयम् ॥ १५६ ॥

अथ राजीकुष्ठादिप्रलेपः ।—

राजीकुष्ठनिशागेह-धूमवत्सकतक्रतः ।
लेपो विचर्चिकां सिध्म हन्ति पामाश्च वेगतः ॥१५७॥

अथ ग्रहघ्नी गुटिका ।—

राजीकरञ्जपुन्नाट-शिरीषार्कनिशाद्वयम् ।
प्रियङ्गुत्रिफलादारु-हिङ्गुव्योषकुचन्दनम् ॥१५८॥
मञ्जिष्ठाश्चाऽऽजमूत्रञ्च गुटिका ग्रहनाशिनी ।
पाननस्याञ्जनालेप-स्नानोद्वर्त्तनधूपनात् ॥१५९॥

अथ माहेश्वरो धूपः ।—

श्रीवेष्टदारुबाह्लीक-मुस्ताकटुकरोहिणी ।
सर्षपा निम्बपत्राणि मदनस्य फलं वचा ॥१६०॥
बृहत्यौ सर्पनिर्मोक-कार्पासास्थियवास्तुषाः ।
गोशृङ्गं खररोमाणि बर्हिपिच्छं बिडालविट् ॥१६१॥
छागरोम घृतञ्चेति बस्तमूत्रेण भावितम् ।
एष माहेश्वरो धूपः सर्वग्रहनिवारणः ॥१६२॥

अथ छिन्नादि तैलम् ।—

छिन्नाफणिज्झहंसाङ्घ्रि-भानुपत्रीरसैः सह ।
सस्तन्यं साधितं तैलं लिप्तं सर्वग्रहार्त्तिजित् ॥१६३॥

---

राजीकुष्ठादिप्रलेपे—राजी राजिका सर्षपः इत्यर्थः । वत्सकः इन्द्रयवः; अत्र तक्रेण पेषणम् ॥ १५७ ॥

ग्रहघ्न्यां गुटिकायां—राजी राजिका । करञ्जः "डहरकरञ्ज" इति ख्यातम् । पुन्नाटः चक्रमर्दः अस्य बीजम् । कुचन्दनं रक्तचन्दनम् । उग्रा वचा ॥१५८।१५९॥

माहेश्वरधूपे—श्रीवेष्टः नवनीतखोटी । बाह्लीकं हिङ्गु । सर्षपाः राजिकाः । बस्तमूत्रेण छागमूत्रेण ॥ १६०—१६२ ॥

छिन्नादितैले—छिन्ना गुडूची । फणिज्झकः तुलसी । हंसाङ्घ्रिः हंसपदी, "गोहालिया" इति ख्यातं, भूतहन्तृत्वात् । भानुपत्री अर्कपत्री, ईश्वरमूलाख्यलताविशेषः अथवा; "भानुपत्र" इति पाठे—अर्कपत्रम्; आसां रसैः प्रत्येकं तैलसमैः; स्तन्यं

अथ स्फूर्जकादि तैलम्।—

स्फूर्जकं हपुषापुष्पं हंसपादी कुरण्टकम्।
करञ्जार्कदलस्फूर्ज-श्वेतपत्रञ्च कल्कितम्॥
तेन संसाधितं तैलं तेनाभ्यङ्गं चरेच्छिशोः॥१६४॥

अथ निम्बादिघृतं क्षीरञ्च।—

निम्बाश्वत्थपलाशानां विल्वकिंशुकयोर्दलैः।
सिद्धं सर्पिस्तथा क्षीरं पानाद्बालग्रहान् जयेत्॥१६५॥

अथ शैलेयादिधूपः।—

शैलेयगुग्गुलुरसैः सपुरप्रचण्ड-
द्रव्यापहृत्सरसकुन्दुरुभिः सकुष्ठैः।
सध्यामकैः सुरभिगन्धरसैश्च धूपः
सौभाग्यबुद्धिजयकृद्विजयो विवादे॥१६६॥

---

सक्षीरम्, एतदपि तैलसममेव, क्षीरञ्चात्र गव्यमेव, स्त्रिया इति केचित्। अकल्कमिदं तैलम्॥१६३॥

स्फूर्जकादितैले—स्फूर्जकं तिन्दुकम्। हपुषापुष्पं हपुषा स्वनामख्यात-वणिग्द्रव्यविशेषः तस्याः पुष्पम्। हंसपादी गोधापदी। कुरण्टकं पीतपुष्पा झिण्टी। "स्फूर्जकं" "कुरण्टकम्" इत्यत्र क्लीवत्वं वैचित्रिकम्; "स्फूर्जकः" "कुरण्टकः" इति तु साधु। अर्कदलम् अर्कपत्रम्। स्फूर्जः काकस्फूर्जः, काकतिन्दुक इत्यर्थः। श्वेतपत्रं श्वेततुलसी, "श्वेतपुष्पम्" इति पाठे—श्वेतसिन्दुवारः श्वेतकरवीरको वा; एषां कल्केन स्नेहतुर्य्यांशेन जलेन च चतुर्गुणेन तैलं पक्तव्यम्॥१६४॥

निम्बादिघृतक्षीरयोः,—किंशुकः शाल्मली। दलैः पत्रैः, निम्बपत्रादीनां कल्कः स्नेहचतुर्थांशः, जलं चतुर्गुणं देयम्। तथा क्षीरमिति निम्बपत्रादिभिः सहैव क्षीरपरिभाषया पक्वं क्षीरम्; "सिद्धं···जयेत्" इत्यत्र "सिद्धः पीतस्तनेकांशबालग्रहनिवारणः" इति कुत्रचित् पाठः॥१६५॥

शैलेयादिधूपे—शैलेयं शैलजम्। रसः शिह्लकम्। पुरं दाहागुरुः। प्रचण्डः शुक्लकरवीरः। द्रव्यं लाक्षा। अपहृत् चोरकः, ग्रन्थिपर्णः इत्यर्थः, चोरपुष्पी इत्यर्थः

देवासुरोरगपिशाचपितृग्रहेषु
गन्धर्वयक्षपिशिताशिषु च ग्रहेषु ।
जीर्णज्वरेषु विहितश्च विषातुरेषु
धूपोऽयमाजिविजयार्त्तिषु पार्थिवानाम् ॥१६७॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये वन्ध्या-गर्भिणी सूतिका-बालरोगचिकित्सानाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

# अथ त्रयोविंशोऽध्यायः ।

---

## अथ उन्मादवातादिचिकित्सनम् ।—

अथोन्मादस्य निदानमन्प्राप्ती ।—

आधिव्याधिकृशस्य दुर्बलतनोराहारतो वा भयात्
पूज्यातिक्रमणाद्विषादुपविषाद्दैवाद्यसामर्थ्यतः ।
वैषम्यादपि कर्मणां हृदि मना बुद्धेर्विधायोल्वणं
कालुष्यं हृतसौख्यदुःखमथनमुन्मादमातन्वते ॥१॥

---

वा । सरसं काष्ठागुरु । कुन्दुरु कुन्दुरुखोटि तत्संहितैः । सध्यामकैः गन्धतृण-सहितैः । सुरभिः सर्जरसः । गन्धरसः गन्धबोलः तत्सहितैः । "सपुर···सकुष्ठैः" इत्यत्र "समरुप्रवरपुष्पाः तु सर्जरसकुन्दुरुराखकुष्ठैः" इति पाठान्तरम् । पिशिताशी राक्षसः । आजिः रणः, विजयः अरिभिः पराजयाशङ्का, अर्त्तिः पीडा तासु ॥ १६६।१६७ ॥

इति रसरत्नसमुच्चयबोधिन्यां द्वाविंशोऽध्यायः ॥ २२ ॥

---

बालरोगे ग्रहाणां नामोत्कीर्त्तनात् तथा पूतनादिदुष्टग्रहजनितबालरोगविशेषवत् भूतोन्मादस्यापि ग्रहकर्तृत्वात् बालरोगानन्तरम् उन्मादादिचिकित्सितं वक्तुं त्रयो विंशाध्यायमारभते । ननु एकविंशाध्यायी वातव्याध्यादिचिकित्साप्रसङ्गमुन्मादापस्मार-योर्निदानादिकमुक्तं, पुनरत्रापि तयोर्निदानादिकमुच्यते, तत् कथं न पुनरुक्तमिति

अथोन्मादलक्षणम्।—

सञ्जल्पको धावति हन्ति चैतदुन्मादवातस्य च लक्ष्म बोध्यम् ॥२॥

अथोन्मादचिकित्सा।—

अथ अर्कमूर्तिरसस्य प्रयोगविधिः।—

अत्रार्कमूर्त्त्याख्यरसस्य वल्लं धुस्तूरबीजेन समं प्रपद्यात्।
मरीचचूर्णेन घृतेन वाऽपि पथ्यञ्च गुर्वन्नमिह प्रशस्तम् ॥३॥

चेदुच्यते,—वातव्याधीनामानन्त्यात् दुष्टवातकार्य्यविशेषयोस्तयोरपि वातव्याध्यन्तर्गतत्वप्रदर्शनार्थं तत्र दिङ्मात्रमुल्लेखः कृतः, अत्र तु तयोर्वातव्याधिविशेषत्वेऽपि स्वतन्त्रत्वप्रतिपादनार्थं विशिष्टचिकित्स्यत्वप्रदर्शनार्थञ्च विस्तारेणोल्लेखः न दोषाय इति। तत्रोन्मादस्य सनिदानसम्प्राप्तिमाह, आधीति।—आधिः मनःपीडा व्याधिः ज्वरादिः ताभ्यां क्रमशः क्षीणमानसस्य, तथा दुर्बलतनोः आधिव्याधिचयादिभिरेव बलहीनदेहस्य पुंसः, आहारतः विरुद्धदुष्टाशुचिभोजनदोषात्, भयात् भयजनितमनोऽभिघातात्, पूज्यातिक्रमणात् पूज्यपूजाव्यतिक्रमात्, देवगुरुद्विजानां प्रधर्षणादिति यावत्, विषात् स्थावरविषभक्षणात् आलर्कादिजङ्गमविषाच्च, उपविषात् "लाङ्गली विषमुष्टिश्च करवीरो जयाह्वया। नीलकः कनकोऽर्कश्च वर्गो ह्युपविषात्मकः॥" इत्येतद्रूपात्, "अर्कसेहुण्डधुस्तूरलाङ्गलीकरवीरकाः। गुञ्जाहिफेनावित्येताः सप्तोपविषजातयः॥" इति-स्वरूपाद्वा, दैवात् प्राक्तनकर्मवशात्, अत्र दैवशब्देन तन्त्रान्तरोक्तानां देवयक्षादिग्रहाणामवरोधः, तेषामपि उन्मादकर्तृत्वेन उक्तत्वात्; असामर्थ्यतः स्वशक्तिमतिक्रम्य कर्मकरणात्, कर्मणा वैषम्यात् विषमाङ्गन्यासबलवद्विग्रहादिचेष्टावैषम्यादिति यावत्, कर्मणा पञ्चकर्मणा वैषम्यात् अयथाप्रयोगादिति वा, मलाः दोषाः कुपितवातादयः, हृदि हृदये, धियः, मनः, इति शेषः, बुद्धेः, उल्वणम् अत्यर्थं कालुष्यं मालिन्यं विकृतिमित्यर्थः, विधाय हतसौख्यदुःखमयनं हतं विनष्टं सौख्यदुःखाभ्यां मथनम् आलोडनं चित्तविचालनम्, इत्यर्थः, यत्र येन वा तादृशं, सुखदुःखाभ्यां हर्षविषादबोधविरहितमित्यर्थः, उन्मादम् आतन्वते कुर्वते इत्यर्थः। सुश्रुतेऽप्य निरुक्तिरुक्ता यथा—"मदयन्त्युद्गता दोषा यस्मादुन्मार्गमागताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः॥" इति ॥१॥

वातोन्मादस्य सङ्क्षिप्तलक्षणमाह, सञ्जल्पक इति।—सञ्जल्पकः असम्बद्धवाक्, बहुपार्थभाषी इत्यर्थः। हन्ति ताडयति, आत्मानम् अन्यान् वा इति शेषः। लक्ष्म रूपम् ॥२॥

शुष्कञ्च शाकं परिवर्जयीत रूक्षं कषायं बहु शीतलञ्च ।
निम्बस्य तैलेन विमर्दयेत कलेवरं शाम्यति तेन रोगः ॥४॥

अथ निर्गुण्डिकादितैलम् ।—

निर्गुण्डिकोन्मत्तकतुम्बिनीनां रसैस्तु तैलं परिपाचयीत ।
कलेवरं तेन विलेपयेत मासान्ततः शान्तिमुपैति रोगः ॥५॥

अथ माहेश्वरो धूपः ।—

कार्पासास्थिमयूरपिच्छबृहती-निर्माल्यपिण्डीतक-
त्वङ्मांसीवृषदंशविट्तुषवचा-केशाहिनिर्मोककैः ।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशग्रहघ्नः परम् ॥६॥

अथापस्मारसम्प्राप्तिलक्षणे ।—

क्रुद्धैर्धातुभिराहते च मनसि प्राणी तमः संविशन्
दन्तान् खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः ।

---

अर्कमूर्त्तिरसस्य प्रयोगविधौ—अर्कमूर्त्त्याख्यरसस्य सन्निपातज्वरे निर्दिष्टस्य तन्त्रान्तरीयरसविशेषस्य । तथा च—"लोहाष्टकं मारितमर्कभाग सूतं द्विभाग द्विगुणञ्च गन्धम् । विमर्दयेत् वह्निरसेन तापे दिनत्रयञ्चाथ विष कलांशम् ॥ विचूर्ण्य पित्ते, परिभावितोऽयं रसोऽर्कमूर्त्तिर्भवति त्रिदोषे ॥" इति । स च रसः धुस्तूरबीजेन घृतमरिचचूर्णाभ्यां वा प्रयोज्यः । औषधसेवनकाले निम्बतैलेनाभ्यङ्गश्च कार्य्य ॥ ३।४ ॥

निर्गुण्डिकादितैले—उन्मत्तकः धुस्तूरः । तुम्बिनी कटुकालाबुः, आसां रसैः निर्गुण्ड्यादीनां स्वरसैः प्रत्येकं तैलचतुर्गुणैः । अभ्यङ्गमिदम् ॥ ५ ॥

माहेश्वरधूपे—निर्माल्यं शिवनिर्माल्यम् । पिण्डीतकं मदनफलम् । त्वक् गुडत्वक्; "त्वङ्मांसी" इत्यत्र "त्वग्वांशी" इति पाठान्तरे—वांशी वंशलोचना, केचित्तु "त्वग्वांशी वंशत्वक्" इत्याहुः । वृषदंशविट् बैडालं शकृत् । तुषः धान्यत्वक् । केशः भूतकेशी, "बच" इत्यन्ये । अहिनिर्मोककैः सर्पकञ्चुकैः । नागेन्द्रो हस्ती । द्विजः कपोतः । शृङ्गं गोशृङ्गं, प्राधान्यात् तन्त्रान्तरसंवादित्वाच्च, यदुक्तं चक्रदत्ते—"गोशृङ्गद्विपदन्तः" इति ॥ ६ ॥

पश्यन् रूपमसत् क्षितौ निपतति प्रायः करोति क्रिया
बीभत्साः स्वयमेव शाम्यति गते वेगे त्वपस्मारकृत् ॥७॥

### अथ अपस्मारचिकित्सा ।—

#### अथ अपस्मारनाशनो रसः ।—

रसगन्धशिलातुत्थ-कान्तहेमाभ्रफेनकम् ।
रजनीतेजनीबीजं कर्षमात्रं पृथक् पृथक् ॥८॥
निम्बद्रवार्द्रं तेनान्तर्लिप्तां ताम्रपलोन्मिताम् ।
पात्रीं न्युब्जां सुभाण्डान्ता कृत्वा खर्परिकां धृताम् ॥९॥
भस्मनाऽऽपूर्य भाण्डान्तर्धृत्वाऽधो ह्निमग्नं पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ रसोऽपस्मारनाशनः ॥१०॥

---

चेतोविकारसाधर्म्यात् तुल्यचिकित्सितत्वाच्च उन्मादानन्तरमपस्मारचिकित्सितं विवक्षुरादौ तस्य सम्प्राप्तिं लक्षणञ्चाह, क्रुद्धैरिति।—धातुभिः वातादिभिः, देहधारकत्वात् वातादीनामपि धातुसंज्ञा चरकादिभिः स्वीकृता; यदुक्तं—"धारणाद्धातवः, दूषणाद्दोषाः, मलिनीकरणान्मलाः" इति। तमः प्रविशन् तमः अन्धकारं संविशन् प्रविशन्। दोःपादौ करचरणौ क्षिपन् विक्षिपन्, सवेगं चालयन्नित्यर्थः, मूढधीः भ्रान्तबुद्धिः, असत् अविद्यमानं रूपं पश्यन् क्षितौ निपतति। बीभत्साः क्रियाः उत्तरदन्तघर्षफेनवमनादिरूपाः क्रियाः। गते वेगे अपस्मारारम्भकदोषाणां वेगे प्रशान्ते न तु निवृत्ते इत्यर्थः, स्वयमेव शाम्यति, स्वयं प्रशान्तिश्च कालस्वभावात् दोषस्वभावाच्च। ननु अपस्मारारम्भके दोषे सत्यपि स कथं न नित्यवेगः स्यात्? कथं वा शान्तवेगः स्यात् इत्याशङ्कायां सुश्रुतेनोक्तं—"देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्। शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः॥" इति। अन्यत्राप्युक्तं—"वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यात्त्वाशोपलभ्यते॥" इति च ॥७॥

अपस्मारनाशनरसे—शिला मनःशिला। अब्धिफेनकं समुद्रफेनः। तेजनी ज्योतिष्मती तस्या बीजम्। तेन रसादिकल्केन अन्तर्लिप्तां पात्रीमित्यनेन सम्बध्यते; ताम्रपलोन्मितां ताम्रस्य ताम्रपत्रस्य पलोन्मितां पात्रीं ताम्रपत्रपलेन कृतं स्वल्पभाजनम्। न्युब्जाम् अधोमुखीं खर्परिकां धृतां ताम्रपात्रोपरि खर्परावमधोमुखं स्थापितं कृत्वा इत्यर्थः। भस्मनाऽधः इत्यत्र अपिमिति शेषः, भाण्डाधः अग्निं दत्त्वा इत्यर्थः।

वल्लमस्योदये दद्याद्वचाव्योषविडङ्गयुक् ।
अनु देयमजामूत्रं ततोऽर्द्धप्रहरे गते ॥११॥
सार्षपे षोड़शपले तैले तल्लेपितां पचेत् ।
नस्यं तैलेन तेनास्य दद्यात् सव्योषकेण तु ॥ १२ ॥

अथ धुस्तूरपञ्चाङ्गघृतम् ।—

कृष्णधुस्तूरपञ्चाङ्गं कृष्णगोनवनीतकम् ।
षड्गुणं नवनीतात्तु माषक्काथं चतुर्गुणम् ॥१३॥
क्षिप्त्वा पचेत् घृतं तत्तु पथ्यं शाकोदनादिषु ।
शाकेषु काकमाची स्याद्भोजने कृष्णगोपयः ॥१४॥

अथ चूर्णाञ्जनम् ।—

शतधा मारिचं चूर्णं कुष्माण्डीपुष्पभावितम् ।
कुर्य्यात्तेनैव चूर्णेन रात्रावञ्जनमाचरेत् ॥१५॥

उदये सूर्य्योदयकाले, प्रातरित्यर्थः । वचाव्योषविडङ्गयुक् इति अस्य वल्लमित्यनेनान्वीयते । अर्द्धप्रहरे गते इति तैलेन नस्यं दद्यादित्यनेन सम्बध्यते । तल्लेपितां तेन रसगन्धादिकृतेन कल्केन लेपितां लिप्तामित्यर्थः, ताम्रपत्रीमिति शेषः; "तल्लेपिताम्" इत्यत्र "धुस्तूरकाम्" इति कस्यचित् पाठः । कल्पना चास्य एवं कार्य्या —रसादिकं सर्व्वं यथोक्तमानं गृहीत्वा निम्बुद्रवेण पेषयेत्, ततस्तेन कल्केन पल-परिमितताम्रपत्रकृतस्य क्षुद्रभाजनस्य अभ्यन्तरं लिप्त्वा तत् भाजनं स्थाल्यन्तः स्थापयेत्, ततः क्षुद्रशरावेणैकेन अधोमुखेन तत् पात्रमाच्छाद्य स्थालीं तां भस्मना पूरयेच्च, अथ चुल्लिकायां वह्निं प्रज्वाल्य द्व्यहोरात्रं पचेत्, स्वाङ्गशीतं समुद्धृत्य विचूर्ण्य च रक्तिद्वयं प्रातः वचादिचूर्णेन सह खादेत्, ततः अजामूत्रम् अनुपिबेत् । किञ्च षोड़शपलमितं कटुतैलञ्च रसगन्धादिकृतकल्कलिप्तेन ताम्रपत्रेण यथोक्तमानेन चतुर्गुणजलेन च पक्त्वा विस्राव्य च प्रागेव स्थापयेत्, औषधसेवनादर्द्धप्रहरानन्तरं तत्तैलं किञ्चित् त्रिकटुचूर्णेन सह आलोड्य नस्यार्थं दद्यादिति ॥ ८—१२ ॥

धुस्तूरपञ्चाङ्गघृते—कृष्णधुस्तूरपञ्चाङ्गं कल्करूपम् । कृष्णगोनवनीतकं षड्गुणमिति धुस्तूरपञ्चाङ्गकल्कमपेक्ष्य । तदिति ।—तत् घृतं शाकोदनादिषु अन्नव्यञ्जनादिषु पथ्यं हितम् अन्नव्यञ्जनादिषु अवचारणया तत् घृतं प्रयोज्यमित्यर्थः । शाकोदनादिषु उक्तेषु, तत्र किं शाकमपथ्यादिभ्यः हितमित्याह,—शाकेष्विति ॥ १३।१४ ॥

एवं नित्यं कृते याति तृतीयदिवसे ध्रुवम् ।
अपस्मारस्तथा मासं सेव्यमेतन्महौषधम् ॥१६॥

अथ मसीयोगः ।—

उद्दहमानबगलव्यतिषक्तमग्नौ
पक्षं विदह्य निपुणेन कृता मसी या ।
सा शीतलेन सलिलेन समं निपीता
पुंसामपस्मृतिविनाशकरी प्रसिद्धा ॥१७॥

अथ तिलजदीपाञ्जनम् ।—

कृष्णं श्वानं स्थितमनशनं स्थापयित्वा विरेकं
पश्चाद्दध्नाऽसिततिलयुतं भोजनं भोजयित्वा ।
तद्ग्रीवोत्थासिततिलजदीपाञ्जनं लोचनस्थं
चापस्मारं हरति विधृतं नैम्बसारे शरावे ॥१८॥

---

चूर्णाञ्जने—कूष्माण्डीपुष्पभावितं कर्कोटकपुष्पभावितं कूष्माण्डपुष्पभावितं वा । एतन्महौषधं कूष्माण्डीपुष्पभावितमरिचचूर्णम्, उद्दहेत्यादिना वक्ष्यमाणमौषधं वा ॥१५।१६॥

मसीयोगे—उद्दहमानबगलव्यतिषक्तम् उद्दह्यमानमृतमानवस्य गललग्नम् । निपुणेन दक्षेण भिषजा इत्यर्थः ; यथा सुदग्धा भवति, न कोऽप्यंशः अर्द्धदग्धस्तिष्ठेत्, तथा दग्धव्या इति निपुणशब्दप्रयोगस्याशयः ॥ १७ ॥

तिलजदीपाञ्जने—कृष्णं श्वानं कुक्कुरम्, अनशनं स्थितं स्थापितमित्यर्थः, अन्तर्भूतण्यर्थोऽयं स्थित-शब्दः । पश्चात् अनशनात् परदिने इत्यर्थः, असिततिलयुतं भोजनं दध्ना भोजयित्वा, विरेकं वमनम् ; विरेकशब्दोऽत्र विरिच्यते दोषोऽनेन इति व्युत्पत्त्या वमनार्थे प्रयुक्तः इत्यवधातव्यम् ; स्थापयित्वा कारयित्वा, धातूनामनेकार्थत्वात् ; "स्थापयित्वा" इत्यत्र "कारयित्वा" इति पाठान्तरम् । नैम्बसारे शरावे निम्बकाष्ठकृते शरावाकारे भाजनविशेषे विधृतं गृहीतम् । तदिति ।—तस्य कुक्कुरस्य ग्रीवोत्थात् ; अत्र ग्रीवाशब्देन कण्ठोऽभिप्रेतः, ततश्च वमनवेगेन कण्ठनिःसृतादित्यर्थः, असिततिलात् अन्नेन सह भोजितात् जायते इति असिततिलजं कृष्णतिलतैलं तस्य दीपः तत्तैलेन प्रज्वालितः प्रदीपः तस्य ; यद्वा—तद्ग्रीवोत्थस्य कुक्कुरग्रीवायां स्थितस्य, ग्रीवादेशे प्रज्वालितस्येत्यर्थः, असिततिलजदीपस्य दर्शितप्रकारेण गृहीततिलतैलकृतप्रदीपस्य, अञ्जनं दीपशिखोद्भूतं कज्जलमित्यर्थः ॥ १८ ॥

अथ चण्डभैरवरसः ।—

हेम्ना शुल्वेन सम्पिष्टं दशमांशरसं विषम् ।
स्रोतोजं मर्दितं तोयैः शूलिनीदेवदालिजैः ॥
गन्धकाख्य पचेत्तैले वाटकोन्मादकृन्मता ॥१९॥

अथ नवाङ्गवटिका ।—

त्रिलोहपिष्टस्रोतोज-सृष्टित्रययुतं रसम् ।
भक्षयेत् पूर्ववत् सिद्धमपस्मारप्रशान्तये ॥२०॥

अथ सूतकप्रत्ययः ।—

तथैव पर्पटी सूतं ब्राह्मीरसविमिश्रितम् ।
सूतकप्रत्ययाख्योऽसावुन्मादापस्मृती हरेत् ॥२१॥

चण्डभैरवरसे—"दशमांशरसं विषम्" इत्यत्र "दशमांशविष रसम्" इति पाठान्तरम्। स्रोतोजं रसाञ्जन सौवीराञ्जनं वा। तोयैः स्वरसैः क्वाथैर्वा ; तोयैरिति बहुवचनं सप्तधा भावनाबोधनार्थम्। शूलिनी शूलपर्णी, "शोला" इति वङ्गीयैराख्यातम्। अयमर्थः,—स्वर्णविषस्रोतोजानां प्रत्येकं तुल्यभागः, पारदस्य च स्वर्णापेक्षया दशमांशता, तत् सर्वमेकीकृत्य शूलिनीदेवदालीरसैः सप्त सप्त वारान् भावयित्वा च गन्धकतैलेन सह मृदु पचेदिति ; रसरत्नाकरे—रसस्य हेमपादत्वं विषं हेमतुल्य तथा स्रोतोजमित्यत्र शोभाञ्जनं शूलिनीत्यत्र च त्रिशूलीति पाठभेदो दृश्यते ; तथा च—"हेमपादं मृतं सूतं निष्टखल्ले विमर्दयेत्। शोभाञ्जनं विषं तुल्यं मर्द्यंच त्रिशूलीद्रवैः॥ देवदाल्या द्रवैश्चाऽग्नि तद्गोलं पाचयेद्दिनम। गन्धकोत्थेन तैलेन तत उद्धृत्य चूर्णयेत्॥ मासैकं भक्षयेन्नित्य पिबेत्क्षौद्रघृतं ह्यनु। सर्वभूतग्रहं हन्ति रसोऽयं चण्डभैरवः॥" इति ॥ १९ ॥

नवाङ्गवटिकायां—त्रिलोहं "सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम्" इत्युक्तरूपं स्वर्णादिधातुत्रयं, पिष्टं सीसकं, स्रोतोज नीलाञ्जनं, सृष्टिः त्रुटिः ; "सृष्टि" इत्यत्र "सृष्ट" इति पाठान्तरम् ; त्रयं सोमराजी, रसं रससिन्दूरम ; सर्वेषामेषां तुल्यभागता। पूर्ववत् सिद्धमिति शूलिनीदेवदालीजैस्तोयैर्मर्दयित्वा गन्धकतैलेन पाचितमित्यर्थः ॥२०॥

सूतकप्रत्यये—पर्पटी प्रागुक्तः पर्पटीरसः। सूतं सूतभस्म इत्यर्थः। सूतकप्रत्ययाख्यः सूतकप्रत्यय इतिसंज्ञकः असौ, रस इति शेषः। "सूतकः प्रत्ययाख्यः" इति पाठे—प्रत्ययाख्यः सूतकः रस इत्यर्थः ॥ २१ ॥

अथ पर्पटीरसप्रयोगविधिः।—

पर्पटीरसगुञ्जाऽष्टौ नाकुलीबीजपञ्चकम्।
गोघृतेन तु संयोज्य खादेदुन्मादशान्तये॥
सघृतं माषमण्डञ्च पाययेत् घृतदुग्धकम्॥२२॥

अथ पर्पटीरसस्य अन्यविधप्रयोगविधिः।—

पर्पटीरसगुञ्जाष्टौ ब्राह्मीरससमन्वितम्।
खादयेद्रोगिणं वैद्योऽपस्मारस्य प्रशान्तये॥२३॥

अथ सर्वेश्वरः।—

रसं नारङ्गमूलञ्च दन्ती पाठा पृथक् पृथक्।
पलमेकं फेनफलमर्कमूलं तथैव च॥२४॥
पलं शशविषाणाञ्च त्रिफला च पलत्रयम्।
एतेषां क्वाथसंयुक्तं दिनानि त्रीणि मर्दयेत्॥२५॥
अम्लवेतससंयुक्तमर्कक्षीरसमन्वितम्।
पञ्चपञ्चदिने तद्वदमरीरससंयुतम्॥२६॥

---

उन्मादशान्तये पर्पटीरसस्य प्रयोगविधिमाह, पर्पटीरसेति।—नाकुलीबीजपञ्चकं नाकुली रास्नाभेदः तस्याः पञ्चसङ्ख्यकं बीजम्; "नाकुली" इत्यत्र "वाकुची" इति पाठान्तरम्। एतस्य प्रयोगे सघृतमाषमण्डादिकं पाययितव्यम; मण्डशब्दस्यात्र साराऽर्थकः, तेन माषमण्डं माषसारं निस्तुषमाषविदलमित्यर्थः, चतुर्दशगुणाम्बुसाधितयवागूविशेषं वा; अत्र पक्षे—मण्डयोनित्वात् माषेण सह तण्डुलादयोऽपि दातव्याः॥ २२॥

अपस्मारशान्तये पर्पटीरसस्य अन्यविधप्रयोगविधिमाह, पर्पटीति।—सुगमम॥ २३॥

सर्वेश्वरे—रसं रसभस्म। नारङ्गमूलं नारङ्गः "कमलालेबु" इति ख्यातं तद्वृक्षस्य मूलं, रङ्गनकं वा। फेनफलं फेनः अहिफेनः तस्य फलं खाखसबीजं, "पोस्तदाना" इति लोके; "फेनपलम्" इति पाठे—फेनः समुद्रफेनः तस्य पलम्। शशविषाणं मृगशृङ्गं, शशशब्दोऽत्र मृगवाची, "शशधर" "शशलाञ्छन" इत्यादिदर्शनात्; "मृगविषाणम्" इति पाठान्तरम्। एतेषां नारङ्गमूलादीनाम्;

त्रिःसप्तदिवसं तद्वन्मर्दयेत् मिश्रमौषधम् ।
पिष्टं चित्रकनिष्क्काथे वल्लत्रयनिषेवितम् ॥
उन्मादापस्मृती हन्यादेष सर्वेश्वरो रसः ॥२७॥

अथ नेत्ररोगाणां सङ्ख्या ।—

कृष्णे पञ्च नवैव सन्धिषु दश त्रीण्येव शुक्लेऽखिले
जाताः षोड़श वर्त्मजाः खलु चतुर्विंशो दृशोर्विंशतिः ।
सप्तातङ्कयुताश्चतुर्नवतिरित्यक्ष्णोरशेषामयान्
यो वेत्ति व्यपहर्तुमेष विदुषामग्रे समर्थो भवेत् ॥२८॥

नारङ्गमूलदन्तीपाठाफेनफलार्कमूलत्रिफलानामष्टानां क्काथेन रसादित्रिफलान्तं द्रव्याष्टकं दिवसत्रयं मर्दयेत, ततः अम्लवेतससंयुक्तम् अम्लवेतसक्काथसंयुक्तम् अर्कक्षीरसमन्वितञ्च कृत्वा अम्लवेतसक्काथेन अर्कक्षीरेण च प्रत्येकं दिनत्रय मर्दयेत् । पञ्चपञ्चदिने प्रतिपञ्चमदिवसे, भ्रमरीरससंयुतम भ्रमरी कृष्णपुष्पा निर्गुण्डी नीलदूर्वा वा तद्रससंयुतम् ; अत्रायमाशयः,—नारङ्गादिक्काथेन दिवसत्रयं मर्दयित्वा एकादिन विश्रम्य परदिने भ्रमरीरसेन मर्दयेत. एवम् अम्लवेतसक्काथेन अर्कक्षीरेण च मर्दयित्वा कार्य्यम् । त्रिःसप्तदिवसमिति चित्रकनिष्क्काथे इत्यनेन सम्बध्यते । पिष्टं चूर्णीकृतम् । "चित्रकनिष्क्काथे" इत्यत्र "त्रिकटुकक्काथेः" इति पाठान्तरम् ॥२४—२७॥

अपस्मारे असद्रूपं पश्यन् इत्युक्त, तच्च दृष्टिमण्डलदुष्ट्या जायते, अतः अपस्मारानन्तरं नेत्ररोगचिकित्साधिकारः । तत्रादौ अधिष्ठानभेदेन नेत्ररोगाणां सङ्ख्यां निरूपयति, कृष्णे इति ।—कृष्णे नेत्रकृष्णमण्डले, दृष्टिमण्डलवेष्टने इति यावत्, पञ्च पञ्चसङ्ख्याकातङ्कान्, यो वेत्ति इत्यग्रेणान्वयः । सन्धिषु कनीनिकादिगतेषु षट्सु सन्धिषु नव ; सन्धयस्तु षड्विधुक्तं सुश्रुतेन, तद्यथा—"पक्ष्मवर्त्मगतः सन्धिः वर्त्मशुक्लगतोऽपरः । शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतस्तथा ॥ कनीनिकागतो ज्ञेयः षष्ठश्चापाङ्गगः स्मृतः ॥" इति । अखिले सम्पूर्णे शुक्ले शुक्लभागे, नेत्रयोरेवेति शेषः, दश त्रीण्येव त्रयोदश इत्यर्थः ; अत्र त्रीणि इति नपुंसकप्रयोगश्चिन्त्यः, रोगवाचकानां पुंलिङ्गत्वात, त्रीनेव इति कल्पना साध्वी । वर्त्मजाः अक्षिगोलकावरकं निमेषोन्मेषाश्रयं पटलद्वयं वर्त्म उच्यते, तज्जाताः आमयाः षोडश जाताः । दृशोः दृष्टिमण्डलयोः चतुर्विंशः, विंशतिः सप्तातङ्कयुताः सप्तविंशतिरोगाः, पारिशेष्यात् नेत्रसर्वगता इति बोध्यम् ; तन्त्रान्तरे नेत्रसर्वगतरोगनिदानाभिधानात् तच्चिकित्साभिधानाच्च अत्र कृष्णभागादिगतरोगाणां सङ्ख्यानं

अथ नेत्ररोगचिकित्सा।—

अथ नागादिवर्त्तिः।—

शिलया निहतं नागं रसराजप्रपेषितम्।
द्विगुणं तुल्यमीषच्च कर्पूरं द्रोणपुष्पजैः॥
रसैर्विमर्दयेद्वर्त्तिरेषाऽभिष्यन्दनाशिनी॥२९॥

अथ वाताभिष्यन्दे रसाद्विवर्त्तिः।—

कार्पासरसपिष्टेन्दु-मधुशुल्वरसाञ्जनम्।
वाताभिष्यन्दजे ताम्रे तिलपर्ण्यम्बुमर्दितम्॥३०॥

---

कृत्वा केवलं विंशतिः सप्त इत्युक्त्या पारिशेष्यात् सप्तविंशतिरिति सङ्ख्यानिर्देशः सर्वगत-रोगानेव बोधयतीति ज्ञेयम्। इति चतुर्नवतिः परस्परं मिलिता गणनया चतुर्नवतिः, नेत्ररोगाः इति शेषः। व्यपहर्त्तुं विशेषेण नाशयितुम्, चक्षोरशेषामयानित्यनेन सम्बन्धः; "व्यवहर्त्तुम्" इति पाठे—चिकित्साकर्माचरितुमित्यर्थः। ननु सुश्रुतेन—"तेस्त्रिभिस्त्रिंशदुक्तास्ते कफेनाप्यधिकास्त्रयः। रक्तजाः षोडश प्रोक्ताः सर्वजाः पञ्चविंशतिः॥ बाह्यौ पुनर्द्वौ च तथा रोगाः षट्सप्ततिः स्मृताः। नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः॥ शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः। सर्वाश्रयाः सप्तदश दृष्टिजाः द्वादशैव तु॥ द्वौ च बाह्याश्रयावन्यावनिमित्तनिमित्तजौ। षटसप्ततिर्नेत्ररोगाः सङ्क्षेपेण प्रकीर्त्तिताः॥" इत्यनेन यत् षट्सप्ततिर्नेत्ररोगा उक्ताः, तेनात्र विरोधो नाशङ्कनीयः, यतः सुश्रुताचार्य्येण "सङ्क्षेपेण प्रकीर्त्तिताः" इत्युक्तवता प्रायोभाविनां प्रधानभूतानामेव सङ्ख्यानिर्देशः कृतः, न त्वप्रधानानाम् इति विज्ञापितम्; "चक्षो-रशेषामयान्" इत्युक्तवता वाग्भटाचार्य्येण तु प्रधानाप्रधानभूतानां सर्वेषामेव कार्त्स्न्येन सङ्ख्या निर्देशिता, तेन चतुर्नवतिरिति सङ्ख्याधिक्यं सञ्जातम्; किञ्च दोषदूष्याणां मिलनभेदेन रोगानन्त्यात् तल्लक्षणाच्च विभिन्नकालिकत्वात् सुश्रुतोक्तादन्येऽपि रोगाः सम्भवन्त्येव, यथा वङ्गविनिश्चयकृता स्वसङ्ग्रहे पठितौ तन्त्रान्तरीयौ कृच्छ्र-पक्ष्मशातौ, व्याख्यामधुकोषकृता च पठितौ तन्त्रान्तरीयौ उपपक्ष्म-कज्जोन्मीलाख्यरोगौ सुश्रुतेन न पठितौ; एवञ्चैतदोषसङ्ख्याधिक्यं न विरोधावहमिति॥ २८॥

नागादिवर्त्त्याम्—शिलया मनःशिलया निहतं मारितं नागं सीसकं शुद्धसीसकं मनः-शिलया सह पुटितमित्यर्थः, तथा रसराजप्रपेषितं शुद्धपारदेन तुल्येन सह पिष्टं, द्विगुणं तुल्यमिति नागापेक्षया द्वैगुण्यं तुल्यत्वञ्च। ईषत् कर्पूरं चतुर्थांशकर्पूरसंयुक्तमित्यर्थः॥२९॥

अथ श्लेष्माभिष्यन्दे शुल्वादिवर्त्तिः।—

शुल्वजीमूतलोहस्य सीसस्य समभागिकम्।
द्विगुणस्याञ्जनं जाती-तिलपर्णीमयूरजैः॥
पिष्टं निर्घृष्टदध्न्यर्के श्लेष्माभिष्यन्दनाशनम्॥२१॥

अथ त्रिदोषाभिष्यन्दे रसेन्द्रादिवर्त्तिः।—

रसेन्द्रभुजगौ तुल्यौ ताभ्यां द्विगुणमञ्जनम्।
ईषत्कर्पूरसंयुक्तं दशमांशस्य सर्जकम्॥२२॥
बलानागबलाजाजी-रसैस्ताम्रे दिनत्रयम्।
मर्दितं स्यादभिष्यन्दे सन्निपातात्मके हितम्॥२३॥

अथ पित्ताभिष्यन्दे तीक्ष्णादिवर्त्तिः।—

चूर्णं तीक्ष्णस्य ताम्रस्य रसेन्द्रसमचारितम्।

इन्द्वादिवर्त्त्यां—कार्पासरसः कार्पासमूलरसः। इन्दुः कर्पूरः। मधु क्षौद्रं मधुयष्टिकं वा। शुल्वं ताम्रम्। ताम्रे ताम्रपात्रे। तिलपर्ण्यम्बुमर्दितं रक्तचन्दनक्वाथमर्दितम्; इन्द्वादिकं सर्वं कार्पासरसेन पिष्ट्वा वर्त्तिं विधाय तां वर्त्तिं ताम्रपात्रे तिलपर्णीक्वाथेन घृष्ट्वा तया अञ्जयेदिति। यद्वा—पिष्टं सीसकम्; कार्पासरसादिकं सर्वं तुल्यांशं गृहीत्वा तिलपर्णीक्वाथेन ताम्रपात्रे घृष्ट्वा तेन चक्षुषोरञ्जनं कर्त्तव्यम्॥ २० ॥

शुल्वादिवर्त्त्यां—जीमूतम् अभ्रम्। द्विगुणस्याञ्जनमित्येकभागापेक्षया रसाञ्जनस्य द्वैगुण्यम्। जातीति।—जाती मालती तस्याः पुष्पं, अनुक्तत्वात्; मयूरः अपामार्गः तस्य च मूलं तज्जैः, रसैरिति शेषः। निर्घृष्टदध्नि निर्घृष्टं विशेषेण घृष्टं, मृष्टमित्यर्थः, दधि यत्र तादृशे अर्के ताम्रपात्रे; ताम्रभाजनमेकमादौ दध्ना निर्घृष्य ततः तस्मिन् जात्यादिरसैः शुल्वादिकं पेषयेदिति। "निर्घृष्टदध्न्यर्के" इत्यत्र "निर्घृष्टं दध्न्यर्के" इति क्वचित् पाठः॥ २१ ॥

रसेन्द्रादिवर्त्त्यां—भुजगः सीसकः। ताभ्यां रसेन्द्रभुजगाभ्यां मिलिताभ्याम्। ईषदिति एकभागापेक्षया चतुर्थांशमित्यर्थः। दशमांशमपि एकभागापेक्षया बोध्यम्। "सर्जकम्" इत्यत्र "सक्तुकम्" इति पाठे—सक्तुकं यवसक्तुकम्; यवस्य नेत्रहितत्वात्। नागबला गोरक्षतण्डुला। अजाजी जीरकम्; बलानागबलयोः स्वरसः अजाज्याश्च क्वाथः। "अजाजी" इत्यत्र "जाती" इति कुत्रचित् पाठः। ताम्रे ताम्रपात्रे; "ताम्रे" इत्यत्र "ताम्रम्" इति पाठान्तरम्॥ २२।२३ ॥

रसाञ्जनञ्च द्विगुणं वर्षाभूरसमर्दितम् ॥
शर्करामाक्षिकोपेतं पित्ताभिष्यन्दसूदनम् ॥२४॥

अथ पित्ताभिष्यन्दे नागादिवर्त्तिः।—

नागपारदधात्रीन्दुरत्नाज्यकणसैन्धवम्।
रसाञ्जनं कणाक्षौद्रं ताम्बूलीपत्रवारिणा॥
ताम्रेण मर्दितं कांस्ये पित्ताभिष्यन्दमन्थनुत् ॥२५॥

अथ ताम्रादिवर्त्तिः।—

ताम्राहितारसपीतकरोहिणीन्दु-
शौण्डीरसाञ्जननदीजपुराणकांस्यैः।
वर्त्तिः कृता सकलसम्मितहंसपादी-
मूलैर्निहन्ति नयनामयजालमाशु ॥२६॥

तीक्ष्णादिवर्त्त्यां—तीक्ष्णस्य तीक्ष्णलौहस्य। रसेन्द्रसमभागितं समभागरसभस्म-योजितम् ॥ २४ ॥

द्वितीयनागादिवर्त्त्यां—नागं सीसकं, पारदः पारदभस्म, धात्री चामलकी, इन्दुरत्नं मुक्ताफलं कर्पूरमणिर्वा, इन्दुः कर्पूरः, रत्नं मुक्ताफलम् इति वा, उभयोरेव चक्षुष्य-त्वात्; आज्यं घृतं, कणः पिप्पली। कणा जीरकः; पिप्पल्या एव भागद्वयं वा; यदुक्तं परिभाषायां—"घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते। ज्ञातव्यं तद्विभागार्थं भागतो द्विगुणेन हि॥" इति; स्थलजजलजभेदात् द्विविधा पिप्पली वा। ताम्रेण मर्दितं कांस्ये कांस्यपात्रे ताम्रदण्डेन मर्दितमित्यर्थः। पित्ताभिष्यन्दमन्थनुदित्यत्र मन्थः अधिमन्थः ॥ २५ ॥

ताम्रादिवर्त्त्याम्—अहिः सीसकम्। तारं रौप्यम्। पीतकं स्वर्णं पीतलौहं वा। रोहिणी कटुरोहिणी; पीतकरोहिणीत्येकपदं वा, तदा तु—गाम्भारीत्यर्थः। इन्दुः कर्पूरम्। शौण्डी पिप्पली। नदीजः समुद्रफेनः, रसरत्नाकरदर्शनात्। पुराणकांस्यैः जीर्णकांस्यैः, कांस्यभस्मभिः। सकलेति।—ताम्रादिसर्वतुल्यमण्डूकपर्णीमूलचूर्णैः। रसरत्नाकरे "तारकादिवटिका" इति ख्यातायामस्यां "पीतकरोहिणी शौण्डी" इति पाठद्वयं च, परन्तु "खर्परम्" इत्यधिकः पाठो विद्यते, तथा हंसपादीरसेन मर्दनं विहितम्; तथा च—"तारं ताम्रं दृमं सीसं कर्पूरं खर्परं तथा। रसाञ्जनं कांस्यभस्म हंसपाद्या द्रवैर्दिनम्॥ अर्त्ति कृत्वाऽञ्जनाद्धन्ति सकलं नेत्रजामयम्॥" इति ॥ २६ ॥

अथ पारदादिवर्त्तिः ।—

पारदनागरसाञ्जनसमानहट्टशिम्बिमूलकं सरजम् ।
सप्तदिनं चिञ्चादलरसपिष्टं ताम्रपात्रपर्य्युषितम् ॥३७॥
वर्त्तिरातपशुष्काऽधिमन्थतिमिरार्मपिल्लशुक्लघ्नी ॥३८॥

अथ एकविंशाङ्गवर्त्तिः ।—

पारदनागरसाञ्जनविद्रुमकांस्यमलोघ्रताम्राणि ।
वृत्तत्रिकटुकगैरिकसिन्धूद्भवतुत्थफेनवराः ॥३९॥
मौक्तिकगन्धिन्याभागिरिकर्णीपुत्रजीवकनकशिफाः ॥४०।
चिञ्चा षड्विधसौवर्च्चलवणं पिचुमर्दपत्ररसैः ।
पिष्ट्वा ताम्रे लिप्ता वर्त्तिः स्यादधिमन्थपिल्लघ्नी ॥४१॥

अथ षडङ्गवर्त्तिः ।—

कर्पूराञ्जनसीसपारदकणातीक्ष्णानि पिष्ट्वा सकृत्
नन्द्यावर्त्तरसैर्विशोष्य मधुना पिष्ट्वा पुनर्भाजने ।
शार्ङ्गे स्फाटिक एव वा विनिहितं शुक्लार्मकाचापहं
तैमिर्य्यञ्च निराकरोति सहसा नेत्रेऽञ्जनं सर्वदा ॥४२॥

पारदादिवर्त्त्यां—समानामिति प्रत्येकं तुल्यमित्यर्थः । हट्टं लौहं, शिम्बिः हरितमुद्गः, चक्षुष्यत्वात्; मूलकं स्वनामख्यातः कन्दविशेषः, तच्च बालमेव ग्राह्यम्; "हट्टशिम्बिमूलकम्" इत्यत्र "कतकसिन्धुफेनकम्" इति क्वचित् पाठः । सरजं नवनीतम्; रजः पर्पटकः तत्सहितमित्यर्थो वा । चिञ्चादलरसपिष्टं तिन्तिडीपत्ररसमर्दितं ताम्रपात्रपर्य्युषितं ताम्रभाजने एव सप्तदिनस्थितम् ॥ ३७।३८ ॥

एकविंशाङ्गवर्त्त्यां—वृत्तं सप्तपर्णः । फेनः समुद्रफेनः । वरा त्रिफला । गन्धिनी मुरामांसी । आभा बब्बूलः । गिरिकर्णी श्वेतापराजिता । पुत्रजीवः तापसतरुः । कनकशिफा धुस्तूरमूलम् । षड्विधसौवर्चलवणम् सौवर्च्चं पांशुलवणेन सह लवणं पञ्चलवणम्, सौवर्च्चं पञ्चलवणेन च मिलित्वा षड्विधं लवणमित्यर्थः । पिचुमर्दपत्ररसैः निम्बपत्ररसैः । "लिप्ता" इत्यत्र "पात्रे" इति पाठान्तरम् ॥ ३९—४१ ॥

षडङ्गवर्त्त्यां—सीसं तीक्ष्णलौहं खर्परं वा । नन्द्यावर्त्तरसैः पिण्डीतगररसैः; "नन्द्यावर्त्त" इत्यत्र "नन्दीवर्त्त" इति क्वचित् पाठः । सकृत् एकवारम्, एकदिनमित्यर्थः । शार्ङ्गे शृङ्गनिर्मिते, भाजने इति सम्बन्धः ॥ ४२ ॥

अथ गरुड़ाञ्जनम् ।—

कतकसैन्धवतुत्थरसाञ्जनं त्रिकटुकस्फटिकाब्दवराटकम् ।
त्रिकटुताम्रमयोहिमरोहिणी-जलधिफेनवचानृकरोटिका ॥४३॥
उरगपारदटङ्कणमञ्जनं त्रिफलया मधुकेन च संयुतम् ।
करजवल्करसेन सुपेषितं गरुड़दृष्टिसमां कुरुते दृशम् ॥४४॥

अथ नयनामृताञ्जनम् ।—

रसेन्द्रभुजगौ तुल्यौ ताभ्यां द्विगुणमञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥४५॥

अथ तिमिरहराञ्जनम् ।—

गन्धकाद्द्विगुणः सूतः सौवीरञ्चाष्टमांशतः ।
कपित्थरससम्पिष्टमञ्जनं तिमिरप्रणुत् ॥४६॥

---

गरुड़ाञ्जने—कतकं जलप्रसादनफलं "निर्मली" इति लोके । अब्दः मुस्तकम् । "त्रिकटुताम्रम्" इत्यत्र पुनस्त्रिकटुग्रहणात् त्रिकटोर्भागद्वयम्; "त्रिकटु" इत्यत्र "त्रिफला" इति पाठे—"त्रिफलया मधुकेन च संयुतम्" इत्यत्र द्वितीयत्रिफलया "द्राक्षाकाश्मर्य्यखर्जूरी-फलानि मिलितानि तु । मधुरत्रिफला ज्ञेया मधुरादिफलत्रयम् ॥" इत्यनेनोक्ता मधुरत्रिफला ग्राह्या । हिमः कर्पूरः । नृकरोटिका नरशिरः-कपालम् । उरगः सीसकम् । अञ्जनमिति नेत्राञ्जनं, रसाञ्जनस्य प्रागुपात्तत्वात् । करजवल्करसेन करञ्जत्वग्रसेन । कतकादिमधुकान्तं सर्वं करञ्जत्वग्रसेन पिष्ट्वा वर्त्तिः कार्य्या ॥ ४३।४४ ॥

नयनामृताञ्जने—ईषदिति चतुर्थांशं, योगरत्नाकरसंवादात; तथा च—"रसेन्द्रभुजगौ तुल्यौ तयोर्द्विगुणमञ्जनम् । सूततुर्य्यांशकर्पूरमञ्जनं नयनामृतम् ॥" इति ॥४५॥

तिमिरहराञ्जने—गन्धकाद्द्विगुणः गन्धकमपेक्ष्य द्विगुणः, भागो ग्राह्य इति शेषः, एवञ्च सूतस्य एको भागः गन्धकस्य च भागद्वयम् । गन्धकभागापेक्षया सूतस्य द्वैगुण्यमिति केचित् । सौवीरं सौवीराञ्जनम् अष्टमांशतः इति एकभागापेक्षया बोध्यम् ॥ ४६ ॥

अथ द्वादशाङ्गवर्त्तिः ।—

नेपालतुल्यटङ्कणताक्ष्यं-वरात्रिकटुफेनजलजञ्च ।
जम्बीरनीरपिष्टं काचार्म-स्रावतिमिरशुक्लापिच्चटम् ॥४७॥

अथ पटलहरेन्द्ररसः ।—

रुद्धः कपर्दटङ्कणं लाक्षाजम्बीरयोर्द्रवैः ।
मासं धान्ये क्षिप्तः सूतः पटलादिरोगहरः ॥४८॥

अथ स्वर्णादिवर्त्तिः ।—

स्वर्णं वराटिका सूतः सारः पूतिकपल्लवजः ।
नवनीतेन संयुक्ता वर्त्तिः पुष्पं चिरन्तनम् ॥४९॥

अथ विषाद्यञ्जनम् ।—

विषं धात्रीफलरसैर्दिनैकं परिभावितम् ।
अञ्जनं शङ्खसहितं प्रगाढतिमिरप्रणुत् ॥५०॥

अथ पुष्पहराञ्जनम् ।—

शम्बूकं वा वराटं वा दग्धं सूक्ष्मं विचूर्णयेत् ।
अञ्जनं नवनीतेन हन्ति पुष्पं चिरन्तनम् ॥५१॥

---

द्वादशाङ्गवर्त्त्यां—नेपालं ताम्रम्; "नेपालम्" इत्यत्र "जैपालम्" इति कस्यचित् पाठः। ताक्ष्यं रसाञ्जनम्। वरा त्रिफला। फेनः समुद्रफेनः। जलजं शङ्खः शङ्खनाभिरित्यर्थः ॥ ४७ ॥

पटलहरेन्द्ररसे—कपर्दः वराटकः। सूतशब्देनात्र भस्मसूतः ग्राह्यः। कपर्दटङ्कणं तथा लाक्षाजम्बीरयोर्द्रवैः पिष्टः रुद्धश्च सूतः मासं धान्ये क्षिप्तः इति योजना। कल्पना चेदृशी—लाक्षाक्वाथेन जम्बीररसेन च पिष्टं सूतं वराटिकायां प्रपूर्य टङ्कणेनाजम्बीरपिष्टेन वराटिकामुखमालिप्य धान्यराशौ मासं स्थापयेदिति ॥४८॥

स्वर्णादिवर्त्त्यां—सारः पूतिकपल्लवः पूतिकः नाटाकरञ्जः तत्पल्लवरसः इत्यर्थः। पुष्पमित्यत्र हन्तीति अध्याहरणीयम् ॥ ४९ ॥

विषाद्यञ्जने—विषम् वत्सनाभम्। शङ्खसहितं शङ्खनाभिसहितम्; विषं शङ्खञ्च आमलकीरसैः पिष्ट्वा अञ्जनं प्रयोक्तव्यम् ॥ ५० ॥

पुष्पहराञ्जने—सर्वं स्पष्टम् ॥ ५१ ॥

अथ शिग्रुमूलाद्याश्च्योतनम् ।—

शिग्रुमूलं वचां क्षौद्रैर्घृष्ट्वा नेत्रं प्रपूरयेत् ॥५२॥

अथ नेत्रशूलघ्नाश्च्योतनम् ।—

निष्पिष्याऽऽर्द्रां निशां वाऽथ सद्यः शूले सुखावहम् ॥५३॥

अथ पौनर्नवाञ्जनम् ।—

श्वेतं पुनर्नवामूलं जलेनाञ्ज्याच्च शूलनुत् ॥५४॥

अथ स्रावहराञ्जनम् ।—

श्वेतं पुनर्नवामूलं घृतघृष्टं समञ्जयेत् ।
जलस्रावं निहन्त्याशु—" ॥५५॥

अथ पक्ष्मरोमहराञ्जनम् ।—

"—तन्मूलञ्च निशायुतम् ।
अञ्जयेत्पक्ष्मरोमाणि न भवन्ति कदाचन ॥५६॥

अथ नृकपालाञ्जनम् ।—

निर्घृष्य नृकपालन्तु नारीस्तन्येन चाञ्जयेत् ।
शूलं सतिमिरं हन्ति पुष्पं सर्पाक्षिदुग्धतः ॥५७॥

---

शिग्रुमूलाद्याश्च्योतने—शिग्रुमूलं शिग्रुमूलरसम् ; शिग्रुमूलरसेन क्षौद्रेण च सह वचां ताम्रपात्रे घृष्ट्वा तेन नेत्रपूरणं कार्यम् ॥ ५२ ॥

नेत्रशूलघ्नाश्च्योतने—आर्द्रां निशां सरसहरिद्राम् । शूले नेत्रशूले ॥ ५३ ॥

पौनर्नवाञ्जने—आञ्ज्यात् अञ्जनं कार्यम् ॥ ५४ ॥

स्रावहराञ्जने— सर्वं स्पष्टम् ॥ ५५ ॥

पक्ष्मरोमहराञ्जने—तन्मूलञ्च निशायुतं हरिद्रा पुनर्नवामूलञ्च घृतेन घृष्ट्वा चाञ्जयेत् । पक्ष्मरोमाणि पक्ष्मकोप-पक्ष्मशातादिरोगयुक्तानीत्यर्थः, वर्त्मानीति शेषः ॥ ५६ ॥

नृकपालाञ्जने—नृकपालं नरशिरोऽस्थि । सर्पाक्षिदुग्धतः इत्यत्र पञ्चम्यादिति शेषः ; सर्पाक्षिदुग्धं सर्पाक्षी सर्पसहा "पानशिखली" इति भाषा, तस्या दुग्ध-निर्यासैः, पुष्पं हन्ति इत्यनेन सम्बन्धः ॥ ५७ ॥

अथ शिग्रुबीजतैलाश्च्योतनम् ।—

चिञ्चादलस्वरसपेषितशिग्रुबीजं
कांस्ये निघृष्य परिशोष्य खरातपेन ।
तैलं ततः स्रुतमिदं शशिपादयुक्तं
युञ्ज्याद्दृशोर्मतिमिरे तिलमात्रमच्छि ॥५८॥

अथ पटलहराञ्जनम् ।—

कारवेल्लद्रवैः सार्द्धं सम्यग्भर्ज्या कपर्दिका ।
सूतकं टङ्कणं लाक्षा-तुल्यं जम्बीरजद्रवैः ॥५९॥
मर्दयेत्ताम्रपात्रे तु तस्मिन् रुद्ध्वा विनिक्षिपेत् ।
धान्यराशिस्थितं मासमञ्जनं पटलं हरेत् ॥६०॥

अथ तिमिरनाशनाञ्जनम् ।—

भृङ्गराजरसैर्घृष्टं पलैकं रक्तचन्दनम् ।
ताम्रपात्रे स्थितं भाव्यं तद्रसेन पुनः पुनः ॥६१॥
शतधा भावयेत् यत्नात् पेष्य पेष्य पुनः पुनः ।
मधुनाऽप्यञ्जनं हन्ति षड्विधं तिमिरामयम् ॥६२॥

शिग्रुबीजतैलाश्च्योतने—चिञ्चा तिन्तिड़ी । तैलं ततः स्रुतं तद्बीजनिःस्रुतं तैलम् ; "स्रुतम्" इत्यत्र "शृतम्" इति पाठे—तद्बीजकल्कपक्वं तैलमित्यर्थः । शशिपादयुक्तं पादांशकर्पूरसंयुक्तम् । तिलमात्रं बिन्दुमात्रमित्यर्थः, तैलमित्यस्य विशेषणम् ॥ ५८ ॥

पटलहराञ्जने—भर्ज्या पाच्या इत्यर्थः, दोलायन्त्रे कारवेल्लद्रवेण कपर्दिकां पक्त्वा विशोधयेदिति । तस्मिन् ताम्रपात्रे । कपर्दिकादिलाक्षान्तद्रव्यचतुष्टयं जम्बीर-रसेन ताम्रपात्रे मर्दयेत्, ततः सौषधं तत् पात्रं पात्रान्तरेण रुद्ध्वा धान्यराशौ मासं स्थापयेदिति निष्कर्षः ॥ ५९।६० ॥

तिमिरनाशनाञ्जने—तद्रसेन भृङ्गराजरसेन । भाव्यं तद्रसेन पुनः पुनः इत्युक्त्वाऽपि पुनः शतधा भावयेदित्युक्तिः विशेषबोधनार्थं न्यूनाधिकसङ्ख्यानिरासार्थं वा । पेष्य पेष्य पुनः पुनः प्रतिवारं भावनादानकाले चूर्णीकृत्येत्यर्थः, "दिवा दिवाऽऽतपे शुष्कं रात्रौ रात्रौ निवासयेत् । श्लक्ष्णं चूर्णीकृतं द्रव्यं भावनाविधिरिष्यते ॥" इति भावनाविधानात् । षड्विधं तिमिरामयं वातपित्तकफरक्तसन्निपातजं परिम्लायिसंज्ञकञ्च ॥ ६१।६२ ॥

अथ काचाख्यहराञ्जनम्।—

बीजपूररसैर्घृष्टं विषतुल्यसितायुतम्।
अञ्जनं कारयेद्रात्रौ काचमाख्यञ्च नाशयेत्॥६३॥

अथ शम्बूकादिवर्त्तिः।—

शम्बूकं पारदं नागं कांस्यचूर्णं रसाञ्जनम्।
समं सर्वमिदं चिञ्चा-दलद्रावेण पेषयेत्॥६४॥
ताम्रपात्रगतां वर्त्तिं छायाशुष्कान्तु कारयेत्।
शुक्रार्मतिमिरं पिल्लं हन्ति सा मधुनाऽञ्जिता॥६५॥

अथ अभिष्यन्दहरो योगः।—

असकृच्छीततोयेन सिञ्चेन्नेत्राभिष्यन्दजित्॥६६॥

अथ रात्र्यन्धहराञ्जनम्।—

अजस्य कृष्णमांसान्तः पिप्पलीमरिचं क्षिपेत्।
सीवयित्वा घृतैः पच्याद्घटिकान्ते समुद्धरेत्॥
मध्वाज्यस्तन्यसम्पिष्टं रात्र्यन्धस्याञ्जनं हितम्॥६७॥

काचाख्यहराञ्जने—विषम् अमृतम्। अञ्जनं रसाञ्जनम्। कारयेत् दापयेदित्यर्थः, अञ्जनमिति शेषः। विषतुल्यसितायुतं विषतुल्यसितया युतं योगेन कृतमित्यर्थो वा; अस्मिन् पक्षे—अञ्जनशब्देन नेत्राञ्जनमेव बोद्धव्यम्। "विषतुल्यसितायुतम्" इत्यत्र "विषतुल्यं शिलाजतु" इति क्वचित् पाठः॥६३॥

शम्बूकादिवर्त्त्यां—शम्बूकं शम्बूकभस्म। ताम्रपात्रगता वर्त्तिं ताम्रपात्रे तिन्तिडीपत्ररसेन पिष्ट्वा वर्त्तिं कृत्वा तत्रैव स्थिता वर्त्तिं छायायां शोषयेदित्यर्थः॥६४।६५॥

अभिष्यन्दहरयोगे—सिञ्चेत्, अभिष्यन्दमिति शेषः। नेत्राभिष्यन्दजिदित्यत्र तत्तोयमिति अध्याहरणीयम्॥६६॥

रात्र्यन्धहराञ्जने—कृष्णमांसान्तः यकृत्पिण्डाभ्यन्तरे, यकृतः कृष्णवर्णपिण्डाकारत्वात्। "सीवयित्वा" इत्यत्र "सेचयित्वा" इति कुत्रचित् पाठः। घटिकान्ते दण्डद्वयान्ते दण्डान्ते वा, घटिकाशब्देन दण्डद्वयस्य मतान्तरे दण्डस्य चाभिधानात्। विपाटितछागयकृत्पिण्डमध्ये पिप्पलीमरिचं समभागं क्षिप्त्वा संसीव्य च घृतेन घटिका यावत् पचेत्, ततः सर्वं तत् पिष्ट्वा मध्वादिभिरञ्जयेत्। अन्यत्र तु योगोऽयमेवं पठ्यते, यथा—"छाग्या छागयकृन्मध्ये पक्वा तद्रसपेषिता। अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम्॥" इति॥६७॥

अथ रात्र्यन्धे व्योषाञ्जनम् ।—

अजापित्तकृतं व्योषं धूमस्थाने विशोष्य च ।
चिरविल्वरसैर्घृष्टं रात्र्यन्धस्याञ्जनं हितम् ॥६८॥

अथ रात्र्यन्धे मरिचाञ्जनम् ।—

मरिचं मत्कुणे रक्ते रात्र्यन्धहरमञ्जनम् ॥६९॥

अथ रात्र्यन्धे पञ्चाङ्गगुटिका ।—

ताम्राग्रलवणशङ्खैस्तुल्या मगधोद्भवाऽथ वै धात्री ।
जलपिष्टा गुटिकेयं सायंसमयान्ध्यमपहरति ॥७०॥

अथ नवनेत्रदात्री वटी ।—

द्विरष्टौ ताम्ररजसो मधुकस्य चतुर्दश ।
कुष्ठस्य द्वादशांशाः स्युर्वचायाश्च दशैव तु ॥७१॥
रजतस्य च चत्वारो द्वौ भागौ कनकस्य च ।
सैन्धवस्याष्टभागाः स्युः पिप्पल्याश्च षडेव तु ॥७२॥
अजाक्षीरेण सम्पेष्य ताम्रपात्रे निधापयेत् ।

---

व्योषाञ्जने—अजापित्तकृतं छागपित्ते निक्षिप्तमित्यर्थः, धातूनामनेकार्थत्वात्; "अजापित्तकृतं व्योषम्" इत्यत्र "अजापित्तगतं व्योम" इति पाठान्तरम् । धूमस्थाने यत्र नित्यं धूम उद्गच्छति तस्मिन् स्थाने पाकशालायामित्यर्थः । चिरविल्वरसैः करञ्जरसैः । छागपित्तमध्ये त्रिकटुचूर्णं संस्थाप्य धूमोष्मणा विशोष्य च पिष्ट्वा वर्तिं कुर्यात्, ततः चिरविल्वरसेन घृष्ट्वा रात्र्यन्धे अञ्जनं कार्यम् ॥ ६८ ॥

मरिचाञ्जने—मत्कुणे रक्ते इत्यत्र पिष्टमिति शेषः, मत्कुणः "छारपोका" इति प्रसिद्धः क्रिमिविशेषः ॥ ६९ ॥

पञ्चाङ्गगुटिकायाम्—अग्रलवणं सैन्धवम् । शङ्खं शङ्खनाभिः । मगधोद्भवा पिप्पली, सा च ताम्रादिभिस्त्रिभिस्तुल्या, तेन च ताम्रादित्रयाणां प्रत्येकमेकैकभागः पिप्पल्याश्च भागत्रयम्; धात्री आमलकी, साऽपि ताम्रादिद्रव्यत्रयतुल्या । "अग्र" इत्यत्र "आल" तथा "अथ वै धात्री" इत्यत्र "समोषा च" इति क्वचित् पाठः । सायंसमयान्ध्यं नक्तान्ध्यमित्यर्थः ॥ ७० ॥

नवनेत्रदायां—द्विरष्टौ षोडश भागाः; "द्विरष्टौ" इत्यत्र "द्वौ भागौ" इति

अभिष्यन्दमधीमन्थं व्रणशुक्रं कुकूणकम् ॥
तिमिरं पटलं काचं कण्डूं हन्ति विशेषतः ॥७३॥

अथ त्रिफलारजआदिवर्त्तिः।—

कणालवणवचायुग्यष्टिताम्रैः क्रमेण
द्विगुणधरणवृद्धैश्छागदुग्धेन पिष्टैः।
निखिलनयनरोगान् हन्ति वर्त्तिर्विशिष्टा
रज इव निशि सर्पिः-क्षौद्रयुक्तं वरायाः ॥७४॥

अथ ताम्रवर्त्तिः।—

आर्द्रालकुचभृङ्गाणां रसः पिष्टेन कस्यचित्।
गन्धकेन समांशेन प्राग्वत्ताम्रञ्च मारितम् ॥७५॥

---

क्वचित पाठः। कनकस्य सुवर्णस्य। व्रणशुक्रं सव्रणशुक्लम्। कुकूणकं बाला-नामक्षिवर्त्मस्थरोगविशेषम् ॥ ७१—७३ ॥

त्रिफलारजआदिवर्त्त्यां—कणा: पिप्पली, क्लीबत्व छान्दसः। लवणं सैन्धवं, श्रेष्ठत्वात्। युग्यष्टिः स्थलजलजभेदात यष्टिमधुद्वयम ; "युग्" इत्यत्र "दृग्" इति पाठे—कृष्णमित्यर्थः। द्विगुणधरणवृद्धैः उत्तरोत्तर द्विरावृत्तधरणैः, धरणं पलदशमांशः, रक्तिचतुष्टयाधिकाः अष्टमाषकाः इति यावत् ; एवञ्च पिप्पल्याः धरणं, लवणस्य द्वे धरणे, वचायाः चत्वारि धरणानि, यष्टिमधुनः अष्टौ धरणानि, जलजयष्टिमधुकस्य षोडश धरणानि, ताम्रस्य च द्वात्रिंशदिति बोध्यम्। विशिष्टा विशेषोत्कर्षविशिष्टा इत्यर्थः। रज इवेति।—वरायाः त्रिफलायाः रजः चूर्णं निशि इत्यत्र सेवितमिति शेषः। अत इव-शब्दात् वरारजःक्षतयोगोऽपि नयनरोगहन्ता इत्यर्थतः आयाति। सिद्धयोगोऽयं तन्त्रान्तरदर्शनात्, तथा च सिद्धयोगे—"त्रिफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम्। स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्य. ॥" इति ॥ ७४ ॥

ताम्रवर्त्त्याम्—आर्द्रा आर्द्रकम्। लकुचः लकुः। रसः कस्यचित् आर्द्रादित्रयाणां मध्ये कस्यचिदेकस्य रसः। पिष्टेन चूर्णितेन। समांशेन आर्द्रादीनामेकतमस्य रसतुल्येन। प्राग्वत् एभिः कृता वर्त्तिः निखिलनयनरोगान् हन्तीत्यर्थः। पिष्टेन समांशेन गन्धकेन सह आर्द्रादीनां कस्यचित् रसः मारितं ताम्रञ्च प्राग्वत् इति योजना ॥ ७५ ॥

अथ ताम्रद्रुतिः।—

ताम्राभ्रकञ्च तुल्यञ्च दशनिष्कं पृथक् पृथक्।
कन्दुकस्थमिदं त्रिंशत्कर्षं चूर्णितगन्धकम् ॥७६॥
दत्त्वाऽल्पशोऽग्निनाऽल्पेन बद्ध्वा धूमं विसर्जयेत्।
प्रस्थाम्बुमर्दितस्यास्य प्रसादं निःसृतं युतम् ॥७७॥
तुल्यनीरशिलाजाभ्यां कर्षांशाभ्यां विशोषयेत्।
ताम्रद्रुतिरियं साज्य-मानुषीक्षीरमाक्षिकात् ॥७८॥
काचार्मपिल्लाभिष्यन्द-व्रणशुक्लव्रणाशिनी।
तत्किट्टं दद्रुकिटिभ-पामादीन् लेपनाज्जयेत् ॥७९॥

अथ द्वितीयताम्रद्रुतिः।—

शुल्वं गन्धकमभ्रकञ्च रसकं दिक्सङ्ख्यनिष्कं पृथक्
सर्वं रुद्रजटारसेन बहुशो भृङ्गस्य सारेण वा।
प्रायः श्लक्ष्णतरं सुमर्दितमिदं सम्यक् पुटं कारयेत्
स्थाल्यां तत् पुनरेव शीतलमिदं विन्यस्य तस्यान्तरे ॥८०॥

ताम्रद्रुतौ—कन्दुकस्थं कन्दुरेवेति कन्दुक लौहमयकटाहविशेषः तत्स्थम्। अग्निनाऽल्पेनेत्यत्र पचेत इति शेषो द्रष्टव्यः। धूमं विसर्जयेत पाककाले अन्तरा अन्तरा आवरणमुद्घाट्य धूमं निःसारयेदित्यर्थः, पाककाले तदुत्थधूमः यथा स्वगात्रे न लगति तथा परिहरेदित्यर्थो वा। अस्य ताम्राद्रिभस्मन प्रसादम् उपरिस्थ-स्वच्छजलम्। तुल्येति।—तुल्यनीरं चूर्णिततत्ताम्रोन्मितजलं शिलाजं शिलाजतु ताभ्यां, युतमित्यनेन सम्बध्यते। कर्षांशाभ्यामिति प्रत्येकम्। तत्किट्टं अवाध-स्थितं ताम्रादिभस्म। अयमर्थः,—ताम्रादित्रयं यथोक्तमानं लौहपात्रे गृहीत्वा चुल्ल्यां मृद्वग्निना पचेत्, किञ्चिदुष्णे तत्र अल्पमानं गन्धकचूर्णं क्षिप्त्वा पात्रान्तरेणाच्छाद-येत्, भस्मीभूते च तस्मिन् गन्धके आवरणमुन्मोच्य धूमं निःसार्य च पुनः अल्प-मात्रया गन्धकचूर्णं क्षिपेत् आच्छादयेच्च, एवमागन्धकक्षयात् कुर्यात्, ततः प्रस्थमितेन जलेन तद्भस्म मर्दयित्वा स्थापयेत्, कियत्कालानन्तरे उपरिस्थितं प्रसन्नं जलं गृहीत्वा कर्षमाताभ्यां तुल्योदकाभ्यां शिलाजतुभ्यां सह मिश्रयित्वा च शुष्कं कुर्यादिति॥ ७६—७९॥

द्वितीयताम्रद्रुतौ—रसकं खर्परम्। दिक्सङ्ख्यनिष्कं दशनिष्कम्। रुद्रजटारसेन

निष्कं निष्कमनन्तरं परिपचेज्जीर्णं यथा गन्धकं
स्यादेवं शतनिष्कमात्रमसकृत्तत्तस्य शीतं ततः ।
प्रस्थेनोन्मितवारिणा विलुलितं कल्कं विना गालितं
सङ्कृष्यास्य तदन्तरे शिखिनिभं तुत्थं सुचूर्णीकृतम् ॥८१॥
कर्षांशासितमञ्जनं विनिहितं कांस्ये परं शोषयेत्
तां ताम्रद्रुतिमामनन्ति निखिलान्नेत्रामयान्नाशयेत् ॥८२॥

अथ गन्धकद्रुतिः ।—

आर्द्रकस्य रसे पिष्टं गन्धकेन विमिश्रितम् ।
तुत्थन्तु निष्कदशकं तन्मानञ्चाभ्रकं क्षिपेत् ॥८३॥
दशनिष्केण तन्मानं ताम्रञ्च शकलीकृतम् ।
भर्जयेत् खर्परे क्षिप्त्वा दहेत्तदनु चूर्णयेत् ॥८४॥
तन्मिश्रं कन्दुकस्थेन चूर्णमेतेन भर्जयेत् ।
गन्धकं चूर्णितं कृत्वा कर्षन्तु विधिना शनैः ॥८५॥

---

रुद्रजटा शिवजटा "जटालङ्का" इति ख्यातं, तस्या रसेन । भृङ्गस्य भृङ्गराजस्य सारेण रसेन । श्लक्ष्णतरं मसृणतरं यथा तथा इति सुमर्दितमित्यस्य विशेषणम् । तदन्तरे तस्य स्थालीपुटस्याभ्यन्तरे । निष्कं निष्कमिति ।—स्थालीपुटाभ्यन्तरे तद्रसं स्थापयित्वा असकृत् पुनः पुनः निष्कं निष्कं गन्धकं दत्त्वा तथा परिपचेत् यथा गन्धकं जीर्णं स्यात्, एवं-क्रमेण शतनिष्कमात्रं गन्धकं दत्त्वा पचेत् । अत्रापि "अग्निनाऽल्पेन कृशा धूमं विमर्जयेत्" इति पूर्वयोगोक्तकल्पना प्रसज्यते । शिखिनिभं तुत्थं मयूरकण्ठाभं तुत्थम् । असितमञ्जनं नीलाञ्जनं सौवीराञ्जनमिति यावत्, तुत्थनीलाञ्जनयोः प्रत्येकं कर्षमात्रता । कांस्ये कांस्यपात्रे । पूर्वयोगप्रदर्शिता कल्पना अत्रापि ज्ञातव्या ॥ ८०—८२ ॥

गन्धकद्रुतौ—तन्मानं दशनिष्कमानम् । दशनिष्केण इति पदं प्रथमश्लोके द्वितीयपादोक्तेन "गन्धकेन" इति तृतीयान्तेन सम्बध्यते ; एवञ्च दशनिष्केण गन्धकेन विमर्दितम् आर्द्रकस्य रसे च पिष्टं दशनिष्कं तुत्थं दशनिष्कञ्चाभ्रमिति फलितम् । तन्मानं ताम्रञ्च शकलीकृतं कुट्टितं ताम्रमपि दशनिष्कमात्रं खर्परे भर्जयेत् दहेच्च, तदनु दाहानन्तरं चूर्णयेत्, खर्परे दग्धं ताम्रखण्डमिति शेषः । तन्मिश्रमिति ।—

भर्जितं तज्जलप्रस्थे नीलस्यापि शिलाजतु ।
कर्षप्रमाणं निक्षिप्य मर्दयेद्भावयेत् पुनः ॥८६॥
प्रसादं स्रावयेत् पश्चादातपे परिशोषयेत् ।
गन्धकद्रुतिरित्येषा सर्वरोगामयापहा ॥८७॥
विशेषात् व्रणकुष्ठघ्नं पित्तं कासं कुकूणकम् ।
जयेत्तस्य घृतक्षौद्रैः सर्वं तत् परिकल्पयेत् ॥८८॥
व्रणान् कृच्छ्रान् सुसूक्ष्मास्यानपि शीघ्रं निवर्त्तयेत् ।
तल्लिप्तं दद्रुकिटिम-पामादीन् लेपनाज्जयेत् ॥८९॥

इति श्रीवैद्यपातासिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये उन्माद-वातापस्मार-नेत्ररोगाणामुपचारो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः ।

### अथ कर्णरोगादिचिकित्सनम् ।—

अथ कर्णरोगाणां नामानि ।—

शूला दोषचयाभिभूतिजनिताः पञ्च प्रतीनाहरुक्-
कण्डूविद्रधिपालिशोषपरिपोटोत्पातलेह्यार्बुदाः ।

कन्दुकस्थेन भर्जनखर्परस्थेन उतेन ताम्रचूर्णेन सह मिश्रं मिश्रितं तत् पूर्वोक्तं गन्धकाम्रतुल्यचूर्णं तथा चूर्णितं गन्धकं कर्षं कर्षप्रमाणं कृत्वा दत्त्वा इत्यर्थः, शनैः मन्दाग्निना विधिना यथाविधि, "दत्ता धूमं विसर्जयेत्" इत्युक्तक्रमेणेत्यर्थः, भर्जयेत् ; भर्जितं तत् भस्म. कर्षप्रमाणं नीलस्यापि शिलाजतु जलप्रस्थे निक्षिप्य मर्दयेत पुनः भावयेच्च ; नीलं नीलाञ्जनं, शिलाजतु च एतयोः प्रत्येकं कर्षप्रमाणम् । नीलमिश्रस्य शिलाजतुविशेषणत्वे नीलं शिलाजतु ताम्रनिःसवशिलाजतु इत्यर्थः, तस्य मयूरकण्ठसच्छायत्वात्, यदुक्तं चरके—"ताम्रात् बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु" इति । सुसूक्ष्मास्यान् व्रणान् सूक्ष्मच्छिद्रान् व्रणान् इत्यर्थः ॥ ८६—८९ ॥

इति रसरत्नसमुच्चयबोधिन्यां त्रयोविंशोऽध्यायः समाप्तः ॥ २३ ॥

शोफार्शःक्रिमिकूचिकर्णकविदार्युन्मन्थसत्तन्त्रिका-
नादः पिप्पलिदुःखवृद्धिबधिरास्ते पूतिकर्णेन च ॥१॥

नेत्रं हीन्द्रियाधिष्ठानम्, अत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितं विवक्षुरादौ तेषां सामान्याह, शूला इति।—दोषचयाभिभूतिजनिताः दोषचयेन दोषसमूहेन, वातपित्तकफरक्तसन्निपातेन इत्यर्थः, या अभिभूतिः आक्रान्तिः आक्रमणमित्यर्थः, कर्णयोरिति शेषः, तज्जनिताः पञ्च पञ्चविधाः, शूलाः कर्णशूला इत्यर्थः। प्रतीनाहश्चक् प्रतीनाहरोग इत्यर्थः। कण्डूः कर्णकण्डूः। विद्रधिः कर्णविद्रधिः, अत्र विद्रधिशब्देन कर्णपाकस्यापि परिग्रहणम्; कर्णविद्रधेः पाकेन कर्णपाकसम्भवात्। पालिशोषः पालिः कर्णावयवविशेषः तद्गतः शोषः; तथा च वाग्भटः,—"शिरास्थः कुरुते वायुः पालिशोषं तदाह्वयम" इति। "पालिशोथः" इति पाठस्तु न मनोरमः, तदाख्यकर्णरोगस्य शास्त्रेष्वदर्शनात् वाग्भटे पालिशोषदर्शनाच्च इति। परिपोट, उत्पातः, लेही परिलेही, तयोऽप्येते पालिगतविकाराः। अर्बुदशोफार्शांसि कर्णगतान्येव, ते चार्बुदादयः यथोक्तसङ्ख्यकाः ज्ञातव्याः। क्रिमिकूचिकर्णकः क्रिमिकर्णकः कूचिकर्णकश्च, कूचिकर्णः कर्णरोगविशेषः, रोगेऽस्मिन् वाताद्यन्तरे शष्कुली सङ्कुचिता भवति, तथा च वाग्भटः,— "गर्भेऽनिलात सङ्कुचिता शष्कुली कूचिकर्णकः" इति। विदारी विदारिका; तथा च वाग्भटः,—"सन्निपाताद्विदारिका। सवर्णः सरुजः स्तब्धः श्वयथुः समुपेक्षितः॥ कटुतैलनिभं पक्वः स्रवेत कृच्छ्रेण रोहति। सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम् ॥" इति। उन्मन्थः उन्मन्थकः, अयमपि पालिगतरोगविशेषः। सत्तन्त्रिका सती स्थिरा दृढा इत्यर्थः, तन्त्रिका कर्णपालिगतरोगविशेषः; तल्लक्षणं यथा वाग्भटे,—"कृशा दृढा च तन्त्रीवत पाली वातेन तन्त्रिका" इति; "उन्मन्थसत्तन्त्रिका" इत्यत्र "उन्मन्थकतन्त्रिका" इति पाठकल्पना सुखबोधाय-कृता। नादः कर्णनादः; समानतन्त्रीककर्णक्ष्वेडस्यात्रैवान्तर्भावः। पिप्पली "एको नेकगमेको वा गर्भे मांसाङ्कुरः स्थिरः। पिप्पली पिप्पलीमानः—" इत्यनेन वाग्भटोक्ता। दुःखवृद्धिः दुःखवर्द्धनाख्यः दुर्विद्धजनितः शोथविशेषः। बधिरः पूतिकर्णश्च; एते पञ्चविंशतिसङ्ख्यकाः कर्णरोगाः ज्ञातव्या इति वाक्यशेषः। परार्द्धे "शोफार्शःक्रिमिपूतिकर्णकविदार्यांसावनिलतन्द्रिका नादः पिप्पलिदुःखवृद्धिबधिरास्ते कर्णपाकेन च" इति पाठान्तरं न समीचीनं, वाग्भटमतोपजीविनि ग्रन्थेऽस्मिन् उपजीव्य-वाग्भटविरुद्धपाठस्य सन्निवेशासम्भवादिति ॥ १ ॥

## अथ कर्णरोगचिकित्सा ।—

अथ कर्णशूले लवणार्द्रकप्रयोगः ।—

कर्णशूलहरः क्षेप्यो लवणार्द्रकयो रसः ॥१॥

अथ गोमक्षिकायां क्रिमिकर्णारितैलम् ।—

अहिफेनो वचा शुण्ठी सैन्धवञ्च समं समम् ।
समतैलार्द्रकद्रावैः पक्के तस्मिन् पलद्वये ॥३॥
पूर्वोक्तचूर्णं कर्षांशं क्षिप्तोत्तार्य्य सुशीतलम् ।
तत्तैलं प्रक्षिपेत् कर्णे ध्रुवं गोमक्षिका व्रजेत् ॥४॥

अथ कर्णशूले तिलपर्णीप्रयोगः ।—

तिलपर्णीद्रवं तैलं कोष्णं कर्णे प्रपूरयेत् ॥५॥

अथ कर्णशूले अर्कपत्रप्रयोगः ।—

अर्कपत्रद्रवं तैलं पूरयेत् कर्णशूलनुत् ॥६॥

---

लवणार्द्रकप्रयोगे—क्षेप्यः कर्णविवरे निक्षेप्य इत्यर्थः । लवणार्द्रकयोरिति द्विवचनेन लवणार्द्रकयोरैकध्यं पिष्टयोः वस्त्रपूतः रसः ग्राह्यः ॥ २ ॥

क्रिमिकर्णारितैले—अहिफेनादीनां चतुर्णां कल्कः तैलपादिकः । समतैलार्द्रकद्रावैः समं तैलम् आर्द्रकद्रावाश्च तैः सह, समं समम् अहिफेनादिकं, पचेदिति शेषः, तैलप्रस्थम् आर्द्रकस्वरसप्रस्थेन अहिफेनादिकल्कपादेन च पचेदित्यर्थः ; तैलमत्र कटुतैलं तिलभवं वा । पक्के इति ।—पक्कं वस्त्रपूतं सुशीतलञ्च तत् पलद्वयं गृहीत्वा तस्मिन् पूर्वोक्तचूर्णम् अहिफेनादिद्रव्यचतुष्टयं प्रत्येकं कर्षांशं क्षिप्त्वा कर्णे प्रपूरयेत् । गोमक्षिका दंशाख्यमक्षिकाविशेषः, सा च मांसशोणितकोथे सति कर्णे अपत्यानि सृजति, अत्र मक्षिकाशब्द उपलक्षणं, तेनान्येऽपि जन्तवः कर्णे सम्भवन्ति ; यदुक्तं सुश्रुतेन—"यदा तु मूर्च्छन्त्यथवाऽपि जन्तवः सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः । तदञ्जनत्वात् श्रवणो निरुच्यते भिषग्भिराद्यैः क्रिमिकर्णको गदः ॥" इति ॥ ३।४ ॥

कर्णशूलहरतिलपर्णीप्रयोगे—तिलपर्णी "तिलोनी" इति ख्यातः शाकविशेषः, तस्याः द्रवं रसम् । कर्णशूलशान्तये तैलं तिलपर्णीद्रवञ्चैकध्यमुष्णीकृत्य तेन कर्णपूरणं कुर्य्यात् ॥ ५ ॥

कर्णशूलहरार्कपत्रप्रयोगे—पूर्वयोगवत् सर्वं कार्य्यमिति ॥ ६ ॥

अथ कर्णशूले रसोनप्रयोगः।—

रसोनस्य रसं कोष्णं पूरयेत् कर्णशूलनुत् ॥७॥

अथ पूयस्रावे मेघनादप्रयोगः।—

मेघनादद्रवैः पूर्णे कर्णे पूयः प्रशाम्यति ॥८॥

अथ बाधिर्य्ये मुषल्यादिचूर्णम्।—

मुषलीवाकुचीचूर्णं खादेत् बाधिर्य्यशान्तये ॥९॥

अथ कर्णमूलस्फोटे कतकादिलेपः।—

कतकं शिग्रुलवणमारनालेन पेषयेत्।

कर्णमूलस्थितं स्फोटं सोष्णलेपाद्विनाशयेत् ॥१०॥

अथ कर्णमूलस्फोटे पुत्रजीवलेपः।—

पुत्रजीवफलस्यैव मज्जा जलनिपेषिता।

लेपात् कर्णे गले कक्षे स्फोटं हन्त्युरुमूलकम् ॥११॥

अथ गोमक्षिकायां तगरादिपूरणम्।—

तगरब्रह्मवृक्षस्य दन्तैर्मूलानि चर्वयेत्।

रसेन श्रवणं तस्य पूरयेदतियत्नतः॥

गोमक्षिका विनिर्याति पूरणस्य विधानतः ॥१२॥

---

रसोनप्रयोगे—सर्वं स्पष्टम् ॥ ७ ॥

मेघनादप्रयोगे—मेघनादः तण्डुलीयकः ॥ ८ ॥

मुषल्यादिचूर्णे—मुषली तालमूली। वाकुची सोमराजी ॥ ९ ॥

कतकादिलेपे—कतकं जलप्रसादनफलं "निर्मली" इति लोके। "कतकम्" इत्यत्र "केतकी" इति रसरत्नाकरे पाठः ॥ १० ॥

पुत्रजीवलेपे—मज्जा फलास्थिमध्यमित्यर्थः। उरुमूलकम् अवगाढमूलं महामूलं वा ॥ ११ ॥

तगरादिपूरणे—तगरं पिण्डीतगरः। ब्रह्मवृक्षः पलाशः। विधानतः यथाविधि; कर्णपूरणविधिश्च भावप्रकाशे यथा—"शेरयेत् कर्णरुग्वन्तु किञ्चिन्नः पार्श्वशायिनः। मूत्रैः स्नेहैः रसैः कोष्णैः तस्य श्रोत्रं प्रपूरयेत् ॥ कर्णञ्च पूरितं रक्षेत् शतं पञ्चशतानि च। सहस्रं वाऽपि मात्राणां श्रोत्रकण्ठशिरोगदे ॥ स्वजानुनः कराग्रं कुर्या-

अथ पालीवर्द्धने मुषलीप्रयोगः ।—

मुषलीकन्दचूर्णं हि माहिषीनवनीततः ।
लोलयेद्रोधयेद्भाण्डे धान्यराशौ निधापयेत् ॥
सप्ताहादुद्धृतं लेपः कर्णपालीं विवर्द्धयेत् ॥१३॥

अथ पालीवर्द्धने चर्मचेटप्रयोगः ।—

चर्मचेटस्य रक्तेन लेपात् कर्णौ विवर्द्धते ॥१४॥

अथ पालीवर्द्धने वराहवसाप्रयोगः ।—

वराहोत्थेन तैलेन लेपात् कर्णौ विवर्द्धते ॥१५॥

अथ वज्रादिवटिका ।—

वज्रवैक्रान्तविमल-तुल्यनागविषान्वितैः ।
तुल्यपारदगन्धाश्म-माक्षिकैः कज्जली कृता ॥१६॥
रसोनार्द्रकशिग्रूणामकृष्णा मूलकस्य च ।

---

स्फोटिकया युतम् । एषा मात्रा भवेदेका सर्वत्रैवं विनिश्चयः ॥ रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रशस्यते । तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥" इति । कर्णगदे शतमात्रा एव पूरणं धार्य्यं, शतं पञ्चशतानि च इत्यादेः क्रमिकत्वात् ; तथा च— "धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयन् । रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥" इति । मात्रालक्षणञ्च वाग्भटे यथा—"यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम् । निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥" इति ॥ १२॥

मुषलीप्रयोगे—मुषली तालमूली, सा च अभिनवा एव ग्राह्या ; यदुक्तं चक्रसङ्ग्रहे—"माहिषनवनीतयुतं सप्ताहं धान्यराशिपरिवासितं सत् । नवमुषलीकन्द-चूर्णं वृद्धिकरं कर्णपालीनाम ॥" इति । लोलयेत् आलोडयेत् । तत्त्वचन्द्रिकाकृता अस्य एवं कल्पना प्रदर्शिता, यथा—"तत्क्षणानीतशुष्कतालमूलीकन्दचूर्णं पल २ माहिषनवनीतं पल १ सम्मर्द्य सप्ताहं धान्यराशौ स्थाप्यम्" इति ॥ १३ ॥

चर्मचेटप्रयोगे—चर्मचेटः "चामचिका" इति प्रसिद्धः, तस्य ॥ १४ ॥

वराहवसाप्रयोगे—वराहोत्थेन तैलेन वराहवसया ॥१५॥

वज्रादिवटिकायां—विमलं तारमाक्षिकम् । नागः सीसकम् । विषम् अमृतम् । गन्धाश्मा गन्धकः ; वज्रादीनां माक्षिकान्तानां सर्वेषां तुल्यता । अकृष्णाः

पृथग्रसैः कदल्याश्च सप्तधा परिभावयेत् ॥
एवं सुपिष्टा वर्त्तेन सेविता कर्णरोगनुत् ॥१७॥

अथ कुष्ठाद्यं तैलम् ।—

कुष्ठशुण्ठीवचाहिङ्गु-शताह्वाशिग्रुसैन्धवैः ।
बस्तमूत्रैः शृतं तैलं सर्वकर्णामयापहम् ॥१८॥

अथ नासारोगाणां नामानि ।—

षट् पीनसाश्च मलसञ्चयरक्तदुष्टैः
पूयास्रदीप्तिपिटिकाऽर्बुदपूतिनासाः ।
आस्रावनाहपरिशोषभ्रशक्षवार्शः-
पाकस्वपीनसयुतैश्च गदा नसि स्युः ॥१९॥

---

इन्द्रवारुण्याः; "अरुणायाः" इत्यत्र "वारुण्याः" इति योगरत्नाकरे पाठः; सुश्रुते रसोनेत्यादियोगस्य स्वरसेन कर्णपूरणं कार्यमित्युपदेशः दृश्यते, तत्र च "अरुणायाः" इत्यत्र "सुरङ्गयाः" इति पाठः, सुरङ्गी रक्तशोभाञ्जनम्। कदल्याः कदली कदलीवागुडा तस्याः ॥१६।१७॥

कुष्ठाद्यतैले—"शिग्रु" इत्यत्र "दारु" इति वृन्दोक्तः पाठः। कुष्ठादीनां कल्कः स्नेहचतुर्थांशः, बस्तमूत्रैः स्नेहचतुर्गुणैः ॥ १८ ॥

उक्तसाधर्म्यात् कर्णरोगचिकित्साभिधानानन्तरं नासारोगाधिकारारम्भः। तत्रादौ नासारोगाणां नामान्याह, षडिति।—षट् पीनसाः षड्विधाः प्रतिश्यायाः। षट्त्वञ्च विवृणोति, मलेति।—मलसञ्चयः वातादिदोषाणां सञ्चयः, तत्पूर्वकः प्रकोपश्च, रक्तं, दुष्टश्च तैः, वात-पित्त-कफ सन्निपात-रक्त-दुष्टप्रतिश्यायभेदात् षड्विधा इत्यर्थः। यद्यपि तन्त्रान्तरे दुष्टप्रतिश्यायस्य वातादिजप्रतिश्यायपञ्चकानामेवावस्थान्तरतया पञ्च प्रतिश्यायाः, न षट् इत्युक्तं, तथाऽपि तस्य पृथक्-लक्षणनिर्देशात् मन्दबुद्धीनां सुखावबोधनाय षडित्युक्तं श्रीमताचार्य्येण, वस्तुतस्तु प्रतिश्यायाः पञ्च एव; अथवा उभयमपि सत्यं श्रुतिद्वैधवत् मुनीनां भिन्नमतिकत्वात्। पूयास्रं पूयरक्तम्। "पिटिकाऽर्बुद—" इत्यत्र "पुटकार्बुद—" इति कल्पना साध्वी, वाग्भटे पुटकाख्य-नासारोग एव दृश्यते, न तु पिटिका, तल्लक्षणञ्च यथा—"पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेत् मरुत्। कफं संशुष्कपुटतां प्राप्नोति पुटकन्तु तत् ॥" इति।

अथ पूयास्रलक्षणम् ।—

पूयास्रमतिदुर्गन्धि नासायामतितापकृत् ॥२०॥

अथ नासारोगचिकित्सा ।—

अथ पूयास्रे जीरकादिनस्यम् ।—

शृतं नस्येन हन्त्यास्रं श्वेतजीरं सितायुतम् ॥२१॥

अथ पीनसहरनस्यम् ।—

घृताक्तं कुङ्कुमं घृष्टं नस्यं पीनसजिद्भवेत् ॥२२॥

अथ कामलाहराञ्जनम् ।—

जलेन पेषयेद्धिङ्गुमञ्जनात् कामलां जयेत् ॥२३॥

---

नाहः प्रतीनाहः । "भ्रमथव" इत्यत्र वाग्भटे—"भृशक्षव" इति पाठो दृश्यते, तथा च—"तीक्ष्णघ्राणोपयोगार्क-रश्मिसूत्रतृणादिभिः । वातकोपिभिरन्यैर्वा नासिका-तरुणास्थनि ॥ विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजेत् । निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः ॥" इति । अयमेव सुश्रुतादौ क्षवथुः इति नाम्ना पठितः । पाकः नासिकापाकः । नसि नासिकायाम् ॥ १९ ॥

तत्र पूयास्रलक्षणमाह, पूयास्रमिति ।—अतिदुर्गन्धि तथा अतितापकृत् इति पदद्वयं पूयास्रमित्यस्य विशेषणम्; तादृशत्वञ्च पित्तरक्ताधिकत्वात् रक्तस्य कोथीभावाच्च ॥२०॥

जीरकादिनस्ये—शृतं नस्येन यथाविधि नासिकया गृहीतम् ॥ २१ ॥

पीनसहरनस्ये—घृष्टं घृतेनैव सह घृष्टमित्यर्थः ॥ २२ ॥

कामलाहराञ्जने—सर्वं स्पष्टम् । ननु नासारोगाधिकारे "कामलां जयेत्" इति वचनं कथमिति चेदुच्यते—नासारोगस्य चिरावस्थानेन नेत्रगतासृग्दुष्ट्या यदि कामला जायते तदा तत्प्रशमनायैव एतत्प्रसङ्गावतारणम्; वक्ष्यति च स्वयमेव "नासारोगप्रसङ्गतः" इति । अथवा—योगस्यास्य कामलाहरत्वेऽपि शक्तिरस्ति इति प्रदर्शनार्थमेवेति बोद्धव्यम् । एवञ्च अत्र प्रकरणवशात् जलपिष्टस्य हिङ्गुनः नस्यं पीनसजित् इत्यवगन्तव्यं, तथा प्रकृतस्यैव योगस्यास्य प्रयोगवैचित्र्येण कामलाजित्त्वमपि प्रदर्शितमिति । "अञ्जनात् कामलाम्" इत्यत्र "अञ्जयेदेव तत्" इति क्वचित् पाठः ॥ २३ ॥

अथ कामलाहरद्वितीयाञ्जनम्।—

तण्डुलक्षालनतोयेन घ्राकुलीमूलमञ्जयेत्।
कामलां हन्ति नो चित्रं नासारोगप्रसङ्गतः ॥२४॥

अथ मणिपर्पटी।—

वज्रं मरकतं पुष्पमिन्द्रनीलं सुचूर्णितम्।
रसहिङ्गुलगन्धञ्च कज्जलीं कारयेद्बुधः ॥२५॥
द्रावयित्वा लौहपात्रे पर्पट्याकारतां नयेत्।
निर्गुण्डीतुलसीशिग्रु-धुस्तूररविवह्निजैः ॥२६॥
रसैर्व्योषवरारम्भा-सुरसैश्चापि भावयेत्।
आर्द्रकस्य रसेनापि सप्तधा परिभावयेत् ॥२७॥
एवं सिद्धो रसो नाम्ना विख्याता मणिपर्पटी।
सेविता गुञ्जया तुल्या निहन्यान्नासिकागदान् ॥
पथ्योपचारादिवशात् सर्वव्याधीन् विशेषतः ॥२८॥

अथ मुखरोगाणां सङ्ख्यानिर्देशः।—

एको गण्डभवो गदः षडुदिता जिह्वोद्भवास्तालुजा-
श्चाष्टावष्ट च मस्तजाश्च दशनोद्भूता दशौष्ठोद्भवाः।

---

कामलाहरद्वितीयाञ्जने—घ्राकुली देशान्तरे प्रसिद्धा, "घ्राकुली" इत्यत्र "भद्दील" इति क्वचित् पाठः॥ २४ ॥

मणिपर्पट्यां—पुष्पं पुष्परागमणिम्। "हिङ्गुल" इत्यत्र "हिगुण" इति पाठान्तरम्। रवि. अर्कः। वह्निः चित्रकः। वरा त्रिफला। रम्भा कदलीकन्दः। सुरसः तुलसी; अत्र तुलसीशब्देन कृष्णतुलस्याः सुरसशब्देन च श्वेततुलस्याः ग्रहणं बोद्धव्यम्। एषां प्रत्येकरसेन सप्तधा भावना देया इति ॥ २५—२८ ॥

पूर्वोक्तसङ्ख्यैव नासारोगचिकित्साभिधानानन्तरं मुखरोगचिकित्सितं विवक्षुरादौ तेषां सङ्ख्या माह, एक इति।—गण्डभवः कपोलदेशजः एकः; अयन्तु सुश्रुतेन दन्तगतमुखरोगमध्ये "हनुमोक्षः" इति नाम्ना पठितः, तथा च—"वातेन तैस्तै-र्भावैस्तु हनुसन्धी विसंहिते। हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥" इति; हनुगण्डयोः सन्निकृष्टत्वात् अत्र गण्डशब्देन हनुरभिप्रेतः इति मन्तव्यम्। अष्ट च

सन्ध्येकादश च त्रयोदश गदा दन्तस्य मूलोद्भवाः
कण्ठेऽष्टादश चोदिता वदनजाः पञ्चाधिका सप्ततिः ॥२९॥

अथ गलकीलके आमलकप्रयोगः ।—

चूर्णं त्वामलकस्यैव गवां क्षीरेण पाययेत् ।
गलकीलकनुत्त्यर्थं—" ॥३०॥

अथ गलकीलके विषतिन्दुकादि वटी ।—

"—विषतिन्दुं सनागरम् ।
हरीतक्या च संयुक्तं मुखे धारय सन्ततम् ॥३१॥

---

गलजाश्च इत्यत्र गलशब्देन गलशावयवविशेषमुख्यमभिप्रेतं, नेत्रकर्णनासाक्ष्यादीनां शिरस्येवोपनिबद्धत्वात्, मुखगतरोगाधिकारे शिरोगतरोगाणां सङ्ख्यानिर्देशस्य सङ्गतिविरोधाच्च ; एवञ्च सर्वसरमुखरोगा अष्टौ इत्यर्थः। "अष्ट च गलजाश्च" इत्यत्र "अष्ट समस्तजाश्च" "अष्ट च तुण्डजाश्च" इति वा पाठप्रकल्पनं सुगमम्। क्वचित् तन्त्रे मुखरोगाणां पञ्चषष्टिसङ्ख्यावत्त्वं क्वचिद्वा सप्तषष्टिसङ्ख्यावत्त्वं प्रदिष्टम् ; तथा च भोजः,—"दन्तेष्वष्टावोष्ठयोश्च मूलेषु दश पञ्च च। नव तालुनि जिह्वायां पञ्च सप्तदशामयाः॥ कण्ठे त्रयः सर्वसराः एकषष्टिस्तु:पराः॥" इति, तथा भावमिश्रश्च—"स्युरष्टावोष्ठयोर्दन्त-मूलेषु दश षट् तथा। दन्तेष्वष्टौ च जिह्वायां पञ्च स्युर्नव तालुनि॥ कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्वसराः स्मृताः। एवं मुखामयाः सर्वे सप्तषष्टिर्मता बुधैः॥" इति। वाग्भटसंवादिनि अस्मिंस्तु पञ्चसप्ततिरित्युक्तम्, एतद्विरोधसमन्वयार्थं नेत्ररोगचिकित्साधिकारे प्रदर्शिता सरणिरवलम्बनीया। दन्तगतहनुमोक्षादयः कतिचित रोगाः वाग्भटसुश्रुतादिभिः अधिकत्वेन प्रदर्शिताः, भोजादिभिस्तु सङ्ख्यातरोगेष्वेव तेषामन्तर्भावः इति कृत्वा पृथक्तया न पठिताः इति ॥२९॥

आमलकप्रयोगे—गलकीलकनुत्त्यर्थमिति पदं काकाक्षिगोलकन्यायेन चूर्णमित्यादियोगे विषतिन्दु-इत्यादियोगे च उभयत्रापि समन्वेतव्यम्। गलकीलकनुत्त्यर्थं गलकीलकस्य गलदेशे कीलकवत् सञ्जातस्य मांसाङ्कुरविशेषस्य नुत्तिः विनाशः, तदर्थम् ; अत्र गलकीलकशब्देन गलरोहिण्यादयोऽभिप्रेताः, तेष्वेव कीलवत् मांसाङ्कुरसम्भवात् ॥ ३० ॥

विषतिन्दुकादिवट्यां—विषतिन्दुं कारस्करं, "कुचिला" इति ख्यातम् ; स च शोधित एव ग्राह्यः, उपविषत्वात् ॥ ३१ ॥

अथ गलकीलके सैन्धवप्रयोगः।—

बहुशो भानुदुग्धेन सैन्धवेन प्रलेपनम् ॥३२॥

अथ गलकीलके भल्लातकप्रयोगः।—

भल्लातकरसं दत्त्वा चूर्णस्योपरि बन्धयेत् ॥३३॥

अथ दन्तदार्ढ्ये जयाप्रयोगः।—

यः प्रातरुत्तेजयति द्विजान् जयाकाष्ठेन वज्रद्विज एव जायते।
तेनैव तैलोपहितेन मार्जनाज्जिह्वा जहात्युद्धतपूतिगन्धिताम्॥३४॥

अथ मुखपाके पर्पटीरसप्रयोगोपदेशः।—

मुखपाकापनुत्यर्थं मधुना पर्पटीरसम्।
खादयेत् कृतगण्डूषो वटिकाश्चानुधारयेत् ॥३५॥

---

सैन्धवप्रयोगे—भानुदुग्धेन अर्कक्षीरेण; सैन्धवमर्कक्षीरेण पिष्ट्वा तेन गलकीलकं बहुशः लिम्पेदित्यर्थः ॥ ३२ ॥

भल्लातकप्रयोगे—चूर्णं भल्लातकस्यैव; गलकीलके बहिर्गतं भल्लातकरसेनालिप्य तच्चूर्णं दत्त्वा बध्नीयादित्यर्थः ॥३३॥

जयाप्रयोगे—उत्तेजयति उद्घर्षयतीत्यर्थः। द्विजान् दन्तान्। जयाकाष्ठेन जयन्तीकाष्ठकृतदन्तपवनेन। तेनैव तैलोपहितेन तैलासिक्तेन जयाकाष्ठेन। "यः प्रातः द्विजधावनञ्च कुरुते काष्ठेन वज्रद्विजः। निम्बेन आस्फोटककाष्ठकेन स्याद्गल-काष्ठं द्विजशोधनाय॥" इत्यधिकपाठः क्वचित् ॥ ३४ ॥

मुखपाके पर्पटीरसप्रयोगमुपदिशति, मुखेति।—पर्पटीरसं रक्तपित्ताद्यधिकारे आसचिकित्सितोक्तम्। कृतगण्डूषः मधुनैव कृतगण्डूषः; यदुक्तं वृन्देन—"वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान्। दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्॥" इति। पञ्चपल्लवक्वाथेन त्रिफलादिक्वाथेन वा गण्डूषः इत्यर्थो वा। गण्डूषमात्रा तु सुश्रुतेनोक्ता यथा—"सुखं सञ्चार्यते या तु सा मात्रा कवले हिता। असञ्चार्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता॥" इति। वटिका खदिरवटिकादिरूपाम् अनुधारयेत् अनु गण्डूषानन्तरं धारयेत्, मुखे इति शेषः ॥ ३५ ॥

अथ मुखशोषे महाराष्ट्री गुटिका ।—

महाराष्ट्रिकचूर्णञ्च चतुष्कृत्वा विभावयेत् ।
निम्बार्द्रकरसाभ्यान्तु गुटिका मुखशोषनुत् ॥३६॥

अथ मुखवैवर्ण्ये पुनर्नवाद्युद्वर्त्तनम् ।—

श्वेतं पुनर्नवामूलं सर्पाक्षीमूलसंयुतम् ।
उद्वर्त्तनं हरेत् स्त्रीणां मुखच्छायां सुदुःसहाम् ॥३७॥

अथ नीलिकायां रजन्यादिप्रलेपः ।—

महिषीक्षीरसम्पिष्टं रजनीरक्तचन्दनम् ।
कृतलेपं निहन्त्याशु श्यामिकां गण्डयोः स्थिताम् ॥३८॥

अथ मुखवैवर्ण्ये वङ्गभस्मप्रयोगः ।—

मुखच्छायाहरं वङ्ग-भस्म स्यान्महिषीजलैः ॥३९॥

अथ मुखवैवर्ण्यादौ मातुलुङ्गादिप्रलेपः ।—

गोमयस्य रसं सर्पिर्मातुलुङ्गं मनःशिला ।
मुखवर्णकरं श्रेष्ठं तिलकानाञ्च नाशनम् ॥४०॥

अथ मुखवैवर्ण्ये हरिद्रादिलेपः ।—

उभे हरिद्रे मञ्जिष्ठा घृतं गौराश्च सर्षपाः ।
पेष्या गैरिकसंयुक्ता अजाक्षीरेण पाचिताः ॥
एतेनैव भवेद्वक्त्रमुदयादित्यसन्निभम् ॥४१॥

---

महाराष्ट्रीगुटिकायां—महाराष्ट्रिकचूर्णं जलकण्टचूर्णम् । चतुष्कृत्वा निम्बार्द्रकयोः प्रत्येकं रसेन वारचतुष्टयमित्यर्थः ॥ ३६ ॥

पुनर्नवाद्युद्वर्त्तने—सर्पाक्षी सर्पसहा "पानमिउलि" इति भाषा, सुगन्धरास्ना वा । उद्वर्त्तनम् उद्घर्षणम् । मुखच्छायां सुदुःसहां मुखवैवर्ण्यं, व्यङ्गादिकमित्यर्थः ॥३७॥

रजन्यादिप्रलेपे—श्यामिकां नीलिकाम् ॥ ३८ ॥

वङ्गभस्मप्रयोगे—महिषीजलैः महिषीमूत्रैः महिषीक्षीरैर्वा ॥ ३९ ॥

मातुलुङ्गादिप्रलेपे—मातुलुङ्गं मातुलुङ्गमूलम् ; लेपयोगोऽयम् ; यदुक्तं वृन्देन —"मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः । मुखकान्तिकरो लेपः पिडकातिलकालजित् ॥" इति ॥४० ॥

हरिद्रादिलेपे—गौराश्च सर्षपाः श्वेतसर्षपाः । अजाक्षीरेण पाचिताः हरिद्रा-

अथ मुखदौर्गन्ध्ये कुष्ठादिवटी।—

गोमूत्रैः क्वाथयेत् कुष्ठं बालकं सहरीतकम्।
पिष्ट्वा सर्वं वटीं कुर्य्यात् मुखदौर्गन्ध्यनाशिनीम् ॥४२॥

अथ मुखदौर्गन्ध्ये गृहधूमक्वाथः।—

गृहधूमारनालेन क्वाथं समधुसैन्धवम् ॥४३॥

अथ मुखदौर्गन्ध्ये पथ्यादिवटिका।—

गोमयैः क्वथिता पथ्या-मिषी कृष्णान्विता कणा।
वदनस्य दुरामोदं निहन्ति परिशीलिता ॥४४॥

अथ मुखवैरस्ये लाजादिचूर्णम्।—

लाजा जातीफलं पूगं तुल्यं भक्ष्यं पिबेदनु।
शीततोयं पलार्द्धञ्च आस्यवैरस्यशान्तये ॥४५॥

---

दिकं सर्वं पिष्टा अजाक्षीरेण ईषत् उत्स्विन्ना: इत्यर्थः, अथवा—अजाक्षीरेण पेषणेनैव उपयोगविषये परिणतिमागताः इत्यर्थः, कर्मविपाकः तथा कालः पचति इत्यादिवत् पचत्यातोरत्र परिणति-निष्पादनाद्यर्थे प्रयोगः बोद्धव्यः; मुख्यार्थमेव पक्वः तन्त्रान्तरसंवादात्, तथा च वृन्दः,—"रक्तोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यवत्सपयः।—सिद्धेन लिप्तमाननमुद्यद्विधुबिम्बवत् विभाति॥" इति। अत्र च तत्त्वचन्द्रिकाकारेण एवं व्याख्या कृता—"वत्सपयः-सिद्धेन" इति समासपदं, रक्तोघ्नादिसिद्धेन लेपेनेत्यर्थः" इति। रक्तोघ्नादिसिद्धेन रक्तोघ्नादिभिः निष्पन्नेन। उदयादित्यसन्निभम् उदयकालिकसूर्य्यसमकान्तमित्यर्थः। "पेष्याः" "पाचिताः" "उदयादित्य" इत्येतेषु "लेप्याः" "पेषिताः" "उद्यदादित्य" इति क्वचित् पाठान्तराणि ॥ ४१ ॥

कुष्ठादिवटिकायां—क्वाथयेत् किञ्चिदुत्स्वेदयेदित्यर्थः ॥ ४२ ॥

गृहधूमक्वाथे—गृहधूमेन सह आरनालं तेन, कृतमिति शेषः; क्वाथं गृहधूमारनालयोः क्वाथमित्यर्थः, मुखे धारयेदिति शेषः। क्वाथविधिना षडङ्गविधिना वा आरनालेन गृहधूमं निःक्वाथ्य मधुसैन्धवे प्रक्षिप्य च तेन कवलादिकं कुर्य्यादित्यर्थः ॥ ४३ ॥

पथ्यादिवटिकायां—गोमयैः गोमयरसैः। मिषी मधुरिका। कणा कृष्णजीरकम्। दुरामोदं दुष्टगन्धम्। परिशीलिता नित्यं प्रयुक्ता; पथ्यादिकं गोमयरसेन किञ्चित् पक्त्वा अवतार्य्य च शिलायां पेषयेत्, ततो गुटिकां विधाय मुखे धारयेदिति कल्पना ॥४४॥

लाजादिचूर्णे—लाजा भृष्टधान्यचूर्णम्; "लाजा" इत्यत्र "लज्जा" इति

अथ उपजिह्वायां निर्गुण्ड्यादियोगः ।—

निर्गुण्डीमुत्पलं कन्दं चर्वयेदुपजिह्वके ॥४६॥

अथ क्रिमिदन्ते अभयागुडिका ।—

ताम्रपात्रे च्युतं पाच्यमभयाचूर्णकं मधु ।
करेण गुड़िका कार्य्या दन्तैर्धार्य्या क्रिमीन् हरेत् ॥४७॥

अथ क्रिमिदन्ते कासीसादिगुडिका ।—

कासीसं हिङ्गु सौराष्ट्री देवदारु समं जलैः ।
गुड़िकां धारयेद्दन्तैः क्रमिशूलहरं परम् ॥४८॥

अथ क्रिमिदन्ते विशालाधूमः ।—

विशालायाः फलं चूर्ण्यं तप्तलोहोपरि क्षिपेत् ।
तद्धूमाद्भ्रष्टदन्तानां कीटपातो भवत्यलम् ॥४९॥

---

पाठे—वराहक्रान्ता, लज्जावती लता वा । भक्ष्यं मुखे धार्य्यमित्यर्थः, सेव्यं वा । अनु सेवनानन्तरम् ॥ ४५ ॥

निर्गुण्ड्यादियोगे—उत्पलं कन्दं नीलोत्पलकन्दम् । उपजिह्वके उपजिह्वाख्य-जिह्वागतमुखरोगभेदे ॥ ४६ ॥

अभयागुडिकायां—मधु किञ्चिज्जलेनालोड्य पक्तव्यं, समुदिते च गुडपाकलक्षणे युक्त्या अभयाचूर्णं तत्र प्रक्षिप्य गुडिकां कारयेत् । क्रिमीन् दन्तक्रिमीन् ॥ ४७ ॥

कासीसादिगुडिकायां—सौराष्ट्री सौराष्ट्रमृत्तिका ॥ ४८ ॥

विशालाधूमे—विशाला गोरक्षकर्कटी । "विशालायाः फलं चूर्ण्यं" इत्यत्र "विशालायाः पत्रं चूर्णम्" इति पाठान्तरम् । तदिति ।—अग्निवर्णीकृतलौहखण्डोपरि निक्षिप्तविशालाफलचूर्णोत्थधूमात् भ्रष्टदन्तानां धूमस्पर्शेन कृष्णवर्णत्वात् भ्रष्टानामिव दन्तानां, सन्तप्तलौहतापेन तप्तानां दन्तानामित्यर्थो वा ; क्रिमिदन्तके तद्भक्षितदन्तानां कृष्णच्छिद्रवत्त्वात् दग्धवत्परिदृश्यमानानां दन्तानामित्यर्थो वा ; तथा च सुश्रुते—"कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः । अनिमित्तरुजो वातात् विज्ञेयः क्रिमिदन्तकः ॥" इति । "तद्धूमाद्भ्रष्टदन्तानां कीटपातः" इत्यत्र "तद्धूमो हन्त कीटानामुक्तः पातः" इति क्वचित् पाठः ॥ ४९ ॥

अथ चलदन्ते जातीपत्रादिचर्वणम् ।—

जातीकोरण्टपत्रञ्च चर्वयेत् प्रातरुत्थितः ।
स्थिराः स्युश्चलिता दन्तास्तत्काष्ठैर्दन्तधावनात् ॥५०॥

अथ चलदन्ते मूलकबीजप्रयोगः ।—

मूलबीजं मुखे धार्य्यं दन्तदार्ढ्यकरं परम् ॥५१॥

अथ मुखवैरस्ये आरनालगण्डूषः ।—

किञ्चिल्लवणसंयुक्तमारनालं विपाचयेत् ।
तेन गण्डूषमात्रेण मुखवैरस्यनाशनम् ॥५२॥

अथ चूर्णदग्धे तैल-काञ्जिकगण्डूषौ ।—

ताम्बूलचूर्णदग्धस्य गण्डूषस्तिलतैलतः ।
काञ्जिकैर्लवणाक्तैर्वा गण्डूषः सुखदायकः ॥५३॥

अथ सहस्रश्लोकधारियोगः ।—

अश्वगन्धाऽजमोदा च वचा कुष्ठं कटुत्रयम् ।
शतपुष्पा ब्रह्मबीजं सैन्धवञ्च समं समम् ॥ ५४॥
एतदर्द्धं वचाऽर्द्धञ्च चूर्णितं मधुसर्पिषा ।

---

जातीपत्रादिचर्वणे—जाती मालती तस्याः पत्रं, कुरण्टः सहचरः तस्य इदं कौरण्टं, जातीपत्रं तथा कौरण्टपत्रञ्च । तत्काष्ठैः जातीकौरण्टकाष्ठैः ॥ ५० ॥

मूलकबीजप्रयोगे—मूलबीजं मूलककन्दबीजम् ॥ ५१ ॥

आरनालगण्डूषे—चतुर्थांशसैन्धवलवणेन सह काञ्जिकमुष्णीकृत्य गण्डूषं कुर्य्यात ॥ ५२ ॥

तैल-काञ्जिकगण्डूषयोः,—ताम्बूलचूर्णदग्धस्य ताम्बूले यत् चूर्णं ताम्बूलसहितं यच्चूर्णमिति वा विग्रहः, तेन दग्धस्य । सुखदायकः चूर्णदग्धक्षतप्रशमकः ॥ ५३ ॥

सहस्रश्लोकधारियोगे—शतपुष्पा "शुल्फा" इति प्रसिद्धम् । ब्रह्मबीजं पलाशबीजम् । एतदर्द्धं वचार्द्धञ्च एतेषां वचावर्जितानाम् अश्वगन्धादीनां मिलितानाम्

भक्षयेत् कर्षमात्रन्तु जीर्णान्ते क्षीरभोजनः ॥
सहस्रग्रन्थधारी स्यान्मूको वा वाक्पतिर्भवेत् ॥५५॥

अथ कण्ठशालूकादौ पारदादिप्रलेपः ।—

पारदं विमलं ताप्यं त्रिकटु ताम्रसैन्धवम् ।
तुल्यं गवां जलैः पिष्टं सुखोष्णं लेपयेन्मुहुः ॥
त्र्यहेण कण्ठशालूकं गलग्रन्थिञ्च नाशयेत् ॥५६॥

अथ गलकीले सैन्धवप्रलेपः ।—

लेपयित्वा तु दुग्धेन सैन्धवं गलकीलनुत् ॥५७॥

अथ मुखरोगे ताप्यादिवटी ।—

ताप्याभ्रतुल्यकुनटी-राजावर्त्तशिलाजतु ।
गुग्गुलुर्हरवीर्यञ्च मुखरोगनिवर्हणम् ॥५८॥

अथ गलरोगे मण्डूरलेपः ।—

महिषीमूत्रसम्पिष्टं लोहकिट्टं चणं पचेत् ।
तेन लेपो निहन्त्याशु गलरोगं सुदुःसहम् ॥५९॥

अथ अपचीगण्डमालयोः काञ्चन्यादिलेपः ।—

जलेन पेषयेत्तुल्यं काञ्चनीचित्रकं विषम् ।
सप्ताहं लेपयेत्तेन ह्यपच्यो गण्डमालिकाः ॥
स्फुटन्ति नात्र सन्देहः स्फोटे लेपमिमं कुरु ॥६०॥

---

अर्द्धं, वचायाश्च अर्द्धमिति मिलित्वा एको भाग इत्यर्थः। कर्षमात्रम् अश्वगन्धादीनां मिलित्वा कर्षार्द्धं वचायाश्च कर्षार्द्धमिति कर्षमात्रमित्यर्थः ॥ ५४।५५ ॥

पारदादिप्रलेपे—पारदं भस्मसूतम। विमलं रौप्यमाक्षिकम्। ताप्यं स्वर्ण-माक्षिकम। गवां जलैः गोमूत्रैः ॥ ५६ ॥

सैन्धवप्रलेपे—सुगमं स्पष्टम ॥ ५७ ॥

ताप्यादिवटिकायां—कुनटी मनःशिला। हरवीर्यं पारदः; एतत् सर्वं जलेन पिष्ट्वा लेपयेत वटिकां कृत्वा भक्षयेद्वा ॥ ५८ ॥

मण्डूरलेपे---लोहकिट्टं मण्डूरम ॥ ५९ ॥

काञ्चन्यादिलेपे—काञ्चनी हरिद्रा स्वर्णक्षीरी वा। अपच्यः इत्यत्र तथा

निजद्रावेण सम्पिष्ट-मुण्डीमूलप्रलेपनात्।
गण्डमालाः क्षयं यान्ति तद्रवञ्च पिबेज्जलम् ॥६१॥

अथ गण्डमालायां ब्रह्मदण्डीप्रलेपः।—

ब्रह्मदण्डीयमूलन्तु पिष्टं तण्डुलवारिणा।
स्फुटितां हन्ति लेपेन गण्डमालां न संशयः ॥६२॥

अथ गण्डमालायां पञ्चाङ्गप्रलेपः मुण्डीप्रलेपश्च।—

गन्धकं सूतकं तुल्यमर्कंक्षीरेण सैन्धवम्।
पिष्ट्वा च काञ्चनीमूलं लेपोऽयं गण्डमालिकाम् ॥६३॥
अदृश्यां स्फोटयत्याशु मुण्डीद्रावेण पेषितम्।
तन्मूलं लेपयेत्तत्र त्रिःसप्ताहं प्रशान्तये ॥६४॥

अथ गण्डमालायां जैपालप्रलेपः।—

पिष्ट्वा जैपालपत्राणि स्वरसेन ततो वटी।
छायाशुष्का तया लेपात् गण्डमालां विनाशयेत् ॥६५॥

---

इति शेषः, अपचीव्रणा इत्यर्थः; "अपच्यो गण्डमालिकाः" इति कल्पनं सुगमम्। "अपच्याः" इत्यत्र "अदृश्याः" इति क्वचित् पाठः। स्फोटे काञ्चन्यादिप्रलेपेन स्फुटनजनिते अपच्यादिस्फोटे। इमं निजेत्यादिना वक्ष्यमाणम्। निजद्रावेण मुण्डी-मूलस्वरसेन। मुण्डी अलम्बुषा, भूमिकदम्बः इत्यर्थः। तद्रवं जलं मुण्डीस्वरस-मित्यर्थः। पिबेत् अनुपिबेदित्यर्थः ॥ ६०।६१ ॥

ब्रह्मदण्डीप्रलेपे—ब्रह्मदण्डीयमूलं भार्गीमूलम्। स्फुटितां काञ्चन्यादिलेपेन स्फुटिता-मित्यर्थः। आदौ काञ्चन्यादिलेपेन स्फोटयित्वा पश्चादेतल्लेपं दद्यादित्याशयः ॥६२॥

पञ्चाङ्गप्रलेप-मुण्डीप्रलेपयोः,—अदृश्याम् दुर्दृश्याम, उत्पद्यमानामित्यर्थः, गन्ध-कादिकृतो लेपः अदृश्यां गण्डमालामाशु स्फोटयति, ततः प्रशान्तये निःशेष-निहत्यै मुण्डीद्रावेण पेषितं तन्मूलं मुण्डीमूलं त्रिसप्ताहं तत्र लेपयेत्। अदृश्यामिति पदं लेपयेदित्यनन्तरमन्वेतव्यं वा; एवञ्च तन्मूललेपः गण्डमालाम् अदृश्यां, कारयतीति शेषः ॥ ६३।६४ ॥

जैपालप्रलेपे—स्वरसेन जैपालपत्ररसेनेत्यर्थः ॥ ६५ ॥

अथ चलद्दन्ते हेमतारादिगुटिका।—

हेमतारयुतं सूतं तालकं क्षीरमर्दितम्।
क्षौद्रे तिलानां तैलेन प्रस्विन्नं दन्तदार्ढ्यकृत् ॥६६॥

अथ चलद्दन्ते धातुबद्धरसगुटिका।—

दन्तदार्ढ्यप्रसिद्ध्यर्थं गुटिकां देहि सर्वदा।
रसस्य धातुबद्धस्य चालनं घर्षणं तथा ॥६७॥
कृप्यादिचूर्णमादाय पिष्टिं साधय यत्नतः।
निम्बूमध्ये विनिक्षिप्य दिनानां पञ्च धारय ॥६८॥
तालचूर्णं समादाय भानुदुग्धेन भावयेत्।
तन्मध्ये गुलिकां क्षिप्त्वा पचस्व तिलतैलके ॥६९॥
दोलायन्त्रे निबध्यैनां यत्नेन दिवसत्रयम्।
मलापकर्षणं कृत्वा मधुभाण्डे निधापयेत् ॥
मुखे धारय दन्तानां दार्ढ्याय गुटिकामिमाम् ॥७०॥

---

हेमतारादिगुटिकायां—हेमतारयुतं हेमतारं तुत्थकं, दन्त्यत्वात्, तेन युतम्। क्षौद्रे इत्यत्र प्रक्षिप्तं, तथा प्रस्विन्नमित्यत्र च दोलायन्त्रे इति शेषः, कृप्येत्यादिना वक्ष्यमाणे योगे तथाभूतकल्पनादर्शनात्; हेमतारादिकं दुग्धेन पिष्ट्वा गुटिकां विधाय दोलायन्त्रे तिलतैलेन यामद्वयं ग्रामं वा पक्त्वा क्षौद्रभाण्डे स्थापयेत्, सा च गुटिका मुखे धृता दन्तदार्ढ्यकारिणी भवेदिति। "हेमतारयुतं सूतं तालकं क्षीरमर्दितम्" इत्यत्र "हेमतारयुतः सूतस्तिलार्कक्षीरमर्दितः" इति पाठान्तरम् ॥ ६६ ॥

धातुबद्धरसगुटिकायां—दन्तदार्ढ्यप्रसिद्ध्यर्थं दन्तदार्ढ्यस्य प्रकर्षेण सम्पादनार्थमित्यर्थः। गुटिकामित्यस्य रसस्य धातुबद्धस्येत्यनेन सम्बन्धः। गुटिकां कृप्यादीत्यादिना वक्ष्यमाणाम्। चालनं धातुबद्धरसगुटिकायाः मुखान्तः भ्रामणं, घर्षणं तयैव दन्तानां मार्जनमित्यर्थः। रसगुटिकाचालनघर्षणं कर्त्तव्यमित्युक्तम्, अतस्तामेव विवृणोति, कृप्यादीति।—अत्र आदिपदेन ताम्रसीसकवङ्गादीनां धातूनां ग्रहणम्, एषान्तु व्यस्तानां समस्तानां वा प्रयोगः कार्यः। पिष्टिं तक्रयवद्रवसूताभ्यां पेषणात् पिष्टकाकारं पिण्डाकारं वा, "तक्रयवद्रवसूताभ्यां तारपिष्टिं प्रकल्पयेत्" इति रसमुक्तिदर्शनात्। निम्बूमध्ये जम्बीररसमध्ये। भानुदुग्धेन

अथ शिरोरोगाणां नामानि।—

**शिरस्तोदाश्चतुर्द्धोक्ता दोषैः सर्वास्रजन्तुभिः।**
**कम्पश्चार्द्धावभेदश्च सूर्य्यावर्त्तोऽपि शङ्खकः ॥७१॥**

अर्कक्षारेण भावयेदिति शेषः। तन्मध्ये अर्कक्षारभावितनालचूर्णकृतपिण्डमध्ये गुलिका कृष्णादिचूर्णकृतपिष्टिमित्यर्थः। मलापकर्षणं गुटिकागात्रसंलग्नतैलादिमार्जनम् ॥ ६७—७० ॥

नेत्रकर्णादीनां शिरःसंश्रितत्वात् तद्गतरोगचिकित्सिताभिधानानन्तरं शिरोरोगचिकित्सितारम्भः। तत्रादौ तस्य नामान्याह, शिर इति।—शिरस्तोदाः शिरःशूलानि, शिरोरोगा इत्यर्थः, चतुर्द्धा इति दोषैस्त्रिभिः सर्वैश्च एकः इति चतुःप्रकार इत्यर्थः; सर्वास्रजन्तुभिरित्यत्र सर्व इति पदं समासान्तर्गतमपि आकृष्य पृथक्तया चतुर्द्धा इत्यनेन अन्वेतव्यम्; सर्वः सर्वदोषः, अस्रं रक्तं, जन्तुः क्रिमिः, ते तैः, त्रिदोषजः रक्तजः क्रिमिजश्चेत्यर्थः. अथवा—दोषैः वातपित्तकफैरेकविधः सर्वास्रजन्तुभिश्च त्रिविधः इति मिलित्वा चतुर्द्धा; अत्र दोषैः पृथक् वातपित्तकफैः त्रिविधस्यापि पृथक्सामान्यादेकत्वेन परिगणनम् इति। कम्पः शिरःकम्पः; अस्य गणना तु रुग्विनिश्चयकृता न कृता, वातजशिरोरोगे, वातव्याधौ शिरोगतवाते वेपथुवाते वा तस्यान्तर्भावात्; वाग्भटे चरके च पृथक् चिकित्साभिधानात् तल्लक्षणं प्रदर्शितं, तथा च वाग्भटः,—"वातोल्बणाः शिरःकम्पं तत्रांश्च कुर्वते मलाः" इति। चरकोऽप्याह—"वातो रुक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत्" इति। ननु सुश्रुते "शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः। सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ सूर्य्यावर्त्तानन्तवातार्द्धावभेदकशङ्खकैः ॥" इत्यनेन क्षयजानन्तवाताभ्यां सह एकादश शिरोरोगाः प्रदर्शिताः, अत्र तु क्षयजानन्तवातौ न पठितौ, तथा दश च शिरोरोगाः प्रदर्शिताः। कथमेतद्वैषम्यम्? इति चेदुच्यते—क्षयजस्य वातजे अन्तर्भावादेव न तस्य पृथग्ग्रहणं, यदुक्तं—"वायोर्धातुक्षयात् कोपः" इति। मधुकोषकृताऽप्युक्तम्—"अस्य वातजत्वं व्युत्पादितमेव। चरकोऽप्याह—'स्त्रीप्रसङ्गादभिघातादथवा देहकर्षणात्। क्षिप्रं सञ्जायते कृच्छ्रः शिरोरोगः क्षयात्मकः ॥ वातपित्तात्मकं लिङ्गं व्यामिश्रं तत्र लक्षयेत् ॥' इति।" अनन्तवातस्य च अन्यतोवाताख्यनेत्ररोगविशेषेण तुल्यलक्षणत्वात् अग्रहणम्; एवं सुश्रुतादिष्वपि दृश्यते। यत्तु माधवकरेण स्वसङ्ग्रहे अनन्तवातः अधिकत्वेन पठितः, तत् अस्मिन् हनुग्रहलक्षणदर्शनात् केवलवातजेनान्यतोवातेन विशिष्टताप्रदर्शनार्थमिति मन्तव्यम् ॥ ७१ ॥

अथ शिरोरोगचिकित्सा।—

अथ अर्द्धावभेदके गिरिकर्णीप्रयोगः।—

गिरिकर्णीफलं मूलं सजलं नस्यमाचरेत्।
मूलं वा बन्धयेत् कर्णे निहन्त्यर्द्धशिरोव्यथाम् ॥७२॥

अथ अर्द्धावभेदके गुडादिनस्यम्।—

गुडं करञ्जबीजञ्च नस्यमुष्णजलैर्हितम् ॥७३॥

अथ अर्द्धावभेदके मरिचप्रलेपः।—

मरिचं भृङ्गजैर्द्रावैर्लेपोऽयं हन्ति तां रुजम् ॥७४॥

अथ चन्द्रकान्तो रसः।—

मृतसूताभ्रकं तीक्ष्णं कान्तं ताम्रं मृतं समम्।
स्नुहीक्षीरैर्दिनं मर्द्यं पिण्डं तन्माषमात्रकम्॥
सप्ताहात् सूर्य्यावर्त्तादीन् शिरोरोगान् विनाशयेत् ॥७५॥

अथ शिरःशूले कुङ्कुमादिनस्यम्।—

कुङ्कुमं मधुयष्टी च सिताघृतगुणोत्तरम्।
सप्ताहेन कृते नस्ये दाहं हन्ति शिरोरुजाम् ॥७६॥

---

गिरिकर्णीप्रयोगे—गिरिकर्णी श्वेतापराजिता। "गिरिकर्णीफलं मूलं सजलम्" इत्यत्र "गिरिकर्णीफलरसं मूलञ्च" इति पाठान्तरम्। "सजलम्" इत्यत्र "सदलम्" इति क्वचित् पाठः। मूलं वा गिरिकर्ण्या एव मूलमित्यर्थः। अर्द्धशिरोव्यथाम् अर्द्धावभेदकम् ॥७२॥

गुडादिनस्ये—सर्वं स्पष्टम् ॥ ७३ ॥

मरिचप्रलेपे—तां रुजम् अर्द्धावभेदकरुजमित्यर्थः। "गुडं…रुजम्" इति योगद्वयस्थले भैषज्यरत्नावल्या "गुडा करञ्जबीजञ्च तयोः कल्को जले कृतः। मरिचैर्भृङ्गराजैश्च शीघ्रं हन्ति शिरोव्यथाम् ॥" इति पाठं प्रकल्प्य एक एवायं योगः पठितः ॥ ७४ ॥

चन्द्रकान्तरसे—मृतसूतं पारदभस्म। रसरत्नाकरे रसेन्द्रसारसङ्ग्रहे च "कान्तम्" इत्यत्र "गन्धम्" इति पाठो दृश्यते। रसरत्नाकरे च "सूर्य्योदयरसः" इति नाम्ना निर्दिष्टोऽयं योगः। अस्य उपयोगविधिरपि तत्रैव प्रदर्शितः यथा—"मधुना मर्दितं सेव्यं लौहपात्रे दिने दिने" इति ॥ ७५ ॥

कुङ्कुमादिनस्ये—मधुयष्टी यष्टिमधु। गुणोत्तरम् उत्तरोत्तरमात्राद्धमित्यर्थः,

अथ अर्द्धावभेदके मरिचप्रयोगः।—

शिग्रुपत्ररसैर्मर्द्यं मरिचस्यार्द्धशूलनुत् ॥७७॥

अथ शिरःशूले कुङ्कुमप्रयोगः।—

कुङ्कुमं घृतसंयुक्तं नस्याद्धन्ति शिरोरुजम् ॥७८॥

अथ यूकालिक्षायां पारदप्रयोगः।—

पारदं मर्दयेन्निष्कं कृष्णधुस्तूरजैर्द्रवैः।
नागवल्लीदलैर्वाऽथ वस्त्रखण्डं प्रलेपयेत् ॥७९॥
तद्वस्त्रं मस्तके वेष्ट्य धार्य्यं यामत्रयं बुधैः।
यूकाः पतन्ति निःशेषाः सलिक्षा नात्र संशयः ॥८० ॥

अथ दारुणहरतैलम्।—

कण्टकारीफलरसैस्तैलं तुल्यं विपाचयेत्।
जयापुष्पद्रवैर्वाऽथ तल्लेपो दारुणप्रणुत् ॥८१॥

अथ केशपाते हरिद्रादिलेपः।—

द्विनिशा नवनीतेन लेपाद्वा खण्डकेशनुत् ॥८२॥

---

तेन च कुङ्कुम १ भा, यष्टिमधु २ भा, सिता ३ भा, घृत ४ भा, सर्वं घृतेन पिष्ट्वा तेनैवालोड्य च नस्यं कार्य्यमिति। योगोऽयं वातासृग्गुल्मे पित्तजे च प्रशस्तः, तन्त्रान्तरेऽपि तथाविधदर्शनात् ॥७६॥

मरिचप्रयोगे—शिग्रुपत्ररसमृष्टमरिचचूर्णेन नस्यं कार्य्यमिति ॥ ७७ ॥

कुङ्कुमप्रयोगे—सर्वं स्पष्टम्। तन्त्रान्तरे तु योगेऽस्मिन् शर्करायोगोऽपि दृश्यते, किञ्च शर्कराकुङ्कुमे घृतेन चालोड्य चाग्नौ किञ्चित् उत्ताप्य च नस्यार्थे योज्यमिति ॥७८॥

पारदप्रयोगे—यूकाः लिक्षाः केशाश्रयाः क्रिमिविशेषाः "उकुन" "निकि" च इति भाषा ॥ ७९ ८० ॥

दारुणहरतैले—जयापुष्पद्रवैः जयन्तीपुष्परसैः, तुल्यमिति पदम् अत्रापि सम्बध्यते। "जया" इत्यत्र "जपा" इति पाठान्तरम्। दारुणप्रणुत् दारुणः केशरोगविशेषः, "खुस्की" इति भाषा ॥ ८१ ॥

हरिद्रादिलेपे—द्विनिशा हरिद्रा दारुहरिद्रा च। खण्डकेशनुत् इन्द्रलुप्तनाशिनीत्यर्थः ॥८२॥

अथ केशपाते वाङ्गजातीप्रलेपः।—

जातीपुष्पदलं मूलं कृष्णगोमूत्रपेषितम्।
लेपोऽयं सप्तरात्रेण दृढकेशकरः परम् ॥८३॥

अथ केशपाते शृङ्गाटादितैलम्।—

शृङ्गाटत्रिफलाभृङ्गी-नीलोत्पलमयोरजः।
सूक्ष्मचूर्णं समं कृत्वा पचेत्तैले चतुर्गुणे॥
तल्लेपेन दृढाः केशाः कुटिलाः सरला अपि ॥८४॥

अथ इन्द्रलुप्ते भल्लातादिलेपः।—

कीटभक्षितकेशान्त-स्थानं स्वर्णेन घर्षयेत्।
यावत् सुतप्ततां याति ततो लेपमिमं शृणु ॥८५॥
भल्लातकञ्च बृहती गुञ्जामूलं फलं तथा।
मधुना सह लेपेन चाम्पारोगचयप्रणुत् ॥८६॥

---

वाङ्गजातीप्रलेपे—जातीपुष्पदलं मालतीपुष्पं मालतीपत्रञ्च; "दलम्" इत्यत्र "फलम" इति पाठान्तरम्। मूलमपि जात्या एव ॥८३॥

शृङ्गाटादितैले—शृङ्गाटः शृङ्गाटकः तस्य पत्रं कन्दो वा। भृङ्गी भृङ्गराजः। अयोरजः लौहचूर्णम्। शृङ्गाटादीना कल्कः तैलपादिकः, जलमत्र चतुर्गुणं पाकार्थं देयम ॥ ८४ ॥

भल्लातकादिप्रलेपे—कीटभक्षितकेशान्तस्थानम् इन्द्रलुप्तमित्यर्थः, इन्द्रलुप्तस्य केशादाख्य-रक्तजक्रिमिकार्य्यत्वेन तन्त्रान्तरे प्रसिद्धत्वात्, "रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥ रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं खालित्यं रुह्येति च विभाव्यते ॥" इतीन्द्रलुप्तलक्षणे शोणितस्यापि तत्कारणत्वेनोल्लेखात, शोणिते च क्रिम्युत्पत्तिसम्भवात् वा। स्वर्णेन सुवर्णधातुना धुस्तूरेण वा घर्षयेत् आदौ इन्द्रलुप्तस्थानं कर्कशपत्रैः शस्त्र-वस्त्रन्यादिना वा उल्लिख्य पश्चात् स्वर्णेन घर्षयेदित्यर्थः। यावत सुतप्ततां याति यावत् कालं घर्षणेन तत स्थानं सन्तप्तं भवति तावत् घर्षयेत्, ततो भल्लातकादिना लिम्पे-दित्यर्थः। चक्रेण तु भल्लातकमित्यादिना चत्वारो योगाः उक्ताः, तथा च—"भल्लातक-बृहतीफलगुञ्जामूलफलैश्च एकैन। मधुसहितेन विलिप्तं सुरपतिलुप्तं प्रशमं याति ॥"

अथ इन्द्रलुप्ते गुञ्जाप्रयोगः।—

गुञ्जामूलं फलं चूर्णं कण्टकार्य्याः फलद्रवैः।
तेन लेपेन हन्त्याशु चाचारोगं सुदुःसहम् ॥८७॥

अथ सूर्य्यावर्त्तादौ अभ्रादिवटिका।—

अभ्रजीर्णरसस्तीक्ष्णं गुडोच्चीरं सुरायसम्।
गुल्वञ्च सूर्य्यावर्त्तादीन् शिरोरोगान्निवर्त्तयेत् ॥८८॥

अथ पलितादौ कटुतैलनस्यम्।—

कटुतैलशृतं नस्यं पलितारुंषिकापहम् ॥८९॥

इति। अत्र शिवदासः,—"भल्लातकबृहतीफलयोः रसः, उक्तं हि वाग्भटे—'सक्षौद्र-गुदवार्त्ताकु-स्वरसेन रसेन वा। धुस्तूरस्य च पत्राणां भल्लातकरसेन वा ॥' इति।" चाम्पारोगचयप्रणुत् इत्यत्र चाम्पारोगः इन्द्रलुप्तः। "चाम्पा" इत्यत्र "चाचा" इति पाठकल्पना साधीयसी, वाग्भटे इन्द्रलुप्तस्य चाचेति नामान्तरदर्शनात्, तथा च—"तदिन्द्रलुप्तं रुध्याञ्च प्राहुश्चाचेति चापरे" इति। क्वचित् "रुध्या" इति पाठः ॥८५।८६॥

गुञ्जाप्रयोगे—वा-शब्दः लुप्तो द्रष्टव्यः, गुञ्जायाः मूलचूर्णं फलचूर्णं वा इत्यर्थः। सिद्धयोगे तु कण्टकारीस्थाने बृहतीफलरसेन पेषणविधिर्दृश्यते। अत्रापि आदौ नखरञ्जन्यादिना उल्लिख्य स्वर्णेन घर्षणं कर्त्तव्यम्; तथा च—"बृहतीफल-रसपिष्टं गुञ्जामूलफलञ्चेन्द्रलुप्तस्य। कनकनिघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा ॥" इति। अत्र शिवदासव्याख्या—"पक्वबृहतीफलरसस्तेन पिष्टं गुञ्जाया मूलं फलं वा। कनकं सुवर्णं धुस्तूरस्य फलं वा। प्रच्छितस्य नखरञ्जन्यादिना विलिखितस्य" इति। "चाचारोगम्" इत्यत्र "चाप्यरोगम्" इति पाठस्तु न समीचीनः ॥ ८७ ॥

अभ्रादिवटिकायाम्—अभ्रेण सह जीर्णरसः अभ्रजीर्णरसः अभ्रं रसभस्म च इत्यर्थः; "अभ्रं जीर्णरसः" इति पाठः सुगमः। तीक्ष्णं तीक्ष्णलौहम्। सुरायसं सुरा मद्यम् आयसं लौहं कान्तलौहमित्यर्थः; किंवा—सुरायसं सुरैः ब्रह्मादिभिर्देवताद्यैः अधिष्ठितम् आयसं लौहं कान्तलौहमित्यर्थः, तथा च अस्यैव पञ्चमाध्याये—"भ्रामकं चुम्बकञ्चैव कर्षकं द्रावकन्तथा। एवं चतुर्विधं कान्तं रोमकान्तञ्च पञ्चमम् ॥ एकद्वित्रिचतुःपञ्च-सर्वतोमुखमेव तत्। पीतं कृष्णं तथा रक्तं त्रिवर्णं स्यात् पृथक् पृथक् ॥ क्रमेण देवतास्तत्र ब्रह्माविष्णुमहेश्वराः ॥" इति ॥ ८८ ॥

कटुतैलनस्ये—अरुंषिका शिरोगतव्रणविशेषः ॥ ८९ ॥

अथ खालित्ये स्नुह्यादितैलं विषतैलञ्च ।—

स्नुह्यर्कक्षीरभृङ्गाम्बुगोमूत्रकलिनीविषैः ।
गुञ्जाविशालामरिचैः कटुतैलं विपाचितम् ॥
खलतिं शमयत्यम्लपिष्टमष्टगुणं विषात् ॥९०॥

अथ व्रणस्य भेदनिर्देशः ।—

दोषैर्द्वन्द्वैः समस्तैश्च सास्रैस्तैरस्रजाऽपि च ।
व्रणभेदा इति प्रोक्ता वैद्यशास्त्रविशारदैः ॥९१॥

स्नुह्यादितैले—स्नुह्यर्कयोः क्षीरम् । कलिनीविषैः लाङ्गल्याख्योपविषैः, विषमिति पृथक्पदं वा लाङ्गली विषञ्चेत्यर्थः । गुञ्जाया मूलं, फलमित्यन्ये । विशाला गोरक्षकर्कटी । अत्र द्रवकार्यार्थं भृङ्गाम्बुगोमूत्रे प्रत्येकं स्नेहाच्चतुर्गुणे देये, मिलित्वा चतुर्गुणे इति केचित् ; अन्येषां कल्कः । चक्रेण तु किञ्चित् परिवर्त्तिततया तैलमिदं पठ्यते, तथा च—"स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम् । मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥ सिद्धार्थं तीक्ष्णतैलञ्च गर्भं दत्त्वा विपाचितम् । वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥" इति । अस्य व्याख्यायां श्रीशिवदासः,—"लाङ्गलीविषं विशल्याकलिकारीमूलाख्यं विषं, किंवा लाङ्गली च विषञ्चेति द्रव्यद्वयम् । सिद्धार्थं श्वेतसर्षपः, तीक्ष्णतैलं सार्षपतैलम् । ज्योतिष्मतीमूलं फलमित्यन्ये । सिद्धार्थतीक्ष्णतैलमिति समस्तपाठपक्षे—तीक्ष्णमिति तैलविशेषणम् अर्जितस्य सर्षपस्य तैलं ज्ञेयम्" इति । वङ्गसेनस्तु—"लाङ्गली मार्कवो विषम्" इति कृत्वा "विषम्" इति पदं पृथगेव तथा "तीक्ष्णतैलञ्च" इत्यत्र "तीक्ष्णगन्धा" इति पठति । विषतैले—अम्लपिष्टम् अम्लालोडितम्, अम्लकाञ्जिकसाधितमित्यर्थः, अष्टगुणमित्यत्र कटुतैलमिति पदं पूर्वतः आकृष्य योजनीयम् ; चतुर्गुणाम्लकाञ्जिकसाधितं विषादष्टगुणं कटुतैलमित्यर्थः, विषस्यात्र कल्कः । यद्वा—अम्लपिष्टम् अम्लीभूतं पिष्टं तण्डुलमित्यर्थः, धान्याम्लमिति यावत् ; अष्टगुणधान्याम्लपिष्टं विषं खलतिं शमयतीति निष्कर्षः ॥९०॥

शिरोरोगेषु अर्द्धावभेदके "शस्त्रारणिनिभां कुर्यात् तीव्राम्" तथा शङ्खके "तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम्" इत्युल्लेखात् व्रणेऽपि शस्त्रारणिनिभायाः वेदनायाः सत्त्वसाधर्म्यात् तथा शोथसाधर्म्याच्च, किञ्च शिरसो मर्मस्थानत्वेन तद्रोगाणां असंयतत्वात्, व्रणानामपि मर्मस्थानोत्पत्तेः सम्भावितत्वाच्च शिरोरोगानन्तरं व्रणचिकित्सितं विवक्षुरादौ तस्य दोषभेदं निरूपयति, दोषैरिति ।—दोषैः पृथक् वातपित्तकफैः । सास्रैः सरक्तैः रक्तान्वितैरित्यर्थः, तैः दोषैः पृथग्द्वन्द्वसमस्तात्मकैरित्यर्थः,

अथ व्रणचिकित्सा ।—

अथ व्रणशोधने ताम्रप्रयोगः ।—

शुल्वचूर्णं रसे जीर्णं मदयन्तीपुनर्नवे ।
मेषशृङ्गीरसश्चैतद्व्रणशोधनरोपणम् ॥९२॥

अथ व्रणरोपणे पटोलादिपूरणम् ।—

पटोलनिम्बपत्रञ्च मधुयष्टीनिशातिलाः ।
त्रिवृद्दन्तीरसैः पिष्ट्वा पूरयेत् व्रणरोपणम् ॥९३॥

अथ व्रणरोपणे निम्बपत्रादिपूरणम् ।—

निम्बपत्रं तिलं पिष्ट्वा पूरयेन्मधुसर्पिषा ॥९४॥

---

पवञ्च पृथग्दोषैस्त्रयः द्वन्द्वैस्त्रयः समस्तैरेकः सास्रैः पृथग्दोषैस्त्रयः सास्रैर्द्वन्द्वैस्त्रयः सास्रैः समस्तैरेकः केवलेन रक्तेन चेकः इति मिलित्वा दोषप्रसरेण पञ्चदश व्रणभेदाः; उक्तञ्च माधवकरेण—"रक्तो रक्तयुतो रक्तात् द्विविभः स्याच्चदन्वयैः" इति । अस्य व्याख्यायां श्रीकण्ठः,—"रक्तस्य एकैकस्मिन् दोषे द्वन्द्वे च प्रसरमाह, द्विविभः स्याच्चदन्वयै-रित्यादि ।—रक्तान्वयैरेकैकदोषैः द्वन्द्वैश्च, रक्तान्वितैरेकैकदोषैः त्रिजः व्रणः रक्तान्वितै-र्द्वन्द्वत्रयैस्त्रिजः, एवं दोषत्रयेऽपि रक्तसम्बन्ध ऊहनीयः, एवं पञ्चदशधा प्रसरो दोषाणामुपपद्यते भवति" इति ॥९१॥

ताम्रप्रयोगे—शुल्वचूर्णमिति पदं जीर्णमित्यनेन सम्बध्यते, ताम्रभस्म इत्यर्थः । रसे इत्यस्य मदयन्तीपुनर्नवे इत्यनेन योजना, मदयन्तीपुनर्नवोत्थे रसे इत्यर्थः, मदयन्ती वनमल्लिका तथा सह पुनर्नवः तस्मिन् इति विग्रहः, पुनर्नवाऽर्थकः पुनर्नवशब्दोऽप्यस्तीति दृश्यते; "मदयन्ती" इत्यत्र "मधुपर्णी" इति रसरत्नाकरे पाठः । तथा च—"ताम्रभस्म द्रवेर्मर्द्यं मधुपर्णीपुनर्नवैः । मेषशृङ्ग्यादिनैकेन व्रणशोधनरोपणम् ॥" इति । मदयन्तीपुनर्नवयोः तथा मेषशृङ्ग्याश्च रसेन ताम्रभस्म मर्दयित्वा रक्तिद्वयमानेन व्रणशोधनरोपणार्थं सेव्यम् इति प्रयोगविधिः ॥ ९२ ॥

पटोलादिपूरणे—पटोलस्य पत्रम् । निशा हरिद्रा । चक्रदत्तेन तु "निशा" इत्यत्र "निशाद्वयम्" इति तथा सैन्धवयोगेन च योगोऽयं पठ्यते, तथा च—"पटोलीतिल-यष्ट्याह्व त्रिवृद्दन्तीनिशाद्वयम् । निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥" इति । पूरयेत्, व्रणान्तः इति शेषः ॥ ९३ ॥

निम्बपत्रादिपूरणे—सर्वं स्पष्टम् । योगोऽयं रोपणार्थं प्रयोज्यः, सिद्धयोग-संवादात् ॥ ९४ ॥

अथ आम्राद्यं घृतम् ।—

जातीपत्रं पटोलञ्च निम्बाग्नीरकरञ्जकम् ।
मञ्जिष्ठा मधुयष्टी च तुत्थपत्रकसारिवाः ॥९५॥
प्रत्येकं चूर्णयेत् कर्षं गव्याज्यं द्वादशं पलम् ।
घृताच्चतुर्गुणं तोयं पाच्यमाज्यावशेषितम् ॥९६॥
तेनाभ्यङ्गी मर्मजातान् व्रणान्नाडीव्रणानपि ।
स्रवन्ति सूक्ष्मरन्ध्राणि पूरयेन्नात्र संशयः ॥९७॥

अथ व्रणरोपणे अपामार्गप्रयोगः ।—

अपामार्गस्य पत्रोत्थ-रसेनाऽऽपूरयेत् व्रणम् ।
किं वा तद्बीजचूर्णेन व्रणं दुष्टं प्ररोहयेत् ॥९८॥

अथ व्रणरोपणे गुडटङ्कणवर्त्तिः ।—

पुरातनगुडैस्तुल्यं टङ्कणं सूक्ष्मचूर्णितम् ।
तद्वर्त्त्या पूरयेद्गूढं व्रणं शीघ्रतरं महत् ॥९९॥

अथ व्रणलेखने पारदादिलेपः ।—

पारदस्य त्रयो भागाः कमलस्यैकविंशतिः ।
जम्बीराम्लेन तत्पिष्टं मार्गिमध्यस्य सप्ततिः ॥१००॥
नवभिर्गन्धकस्यांशैर्भृङ्गसारेण मर्दयेत् ।
सप्ताहमातपे तीव्रे धारितं शस्त्रवल्लिखेत् ॥१०१॥

---

आम्रादिघृते—जाती मालती तस्याः पत्रम् । पत्रकं तेजपत्रम् ॥९५—९७॥

अपामार्गप्रयोगे—तद्बीजचूर्णेन अपामार्गबीजचूर्णेन ॥ ९८ ॥

गुडटङ्कणवर्त्त्यां—गूढं सूक्ष्ममुखमित्यर्थः । महत् गम्भीरमित्यर्थः ॥ ९९ ॥

पारदादिलेपे—कमलस्य ताम्रस्य, लेखनत्वात् रसरत्नाकरसंवादाच्च ; तथा च—"ताम्रचूर्णं समभागं सूतमेकं विमर्दयेत् । सैन्धवं सप्तभागञ्च गन्धकं नवभागकम् ॥ भृङ्गोद्रवैः जम्बीरैः सप्ताहं परिमर्दितम् । तैललिप्तं स्फुटत्याशु यथापक्वं भगन्दरम् ॥" इति । मेदिनीकोषेऽपि ताम्रार्थकः कमलशब्दः विद्यते, तथा च—"कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे" इति । अत्र यद्यपि प्रस्तुतग्रन्थेन सह रसरत्नाकरोक्तभागस्य वैषम्यं विद्यते, तथाऽपि द्रव्यसाम्यप्रदर्शनार्थं कमलशब्दस्य ताम्रार्थकत्वबोधनार्थञ्च पाठो-

अथ भग्नस्य भेदनिर्देशः।—

भग्नो द्विधा निजागन्तु-बाह्याभ्यन्तरभेदतः ॥१०२॥

अथ भग्नचिकित्सा।—

अथ भग्ने पर्पटीरसप्रयोगविधिः।—

भग्नेष्वैरण्डतैलेन प्रयुञ्ज्यात् पर्पटीरसम् ॥१०३॥

अथ भग्ने वज्रीलेपः कान्तपाषाणलेपश्च।—

वज्रीं पिष्ट्वा बालकस्य प्रणुत्त्यै मेषीदुग्धं कान्तपाषाणतुल्यैः।
युक्तं लेपादस्थिभग्नं निहन्ति बाह्याभ्यन्तःसंस्थितं तत्क्षणेन ॥१०४॥

अथ भगन्दरलक्षणम्।—

गुदस्य पार्श्वे पिटिकाऽर्त्तिकारी
शोफादियुक्तः स भगन्दरः स्यात् ॥१०५॥

ऽयं प्रदर्शितः इति ज्ञातव्यम्। मार्गिमस्यक्ष मैस्वस्य। भृङ्गमारिषा भृङ्गराजरसेन। लिखित विदारीदिव्यर्थः। रत्नरत्नाकरे योगोऽयं भगन्दरे सन्निवेशितः॥१००।१०१॥

"व्रण गात्रविचूर्णने" इत्यनेन व्रणस्य गात्रविचूर्णनार्थकत्वात्, भग्नेऽपि गात्रचूर्णन-साम्यात, तथा सव्रणाव्रणभेदेन द्विविधे भग्ने व्रणाधिकारे सव्रणस्यापि चिकित्साभि-धानात अनन्तरम् अव्रणभग्नचिकित्सितमुपदिदिक्षुस्तस्य भेदानाह, भग्न इति।—द्विधा इति सव्रणाव्रणभेदेन सन्धिभग्न-काण्डभग्नभेदेन वा द्विप्रकारः इत्यर्थः। निजागन्तु-बाह्याभ्यन्तरभेदतः स एव भग्नः पुनः निजागन्तुभेदेन तथा बाह्याभ्यन्तरभेदेन च भिद्यते; तत्र निजः शारीरदोषजः, स च सन्धिभग्नेषु विश्लिष्टविवर्त्तितादिरूपः, काण्डभग्नेषु अतिपातितवक्रादिरूपश्च अवगन्तव्यः; आगन्तुश्च उत्पिष्टादयः अन्ये अवशिष्टाः इति ज्ञातव्यम्। बाह्यः काण्डभग्नः, आभ्यन्तरः सन्धिभग्न इत्यर्थः; अथवा —बाह्यः कच्चकादिषु स्फुटनलक्षणो भग्नः, आभ्यन्तरः मस्तककपालादिषु भेदनादि-लक्षणो भग्नः इत्यर्थः ॥ १०२ ॥

पर्पटीरसप्रयोगविधौ—पर्पटीरसं रक्तपित्ताद्यधिकारोक्तम् ॥ १०३ ॥

वज्रीलेप-कान्तपाषाणलेपयोः—वज्रीम अस्थिसंहारम। प्रणुत्त्यै प्रकरणादस्थि-भग्नापनोदनार्थेऽर्थः, प्रलेपः कार्य्य इति शेषः। मेषीदुग्धमित्यादौ—कान्तपाषाण-तुल्यैः तुल्यकान्तपाषाणैरित्यर्थः; कान्तपाषाणः राजपट्टम; मेषीदुग्धकान्तपाषाणौ समांशौ पिष्ट्वा लिम्पेत इति ॥ १०४ ॥

भग्नस्यापि व्रणभावसापन्नस्योपेक्षया नाडी भवति भगन्दरेऽपि नाडी भवति,

अथ भगन्दरस्य निरुक्तिः ।—

वृषणासनयोर्मध्ये प्रदेशो भग उच्यते ।
तमेव दारयत्यस्माद्भगन्दर इति स्मृतः ॥१०६॥

अथ भगन्दरचिकित्सा ।—

अथ भगन्दरे उपचारविशेषः ।—

आदौ सर्वप्रयत्नेन पाकं रक्षेत् भगन्दरे ।
स्राव्यं रक्तं व्रणे जाते जलूकां वा प्रयोजयेत् ॥१०७॥

अथ लाङ्गल्यादिप्रलेपः ।—

लाङ्गलीकणाधुस्तूर-विषमुष्टिं प्रलेपयेत् ॥१०८॥

---

एतत्साधर्म्यात् शोथसाधर्म्याच्च अर्शानन्तरं भगन्दरारम्भः । तत्रादौ तस्य स्वरूपलक्षणमाह, गुदस्येति ।—पार्श्वे द्व्यङ्गुले देशे इत्यर्थः ; यदुक्तं माधवेन—"गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकाऽर्त्तिकृत्" इति । पिटिका पिडकापूर्वकः इत्यर्थः, यो व्रणो भवेदिति शेषः ; तथा च वाग्भटः,—"प्रायेण पिटिकापूर्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा । पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ॥ बस्तिमूत्राशयाभ्यासगतत्वात् स्यन्दनात्मकः । भगन्दरः स सर्वश्च दारयत्यक्रियावतः ॥" इति ॥ १०५ ॥

निरुक्तिमाह, वृषणेति ।—आस्यते उपविश्यते अनेन इति व्युत्पत्त्या आसनशब्देनात्र गुद उच्यते ; वृषणासनयोः मुष्कगुदयोः, यदुक्तं राजनिघण्टौ—"गुदमुष्कद्वयोर्मध्ये यो भागः स भगः स्मृतः" इति । "वृषणासनयोः" इत्यत्र "वृषणापानयोः" इति पाठान्तरम् । भगशब्दोऽत्र बस्तिगुदोपलक्षणं, तयोरपि दारणात् ; यदुक्तं सुश्रुतेन —"गुदभगबस्तिप्रदेशदारणात् भगन्दरः" इति । भोजेनाप्युक्तं—"भगं परिसमन्ताच्च गुदं बस्तिं तथैव च । भगवद्दारयेत् यस्मात् तस्मात् ज्ञेयो भगन्दरः ॥" इति ॥१०६॥

उपचारविशेषमाह, आदाविति ।—पाकं रक्षेत् जाता पिडका यथा न पाकमागच्छेत् तथा कुर्यादित्यर्थः । पाकनिवारणोपायं प्रदर्शयति, स्राव्यमिति ।—व्रणे जाते पिडकायामुत्पन्नमात्रायामेवेत्यर्थः । शोणितस्रावणञ्च लङ्घनशोधनपूर्वकं कर्त्तव्यम ; यदुक्तं सिद्धयोगे—"गुदस्य श्वयथुं दृष्ट्वा विशोध्य शोधयेत्ततः । रक्तावसेचनं कुर्य्यात् यथा पाकं न गच्छति ॥" इति । जलूकां जलौकाम ॥१०७॥

लाङ्गल्यादिप्रलेपे—विषमुष्टिः कुचेलकः । लाङ्गल्यादिकं सर्वं तुल्यांशं वारिणा पिष्टा प्रलेपः देयः ॥ १०८ ॥

अथ कालाग्निरसः।—

रसगन्धकसिन्धूत्थ-तुल्यनागाः सजीरकाः।
तिक्तकोषातकीसारैः पिष्टा घ्नन्ति भगन्दरम् ॥१०९॥

अथ चक्रिकाबद्धरसप्रयोगोपदेशः।—

गुल्मोक्तचक्रिकाबद्धो भगन्दरहरः परम् ॥११०॥

अथ रवितारणवरसः।—

शुद्धसूतं द्विधा गन्धं कुमारीरसमर्दितम्।
व्रणहान्ते गोलकं कृत्वा हण्डिकान्ते निरोधयेत् ॥१११॥
शुद्धेन ताम्रपात्रेण तयोस्तुल्येन यत्नतः।
तद्भाण्डं भस्मनाऽऽपूर्य्य चुल्ल्यां तीव्राग्निना पचेत् ॥११२॥
द्वियामान्ते तदुद्धृत्य चूर्णयेत् स्वाङ्गशीतलम्।
जम्बीरस्य द्रवैः पिष्ट्वा रुद्ध्वा सम्पुटैः पचेत् ॥११३॥
गुञ्जैकं मधुराहारं दिवा स्वापञ्च मैथुनम्।
वर्जयेच्छीतलाहारं रसेऽस्मिन् रवितारणवे ॥११४॥

---

कालाग्निरसे—नागः सीसकम्। तिक्तकोषातकी तिक्तघोषकः, "तित्तोरला" इति भाषा, तस्याः सारैः रसैः। अस्य रक्तिद्वयं सेवेत लेपयेच्च; यदुक्तं रसरत्नाकरे—"शुद्धसूतं समं गन्धं मृतनागं सतुत्थकम्। जीरकं सैन्धवं तुल्यं तिक्तकोषातकीद्रवैः॥ पिष्टं तल्लेपनाद्धन्ति भक्षणाच्च भगन्दरम्। रसः कालाग्निनामाऽयं त्रिगुञ्जं मृत्युजिद्भवेत् ॥" इति ॥ १०९ ॥

चक्रिकाबद्धरसप्रयोगोपदेशे—गुल्मोक्तेत्यत्र गुल्मेति पाठः प्रामादिकः, तत्र चक्रिकाबद्धस्य सत्त्वाभावात, वल्मोक्त इत्येव भाव्यः ॥ ११० ॥

रवितारणवे—तयोस्तुल्येन रसगन्धकतुल्येन। यत्नतः यत्नं विरच्येत्यर्थः; "यत्नतः" इति पाठान्तरम्। द्विभागगन्धेन कज्जलीकृतं पारदं दिनवयं कुमारीरसेन मर्दयित्वा गोलकं विधाय च हण्डिकान्तः स्थापयेत्, ततः कज्जलीतुल्यशुद्धताम्रपत्रीकृतेन वारटकवेधयोग्येन भाजनेन तं कज्जलीपिण्डमाच्छाद्य पात्रपिण्डयोः सन्धिं निरुन्ध्यात्, अथ तां हण्डिकां भस्मना पूरयित्वा तीव्राग्निना पचेदिति। रसेन्द्रसारे तु—कज्जलीसमं सूक्ष्मताम्रपत्रं तेन पिण्डेनालिप्य हण्डिकान्तर्निवेश्य च प्रदर्शितरीत्या पचेत्, एवं यन्त्रप्रकारः प्रदर्शितः, तथा च—"शुद्धसूतं द्विधा गन्धं

अथ स्फोटने चतुरङ्गलेपः ।—

ताम्रचूर्णं सप्तभागं भागमेकन्तु पारदम् ।
सैन्धवं सप्तभागञ्च गन्धकं नवभागिकम् ॥११५॥
भृङ्गद्रावैः सजम्बीरैः समाहं घर्ममर्दितम् ।
तेन लिप्तं स्फुटत्याशु यदि पक्वं भगन्दरम् ॥
न शस्त्रैश्छेदयेत् प्राज्ञः स्फोटयेल्लेपनादिभिः ॥११६॥

अथ स्फोटने हरिद्रादिप्रलेपः ।—

हरिद्रानिम्बसिन्धूत्थं पिष्ट्वा लिप्त्वा स्फुटत्यलम् ॥११७॥

अथ शोषणे नरास्थितैलप्रयोगः ।—

नरास्थितैललेपेन स्फुटितं शुष्यति व्रणम् ॥११८॥

अथ शोधनरोपणे ताम्रप्रयोगः ।—

ताम्रभस्म दिनं मर्द्यं मदयन्तीपुनर्नवे ।
मेषशृङ्गीद्रवैस्तेन व्रणशोधनरोपणम् ॥११९॥

---

कुमारीरसमर्दितम् । वाड्यान्ते गोलकं कृत्वा ततस्तेन प्रलेपयेत् ॥ तयोः समं ताम्रपत्रं हरिद्रकान्तर्निवेशयेत् ॥" इति । कण्ठा कवचीयन्त्रे निरुध्येत्यर्थः । "गुञ्जैकम्" इत्यस्मात् परं "मधुनाऽऽज्येन लिह्याद्धन्ति भगन्दरम् ! सुषवीलवणञ्चाम्लमारनाल-युतं पिबेत् ॥ सुञ्जीत—" इत्यधिकः पाठः रसेन्द्रसार-रसरत्नाकरादिषु दृश्यते । भैषज्यरत्नावल्यां तु रसोऽयं "त्रिवर्विभाण्डकः" इति नाम्ना प्रसिद्धः । रसरत्नाकरे भैषज्यरत्नावल्याञ्च "सुषवी लशुनञ्चाम्" इति पाठः ॥ १११—११४॥

चतुरङ्गलेपे—सर्वं सुगमम् । पक्वे भगन्दरे शस्त्रप्रयोगस्य अकर्त्तव्यतामाह,—नेति ॥ ११५।११६ ॥

हरिद्रादिप्रलेपे—निम्बस्य पत्रं ग्राह्यम् । लिप्त्वा इत्यनन्तरं तिष्ठेदिति शेषः । अलम् अतिशयेन, सम्यगित्यर्थः ॥ ११७ ॥

नरास्थितैलप्रयोगे—नरास्थितैललेपेन मानुषास्थिचूर्णतैलाभ्यां लेपेन, मानुषास्थि-निःसृततैललेपेनेति वा ; "लेपो भगन्दरं हन्यात नरास्थ्नां तैलमेव च" इति योग-रत्नाकरदर्शनात् । "शुष्यति" इत्यत्र "शुध्यति" इति पाठान्तरम् ॥ ११८ ॥

ताम्रप्रयोगे—"मर्द्यं मदयन्ती" इत्यत्र "घर्ममदयन्ती" इति पाठे—घर्ममदयन्ती रौद्रिकमर्दिता इत्यर्थः । योगोऽयं व्रणाधिकारे प्राक् पठितः ॥११९ ॥

अथ रोपणे मार्जारास्थिप्रलेपः ।—

**त्रिफलाक्वाथसंयुक्त-मार्जारास्थिप्रलेपनात् ॥१२०॥**

अथ क्षालने त्रिफलाक्वाथः ।—

**क्षालयेत्त्रिफलाक्वाथैर्हन्याद्दुष्टभगन्दरम् ॥१२१॥**

अथ भूलताप्रयोगः ।—

**भूलतोत्थं पिबेच्चूर्णं खररक्तेन संयुतम् ॥१२२॥**

अथ कुक्कुरास्थिलेपः ।—

**श्वानास्थिलेपनं कार्य्यं शीघ्रं हन्याद्भगन्दरम् ॥१२३॥**

---

मार्जारास्थिप्रलेपे—"भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम्" इति श्लोकशेषार्द्धः द्रष्टव्यः ॥ १२० ॥

त्रिफलाक्वाथे—सर्वं स्पष्टम् । भैषज्यरत्नावल्यान्तु त्रिफलेत्यादिना भगन्दरमित्यन्तेन उक्तः योगः एक एव पठितः, तथा च—"भगन्दरं प्रत्यहन्तु सुधौतं त्रिफलाम्बुना । त्रिफलारसपिष्टेन मार्जारास्थ्ना च लेपयेत् ॥" इति ॥१२१॥

भूलताप्रयोगे—भूलताख्यं चूर्णं गण्डूपदचूर्णम् ; "भूलतोत्थम्" इत्यत्र "भूतलोत्थम्" इति पाठेऽपि स एवार्थः, तस्य भूतलादुत्थितत्वात्, सर्वेष्वेव तन्त्रेषु "भूनागः" "भूलता" "भूरोहः" इति पाठदर्शनाच्च ; तथा "पिबेत्" इत्यत्र "लेपः" इति पाठोऽपि तत्र तत्रैव दृश्यते ; यदुक्तं चक्रेण—"खरास्रपक्वभूनाग-चूर्णलेपो भगन्दरम्" इति । अस्य व्याख्याता शिवदासः,—"गर्दभरक्तपक्वगण्डूपदचूर्णलेप इत्यर्थः" इति । एवं योगरत्नाकरे—"शुनोऽस्थिभूलता तक्रैः पेषिता खररक्तयुक् । लेपः" इति । तथा भैषज्यरत्नावली-रसरत्नाकरयोः,—"खरास्रपक्व-भूरोह-चूर्णलेपो भगन्दरम्" इति । खररक्तेन गर्दभरक्तेन ॥ १२२ ॥

कुक्कुरास्थिलेपे—श्वानास्थिलेपनं कुक्कुरास्थिप्रलेपनम् ; अत्रापि सिंहावलोकितन्यायेन मण्डूकप्लुतिन्यायानुसारेण वा "त्रिफलाक्वाथसंयुक्त" इति पाठः पूर्वतः आकृष्टव्यः ; तथा च शिवदासः,—"शुनोऽस्थि इत्यत्र तृतीययोगे त्रिफलारसोऽपि पेषणार्थं ज्ञेयः ; उक्तं हि—'शुनोऽस्थि वा बिड़ालास्थि त्रिफलारसभावितम्' इति ।" "श्वानास्थि" इत्यत्र "शुनोऽस्थि" इति सर्वतन्त्रीयः पाठः साधुः ; महाजनप्रयुक्तत्वात् ग्रहणीयो वा । योगरत्नाकरे तु श्वास्थिभूलताचूर्णयोरैक्यमेव प्रयोगो दृश्यते, तच्च प्रदर्शितमेव ॥ १२३ ॥

अथ ग्रन्थेर्लक्षणं व्युत्पत्तिश्च ।—

मेदोमांसास्रगाः कुर्य्युर्वृत्तं ग्रथितमुन्नतम् ।
दोषाः शोफादिकं तत्र ग्रथनात् ग्रन्थिमाह तम् ॥१२४॥

अथ मेदोग्रन्थौ अरिमेदादिभस्मलेपः ।—

अरिमेदपलाशानां ग्रन्थिभस्म विमर्दयेत् ।
भस्मना तेन दत्तः सन्मेदोग्रन्थिविनाशनः ॥१२५॥

अथ मेदोवृद्धौ गुडूच्यादिः ।—

गुडूचीचूर्णं निष्क-त्रयमुष्णाम्बुमर्दितम् ।
मेदोवृद्धिरसात्तेन हन्ति रोगञ्च पूर्वजम् ॥१२६॥

अथ गण्डमालायामुदयभास्करप्रयोगोपदेशः ।—

गण्डमालां जयत्याशु गुञ्जोक्तोदयभास्करः ॥१२७॥

अथ कालस्फोटादौ पुत्त्रजीवप्रयोगः ।—

पुत्त्रजीवस्य मज्जान्तु जलैः पिष्ट्वा प्रलेपनात् ।
कालस्फोटं विषस्फोटं सद्यो हन्यात् सवेदनम् ॥
ग्रन्थ्यादिनिखिलान् रोगान् सर्वरोगाश्रयान् हरेत् ॥१२८॥

---

उत्सेधसाधर्म्यात् भगन्दरानन्तरं ग्रन्थ्यादिचिकित्सिताधिकारः। तत्रादौ तस्य सामान्यलक्षणं निरुक्तिञ्चाह, मेद इति।—ग्रथितं ग्रन्थिवद्ग्रथितं कठिनमित्यर्थः। ग्रथनात् ग्रन्थिवद्रूपस्येव कठिनत्वात् ॥ १२४ ॥

अरिमेदादिभस्मलेपे—अरिमेदः विट्खदिरः। ग्रन्थिभस्म अरिमेद-पलाशयोः त्वक्स्थग्रन्थिक्षार इत्यर्थः। विमर्दयेत् इत्यत्र ग्रन्थियुक्तस्थले इति शेषः। दत्त इत्यत्र लेप इति शेषः। सन् नित्यं, नित्यं दत्तः लेप इत्यर्थः; "सन्" इत्यत्र "स्यात्" इति पाठः सुगमः ॥ १२५ ॥

गुडूच्यादौ—"गुडूची" इत्यत्र "गुञ्जाग्नि" इति क्वचित् पाठः। निष्कत्रयमिति मिलित्वा बोद्धव्यम्। "मेदोवृद्धिरसात्तेन" इत्यत्र "मेदोवृद्धिमशेषेण" इति क्वचित् पाठः। रोगमिति प्रकरणात् ग्रन्थिमित्यर्थः। पूर्वजं दीर्घकालीनमपीत्यर्थः ॥१२६॥

उदयभास्करप्रयोगोपदेशे—"गुञ्जोक्तोदयभास्करः" इत्यत्र "गुल्मोक्तोदयभास्करः" इति युक्तः पाठः, गुल्मे तस्यापरिदृष्टत्वात् ॥ १२७ ॥

पुत्त्रजीवप्रयोगे—पुत्त्रजीवस्य इङ्गुदीफलस्य मज्जाम् अस्थिमध्यम्। "जलैः"

अथ सन्धिग्रन्थौ रक्तस्रावविधिः।—

सन्धिग्रन्थिस्तापयुक्तो यदि स्यात् चौरं रात्रावोदनं सन्निदध्यात्।
पादाङ्गुष्ठस्याग्रदेशेषु रक्त-स्रावं कुर्य्यात्तेन शीघ्रं सुखी स्यात्॥
॥१२६॥

अथ कक्षग्रन्थ्यादौ पुत्त्रजीवप्रयोगः।—

कक्षग्रन्थिं गलग्रन्थिं कटिग्रन्थिञ्च नाशयेत्।
अन्यञ्च स्फोटकं तीव्रं पुत्त्रजीवो विनाशयेत्॥१३०॥

अथ कालस्फोटे गुञ्जापत्रादिचूर्णम्।—

गुञ्जापत्रं शिलां यष्टिं गवां चौरेण पाययेत्।
कालस्फोटं निहन्त्याशु मज्जा वा पुत्त्रजीवजा॥१३१॥

---

इत्यत्र "बलैः" इति कस्यचित् पाठः। कालस्फोटं कृष्णवर्णस्फोटविशेषं तन्त्रान्तरोक्तम्। विषस्फोटं विस्फोटम्। "ग्रन्थ्यादिनिखिलान् रोगान् सर्वदेहाश्रयान् हरेत्। तद्गुणीयकवचांशु-नागकन्थावरारसैः॥ गोमूत्रे च रसः पिष्टः पुटपक्वोऽर्बुदादिजित्। ब्राह्मीपत्त्राश्रयोः क्वाथे रौतिपत्रं विनिक्षिपेत्॥ दिनत्रयं ततस्तानि पुनस्तेनैव मर्दयेत्। लघुगण्डे समादाय चूर्णकुष्माण्डवारिणा॥ ततस्त्रिवारं कुर्वीत पुटं करमवारिणा। मर्दयित्वा पुटं दद्याद्गोमूत्रेण भावयेत्॥ ततोऽप्येकपुटं दद्यात् तिसस्त्रिकटुभावनाः। आखुपर्णीविडङ्गाग्नि गन्धैरथ विभावितः॥ एवमेष भुसांसङ्गो रसो बल्मीकमद्दहैः। वल्लत्रयमितो देयो वल्मीके तस्य सत्सुधा॥ वल्मीकं संविलिम्पेत् क्रिमिसङ्घप्रशान्तये। रसैस्तत्रवाकण्ठाः सप्तमं हन्ति मारुतम्॥ वासामोरानुपानेन जयेत् कफसमीरणौ॥" इति क्वचिदधिकः पाठः॥ १२८॥

रक्तस्रावणविधौ—सन्धिग्रन्थिः सन्धिदेशस्थः ग्रन्थिः तापयुक्तः पित्ताधिकत्वात् यदि दाहसन्तापादिभिः पीड़ितः। पादाङ्गुष्ठस्य देहस्य यद्भागीयसन्धौ तापयुक्ता ग्रन्थिर्भवेत्, तत्पार्श्वीयपादाङ्गुष्ठस्येत्यर्थः॥ १२९॥

पुत्त्रजीवप्रयोगे—सर्वं स्पष्टम्॥ १३०॥

गुञ्जापत्रादिचूर्णे—शिलां मनःशिलाम्। यष्टिं यष्टिमधुकम्। "कालस्फोटम्" इत्यत्र "तत्स्फोटम्" इति क्वचित् पाठः। मज्जा वा पुत्त्रजीवजा इत्यत्र चौरेण पीता इति शेषः॥ १३१॥

अथ कालस्फोटे विष्णुक्रान्तादिप्रलेपः ।—

विष्णुक्रान्ता च पेटारी काञ्जिकेन तु पेषिता ।
कालस्फोटं हरेल्लेपाद्दुष्टग्रन्थिषु का कथा ? ॥१३२॥

अथ ग्रन्थ्यादौ पुनर्नवादिप्रलेपः ।—

पुनर्नवाकाभयशिग्रुमुष्टि-कारञ्जसिन्ध्रूत्थमहौषधञ्च ।
गोमूत्रपिष्टञ्च सुखोष्णलेपात् ग्रन्थ्यर्बुदं हन्त्यपचीञ्च सद्यः ॥१३३॥

अथ अर्बुद-शोणितार्बुदलक्षणम् ।—

मेदोऽत्र दोषमांसोत्थ-ग्रन्थिरूपं ततो महत् ।
अर्बुदं दुष्टरुधिरं भवेत्तच्छोणितार्बुदम् ॥१३४॥

अथ अर्बुदादौ पुटपक्वरसः ।—

तण्डुलीयकवर्षाभू-नागकन्यावरारसे ।
गोमूत्रे च रसः पिष्टः पुटपक्वोऽर्बुदादिजित् ॥१३५॥

---

विष्णुक्रान्तादिप्रलेपे—विष्णुक्रान्ता अपराजिता । पेटारी "झांपी टुकरी" इति ख्यातम् ॥ १३२ ॥

पुनर्नवादिप्रलेपे—अभयम् उशीरम् । मुष्टिः घण्टापाटला ॥ १३३ ॥

उत्सेधसाधर्म्यात् तुल्यलिङ्गचिकित्सितत्वाच्च ग्रन्थ्यनन्तरमर्बुदचिकित्सिते वक्तव्ये प्राक् तस्य भेदानाह, मेद इति ।—"अत्र" इत्यत्र "अस्त्र" इति पाठः साधुः, सुश्रुतादिभिः रक्तस्यापि कारणत्वेन ग्रहणात्, अत्रापि शोणितार्बुदस्य वक्ष्यमाणत्वाच्च । दोषः वातादिः । ततः ग्रन्थितः । एवमर्बुदभेदानुक्त्वा वातादिजेन ग्रन्थिना तत्तदर्बुदस्य तुल्यलक्षणत्वेन तदभिधानस्य निष्प्रयोजनत्वात् विशिष्टलक्षणकं शोणितार्बुदमाह, दुष्टेति ।—भवेत् इत्यत्र यत् इति अध्याहरणीयं, यत्तदोर्नित्यसम्बन्धात् ॥१३४ ॥

पुटपक्वरसे—तण्डुलीयकः मारिषः "चाँपानटे" इति भाषा । नागः नागवल्ली । कन्या "घृतकुमारी" इति प्रसिद्धम् । वरा त्रिफला ; तण्डुलीयकादीनां रसे गोमूत्रे च पारदं पिष्ट्वा पुटपाकेन पचेत् । सेव्ययोगोऽयम् । "वरारसे" इत्यत्र "वराक्षीर" इति पाठान्तरम् ॥ १३५ ॥

अथ अर्बुदे यवक्षारादिलेपः।—

लिप्तं यवक्षारविडङ्गबीजं गन्धोपलस्यानशनैः क्रतैर्यत्।
रक्तेन मिश्रैः सरसस्य सद्यः तदर्बुदं शाम्यति नान्यथैतत्॥१२६॥

अथ गण्डमालाऽपचीलक्षणम्।—

मेदोत्था गलकक्षवङ्क्षणतले मन्याङ्घ्रौ: कुर्वते
वार्त्ताकीफलकोपमान् सकठिनान् गण्डान् सकण्डून् मलाः।

---

यवक्षारादिलेपे—"गन्धोपलस्यानशनैः" तथा "सरसस्य" इत्यत्र "गन्धपलैः स्यान्मसृणीकृतैः" तथा "सरटस्य" इति पाठद्वयं समीचीनं तन्त्रान्तरीयपाठेन सह साम्यात्; तथा च योगरत्नाकरः,—"लिप्तं यवक्षारविडङ्गबीजं गन्धोपलः स्यान्मसृणीकृतैर्यत्। रक्तेन मिश्रैः सरटस्य सद्यस्तदर्बुदं शाम्यति नान्यथैतत्॥" इति। अत्र गन्धोपलः गन्धकः। सरटः कृकलासः। चक्रदत्ते गुण्डीयांगीनाप्ययं दृश्यते, यदुक्तं—"सरटरुधिरार्द्रगन्धक-यवजविडङ्गनागरैर्वाऽथ" इति। योगरत्नाकरे तु "यवज" इत्यत्र "नागभस्म" इति पाठः, तथा च—"गन्धशिलाविश्वौषधविडङ्गनागभस्मभिः समैश्चूर्णम्। कृकलासरक्तयुक्तं लेपात् नयोऽर्बुदध्वंसि॥" इति॥१२६॥

अथ उत्सेधसाधर्म्यात् गुडकसाम्याच्च अर्बुदानन्तरं गण्डमालाऽपचीमाह, मेदोत्था इति।—ननु सुश्रुतादौ—"कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु। मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः॥ ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये। कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति तज्ज्ञाः॥" इत्यनेन गण्डमालापच्यौ पृथगेव पठिते, अत्र तु "सा गण्डमालाऽपची" इत्यनेन ग्रन्थेन मिलितेव पठिता, तत् किमत्र समाधानमिति चेदुच्यते—गण्डमालाऽऽरम्भकग्रन्थय एव पुनः पुनः स्रावनाशोत्पत्तियोगात् अपचीसंज्ञां लभन्ते, एतत् "ते ग्रन्थय. केचित्" इत्यत्र "ते" इत्यनेनैव स्फुटीकृतम्। भोजेनाप्युक्तं—"वातपित्तकफा दुष्टा मेदश्चापि समाश्रितम्। जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून्॥ कुर्वन्ति ग्रन्थींस्तेभ्यः पुनः प्रकुपितोऽनिलः। तान् दोषानूर्ध्वगो वक्षः-कक्षामन्यागलाश्रितः॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा॰लपची मता। अपची कण्ठमन्यासु कक्षवङ्क्षणसन्धिषु। गण्डमालां विजानीयादपचीतुल्यलक्षण-

पच्यन्तेऽल्परुजः स्रवन्ति नितरां कण्डून्ति नश्यन्त्यलं
दूर्वेव क्षयवृद्धिभागिनि नृणां सा गण्डमालाऽपची ॥१२७॥

अथ गण्डमालायां सुरवारुण्यादियोगः ।—

सुरवारुण्या मूलं गोमूत्रयुतं महेन्द्रकन्या च ।
अपकरोति गण्डमालां पित्तं सलोन परिघृष्टम् ॥१२८॥

अथ गण्डमालायामर्कक्षीरादिलेपः ।—

अर्कक्षीरजयापुष्प-तैललाक्षारसैः समैः ।
गण्डमाला शमं याति प्रलिप्ता सप्तभिर्दिनैः ॥१२९॥

---

साम् ॥" इति । एवञ्च तन्त्रेऽस्मिन् हेतुसाम्यादपृथगेव प्रदर्शिता, तन्त्रान्तरे तु स्रावादिलक्षणयोगात् वैशिष्ट्यप्रदर्शनार्थं ते पृथक् कृत्वा पठिते इति मन्तव्यम् । मेदोत्थाः मेदःस्थाः, मला इत्यनेन सम्बध्यते । "वार्त्ताकीफलकोपमान्" इत्यत्र "वार्त्ताकामलकोपमान्" इति पाठः साधुः, वाग्भटे तादृशपाठदर्शनात् ; यदुक्तं वाग्भटेन—"मेदःस्थाः कण्ठमन्याक्ष-कक्षावङ्क्षणगा मलाः । सवर्णान् कठिनान् स्निग्धान् वार्त्ताकामलकाकृतीन् ॥ अवगाढान् बहून् गण्डान् चिरपाकांश्च कुर्वते । पच्यन्तेऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुराः ॥ नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः । गण्डमालाऽपची चेयं दूर्वेव क्षयवृद्धिभाक् ॥ तां त्यजेत् सज्वरच्छर्दि-पार्श्वरुक्कासपीनसाम् ॥" इति । कण्डून्ति उत्पद्यन्ते इत्यर्थः । दूर्वेव क्षयवृद्धिभागिनी कदाचित् क्षयं कदाचित् वृद्धिञ्च भजते या सा तथाभूता ; क्षयेऽपि वृद्धिं भजते या तथाभूता इति वा, दूर्वा यथा क्षीणाऽपि पुनर्वृद्धिं भजते तथा इत्यर्थः । भागिनि इत्यत्र ह्रस्वश्छान्दसः ॥ १२७ ॥

सुरवारुण्यादियोगे—सुरवारुणी इन्द्रवारुणी । महेन्द्रकन्या महाकालाख्यलता, श्वेतापराजिता वा, तन्त्रान्तरोक्तयोगेन सह सादृश्यदर्शनात् महेन्द्रकन्या इति शब्दस्य अन्यत्र प्रयोगादर्शनाच्च, यदुक्तं श्रीचक्रपाणिना—"ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगतः । गण्डमालां हरेत् पीत चिरकालोत्थितामपि ॥" इति । अत्र ऐन्द्री सुरवारुणी गिरिकर्णी श्वेतापराजिता । पित्तं गोपित्तम् ; "पित्तम्" इत्यत्र "पीतम्" इति पाठो युक्तः, अर्थसङ्गतिराहित्यात् प्रदर्शितयोगे तथा दर्शनाच्च ॥ १२८ ॥

अर्कक्षीरादिलेपे—जया जयन्ती तस्याः पुष्पम् । समैः समभागैः ॥ १२९ ॥

अथ अपच्यां गिरिकर्णिकाप्रयोगः ।—

पुष्ये गृहीतं गिरिकर्णिकाया मूलं सिताया गलके निबद्धम् ।
गव्येन लीढं यदि वा घृतेन निहन्ति घोरामपचीं तदेव ॥१४०॥

अथ गण्डमालायां कुकुन्दरीतैलम् ।—

कुकुन्दरीसाधिततैललिप्ता त्रिभिर्दिनैर्नश्यति गण्डमाला ॥१४१॥

अथ गण्डमालायां सहदेवीप्रयोगः ।—

मूलिका सहदेव्यास्तु रवौ ग्राह्याऽथ धारिता ।
गण्डमालाहरा कण्ठे महादेवेन भाषिता ॥१४२॥

अथ अपच्यादौ गुञ्जादिलेपः ।—

गुञ्जाटङ्कणशिग्रुमूलरजनी-शम्याकभल्लातकैः
स्नुह्यर्काग्निकरञ्जसैन्धववचा-कुष्ठाभयालाङ्गली ।
वर्षाभूशरभूशिरीषलवण-व्योषाश्वमारा विषं
गोमूत्रैः शमयेद्विलिप्तमपची-ग्रन्थ्यर्बुदश्लीपदम् ॥१४३॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये कर्णरोग-नासा-रोग-मुखरोग-गलरोग-मुखपाक-मुखच्छाया-जिह्वा-दन्त-कण्ठरोग-गण्डमाला-शिरोरोग-यूका-दारुण-केशरोग-व्रणरोग-भग्नरोग भगन्दरापची-ग्रन्थ्यर्बुद-कालस्फोटादिचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

गिरिकर्णिकाप्रयोगे—पुष्ये पुष्यानक्षत्रे । गिरिकर्णिकायाः अपराजितायाः, सितायाः इति पदं गिरिकर्णिकाया विशेषणं, श्वेतापराजितायाः इत्यर्थः ॥ १४० ॥

कुकुन्दरीतैले—कुकुन्दरी "कुँकुँधा" इति ख्यातं, तया साधितं पक्वम् । अत्र कुकुन्दर्य्याः कल्कः तैलपादिकः, जलं चतुर्गुणं सम्यक्पाकाय इति बोध्यम् ॥१४१॥

सहदेवीप्रयोगे—सहदेवी दण्डोत्पला बला वा । रवौ रविवारे ॥ १४२ ॥

गुञ्जादिलेपे—रजनी हरिद्रा । शम्याकः आरग्वधः । अग्निः चित्रकः । लाङ्गली विषलाङ्गली । वर्षाभूः पुनर्नवा । शरभूः शरपुङ्खा शरमूलं वा । लवणं सैन्धवम्, अत्र सैन्धवस्य भागद्वयं ग्राह्यं, द्विरुक्तत्वात्; "लवण" इत्यत्र "वरण" इति पाठे —वरणः वरुणत्वक् । अश्वमारः करवी ॥ १४३ ॥

इति रसरत्नसमुच्चयबोधिन्यां चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥

# अथ पञ्चविंशोऽध्यायः ।

अथ क्षुद्ररोगादिचिकित्सनम् ।—

अथ क्षुद्ररोगाणां नामानि ।—

व्यङ्गः कच्छपनीलिकाकुनखविद्धोत्कोठकोठालसैः
कक्षारूढगुदप्रसुप्तिविवृता-विस्फोटवल्मीकरुक् ।
विस्फः स्यात् कदराजगल्लिजतुमण्यन्धालजीराजिकाः
क्षुद्रा लाञ्छनशर्करेति च यव-प्रख्याग्निरोहिण्यपि ॥१॥

जालाश्मगर्दभविदारिमसूरिकाभिः
सत्यश्मकण्टककजा मष्ट गर्दभी च ।
स्याच्छर्करार्बुदमथाननदूषिकेश्च
गण्डाह्वया पनसिका त्विरिवेल्लिकेति ॥२॥

---

अक्षुद्रनिदानलक्षणचिकित्सितानां ज्वरादीनां निर्देशेन क्षुद्रनिदानलक्षणचिकित्सितानां व्यङ्गादीनां क्षुद्ररोगाणां पारिशेष्यात् तच्चिकित्सिते वक्तव्ये चिकित्सायाः व्याधीनां भेदज्ञानसापेक्षतया आदौ क्षुद्ररोगाणां भेदान् प्रदर्शयति, व्यङ्ग इति ।— कच्छपः कच्छपिका । विद्धा "इन्द्रविद्धा" इति नाम्ना सुश्रुतेन पठिता । उत्कोठकोठौ तन्त्रान्तरे भिन्नाधिकारे पठितौ । अलसः अलसकः, "पाँकुइ" इति ख्यातम् । रूढगुदः सन्निरुद्धगुदः । प्रसुप्तिः स्पर्शाज्ञता, "वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति । ततस्त्वक् जायते पाण्डुः क्रमेण च विचेतना ॥ अल्पकण्डूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः ॥" इत्यनेन वाग्भटोक्ता ; चरकेण त्वियम् अशीतिवातविकारेषु पठिता । "विस्फः" इत्यत्र "चिप्प." इति पाठः साधुः, सुश्रुतवाग्भटयोः विस्फ इति समाख्यातलक्षणस्य चादर्शनात् चिप्पस्य दर्शनाच्च । अन्धालजी क्वचित् तन्त्रे "अन्त्रालजी" वाग्भटे च "अलजी" इति नाम्ना पठिता । राजिका गौरपिडका, "घामाचि" इति प्रसिद्धम् ; तल्लक्षणं वाग्भटे यथा—"घर्मस्वेदपरीतेऽङ्गे पिटिकाः सरुजो घनाः । राजिकावर्णसंस्थान-प्रमाणा राजिकाह्वयाः ॥" इति । क्षुद्रा तन्नामकः कश्चित् रोगविशेषः । लाञ्छनं व्यच्छं, व्यच्छपर्य्याये लाञ्छनमिति

## अथ क्षुद्ररोगचिकित्सा।—

अथ क्षुद्ररोगे पर्पटीप्रयोगविधिः।—

सर्पिषा निम्बचूर्णेन प्रयुक्ता पर्पटी हरेत्।
मसूरिकाः क्षुद्ररोगानन्यानपि च दुस्तरान्॥३॥

अथ व्यङ्गे शशरुधिरप्रयोगः जातीफलप्रयोगश्च।—

तत्कालशस्त्रप्रहतः शशो यस्तस्यासृजा नश्यति लिप्यमानम्।
व्यङ्गं मुखे जातिफलस्य वाह्य-त्वचाऽथवा सन्ततमेव लिप्तम्॥४॥

अथ व्यङ्गे इङ्गुदीमज्जप्रयोगः।—

इङ्गुदीफलसमुद्भवमज्जा पेषिताऽतिशिशिरेण जलेन।
एकविंशतिदिनप्रविलिप्ता व्यङ्गमाननभवं परिमार्ष्टि॥५॥

---

पाठदर्शनात्, यथा—"न्यच्छं लाञ्छनमुच्यते" इति। शर्करा "ग्रन्थिं करोत्यसौ—" इत्यादिना शर्करार्बुदस्य हेतुत्वेन प्रदर्शिता; यद्यपि शर्करावस्थाविशेषं शर्करार्बुदं तैस्तैस्तन्त्रकृद्भिः भिन्नसंज्ञाया न गणितं, तथाऽपि अत्र उभयोः पृथग्ग्रहणं सम्प्राप्ति-भेदज्ञापनार्थम्। जालाश्मगर्दभः जालगर्दभः अश्मगर्दभश्च पाषाणगर्दभ इत्यर्थः। सप्त रोगभेदः। वाग्भटेन तु सप्तक्षुद्रे न पठिते, पठितौ च चर्मकीलतिलकालकौ, तत्तु विकाराणामानन्त्यात् क्वचित् किञ्चिदिति कृत्वा सहनीयम्। सह इति आननदूषिकैस्स इत्यनेन सम्बन्धनीयम। सप्तः सप्तकम्। आननदूषिकः मुखदूषिका, युवानपिडका इत्यर्थः; "आननदूषिकैः" इत्यत्र "आननदूषकैः" इति पाठः साधुः। "गण्डाऽऽह्वया" इत्यत्र "गन्धाऽऽह्वया" इति पाठः साधुः, वाग्भटे "गन्धनामा" इति पाठदर्शनात, हरिविनिश्चये तु "गन्धमाला" इति नाम्ना प्रसिद्धेयम्॥ १।२॥

पर्पटीप्रयोगविधौ—पर्पटी प्रागुक्तः पर्पटीरसः॥ ३॥

शशरुधिरप्रयोग-जातीफलप्रयोगयोः,—तत्कालशस्त्रप्रहतः सद्योविनाशितः; तत्क्षणमेव शस्त्रेण हतस्य शशस्य क्षतमुखनिर्गतेन रक्तेन व्यङ्गमालिम्पेदिति। जाती-फलस्य वाह्यत्वचा फलावरकेण कठिनेनांशेन, फलोपरिस्थेन धूसरेण तनुनांशेन वा। चक्रदत्ते तु "जातीफलकल्कलेपो नीलीव्यङ्गादिनाशनः" इत्यनेन जातीफलस्यैव पिष्टस्य लेपो विहितः॥ ४॥

इङ्गुदीमज्जप्रयोगे—इङ्गुदीफलसमुद्भवमज्जा इङ्गुदीफलास्थिशस्यम्॥ ५॥

अथ कुनखे स्नुहीक्षीरादिप्रलेपः।—

उद्धृत्य कुनखं क्षीरं स्नुक्पर्णी टङ्कणं समम्।
सम्यङ्निरुद्धदाहस्य मूले कृत्वा नखो भवेत् ॥६॥

अथ कुनखे अभयाप्रयोगः।—

व्रणपूतिपूयजुष्टं नखविवरं मङ्क्षु रोपयत्यभया।
नानाविधैः किमेतैरास्फोतार्कविकुरण्टकक्षीरैः ॥७॥

अथ कुनखे कुष्ठादिप्रलेपः।—

सकुष्ठं जीरकं तोयैः पिष्ट्वा लेपेन नाशयेत् ॥८॥

अथ कुनखे पुत्रजीवप्रयोगः।—

पुत्रजीवस्य वा मज्जां तोयैः पिष्ट्वा प्रलेपयेत् ॥९॥

अथ कक्षाग्रन्थौ शिग्रुप्रयोगः।—

शिग्रुमूलं निशातोयैः कक्षाग्रन्थिहरं लिपेत् ॥१०॥

अथ कक्षाग्रन्थौ विषादिलेपः।—

विषं पुनर्नवामूलं जललेपेन तं जयेत् ॥११॥

---

स्नुहीक्षीरादिप्रलेपे—उद्धृत्य शस्त्रेणोत्कृत्येत्यर्थः। क्षीरं स्नुक्पर्णी स्नुक्क्षीरं पर्णीक्षीरञ्च, पर्णी चात्र सप्तपर्णः. स्नुहीक्षीरपर्णीक्षीरटङ्कणानां समत्वम्। मूले नखमूले; कुनखं शस्त्रेणोद्धृत्य मूलदेशं दग्ध्वा स्नुक्क्षीरादिकल्कैः लिम्पेदित्यर्थः। नखो प्रशस्तनखवान् ॥ ६ ॥

अभयाप्रयोगे—व्रणपूतिपूयजुष्टं नखविवरं क्षिप्रमित्यर्थः। मङ्क्षु झटिति। नानाविधैः किमेतैः एतैः वक्ष्यमाणैः आस्फोतादिभिर्नानाविधैः किम्? किं प्रयोजनम्? एका अभयैव क्षिप्रं रोपयितुमलम्, आस्फोतादिभिरन्यैः किमपि प्रयोजनं नास्तीत्यर्थः। आस्फोता "हापरमाली" इति प्रसिद्धं, रविः अर्कः, कुरण्टकः पीतपुष्पा झिण्टी. एषां क्षीरैः क्षीरवन्निर्यासैः ॥ ७ ॥

कुष्ठादिप्रलेपे—नाशयेत् इति पदं "व्रणादिजुष्टं नखविवरम्" इति पूर्वोक्तेन सम्बध्यते ॥ ८ ॥

पुत्रजीवप्रयोगे—पुत्रजीवस्य मज्जां फलास्थिमध्यम् ॥ ९ ॥

शिग्रुप्रयोगे—निशातोयैः हरिद्राम्बरसैः। कक्षाग्रन्थिहरं कक्षाहरमित्यर्थः ॥१०॥

विषादिलेपे—तं कक्षाग्रन्थिम् ॥ ११ ॥

अथ स्तनविद्रधौ क्रियाक्रमः।—

सर्वेषां स्तनरोगाणां रक्तमोक्षः प्रशस्यते।
पूयपक्वः स्तनो यः स्यात्क्षेपस्तस्यावपाटने ॥१२॥

अथ स्तनविद्रधिस्फोटने एकवीरप्रयोगः।—

एकवीरस्य मूलन्तु अजामूत्रेण लेपयेत्।
तत्क्षणात् स्फुटते पक्वं शस्त्रैर्वा स्फोटयेद्भिषक् ॥१३॥

अथ स्तनविद्रधिरोपणे यष्ट्यादिचूर्णम्।—

यष्टीनिम्बहरिद्रा च निर्गुण्डीधातकीसमम्।
चूर्णं स्तनव्रणे देयं रोपणं कुरुते हितम् ॥१४॥

अथ स्तनविद्रधिरोपणे दारुवर्त्तिः।—

मध्वाज्यैर्देवदारुस्य पिष्ट्वा वर्त्तिं प्रलेपयेत्।
पूयपक्वे स्तने क्षिप्ता रोपणं कुरुते क्षणात् ॥१५॥

अथ लिङ्गरोगे बोलप्रयोगः।—

लिङ्गव्याधौ लोहितं स्रावयित्वा
पश्चाद्बोलं भक्षयेत्तस्य तुष्ट्यै ॥१६॥

अस्मिन्नधिकारे अनुक्तमपि स्तनरोगं क्षुद्रहेतुलिङ्गादिकत्वेन क्षुद्ररोग एव अन्तर्भाव्य तच्चिकित्सितमाह। तत्र स्तनविद्रधौ क्रियाक्रमे—रक्तमोक्षः शोथप्रादुर्भावमात्रेणैव जलौकादिना रक्तमोक्षणं कारयितव्यमित्यर्थः। पूयपक्वः पूयेन पूयप्रादुर्भावेन पक्वः पाकलक्षणोपपन्न इत्यर्थः। अवपाटने अवपाटनाय स्फोटनायेत्यर्थः ॥ १२ ॥

एकवीरप्रयोगे—एकवीरस्य स्वनामख्यातद्रव्यस्य; वन्ध्याकर्कोटिकाया इति केचित्। स्फुटते इत्यत्र स्तन इति पूर्वोक्तेनान्वयः ॥ १३ ॥

यष्ट्यादिचूर्णे—यष्टी यष्टिमधु। हितं हितकरं, चूर्णमित्यनेनान्वयः ॥ १४ ॥

दारुवर्त्त्यां—"प्रलेपयेत्" इत्यत्र "प्रकल्पयेत्" इति कल्पना साधीयसी। क्षिप्ता इत्यत्र तिष्ठेदिति शेषः। "क्षिप्रा" इति निर्विकारपाठे—सा वर्त्तिरिति शेषः ॥ १५ ॥

स्तनरोगसङ्गतिवत् सङ्गत्यैव स्तनरोगानन्तरं लिङ्गरोगचिकित्सितारम्भः। तत्र बोलप्रयोगे—लिङ्गव्याधौ उपदंशादिलिङ्गगतरोगे लोहितं रक्तं स्रावयित्वा, जलौकादिना इति शेषः। बोलं गन्धरसम्। तुष्ट्यै अपनोदनाय ॥ १६ ॥

अथ लिङ्गपाके उदुम्बरादिक्षालनम् ।—

उदुम्बरवटाश्वत्थ-साम्रजम्बूत्वचः शृतम् ।
जलैः क्वाथश्च तेनैव क्षालयेल्लिङ्गपाकनुत् ॥१७॥

अथ लिङ्गपाके जीरकप्रयोगः ।—

कुमारीरससम्पिष्टं जीरकं लेपयेद्भिषक् ।
तेन दाहश्च पाकश्च शममाप्नोति निश्चितम् ॥१८॥

अथ लिङ्गपाके महाशङ्खप्रयोगः ।—

महाशङ्खं जलैर्घृष्ट्वा तेन लिङ्गं प्रलेपयेत् ॥१९॥

अथ लिङ्गरोगे घोण्टादिलेपः ।—

घोण्टा पूगश्च वा तोयैः सारं वा खदिरोत्थितम् ।
जलैः पिष्टं प्रलेपोऽयं लिङ्गरोगहरः पृथक् ॥२०॥

अथ लिङ्गपाके गन्धकप्रयोगः ।—

सुगन्धकघृतैर्लेपः पक्वलिङ्गे सुखावहः ॥२१॥

अथ लिङ्गपाके निम्बादिचूर्णम् ।—

निम्बखादिरमञ्जिष्ठा-चूर्णञ्च पतनं जयेत् ॥२२॥

---

उदुम्बरादिक्षालने—त्वच. इति उदुम्बरादिभिः प्रत्येकेन सम्बध्यते । शृतं पक्वम् । तेनैव उदुम्बरादीना क्वाथेनैव ॥ १७ ॥

जीरकप्रयोगे—सर्वं सुगमम् ॥ १८ ॥

महाशङ्खप्रयोगे—महाशङ्खं नरकपालम् ॥ १९ ॥

घोण्टादिलेपे—घोण्टा शृगालकोलिः तस्या मूलम् । पूगः गुवाकः तस्य फलम् । वा-शब्दः पूर्वयोगापेक्षया । योगरत्नाकरे तु "घोण्टा पूगश्च वा तोयैः" इत्यत्र "कुष्ठं पूगं वचा तोयैः" इति पाठान्तरम् । सारं वा खादिरोत्थितम् अथवा खादिरसारम् ॥ २० ॥

गन्धकप्रयोगे—सुगन्धकः प्रशस्तगन्धकः; "सुगन्धक—" इत्यत्र "शुगन्धक—" इति रसरत्नाकरे पाठः ॥ २१ ॥

निम्बादिचूर्णे—पतनं विशीर्णतासम्पोत्यर्थः ॥ २२ ॥

अथ लिङ्गग्रन्थिरोपणे सैन्धवप्रयोगः।—

अवचिञ्चारसैर्घृष्टं सैन्धवं रोपयेत् व्रणम्।
ग्रन्थिः कक्ष्याञ्च जघने शममाप्नोति नान्यथा ॥२३॥

अथ लिङ्गव्रणादौ शिग्रुप्रयोगः।—

शिग्रुमूलं त्वचस्तोयैः पिष्ट्वा लेपेन तं जयेत् ॥२४॥

अथ लिङ्गादिगतग्रन्थौ कुष्ठादिलेपः।—

कुष्ठजीरकयोर्लेपस्तोयैर्ग्रन्थिप्रशान्तये ॥२५॥

अथ मुष्कादिगतपिडकायाम् अश्वत्थादिप्रलेपः।—

अश्वत्थस्य त्वचो भस्म चूर्णेन सह मिश्रितम्।
नवनीतं द्वयोस्तुल्यं मर्द्यं तेन विलेपनात्॥
आसने गुदपार्श्वे च कक्ष्याञ्च पिटिकां जयेत् ॥२६॥

अथ लिङ्गादिपिडकायां वाकुची-चित्रकप्रयोगौ।—

गोमूत्रैः क्षालयेत्ताञ्च लेपो वाकुचीबीजकैः।
स्नात्वा कण्डूं निहन्त्याशु चित्रकं वा गवां जलैः ॥२७॥

---

सैन्धवप्रयोगे—अवचिञ्चा चोरिका। "अवचिञ्चारसैर्घृष्टम्" इत्यत्र "वरीरसैश्च सघृष्टम्" इति पाठान्तरम्। व्रणम् औपदंशिकव्रणमित्यर्थः। ग्रन्थिरिति प्रकरणात् लिङ्गग्रन्थिरित्यर्थः, तथा कक्ष्यां जघने च ग्रन्थिरिति सम्बन्धः ॥२३॥

शिग्रुप्रयोगे—त्वचः शिग्रोरेवेत्यर्थः; "शिग्रुमूलत्वचः" इति समस्तपाठे—शिग्रोर्मूलत्वक्; त्वच इति द्वितीयाबहुवचनम्। तं व्रणं ग्रन्थिञ्च ॥ २४ ॥

कुष्ठादिलेपे—सर्वं स्पष्टम् ॥ २५ ॥

अश्वत्थादिप्रलेपे—चूर्णेन सुधया, "चुण" इति प्रसिद्धेनेत्यर्थः। आसने नितम्बे इत्यर्थः। पिटिकां पिडकाम्, अत्रापि लिङ्गपिटिकामिति बोध्यम्; लिङ्गगत-पिडकां तथा आसनादिषु च पिडकां जयेदित्यर्थः ॥ २६ ॥

वाकुचीप्रयोग-चित्रकप्रयोगयोः,—तां पिटिकाम्। लेपः, कार्य्य इति शेषः। स्नात्वा धौतं कृत्वा इत्यर्थः; "कृत्वा" इत्यत्र "पिष्ट्वा" इति पाठान्तरम्। कण्डू-मित्यत्रापि पूर्ववत् लिङ्गकण्डूमित्यर्थः। गवां जलैः गोमूत्रैः ॥ २७॥

अथ लिङ्गादिपिडकायां सर्पाक्षीप्रयोगः ।—

नरमूत्रेण सर्पाक्षीं पिष्ट्वा लेपेन तां जयेत् ॥ २८ ॥

अथ लिङ्गरोगे लवङ्गादिधूमः ।—

लवङ्गानां लवङ्गं कर्पूरं चणसम्मितम् ।
दरदं तोलमानञ्च सर्वं खल्ले विचूर्णयेत् ॥२९॥
अम्लद्रवैः कोकिलाक्षैः सर्वं यत्नेन मर्दयेत् ।
यावत् कज्जलसङ्काशं श्यामताञ्च तथैव च ॥३०॥
चतुर्दशसमा कार्य्या पूड़िका बन्धयेद्भिषक् ।
रविवारे समादेया श्वाङ्गारे छगणोद्भवे ॥३१॥
तां निक्षिप्याथ सङ्गोप्य नासिकां विवृतां नयेत् ।
मुखमाच्छाद्य श्वासेन यातायातेन चाहयेत् ॥३२॥
वीटिकापूर्णवदनो द्विवारं कारयेत् सदा ।
एवं सप्तदिनं कृत्वा पश्चात् स्नानादिकं चरेत् ॥३३॥
पथ्यं निर्लवणं देयं जलं शीतं निषेवयेत् ।
अनेन योगराजेन लिङ्गव्याधिः प्रशाम्यति ॥३४॥

सर्पाक्षीप्रयोगे—सर्पाक्षी सर्पसद्दा "पानिमिछलि" इति ख्यातम् । तां काष्ठं पिटिकाजातामित्यर्थः ॥ २८ ॥

लवङ्गादिधूमे—लवङ्गानां लवङ्गचूर्णानामित्यर्थः, लवकं पादांशं, तच्च दरदापेक्षया बोध्यम् । दरदं हिङ्गुलम् । अम्लद्रवं पलाशद्रवम् । कोकिलाक्षैः "कुलेखाड़ा" इति प्रसिद्धैः, सहार्थे तृतीया । अत्र दरदादीनां त्रयाणां समभागता । "यावत् कज्जलसङ्काशं श्यामताञ्च तथैव च" इति पाठश्चिन्तनीयः, दरदयोगे श्यामताया अदर्शनात् । पूड़िका इति देशीयभाषा, पुरिया इति ख्यातम् । समादेया ग्राह्या । छगणोद्भवे आरण्यगोमयजे । तां पूड़िकाम् । सङ्गोप्य, आत्मानमिति शेषः, वस्त्रादिकृतकुटीमध्ये प्रविश्य वस्त्रान्तरेण स्वदेहं गोपायित्वेत्यर्थः, तथाकरणञ्च धूमस्य बहिर्निःसरणवारणार्थं बोध्यम् । विवृतां प्रसारितां, सर्वदेहं वस्त्रेणाच्छाद्य धूमग्रहणार्थं नासिकाम् अनावृतां स्थापयेदित्यर्थः । मुखमाच्छाद्य संवृत्य, तथाकरणञ्च मुखेन धूमग्रहणनिषेधार्थम् । वीटिकापूर्णवदनः धूमग्रहणकाले मुखमध्ये ताम्बूलवीटिकां धारयेदिति ॥ २९—३४ ॥

अथ कच्छ्वां काञ्चनीप्रयोगः।—

लेपयेत् काञ्चनीमूलं नरमूत्रेण पेषितम्।
कच्छूपामा शमं याति सर्वाङ्गेणा न संशयः॥२५॥

अथ पामायां आस्फोटकक्काथः।—

आस्फोटस्य त्वचस्तोयैः पक्त्वा क्वाथं समाहरेत्।
पिबेद्गोमूत्रसंयुक्तं पामार्त्तः सुखमाप्नुयात्॥२६॥

अथ पादकच्छूहरयोगः।—

पादकच्छूहरं कुर्य्यान्नवनीतेन म्रक्षणम्।
हयारिपत्रधूपेन स्वेदनं तदनन्तरम्॥२७॥

अथ पाददाहे तिलादिचूर्णम्।—

पाददाहहरक्काथे तिलाह्रिगुणवाकुचौ।
चूर्णिता मधुसर्पिर्भ्यां हिकर्षं तत्प्रशान्तये॥२८॥

---

काञ्चनीप्रयोगे—काञ्चनीमूलं हरिद्राकन्दम्॥ २५॥

आस्फोटकक्काथे—आस्फोटस्य "शेफाली" इति प्रसिद्धस्य। अत्र आस्फोटकक्काथ-गोमूत्रयोः समत्वं, पानञ्च युक्त्या पलमर्द्धपलं वा॥ २६॥

पादकच्छूहरयोगे—म्रक्षणं मर्दनमित्यर्थः। योगरत्नाकरे श्रीपदाधिकारोक्ते-ऽस्मिन् योगे "म्रक्षणम्" इत्यत्र "मालिशम्" इति पाठः, किन्तु तत्र करवीरपत्र-धूपस्योल्लेखो नास्तीति। हयारिपत्रधूपेन करवीरपत्रधूमेन; आदौ नवनीतेन पादा-वभ्यज्य पश्चात् करवीरपत्रेण धूपयेत्॥ २७॥

तिलादिचूर्णे—पाददाहहरक्काथे पाददाहनाशकद्रव्यकृते क्काथे, पिष्टमसूरविदल-क्काथे इत्यर्थः, यदुक्तं भावमिश्रेण—"मसूरविदलैः पिष्टैः शतशीतेन वारिणा। चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तये॥" इति। तिलात् द्विगुणवाकुचौ, भाव्या इति शेषः, तिलस्यैकं भागं वाकुच्याश्च द्वौ भागौ पिष्टमसूरविदलक्काथेन भावये-दित्यर्थः। तच्चूर्णं द्विकर्षं मधुसर्पिर्भ्यां, लिह्यादिति शेषः। तत्प्रशान्तये पाददाह-प्रशान्तये। योगरत्नाकरे श्रीपदचिकित्सायामुक्तः "पाददाहहरं स्वादेत्तिलाद्द्विगुण-वाकुचेः। चूर्णन्तु मधुसर्पिर्भ्यां कर्षमार्त्तिप्रशान्तये॥" इति पाठः समीचीनतया प्रतिभाति॥ २८॥

अथ पादकण्डूहरयोगान्तरम् ।—

पादकण्डूविनोदार्थं नवनीतेन म्रक्षणम् ॥३९॥

अथ पादस्फुटने पथ्यामर्दनम् ।—

पथ्या घृतेन सञ्चूर्ण्य मर्दनं करपादयोः ।
स्फुटितत्वनिवृत्त्यर्थं—" ॥४०॥

अथ कदरे यवचिञ्चादिकषायः ।—

"—यवचिञ्चार्द्रपक्कया ।
शिलादिना क्षते भेदे षड्गुणञ्च द्रवं क्षिपेत् ॥४१॥

अथ विपादिकायां गुडादिप्रलेपः ।—

गुडगुग्गुलुसिन्दूरमुशीरं गैरिकं मधु ।
मदनं घृतसंयुक्तं पादस्फोटे प्रलेपयेत् ॥
सप्ताहात् स्फुटितौ पादौ स्यातां पङ्कजसन्निभौ ॥४२॥

---

पादकण्डूहरयोगान्तरे—सर्वं स्पष्टम् । पूर्वोक्तयोगे नवनीतेन मर्दनानन्तरं करवीरपत्रेण धूपप्रयोगः उपदिष्टः, अत्र तु धूपप्रयोगाभावात् योगान्तरोऽयमिति मन्तव्यम् । योगरत्नाकरेऽपि एवमेवोक्तं, तच्च प्रदर्शितमेव । "म्रक्षणम्" इत्यत्र "भक्षणम" इति क्वचित पाठः ॥ ३९ ॥

पथ्यामर्दने—स्फुटितत्वनिवृत्त्यर्थं पादस्फुटनप्रशमनार्थं पथ्याः सञ्चूर्ण्य घृतेन सह करपादयोः मर्दनं कार्य्यम ॥ ४० ॥

यवचिञ्चादिकषाये—शिलादिना कङ्करादिना भेदे क्षते विद्धे, पादे इति शेषः, कदरे इत्यर्थः, यवचिञ्चार्द्रपक्वया यवचिञ्चायाः तीरिण्याः अर्द्धेन सह पक्कया, अत्र पथ्या इति पदं पूर्वत आवर्त्त्य विभक्तिविपरीणामेन तृतीयान्ततया योजनीयं, ततश्च पथ्यया इत्यर्थः, एवञ्च पथ्याया एको भागः यवचिञ्चायाश्च अर्द्धो ग्राह्यः; मर्दनं कार्य्यं परीषेको वा कार्य्यः इति शेषः । पाकार्थं क्रियमाणो द्रवो देयः? इत्यत आह, षडिति ।—पथ्यायवचिञ्चयोः षड्गुणं जलं पाकाय देयमित्यर्थः ॥४१॥

गुडादिप्रलेपे—मदनं सिक्थकं, चक्रदत्तसंवादात्; अपरञ्च—तत्र सिन्दूरोशीरयोः स्थाने सर्जरसमैन्धवे इति पाठः; तथा च—"सर्ज्जरससिन्धुमदनगुडमधुमहिषाक्षगैरिकं सघृतम् । सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥" इति ।

अथ विपादिकायां मदनादिप्रलेपः ।—

मदनं सिक्थकं तुल्यं सामुद्रं लवणं तथा ।
माहिषीनवनीतेन सुतप्तालेपनाद्भवेत् ॥
सप्ताहात् स्फुटितौ पादौ जायेते कमलोपमौ ॥४३॥

अथ कण्ड्वादौ रसादिप्रलेपः ।—

रसं गन्धं समं मर्द्यं द्वाभ्यां तुल्यञ्च काञ्चनम् ।
दिनैकं चित्रकद्रावैः पिष्ट्वा लेपं प्रकारयेत् ॥
कण्डूं गण्डं खुड्ं हन्ति गुल्फयोरन्तरस्थितम् ॥४४॥

अथ स्वरभङ्गे रसादिवटिका ।—

धात्रीफलरसक्षीरैः पानं स्यात् स्वरभङ्गनुत् ॥४५॥

अथ स्वरभङ्गे देवदार्वादिचूर्णम् ।—

देवदारुकणाव्योष-यताह्वापत्रकं शिला ।
वचासैन्धवशिग्रूत्थ-मूलं पेष्यं समं समम् ॥४६॥

---

"एतत् सर्वं समभागमेकीकृत्य मनाक् पक्तव्यं, यथा सिक्थकाकृतिर्भूत्वा लेपयोग्यं भवति" इति तट्टीकायां शिवदासोक्तक्रमः अत्रापि ग्राह्यः इति ॥ ४२ ॥

मदनादिप्रलेपे—मदनं सिक्थकं मदनापराख्यं सिक्थकं, न तु भक्तादिसिक्थक-मित्यर्थः ; मदनं मदनफलं, सिक्थकमिति वा । सुतप्तालेपनात् माहिषीनवनीतेन सह मदनसामुद्रलवणे पिष्ट्वा उष्णप्रलेपात् । "भवेत्" इति पदं "तुल्यम्" इत्यनेन सम्बध्यते, मदनं सिक्थकं तथा सामुद्रलवणं तुल्यं भवेत गृह्णीयादित्यर्थः ।४३॥

रसादिप्रलेपे—काञ्चनं हरितालम् । गण्डं मांसमत्स्यग्रन्थिविशेषं ग्रन्थिं वा । खुड्ं खुडकाऽऽख्यवातं वातरक्तरुग्णं वा । गुल्फयोः पादतलजङ्घयोः सन्धिग्रन्थिः गुल्फौ नाम मर्म तयोः ॥ ४४ ॥

रसादिवटिकायां—पूर्वोक्तमेव रसगन्धादिकृतमौषधं धात्रीफलरसक्षीरैः आमलकीस्वरसदुग्धैः ; "धात्रीफलरसः क्षीरैः" इति असमस्तपाठे—धात्रीफलरस एव क्षीरैः सह पानं कार्य्यमित्यर्थः । चक्रपाणिना तु धात्रीफलचूर्णपानमेव क्षीरेण उपदिष्टम् ; तथा च—"गोपयसा पीतं वाऽऽमलकचूर्णं च" इति ॥ ४५ ॥

देवदार्वादिचूर्णे—व्योष इत्युक्तोऽपि कणायाः पृथगुल्लेखात् पिप्पल्याः भागद्वयम् ।

कर्षैकं मधुसर्पिर्भ्यां मासमात्रं सदा लिहेत् ।
मासैकं कर्षकर्षञ्च किन्नरैः सह गीयते ॥४७॥

अथ गलदाहे सैन्धवादिचूर्णम् ।—

सैन्धवेन्द्रयवं रात्री मरिचञ्चोष्णवारिणा ।
पाययेत् कर्षमात्रन्तु गलदाहप्रशान्तये ॥४८॥

अथ गलदाहे करञ्जमज्जा-पथ्याप्रयोगौ ।—

करञ्जबीजमज्जान्तु द्विनिष्कांश्चोष्णवारिणा ।
गलदाहहरं खादेत् पथ्या वा क्षौद्रसंयुता ॥४९॥

अथ स्तनवर्द्धने बलादिप्रलेपः ।—

बलानागबलाकुष्ठ-त्वचां चूर्णञ्च लेपयेत् ।
महिषीनवनीतेन स्तनौ पीनौ स्थिरौ भवेत् ॥५०॥

अथ स्तनवर्द्धने स्वेदनस्यम् ।—

श्यामानिशाबलाराजी-लवणं क्वाथयेत् समम् ।
तोयैरष्टगुणैरेव पादशेषं समाहरेत् ॥५१॥

---

पक्वकं तैलपचनम् । शिला मनःशिला । कर्षैकमिति ।—प्रथमे मासि एककर्षं मधुसर्पिर्भ्यां लिह्यात्, द्वितीये मासि च कर्षकर्षं कर्षद्वयं ताभ्यां लिह्यादित्यर्थः ; यद्वा—कर्षकर्षं कर्षस्य विभीतकफलस्य कर्षम् ; चक्रदत्ते विभीतकफलस्य स्वरभेदे प्रयोगदर्शनात् ; एवञ्च प्रथमे मासि देवदार्वादिचूर्णकर्षं द्वितीये च मासि विभीतकचूर्णकर्षं मधुघृताभ्यां लिह्यादित्यर्थः ॥ ४६।४७ ॥

सैन्धवादिचूर्णे—गलदाहप्रशान्तये अम्लपित्तादौ जातस्य कण्ठदाहस्य प्रशमायेत्यर्थः ॥४८॥

करञ्जमज्जाप्रयोगे पथ्याप्रयोगे च—करञ्जबीजमज्जा नाटाकरञ्जबीजाभ्यन्तरस्थम् ॥ ४९ ॥

बलादिप्रलेपे—नागबला गोरक्षतण्डुला । त्वक् गुडत्वक् । भवेदिति एकवचनप्रयोगः वैदिकत्वात् साधुः । "त्वचाम्" इत्यत्र "वचाम्" इति पाठः साधुः, तन्त्रान्तरे तथा दर्शनात्, तथा च चक्रपाणिः,—"महिषीभवनवनीतं व्याधिवचोपा तथा नागबला । पिष्टा मर्दनयोगात् पीनौ कठिनौ स्तनौ कुरुते ॥" इति । अत्र व्याधिः कुष्ठम् उपा वचा ॥ ५० ॥

स्वेदनस्ये—श्यामा प्रियङ्गुः, स्तनोत्थापनस्वेदे शिवदासेन श्यामाशब्दस्य तथा-

तिलतैलं क्वाथपादं तैलाद्धं माहिषं घृतम् ।
स्नेहशेषं पचेत्तेन नस्येन मासमात्रके ॥
बालादिवृद्धनारीणां यौवनं कुरुतेऽद्भुतम् ॥५२॥

अथ स्तनविवृद्धौ कुरुवकतैलम् ।—

कुरुवत्वक्कषायेण तत्कल्केन च साधितम् ।
तैलन्तु वनितानाञ्च कुचकुम्भव्रणापहम् ॥५३॥

अथ स्तनविवृद्धौ शुल्बप्रयोगः ।—

शुल्बचूर्णं रसे जीर्णं मदयन्ती पुनर्नवा ।
मेषशृङ्गीरसश्चैता व्रणशोषणरोपणम् ॥५४॥

अथ स्नायुके कुम्भीप्रयोगः ।—

कुम्भीपुष्पाणि चाऽऽदाय गिलयेद्रविवासरे ।
यावत्सङ्ख्यानि पुष्पाणि तावद्वर्षाणि स्नायुकः ॥
न निर्याति न सन्देहः सिद्धयोग उदाहृतः ॥५५॥

---

विधार्थकरणात् । राजी रक्तसर्षपः ; "राजी" इत्यत्र "लाजा" इति पाठे—लाजा कृताञ्जलिः, सूर्य्यभक्ता इत्यर्थः, अञ्जलिकारिकेति ख्यातं, लाजालुया इत्यन्ये, लज्जावतीति कुत्रचित् । लवणं सैन्धवम् । "तोयैरष्टगुणैः" इत्यत्र "तोये चतुर्गुणे" तथा "पचेत्तेन नस्येन मासमात्रके" इत्यत्र "पचेत्तैलं नस्यैश्च मासमात्रकैः" इति रसरत्नाकरे पाठान्तरद्वयम् । अत्र तैलघृते एकीकृत्य मिश्रकः स्नेहः पक्तव्यः । अकल्कोऽयम् । अन्यत्र तु एतदनुरूपं स्नेहान्तरं पठितं, तद्यथा—"गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः । सकटुका निशाभिः सिद्धं नस्यं स्तनोत्थापनं परम् ॥" इति ॥५१।५२॥

कुरुवकतैले—कुरुवत्वक्कषायेण झिण्टीमूलत्वक्क्वाथेन तैलचतुर्गुणेन । तत्कल्केन कुरुवत्वक्कल्केन स्नेहचतुर्थांशेन ॥ ५३ ॥

शुल्बप्रयोगे—शुल्बचूर्णं रसे जीर्णं पारदेन सह मारितं ताम्रचूर्णम् । मदयन्ती मल्लिकाभेदः । शुल्बचूर्णादिकं मेषशृङ्गीरसेन पिष्टा योग्यमात्रया सेवनीयं, प्रत्येकं वा पृथक् पृथक् उपयोज्यम् ॥ ५४ ॥

कुम्भीप्रयोगे—कुम्भी स्वनामप्रसिद्धः श्रोड्रदेशीयपुष्पवृक्षविशेषः, तदभावे पाटला ग्राह्या, तस्याः पुष्पाणि । स्नायुकः "नहरुया" इति नाम्ना पश्चिमे ख्यातः रोगविशेषः ॥ ५५ ॥

अथ भस्मकलक्षणम् ।—

येन भस्मीभवन्त्याशु भक्षितान्यखिलान्यपि ।
वस्तूनि स क्षुधारूपो व्याधिर्भस्मक उच्यते ॥ ५६ ॥

अथ श्लीपदस्य सम्प्राप्तिलक्षणे ।—

कफोत्तरा रक्तचलाश्रिता मलाः
पादेष्वधःकायमुपाश्रिताः शनैः ।
कुर्वन्ति शोफं घनमाशु श्लीपदं
तत् कर्णनासादिषु पादवद्भवेत् ॥ ५७ ॥

अथ श्लीपदे चक्रेश्वरो रसः ।—

ताम्रचूर्णसमं सूतं शुद्धं मर्द्यं दिनत्रयम् ।
नागवल्लीमेघनाद-पाठापौनर्नवद्रवैः ॥ ५८ ॥

भस्मकलक्षणमाह, येनेति ।—रोगोऽयं तन्त्रान्तरे अग्निमान्द्याद्यधिकारे पठितः, अस्मिंस्तु क्षुद्रहेतुलिङ्गादिसाधर्म्यात् क्षुद्ररोगाधिकारे पाठः न दोषावहः । भस्मक इति तीक्ष्णाग्नेर्नामान्तरम् ॥ ५६ ॥

श्लीपदस्य सलक्षणसम्प्राप्तिमाह, कफोत्तरा इति ।—कफोत्तराः कफप्रधानाः रक्तचलाश्रिताः चलशब्देनात्र शाखा उच्यते, रक्तेन चलेन शाखागतेन आश्रिताः शाखास्थरक्तसंश्रिता इत्यर्थः । "रक्तचलाश्रिताः" इत्यत्र "रक्तपलाश्रिताः" इति पाठः साधुः वाग्भटसंवादात् ; अस्मिन् पक्षे—पलं मांसं, रक्तपलाश्रिताः रक्तमांसाश्रिताः ; तथा च —"प्रस्थिता वङ्क्षणोर्वादिमधःकायं कफोल्वणाः । दोषा मांसासृगाः पादौ कालेनाश्रित्य कुर्वते ॥ शनैः शनैर्घनं शोफं श्लीपदं तत् प्रचक्षते ॥" इति । मलाः वातादयो दोषाः शनैः अधःकायमुपाश्रिताः वङ्क्षणोर्वादिकं संश्रिताः, पादेषु इति व्यक्त्यपेक्षया बहुवचनम् ; घनं निबिडं, प्रवृद्धमित्यर्थः, शोफं कुर्वन्ति, तत् श्लीपदमाह, पादवत् कर्णनासादिषु, अपि च अध्याहरणीयः, कर्णनासादिष्वपि, आदिपदेन करलथनशिश्नोष्ठानां ग्रहणम् । तन्त्रान्तरेषु तु कर्णादिगतश्लीपदेषु निर्दिष्टसम्प्राप्तिलक्षणायोगात् केषाञ्चिन्मतमिदमिति कृत्वा प्रदर्शितं तत्, यदुक्तं—"करकर्णनेत्रशिश्नोष्ठनासास्वपि केचिदाहुः" इति । वाग्भटेनाप्युक्तं—"पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत्" इति । सुश्रुतोऽपि—"कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः" इत्याह ॥ ५७ ॥

चक्रेश्वररसे—"ताम्रचूर्णसमं सूतम्" इत्यत्र "ताम्रं गन्धं समं सूतम्" इति इतरत्रा-

गोमूत्रे मर्दयेद्गाढं चक्रयन्त्रे दिनं पचेत्।
मासैकं भक्षयेत् क्षौद्रैः श्लीपदी च पिबेदनु ॥ ५८ ॥
खादिरं शल्लकीकाष्ठं क्षौद्रञ्चाशनकाष्ठकम्।
गवां मूत्रैः समं पिष्ट्वा पिबेत् श्लीपदनाशनम् ॥ ६० ॥

अथ श्लीपदे गुडूच्यादिलेपः।—

गुडूचीकट्फलाशुण्ठी-देवदारुविडङ्गकम्।
पिष्ट्वा गोमूत्रसंयुक्तो लेपः श्लीपदनाशनः ॥ ६१ ॥

अथ वल्मीके बहुभावितपिप्पलप्रयोगः।—

ब्राह्मीपलाशयोः क्वाथे रीतिपत्रं विनिक्षिपेत्।
दिनद्वयं ततस्तानि पुनस्तेनैव घर्षयेत् ॥ ६२ ॥
लघुभाण्डे समादाय चूर्णं कुष्माण्डवारिणा।
सप्तत्रिवारं कुर्वीत पुटं कारभवारिणा ॥ ६३ ॥

---

करभूत: पाठः। दिनत्रयमिति।—नागवल्ल्यादीनां प्रत्येकस्वरसेन दिनत्रयं मर्द्यम्। गाढं प्रगाढम्। चक्रयन्त्रे—"गर्त्तबाह्ये भवेद्गर्त्तो मध्यगर्त्ते रसं कुरु। चक्रयन्त्रमिदं सिद्धं बाह्ये गर्त्ते हरेत् पुटम् ॥" इत्यनेन पविसंहितोक्ते। "मासैकम्" इत्यत्र "माषैकम्" इति पाठान्तरम्। शल्लकीकाष्ठं शल्लकी शालभेदः, तस्याः काष्ठं सारमित्यर्थः। अशनकाष्ठकम् अशनः पीतशालः तस्य काष्ठं सारम्। रसरत्नाकरे तु—"खादिरम्—" इत्यादौ "खादिरं पद्मकाष्ठञ्च मधुनश्चाष्टमाषकम्" इति पाठान्तरम्। भैषज्यरत्नावल्यां पुनः,—"निम्बं खदिरसारञ्च मधुना चाष्टमाषकम्" इति पाठः। ताम्रचूर्णादिकं नागवल्ल्यादीनां प्रत्येकेन दिनत्रयं मर्दयित्वा गोलं विधाय चक्रयन्त्रे दिनमेकं पचेत्, स्वाङ्गशीतं समुद्धृत्य विचूर्ण्य च माषमात्रां युक्त्या अग्निबलां वा मात्रां मधुना सह लिह्यात्, खादिरादिकञ्च गोमूत्रे पिष्ट्वा अनुपानं कुर्वीतेति ॥ ५८—६० ॥

गुडूच्यादिलेपे—सर्वं सुगमम्। सुश्रुते तु "गुडूची—" इत्यादौ "चित्रकम्" इत्यधिकपाठो दृश्यते ॥ ६१ ॥

बहुभावितपिप्पलप्रयोगे—पलाशः पलाशमूलत्वक्। रीतिपत्रं पित्तलपत्रं कण्टकवेधार्हम्। तानि रीतिपत्राणि। तेन ब्राह्मीपलाशयोः क्वाथेन इत्यर्थः। चूर्णं रीतिचूर्णं, घर्षणजनितमाशयः। कुष्माण्डवारिणा इत्यत्र सह मर्दयित्वेति शेषः।

मर्दयित्वा पुटं दद्यादजामूत्रेण भावयेत् ।
ततोऽप्येकं पुटं दत्त्वा तिस्रस्त्रिकटुभावना: ॥६४॥
अमर्यजाविडङ्गाग्नि-गोजलैरथ भावित: ।
प्रतिमेष: सुसंसिद्धो रसो वल्मीकसूदन: ॥ ६५ ॥
वल्लत्रयमितो देयो वल्मीके तस्य मृत्स्नया ।
वल्मीकं संविलिप्यैतत् कृमिसङ्घप्रशान्तये ॥६६॥
रसेन्द्रस्तरवारुण्या: सभ्रमं हन्ति मारुतम् ।
वासानीरानुपानेन जयेत् कफसमीरणम् ॥६७॥

अथ स्थौल्ये विडङ्गादिचूर्णम् ।—

विडङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णञ्च योगोऽतिस्थौल्यदोषजित् ॥ ६८ ॥

---

महत् इति पदं पुटमित्यनेन सम्बध्यते, महापुटमित्यर्थ: ; तल्लक्षणन्तु दशमाध्याये द्रष्टव्यम् । करभवारिणा करभ: उष्ट्र: करिशावको वा तस्य वारिणा मूत्रेण । तिस्रस्त्रिकटुभावना: मिलितत्रिकटुक्काथेन त्रिवारं भावयेदिति । अमरो नीलनिर्गुण्डी ; जलैरिति पदम् अमर्यादिभि: प्रत्येकेन सम्बध्यते, अमरीरसेन छागमूत्रेण विडङ्ग-काथेन चित्रकक्काथेन गोमूत्रेण चेत्यर्थ: । "प्रतिमेष:" इत्यत्र "प्रातरेष:" इति पाठकल्पना अर्थबोधानुकूला इति सुधीभिर्विभाव्यम । वल्मीकसूदन: वल्मीक: क्षयीकाख्यकीटविशेषकृतमृत्तिकास्तूप: तस्य सूदन: वल्मीकमृत्तिकाया जलेना-लोडिताया: कियत्कालं स्थापिताया उपरिस्थस्वच्छजलैरित्यर्थ: । वल्मीके वल्मीकाख्य-क्षुद्ररोगे । तस्य मृत्स्नया वल्मीकमृत्तिकया । एतदिति पदं वल्मीकमित्यनेन सम्बध्यते । कृमिसङ्घप्रशान्तये वल्मीकरोगे रक्तादिसंस्थकीटसमूहविनाशाय । तरवारुण्या: नीरवकर्कट्या: ॥ ६२—६७ ॥

विडङ्गादिचूर्णे—क्षारं यवक्षार:, अत्र क्षारशब्दस्य नपुंसकलिङ्गता चिन्तनीया । सिद्धयोगे तु—"विडङ्गनागरक्षार-काललोहरजो मधु" इति समस्तपाठ: । "काललोह: वज्रादि:, अस्य चूर्णं मारणपुटननिष्पन्नं ग्राह्यम् । नैव सर्वचूर्णानामेव समभागं ग्राहयन्ति, किन्तु लोहस्य महावीर्यत्वेन प्राधान्यात् इतरमिलितचूर्णसमत्वम् । लोहस्याधिको भाग:, मधुना चावलेह: इत्यप्याहु:" इति शिवदासव्याख्या ॥६८॥

अथ शौल्ये त्रिफलादि-पत्रादिकषायौ।—

वरासनाम्नयः पत्र-निशाक्वाथं मधुप्लुतम्।
हिरदस्थूलदेहोऽपि पिबेन्मासात् कृशो भवेत्॥ ६९॥

अथ विपरीतरतिजव्याधिलक्षणम्।—

विपरीते रते प्राप्ते लिङ्गे दाहः प्रजायते।
कार्श्यञ्च सर्वगात्रेषु—" ॥७०॥

अथ विपरीतरतिजव्याधिप्रतीकारः।—

"—तत्प्रतीकार उच्यते।
प्रत्यग्रस्तन्निबध्यैव लिङ्गे चोषणमाचरेत्॥ ७१॥
क्षणे त्वेतस्य सञ्जाते चालयेच्छीतलाम्बुना।
कोलनिर्य्यासमादाय पाययेत्तं सशर्करम्॥
शाल्मलीदूर्वयोर्मूली-रसपायसमाशयेत्॥ ७२॥

त्रिफलादि-पत्रादिकषाययोः,—वरा त्रिफला, असनः स्वनामख्यातः शालभेदः, अग्नि. चित्रकः ते ; वरासनाग्नयः इति पृथक्पदकरणात् "वरासनाग्नयः" तथा "पत्र-निशाक्वाथम्" इति योगद्वयम्। मधुप्लुतमिति पदं लिङ्गवचनविपरीणामेन उभयत्रापि सम्बध्यते। वरासनाग्नयः क्वाथरूपाः कल्करूपा वा मधुप्लुताः, प्रयोज्या इति शेषः, एवं सङ्गतिः करणीया॥ ६९॥

विपरीतरतिजनितव्याधेर्लक्षणमाह, विपरीते इति।—विपरीते रते प्राप्ते दुष्टयोन्यशोन्यादिषु रतिकर्मणि प्रवृत्ते इत्यर्थः ; यदि वा—उत्तानभावेन तत्र प्रवृत्ते, पुरुषे इति शेषः॥ ७०॥

विपरीतरतिजन्यव्याधिप्रतीकारे—प्रत्यग्र इत्यस्य प्रतीकार इत्यनेन सम्बन्धः, प्रत्यग्रः अभिनवः, सद्य इत्यर्थः। प्रतीकारमाह. तदिति।—एतस्य लिङ्गदाहिनः पुंसः सञ्जाते, दाहे इति शेषः, क्षणे तत्क्षण एव तत् लिङ्गं निबध्य वस्त्रादिना आवेष्ट्य लिङ्गे चोषणमाचरेत् आचूषणक्रियां कुर्यात्, करेण अनुलोमं मर्दयेत् इत्यर्थो वा, तच्च लिङ्गनालसञ्चितदोषनिःसारणार्थं कर्त्तव्यमिति बोध्यम ; अनन्तरं शीतलाम्बुना चालयेच्च। किञ्च कोलनिर्य्यासादिक तथा शाल्मल्यादिकञ्च पाययेत्। कोल-निर्य्यासं बदरक्वाथम्। सशर्करं शर्कराप्रक्षेपयुक्तम्। शाल्मलीदूर्वयोः मूलीरसपायसं मूलरसपक्वपायसम् ; यद्वा—मूलीरसः शतमूलीरसः, शाल्मलीदूर्वयोः रसः

अथ उपदंशादिप्रतीकारः ।—

पुरुषव्याधिनुत्त्यर्थं रक्तस्रावो हि मुष्कके ।
भक्षणं बोलबद्धस्य मत्स्याक्षीमूललेपनम् ॥७३॥
जानुकग्रन्थिनुत्त्यर्थं यवचिञ्चाः प्रलेपयेत् ।
सामुद्रकाञ्जिकाभ्यां हि लेपं विधेहि सत्वरम् ॥७४॥

अथ रक्तविकृतौ बोलबद्धरसप्रयोगोपदेशः ।—

सर्वरक्तविकारेषु बोलबद्धस्य सेवनम् ॥७५॥

अथ अस्थिभग्ने लाक्षादिप्रलेपः ।—

मैषीक्षीरं द्रवं चूर्णं कटुतुम्बे विनिक्षिपेत् ।
प्रलेपनेन मासत्यादस्थिभग्नः प्रशाम्यति ॥७६॥

अथ स्नायुके अश्मशर्करिप्रयोगोपदेशः ।—

स्नायुकस्यापनुत्त्यर्थमश्मशर्करिप्रवेशनम् ॥७७॥

---

शतमूलीरसश्च तैः कृतं पायसं, स च अनुरूपं तण्डुलं दत्त्वा पक्तव्यः । आशयेत् भोजयेत् ॥ ७१।७२ ॥

उपदंशादिप्रतीकारे—पुरुषव्याधिनुत्त्यर्थम् उपदंशादिलिङ्गरोगापनोदनार्थम् । मुष्कके शिश्नपृष्ठे लिङ्गमध्ये इत्यर्थः, "स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः" इति चक्रपाण्युक्त्या पुरुषरोगे लिङ्गमध्ये शिराव्यधस्य विहितत्वात् । बोलबद्धस्य रक्तपित्ता-द्यधिकारे कार्याचिकित्सितोक्तस्य । मत्स्याक्षी शालिञ्चः तस्य मूललेपनं, लिङ्गे इति शेषः । जानुकग्रन्थिनुत्त्यर्थं रोगस्यास्य परिपाके आमवातादिका विविधा रोगा जायन्ते, तत्रामवाते जाताया: जानुकग: तथा ग्रन्थेश्च ग्रन्थिवेदनाया इत्यर्थः ; ग्रन्थि-शब्देनात्र ग्रन्थिरुक् बोद्धव्या ; नुत्त्यर्थम् अपनोदनार्थम् । यवचिञ्चा चीरिणी । सामुद्रः समुद्रफेनः शैवालरचना वा "तोपचिनि" इति ख्यातम् ॥ ७३।७४ ॥

बोलबद्धरसस्य प्रयोगोपदेशे—सर्वरक्तविकारेषु उपदंशादौ हि रक्तं विकृतं जायते अत एव तज्जनितेषु रक्तविकारेषु तथा अन्येष्वपि रक्तविकारेषु इत्यर्थः ॥७५ ॥

लाक्षादिप्रलेपे—द्रव द्रवरसां, लाक्षामित्यर्थः, भग्नहितत्वात् । "मैषीक्षीरद्रवम्" इति मतान्तरपाठे तु—मैषीक्षीरेण सह लाक्षामित्यर्थः । चूर्णं सुधाम् । विनिक्षिपे-दित्यत्र विरावमिति शेषः ॥ ७६ ॥

अश्मशर्करिप्रयोगोपदेशे—स्नायुकस्य "नहरुया" नाम्ना पश्चिमदेशे ख्यातस्य रोग-

अथ योनिव्यापन्निदानम् ।—

दैवेनातिरते स्त्रीणां विषमोत्कटकासनात् ।
जायन्ते व्यापदो योनौ दुष्टबीजार्त्तवान्मताः ॥७८॥

अथ योनिव्यापत्सु पिष्टीयोगः ।—

पिष्टी तारार्कयोरेका तैले गन्धस्य पाचिता ।
सेविता मधुसर्पिर्भ्यां गुह्यरोगान्नियच्छति ॥७९॥

अथ योनिशूले निम्बादिगोलकम् ।—

निम्बुद्रावैः सुसम्पिष्टं निम्बैरण्डस्य बीजकम् ।
योनिशूलहरं क्षिप्रा गोलकं योनिमध्यगम् ॥८०॥

---

विशेषस्य, रक्तविकृतिजन्यस्येत्यर्थः, विसर्पोक्तक्रियादिविधानात् अत्र रक्तदुष्टिरवश्य-मेवास्तीति मन्तव्यम्। अभ्यङ्गादिप्रवेशनं वातव्याध्यधिकारोक्तस्य अभ्यङ्गवातारिसंज्ञकस्य तैलस्य अभ्यङ्गादिनाम्नः रसस्य वा प्रवेशनं प्रयोगः इत्यर्थः, तैलाभ्यङ्गः रससेवनं वा कर्त्तव्यमिति। "प्रवेशनम्" इत्यत्र "प्रलेपनम्" इति क्वचित् पाठः ॥ ७७ ॥

योनिव्यापदो निदानमाह, दैवेनेति।—दैवेन प्राक्तनेन कर्मणा, दैवस्य सर्वरोग-कारणत्वे सत्यपि यदत्र पृथक् ग्रहणं तदस्मिन् व्याधौ तस्य विशेषेण कारणत्वबोध-नार्थम्; तथा अतिरते अतिसुरते कृते इत्यर्थः; एतच्च मिथ्याचारान्तर्गतं निदानमिति बोद्धव्यम्; विषमोत्कटकासनात् विषमासनात् तथा उत्कटकासनात् विषमासनम् उन्नतानतसङ्कीर्णतादियुक्तमासनम् उत्कटकासनं कठिनकाष्ठादिनिर्मितमासन-मित्यर्थः; एतदपि मिथ्याचारान्तर्गतं निदानम्; तथा दुष्टबीजार्त्तवात् दुष्टबीजात् पितृमातृशुक्रशोणितयोः दुष्टत्वात्, आर्त्तवात् दुष्टरजसश्च हेतोः स्त्रीणां योनौ व्यापदः विंशतिप्रकारा रोगाः इत्यर्थः, जायन्ते इति मताः मुनिभिः कथिता इत्यर्थः। चरकेणाप्युक्तं—"विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसङ्ग्रहे। मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च॥ जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक्॥" इति ॥ ७८ ॥

पिष्टीयोगे—तारार्कयोः रौप्यताम्रयोः एका पिष्टी "अर्कांशतुल्यात् रसताम्र-गन्धात्" इत्यादिना अष्टमाध्यायोक्ता; एवञ्च तारार्कौ रसादिभिः सह खल्ले विमर्द्य तीव्रातपे स्थापयित्वा च नवनीतरूपा पिष्टी कार्य्या; गन्धस्य तैले शुद्धगन्धककृते तैले इत्यर्थः, पाचिता पूर्ववत् भृष्टा। गुह्यरोगान् योनिरोगान् ॥ ७९ ॥

निम्बादिगोलके—गोलकं निम्बद्रावपिष्टनिम्बैरण्डबीजकृतगोलकं योनिमध्यगं

अथ योनिरोगे सोमराज्यादिप्रलेपः ।—

सोमराजी देवदारु निम्बदारुनिशासनम् ।
तक्रपिष्टं प्रलेपोऽयं योन्यामयहरो भवेत् ॥८१॥

अथ योनिक्रमिशूले रसोनादिप्रलेपः ।—

रसोनं गृहधूमन्तु विशाला सविडङ्गकम् ।
कण्टकारीफलं तोयैः पिष्ट्वा योनौ प्रलेपयेत् ॥
क्रमिशूलहरं ख्यातं सप्ताहान्नात्र संशयः ॥८२॥

अथ फलघृतम् ।—

मञ्जिष्ठा तगरं कुष्ठं त्रिफला शर्करा वचा ।
मेदा यष्टी हरिद्रे द्वे दीप्यकं कटुरोहिणी ॥८३॥
पयस्या हिङ्गु काकोली वाजिगन्धा शतावरी ।
प्रत्येकं चूर्णयेत् कर्षं द्वात्रिंशत्पलकं घृतम् ॥८४॥
घृताच्चतुर्गुणं क्षीरं घृतशेषं विपाचयेत् ।
योनिशूले शुक्रदोषे गर्भिणीनाञ्च पाययेत् ॥८५॥

---

यथा भवेत् तथा क्षिप्त्वा, तिष्ठेदिति शेषः, एवञ्च तक्रोलकं योनिशूलहरं भवेत् इति योजनीयम् ॥ ८० ॥

सोमराज्यादिप्रलेपे—दारुनिशा दारुहरिद्रा । असनं स्वनामख्यातम् । तक्रपिष्टमित्यनन्तरं कुर्य्यादिति शेषः ॥ ८१ ॥

रसोनादिप्रलेपे—विशाला गोरक्षकर्कटी । क्रिमिशूलहरं योनिक्रिमिहरं योनिशूलहरञ्चेत्यर्थः ॥ ८२ ॥

फलघृते—यष्टी यष्टिमधु । दीप्यकं यमानी । पयस्या क्षीरकाकोली । घृतेऽस्मिन् पाकार्थं जलं चतुर्गुणं देयं, "स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र वीर्य्याधानार्थमावपेत् ॥ न मुञ्चति रसं द्रव्यं क्षीरादिभिरुपस्कृतम् । तस्माच्चतुर्गुणं वारि देयं पाकाय जानता ॥" इति परिभाषाबलात् केवलक्षीरेण सम्यक् पाकसिद्धेरभावात् । चक्रपठितफलघृतसंवादात् समधिकोपयोगित्वाच्च अत्रापि लक्ष्मणामूलप्रक्षेपादिरूपः वृद्धवैद्योपदेशः अनुसर्त्तव्यः ; तथा च—"अनुक्तं लक्ष्मणामूलं

अथ रजोनाशे वियोनिरसप्रयोगविधिः।—

वियोनिरसगुञ्जैकं विनिष्कमभयागुड़म्।
पुष्परोधहरं खादेत् पलैकं तिलजीवनम्॥
ततः शीतोदकं चिप्त्वा पुष्पं स्रवति तत्क्षणात्॥८६॥

अथ पुष्परोधहरयोगद्वयम्।—

लाङ्गलीकन्दचूर्णं वा मूलं वाऽप्यापमार्गजम्।
इन्द्रवारुणीमूलं वा योनिस्थं पुष्परोधनुत्॥८७॥

अथ पुष्परोध-रक्तगुल्महरयोगद्वयम्।—

तिलमूलकषायन्तु ब्रह्मदण्डीयमूलकम्।
यष्टीत्रिकटुकं चूर्णं क्वाथयुक्तञ्च पाययेत्॥
पुष्परोधे रक्तगुल्मे स्त्रीणां सद्यः प्रशाम्यति॥८८॥

चिपन्त्यत्र चिकित्सकाः। जीवद्वत्सैकवर्णायाः घृतमत्र प्रशस्यते॥ आरण्यगोमयेनापि वह्निज्वाला प्रदीयते॥" इति॥ ८३—८५॥

वियोनिरसप्रयोगविधौ—वियोनिरसः उदरादिचिकित्सिताधिकारे कामलाचिकित्सितोक्तः, तस्य एका गुञ्जा विनिष्कमभयागुडं गुड़हरीतक्योः मिलित्वा निष्कद्वयम्। पुष्परोधहरं रजोरोधहरम्। ततः गुडाभयाभ्यां वियोनिरसगुञ्जां सेवित्वा पलैकं तिलजीवनं तिलबीजं, बीजाभावे अङ्कुरोत्पत्तेरभावात् तिलस्यापि विनाशात् जीवनशब्देनात्र बीजं बोद्धव्यम्; शीतोदकं चिप्त्वा दत्त्वेत्यर्थः, खादेदिति पूर्वानुवृत्तिः॥ ८६॥

पुष्परोधहरयोगद्वये—आपमार्गजं मूलम् अपामार्गसम्बन्धिमूलमित्यर्थः। "आपामार्गजम्" इति कर्त्तव्ये "आपमार्गजम्" इति ह्रस्वप्रयोगस्तु छान्दसत्वात्। योगद्वयमेतत्॥ ८७॥

पुष्परोध-रक्तगुल्महरयोगद्वये—ब्रह्मदण्डीयमूलकं भार्गीमूलम्; तिलमूलकषाये ब्रह्मदण्डीमूलचूर्णं प्रक्षिप्य पिबेदित्येको योगः। क्वाथयुक्तं तिलक्वाथयुक्तम्; तिलक्वाथे यष्टित्रिकटुकचूर्णं प्रक्षिप्य पिबेदित्यपरो योगः। योगरत्नाकरधृतसुश्रुतपाठे तु योगाविमौ किञ्चित् पाठपरिवृत्त्या चूर्णरूपैकयोगत्वेन दृश्येते; तथा च—"तिलमूलञ्च त्रिगुञ्ज ब्रह्मदण्डीयमूलकम्। मधुयष्टीत्रिकटुकैर्युतं चूर्णमुपाचरेत्॥" इति॥ ८८॥

अथ पुष्परोधे चणकप्रयोगः।—

चणकानां रसञ्चैव शृतं क्षीरं घृतेन वा।
शर्करामधुसंयुक्तं रक्तदोषहरं पिबेत् ॥८९॥

अथ पुष्परोधे गुडव्योषादिचूर्णम्।—

तिलक्वाथे गुडं व्योषं तिलभार्गीयुतं पिबेत्।
क्वाथं रक्तभवे गुल्मे नष्टपुष्पेऽथ पाययेत् ॥९०॥

अथ गर्भाजनने धुस्तूरप्रयोगः।—

ग्राह्यं कृष्णचतुर्दश्यां धुस्तूरस्य तु मूलकम्।
कट्यां बद्ध्वा रमेत् स्वेच्छं न गर्भः सम्भवेत् क्वचित् ॥९१॥
मुक्तेन लभते गर्भं पुरा नागार्जुनोदितम्।
तन्मूलचूर्णं योनिस्थं न गर्भः सम्भवेत् क्वचित् ॥९२॥

अथ गर्भाजनने सैन्धवप्रयोगः।—

ऋतौ जाते क्षिपेद्योनौ तिलतैलाक्तसैन्धवम्।
द्रवते तत्क्षणादेव तच्छुक्रं पुष्पितामपि ॥९३॥

---

चणकप्रयोगे—चणकानां रसम् आर्द्रचणकस्य स्वरसं क्वाथं वा, शृतं क्वथनमात्रसिद्धं क्षीरम्; चणकरस-क्षीरौ समभागौ गृहीत्वा घृतमधुशर्कराभिः सम्मेल्य पिबेदित्यर्थः। घृतेन वा इत्यत्र वा-शब्दः पूर्वयोगापेक्षयेति ज्ञातव्यम्। रक्तदोषहरम् आर्तवदोषहरम् ॥ ८९ ॥

गुडव्योषादिचूर्णे—"तिलभार्गीयुतम्" इत्यत्र "हिङ्गुभार्गीयुतम्" इति सिद्धयोगे तथा "घृतभार्गीयुतम्" इति वाग्भटे पाठः। भार्गी ब्रह्मयष्टिः। तिलक्वाथे गुडं तथा व्योषादीनाञ्च चूर्णं प्रक्षिप्य पिबेत् इति ॥ ९० ॥

अथ रजोरोधप्रसङ्गेन गर्भाजननचिकित्सां वक्तुमुपक्रमते। तत्र धुस्तूरप्रयोगे—मुक्तेन कटीदेशात् धुस्तूरमूलेन परित्यक्तेन सता। तन्मूलचूर्णं धुस्तूरमूलचूर्णम् ॥ ९१।९२ ॥

सैन्धवप्रयोगे—तत् तिलतैलाक्तसैन्धवमित्यर्थः, तत्क्षणादेव शुक्रपतनसमकालमेव शुक्रं द्रवते द्रावयते, गर्भाशयगतमपि शुक्रं निःसारयतीत्यर्थः; अन्तर्भूतण्यर्थोऽयं प्रयोगः। तथा पुष्पितामपि रजस्वलां स्त्रियमपि द्रवते इति योज्यं, द्रावयते

अथ गर्भस्रावणे चूर्णप्रयोगः।—

देवालये तु यच्चूर्णं कर्षैकं तोयपेषितम्।
पिबेद्गर्भवती नारी गर्भः स्रवति तत्क्षणात् ॥९४॥

अथ गर्भस्रावणे एरण्डप्रयोगः।—

काण्डमेरण्डपत्रस्य योनावष्टाङ्गुलं क्षिपेत्।
चतुर्मासोद्भवो गर्भः स्रवत्येव हि तत्क्षणात् ॥९५॥

अथ गर्भस्रावणे चित्रकप्रयोगः।—

निर्गुण्डोद्रवसम्पिष्टं चित्रमूलं मधुप्लुतम्।
कर्षं भुक्त्वा पतत्याशु गर्भो रण्डाकुलोद्भवः ॥९६॥

अथातिरक्तस्रावे शरपुङ्खाप्रयोगः।—

मूलन्तु शरपुङ्खायास्तण्डुलाम्बुप्रपेषितम्।
पाययेत् कर्षमात्रं तदतिरक्तप्रशान्तये ॥९७॥

---

इत्यर्थः, आर्त्तवं शोणितमपि निःसारयतीत्याशयः। ऋतुकाले तिलतैलाक्तसैन्धवखण्डं योनौ स्थापयेच्चेत् तदा ऋतवन्ते रतिकाले आहितं शुक्रं गर्भाशयगतमपि निःसरति, शोणितमपि निर्गच्छति, एवञ्च गर्भसम्भावनैव नास्ति इति फलितम्। अस्य च योग-रत्नाकरोक्तः पाठः सुगमार्थकः, तथा च—"तैलाविलं सैन्धवखण्डमादौ निधाय रण्डा निजयोनिमध्ये। नरेण सार्द्धं रतिमातनोति या सा न गर्भं लभते कदाचित् ॥" इति ॥ ९३ ॥

गर्भजनकभेषजानन्तरं गर्भस्रावकभेषजमाह। तत्र चूर्णप्रयोगे—देवालये यच्चूर्णं पुरातनदेवमन्दिरगात्रस्थं लेपचूर्णमित्यर्थः ॥ ९४ ॥

एरण्डप्रयोगे—काण्डं नालमित्यर्थः ॥ ९५ ॥

चित्रकप्रयोगे—भुक्त्वा इत्यस्य गर्भः इत्यनेन एककर्तृत्वं बोद्धव्यम्, अत्र मातु-र्भक्षणस्य गर्भस्रवणे उपचारः, अन्यथा एककर्तृकत्वाभावदोषात्; अथवा—भुक्त्वा इत्यनन्तरं "तिष्ठति चेन्नारी तदा तस्याः" इति वाक्यमूहनीयम् ॥ ९६ ॥

अथ प्रदरादिजनितातिरक्तस्रावचिकित्सामाह। तत्र शरपुङ्खाप्रयोगे—अतिरक्त-प्रशान्तये प्रदरादिव्याधौ तथा गर्भपाताद्यनन्तरमतिनिःसृतस्य रक्तस्य निवृत्तये इत्यर्थः ॥ ९७ ॥

अथातिरक्तस्रावे अर्कमूर्त्तिरसप्रयोगविधिः ।—

स्त्रीणां रक्ते पूयके वा प्रवृत्ते सैसं चूर्णं पेटकारीभवञ्च ।
दद्यात् प्रातर्मल्लखण्डेन सार्द्धं दत्त्वा सूतं त्वर्कमूर्त्तिं घृतेन ॥९८॥

अथ योनिशूलहरयोगद्वयम् ।—

योनौ शूले निम्बवातारिपिष्टिं कुर्य्याद्यद्वा नागकर्णोत्थमूलैः॥९९॥

अथ रक्तदोषे व्योषादितैलम् ।—

तैलं क्वाथं व्योषयष्टिप्रयुक्तं दद्यात् स्त्रीणां रक्तदोषापनुत्त्यै॥१००॥

अथ पुष्यानुगं चूर्णम् ।—

पाठा जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम् ।
अम्बष्ठाशाल्मली पिष्टा समङ्गावत्सकत्वचम् ॥१०१॥
बाह्लीकबिल्वातिविषा-लोध्रतोयदगैरिकम् ।
शुण्ठीमधूकमार्द्वीकं रक्तचन्दनकट्फलम् ॥१०२॥

अर्कमूर्त्तिरसस्य प्रयोगविधौ—रक्ते पूयके वा प्रवृत्ते, योनित इति शेषः। सैसं चूर्णं सीसकचूर्णम्। पेटकारीभवञ्च इत्यत्रापि चूर्णमिति सम्बध्यते ; पेटकारी "पैठारि" इति ख्यातं, "भाँपिटकुरी" इति लोके। मल्लखण्डेन गुडशर्करया, गुडमध्ये जातेन शर्करावत् कठिनेन खण्डेनेत्यर्थः। सूतं त्वर्कमूर्त्तिम् अर्कमूर्त्तिरसं, स च रसः "लौहाष्टक मारितमर्कभाग सूतं द्विभागं द्विगुणञ्च गन्धम्। विमर्दयेत् वह्निरसेन तापे दिनत्रयञ्चास्य विषं कलांशम्॥ विचिन्त्य पित्तैः परिभावितोऽयं रसोऽर्कमूर्त्तिर्भवति त्रिदोषे॥" इत्यनेन भैषज्यरत्नावल्यां पठितः। आदौ अर्कमूर्त्तिरसं घृतेन सह पाययित्वा पश्चात् सीसकादिचूर्णं मल्लखण्डेन सह प्रातः पाययेदिति ॥ ९८ ॥

योनिशूलहरयोगद्वये—निम्बवातारिपिष्टि निम्बस्य त्वक् तथा वातारिः शुक्लैरण्डः, तस्य मूलं तयोः पिष्टिं कल्कमित्यर्थः, योनौ धारयेदिति शेषः। यद्वा—नागकर्णोत्थमूलैः रक्तैरण्डमूलैः पिष्टिं कुर्य्यादित्यन्वयः। निम्बवातारिकल्कं नागकर्णकल्कं वा सशूलायां योनौ धारयेदिति ॥ ९९ ॥

व्योषादितैले—तैलं क्वाथं व्योषयष्टिप्रयुक्तं त्रिकटुयष्टिमधुक्वाथसिद्धं तैलमित्यर्थः ॥ १०० ॥

पुष्यानुगचूर्णे—शिलोद्भेदं पाषाणभेदी। अम्बष्ठा दक्षिणापथे स्वनामख्याता ; तदभावे पाठा एव ग्राह्या, सचणा इति केचित्। शाल्मली शाल्मलीवेष्टकं मोचरसः

कट्वङ्गवत्सकानन्ता-धातकीमधुकाञ्जनम् ।
पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तण्डुलाम्बुना ॥१०३॥
पिबेदर्शःस्वतीसारं रक्तं यश्चोपवेश्यते ।
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ॥१०४॥
योनिदोषं रजोदोषं श्यावं श्वेतारुणासितम् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥१०५॥

अथ त्रिविधविषनिर्देशः ।—

यत् कन्दमूलादिषु जायते ततो विषाद्विषं स्थावरमुग्रवीर्य्यम् ।
सर्पादिकं जङ्गममुच्यते तद्द्वयैरनेकैः कृतकञ्च यत्तत् ॥१०६॥

मित्यर्थः । समङ्गा मञ्जिष्ठा वराहक्रान्ता वा । वत्सकत्वचं कुटजवल्कलम् ; "वत्सकत्वचम्" इत्यत्र "पद्मकेशरम्" इति सिद्धयोगादौ पाठः । वाह्लीकं कुङ्कुमम् । विल्व विल्वशलाटुः । तोयदं मुस्तकम् । "मधूकं" तथा "कट्फलम्" इत्यत्र "विफलां मरिचम्" इति चक्रपाणिधृतः पाठः । चरके "मधूकम" इत्यत्र "मरिचम्" इति पाठः । "माद्दींकम्" इत्यत्र "माचीकम्" इति पाठे—माचीकं देवदारु । कट्वङ्गः श्योणाकः । वत्सकः इन्द्रयवः । अञ्जनं सौवीराञ्जनं, रसाञ्जनस्य प्रागुक्तत्वात् ; यदि वा—रसाञ्जनस्यैव भागद्वयम् । "अञ्जनम्" इत्यत्र "अर्जुनम्" इति चरकादिसर्वतन्त्रसम्मतः पाठः । पुष्ये पुष्यानक्षत्रे इत्यर्थः ॥ १०१—१०५ ॥

इदानीं व्याधितहितचिकित्सापारिशेष्यात् विषचिकित्सितं वक्तुमिच्छुर्ग्रन्थकृत् आदौ विषस्य जातिभेदानाह, यदिति ।—विषात् त्रिविधविषमपेक्ष्य इत्यर्थः, कन्दमूलादिषु विषयेषु कन्दमूलादिरूपमित्यर्थः, यदुग्रवीर्य्यं विषं जायते, ततः कन्दमूलादिरूपस्थावरात्मकत्वात्, तत् स्थावरम ; कन्दमूलादिषु इत्यत्र आदिपदेन पत्रपुष्पादिरूपाणां दशविधानां ग्रहणम् ; यदुक्तं सुश्रुते—"मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः ॥" इति । तथा सर्पादिकं सर्पवृश्चिकादिसम्भूतं विषमित्यर्थः, जङ्गमं विषमुच्यते । यद्वा—ततः तस्मात्, प्रसिद्धात् इत्यर्थः, मथ्यमानजलनिधिसमुत्पन्नादिति यावत्, विषात् निजरूपपरित्यागेन परिगृहीतरूपान्तरात् विषादित्यर्थः, कन्दमूलादिषु यत् रूपं, प्रतिष्ठितमिति शेषः, तत् उग्रवीर्य्यं स्थावरं जायते, यत् रूपं सर्पादिकम्, अधिष्ठितमिति शेषः, तत् जङ्गमम् उच्यते । उक्तञ्च वाग्भटेन—"मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।

### अथ विषचिकित्सा ।—

अथ मेघनादप्रयोगः ।—

घननादजटा हन्ति विषं स्थावरजङ्गमम् ॥१०७॥

अथ सूत-शतावरीयोगः ।—

ज्येष्ठाम्बुसूतराजेन पीताऽभीरुशिफा तथा ॥१०८॥

अथ सूत-सोमराजीयोगः ।—

सुरभिशकृद्रसभावित-शशिराजीचूर्णसंयुतः सूतः ।
स्थावरजङ्गमकृत्रिमविषजित् गुञ्जामितोऽभ्यस्तः ॥१०९॥

---

जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशोऽनलेक्षणः । जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ क्षिप्तो ब्रह्मणा मूर्त्तिमतः स्थावरजङ्गमे । सोऽग्न्यनिलप्रभिन्नं रूपमुज्झित्वा स्वनामकम् ॥ स्थिरमत्युल्बणं वीर्य्यं यत् कन्देषु प्रतिष्ठितम् । कालकूटेन्द्रवत्साख्य-शृङ्गीहालाहलादिकम् ॥ सर्पलूतादिदंष्ट्रासु दारुणं जङ्गमं विषम् ॥" इति । जङ्गममपि षोडशविधम्; यदुक्तं तत्रैव—"दृष्टि-निःश्वास-दंष्ट्रा-नख-मूत्र-पुरीष-शुक्र-लाला-ऽऽर्त्तव-मुख-सन्दंश-विशर्द्धित-गुदास्थि-पित्त-शूक-शवानीति" इति । एषां विस्तरस्तु सौश्रुतकल्पे द्रष्टव्यः । "द्रव्यै." इत्यत्र "द्रवैः" इति पाठः न साधुः. "कृत्रिमं गरसंज्ञन्तु क्रियते विविधौषधैः" इति वाग्भटपाठे द्रव्योल्लेखादर्शनात् । कृतकं कृत्रिमं, विविधद्रव्यसंयोगात् कृतमित्यर्थः । तदपि द्विविधं, यदुक्तं काश्यपेन—"संयोगजञ्च द्विविधं तृतीयं विषमुच्यते । दूषीविषन्तु सविषमविषं गर उच्यते ॥" इति ॥ १०६ ॥

मेघनादप्रयोगे—घननादः मेघनादः तण्डुलीयमित्यर्थः, तस्य जटा मूलम्; एतच्च तण्डुलाम्बुना पिष्टा पेयं योगरत्नाकरसंवादात्; तथा च—"तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा । तक्षकेणापि सन्दंष्टं निर्विषं कुरुते नरम् ॥" इति ॥ १०७ ॥

सूत-शतावरीयोगे—ज्येष्ठाम्बु तण्डुलोदकं, तेन सह सूतराजः पारदः पारदभस्म इत्यर्थः, तेन । अभीरुशिफा शतावरी । तथा स्थावरजङ्गमविषं हन्तीत्यर्थः ॥१०८॥

सूत-सोमराजीयोगे—सुरभिशकृद्रसभावितः गोमयरसभावितः यः शशिराजीचूर्णः सोमराजीचूर्णः तेन संयुतः सूतः रसभस्म इत्यर्थः । सूतसोमराजीचूर्णयोः मिलितयोः गुञ्जामानम् ॥ १०९ ॥

अथ अभ्रकादिप्रलेपः।—

अभ्रकं तालकं ताप्यं शिलाजित् कुनटी रसः।
देवदालीरसो व्योषं लेपनाद्विषनाशनम् ॥११०॥

अथ लूताविषे सूतभस्मप्रयोगः।—

रसेन चक्रमर्दस्य पुटितः पुटपाचितः।
एरण्डस्नेहसंयुक्तः सूतो लूताविकारजित् ॥१११॥

अथ महासर्पविषे नागदमनीप्रयोगः।—

जलेन नागदमनी-मूलं नस्ये प्रयोजितम्।
महासर्पस्य विषमं विषं नश्यति तत्क्षणात् ॥११२॥

अथ पञ्चाङ्गशिरीषप्रयोगः।—

जलपिष्टं शिरीषस्य पञ्चाङ्गं यः पिबेन्नरः।
स नागराजदष्टोऽपि मानुषो निर्विषो भवेत् ॥११३॥

अथ अश्वगन्धा-वन्ध्याप्रयोगौ।—

अश्वगन्धाभवं कन्दं वन्ध्याया वाऽथ यः पिबेत्।
तस्य देहान्तरं याति विषं स्थावरजङ्गमम् ॥११४॥

अथ वृश्चिकविषे व्योषादितैलम्।—

व्योषैरण्डस्रावपक्वन्तु तैलं लेपायोक्तं वृश्चिकानां सदैव ॥११५॥

---

अभ्रकादिप्रलेपे—ताप्यं सुवर्णमाक्षिकम्। शिलाजित् शिलाजतु। कुनटी मनःशिला। रसः पारदः। देवदाली हस्तिघोषकः तस्याः रसः; अभ्रादिकं देवदालीरसेन पिष्ट्वा लेपे योजयेत् ॥ ११० ॥

सूतभस्मप्रयोगे—चक्रमर्दस्य एडगजस्य "चाकुन्दे" इति प्रसिद्धस्य। चक्रमर्दरसेन पुटितं रसम् एरण्डतैलेन सह संयोज्य लेपयेत किञ्चित् भक्षयेच्च ॥ १११ ॥

नागदमनीप्रयोगे—नागदमनी स्वनामख्यातलताविशेषः तस्या मूलम् ॥ ११२ ॥

पञ्चाङ्गशिरीषप्रयोगे—शिरीषस्य पञ्चाङ्गं पत्रपुष्पफलमूलवल्कलरूपम् ॥११३॥

अश्वगन्धा वन्ध्याप्रयोगयोः,—पूर्वयोगोक्तं जलपिष्टमिति पदं योगद्वयेऽपि आवर्त्तनीयम्। वन्ध्या वन्ध्याकर्कोटकी तस्याः कन्दम् ॥ ११४ ॥

व्योषादितैले—व्योषं त्रिकटु एरण्डस्रावः एरण्डनिर्य्यासः ताभ्यां कल्करूपाभ्यां

अथ तार्क्ष्यसूतः ।—

सूतं गन्धं टङ्कणं हेमयुक्तं घर्षेद्यामं मेघनादीरसेन ।
गोलं कृत्वा कान्तपाषाणमूषा-मध्ये क्षिप्त्वा भूधरे तं पुटेत ॥
पश्चाद्घर्षेन्मेघनादीरसेन सूतः सिद्धस्त्वेष तार्क्ष्यो विषारिः ॥११६॥

अथ विषहररसः ।—

तार्क्ष्यं वन्ध्यां भक्षयेद्रक्तिमानं सूतं तस्मात् यान्ति नाशं विषाणि ॥
॥ ११७ ॥

अथ मृतसञ्जीवनम् ।—

ससिन्दुवारतगरं मृतसञ्जीवनं विषम् ॥११८॥

अथ आखुविषे शिरीषप्रयोगः ।—

शिरीषकुसुमं पत्रं विषमाखुविषापहम् ॥११९॥

अथ सर्वविषे देवदार्वादियोगः ।—

देवदारु नतं मांसी लवली वाकुची विषम् ।
कुष्ठञ्च पानलेपाभ्यां समस्तविषनाशनम् ॥१२०॥

---

पक्वं तैलं तिलभवम् ; व्योषैरङ्कोल्यास्थिकल्केन पादिकेन चतुर्गुणजलेन च तिलतैलं पक्त्वा तेन प्रलेपः देयः ॥११५॥

तार्क्ष्यसूते—हेम सुवर्णम् । मेघनादीरसेन तण्डुलीयमूलरसेन । कान्तपाषाण-मूषामध्ये कान्तपाषाणकृतमूषामध्ये । भूधरे भूधरयन्त्रे । सूतः इति ।—एष: तार्क्ष्यः तदाख्यः सूतः रसः तार्क्ष्यरसः इत्यर्थः, सिद्धः अव्यर्थः इत्यर्थः, विषारिः विषहन्ता ॥ ११६ ॥

विषहररसे—तार्क्ष्यं स्वर्णमाक्षिकम् । वन्ध्यां वन्ध्याकर्कोटकीम् । सूतं पारदं पारदभस्म इत्यर्थः ; तार्क्ष्यादित्रयाणां मिलित्वा रक्तिमानम् ॥ ११७ ॥

मृतसञ्जीवने—सिन्दुवारः निर्गुण्डी तस्य पत्रम् । तगरं तगरपादुका । विषम् अमृतम् ; भक्षणविषया लेपविषया च योज्योऽयम् ॥ ११८ ॥

शिरीषप्रयोगे—पत्रमिति शिरीषस्यैव । विषम् अमृतम् । आखुविषापहम् उन्दुरविषापहम् । अनेनापि पानलेपौ कार्य्यौ ॥ ११९ ॥

देवदार्वादियोगे—नतं तगरपादुका । मांसी जटामांसी । लवली "नोयाड़" इति ख्यातम् । वाकुची सोमराजी ॥ १२० ॥

अथ सर्वविषे टङ्कणप्रयोग: ।—

सर्पादिविषनाशाय टङ्कणस्य रजोऽम्भसा ।
पानाभ्यञ्जननस्याद्यैरतिगुह्योपदंशिना ॥१२१॥

अथ वृश्चिकविषे मनोह्वादिगुड़िका ।—

मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च ।
गोशकृद्रसपिष्टानि गुड़िका वृश्चिकापहा ॥१२२॥

अथ वृश्चिकविषे पलाशबीजगुड़िका ।—

अर्कपयसा दिवा ब्राह्म-तरोर्भावितैर्मुहुर्बीजै: ।
गुड़िका कृता प्रयत्नात् वृश्चिकविषमाशु नाशयति ॥१२३॥

अथ गरविषे कनकादिवटी ।—

कनकसारसुतीक्ष्णनिदिग्धिका-त्रपुषासितकलांशनिषेवणात् ।
जयति साधु युवा धनकाङ्क्षया गणिकया परिदत्तगरौषधम् ॥
॥१२४॥

---

टङ्कणप्रयोगे—पानाभ्यञ्जननस्याद्यै: इत्यत्र प्रयोज्यमिति शेष: । अतिगुह्योपदंशिना अतिगोप्योपदंशवताऽपि अम्भसा टङ्कणचूर्णं पानाभ्यञ्जनादिभिरभ्यवहार्य्य-मित्यर्थ: ॥ १२१ ॥

मनोह्वादिगुडिकायां—मनोह्वा मन:शिला । "मालतीपल्लवानि च" इत्यत्र "जातीफलं समागरम्" इति पाठान्तरम् । लेपविधया प्रयोज्यो-ऽयम् ॥ १२२ ॥

पलाशबीजगुडिकायाम्—अर्कपयसा अर्कक्षीरेण । दिवा दिवसे । ब्राह्मतरोर्बीजै: पलाशबीजै: ॥ १२३ ॥

कनकादिवटिकायां—कनकं सुवर्णं, सार: वज्रं, सुतीक्ष्णं शोभाञ्जनं, निदिग्धिका कण्टकारी, त्रपुषा खनामख्याता, सित: पारद:, कला मन:शिला आसां अंश; भाग: प्रत्येकं समभाग इत्यर्थ:, तन्निषेवणात । साधु इति जयति इति क्रियाया विशेषणम ; साधु सम्यक् यथा तथा जयतीत्यर्थ: ॥ १२४ ॥

अथ सविषान्ने वृक्षाम्लादियोगः।—

पुराणवृक्षाम्लयुतं कटुत्रयं नरेण भुक्तं त्वशनावसाने।
असारवृत्तावलयाऽर्थकाङ्क्षया सहान्नदत्तं विषमाशु नाशयेत्॥
॥१२५॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये क्षुद्ररोग-गुह्यरोग-स्थावर-जङ्गमविषप्रतीकारो नाम पञ्चविंशोऽध्यायः॥२५॥

---

# अथ षड्विंशोऽध्यायः।

---

## अथ जरारोगचिकित्सनम्।—

अथ रसायनगुणाः।—

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः।
प्रभावर्णस्वरौदार्य्यं देहेन्द्रियबलोदयम्॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात्॥ १ ॥

---

वृक्षाम्लादियोगे—पुराणः वत्सरातीतः वृक्षाम्लः तिन्तिडीफलं तेन युतम्। अत्र तिन्तिडीत्रिकटुचूर्णानां प्रत्येकं समभागः। अशनावसाने भोजनान्ते। असारवृत्तावलया दुश्चारिणया स्त्रिया। सहान्नदत्तम् अन्नेन सह दत्तमित्यर्थः। विषं गरमित्यर्थः॥१२५॥

इति रसरत्नसमुच्चयबोधिन्यां पञ्चविंशोऽध्यायः समाप्तः॥ २५ ॥

---

स्वस्थातुरहितभेदेन द्विविधयोरौषधयोः विवृतं तावदातुरहितं सर्वम्, इदानीं रसायनवाजीकरणभेदेन स्वस्थहितं द्विविधं विवक्षुः वाजीकरणमपेक्ष्य रसायनयोगानां दीर्घायुःस्मृत्यादिकरत्वेन बहुगुणत्वेन चादौ रसायनं विवृणोति, तत्र च नराणां रुचिप्रकर्षजननार्थं प्रक्रमे एव तत्फलमाह, दीर्घमिति।—अध्यायस्यास्य यत् "जरा-रोगचिकित्सनम्" इति नामकरणं कृतं, तत्र जरारूपस्य अकालवलिपलितादिरूपस्य कालिकस्वाभाविकवलिपलितादिरूपस्य च रोगस्य चिकित्सनं प्रशमनोपायः इत्यर्थः; जरा च रोगश्च तयोश्चिकित्सनमित्यर्थो वा, रसायनस्योभयार्थसाधकत्वात्; यदुक्तं चरकेण— "प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम्" इति। मेधां धारणावतीं धियम्।

अथ जराया निदानम् ।—

पन्थाः शीतं कदन्नञ्च वयोवृद्धाश्च योषितः ।
मनसः प्रातिकूल्यञ्च जरायाः पञ्च हेतवः ॥ २ ॥

अथ वार्द्धक्यहर रसायनम् ।—

हलिनीरससम्पिष्टौ तुल्यांशौ रसगन्धकौ ।
हस्तिपर्णीलवलिका-मत्स्याक्षीकल्कवेष्टितौ ॥
त्रिःपक्वौ मूकमूषायां सव्योषौ वार्द्धकापहौ ॥ ३ ॥

---

तरुणं वयः युवत्वमित्यर्थः । प्रभावर्णस्वरौदार्य्यं प्रभावर्णस्वराणाम् औदार्य्यं महत्त्वं, प्राशस्त्यमित्यर्थः ; यद्वा—प्रकृष्टप्रभादिकम् औदार्य्यञ्च दातृत्वञ्च, तच्च रसायन-प्रभावेण विशुद्धसत्त्वोदयात् सम्भवति । देहेन्द्रियबलोदयं देहेन्द्रियाणां बलोदयं बल-सम्पदम् ; देहेन्द्रियबलानामुदयं सम्पदं प्रशस्ततामित्यर्थो वा, देहदार्ढ्यम् इन्द्रियाणां स्थिरत्वं विपुलबलञ्च इति निष्कर्षः ; यदि वा—देहेन्द्रियबलेन सह उदयं सम्पदम् ऐश्वर्य्यमित्यर्थः, तथात्वञ्च रसायनस्य नैरुज्यसाधकत्वात्, नीरुजस्य च धनार्जनशक्ते-रक्षुण्णत्वात् इति । वाक्सिद्धिं सफलवचनत्वम् । वृषतां मैथुनसामर्थ्यम ; "वृषताम्" इत्यत्र "प्रणतिम्" इति चरकसम्मतः पाठः । रसायनात् रसानां रसकार्य्यभूतानां सप्तानामेव प्रकृष्टानां धातूनाम् अयनं लाभोपायः यत् तत् रसायनं तस्मात् ; यदुक्तं चरकेण—"लाभोपायो हि शस्तानां रसादीनां रसायनम्" इति ॥ १ ॥

जराप्रतिरोधप्रयोजनके रसायनयोगे वक्तव्ये "सङ्क्षेपतः क्रियायोगो निदानपरि-वर्जनम्" इति सुश्रुतवाक्यात् निदानपरिवर्जनस्य प्राथमिकोपचारत्वात् तद्वर्जनाय जरायाः निदानमाह, पन्था इति ।—पन्थाः अत्यध्वपर्य्यटनम् । शीतं कदन्नञ्च शीतान्नं तथा कदन्नञ्च कुत्सितमन्नं, तच्च पूतिमलाक्तादिदोषदुष्टम् इति । मनसः प्रातिकूल्यं दौर्मनस्यादिकमित्यर्थः ॥ २ ॥

वार्द्धक्यहर-रसायने—हलिनी लाङ्गली विषलाङ्गलीया इत्यर्थः । हस्तिपर्णी हस्ति-कर्णाख्यपलाश इत्यर्थः । लवलिका लवङ्गम् । मत्स्याक्षी शालिञ्चः, हिलमोचिकेति केचित् । अयमर्थः,—रसगन्धकौ कज्जलीकृत्य लाङ्गलीमूलरसेन पिष्ट्वा गोलकं कुर्य्यात्, ततः हस्तिपर्ण्यादिभिः कृतकल्कमध्ये गोलकं तं संस्थाप्य मूकमूषायामवरुध्य च गजपुटे पचेत्, एवं वारत्रयं कृत्वा विचूर्ण्य च सुगुप्तं निधापयेत् । ततश्चूर्णं त्रिकटुचूर्णसमं [illegible]ऽऽलोच्य सेवेत इति ॥ ३ ॥

अथ उदयादित्यरसः।—

आवर्त्तिते रसपलं क्षिप्त्वा द्विपलगन्धके।
आर्द्रकद्रवमुष्टीनां विंशत्या मर्दितं पचेत्॥ ४॥
मृद्दृढताम्रमूषायां तं गुञ्जाप्रमितं रसम्।
ससर्पिर्नागरं भुक्त्वा तप्ताम्बुप्रसृतं पिबेत्॥
रसोऽयमुदयादित्यः स्याज्जरारजनीहरः॥ ५॥

अथ सर्वरोगहर-रसायनम्।—

मूषां तिन्दुकविस्तारामायामे षोडशाङ्गुलाम्।
भाण्डबाह्यस्थपादांशां वालुकाभिः प्रपूरयेत्॥ ६॥
तस्यां निवेश्य द्विगुण-गन्धगर्भगतं रसम्।
याममात्रं पचेच्चुल्ल्यां क्षिपेद्गन्धस्य तूद्गमे॥ ७॥
वायसीनागिनीमत्त-मेघनादरसं क्रमात्।
स रसः सर्वरोगघ्नो वलीपलितजिद्भवेत्॥ ८॥

---

उदयादित्यरसे—आवर्त्तिते द्राविते इत्यर्थः। अत्र प्रथमार्द्धे "आवर्त्तिते रसपले क्षिप्त्वा द्विपलगन्धकम्" इति क्वचित् पाठः। आर्द्रकद्रवमुष्टीनां विंशत्या विंशतिपलार्द्रकरसेन। मृद्दृढताम्रमूषायां मृल्लिप्तताम्रमूषायाम्। तप्ताम्बुप्रसृतं पलद्वयमितमुष्णजलमित्यर्थः। जरारजनीहरः जराकृतनैशतिमिरनाशन इत्यर्थः॥ ४।५॥

सर्वरोगहर-रसायने—तिन्दुकविस्तारां तिन्दुकफलवत् परीणाहवतीम्। आयामे दैर्घ्ये। भाण्डबाह्यस्थपादांशां भाण्डस्य पाकार्थं गृहीतस्य भाण्डस्य बाह्यस्थः बहिःप्रदेशे अवस्थितः पादांशः चतुर्थभागः यस्यास्तादृशीं चुल्लिकान्तःस्थितविभागामित्यर्थः, मूषामित्यस्य विशेषणम्; "पादांशाम्" इत्यत्र "पादांशम्" इति क्वचित् पाठः। द्विगुणगन्धगर्भगतं रसं द्विगुणगन्धककवलितं पारदं, तावन्मानरसगन्धकयोः कज्जलीमित्यर्थः; "द्विगुणगन्धगर्भगतं रसम्" इत्यत्र "द्विगुणं गन्धकं पाचिकं रसम्" इति क्वचित् पाठः। "याममात्रम्" इत्यत्र "यामत्रयम्" इति पाठान्तरम्। गन्धस्य तूद्गमे गन्धकस्य गन्धे निर्गते सतीत्यर्थः। वायसी काकमाची नागिनी नागदन्ती मत्तः धुस्तूरः मेघनादः तण्डुलीयकः एषां रसं स्वरसम्। अयमाशयः,—यथोक्तायामविस्तारायाः कज्जलीगर्भायाः मूषायाः द्वादशाङ्गुलं चुल्लिकान्तः अङ्गुलीचतुष्टयञ्च बहिःप्रदेशे संस्थापयेत्; ततः चुल्लिकां सर्वां वालुकाभिः प्रपूर्य मूषामुखञ्च काठिन्य

अथ मासिक-रसायनम्।—

रसगन्धकमध्वाज्य-शिलाजत्वम्लवेतसम्।
द्विमाषप्रमितं वेगान्मासमात्राज्जरां जयेत् ॥९॥

अथ षाण्मासिक-रसायनम्।—

विष्णुक्रान्तारुणागस्ति-क्षीरिणीतण्डुलीयकैः।
रसगन्धकयोः पिष्टी स्त्रीस्तन्येन च मर्दिता ॥१०॥
यवास्तिला घृतक्षौद्रमेषामुद्वर्त्तनं जयेत्।
कार्श्यं जराञ्च षण्मासाद्विधत्ते वृद्धिमायुषः ॥११॥

अथ पाक्षिक-रसायनम्।—

शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः।
आपूर्य्यते दुर्बलदेहधातुस्त्रिपक्षरात्रेण यथा शशाङ्कः ॥१२॥

अथ हैमादि-रसायनम्।—

हेम धात्रीफलं क्षौद्रं गायत्रीरसभावितम्।
लिहन्ननु पिबेत् क्षीरं दृष्टरिष्टोऽपि जीवति ॥१३॥

---

आहत्य प्रहरमात्रं प्रहरत्रयं वा पचेत्, यदा गन्धकस्य गन्धो निःसृतो भवेत् तदा वायस्यादिस्वरसं किञ्चित् किञ्चित् तत्र क्षिपेत्, शुष्कीभूते च तस्मिन् रसे यवतार्य्य प्रयोजयेदिति ॥ ६—८ ॥

मासिक-रसायने—वेगात् प्रसह्य। मासमात्रात् मासैकेनैव ॥ ९ ॥

षाण्मासिक-रसायने—विष्णुक्रान्ता अपराजिता। अरुणा अतिविषा। अगस्तिः वसुकः। विष्णुक्रान्तादिस्वरसैः स्त्रीस्तन्येन च मर्दितां रसगन्धकयोः कज्जलीं सेवेत तथा घृतक्षौद्राभ्यां यवतिलौ पिष्ट्वा उद्वर्त्तनञ्च कुर्य्यात् ॥ १०।११ ॥

पाक्षिक-रसायने—लौहस्य मिलितेतरचूर्णसमत्वं, रसायनतया श्रेष्ठत्वात् महावीर्य्यत्वाच्च। ताप्यं सुवर्णमाक्षिकम्। शिलाजत्वादीन् भक्षयतीति भक्षः; पचाद्यच्। त्रिपक्षरात्रेण पञ्चदशाहेन इत्यर्थः ॥ १२ ॥

हैमादि-रसायने—हेम स्वर्णभस्म। धात्रीफलम् आमलकचूर्णम्। गायत्रीरसभावितं खदिरक्वाथभावितम्; "गायत्रीरसभावितम्" इत्यत्र "गालितं रसमर्दितम्" इति क्वचित् पाठः। स्वर्णभस्मामलकीचूर्णञ्च खदिरक्वाथेन भावयित्वा क्षौद्रेण लिह्यात् क्षीरञ्चानुपिबेदिति ॥ १३ ॥

अथ पिप्पल्यादि-रसायनम्।—

मधुमागधिकाविडङ्गसार-त्रिफलाहेम घृतं सिताञ्च खादन्।
जरयाऽनवलीढदेहकान्तिः समधातुश्च समाः शतञ्च जीवेत् ॥१४॥

अथ अष्टमासिक-रसायनम्।—

ज्योतिष्मतीनाम लता पीता पीतफलोज्ज्वला।
आषाढे पूर्वपक्षे स्यात् गृहीत्वा बीजमुत्तमम् ॥१५॥
आहरेत्तिलवत्तैलं मुष्टिना चापि तत् पचेत्।
क्षीरतुल्यं चतुर्थांश-माक्षिकं तैलशेषितम् ॥१६॥
ततस्तत् कोलकर्पूर-त्वग्जातीफलमिश्रितम्।
स्निग्धभाण्डगतं धान्येष्वनुगुप्तं निधापयेत् ॥१७॥
पिबेत् सूर्य्योदये तैलात् पलं याति विसंज्ञताम्।
ततः संज्ञां शनैर्लब्ध्वा ततः क्रन्दति रोदिति ॥१८॥
एवं मासे श्रुतिधरः परस्मिन् सूर्य्यसन्निभः।
तृतीये पूज्यते देवैश्चतुर्थे नैव दृश्यते ॥१९॥
खेचरः पञ्चमे षष्ठे सिद्धैर्मिलति सप्तमे।
विष्णोः समदिनं जीवेज्जीवन्मुक्तोऽष्टमे भवेत् ॥२०॥

---

पिप्पल्यादि-रसायने—मागधिका पिप्पली। विडङ्गसारः विडङ्गतण्डुलः। हेम स्वर्णम्। अनवलीढदेहकान्तिः अनवलीढः अनास्वादितः, अस्पृष्ट इत्यर्थः, देहकान्तिर्यस्य तथाविधः सन्। समाः शतं शतं वत्सरान् ॥ १४ ॥

अष्टमासिक-रसायने—ज्योतिष्मती स्वनामख्यातलताविशेषः, "लताफट्की" इति ख्यातम्। पीता पीतवर्णा। पीतफलोज्ज्वला पीतेन पीतवर्णेन परिणतेनेत्यर्थः, फलेन उज्ज्वला। आषाढे पूर्वपक्षे आषाढशुक्लपक्षे। मुष्टिना इत्यस्य गृहीत्वा इत्यनेन सम्बन्धः, मुष्टिधारणकेन गृहीत्वेत्यर्थः। क्षीरतुल्यं तैलसमं दुग्धम्। चतुर्थांशमाक्षिकं तैलपादिकसुवर्णमाक्षिककल्कमित्यर्थः। तैलशेषितं तैलावशेषम्। कोलं कोलमानम्; कश्चित् बदरफलम् इत्याह। त्वक् गुड़त्वक्। कर्पूरादित्रयाणां प्रत्येकं कोलप्रमाणं बोद्धव्यम्। अनुगुप्तं सुरक्षितम्। क्रन्दति चीत्कारं करोति। परस्मिन् द्वितीये मासे। नैव दृश्यते औषधप्रभावेण रसायनसेवी अन्यैरदृश्यो भवति इत्यर्थः। आषाढशुक्लपौर्णमास्यां

अथ त्रिवार्षिक-रसायनम्।—

भूमावरत्निमात्रायां ताम्रं तैलेन पूरयेत्।
षण्मासं तापयेदूर्द्धं मृदुना तुषवह्निना॥
पीत्वा माषादिनिष्क्रान्तं तत्त्रिवर्षान्महाकविः॥२१॥

अथ षड्‌विंशतिशतवर्षायुष्कर-रसायनम्।—

तैलप्रस्थं घृतप्रस्थं चतुष्प्रस्थं पयः पचेत्।
द्विप्रस्थशेषं तत् पीत्वा मासं त्रिपुरुषायुषः॥२२॥

अथ सहस्रवर्षायुष्कर-रसायनम्।—

तैलं पिबेद्घृतक्षौद्र-क्षीरान्यतममिश्रितम्।
कुर्य्याच्च तैलमध्वाज्यैर्नस्यं क्षीरघृताशिनः॥
भुक्त्वा शतायुः षण्मासात् सहस्रायुर्भवेन्नरः॥२३॥

---

परिणतज्योतिष्मतीफलात उत्तमं वीज मुष्टिना गृहीत्वा तिलवत् प्रपीड्य च तैलं निष्काशयेत्, ततः पादांशमाक्षिकेण कल्केन समक्षीरेण चतुर्गुणजलेन च तत्तैलं पचेत्, शीतीभूते च तस्मिन् कोलादिचूर्णं मिलित्वा पादिकं प्रक्षिप्य स्निग्धभाण्डे संस्थाप्य च धान्यराशौ निधापयेत्, प्रतिदिनं प्रातः तस्मात् पलं पिबेच्चेति॥ १५—२०॥

त्रिवार्षिक-रसायने—अरत्निमात्रायां प्रसारितकनिष्ठाङ्गुलिमुष्टिप्रमाणेन खनितायामित्यर्थः, भूमौ भूम्यधः ताम्रं ताम्रपात्रम्। तैलेन तिलतैलेन ज्योतिष्मतीतैलेन वा। माषादिनिष्क्रान्तं माषमाणादारभ्य शाणमानं यावत्। अरत्निमितगर्त्तमध्ये तिलतैलपूर्णं ज्योतिष्मतीतैलपूर्णं वा ताम्रपात्रं निधाय मृत्तिकादिना उपरिभागमावृत्य च स्थापयेत्, तदुपरि च मृदुं तुषाग्निं षण्मासं यावत् ज्वालयेत्, षण्मासान्ते च उद्धृत्य माषमाणमारभ्य क्रमवृद्ध्या चतुर्माषं यावत् वर्षत्रयं सेवेत इति॥ २१॥

षड्‌विंशतिशतवर्षायुष्कर-रसायने—द्विप्रस्थशेषं तत् पीत्वा मासं मासेन प्रस्थद्वयं तत् यमकं पीत्वा त्रिपुरुषायुषः त्रयाणां पुरुषाणां समाहारः त्रिपुरुषं तादृशम् आयुः यस्य तथाविधः; पुरुषायुस्तु पञ्चदिनाधिकसविंशतिवर्षशतं, यदुक्तमायुर्निरूपणे वराहाचार्य्येण—"समाः षष्टिर्द्विगुणा मनुजकरिणां पञ्च च निशाः" इत्यादि; एवञ्च त्रिपुरुषायुष-शब्देन दिनपञ्चदशाधिकसप्तषष्टिवर्षशतत्रयं भवति, एतद्रसायनसेवी तादृशायुषो भवेदित्यर्थः। चक्रपाणिकमिदम्॥ २२॥

सहस्रवर्षायुष्कर-रसायने—भुक्त्वा भोजनानन्तरं घृताद्यन्यतममिश्रितं तैलं पिबेत्,

अथ त्रिफला-रसायनम् ।—

मधुकेन तुगाक्षीरी पिप्पली क्षौद्रसर्पिषा ।
विडङ्गपिप्पलीभ्याञ्च त्रिफला लवणेन च ॥२४॥
संवत्सरप्रयोगेण स्मृतिमेधाबलप्रदा ।
भवत्यायुष्प्रदा पुंसां जरारोगनिवर्हणी ॥२५॥

अथ द्वितीयत्रिफला-रसायनम् ।—

खदिरासनभृङ्गसातला-क्रिमिशत्रूदकभाविता मुहुः ।
गुडमाक्षिकसर्पिरन्विता त्रिफला हन्ति जराञ्च वत्सरात् ॥२६॥

अथ तृतीयत्रिफला-रसायनम् ।—

त्रिफलामसनोदकेन पिष्ट्वा रजनीपर्युषितामयःकपाले ।
मधुरां मधुना लिहन् हिनस्ति स्थविमानं जरसं गदांश्च सर्वान् ॥
॥२७॥

---

गुडमध्वाज्यैः मिश्रितैः नस्यञ्च कुर्य्यात् क्षीरघृताभ्यां सदा भोजयेच्च । "क्षीरघृताशिनः" इत्यत्र "क्षीरघृताशनः" इति पाठः साधुः ॥२३॥

त्रिफला-रसायने—"तुगाक्षीरी पिप्पली" इत्यत्र "तु गोक्षीरैः पिप्पल्या" इति पाठान्तरम् । अत्र त्रिफला इति पदं मधुकेन इत्यादिभिः षड्भिः पृथक् सम्बध्यते, वाग्भटोक्तत्रिफलारसायनेन सह सादृश्यदर्शनात्, यदाह वाग्भटः,—"मधुकेन तुगाक्षीर्य्या पिप्पल्या लवणेन च । पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥ सितया वा समायुक्ता समा युक्ता रसायनम् । त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥" इति । एवञ्च मधुकेन त्रिफला इत्येकः, तुगाक्षीरी त्रिफला इति द्वितीयः, पिप्पली त्रिफला इति तृतीयः, क्षौद्रसर्पिषा त्रिफला इति चतुर्थः, विडङ्गपिप्पलीभ्यां त्रिफला इति पञ्चमः, लवणेन च त्रिफला इति षष्ठः इति षड् योगाः ॥ २४।२५ ॥

द्वितीयत्रिफला-रसायने—असनः पीतशालः, भृङ्गः भृङ्गराजः, सातला चर्मकषा, क्रिमिशत्रुः विडङ्गः, एषामुदकेन क्वाथेन भाविता । मुहुः सप्तवारानित्यर्थः । खदिरादीनां क्वाथेन भावितां त्रिफलां गुडमध्वाज्यैः संवत्सरं लेहयेदिति ॥२६॥

तृतीयत्रिफला-रसायने—अयःकपाले लौहपात्रे । मधुरां मधुना मधुना मधुरीकृतामित्यर्थः । स्थविमानं स्थौल्यम् । असनक्वाथेन पिष्टां त्रिफलां लौहपात्रे

अथ षडङ्ग-रसायनम् ।—

कान्ताभ्रकशिलाधातु-विषसूतकमाक्षिकम् ।
शीलितं मधुसर्पिर्भ्यां व्याधिवार्द्धकमृत्युजित् ॥२८॥

अथ वार्षिक-रसायनम् ।—

गन्धं लौहं भस्म मध्वाज्ययुक्तं सेव्यं वर्षं वारिणा त्रैफलेन ।
शुभ्रे केशे कालिमा दिव्यदृष्टिः पुष्टिर्वीर्य्यं जायते दीर्घमायुः ॥
॥२९॥

अथ कुष्ठादिहर-रसायनम् ।—

नीलज्योतिः कान्तचूर्णं रुदन्ती-धात्रीपत्रैर्वारिणा त्रैफलेन ।
मध्वाज्याभ्यां वल्लरार्द्धप्रयोगात् कुष्ठं शुभ्रं रोमजातं निहन्ति ॥
॥३०॥
देहे दार्ढ्यं दिव्यदृष्टिः सुपुष्टि-वीर्य्यं शौर्य्यं जायते दीर्घमायुः ॥
॥३१॥

---

रजनौ वासयेत्, प्रभाते प्रभूतमधुना सामालोड्य लिहेत्। मात्रा चाग्निबलापेक्षिणी कर्त्तव्या ॥ २७ ॥

षडङ्ग-रसायने—कान्तं कान्तलौहम्। शिलाधातुः शिलाजतु, रसायनत्वात्। विषम् अमृतम् ॥ २८ ॥

वार्षिक-रसायने—लौहं भस्म भस्मलौहम्। शुद्धगन्धकं लौहभस्म च समभागं मध्वाज्याभ्यां सम्मर्द्य त्रिफलाक्वाथेनालोड्य च वर्षं यावत् पिबेत्। शुभ्रे केशे कालिमा केशकार्ष्ण्यम् ॥ २९ ॥

कुष्ठादिहर-रसायने—नीलज्योतिः तुत्थकम्। कान्तचूर्णं कान्तलौहचूर्णं तच्च मारितपुटितं ग्राह्यम्। रुदन्ती—"चणपत्रसमं पत्रं क्षुपश्चैव तथाविधः। शैशिरे जलबिन्दूनास्रवन्तीति रुदन्तिका ॥" इत्युक्तलक्षणा उत्कलादौ स्वनामख्याता, धात्रीपत्राणि आमलकपत्राणि तैः सह क्वथितेन त्रैफलेन वारिणा रुदन्तीधात्रीपत्र-त्रिफलानां क्वाथेन। शुभ्रं रोमजातं शुक्ररोम श्वित्रं पलितं वा। "रोमजातम्" इत्यत्र "रोगजातम्" इति पाठे—शुभ्रं कुष्ठं श्वित्रकुष्ठम् ॥ ३०।३१ ॥

अथ ज्योतिष्मतीतैल-रसायनम् ।—

ज्योतिष्मत्यास्तैलमाज्यं सगन्धं गुञ्जावृद्ध्या सेवयेन्मासमात्रम् ।
यावच्च स्याद्वयस्तु सं प्राप्य मूर्त्तिर्मेधायुक्तो दिव्यदृष्टिर्नियत्मा ॥
॥३२॥

अथ सर्वरोगान्तक-रसायनम् ।—

कान्ताभ्रत्रिफलाविडङ्गरजनी-ताप्याब्ददेवद्रुम-
व्योषैलाग्निपुनर्नवाद्रिगिरिजाङ्कोलैः समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेद्यथासात्म्यतो
मेदःश्लेष्मसमीरणोल्बणगदेष्वन्येषु वा पूरुषः ॥३३॥

अथ कान्त-रसायनम् ।—

कान्तं तुल्याभ्रसत्त्वं चरणपरिमितं हेम तत्तुल्यमर्कं
वैक्रान्तं ताप्यरूप्यं क्रिमिहरकटुकैस्तुल्यभागैः समेतम् ।
लीढं देवद्रुतैलैर्विरचयति नृणां देहसिद्धिं समृद्धां
पथ्यं कल्पोक्तभुक्तं हरति च सकलान् रोगपूगान् अयेन ॥३४॥
तदेतत् सर्वरोगघ्नं रम्यं कान्तरसायनम् ।
सेव्यं वृष्यं सुपुत्रीयं मङ्गल्यं दीपनं परम् ॥३५॥

---

ज्योतिष्मतीतैल-रसायने—ज्योतिष्मत्यास्तैलं पातालयन्त्रादिना ग्राह्यम् । सगन्धं तुल्यगन्धकसहितम्, एवञ्च तैलाज्यगन्धानां समभागः । गुञ्जावृद्ध्या सेवयेन्मासमात्रं गुञ्जैकमारभ्य प्रतिदिनं गुञ्जामानेन वर्द्धयित्वा द्वादशगुञ्जां यावत् खादेत्, ततः वर्षमर्द्धवर्षं वा तेनैव मानेन खादेत् । "मूर्त्तिः" इत्यत्र "मूर्त्तिम्" इति साधु कल्पनं, मूर्त्तिं प्राप्य शोभनं रूपमासाद्येत्यर्थः । नियत्मा नीरोगः ॥ ३२ ॥

सर्वरोगान्तक-रसायने—अद्रिगिरिजः अद्रिजः गिरिजश्च, तत्र अद्रिजः शिलाजतु गिरिजः गैरिकः । गुग्गुलुरत्र सर्वचूर्णसमः । भृङ्गजलेन भृङ्गराजरसेन । यथासात्म्यतः अग्निबलं विविच्येत्यर्थः ॥ ३३ ॥

कान्त-रसायने—तुल्याभ्रसत्त्वमिति पदं कान्तमित्यनेन सहान्वेतव्यम् । चरणपरिमितं हेम लौहचतुर्थांशं सुवर्णभस्म । तत्तुल्यमर्कं स्वर्णतुल्यं जीर्णताम्रम् । वैक्रान्तताप्यरूप्याण्यपि प्रत्येकं स्वर्णतुल्यानि । क्रिमिहरकटुकैः विडङ्गकटुत्रयचूर्णैः तुल्यभागैः

अथ चतुर्थत्रिफला-रसायनम् ।—

रात्रौ कान्तशरावके त्रिकफला भिन्ना जलैः स्वादुभिः
प्रातर्मुष्टिमिताः खलु प्रतिदिनं षण्मासमासेविताः ।
हन्युः पित्तकफामयान् बहुविधं कुष्ठं प्रमेहांस्तथा
पाण्डुं यक्ष्मगदञ्च कामलगदं पथ्यञ्च तक्रं तथा ॥२६॥

अथ द्वितीयकान्त-रसायनम् ।—

त्रिफलामस्तुसंयुक्तं कान्तं सर्वरसायनम् ॥२७॥

अथ तृतीयकान्त-रसायनम् ।—

एतत् स्यादपुनर्भवं हि भसितं कान्तस्य दिव्यामृतं
सम्यक्सिद्धरसायनं त्रिकटुकोवेल्लाज्यमध्वन्वितम् ।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्पुत्रदं
प्रोक्तं श्रीगिरिशेन कालयवनोद्भूत्यै पुरा तत्पितुः ॥२८॥

---

कान्तभागिकैरित्यर्थः । देवद्रुतैलैः देवदारुतैलैः । कल्लोलभुक्तं वक्ष्यमाणलोह-कल्लोलभोज्यम् । रोगपूगान् रोगसमूहान् ॥ २४।२५ ॥

चतुर्थत्रिफला-रसायने—कान्तशरावके कान्तलोहभाजने । त्रिकफलाः त्रिफलाः । केचित्तु "त्रिकफलाः" इत्यत्र "सुचणकाः" इति पठन्ति, परन्तु त्रिफलायां मेहकुष्ठपाण्डुकामलापित्तकफादिहरगुणसद्भावात् चणके तु कुष्ठयक्ष्मादिहरगुण-स्यादृष्टत्वाच्च स पाठः न मनोरमतया प्रतिभाति । भिन्नाः अस्थिविरहिताः ; "सुचणकाः" इति पाठे—भिन्ना विदलिताः । जलैः स्वादुभिरित्यत्र उषिता इति शेषः । मुष्टिमिताः पलमिताः अन्तर्मुखमुष्टिमिता वा ॥ २६ ॥

द्वितीयकान्त-रसायने—मस्तु दधिमस्तु ; "मस्तु" इत्यत्र "मधु" इति पाठान्तरम् । कान्तं कान्तलोहं, तच्च मारितपुटितं ग्राह्यं, त्रिफलाचूर्णसमं लोहं मस्तुना पातव्यमिति ॥ २७ ॥

तृतीयकान्त-रसायने—अपुनर्भवं पुनरुत्थानरहितं निरुत्थीकृतमित्यर्थः । दिव्यामृतं देवानां यथा अमृतं तथा गुणकारकमित्यर्थः । त्रिकटुकोति ।—मिलितत्रिकटु-विडङ्गचूर्णतुल्यं लोहचूर्णं मध्वाज्याभ्यां लिह्यात् ; त्रिकट्वाद्यन्वितं निष्कमितम् अपुन-र्भवं कान्तस्य भसितं जरादिकं हन्यात् सत्पुत्रदञ्च, भवेदिति शेषः । दिव्यामृतं

अथ कान्ताभ्रक-रसायनम् ।—

सिद्धमभ्रं समं कान्तं मर्दयेदार्द्रवारिणा ।
कलांशं हेमचूर्णस्य बीजपूररसैः पुनः ॥३८॥
मर्दयेत् खल्लमध्यस्थं यावत् सप्तदिनावधि ।
आटरूषरसेनैव तथा मुण्डीरसेन च ॥४०॥
तालमूलीरसेनैव दशमूलीरसेन वा ।
तत्तद्रोगहरैः क्वाथैर्भावयेत् सप्तधा भिषक् ॥४१॥
त्रिफलाव्योषचूर्णेन मध्वाज्याभ्यां प्रयोजयेत् ।
पञ्चकर्मविशुद्धेन सेव्यमेतद्रसायनम् ॥४२॥
पाण्डुशोफोदरानाह-अर्शोंशोषकासजित् ।
सन्ततं सततञ्चैव पुराणं विषमं ज्वरम् ॥४३॥
निहन्यात् सर्वकुष्ठानि प्रमेहान् विंशतिं जयेत् ।
कान्ताभ्रकमिदं श्रेष्ठं रसायनमनुत्तमम् ॥४४॥

अथ पाठादिघृतम् ।—

पालाशोलूखले तन्मलवियुजि विमर्दीकृतैराढकांशै-
र्मिश्रं ब्राह्मीरसैस्तैर्विधिवदिह पचेत् प्रस्थमात्रं गवाज्यम् ।
पाठाधात्रीहरिद्रात्रिवृदुपरचितैर्मापि कल्केन सिद्धं
शो वा कीटारिकृष्णासलवचजटिलाभिर्विलीढः सदा स्यात् ॥४५॥

सम्यक् सिद्धरसायनमेतत् पुरा बालयवनोद्भूत्यै तत्पितुः श्रीगिरिशेन प्रोक्तं स्यादिति योजना कार्या । व्याख्यातोऽयं श्लोकः प्राक् लौहनिरुपणाख्यपञ्चमाध्याये ॥३८॥

कान्ताभ्रक-रसायने—सिद्धं पुटनादिमृतम् । कलांशं हेमचूर्णस्य अभ्रात् षोड़शांशं सुवर्णभस्म । आटरूषरसेन वासकस्वरसेन । तत्तद्रोगहरैः यस्मिन् यस्मिन् रोगे प्रयोज्यं तदर्थं तत्तद्व्याधिनाशनद्रव्यकृतैरित्यर्थः । त्रिफलाव्योषचूर्णञ्च समुदायेनाक्षसमम् ॥ ३९—४४ ॥

पाठादिघृते—पालाशोलूखले पलाशकाष्ठविरचितोलूखले, तन्मलवियुजि सुपरिष्कृते इत्यर्थः । विमर्दीकृतैः विमर्दात् पीड़नात् उद्भूतैः समुद्धीतैः ; "विमर्दीकृतैः"

सौकर्य्यः सप्तरात्रान्मतिमतिविशदां पञ्चतो मासमात्रा-
चातुर्य्यं सत्कवित्वं वरसकलकलाभिज्ञतां प्राप्नुयात् सः ॥४६॥

अथ ताप्यादिवटकः ।—

ताप्याभ्रकत्रिकटुतुल्यशिलाजकान्त-
मण्डूरलोहमलटङ्कणसैन्धवञ्च ।
भृङ्गीरसेन वटकांश्च मसूरमात्रान्
खादेद्रसायनवरं सकलामयघ्नम् ॥४७॥

अथ कमलाविलासी रसः ।—

लोहाभ्रौ बलिसूतहाटकमयस्तुल्यं कुमारीरसे
पक्षैरण्डदलैर्निबध्य सुदृढं सद्धान्यराशौ त्र्यहम् ।
छित्त्वाहृत्य विचूर्णितं मधुवरा-युक्तं यथासात्म्यतः
कृष्णात्रेयविनिर्मितं गदजरा-विध्वंसि सौख्यप्रदम् ॥४८॥
आस्रासिद्धमिदं रसायनवरं सर्वप्रमेहप्रणुत्
कासं पञ्चविधं तथैव तनुगं पाण्डुञ्च हिक्कां व्रणम् ।
श्लेष्माणं पवनं हलीमकगदं हन्याच्च मन्दानलं
कण्डूकुष्ठविसर्पविद्रधिमुखापस्मारमुख्यान् जयेत् ॥४९॥

---

इत्यत्र "विमर्दोष्ठितैः" इत्यपपाठः अर्थसङ्गतिविरहात् । आढकांशैः ब्राह्मीरसैः मिश्रमित्यन्वयः । कीटारिः विडङ्गः । जटिला जटामांसी । "सौकर्य्यः" इत्यत्र "सौकर्य्यम्" इति पाठः साधुः ; सौकर्य्यं कर्म्मनैपुण्यमित्यर्थः । ब्राह्मीरसाढकेन पाठादेकतकेन च पादिकेन सिद्धं घृतप्रस्थं विडङ्गादिचूर्णेन घृतात् पादिकेन सह संयोज्य नित्यं लिह्यादिति ॥ ४५।४६ ॥

ताप्यादिवटके—शिलाजः शिलाजतु । लोहमलं मण्डूरम् ॥ ४७ ॥

कमलाविलासे—बलिः गन्धकः । हाटकं स्वर्णम । अयस्तुल्यम् अभ्रादिचतुष्टयं प्रत्येकं लोहतुल्यम् ; "अयः" इत्यत्र "पविः" इति क्वचित् पाठः । पक्षा सर्वं कुमारीरसेनामर्द्य मृत्पात्रे किञ्चित् संस्थाप्य च इत्यर्थः, रौद्रपक्वं कृत्वा इत्यर्थो वा । "पक्षैरण्ड" इत्यत्र "पक्वैरण्ड" इति क्वचित् पाठः । सद्धान्यराशौ उत्कृष्टधान्य-

गोप्याद्गोप्यतरः सुखेन सुलभः सर्वत्र सिद्धो रसो
नाम्नाऽयं कमलाविलास इति सद्वैद्यस्य कीर्त्तिप्रदः ॥५०॥

अथ लक्ष्मीविलासः ।—

वेदेन्दुनेत्राङ्गरसाङ्गभागा भूसूतगन्धोषणतिन्दुटङ्काः ।
भृङ्गार्द्रगुञ्जाजवनीनवाभिर्भाव्य त्रियः स्वेद्यमदोऽर्कपत्रे ॥५१॥

लक्ष्मीविलासः स विशाललक्ष्मीं
तनौ तनोति क्षयिणः प्रयोगः ॥५२॥

अथ नारिकेलपाकः ।—

वाराहीमुषलीकन्द-कनकाहिस्वरस्तथा ।
वानरीफलसंयुक्तं चूर्णयित्वा पृथक् पृथक् ॥५३॥
कार्पासमज्जादुग्धेन उत्कलय्य यथाक्रमम् ।
भावनासप्तकं दत्त्वा सूर्यतापे विशोषयेत् ॥५४॥

शाणमध्ये । वरा त्रिफला । तनुगं सार्वदैहिकमित्यर्थः । "नाम्नाऽयं कमलाविलास इति सद्वैद्यस्य कीर्त्तिप्रदः" इत्यत्र "नाम्नाऽयं कमलाविलाससहितो वैद्यान् चमत्कारकः" इति पाठः अर्थसङ्गतिराहित्यात् न साधुतया प्रतिभाति । "वैद्यानां कमलाविलासकरणोऽयमलं चमत्कारकः" इति कस्यचित् पाठः ॥ ४८—५० ॥

लक्ष्मीविलासे—वेदाः चत्वारः, इन्दुः एकः, नेत्राणि द्वौ, अङ्गानि षट्, रसाः षट्, अङ्गानि षड् भागाः । भूः सूत, सौराष्ट्रमृत्तिका इत्यर्थः ; "सौमकम्" इति कथित । ऊषणं मरिचम् । तिन्दुः तिन्दुकः । टङ्काः इत्यनन्तर ग्राह्याः इति शेषः । भृङ्ग भृङ्गराजः, आर्द्रः आर्द्रकः, गुञ्जा रक्तिका, जवनी यमानी, नवा पुनर्नवा ताभिः । अदः एतद्भेषजं भृङ्गादिरसैः त्रिशः भाव्यं, ततः अर्कपत्रे स्वेद्यम् अर्कपत्रेणावेष्ट्य करीषाग्नौ किञ्चित स्वेदयेदित्यर्थः ॥ ५१।५२ ॥

नारिकेलपाके—वाराहीमुषलीकन्दः वाराहीकन्दः मुषलीकन्दश्च, कनकं धुस्तूरबीजम, अहिः सीसकं, स्वरः सुवर्णम ; "स्वरः" इत्यत्र "स्वरम्" इति पाठः साधुः ; "स्वरः" इति पाठे—दुरालभा । वानरीफलसंयुक्तं शूकशिम्बीबीजसंयुक्तम । कार्पासमज्जादुग्धेन कार्पासार्द्रबीजनिर्यासेन उत्कलय्य आर्द्रीकृत्य इत्यर्थः ; "कार्पासमज्जादुग्धेन" इत्यत्र "कार्पासमज्जा दुग्धेन" इति पाठे—कार्पासमज्जा दुग्धेन उत्कलय्य

नारिकेलञ्च सम्भृत्य द्वारं रुद्ध्वा यथाविधि।
गोदुग्धेन तु तत्क्वाथ्य-षोड़शद्वयमात्रतः ॥५५॥
दर्व्या संवर्त्तितं भाण्डे यथा दार्ढ्यं न याति च।
शीतं चूर्णीकृतं पक्वमाज्येन प्रपचेन्नरः ॥५६॥
जातीफलं लवङ्गञ्च एलाचूर्णं विनिक्षिपेत्।
निष्पन्नं शाणमात्रन्तु गृहीत्वा प्रपिबेत् पयः ॥५७॥
वातरोगाः प्रमेहाश्च बलक्षयस्तथोल्वणाः।
समस्तास्तत्प्रयोगेण प्रशमं यान्ति सर्वतः ॥५८॥
वृद्धोऽपि तरुणत्वं स प्रहर्षति सदा नरः।
सोऽमृताख्यं नारिकेलं गुरुणा परिकीर्त्तितम् ॥५९॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
रसायनविधिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

आवर्त्त्य तेन दुग्धेनेत्यर्थः। नारिकेलं वल्कल-कपालविरहितं विमुक्तमुखावरणं नारिकेलशस्यमित्यर्थः, तच्च सावरणावस्थायां यथा स्यात् तथैव स्थापनीयम्; सम्भृत्य प्रपूर्य्य, वाराहीकन्दादिनेति शेषः। तत्क्वाथ्यषोड़शद्वयमात्रतः तेषां क्वाथ्यानां पाच्यानां सनारिकेलवाराहीकन्दादिचूर्णानां, चूर्णमपेक्ष्येत्यर्थः, षोड़शद्वयमात्रतः द्वात्रिंशद्गुण-प्रमाणेनेत्यर्थः। यथा दार्ढ्यं न याति यथा नात्यर्थं शुष्कीभवति दग्धीभवति वा। "वातरोगाः प्रमेहाश्च बलक्षयस्तथोल्वणाः" इत्यत्र "वातरोगान् प्रमेहांश्च बलक्षय-मथोल्वणान्" इति पाठः न साधुः। अयमाशयः,—वाराहीकन्दादीनां चूर्णं पृथक् पृथक् कार्पासबीजनिर्य्यासेन सप्त सप्त वारान् भावयित्वा आतपे शोषयेत्, ततः समभागं तत् सर्वं गृहीत्वा वल्कल-कपालरहितस्य यथावस्थितस्य उन्मुक्तमुखावरणस्य नारिकेलस्यान्तः प्रपूर्य्य च मुखं निरोधयेत्, ततः सौषधनारिकेलापेक्षया द्वात्रिंशद्गुणेन दुग्धेन सह तं नारिकेलं दर्व्या मुहुः सङ्घट्टयन् मृत्पात्रे तथा पचेत् यथा नात्यर्थं शोषं गच्छेत् न वा दग्धीभवेत्। ततः पक्वं शीतञ्च तं नारिकेलं सौषधं सञ्चूर्ण्य घृते भर्ज्जयेत्, पाकावसाने जातीफलादिचूर्णं यथायोग्यं प्रक्षिप्य स्थापयेच्च, तस्माच्च प्रतिदिनं शाणमानं भुक्त्वा क्षीरानुपानं कुर्य्यादिति ॥ ५३—५९ ॥

इति रसरत्नसमुच्चयबोधिन्यां षड्विंशोऽध्यायः ॥ २६ ॥

---

# अथ सप्तविंशोऽध्यायः ।

## अथ वाजीकरणम् ।—

अथ वाजीकरणस्य गुणाः ।—

वाजीकरणमन्विच्छेत् सततं विषयी पुमान् ।
पुष्टिस्तुष्टिरपत्यञ्च गुणवत्तत्र संस्थितम् ॥ १॥

अथ वाजीकरणस्य निरुक्तिः ।—

वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ।
तत् वाजीकरणं विद्धि देहस्यौजस्करं परम् ॥ २ ॥

---

स्वस्थस्योर्जस्करत्वसामान्यात् रसायनानन्तरं वाजीकरणं वुवर्षुः प्रथमं तस्य प्रयोजनीयतामाह, वाजीति ।—विषयी विषयाः स्रक्चन्दनवनितादयः, ते अस्य सन्तीति तादृशः विषयोपभोगशीलः पुमान् सततं वाजीकरणं वाजः शुक्रं सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तत् ; यद्वा—वाजः मैथुनं मैथुनशक्तिरित्यर्थः, सोऽस्यास्तीति वाजी, अवाजी मैथुनशक्तिविरहितः वाजी मैथुनशक्तियुतः क्रियते येन तत् ; उक्तञ्च हारीतेन—“वाजो नाम प्रशस्तत्वात् तच्च मैथुनसंज्ञितम् । वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते ॥” इति । चरकेण तु—“येन नारीषु सामर्थ्यं वाजीव लभते नरः । व्रजेच्चाप्यधिकं येन वाजीकरणमेव तत् ॥” इत्युक्तम् ; एवञ्च वाजीकरणं वाजीकरणयोगमित्यर्थः, अन्विच्छेत् सेवेत, तत्र वाजीकरणे पुष्टिः मांसोपचयः, तुष्टिः सन्तोषः, गुणवत् सर्वगुणाढ्यम् अपत्यं न पतति वंशो येन जातेन तत्, सन्तानमित्यर्थः, संस्थितम् अवस्थितं, नित्यं वाजीकरणौषधसेवनेन देहपोषणं रमणीषु अप्रतिहतशक्तिमत्तया मनसः प्रीतिबाहुल्यं रूपशौर्यादिगुणाढ्यमपत्यञ्च जायते इत्यर्थः ॥ १ ॥

वाजीकरणसंज्ञायाः बीजमाह, वाजीवेति ।—वाजीव अश्व इव । येन औषधेन इत्यर्थः ॥ २ ॥

अथ शुक्रक्षयस्य निदानम्।—

शुक्रन्तु चिन्ताव्यायाम-व्याधिभिर्देहकर्षणात्।
क्षयं गच्छत्यनशनात् स्त्रीणाञ्चातिनिषेवणात्॥३॥

अथ वाजीकरणयोगोपदेशे प्रतिज्ञा।—

तस्मात् प्रयोगान् वक्ष्यामि दुर्बलानां बलप्रदान्।
सुखोपयोगात् बालानां भूयश्च बलवर्द्धनात्॥४॥

अथ वाजीकरणप्रयोगे पूर्वकृत्यम्।—

शुद्धकायो यथाशक्ति वृष्ययोगान् प्रयोजयेत्॥५॥

अथ मधुकप्रयोगः।—

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः सदा भवेत्॥ ६ ॥

---

क्षीणशुक्रः पुमान् स्त्रीषु दुर्बलो भवति, अत एव शुक्रक्षयस्य कारणपरिहाराय तन्निदानमाह, शुक्रमिति।—स्पष्टम्॥ ३॥

वाजीकरणस्य प्रयोजनान्तरोक्तिसहितं तत्प्रयोगोपदेशं प्रतिजानीते, तस्मादिति।—"सुखोपयोगात् बालानां भूयश्च बलवर्द्धनात्" इति पाठः न मनोरमः, बालानां वाजीकरणप्रयोगानर्हत्वात्, तथा "बालानाम्" इति कण्ठोक्त्या यूनां वृद्धानाञ्च बलकरत्वाभावप्रसङ्गाच्चेति। चरके तु—"सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान्" इति पाठः दृश्यते; सुखोपभोगान् सुखेन उपभोगो यैः तान् यैः योगैः उपभोगशक्तिर्वर्द्धते तानित्यर्थः, बलिनां भूयश्च बलवर्द्धनान् न केवलं दुर्बलानां बलप्रदान्, बलिनोऽपि यदि सेवन्ते तदा तेऽपि विशिष्टबलवन्तो भवन्तीत्यर्थः॥ ४ ॥

वाजीकरणयोगप्रयोगे पूर्वकृत्यमाह, शुद्धकाय इति।—शुद्धकायः वमनविरेचनादिपञ्चकर्मणा संशोधितदेहः, यथाशक्ति शक्तिं परिपाकशक्तिम् अनतिक्रम्य, अग्निबलादिकमपेक्ष्येत्यर्थः, वृष्ययोगान् वृषाय कामुकाय हितं वृष्यं तादृशान् योगान्॥ ५॥

मधुकप्रयोगे—"सदा" इत्यत्र "स ना" इति चरकसम्मतः पाठः मनोरमः, सदा-नित्यशब्दयोरेकार्थकयोरेकत्र प्रयोगस्य पुनरुक्तिदुष्टत्वात्। ना पुरुषः॥ ६॥

अथ शृङ्गीप्रयोगः।—

कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत्।
सिताघृतपयोऽश्नाशी स नारीषु वृषायते॥ ७॥

अथ स्वयङ्गुप्तादिचूर्णम्।—

स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा रासभायते॥ ८॥

अथ तिलप्रयोगः।—

बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान्।
यः खादेत् ससितान् गच्छेत् स स्त्रीशतमपूर्ववत्॥ ९॥

अथ सिन्दूररसः।—

गन्धकेन समं सूतं श्वेताङ्कोल्लजटारसैः।
त्रिदिनं मर्दितं तेन रसेन गुटिकीकृतम्॥ १०॥
रक्ताचित्रकवाराही-पत्रनिर्यासपेषितैः।
सद्योहताजमांसस्य पिण्डे न्यस्तं विपाचितम्॥ ११॥
तप्ततैले मज्जयीत यावत् सिन्दूरसन्निभम्।
भक्षयेत् मधुसर्पिर्भ्यां गोक्षीरञ्च पिबेदनु॥ १२॥

---

शृङ्गीप्रयोगे—कुलीरशृङ्ग्याः कर्कटशृङ्ग्याः॥ ७॥

स्वयङ्गुप्तादिचूर्णे—स्वयङ्गुप्ता शूकशिम्बी। इक्षुरकः कोकिलाक्षः। रासभायते रासभः गर्दभ इव आचरति गर्दभवत् रतिशक्तिसम्पन्नो भवतीत्यर्थः॥ ८॥

तिलप्रयोगे—बस्ताण्डसिद्धे छागाण्डसिद्धे पयसि, तत्र क्षीरपरिभाषया साधितव्यम; यद्यपि क्षीरेण सह वत्समांसस्य विरोधः तन्त्रकृद्भिः प्रोक्तः, तथाऽपि तदविशेषवचनम्, इदन्तु बस्ताण्डविषयतया विशिष्टत्वेन पुनस्तत्सर्गापवादरूपं न विरुणद्धीति मन्तव्यम्। असकृत् सप्तवारान्। स्त्रीशतमिति बहुकान्तोपलक्षणम्। अपूर्ववत् पूर्वमज्ञातस्त्रीसम्भोगवत्॥ ९॥

सिन्दूररसे—श्वेताङ्कोल्लजटारसैः श्वेताङ्कोठमूलरसैः। तेन रसेन अङ्कोठमूल-

स्त्रियः सेवेत तत्त्यागी यतः स्फुटति लोचनम् ।
न क्रामति रसश्चास्मिन् क्रान्ते स खलु मन्मथः ॥१३॥

अथ कामकलाख्यरसः ।—

मुषलीकदलीकन्द-वाजिगन्धाकशेरुकैः ।
मर्दितं हेमसूताभ्रं मूषास्थं पुटपाचितम् ॥१४॥
शाल्मलीचूर्णसंयुक्तं वासराण्येकविंशतिः ।
भक्षयित्वा चतुर्माषं गव्यं क्षीरं पिबेदनु ॥१५॥
सर्वाङ्गोद्वर्त्तनं कुर्य्यात् सयवैः शाल्मलीरसैः ।
अन्वहं मधुराहारः सहस्रं रमते स्त्रियः ॥१६॥

अथ कामदेवः ।—

हेमपादयुतः सूतो मर्दितः शाल्मलीरसैः ।
कदलीकन्दनिर्य्यासे क्षीरेक्षुरसगोघृते ॥१७॥

---

रसेन । वाराही वाराहीकन्दः । स्त्रियः इति बहुवचननिर्देशः बहुनारीसम्भोग-ज्ञापकः । तत्त्यागी स्त्रीगमने अशक्ते । तत्त्यागे यतः लोचनं स्फुटति, अतः स्त्रियः सेवेत इत्यन्वयः । नेति ।—रसम् इमं रसं, भेषजमिदमित्यर्थः, न क्रामति नातिक्रमितुं समर्थं भवति, किमपि भेषजमिति शेषः, अन्यत् किमपि भेषजं नास्य तुल्यं वीर्य्यवत् भवतीत्यर्थः । अस्मिन् रसे क्रान्ते अवधारिते स रसकामी पुमान् मन्मथः खलु काम एव, द्वितीयः काम इव रूपादिसम्पन्नः भवतीत्यर्थः ॥१०—१३॥

कामकलाख्यरसे—मुषली तालमूली । मुषल्यादीनां प्रत्येकरसेनैकैकदिनमर्दितं हेमसूताभ्रं मूषायां संस्थाप्य पुटपाकं कुर्य्यात्, ततः माषचतुष्टयमौषधं शाल्मलीचूर्णेन एकविंशतिं दिनानि सेवेत क्षीरानुपानञ्च कुर्य्यात् । किञ्च औषधभक्षणकाले शाल्मली-मूलरसपिष्टयवचूर्णेन उद्वर्त्तनं कुर्य्यादिति । रसरत्नाकरे अस्य किञ्चित् पाठवैषम्यं दृश्यते ; तथा च—"मृतसूताभ्रकं स्वर्णं वाजिगन्धामृतारसैः । मुषलीकदलीकन्द-द्रवैस्तं मर्दयेद्दिनम् ॥ रुद्ध्वा लघुपुटे पश्चात् मर्द्यं पूर्वोक्तकैः द्रवैः । पुटं देयं पुनर्मर्द्यमेवमष्टपुटैः पचेत् ॥ शाल्मलीजातनिर्य्यासैः चतुर्माषञ्च भक्षयेत् । क्षीरै-र्मर्कटीबीजैः पक्वार्द्धं पाययेदनु ॥ रसः कामकलाख्योऽयं रमते स्त्री सहस्रधा । सर्वाङ्गोद्वर्त्तनं कुर्य्यात् सयवैः शाल्मलीरसैः ॥" इति ॥१४—१६॥

कामदेवे—हेमः पादेन सुवर्णचतुर्थांशेन युतः, तेन मृतसूतस्यैको भागः स्वर्णस्य च

माक्षिके चासकृत् स्विन्नः शाल्मलीक्षीरगोक्षुरैः ।
शर्करामलकद्राक्षा-मुषलीमाषमाक्षिकैः ॥१८॥
युक्तो रम्भाफलद्रुत्या कामदेव इति स्मृतः ।
सेवनादूर्ध्वलिङ्गः स्याद्द्रावयेद्वनिताशतम् ॥१९॥

अथ मदनसुन्दरः ।—

गन्धकेन रसः पिष्टः कह्लाररसमर्दितः ।
विपक्वो वालुकायन्त्रे वृष्यो मदनसुन्दरः ॥२०॥

---

चतुर्थांशो ग्राह्यः। असकृत् सप्तधा स्विन्नः सन्तप्तकदलीकन्दनिर्य्यासादौ निषेकात् कृतस्वेदः पक्व इत्यर्थः। शाल्मलीक्षीरगोक्षुरैः इत्यत्र शाल्मली च क्षीरञ्च गोक्षुरश्च ते तैः इति विग्रहः, न तु शाल्मल्याः क्षीरञ्च गोक्षुरश्च इति। रम्भाफलद्रुत्या पक्व-कदलीफलरसेन। अयमर्थः,—हेमसूतौ यथोक्तमानौ शाल्मलीरसेन दिनैकं मर्दयित्वा पिण्डं कुर्य्यात्, ततः सुवर्णं तं सन्तप्ते कदलीकन्दनिर्य्यासे निक्षिपेत्, शीतीभूते च निर्य्यासे उद्धृत्य संशोष्य प्रक्षाल्य च पुनरन्यस्मिन् तादृशे निर्य्यासे निक्षिपेत्, एवं सप्तवारान् कुर्य्यात्, ततः पूर्वोक्तविधानेन क्षीरे इक्षुरसे गोघृते मधुनि च निक्षिपेत्। यद्यपि मधु उष्णविरोधि न सन्तापमर्हति विषवदपकारकत्वात्, तथाऽपि उत्तरकालं शाल्मल्यादिद्रव्यान्तरसंयोगात् संयोगशक्तेरचिन्त्यत्वाच्च नेदमौषधं विरुद्ध-गुणमावहति। ततः तदौषधं पुनः संशोष्य प्रक्षाल्य विचूर्ण्य च शाल्मल्यादिद्रव्याणां सूतभागिकानां चूर्णैः क्षीरक्षौद्राभ्याञ्च तुल्याभ्यां सन्नीय आममोचफलद्रवेण गुटिकां कुर्य्यादिति ॥ १७—१९ ॥

मदनसुन्दरे—रसगन्धकयोः समभागता। कह्लाररसमर्दितः रक्तोत्पलरसमर्दितः; मर्दनञ्च दिनत्रयं कर्त्तव्यं रसेन्द्रसारसंवादात्; तत्र च "अनङ्गसुन्दररसः" इति नाम्ना प्रसिद्धोऽयं योगः वालुकायन्त्रे पाकानन्तरं पुनः रक्तपुष्पस्य श्वेतपद्मरसाभ्या-मेकैकभावनया निष्पादनीय इत्युपदेशः दृश्यते; तथा च—"शुद्धसूतं समं गन्धं त्र्यहं कह्लारजद्रवैः। मर्दितं वालुकायन्त्रे यामं सम्पुटके पचेत्॥ रक्तागस्त्यद्रवैर्भाव्यं दिनैकन्तु सिताम्बुजैः। यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम्॥" इति। तथा भैषज्यरत्नावल्यां "कामिनीमदभञ्जनः" इति नाम्ना प्रसिद्धेऽस्मिन् रक्तवर्गोक्तद्रव्याणां रसैः दिनैकं भावना शर्करया सह भक्षणञ्च कार्य्यमित्युपदेशश्च कृतः। तत्र च

अथ पूर्णचन्द्रः।—

कामदेव इह सोच्चटारसो रक्तपुष्पमुनिसारभावितः।
पूर्णचन्द्र इति विश्रुतो रसः प्राणिनां चरमधातुपूरकः ॥२१॥
रहस्यं कुसुमास्त्रस्य शृङ्गारस्याधिदैवतम्।
कार्मणं सुदृशामुक्तं रसत्रयमिदं हरः ॥२२॥

अथ मदनसुन्दररसः।—

मासार्द्धमात्रं हरजं विमर्द्य रसेन मोचस्य रसेन तेन।
त्रिःसप्तसङ्ख्यानि दिनानि गन्धं तत्सम्मितं गोघृतमध्यपक्वम् ॥२३॥
विभाव्य तेनैव विशोष्य युञ्ज्यात् काचस्थयोर्नागलतादलेन।
तयोर्विमर्द्याथ निषेव्य दुग्धं पिबेन्निशायां कदलीफलं तत् ॥२४॥

"रक्तागस्त्यद्रवैर्भाव्यं दिनैकन्तु सिताब्धजैः" इति रसेन्द्रोक्तपाठस्थले "रक्तागस्त्य द्रवैर्भाव्यं दिनैकन्तु सितायुतम" इति विशेषपाठः ॥ २० ॥

पूर्णचन्द्रे—इह वाजीकरणाधिकारे कामदेवः "हेमपादयुतः" इत्यादिना प्रागुक्तः निष्पन्नः रसः सोच्चटारसः उच्चटा गुञ्जा तस्याः रसेन सह वर्त्तमानः, गुञ्जाफल-रसमर्दितः इत्यर्थः, रक्तपुष्पमुनिसारभावितः रक्तवर्णवकपुष्परसेन सप्तधा मर्दितः। चरमधातुपूरकः शुक्रपोषकः; प्रागुक्तः कामदेवरसः एव उच्चटारस-रक्तवकपुष्प-रसाभ्यां मर्दितश्चेत् पूर्णचन्द्ररसो भवति। कुसुमास्त्रस्य कामस्य रहस्यं गोप्यास्त्र-मित्यर्थः, हर्षजननात्। शृङ्गारस्य अधिदैवतम् अधिष्ठात्री देवता, सम्भोगशक्ति-वृत्युत्कर्षजननादित्यर्थः। सुदृशां वराङ्गनानां कार्मणं मन्त्रतन्त्रादियोजनेन वशीकरणवत् वशीकरणमित्यर्थः। रसत्रयमिदं कामदेव-मदनसुन्दर-पूर्णचन्द्राख्यं रसत्रयम् ॥ २१।२२ ॥

मदनसुन्दरे—मासार्द्धमात्रं पञ्चदशदिनानि; "मासार्द्धमात्रम्" इति कस्यचित् पाठः। हरजं पारदम्। मोचस्य रसेन शाल्मलीमूलरसेन, न तु मोचरसेन, तस्याजरोकयोगेन सह साहचर्यदर्शनात्। तेन रसेन मोचस्य रसेन। त्रिःसप्तसङ्ख्यानि दिनानि एकविंशतिदिनानि। तत्सम्मितं रससम्मितम्। विभाव्य तेनैव गोघृतेनैव भावयित्वा। युञ्ज्यात् तादृशं रसं गन्धञ्च ऐकध्यं मेलयेत्। काचस्थयोः काचकूपिका-स्थितयोः तयोः रसगन्धयोः, मात्रामिति शेषः। नागलतादलेन ताम्बूलीपत्ररसेन। कदलीफलमित्यत्र खादेदिति शेषः। तत् औषधसेवनानन्तरं सेवितं कदलीफल-

मदनं मदयन्मदमुज्ज्वलयन् प्रमदानिवहानतिविह्वलयन् ।
सुरतैः सुखदगतविच्यवनैर्भवसारजुषामयमेव सुहृत् ॥२५॥

अथ कुसुमायुधः ।—

सूतस्य द्विपलं चतुष्पलमिता गन्धो मृतं काञ्चनं
पादन्यूनपलं सुवर्णविमला-ताप्यं रसेनार्चितम् ।
लोहं कान्तमलस्तथाऽसितघनं कर्षान्मितावक्रशो
हन्तव्यं दरदेन लोहमखिलं चूर्णं ततो मर्दितम् ॥२६॥

मित्यर्थः ; यद्वा—तांद्दति म इत्यर्थ अत्यर्थं, स रस इत्यर्थः, मदनं मदयन् उत्तेजयन्, मदं हर्षम्, उज्ज्वलयन् वर्द्धयन् । गतविच्यवनैः शत्र्यगुक्तैरित्यर्थः । भवसारजुषां भवे संसारे सारं रत्नभूतं कामिनीरूपं वस्तु इत्यर्थः ; यद्वा—सारं श्रेष्ठ कामसुखमित्यर्थः, जुषन्ते सेवन्ते ये तेषाम् । अयमर्थः,—अनियतमानं पारदं आम्लीरसेन पक्षमेकं मर्दयेत्, मर्दयेच्च पृथग्भाजने गन्धकमपि पारदतुल्यम् एकविंशतिवासराणि तेनैव रसेन, ततस्तं वस्त्रेणावेष्ट्य यामद्वयं घृतेन पचेत्, अवतार्य्य च यामद्वयानन्तरं तेनैव घृतेन पुनः सप्ताहं भावयेत्, ततः शुष्कीकृतं तं गन्धकं रसेन मेलयित्वा मर्दयेत् काचकूप्यां स्थापयेच्च । अथ निशि ताम्बूलपत्ररसेन सह तस्य मात्रां पीत्वा पक्वकदलीफलं सदुग्धमनुपिबेदिति । रसरत्नाकरे योगोऽयं पूर्णेन्दुरसनाम्ना किञ्चित् विभिन्नपाठ-तया पठितः ; यथा—"आम्लीत्थद्रवैर्मर्द्यं पक्षैकं शुद्धसूतकम् । पृथक् खल्ले विमर्दीत सद्रवैर्मर्द्य गन्धकम् ॥ एकीकृत्य घृतैः सार्द्धं मर्दयेत्तच्च गोलकम् । यामद्वयं पचे-दाज्ये वस्त्रबद्धं तु पाचयेत् ॥ दिनैकं आम्लिकोद्रावैः पिण्डं यामद्वयं पचेत् । मर्दयित्वा पुनः पिण्डं नागवल्ल्या च वेष्टयेत् ॥ निक्षिप्य काचकूप्यान्तु द्रवं दत्त्वा तु आम्लिकम् । पलैकपरिमाणन्तु पचेत् यामद्वयं ततः ॥ वालुकायन्त्र-मध्ये तु द्रवे जीर्णे समुद्धरेत् । द्विगुञ्जं भक्षयेत् प्रातः नागवल्लीदलान्तरे ॥ सुपक्वौ सहिता क्षीरैः पलैकं पाययेदनु । रसः पूर्णेन्दुनामायं सम्यग्वीर्य्यकरो भवेत् ॥ कामिनीनां सहस्रैकं नरः कामयते ध्रुवम् ॥" इति । मदनं काममपि मुदा हर्षेण हर्षजननेन मदयति एतद्रससेवनेन उन्मत्तवत् करोतीति मदनमुन्मत्, मदयतेः क्विप्, तथाभूतः रसः ॥ २३—२५ ॥

कुसुमायुधे—पादन्यूनपलमिति वाक्यं मृतं काञ्चनमित्यनेन सम्बध्यते, पादन्यूनपलं कर्षत्रयम् । सुवर्णविमलाताप्यं सुवर्णं गैरिकं, विमला रौप्यमाक्षिकं ताप्यं सुवर्ण-

मूषायां विगतावृतौ सिकतया यन्त्रे कृते स्थापयेत्
ब्राह्मीवारि दिनं निषिच्य तदनु प्रत्येकमेकाह्नकम् ।
वासाकुञ्जरशुण्ठिकाग्निकटुकामेषी च निर्गुण्डिका
ताली कुञ्जरशुण्डिका हुतवहस्तोयानि दत्त्वा पचेत् ॥२७॥
ततस्तं निखिलाम्भोभिर्विमर्द्य पुटयेल्लघु ।
निर्य्यासैः शाल्मलैर्ग्राह्यो वल्लत्रयमितो रसः ॥
वलीपलितनाशाय त्रिमासं मधुराशनः ॥२८॥
सुरतेषु सुलोचनाशतैर्गतवीर्य्यश्च्यवनैर्मतो यदि ।
तदमुं रसमाश्रयाऽऽश्रयं कुसुमास्त्रस्य चिराय धन्विनः ॥२९॥
यदि सन्ति सहस्रशः स्त्रियश्चतुराश्लेषमनोहराः प्रसन्नाः ।
सुकवेरिव गुम्फिता गिरां सुरसोऽनेन युवा रसेन भूयात् ॥३०॥

---

माक्षिकं रसेनोन्मितं प्रत्येकं द्विपलम् । लौहं कान्तमल्लः मण्डूरः असितघनं कृष्णाभ्रम् ; "असितवनम्" इत्यत्र "सितघनम्" इति पाठः न मनोरमः, श्वेताभ्रस्य रसादिकर्मण्यप्राशस्त्यात् ; कर्षोन्मितैकैकशः एकशः लौहादित्रयाणां प्रत्येकशः कर्षोन्मितौ द्विकर्षमित्यर्थः । हन्तव्यं दरदेन लौहं द्वादशांशहिङ्गुलेन सह लौहं मर्दयित्वा मारयितव्यं, तादृशञ्च लौहं योगेऽस्मिन् प्रयोज्यम । दरदेन सह लौहमारणे शार्ङ्गधरवचनं यथा—"क्षिपेद् द्वादशांशेन दरदं तीक्ष्णचूर्णतः । मर्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पचेत् ॥ एवं सप्तपुटैर्मृत्युं लौहचूर्णमवाप्नुयात ॥" इति । मूषायां विगतावृतौ निरावरणायां मूषायाम । सिकतया कृते यन्त्रे बालुकायन्त्रे । तदनु प्रत्येकमेकाह्नं ब्राह्मीरसे दिनमेकं पाकानन्तरं वक्ष्यमाणात् एकैकस्मात् द्रव्यात गृहीते तोये दिनमेकं निषेकोऽर्थः । प्रत्येकमेकाह्निमित्युक्तं, तदेव विशिनष्टि, वासेति ।—कुञ्जरशुण्ठिका हस्तिकन्दः, हस्त्यालुक इत्यर्थः । "कुञ्जरशुण्ठिका" इत्यत्र "कुञ्जरशुण्डिका" इति पाठे—कुञ्जरशुण्डिका "हातिशुँडा" इति भाषा ; अस्मिन् पक्षे—हस्तिशुण्डीरसेन वारद्वयं पचेत । "कुञ्जरपिप्पली" इति क्वचित पाठः । मेषी मेषशृङ्गी ; "मषी" इत्यत्र "नेत्री" इति पाठान्तरम । "मेषी च" इत्यत्र "लोध्रार्द्र" इति क्वचित पाठः । ताली तालमूली । हुतवहः चित्रकः, एषां तोयानि रसान् क्वाथान् वा । ततस्तं बालुकायन्त्रे पक्वं तं रसं निखिलाम्भोभिः वासादीनां सर्वेषां निखिलरसैः । निर्य्यासैरिति ।—

अथ भूतेन्द्रः ।—

मुक्ताफलं प्रवालञ्च सुवर्णं रौप्यमेव च ।
रसं गन्धश्च तत् सर्वं तोलैकैकं प्रकल्पयेत् ॥३१॥
रक्तोत्पलैः पत्ररसैर्मर्दयेत्तत्तलीकृते ।
मर्दयेत्तत् पुनर्दत्त्वा गन्धं माषचतुष्टयम् ॥३२॥
तन्मध्ये गन्धकं दत्त्वा मर्दयेत्तदनन्तरम् ।
भौत्या काचघटीमध्ये सन्निरुध्य प्रयत्नतः ॥३३॥
बालुकायन्त्रमध्यस्थां कृत्वा काचघटीं ततः ।
पाकस्तत्र तथा कार्य्यो भवेद्यामत्रयं यथा ॥३४॥
काचपात्रं समाकर्षेत् सिद्धं सूतं ततः परम् ।
भक्षयेद्रक्तिकाः पञ्च रोगैराक्रान्तपुद्गलः ॥३५॥
भोजनं पूर्वरोगोक्तं यत्नतः कारयेद्भिषक् ।
दुर्बलं वपुरत्यर्थं बलयुक्तं करोत्यसौ ॥३६॥

---

पुरानन्तरं त्रिवङ्गमौषधं आम्ललोमूलरसेन मासत्रयं खादेत् । सुकवेरिति ।—सुकवेः गिरा वाचां गुम्फना ग्रन्थना इव रचना इव इत्यर्थः, सुकवेः रचना यथा सुरसा, तथा अनेन रसेन युवा सुरसो भूयात् इति निष्कर्षः ॥ २६—३० ॥

भूतेन्द्रे—तत्तलीकृते पत्तलीकृते, पत्तलीभूते सतीत्यर्थः । "तत्तलीकृते" इत्यत्र "पत्तलीकृतम्" इति पाठे—आर्द्रीभूतं यथा स्यात् तथा मर्दयेदित्यर्थः । मर्दयेत्तत् पुनरिति ।—रक्तोत्पलपत्ररसैः मुक्ताफलादिकं मर्दयित्वा माषचतुष्टयं गन्धञ्च तत्र दत्त्वा रक्तोत्पलपत्ररसैरेव पुनर्मर्दयेत्, ततः पुनरपि माषचतुष्टयं गन्धं तन्मध्ये दत्त्वा मर्दयेत् । भौत्या: भौत्यधोग्याः देया इत्यर्थः, काचघटीमध्ये स्थाप्या इति निष्कर्षः ; "भौत्या" इत्यत्र "बौत्या" "क्षिप्ता" वा इति पाठकल्पना सुगमार्था ; काचघटीमध्ये प्रयत्नतः सन्निरुध्य सा काचघटी बौत्या औषधं यथायथं विन्यस्तं न वा काचघटी अविकृते-वास्ति न वा इत्यादिपरीक्षार्थं सावहितं द्रष्टव्या इत्यर्थः । क्षिप्ता इति पाठपक्षे—काचघटीमध्ये औषधं क्षिप्ता । रोगैराक्रान्तपुद्गलः रोगैराक्रान्तः पुद्गलः शरीरं यस्य सः; "पुद्गलः" इत्यत्र "युद्गलः" "युगलः" इति पाठान्तरद्वयम् । "पूर्वरोगोक्तम्" इत्यत्र "पूर्वयोगोक्तम्" इति पाठकल्पना साधीयसी ; पूर्वयोगोक्तं कुसुमायुधोक्तं मधुरादि

शुक्रवृद्धिं करोत्येष ध्वजभङ्गञ्च नाशयेत् ।
मासेनैकेन सूतेन्द्रो रोगनाशाय कल्पते ॥३७॥
शालयो मुद्गयूषाश्च गोधूमा भोजने हिताः ।
घृतं गव्यं तथा क्षीरं स्निग्धं पथ्यं प्रयोजयेत् ॥
पारावतस्य मांसञ्च तित्तिरेर्लावकस्य च ॥३८॥

अथ कार्श्यहरयोगः ।—

शुद्धं सूतं वाजिगन्धाञ्च यष्टीं पक्वा दुग्धं तच्च कार्श्ये ददीत ॥३९॥

अथ कार्श्यहरयोगत्रयम् ।—

एवञ्चाप्यं वापयित्वा च दद्यात् यद्वा यष्टिं मागधीं वाजिगन्धाम् ।
मध्वाज्याभ्यां शाल्मलीमत्स्ययुक्ता शम्बूकैर्वा भर्जितैर्वाप्यमिश्रैः ॥
॥४०॥

अवेदित्यर्थः । योगोऽयं रसरत्नाकरे किञ्चित् परिवर्त्तिताकारेण अभिनवकामदेव-रसनाम्ना पठितः ; तथा च—"मुक्ताफलं प्रवालञ्च सुवर्णं रौप्यमेव च । तोलकैकं समादाय पृथक् गन्धकसूतयोः ॥ रक्तोत्पलदलाम्भोभिर्मर्दयेद्दिवसत्रयम् । मर्दयित्वा पुनर्देयं गन्धं माषचतुष्टयम् ॥ तस्यैव पत्रतोयेन पुनर्दत्त्वा च गन्धकम् । शाल्मल्याश्चापि तोयेन कृत्वा काचघटे दृढ़े ॥ ततस्तु बालुकायन्त्रे पचेत् यामत्रयं ततः । काचकूप्याः समाकृष्य सिद्धसूतमतः परम् ॥ खादेत्तु रक्तिकाः पञ्च रोगैराक्रान्तमानसः । भोजनं पूर्ववद्देयं यत्नतः सततं भिषक् ॥ दुर्बलं वपुरत्यर्थं मल्लवत् जायते नृणाम् । मासेनैकेन सूतेन्द्रः पित्तजान्नाशयेद्गदान् ॥" इति ॥ ३१—३८ ॥

कार्श्यहरयोगे—शुद्धं सूतं शोधनमारणादिसंस्कृतं विशुद्धं पारदं, रससिन्दूर-मित्यर्थः । आवर्त्तितदुग्धे सूतादिकं दत्त्वा मोदकवत् पचेदिति ॥ ३९ ॥

कार्श्यहरयोगत्रये—आप्यं कुष्ठम् ; "आप्यम्" इत्यत्र "वाप्यम्" इति पाठान्तरम् ; वापयित्वा प्रक्षिप्य, दुग्धे इति शेषः । पूर्वयोगोक्तदिशा आवर्त्तितदुग्धे कुष्ठचूर्णं प्रक्षिप्य आलोड्य च दद्यादित्येको योगः । यष्ट्यादिद्वितीययोगे—मागधी पिप्पली ; यष्ट्यादित्रयाणां चूर्णं घृतमधुशाल्मलीमूलरसैः संयोज्य दद्यादिति । शम्बूकैरित्यादि-तृतीययोगे—वा अथवा यष्ट्यादित्रयं भर्जितैः आप्यमिश्रैः कुष्ठमिश्रैः शम्बूकमांसैः सह दद्यादिति ॥ ४० ॥

अथ मदनकामदेवः ।—

गोलं गन्धकसूतयोस्त्रिकटुकक्काथेन बद्धाऽथ भू-
कुष्माण्डान्तरवस्थितं विपिहितं तेनैव लिप्तोपरि ।
माषैरङ्गुलमाज्यपक्कमथ तत् कुष्माण्डमध्याद्धरेत्
तच्चूर्णं लवसम्मिते सुरलता-चूर्णस्य मुष्टिद्वयम् ॥४१॥
जया शतावरी कृष्णा कपिकच्छुफलं तिलाः ।
प्रत्येकं पलसम्माना यवाः पञ्चपलान्विताः ॥४२॥
तावन्मोचफलं द्वे च यष्टी मुष्टिद्वयं शुभा ।
निक्षिप्य सप्त सप्तात्र भावनाः क्रमशश्चरेत् ॥४३॥
महाबलाबलानाग-बलाभिर्द्राक्षयाऽपि च ।
कृष्णाधात्रीक्षुभिश्चापि दन्तपात्रे निवेश्य च ॥४४॥
मत्स्यण्डिकायुतं वल्ल-द्वयमानं भजेन्निशि ।
अनुपानमिह प्रोक्तं धारोष्णं सुरभेः पयः ॥४५॥
दोषमात्रेवजं हत्वा कुर्याद्दार्ढ्यप्रवर्द्धनम् ।
ध्वजोत्साहं तथा स्त्रीषु वाजीकरणमुत्तमम् ॥४६॥

मदनकामदेवे—विपिहितं तेनैव भूमिकुष्माण्डखण्डेनैव आच्छादितम् । लवसम्मिते पादप्रमिते, तच्च पलद्वयमपेक्ष्य बोद्धव्यम् । "लव" इत्यत्र "पल" इति क्वचित् पाठः । सुरलताचूर्णस्य गुडूचीचूर्णस्य मुष्टिद्वयं पलद्वयम् । जया विजया । तावन्मोचफलं रम्भाफलमपि पञ्चपलोन्मितमित्यर्थः । द्वे च यष्टी यष्टिमधुनः पलद्वयम् ; "द्वे" इत्यत्र "द्वौ" इति पाठः न सम्यक्, पलशब्दस्य नपुंसकलिङ्गत्वात् । मुष्टिद्वयं शुभा वंशलोचनायाः पलद्वयम् । सप्तेति ।—वक्ष्यमाणमहाबलादीनां सप्तानां द्रव्याणां प्रत्येकेन सप्त भावनाः दद्यात् ; तत्र महाबला अतिबला श्वेतबला इत्यर्थः । बला पीतपुष्पबला । नागबला गोरक्षतण्डुला । दन्तपात्रे गजदन्तनिर्मिते भाजने । सुरभेः पयः गोदुग्धम् । अयमर्थः,—कज्जलीं त्रिकटुक्काथेन मर्दयित्वा गोलकं कुर्यात्, ततः तद्गोलकं भूमिकुष्माण्डोदरे संस्थाप्य छिद्रमुखं भूमिकुष्माण्डखण्डेनैव पिधाय च पिष्टमाषकल्केन चाङ्गुलोत्सेधं लिम्पेत्, अथ तत् पिण्डं घृते पचेत्, शीतीभूतञ्च कुष्माण्डमध्यात् स्थितं कज्जलीगोलकं तं वहिष्कृत्य विचूर्ण्य च पलार्द्ध-

अलं मलयवायुना कुमुदबान्धवेनाप्यलं
मधुव्रतसुखायिनः कलितपञ्चमाः के पिकाः ? ।
अतो भज विशङ्कितं रतिसरोजिनीभास्करं
मनोजपरिदेवितं मदनकामदेवं रसम् ॥४७॥

अथ कामधेनुः ।—

हेमाभ्रसत्त्वकान्तार्काः प्रत्येकं पलमात्रकाः ।
एकत्र द्राविताः सर्वे कर्षभूनागसत्त्वकाः ॥४८॥
पलविंशतिसूतेन तैश्च पिष्टिं प्रकल्पयेत् ।
शतधा पातयेत् सूतं पिष्टीं कृत्वा पुनश्च तैः ॥४९॥
शिष्टं द्विपलिकं सूतं सन्न्यासाद्भस्मतां नयेत् ।
भस्मीभूते रसे तस्मिन् शिष्टे चैकपले ततः ॥५०॥
वज्रं निष्कमितञ्चाभ्र-सत्त्वं षट्पलिकं क्षिपेत् ।
द्विपलं गन्धकं शुद्धं द्विदिनं मर्दयेत्ततः ॥५१॥
तत् सर्वं लोहजे पात्रे क्षिप्त्वा च मृदुवह्निना ।
शाल्मलीमूलजं क्वाथं चत्वारिंशत्पलोन्मितम् ॥५२॥
जारयेद्रसराजस्य दत्त्वा दत्त्वाऽल्पमल्पकम् ।
स्वाङ्गशीतं रसं हृत्वा सुगाढं परिमर्दयेत् ॥५३॥

---

प्रमाणं गृह्णीयात्, ततः गुडूचीचूर्णादिकं यथोक्तमानं तत्र निक्षिप्य मद्यादीनां यथायोग्यं रसेन क्वाथेन वा सप्त सप्त वारान् भावयित्वा गजदन्तमयी भाजने स्थापयेदिति ॥ ४१—४७ ॥

कामधेनौ—कान्तं कान्तलौहम् । अर्कः ताम्रम् । कर्षेति ।—कर्षं कर्षप्रमाणं भूनागसत्त्वं सौमकसत्त्वं यत्र तादृशाः, हेमाभ्रसत्त्वकान्तार्काः इत्यस्य विशेषणम् । तैः हेमादिभिः भूनागसत्त्वान्तैः । शिष्टम् अवशिष्टं, शतधा पातनेन यदा पलद्वयसूतः अवशिष्टः स्यात्, तदा इत्यर्थः, सन्न्यासात् "रसस्यौषधयुक्तस्य भाण्डस्थस्य यतः । सदाग्नियुतचुल्ल्यां क्षेपः सन्न्यास उच्यते ॥" इत्यष्टमाध्यायोक्तलक्षणकां क्रियाविशेषमाश्रित्य, तत्प्रदिश्य अवशिष्टं द्विपलं सूतं भाण्डमध्ये निरुध्य पुटविशेषेण दग्ध्वा इत्यर्थः । भस्मीभूते इति ।—भस्मावशिष्टे पलैके तस्मिन् रसे । हृत्वा आहृत्य,

नालीपातेन तत् क्वाथं रजोदग्धं प्रदापयेत्।
ततः करण्डके क्षिप्त्वा यत्नेन स्थापयेत् खलु ॥५४॥

सोऽयं गुञ्जामितघृतयुतः सेवितो हन्ति रोगां-
स्तत्तद्दोषप्रभवकुटिलान् दुःखसाध्यान् समस्तान्।
दद्याद्दीप्तिं जठरशिखिनः स्तोकशः सेवयेत्तु
स्थैर्य्यं कुर्य्यादपि च वपुषो नामतः कामधेनुः ॥५५॥

अथ महाभ्रसत्त्वम्।—

कृष्णाभ्रकस्य धान्याभ्रं कृत्वा भृङ्गाम्बुनि क्षिपेत्।
तस्मिंश्च तुत्थकं देयं सूक्ष्मं ताप्यभवं रजः ॥५६॥
टङ्कणाच्चाम्लना भृष्टं तावदेव विनिक्षिपेत्।
छागास्थिसम्भवं चूर्णं चतुर्थांशेन निक्षिपेत् ॥५७॥
रसभस्माष्टमांशश्च गुड़गुञ्जापुरस्तथा।
पञ्चाजेन विनिष्पिष्य गोलीकृत्य विशोष्य च ॥५८॥
ततो नूतनभाण्डस्य जलघृष्टेन पाण्डुना।

---

सकृत् इत्यर्थः। चत्वारिंशत्पलोन्मितं शाल्मलीमूलक्वाथम् अल्पमल्पं दत्त्वा दत्त्वा इत्युक्तम्, इदानीं तद्दानप्रकारमाह, नालीति।—रजोदग्धं पाककाले औषधचूर्णं यथा सम्यक् दग्धं स्यात्, नातिदग्धं न वा हीनदग्धं स्यादित्यर्थः, तथा तत् क्वाथं शाल्मलीमूलजं क्वाथं, नालीपातेन नाल्या नाड़ीकया, नलिकया इत्यर्थः, पातेन पातनेन प्रदापयेत्, पाककाले शाल्मलीक्वाथं वंशादिनलिकया अल्पाल्पं कृत्वा तथा दातव्यं, यथा औषधं सम्यक् पक्वं भवेत् इत्यर्थः। करण्डके रौप्यादिभाजने। जठराग्निशिखिनः जाठराग्नेः ॥ ४८—५५ ॥

महाभ्रसत्त्वे—ताप्यभवं रजः स्वर्णमाक्षिकभस्म। तावदेव अभ्रकतुल्यमेव, अत्र अभ्रादीनां चतुर्णां तुल्यभागत्वम्। छागेति।—छागास्थिचूर्णम् अभ्रपादिकम्; "छागास्थिसम्भवं चूर्णम्" इत्यत्र "छागविष्ठाभवं क्षारम्" इति क्वचित् पाठः। रसेति।—रससिन्दूरस्य तथा गुड़गुञ्जाफलगुग्गुलूनां प्रत्येकशः अभ्रात् अष्टमांशत्वम्। पञ्चाजेन छागमूत्रपुरीषदधिदुग्धघृतेन पञ्चविधेन; "पञ्चाजेन" इत्यत्र "पञ्चाब्जेन" इति

विलिप्य वटिकाः सर्वा हरेत् सत्त्वं पुरोक्तवत् ॥
महाभ्रसत्त्वमेतत् स्यादेकमप्यखिलार्त्तिनुत् ॥५९॥

अथ उमापतिः ।—

त्रिफलाक्वथितैः सार्द्धं पुटितञ्च शतावधि ।
इत्थं महाभ्रसत्त्वं तस्मात् शाणचतुष्टयम् ॥६०॥
एकशाणमितं सम्यग्रसराजस्य भस्म च ।
एकशाणमितं गन्धं त्रिफला च त्रिशाणिका ॥६१॥
कान्तपात्रे क्षिपेदेतत् सर्वं घृतमितायुतम् ।
मर्द्दयेदतियत्नेन यावत् स्यात् प्रहराष्टकम् ॥
तत् कल्कं निक्षिपेत् कान्त-लोहजातकरण्डके ॥६२॥
संसिद्धोऽयमुमापतिर्वररसो गुञ्जामितः सेवितो
मासेनैव महामयान् प्रशमयेत् पथ्यादियुक्तिं विना ।
नित्यं क्षीरघृताशनेन च पुनः संसेवितो नाशये-
दब्देनैव जरां बलीपलितकैर्दद्याच्छताब्दं वयः ॥६३॥
उमापतौ रसः सोऽयमुमापतिरिवापरः ॥६४॥

पाठेऽपि स एवार्थः। हरेत् सत्त्वं पुरोक्तवत् पूर्वोक्ताभ्रसत्त्वनिष्काशनविधिना सत्त्वं हरेत् वटिकाभ्यः सत्त्वमाहरेदित्यर्थः। अयमाशयः.—धान्याभ्रीकृतं क्रमशःसञ्चूर्ण्य भृङ्गराजरसे मज्जनयोग्ये निक्षिप्य स्थापयेत्, तत्र च तुल्यादिवयस अभ्रतुल्यं. क्षारादि-चूर्णमभ्रपादं, रसभस्मादीनां चतुर्णामष्टमांशञ्च निक्षिप्य तावन्मर्द्दयेत, यावत् रसशोषणं स्यात, ततः छागपयस्केन निष्पिष्य क्षुद्राकृतीः वटिकाः कृत्वा शोषयेत्, अनन्तरं नूतनभाण्डमेकं जलेन घृष्ट्वा तज्जेन पाण्डुवर्णकल्केन ताः वटिकाः लिम्पेत्, अथ सत्त्वनिष्काशनविधिना ताभ्यः सत्त्वं सङ्गृह्य सर्वरोगेषु योजये-दिति ॥ ५६—५९ ॥

उमापतौ—इत्थं पूर्वोक्तप्रकारेण निष्पादितं महाभ्रसत्त्वं तदाख्यभेषजं त्रिफला-क्वथितैः त्रिफलाक्वाथैः सार्द्धं मर्द्दयित्वा शतावधि शतवारपर्य्यन्तं पुटितं, कुर्य्यादिति शेषः; एतं पुटितं तत् महाभ्रसत्त्व शाणचतुष्टयं कर्षमेकम्। जरां बलीपलितकैः, बलीपलितकैः सह जरां नाशयेदित्यन्वयः॥ ६०—६४ ॥

अथ महाकनकसुन्दरः।—

कान्तकाञ्चनगन्धाश्म-जारितं मारितं रसम्।
चतुर्निष्कमितञ्चाथ स्वर्णं निष्कमितं मतम् ॥६५॥
निक्षिप्य कान्तपात्रे तु पञ्चाशन्निष्कसम्मितम्।
जारयेद्गन्धकं शुद्ध-गन्धेन वड़वाग्निना ॥६६॥
निष्कतुल्यमिदं चूर्णं श्लक्ष्णीकृत्य प्रयत्नतः।
निक्षिपेत् मधुसम्पूर्णे घृतसुस्निग्धभाण्डके ॥६७॥
अमुनैव प्रकारेण पथ्यानां षष्टिसंयुतम्।
त्रिशतं साधयेत् यत्नात् शास्त्रदृष्टविधानतः ॥६८॥
त्रिधा विभज्य तत्रैकां समादाय हरीतकीम्।
एकपादं दिनाभ्याञ्च द्वितीयं दिवसैस्त्रिभिः ॥६९॥
तृतीयञ्च ततः पादं चतुर्भिर्दिवसैर्भजेत्।
एकैकाञ्च ततः पथ्यां भजेद्वावत्सरं नरः ॥७०॥

महाकनकसुन्दरं—कान्तं कान्तलौहं, गन्धाश्म गन्धकः; कान्तादिभिः त्रिभिः सह रसं मर्दयित्वा मारयेदित्यर्थः। चतुर्निष्कमितमिति पदं मारितं रसमित्यनेन सम्बध्यते, तथाविधं मारितं रसं चतुर्निष्कमितं गृह्णीयात्। "मतम" इत्यत्र "मृतम" इति क्वचित् पाठः। निक्षिप्येति।—पञ्चाशन्निष्कप्रमाणं गन्धकं कान्तलौहपात्रे संस्थाप्य वड़वाग्निना तीव्राग्निना इत्यर्थः, "बदराग्निना" इति क्वचित् पाठः; जारयेत्, ततः शुद्धगन्धेन तथा जारितगन्धकेन सह; "शुद्धगन्धेन" इत्यत्र "शुद्धसन्धेन" इति क्वचित् पाठः। निष्कतुल्यमिदं चूर्णं रसचूर्णं स्वर्णचूर्णञ्च, शुद्धगन्धेन सह मिश्रितात् स्वर्णपारदात् निष्कतुल्यं श्लक्ष्णीकृत्य सूक्ष्मचूर्णं कृत्वा घृतभाविते मधुपूर्णे भाण्डे स्थापयेत्। अमुनैव प्रकारेण घृतभाविते तस्मिन्नेव मधुपूर्णे भाण्डे निक्षेपणेत्यर्थः, पथ्यानां षष्टिसंयुतं त्रिशत षष्ट्यधिकशतत्रय हरीतकीगुडकं साधयेत् वक्ष्यमाणव्याधिसमूहहरणोपयोगितामापादयेदित्यर्थः, यथा भाण्डस्थचूर्णानि हरीतकीभिः सह मिश्रतां यान्ति तथा कुर्य्यादित्याशयः। शास्त्रदृष्टविधानतः यथाशास्त्रम्। त्रिधेति।—एकां हरीतकीं समादाय त्रिधा विभज्य इत्यन्वयः। एकपादमिति।—भागत्रये विभक्तस्य तस्य हरीतकीगुड़कस्य एकभागं दिवसद्वयेन, अपरभागं दिवसत्रयेण, शेषांशं दिवसचतुष्टयेन खादेत्, एवं

जीवेद्दर्षशतं साग्रं वलीपलितवर्जितः।
सर्वव्याधिविनिर्मुक्तो नित्यं स्त्रीशतसेवितः॥७१॥
बलवान् वीर्य्यवांश्चैव पूर्णसर्वेन्द्रियोदयः।
जायते नात्र सन्देह आज्ञेयं पारमेश्वरी॥७२॥
हन्यादर्च्चिगदांश्च कुष्ठमखिलं मासान्समासेवितः
पाण्डुञ्च ग्रहणीं प्रमेहगुदजान् गुल्मांश्च शूलामयान्।
स्थूलत्वञ्च तथा महाऽग्निसदनं रोगांस्तथैवापरान्
कुर्य्याद्दीपनपाचनं खलु नृणां भाव्यामयारोधनम्॥७३॥
अयं रसायनो दिव्यो महाकनकसुन्दरः॥७४॥

अथ अमृतार्णवः।—

कृत्वा कण्टकवेध्यानि पलस्वर्णदलान्यथ।
अष्टांशरसलिप्तानि निक्षिपेदुपले त्र्यहम्॥७५॥
हिङ्गुहिङ्गुलगन्धाश्म-ताप्यनीलाञ्जनैः समैः।
कृतं चूर्णमधश्चोर्द्ध्वं पत्राणां विनिधाय च॥७६॥
शतवारं पुटेत् सम्यक् निरुत्थं भस्म जायते।
तद्भस्मद्विगुणं सूतं तस्माद्द्विगुणहिङ्गुलः॥७७॥
तस्माच्च द्विगुणं ताप्यं सर्वमेकत्र मर्द्दयेत्।
रसेन मातुलुङ्गस्य निरन्तरदिनद्वयम्॥७८॥
तुषैः पुटत्रयं दद्यात् गोकरीषैः पुटत्रयम्।
पुटानि दश विंशत्या कणानां प्रकल्पयेत्॥७९॥

---

नवदिवससेवनानन्तरं प्रत्यहमेका हरीतकीं संवत्सरं यावत् सेवेत। भाव्यामयारोधनम् अनागताबाधप्रतिषेधनं, रोगाक्रमणाशङ्कानिवारकमित्यर्थः॥६५—७४॥

अमृतार्णवे—अष्टांशरसलिप्तानि स्वर्णपलापेक्षया अष्टमांशपारदयुतानि, निक्षिपेदुपले त्र्यहं खल्लशिलायां दिवसत्रयं मर्द्दयेत्। समैः प्रत्येकं स्वर्णपलतुल्यैः। पत्राणां स्वर्णपत्राणामित्यर्थः। तस्मात् सूतात्। तस्माच्च हिङ्गुलाच्च। "द्विगुणम्" इत्यत्र "त्रिगुणम्" इति पाठान्तरम्। विंशत्या कणानां विंशतिसङ्ख्यकवनोपलैः॥

त्रिंशद्भिश्छगणैर्दद्यात् पुटानामथ विंशतिम् ।
तस्मिन् वैक्रान्तजं भस्म क्षिपेत्तत्पादमात्रया ॥८०॥
सर्वमेकत्र सञ्चूर्ण्य भृङ्गराजनिजद्रवैः ।
भावयेत् सप्तवाराणि सिध्यत्येवमयं रसः ॥
श्रीमता नन्दिना प्रोक्तो रसोऽयममृतार्णवः ॥८१॥
गुञ्जाबीजमितः सिताघृतकणा-संयोजितः सेवितः
कुर्य्यात् वृष्यमनेकशो वरवधूसन्तोषसम्पोषणः ।
यक्ष्मव्याधिविधूननो गरगरः पर्य्यासदोषानलो
मूलव्याधिनिवारणः किमपरं सर्वामयध्वंसनः ॥८२॥
रम्भापक्वफलं घृतं दधि पयः चैरेयकं मण्डका
शालं तालफलं सिता च पललं सन्तानिका मोदकाः ।
खर्जूरं वरपानकञ्च वटकाः पुण्ड्रेक्षवः सारसं
गुर्वन्नं पनसं तथा शिखरिणी पथ्यं रसेऽस्मिन्मतम् ॥८३॥

अथ मदनसञ्जीवनः ।—

त्रिपलं पारदं शुद्धं गन्धकञ्च चतुष्पलम् ।
मृतमभ्रकसत्त्वञ्च स्वर्णं कान्तञ्च कार्षिकम् ॥८४॥

तत्पादमात्रया लिखितौषधचतुर्थांशेन । गरगरः विषदोषापहः इत्यर्थः ; "गरहरः" इति क्वचित् पाठः । मूलव्याधिनिवारणः शिरोरोगविनाशनः अर्शोरोगविनाशनो वा । चैरेयकं दुग्धकृतभक्ष्यम् । मण्डकाः "वारिणा कोमलां कृत्वा समितां साधु मर्दयेत् । हस्तचालनया तस्याः लोप्त्रीं सम्यक् प्रसारयेत् ॥ अधोमुखघटस्यैतां विस्तृतां प्रक्षिपेत् बहिः । मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते ॥ दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः । अथवा सिद्धमांसेन सतक्रवटकेन वा ॥" [illegible] चूर्णपिष्टकविशेषाः । सन्तानिका क्षीरसरः, सरकृतमिष्टान्नविशेषो वा, "सरभाजा" इति भाषा ; तत्प्रकारश्च पाकराजे द्रष्टव्यः । सारसं कमलं, तदाख्यपक्षिविशेषस्य मांसं वा । पनसं कण्टकीफलम् । शिखरिणी सन्धानविशेषः द्राक्षाभेदो वा ॥ ७५—८३ ॥

हिङ्गुलं हेम विमलं भूनागाया: पलत्रयम्।
एभि: सर्वैश्च सम्पेष्य प्रकुर्य्यात्कष्टपिष्टिकाम् ॥८५॥
वालुकायन्त्रविन्यस्त-लौहपात्रे क्षिपेत्ततः।
अधस्ताज्ज्वालयेदग्निं कारयेत्तदनन्तरम् ॥८६॥
मण्डूकब्राह्मिकायाश्च मुषल्याश्चित्रकस्य च।
हस्तिशुण्ड्यास्तथा ज्ञण-निर्गुण्ड्या गोक्षुरस्य च ॥८७॥
रसं कुडवमानेन क्षिपेत् खल्ले मुहुर्मुहुः।
तत आकृष्य सम्पिष्य मधुना सह यत्नतः ॥८८॥
मल्लमूषोदरे क्षिप्त्वा विनिरुध्य विशोष्य च।
दशभिस्त्रगणैर्देयं पुटं सम्पूज्य भैरवम् ॥
करण्डे स्थापयेत् पिष्ट्वा समभ्यर्चितकन्यकः ॥८९॥
रसः ख्यातो नाम्ना भुवि मदनमञ्जीवन इति
द्विवल्लाभ्यां तुल्यो घृतमधुसितादुग्धसहितः।
निपीतः सप्ताहं प्रचुरमधुराहारसहितो
नरं कुर्य्यान्नारीशतसुरतसुप्रीतहृदयम् ॥९०॥

मदनमञ्जीवने—वार्त्तिकमिति पदम् अष्टादिभिस्त्रिभिः सम्बध्यते। हेम सुवर्ण-माक्षिकः, स्वर्णस्य प्रागुक्तत्वात् हेमशब्देनात्र तत्तुल्यगुणः सुवर्णमाक्षिकः बोद्धव्यः। विमलम् इति हेम इत्यस्य विशेषणं, विमलं प्रशस्तमित्यर्थः। भूनागाया सीसकस्य; "भूनागस्य" "भूनागस्य" इति वा पाठः साधुः; "भूनागाय;" इति क्वचित् पाठः। एभिः सर्वैः गन्धकादिभिः सह इत्यर्थः, सम्पेष्य, पारदमिति शेषः। लौहपात्रे लौहखल्ले इत्यर्थः, परत्र खल्ले इति दर्शनात्। कारयेत् इति पदं रसमित्यने-नान्वीयते; मण्डूकब्राह्मिकादीनां कुडवमानेन रसं कारयेत्। मण्डूकब्राह्मिकायाः मण्डूकपर्ण्याः। मुषल्याः तालमूल्याः। क्षिपेत् खल्ले मुहुर्मुहुः तं रसं वालुकायन्त्रोपरिस्थलौहपात्रे अल्पमल्पं कृत्वा मुहुर्मुहुः क्षिपेदित्यर्थः। ततः आकृष्य कल्के एव रसे चयिते खल्लात् अवतार्य्य इत्यर्थः। मल्लमूषोदरे "निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात्। पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्त्तिता॥"

हन्यादुन्मादमुग्रं क्षयगदमरुचिं कामलामम्लपित्तं
सर्वान् पित्तोत्थरोगान् रुधिरभवगदान् रक्तपित्तज्वरांश्च ।
रक्तार्शः पित्तगुल्मं सततमतिमहाऽऽनाहमर्म्मविदाहं
पाण्डुं मेहांश्च मोहं प्रदरगदमपि स्त्रीजनस्योग्रमाशु ॥९१॥

अथ मदनमोदकः ।—

त्रैलोक्यविजयापत्रं घृतेनाऽऽभर्जितं कियत् ।
त्रिकटुत्रिफलामुस्ता-कुष्ठसैन्धवधान्यकम् ॥९२॥
शटीतालीशपत्रञ्च कट्फलं नागकेशरम् ।
अजमोदा यमानी च यष्टीमधुकमेव च ॥९३॥
मेथी जीरकयुग्मञ्च सबीजं भर्जितं तथा ।
यावन्त्येतानि चूर्णानि तावदेव तदौषधम् ॥९४॥
तावत्येव सिता ग्राह्या यावत्याऽऽयाति बन्धनम् ।
घृतेन मधुना युक्तं मोदकं परिकल्पयेत् ॥९५॥
त्रिसुगन्धिसमायुक्तं कर्पूरेणापि वासयेत् ।
स्थापयेत् घृतभाण्डे च श्रीमन्मदनमोदकम् ॥९६॥

इत्युक्तलक्षणकमूषाविशेषाभ्यन्तरे। समभ्यर्चितकन्यकः समभ्यर्चिताः कन्यकाः कुमार्य्यः, गौर्य्यादिमातृका इत्यर्थः, येन सः ॥ ८४—९१ ॥

मदनमोदके—त्रैलोक्यविजयापत्रं शक्राशनपत्रम् घाभर्जितम् ईषद्भर्जितम्; "घृतेनाऽऽभार्जितं कियत्" इत्यत्र "सबीजं घृतभार्जितं" "मुस्ता" इत्यत्र "शुण्ठी" तथा "सबीजं भर्जितं तथा" इत्यत्र "गृहीत्वा स्वल्पभर्जितम्" इति सर्वतन्त्र-सम्मतानि पाठान्तराणि। जीरकयुग्मं सितकृष्णभेदेन जीरकद्वयम्। "सबीजम्" इति पदं "त्रैलोक्यविजयापत्रम्" इत्यनेन तथा "भर्जितम्" इति पदं "जीरक-युग्मम्" इत्यनेन च सम्बन्धनीयं तन्त्रान्तरदर्शनात्, तच्च प्रागेव प्रदर्शितम्। तदौषधं विजयापत्रं, सर्वचूर्णसममत्र विजयाचूर्णं ग्राह्यम्। तावतीति।—सितायास्तु तावती मात्रा दातव्या यावत्या पिण्डाकारः भवितुमर्हति, मात्रा तु सा "मोदके द्विगुणो गुडः" इति परिभाषानुसारेण सर्वचूर्णाद्विगुणा। घृतमधुनोस्तु युक्त्या किञ्चित् दातव्यम्। त्रिसुगन्धीति।—त्रिसुगन्धि-कर्पूरयोः तावती मात्रा देया

भक्षयेत् प्रातरुत्थाय वातश्लेष्मनिवारणम्।
कासघ्नं सर्वशूलघ्नं वलीपलितनाशनम् ॥९७॥
आमवातविकारघ्नं सङ्ग्रहग्रहणीहरम्।
सदा निषेवयेद्धीमान् वृष्यमग्निविवर्द्धनम् ॥९८॥
ब्रह्मणः प्रमुखाच्छ्रुत्वा वासुदेवे जगत्पतौ।
एतत् कामविवृद्ध्यर्थं नारदेन प्रकीर्त्तितम् ॥
तेन लब्धं वरस्त्रीणां रेमे स यदुनन्दनः ॥९९॥

अथ मदनाशने कर्पूरादिप्रलेपः।—

शशिसूतकटङ्कणमागधिकं घृतशूरणमाक्षिकहेमरसम्।
मुनिपत्रवसप्लुतलेपवरं युवतीमदपातनवश्यकरम् ॥१००॥

अथ द्रावणे सूतप्रयोगः।—

योषागर्भरजः सूतं मधुना मर्द्द्य लेपयेत्।
अवश्यं द्रावयेन्नारीं शुष्ककाष्ठोपमामपि ॥१०१॥

---

यथा सुगन्धमावं स्यात्, तत्र विसुगन्धि त्वगेलापत्रम्। "कर्पूरेणापि वासयेत्" इत्यत्र "कर्पूरेणाधिवासयेत्" इति सर्वतन्त्रसम्मतः पाठः। घृतभाण्डे घृतभाविते भाण्डे ॥ ९२—९९ ॥

कर्पूरादिप्रलेपे—शशी कर्पूरः। माक्षिकं क्षौद्रम्। हेम नागकेशरं रसं रसाञ्जनं, न तु हेमरसं धत्तूरपत्रस्वरसं, स्वरसार्थकरसशब्दस्य पुंलिङ्गत्वात्। मुनिपत्रवसप्लुतलेपवरम् अगस्त्यपत्ररसाप्लुतप्रकृष्टप्रलेपः। "लेपवरं" तथा "वश्यकरम्" इत्यनयोः पुंलिङ्गता समीचीना, श्रेष्ठतावाचिवरशब्दस्य पुंलिङ्गत्वात्। युवतीमदपातनं कामिनीगर्वनाशनम् ॥ १०० ॥

सूतप्रयोगे—योषागर्भरजः प्रसवकालनिःसृतं स्त्रीरजः ; "रजः" इत्यत्र "रसम्" इति पाठेऽपि—स एवार्थः। "योषा" इत्यत्र "घोषा" इति पाठकल्पना सुगमार्था, तन्त्रान्तरे तादृशयोगदर्शनात्, तथा च—"एकं माक्षिकमिश्रं लेपात् कोषातकीभवं चूर्णम्। योन्यां वराङ्गपाते कुरुते रेतःस्रुतिमस्याः ॥" इति, घोषागर्भरजः कोषाफलमध्यचूर्णम् ॥ १०१ ॥

अथ पुष्पधन्वा रसः।—

रम्भाकन्दे हेमतारार्कपिष्टी पक्वा यन्त्रे भूधरे तां पचेत।
गन्धं दत्त्वा षड्गुणाढं क्रमेण पश्चात् कान्तं तेन तुल्यं क्रमेण॥१०२॥
दत्त्वा खल्ले शाल्मलीयष्टितोयैः पञ्चैकं तन्मर्दयेन्नागवल्ल्याः।
नीरैर्यामं पुष्पधन्वा रसः स्यात् वल्लं दद्यादस्य पूर्वोक्तयुक्त्या॥१०३॥
पुष्टिं वीर्य्यं दीपनं सोऽत्र दद्यात् हन्याद्रोगान् रोगयोग्यानुपानैः॥
॥१०४॥

अथ द्रावणे सिन्दूरप्रयोगः।—

सिन्दूरमधुनो लेपं लिङ्गस्य कुरुते यदि।
अत्यर्थं रमते नारीं द्रावयेद्वशमानयेत्॥१०५॥

अथ रसेन्द्रचूडामणिः।—

सूतहेमभुजगाभ्रवङ्गकाः कान्तताप्यविमलाः समाक्षिकाः।
भागवृद्धिमिलिता विमर्दिता धूर्त्तपत्रविजयासलिलेन॥१०६॥

पुष्पधन्वनि—रम्भाकन्दे कदलीकन्दरसे पक्वा खल्ले मर्दनेन परिणतिमापद्यमाना हेमताराऽर्कपिष्टी स्वर्णरजतताम्रपिष्टी; कदलीकन्दरसेन मर्दनात् पिण्डतया परिणतं स्वर्णादित्रयमित्यर्थः। तां पिष्टिम्। षड्गुणाढं त्रिगुणम्। क्रमेण अल्पमल्पं कृत्वा। तेन तुल्यं गन्धतुल्यम्। शाल्मलीयष्टितोयैः शाल्मलीयष्टिमधुभ्यां कृतैः क्वाथैः। अयमर्थः,—हेमादित्रयं रम्भाकन्दनीरे मर्दयित्वा पिष्टं कुर्यात्, ततः तां भूधरे यन्त्रे पचेत्, अथ यन्त्रादाकृष्य तदौषधं समेन गन्धकचूर्णेन खल्ले मर्दयेत्, निःशेषं मिश्रीभूते तस्मिन् गन्धके पुनरौषधसमं गन्धकं दत्त्वा तथा मर्दयेत्, एवं त्रिगुणगन्धकं तत्र सम्मिश्य गन्धकवत् लौहचूर्णमपि तथा मिश्रयेत्, अनन्तरं शाल्मलीयष्टिक्वाथेन पञ्चकालं भावयित्वा ताम्बूलीपत्ररसेन प्रहरमेकं मर्दयित्वा च निगूढं स्थापयेदिति। पूर्वोक्तयुक्त्या घृतमधुसितादुग्धसहित इत्यर्थः॥१०२—१०४॥

सिन्दूरप्रयोगे—सिन्दूरमधुनः सिन्दूरः नागसम्भवः तेन सह मधु तस्य॥१०५॥

रसेन्द्रचूडामणौ—भुजगः सीसकः। कान्तं कान्तलौहम्। ताप्यं स्वर्णमाक्षिकम्। समाक्षिका इत्यनेन पुनर्माक्षिकग्रहणात् माक्षिकस्य षोडशभागाः; ताप्यमित्यस्य तुत्थकमित्यर्थो वा। विमलः रौप्यम। "विमलः विमलभस्म, समाक्षिकाः रौप्यमाक्षिकः" इति कश्चित्। भागवृद्धिमिलिताः उत्तरोत्तरमेकैकभागवृद्ध्या

सप्तसप्त चपलामृतवल्ली सारिवासुररताञ्जलतोयैः ।
वारिवाड्मृतयष्टिकावरी-वानरीभुजगदृष्टदकेन ॥१०७॥
अर्द्धभागमहिफेनकं न्यसेत् मर्दयेत् सुरसपुष्परसेन ।
चन्दनार्ककरहाटपिप्पली-श्रावणीक्रतरसैः पृथगेव ॥१०८॥
कुङ्कुमेन च ततो विभावयेन्नाभिजद्रवयुतं विभावयेत् ।
सिद्धिमेति रसराडयं शुभः कामिनीमदविधूननदक्षः ॥१०९॥
शर्करामधुयुतो हिमाषकः स्तम्भकृन्निधुवने वनितानाम् ॥११०॥
संसेव्य सूतं न च रात्रिभोज्यं कुर्वीत पेयं पय एव चैकम् ।
तृतीययामे रससेवनन्तु कृत्वा निशायाः प्रहरे व्यतीते ॥१११॥
सेवेत कान्तां कमनीयगात्रां घनस्तनीमुज्ज्वलचारुवस्त्राम् ।
रत्युत्सुकां कातरलोलनेत्रां विलोलहारावलिमादधानाम् ॥११२॥
किं कामि तनुकामिनां मलयजेनावश्यजेनाऽऽशु किम् ?
किं चन्द्रेण परोपतापजनिना ? पुंस्कोकिलेनापि किम् ? ॥११३॥

---

मिश्रिताः। सप्त सप्त प्रत्येकरसेन सप्त सप्त वारान्, विमर्दिता इत्यनेन सम्बन्धः। चपला पिप्पली। अमृतवल्ली गुडूची। सुररता रलयोरभेदात् सुरलता इत्यर्थः, सुरलता ज्योतिष्मती। अञ्जलः अञ्जलिका, लाजालुरित्यर्थः; "सारिवासुररताञ्जलतोयैः" इत्यत्र "भार्ङ्गिकासुरलताञ्जलितोयैः" इति क्वचित् पाठः; एषां तोयैः क्वाथैः। वारिवाट् मुस्तकम्; वार्य्युपपदपूर्वकस्य वहधातोः क्विपि निपातनात्। अमृतः वाराहीकन्दः। यष्टिका यष्टिमधु। वरी शतावरी। वानरी शूकशिम्बी। भुजगदृष्टिः सर्पाक्षी."पानशिउलि" इति ख्यातम्। अर्द्धभागमहिफेनकमिति एकभागापेक्षया अहिफेनस्यार्द्धत्वम्। सुरसपुष्परसेन तुलसीमञ्जरीस्वरसेन। अर्ककरहाटः आकारकरभः, "आकरकरा" इति ख्यातम्। श्रावणी मुण्डिरी। नाभिजद्रवयुतं मृगनाभिजलसंयुतं, तत्र फाण्टकषायविधिना कर्त्तव्यम्। निधुवने सुरतकर्मणि। तृतीययामे इति अह्नः। अत्र पत्री—पारदः १, स्वर्णं २, सीसकः ३, अभ्रं ४, वङ्गं ५, लौहं ६, स्वर्णमाक्षिकः अथवा तुत्थं ७, रौप्यं ८, स्वर्णमाक्षिकः ९, एकीकृत्य धुस्तूरादीनां यथायोग्यं रसेन क्वाथेन वा सप्तवारान् भावयेत्, ततस्तस्मिन् सूतार्द्धम् अहिफेनं निक्षिप्य सुरसपुष्पादीनां रसेन एकैकवारं मर्दयेत्, ततः

सप्तस्रग: सन्ति यदा तरुण्यो मदालसा: पीनपयोधरा दृढ़ा: ।
तदा रसेन्द्र: परिषेवणीयो विकारकारी भवतीह नान्यथा ॥११४॥

अथ कामेश्वरो मोदक: ।—

सम्यक्मारितमभ्रकं कटुफलं कुष्ठाश्वगन्धा वचा
मेथी मोचरसो विदारिमुषलीगोक्षुरकेक्षुरकम् ।
रम्भाकन्दशतावरी ह्यजमुदा माषास्तिला धान्यकं
यष्टीनागबलाकचूरमदनं जातीफलं सैन्धवम् ॥११५॥
भार्गी कर्कटशृङ्गिका त्रिकटुकं द्वे जीरके चित्रकं
चातुर्जातपुनर्नवागजकणा-द्राक्षाशठीकट्फलम् ।
शाल्मल्यङ्घ्रिफलत्रिकं कपिभवं बीजं समं चूर्णयेत्
चूर्णार्द्धा विजया सिता द्विगुणिता मध्वाज्यमिश्रन्तु तत् ॥११६॥

---

कुङ्कुमोदकेन मृगनाभिजलेन च सप्त सप्त वारान् विभाव्य माषद्वयमिता वटिकां कृत्वा शर्करामधुभ्यां प्रयोजयेदिति । किमिति ।—तनुकामिनां स्वल्पकामवतां, क्षीणशुक्रत्वात् पुंस्त्वविहीनानामित्यर्थ:, आशु कामे कामोद्दीपने मलयजेन श्रीखण्डेन किम् ? अवश्यजेन कर्पूरनिर्यासेन उद्दीपकेन वा किम् ? न किमपि प्रयोजनमित्यर्थ:, रसेनानेनैव तत्कर्मसम्पादनात् । दृढा: रतिदक्षा: ॥ १०६—११४ ॥

कामेश्वरमोदके—कट्फलं कक्कोलम् । "वचा" इत्यत्र "अमृता" इति पाठान्तरम् । विदारी भूमिकुष्माण्ड: । मुषली तालमूली । इक्षुरकं कोकिलाक्ष: । "इक्षुरकम्" इत्यत्र नपुंसकलिङ्गता द्वन्द्वैकवद्भावात ; "इक्षुरका:" इति पाठकल्पना इद्या । अजमुदा अजमोदा, यमानीत्यर्थ: । यष्टी यष्टिमधु । नागबला गोरक्षतण्डुला । कचूर: शटी । मदनं दमनक:, "दना" इति भाषा ; "दमनम्" इति पाठान्तरम् । रसरत्नाकरे तथा भैषज्यरत्नावल्याञ्च "सम्यक्" इत्यादि प्रथमपादे "चूर्णांशं गगनं घनार्द्धविमलं गन्धश्च कुष्ठामृता" इति, तथा तृतीयचतुर्थपादयोश्च "भीरुश्चैव कर्कटकं यमानिका तालाङ्कुरं धान्यकं यष्टी नागबला तिला मधुरिका जातीफलं सैन्धवम्" इति पाठान्तरम् । गजकणा गजपिप्पली । "कट्फलम्" इत्यत्र "वालकम्" इति पाठान्तरम् । शाल्मल्यङ्घ्रि: शाल्मलीमूलम् । कपिभवं बीजं शूकशिम्बीबीजम् । चूर्णार्द्धा त्रुलया निखिलचूर्णापेक्षया विजयाचूर्णस्य अर्द्धभाग: । "चूर्णांशा" इति

कर्षार्द्धां गुलिकां विलेह्यमथवा कृत्वा च तत् सेवयेत्
पेया चोरसिताऽनुवीर्य्यकरणे स्तम्भोऽप्ययं कामिनाम्।
रामावश्यकरः सुखातिसुखदः प्रौढाङ्गनाद्रावकः
क्षीणे पुष्टिकरः क्षयक्षयकरो नानाऽऽमयध्वंसकः ॥११७॥
नित्यानन्दकरो विशेषकविताबाचाविलासोद्भवं
धत्ते सर्वगुणं महास्थिरवयो ध्यानावधानेऽप्यलम्।
अभ्यासेन निहन्ति मृत्युपलितं कामेश्वरो वत्सरात्
सर्वेषां हितकारको निगदितः श्रीनित्यनाथेन सः ॥११८॥

अथ स्तम्भने कृकवाकुप्रयोगः।—

कृकवाकूग्रपिच्छन्तु मुद्रिकाकारकं कृतम्।
ऊर्णनाभेः सुजालेन वेष्टयित्वाऽथ धारयेत् ॥
वामहस्तकनिष्ठायां नरो वीर्य्यं न मुञ्चति ॥११९॥

---

क्वाचित्कः पाठः न समीचीनः, रसरत्नाकरादिविरोधात्। सिता द्विगुणिता विजयाचूर्णसहितसर्वचूर्णमपेक्ष्य सिताया द्वैगुण्यम्। मध्वाज्यमिश्रं मोदकबन्धनोपयोगिघृतमधुसहितम्। "कर्षार्द्धां गुलिकां विलेह्यमथवा कृत्वा च तत् सेवयेत" इत्यत्र "कर्षार्द्धां गुलिकां विधाय विधिना रात्रौ सदा सेवयेत्" इति रसरत्नाकरोक्तः, "कर्षार्द्धा गुटिकाऽथ कर्षमथवा सेव्या सतां सर्वदा" इति भैषज्यरत्नावल्युक्तो वा पाठः सुगमः। क्षयक्षयकरः क्षयरोगनाशनः। विशेषकविताबाचाविलासोद्भवं विशेषा उत्कर्षवती, या कविताबाचा कवित्वद्योतकवाक्यं, कवित्वशक्तिरित्यर्थः, तस्याः विलासात् स्फुरणात् उद्भवः उत्पत्तिः यस्य तादृशं, तथा महास्थिरवयः महत् प्रशस्तम्, आरोग्यादिसमन्वितमित्यर्थः, स्थिरं यौवनस्थमित्यर्थः, वयः येन तथाभूतं, स्वास्थ्यादिसम्पन्नवयःप्रदत्वमित्यर्थः, सर्वगुणं धत्ते, मोदकोऽयमिति शेषः। ध्यानावधाने ध्याने विषयचिन्तने परमात्मचिन्तने वा यत् अवधानम् अप्रमादः, चित्तैकाग्रीकरणं तत्र अलं समर्थः ॥११५—११८॥

कृकवाकुप्रयोगे—कृकवाकुः कुक्कुटः तस्य उग्रपिच्छम् ऊर्द्धभागेनावस्थितं पुच्छम्; अग्रः पृष्ठवंशः तत्रस्थं पुच्छमित्यर्थो वा। "कृकवाकग्रपिच्छम्" इति क्वचित् पाठः। मुद्रिकाकारकम् अङ्गुरीयकाकारम् ॥११९॥

अथ स्तम्भने कर्पूरादिप्रलेपः।—

कर्पूरं टङ्कणं सूतं मुनिपुष्परसं मधु।
मर्दयित्वा लिपेत्तेन लेपो यावत्तु तिष्ठति॥१२०॥

अथ स्तम्भने पुण्डरीकप्रयोगः।—

लिङ्गन्तु पुण्डरीकस्य चूर्णीकृत्य प्रयोजयेत्।
मधुना तिलकं कृत्वा रेतस्तम्भकरो ध्रुवम्॥१२१॥

अथ पूर्णचन्द्रः।—

सूतं गन्धस्वाभ्रगन्धागुडूची-यष्टीतोयैर्वासरैकं विमृद्य।
क्षुद्रं शङ्खं मौक्तिकं लौहकिट्टं भस्मीभूतं सूततुल्यञ्च दद्यात्॥१२२॥
भूकुष्माण्डैर्वासरैकं विमृद्य गोलं कृत्वा भूधरे तं पुटेत।
चूर्णं कृत्वा नागवल्लीरसेन दद्यादेकं मर्दयित्वा च निष्कम्॥१२३॥
मध्वाज्याभ्यां पूर्णचन्द्रं रसेन्द्रं पुष्टिं वीर्य्यं दीपनञ्चैव कुर्य्यात्।
योज्यश्चायं पित्तरोगे ग्रहण्यामर्शोरोगे सेवयेत् बोलयुक्तम्॥१२४॥
स्त्रीणां तापे शाल्मलीनीरयुक्तं मात्रामानं कालदेशं विभज्य॥
१२५॥

कर्पूरादिप्रलेपे—मुनिपुष्परसम् अगस्त्यपुष्परसम्। लेपो यावत्तु तिष्ठति तावन्न नरो वीर्य्यं न मुञ्चति इति पूर्वोक्तेन सम्बन्धः॥१२०॥

पुण्डरीकप्रयोगे—पुण्डरीकस्य श्वेतपद्मस्य, लिङ्गं केशरमित्यर्थः, स्तम्भनयोगे शुभ्र-पद्मस्य केशरस्यैव सर्वत्र प्रयोगदर्शनात्; चूर्णीकृत्य मधुना सह तिलकं कृत्वा तिलक-रूपेणेत्यर्थः, प्रयोजयेत्। रेतस्तम्भकरः इत्यत्र सः तिलकः इति विशेष्यपदमूहनीयम्। ध्रुवम् अत्यर्थम्॥१२१॥

पूर्णचन्द्रे—क्षुद्रं शङ्खं शम्बूकं शङ्खनाभिं वा। "भूकुष्माण्डैः" इत्यत्र "कुष्माण्डैर्वा" इति क्वचित् पाठः। चूर्णमिति।—चूर्णं कृत्वा नागवल्लीरसेन मर्दयित्वा च निष्काद्दित-मिति शेषः, पूर्णचन्द्रं रसेन्द्रम् एकं निष्कं निष्कमात्रमित्यर्थः, दद्यादित्यन्वयः; "पूर्णचन्द्रो रसेन्द्रः" इति पाठकल्पनं सुगमम्। स्त्रीणां तापे स्त्रीरोगे, प्रदर-योनिव्यापदादिरोगे इत्यर्थः; स्त्रीणां स्त्रीभिः तापे इति वा, स्त्रीणामतिसेवन-जनितधातुक्षीणादिरोगे इत्यर्थः॥१२२—१२५॥

अथ कामदीपनः।—

शुद्धं गन्धं वाजिगन्धाञ्च यष्टिं माकन्दमिक्षुरकमात्मगुप्ताम्।
मध्वाज्याभ्यां शाल्मलीसत्त्वयुक्तां शम्बूकैर्वा भुज्यते वाऽऽज्यमिश्रैः॥
॥१२६॥

अथ मदनजीवनः।—

कर्पूररससंयुक्तं सौभाग्यरससंयुतम्।
लेपाय क्रियते नित्यं नाम्ना मदनजीवनः॥१२७॥

अथ महाकल्कः।—

धान्याभ्रकं विनिक्षिप्य मुषलीरसमर्दितम्।
स्थाल्यां क्षिप्त्वा निरुध्याथ पिधान्या मध्यरन्ध्रया॥१२८॥
स्थाल्यधो ज्वालयेद्वह्निं यामपर्य्यन्तमुद्धतम्।
ततः क्षिपेत् पिधान्यां हि व्योम्नस्त्वष्टगुणं पयः॥१२९॥
जीर्णे पयसि पिष्ट्वा तत्तालमूलीरसैः पुनः।
इत्थं हि साधयेत् व्योम त्रिवारमतियत्नतः॥१३०॥
अजादुग्धैः पुटेत् पश्चाद्वाराणि खलु विंशतिः।
कम्पिल्लकरसेनापि विष्णुक्रान्तारसेन च॥१३१॥

---

कामदीपने—वाजिगन्धाम् अश्वगन्धाम्। माकन्दम् आम्रफलम्। इक्षुरकं कोकिलाक्षम्। शम्बूकैः शम्बूकमांसैः। आज्यमिश्रैः घृतभर्जितैरित्यर्थः; शाल्मलीसत्त्व-युक्तामात्मगुप्तां शुद्धगन्धादिकञ्च मध्वाज्याभ्यां सेवेत, अथवा घृतभर्जितैः शम्बूकमांसैः सह चूर्णमिदं भुज्यते इति निष्कर्षः। क्वचित् पुस्तके द्वितीयपादे—"मागन्ध······ माजिगन्धाम्" इति खण्डितः पाठो दृश्यते॥ १२६॥

मदनजीवने—कर्पूररससंयुक्तं कर्पूरपारदाभ्यां मिश्रितम्। "सौभाग्यरससंयुक्तम्" इत्यत्र "सौभाग्यं रससंयुतम्" इति पाठकल्पना साधीयसी; सौभाग्यं टङ्कणं, रस-संयुतं सिन्दूरमिश्रमित्यर्थः; एवञ्च कर्पूरपारदसिन्दूरविमिश्रेण सौभाग्येन लेपः कार्य्यः इति। क्वचित् पुस्तके "कर्पूरं रससंयुक्तं सौभाग्यं रससंयुतम्" इति पाठः॥ १२७॥

महाकल्के—विनिक्षिप्य इत्यत्र मुषलीरसे इति शेषः। मुषलीरसमर्दितं तालमूलीरसपिष्टम्। पिधान्या मध्यरन्ध्रया मध्यच्छिद्रेण शरावेण। व्योम्नः अभ्रात्।

कदलीकन्दतोयेन तालमूलीरसेन च।
शतवारं पुटेदेवं भवेत् व्योम रसायनम् ॥१३२॥
तत् व्योमभस्मितं ताप्य-भस्म ताम्रस्य भस्म च।
शुल्वभस्म च तत् सर्वं समांशं परिकल्पयेत् ॥१३३॥
भावयेत् सप्तधा निम्ब-रसैर्लोध्ररसेन च।
केतक्या मार्कवस्यापि कदल्यास्त्रिफलस्य च ॥१३४॥
कोरकस्यापि सारेण तावद्वाराणि यत्नतः।
इति निष्पन्नकल्केऽस्मिंस्तत्समां त्रिफलां क्षिपेत् ॥१३५॥
भस्मसूतं सिता व्योषं चित्रकञ्च पृथक् पृथक्।
मधुना गुटिकाः कार्य्याः शाणेन प्रमिताः खलु ॥१३६॥
महाकल्क इति ख्यातो दस्राभ्यां परिकीर्त्तितः।
एकां गोलीं समारभ्य तथैकैकां विवर्द्धयेत् ॥१३७॥
चतुर्गोलकपर्य्यन्तं मण्डले मण्डले खलु।
सेविता द्वादशाब्दन्तु जरामृत्युविवर्जितः ॥१३८॥
सर्वव्याधिविनिर्मुक्तो दृढ़दीपनपाचनः।
भीमतुल्यबलः श्रीमान् पुत्रसन्ततिसंयुतः ॥१३९॥
सर्वारोग्यमयो भीम-समानभुजविक्रमः।
सर्वाऽऽयाससहिष्णुश्च शीतातपसहस्तथा ॥१४०॥
अमन्दसम्प्रदीपितः प्रौढ़स्त्रीरतिरञ्जनः।
दृढ़सर्वेन्द्रियो भूत्वा जीवेद्वर्षशतत्रयम् ॥१४१॥
श्वासं कासं क्षयं पाण्डुं तथैवाष्टौ महागदान्।
मण्डलार्द्धेन शमयेत् ज्वरादीनान्तु का कथा? ॥१४२॥

क्षीर्णे पयसि दुग्धे शुष्के। विष्णुकान्ता अपराजिता। ताप्यभस्म स्वर्णमाक्षिकभस्म। शुल्वभस्म ताम्रभस्म, तेन च ताम्रभस्मनो भागद्वयम्। मार्कवस्य भृङ्गराजस्य। कोरकस्यापि सारेण काकोलीरसेन मृणालरसेन वा। तावद्वाराणि सप्त वारान्। तत्समां निष्पन्नकल्कसमाम्। दस्राभ्याम् अश्विनीकुमाराभ्याम्। मण्डले मण्डले प्रत्यष्टचत्वा-

सर्वंगोरससंयुक्तं पथ्यं कार्य्यं रसायने।
रोगोचितमथान्यच्च दद्दीत खलु रोगिणे ॥१४३॥
संसारसुखमिच्छद्भिः सुखं जीवितुमिच्छुभिः।
नित्यं रसो निषेव्योऽयं दिव्यामृतसमो मतः ॥१४४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
वाजीकरणनिरूपणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

त्रिंशद्दिवसे। अष्टौ महागदान् "वातव्याध्यश्मरीकुष्ठ-मेहोदरभगन्दराः। अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः॥" इत्युक्तान्, उन्माद-त्वग्दोष-राजयक्ष्म-श्वास-मधुमेह-भगन्दरोदराश्मरीरूपान नारदस्मृत्युक्तान वा। मण्डलार्द्धेन औषधसेवनदिनादारभ्य चतुर्विंशतिदिवसेन। "सर्वंगोरससंयुक्तम्" इत्यत्र "सर्वं गोरससंयुक्तम्" इति पाठकल्पनं साधु। कल्पना चास्यैवंविधा कार्य्या—तालमूलीरसेन पिष्टं धान्याभ्रकं स्थाल्यां निधाय मध्यच्छिद्रेण शरावेणाच्छाद्य च प्रहरं यावत् तीव्राग्निना पचेत. प्रहरान्ते च शरावच्छिद्रेण चभ्रादष्टगुणं दुग्धं स्थाल्यां प्रक्षिप्य दुग्धशोषं यावत् तीव्रज्वालां दद्यात्, ततो बहिष्कृत्य पुनस्तालमूलीरसेन पिष्ट्वा पूर्ववत् पचेत, एवं वारत्रयं कुर्य्यात्, ततः कासमर्द्दैः सह पिष्ट्वा पुटपाकं कुर्य्यात, एवं विंशतिवारान्, ततः कम्पिल्लकादीनां प्रत्येकरसेन पिष्ट्वा पिष्ट्वा विंशतिपुटं दद्यात, एवञ्च शतवारपुटितं तद्भस्म ताप्यादिभस्मना तुल्यमानेन संयोज्य निम्बादीनां प्रत्येकरसेन क्वाथेन वा सप्त सप्त वारान् भावयेत्, एवं कल्कीकृते तस्मिन्नभ्रादौ सर्वतुल्यं त्रिफलादीनां प्रत्येकं चूर्णं दत्त्वा मधुना शाणमानां गुडिकां कुर्य्यात, ततः अष्टचत्वारिंशद्दिनानि एकैकां गुडिकां भक्षयेत, एकोनपञ्चाशद्दिनमारभ्य षण्णवतिदिनानि यावत् गुडिकाद्वयं खादेत्, एवं प्रत्यष्टचत्वारिंशद्दिवसे एकैकां वर्द्धयित्वा गुडिकाचतुष्टयं खादेत्, ततो द्वादशाब्दं यावत् चतस्र एव गुडिकाः प्रतिदिनं भक्षयेदिति ॥ १२८—१४४ ॥

इति रसरत्नसमुच्चयबोधिन्यां सप्तविंशोऽध्यायः समाप्तः ॥ २७ ॥

# अथाष्टाविंशतितमोऽध्यायः ।

## अथ लोहकल्पः ।—

### अथ रसस्य प्राधान्यकीर्त्तनम् ।—

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥ १ ॥

सकलग्रन्थेन रसोपरसलौहादियुतो भेषजसमुदायः उक्तः, इदानीं तेषां महागुणानां रसविषलौहानां स्वतन्त्राणामेव व्याधिविध्वंसित्वप्रदर्शनाय कल्पस्थानमष्टाविंशाध्यायं विवक्षुः लौहकल्पं प्रथममारभते। स्थाने चास्मिन् लौहविषरसानां कल्पनां वक्ष्यति; तत्र रसस्य औषधेभ्यः प्राधान्यख्यापनार्थम् आदौ तद्गुणानाह, अल्पेति।—अल्पमात्रोपयोगित्वात् अल्पमात्रया प्रयुक्तस्यापि रसस्य व्याधिनिग्रहणसामर्थ्यादित्यर्थः। औषधेभ्यः क्वाथकल्कादिरूपेभ्यः बहुमात्रया प्रयोज्येभ्यः इत्यर्थः, रसः पारदः मृतताम्राभ्रादिश्रेष्ठः, वक्ष्यति चाग्रे स्वयमेव—"मृतानि लोहानि रसीभवन्ति" इति। अधिकः गुणाधिक्यकरः। किञ्च पारदापरपर्य्यायः रसः खलु न केवलमौषधेभ्य एवाधिकः, परन्तु योगसाधनत्वात् बहुकार्य्यकरत्वात् मुक्तिप्रदत्वाच्च सर्वेभ्य एवाधिकः; यत उक्तं रसेन्द्रचिन्तामणौ—"अचिराज्जायते देवि! शरीरमजरामरम्। मनसश्च समाधानं रसयोगादवाप्यते॥ सत्त्वञ्च लभते देवि! विज्ञानं ज्ञानपूर्वकम्। सत्यं मन्त्राश्च सिध्यन्ति योऽश्नाति कृतसूतकम्॥ यावन्न शक्तिपातस्तु यावन्न पाशकृन्तनम्। तावत्तस्य कुतः शुद्धिर्जायते भस्मसूतके?॥ यावन्न हरबीजन्तु भक्षयेत पारदं रसम्। तावत्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम्?॥ स्वदेहे खेचरत्वञ्च शिवत्वं येन लभ्यते॥" इति। अपरञ्च—"दोषहीनो रसो ब्रह्मा मूर्च्छितस्तु जनार्दनः। मारितो रुद्ररूपी स्यात् बद्धः साक्षात् सदाशिवः॥" इति। तस्य दर्शनात् स्पर्शनात् भक्षणात् स्मरणात् पूजनात् दानाच्च षड्विधं फलं लभ्यते। यथा—"केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्। तानि दृष्ट्वा च यत् पुण्यं तत् पुण्यं रसदर्शनात्॥ चन्दनागुरुकर्पूर-कुङ्कुमान्तर्गतो रसः। मूर्च्छितः शिवपूजा सा शिवसान्निध्यसिद्धये॥ भक्षणात् परमेशानि! हन्ति तापत्रयं रसः। दुर्लभं ब्रह्मविष्ण्वाद्यैः प्राप्यते परमं पदम्॥ हृद्व्योमकर्णिकान्तःस्थं रसेन्द्रं

अथ रसभेदाः।—

**लौहं मृतं कन्दविषं सूतश्चेति निगद्यते ॥ २ ॥**

अथ पानीयकषायविधिः।—

**क्वाथ्यः पानकषायोऽस्मिन् षोड़शांशावशेषितः ॥ ३ ॥**

---

परमेश्वरि !। अरम् विमुच्यते पापैः सद्यो जन्मान्तरार्जितैः ॥ स्वयम्भूलिङ्गसाहस्रैर्यत् फलं सम्यगर्चनात्। तत् फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत् ॥ रसविद्या परा विद्या त्रैलोक्येऽपि च दुर्लभा। भुक्तिमुक्तिकरी यस्मात् तस्मात् ज्ञेया गुणान्वितैः ॥" इत्यादिग्रन्थो ज्ञेयः इति ॥ १ ॥

"औषधेभ्योऽधिको रसः" इत्युक्तं, तत्र कस्तावद्रसः? इत्याशंसायां तमेव विवृणोति, लौहमिति।—मृतं लौह भस्मीकृताः स्वर्णाद्यष्टौ धातवः; ते च—"सुवर्णं रजतं ताम्रं कांस्यं पित्तलमेव च। नागं वङ्गं तथा लौहं धातवोऽष्टौ प्रकीर्त्तिताः ॥" इति, "शुद्धलौहम्" इत्यादिना लौहनिरूपणाध्याये उक्तं वा। कन्दविषं विषकल्पे वक्ष्यमाणं कर्कटादिकं, युक्तियुक्तं प्रयुक्तस्य विषस्यापि रसवत् रसायनत्वात् रसत्वम्; यदुक्तं—"विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्" इति; किञ्च नानार्थध्वनिमञ्जर्यादौ रसशब्देन विषस्यापि ग्रहणात् विषस्य रसत्वम्; यदुक्तं—"शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इति। निगद्यते इत्यत्र रसः इति शेषः ॥ २ ॥

अत्रैव लौहकल्पादिषु विविधक्वाथानामनुपानत्वेन सहपानत्वेन च विधानात् तत्साधनप्रकारमाह, क्वाथ्य इति।—अस्मिन् लौहकल्पादौ, न त्वन्यत्र इत्यर्थः, तत्र चतुः-पञ्च षड़ष्ट द्वादशार्द्धांशावशेषनियमात्। षोड़शांशावशेषितः इत्यनेनास्य पाचन-शोधन-क्लेदन-संशमन-दीपन-तर्पण शोषणभेदेन सप्तविधेषु कषायभेदेषु शोषणकषायत्वं ख्यापितं, तेषु अर्द्धावशेषः पाचनः, द्वादशांशकः शोधनः, चतुरंशकः क्लेदनः, अष्टांशकः संशमनः, षडंशको दीपनः, पञ्चमांशकस्तर्पणः, शोषणस्य षोड़शांशकः इत्युक्तत्वात्; यदुक्तं राजनिघण्टौ—"पाचनः शोधनीयश्च क्लेदनः शमनस्तथा। दीपनस्तर्पणः शोषः इति सप्तविधाः स्मृताः ॥ पाचनोऽर्द्धावशेषश्च शोधनो द्वादशांशकः। क्लेदनश्चतुरंशस्तु शमनोऽष्टांशको मतः ॥ दीपनस्तु षडंशश्च तर्पणः पञ्चमांशकः। शोषणः षोड़शांशश्च क्वाथभेदा इतीरिताः ॥" इति। किञ्च आत्रेयेणाप्युक्तं—"पाचनो दीपनीयश्च शोधनः शमनस्तथा। तर्पणः क्लेदनः शोषः क्वाथः सप्तविधो मतः ॥ पाचनः पच्यते दोषान् दीपनैर्दीप्यतेऽनलः। शोधनो मलशोधी स्यात् शमनः शमयेत् गदान् ॥ तर्पणस्तर्प्यते धातून् क्लेदी ह्युत्क्लेदकारकः। विशोषी शोषणादस्मै तस्मात् क्वाथान्

अथ स्वर्णशोधनम्।—

अथ पञ्चमृदा लिप्तं हेम्नः पत्रं पुटानले।

विपचेत्—"

अथ रौप्यशोधनम्।—

"—नागमावाप्य रूप्यस्योद्ग्राग्निना धमेत् ॥४॥

अथ ताम्रशोधनम्।—

स्नुह्यर्कक्षीरलवण-क्षाराम्लकृतलेपनम्।

तप्तताम्रस्य निर्गुण्ड्या रसे सिञ्चेत् पुनः पुनः ॥५॥

परीक्षयेत्॥ पाचनोऽष्टावशेषः स्यात् शोधनो द्वादशांशकः। क्लेदनश्चतुरंशश्च शमनो-ऽष्टावशेषितः॥ दीपनीयः षडंशस्तु तर्पणः पञ्चमांशकः। विशोषी षोडशांशश्च क्वाथभेदाः प्रकीर्त्तिताः॥" इति। अत्र दूषितरसदोषादिशोषणपूर्वकं नवयौवनस्य कान्त्यादि-सम्पादकत्वात् लौहादीनां रसायनानां, तदनुपाने विशोषिक्वाथः षोडशांशावशेषितः विहित इति मन्तव्यम्; यद्वा—षोडशांशावशेषितः इत्यत्र षोडश इति पदं समासान्तर्गतमपि पृथक्कृत्य षोडशगुणं जलं दत्त्वा अंशावशेषितः क्वाथ इति व्याख्या करणीया, एषा च व्याख्या तन्त्रानुसारिणी पानीयकषायेषु; यदुक्तं परिभाषायाम्—"दशरक्तिकमानेन गृहीत्वा तोलकद्वयम्। दत्त्वाऽम्भः षोडशगुणं ग्राह्यं पादा-वशेषितम्॥" इति। भावप्रकाशेऽप्युक्तं—"पादशिष्टः कषायः स्यात् यः षोडश-गुणाम्भसा॥" इति॥ ३॥

इदानीं स्वर्णादिलौहानां शोधनादिकं विवक्षुरादौ स्वर्णशोधनमाह, अथेति।—पञ्चमृदा "इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका। रसप्रयोगकुशलैः कीर्त्तिताः पञ्चमृत्तिकाः॥" इत्युक्तेन मृत्पञ्चकेन; सुसूक्ष्मस्वर्णपत्रं पञ्चमृत्तिकया आलिप्य पुटाग्नौ विपचेत्, एवं सुवर्णं विशुद्धं भवति। रसेन्द्रचिन्तामणावप्युक्तं—"वल्मीक-मृत्तिका धूमं गैरिकं चेष्टका पटुः। इत्येताः मृत्तिकाः पञ्च जम्बीरैरारनालकैः॥ पिष्ट्वा लेप्य स्वर्णपत्रं श्रेष्ठं पुटेन सिध्यति॥" इति। रौप्यशुद्धिमाह, नागमिति।—रूप्यं सूक्ष्मरौप्यपत्रं, नागं सीसकम् आवाप्य कल्कीकृत्य, पिष्टसीसकेन प्रलिप्य इत्यर्थः, उद्ग्राग्निना उपरिस्थेन वह्निना, भूधरपुटेनेत्यर्थः, तीक्ष्णाग्निनेत्यर्थः वा, धमेत् पचेदित्यर्थः॥ ४॥

ताम्रशोधनमाह, स्नुहीति।—तप्तताम्रस्य इत्यत्र पत्रमिति शेषः, स्नुह्यर्कक्षीरा-दिभिः ताम्रपत्रं लिप्त्वा प्रताप्य निर्गुण्डीरसे द्वादशवारान् निर्वापयेत्; तथा

अथ वङ्गनागयोः शोधनम्।—

वङ्गनागं रसे तस्मिंस्तन्मूलेनावचूर्णकम् ॥६॥

अथ कान्तलोहस्य लक्षणम्।—

यत्पात्राध्युषिते तोये तैलबिन्दुर्न सर्पति।
तारेणाऽऽवर्त्तते यत्तत् कान्तलोहन्तु तत् स्मृतम् ॥७॥

अथ कान्तलोहस्य शोधनम्।—

अयसामुत्तमं सिञ्चेत्तप्तं तप्तं वरारसे ॥८॥

---

च रसेन्द्रचिन्तामणिः.—"सुह्यर्कक्षीरलवण-काञ्जिकैस्ताम्रपत्रकम्। लिप्त्वा प्रताप्य निर्गुण्डीरसे सिञ्चेत् पुनः पुनः ॥ वारान् द्वादश तत् शुध्येत् लेपात् तापाच्च शोषणात् ॥" इति ॥ ५ ॥

वङ्गनागशोधनमाह, वङ्गनागमिति।—रसे तस्मिन् निर्गुण्डीरसे, निक्षिप्तमिति शेषः। तन्मूलेनावचूर्णकं निर्गुण्डीमूलचूर्णेन कृतावघर्षणं, निर्गुण्डीमूलचूर्णेन वङ्गनागपत्रे प्रलिप्य संशोष्य सन्ताप्य च निर्गुण्डीरसे सप्तधा सिञ्चेदिति ॥ ६ ॥

कान्तलोहस्य लक्षणमाह, यदिति।—यत्पात्राध्युषिते यस्य यल्लोहस्य पात्रे अध्युषितं स्थितं तस्मिन्। न सर्पति न विसरति, विस्तृतिं न भजते इत्यर्थः। तारेण रौप्येण द्रुतरौप्यपत्रेणेत्यर्थः, आवर्त्तते गलितं सत् मिश्रीभवतीत्यर्थः, यल्लोहपात्रस्थजले निक्षिप्तः तैलबिन्दुः न विस्तृतो भवति, यच्च लोहं रौप्येण सह द्रवीकृतम् एकीभवति तत् कान्तलोहम्; अन्यत्राप्युक्तं—"यत्पात्रे न प्रसरति जले तैलबिन्दुः प्रतप्ते हिङ्गुर्गन्धं त्यजति च निजं तिक्ततां निम्बकल्कः। तप्तं दुग्धं भवति शिखराकारकं नैति भूमिं कृष्णाङ्गः स्यात् सजलचणकः कान्तलोहं तदुक्तम् ॥" इति। अन्यच्च—"स्वादुर्यत्र भवेन्निम्बकल्को रात्रिन्दिवोषितः। कान्तं तदुत्तमं यच्च रूप्येणावर्त्तितं मिलत् ॥" इति ॥ ७ ॥

कान्तलोहस्य शोधनमाह, अयसामिति।—अयसामुत्तमं कान्तलोहम्। वरारसे त्रिफलाक्वाथे; क्वाथविधिश्च रसरत्नाकरे—"त्रिफलाऽष्टगुणे तोये त्रिफलाषोडशं पलम्। तत्क्वाथे पादशेषे तु लौहस्य पञ्चपञ्चकम् ॥ कृत्वा तप्तानि पत्राणि सप्तवारं निषेचयेत्। एवं प्रलीयते दोषो गिरिजो लौहसम्भवः ॥" इति ॥ ८ ॥

अथ धातूनां सामान्यमारणम्।—

एवं शुद्धानि लोहानि पिष्टान्यम्लेन केनचित्।
मृतसूतस्य पादेन प्रलिप्तानि पुटानले॥
पचेत्तुल्यस्य वा ताप्य-गन्धाश्महरतेजसः॥९॥

अथ स्वर्णमारणम्।—

अथवा मृतनागेन स्नुहीक्षीरेण काञ्चनम्॥१०॥

अथ रौप्यमारणम्।—

रूप्यं स्नुक्क्षीरताम्राभ्यां—"

अथ ताम्रमारणम्।—

"—ताम्रं मूत्राम्लगन्धकैः॥११॥

अथ वङ्गमारणम्।—

हरितालपलाशाभ्यां वङ्गं—"

---

सर्वेषां लोहानां सामान्यतो मारणमाह, एवमिति।—अम्लेन केनचित् जम्बीर-मातुलुङ्गादीनामम्लानां केनचिदम्लेन। मृतसूतस्य पादेन लोहाच्चतुर्थांशेन सूतभस्मना। मतान्तरमाह, तुल्यस्येति।—गन्धाश्मा गन्धकः। हरतेजः पारदः। अम्लपिष्टं लोहपत्रं तुल्यमानताप्यादित्रयेण लोहपादिकेन प्रलिप्य पुटानले पचेदिति॥ ९॥

अथ प्रत्येकधातूनां पृथक् पृथक् मारणं विवक्षुरादौ स्वर्णमारणमाह, अथवेति।—अत्र अथवाशब्दः सामान्यमारणापेक्षया बोद्धव्यः। मृतसीसकं स्नुहीक्षीरैः पिष्ट्वा तेन स्वर्णपत्रमालिप्य गजपुटे पचेत्। अत्र तन्त्रान्तरदर्शनात् वक्ष्यमाणा क्रियाऽपि कार्या—उक्तरीत्या पुटितं स्वर्णपत्रम् उद्धृत्य अष्टमांशमृतनागेन सह अम्लद्रवैः पिष्ट्वा ऊर्ध्वाधः सीसकचूर्णं दत्त्वा च अष्टधा पचेत्; यदुक्तं रसरत्नाकरे—"मृतं नागं स्नुहीक्षीरैरथवाऽम्लेन केनचित्। पिष्ट्वा लिप्यं स्वर्णपत्रं रुद्ध्वा गजपुटे पचेत्॥ आदाय पेषयेदम्लैर्नागस्याष्टमांशकम्। रुद्ध्वा गजपुटे पश्चात् पूर्वनागयुतं पुतम्॥ एवं पुनः पुनः पश्चादष्टधा म्रियते ध्रुवम्॥" इति॥ १०॥

रौप्यमारणमाह, रूप्यमिति।—मृतताम्रं स्नुहीक्षीरेण पिष्ट्वा तेन रौप्यपत्र-मालिप्य गजपुटे पचेत्। ताम्रमारणमाह, ताम्रमिति।—मूत्रं गोमूत्रम्। अम्लं काञ्जिकम्॥ ११॥

वङ्गमारणमाह, हरितालेति।—पलाशः पलाशस्वरसः; पलाशरसेन हरितालं

अथ सीसकमारणम्।—

"—नागं मनोह्वया ॥१२॥

अथ वङ्गस्य मारणान्तरम्।—

पारिभद्रस्य च रसेनाथवा भर्जयेत्त्रपु ॥१३॥

अथ सीसकस्य मारणान्तरम्।—

चिञ्चाचार्भिक्षुवीरद्रु-बोधिवृक्षैरहिं पुनः।

अहिमाराह्विदमनो-वासावज्रलतार्जुनैः ॥१४॥

पिष्ट्वा तेन वङ्गपत्रं प्रलिप्य पुटं दद्यात्। यदुक्तं योगरत्नाकरे—"पलाशद्रवयुक्तेन वङ्गपत्राणि लेपयेत्। तालेन पुटितं भस्म विशारं जायते ध्रुवम् ॥" इति। क्वचित् हरितालेन सह माक्षिकयोगोऽपि दृश्यते; तथा च रसरत्नाकरे—"माक्षिकं हरितालञ्च पलाशस्वरसेन च। कृतकल्केन संलिप्य वङ्गपत्राणि मारयेत् ॥" इति। सीसकमारणमाह, नागमिति।—मनोह्वया मनःशिलया। जलेन मनःशिलां पिष्ट्वा तेन सीसकमालिप्य यावता पुटेन भस्मतां याति तावत् पुटेत्। क्वचित् वासापत्ररसेन ताम्बूलीपत्ररसेन वा मनःशिलां पिष्ट्वा तेन कल्केन नागपत्रं प्रलिप्य त्रिपुटेन द्वात्रिंशत्पुटेन वा नागमारणं कार्य्यमिति दृश्यते, तथा च मारकौमुद्या—"मनःशिलायुतो नागः वासारसविमर्दितः। त्रिभिर्गजपुटैर्भस्म भवेत्सर्वरोगजित् ॥" इति। तथा योगरत्नाकरे—"ताम्बूलीरससम्पिष्ट-शिलालेपात् पुनः पुनः। द्वात्रिंशद्भिः पुटैर्नागो निरुत्थो जायते ध्रुवम् ॥" इति ॥ १२ ॥

वङ्गस्य मारणान्तरमाह, पारिभद्रस्येति।—त्रपु वङ्गम्। पारिभद्रस्य रसं दत्त्वा दत्त्वा वङ्गं लौहकटाहे भस्मतां यावत् लौहदण्डेन सञ्चाल्य पचेदिति ॥ १३ ॥

सीसकस्य मारणान्तरमाह, चिञ्चेति।—चिञ्चा तिन्तिडी, अम्लात्वक्। अक्षः विभीतकः। भिक्षुः श्रावणी। वीरद्रुः वीरतरुः, भल्लातः इत्यन्ये; तन्त्रान्तरे "भल्लात" इति पाठदर्शनात्। बोधिवृक्षः अश्वत्थः। अहिं सीसकम्। अहिमारः विट्खदिरः। अहिदमनी नागदमनी। वज्रलता अस्थिसंहारः। अत्रोक्ते "अहिमाराह्विदमनीवासा" इत्यत्र रसरत्नाकरे "बलापामार्ग" इति पाठान्तरम्; तथा च—"चिञ्चाऽश्वभिक्षु-भल्लात-बलावज्रलताभवैः। अपामार्गार्जुनाश्वत्थ-भस्मभिर्भर्जयेद्दृढम् ॥ लौहपात्रे च सप्ताहं तुल्यं भस्मानि चायु च। दण्डे पलाशके चैव म्रियते नात्र संशयः ॥" इति। सीसकं लौहकटाहे द्रावयित्वा चिञ्चादिभस्म क्रमात् तत्र प्रक्षिप्य च पलाशदण्डेनालोड्यालोड्य भस्मीकुर्य्यादिति ॥ १४ ॥

अथ लोहमारणम्।—

स्रोतोऽन्ये हिङ्गुलेनाथ: पचेल्लिप्त्वा पुटेऽनले ॥१५॥

अथ असम्यङ्मारितलोहस्य लक्षणम्।—

सर्वमेव मृतं लोहं सोत्थानं यदि सेवनात्।
शूकवर्णाभकण्ठत्वक्-स्फोटारुचिविबन्धकृत् ॥१६॥

अथ निरुत्थलोहस्य लक्षणम्।—

पक्वं यावन्निरुत्थानं सेव्यं वारितरं हि तत् ॥१७॥

अथ निरुत्थलोहस्य परीक्षा।—

कान्ते पुनः कलाभाग-ताप्ये सक्षौद्रसर्पिषि।
क्षिप्तमावर्त्तितं तारं स्वप्रमाणं भवेद्यदि ॥
जानीयात्तन्निरुत्थानं—" ॥ १८ ॥

लोहमारणमाह, स्रोत इति।—हिङ्गुलं मानुषीदुग्धेन पिष्ट्वा तेन लोहपत्रीमालिप्य पुटपाकेन पचेत्। रसरत्नाकरे तु हिङ्गुललोहयोर्मानं तथा त्रिफलाक्वाथादिनाऽपि मर्दनमुक्तं, तथा च—"हिङ्गुलस्य पलान् पञ्च नारीस्तन्येन पेषयेत्। तेन लोहस्य पत्राणि लेपयेत् पलपञ्चकम् ॥ कृत्वा गजपुटे पश्चात् कषायैस्त्रैफलैः पुनः। अम्लैर्वारनालैर्वा विंशत्यंशेन हिङ्गुलम् ॥ पिष्ट्वा कृत्वा पुटेल्लोहं तथैव पाचयेत् पुनः। चत्वारिंशत्पुटैरेवं कान्त तीक्ष्णञ्च मुण्डकम् ॥ म्रियते नात्र सन्देहः दत्त्वा दत्त्वा च हिङ्गुलम् ॥" इति ॥ १५ ॥

असम्यङ्मृतस्य लोहस्य लक्षणमाह, सर्वमिति।—सर्वमेव अष्टविधमेवेत्यर्थः, मृतं लोहं सेवनात् यदि शूकवर्णाभकण्ठादिकृत् शूकवर्णाभकण्ठः शूकस्य जलशूकस्य वर्णः कृष्णवर्ण इत्यर्थः, स इव आभा यस्य तादृशः कण्ठः तदादिकृत्, भवेदिति शेषः, तदा तत् सोत्थानम् अनिरुत्थमसितम् इति ज्ञेयम ॥ १६ ॥

निरुत्थलोहस्य लक्षणमाह, पक्वमिति।—पक्वं मृतं लोहं यावत् यदा वारितरं वारिणि जले तरतीति तादृशं जले प्लवमानं, भवेत् इति शेषः, तदा निरुत्थानम् इति ज्ञेयं, तत तादृशनिरुत्थलोहं, सेव्यम् ॥ १७ ॥

निरुत्थलोहस्य परीक्षामाह, कान्ते इति।—कलाभागताप्ये कलाभागं षोडशांशं ताप्यं स्वर्णमाक्षिकं यत्र तादृशे। आवर्त्तितं द्रवीकृतम्। स्वप्रमाणं तारप्रमाणम्; षोडशांशस्वर्णमाक्षिकेण तुल्यक्षौद्रसर्पिषा च मिश्रिते कान्तलोहभस्मनि किञ्चित् रौप्यद्रावं निक्षिपेत्, कियदन्तरे तं द्रावं लोहात् पृथक्कृत्य तुलितं यदि तत्प्रमाणमेव तिष्ठेत्

अथ अनिरुत्थलौहस्य पुनर्मारणम्।—

"—सोत्थानञ्च मुहुर्मुहुः।

त्रिफलाक्वाथसम्पृक्तं विपचेत् पुटपावके ॥१९॥

अथ प्रथम द्वितीयलौहकल्पौ।—

हेम्नो रूप्यस्य वा भस्म वरीभृङ्गाम्बुभावितम्।

गुञ्जाप्रमाणं त्रिफला-सितामध्वाज्यमिश्रितम् ॥

वृष्यं वृष्यमायुष्यं कामलापाण्डुकुष्ठजित् ॥२०॥

अथ तृतीयलौहकल्पः।—

गन्धकेन समांशेन प्राग्वत्ताम्रञ्च मारितम्।

धान्याभ्रकञ्च तुल्यञ्च दशनिष्कं पृथक् पृथक् ॥२१॥

भावितं मातुलुङ्गाम्लेनाऽऽर्द्रकस्य रसेन च।

ताम्रं सोष्णोदकं गुल्म-प्लीहशूलामवातजित् ॥२२॥

---

नाधिकं न वा हीनमात्रं भवेत्, तदा तल्लौहं निरुत्थमिति ज्ञातव्यमिति। रसरत्नाकरे तु तात्प्रयोगं विनैव परीक्षाविधिरयं परिदृश्यते; तथा च—"मध्वाज्यमृतलौहस्य सरूप्यं सम्पुटे पचेत्। यद्याऽऽसाद्य तु सङ्ख्यां रूप्यञ्च पूर्वमानकम् ॥ तदा लौहं मृतं विद्यादमृतं मारयेत् पुनः ॥" इति ॥ १८ ॥

सोत्थानस्य पुनर्मारणप्रकारमाह, सोत्थानमिति।—सोत्थानम् अनिरुत्थं लौहं मुहुर्मुहुः बहुशः, निरुत्थं यावत्, त्रिफलाक्वाथसम्पृक्तं त्रिफलाक्वाथेन पिष्टा इत्यर्थः ॥ १९ ॥

प्रथम द्वितीयलौहकल्पद्वयमाह, हेम्न इति।—वरीभृङ्गाम्बुभावितं शतावरीभृङ्गराजयोः रसाभ्यां सप्तधा मर्दितम्। गुञ्जाप्रमाणमिति भस्म इत्यनेन सम्बध्यते ॥ २० ॥

तृतीयलौहकल्पमाह, गन्धकेनेति।—प्राग्वत् पूर्ववत् "एवं शुद्धानि लौहानि" इत्यादिप्रदर्शितसरण्या, मूत्राम्लगन्धकैर्वा; शोधिततामपत्रम् अम्लेन पिष्टा मृतसूतपादेन लिम्पेत्, ततः ताम्रतुल्यं गन्धकम् ऊर्द्धाधो दत्त्वा पुटाग्नौ पचेत्, अथवा ताम्रतुल्यं गन्धकं मूत्राम्लाभ्यां पिष्टा तत्कल्केन ताम्रपत्रं प्रलिप्य च पचेत् इत्यर्थः; ततः तत् ताम्रभस्म धान्याभ्रकं तुल्यञ्च प्रत्येकं दशनिष्कं गृहीत्वा मातुलुङ्गरसेनार्द्रकरसेन च सप्तधा विभाव्य उष्णोदकेन गुल्मादिषु योजयेदिति। योगेऽस्मिन् ताम्रेण सह तुल्याभ्रयोः संयोगे सत्यपि "ताम्रं सोष्णोदकम्" इत्यनेन यत् केवलं ताम्रमिति कृतं, तत्

अथ ताम्रद्रुतिसंज्ञकः चतुर्थलौहकल्पः ।—

आर्द्रालकुचभृङ्गाणां रसपिष्टेन कस्यचित् ।
गन्धकेन समांशेन प्राग्वत्ताम्रञ्च मारितम् ॥२३॥
कञ्चुकस्थमिह त्रिंशत्कर्षं चूर्णितगन्धकम् ।
दत्त्वाऽल्पशोऽग्निनाऽल्पेन दत्त्वा धूमं विसर्जयेत् ॥२४॥
प्रस्थाम्बुमर्दितस्यास्य प्रसादान्निःसृतं युतम् ।
तुत्थनीलशिलाजाभ्यां कर्षांशाभ्यां विशोषयेत् ॥२५॥
ताम्रद्रुतिरियं साज्य-मानुषोत्थोरसान्विता ।
काचार्मपिल्लाभिष्यन्द-व्रणशुक्रगतिप्रणुत् ॥
तत् किट्टं दद्रुकिटिम-पामादौ लेपनाज्जयेत् ॥२६॥

ताम्रस्य प्राथम्येन उक्तत्वात् तस्यैव प्राधान्याच्च । किं वा "गन्धकेन" इत्यारभ्य "पृथक् पृथक्" इत्यन्तेन एको योगः, "भावितम्" इत्यादिना च द्वितीयो योगः; ततश्च समांशेन गन्धकेन मारितं ताम्रं धान्याभ्रं तुत्थञ्च यथानिर्दिष्टं गृहीत्वा प्राग्वत् पूर्वयोगवत् गुञ्जामात्रमेतत् चूर्णं त्रिफलादिभिः सह खादेत्, तच्चूर्णं बृंहणादिगुणवत् भवेदिति ; तथा केवलं ताम्रभस्म मातुलुङ्गार्द्रकरसाभ्यां सप्तधा भावयित्वा उष्णाम्बुना पिबेत्, तत् गुल्मादिनाशनं भवेदिति ॥ २१।२२ ॥

ताम्रद्रुतिसंज्ञकं चतुर्थलौहकल्पमाह, आर्द्रेति ।—आर्द्रा आर्द्रकः । लकुचः डहुः । कञ्चुकस्थं कञ्चुकाकारलौहभाजनस्थम् ; "कञ्चुकस्थम्" इत्यत्र "कन्दुकस्थम्" इति पाठकल्पनं साधु; कन्दुकस्थं लौहभाजनस्थम् । त्रिंशत्कर्षम् इति पदं ताम्रम् इत्यनेन सम्बध्यते । धूमं गन्धधूमम् । प्रस्थाम्बुमर्दितस्यास्य प्रसादान्निःसृतं प्रस्थप्रमाणजलेन सह मर्दितस्य अस्य ताम्रस्य प्रसादात् स्वच्छरूपतया निःसृतं, जलमिति शेषः । "प्रसादात्" इत्यत्र "प्रदानात्" इति पाठे—प्रदानात् परित्यागादित्यर्थः, "त्यागो विहापनं दानम्" इत्यादामरः । तुत्थनीलशिलाजाभ्यां तुत्थं तथा नीलशिला नीलमणिः, यद्वा—तुत्थनीलं नीलतुत्थं नीलवर्णतुत्थविशेषः, शिला मनःशिला, अप्राप्यत्वात्, तज्जाभ्यां, चूर्णाभ्यामिति शेषः, कर्षांशाभ्यां युतम् । तत् किट्टं किट्टरूपं ताम्रं, जलेन सह मर्दनात् अधःपतितः असारभागः । अयमर्थः,—ताम्रतुल्यं गन्धकम् आर्द्रादीनामेकतमरसेन पिष्ट्वा तेन ताम्रपत्रं विलिप्य च पुटानलैः पचेत्, ततः तत् पुटपक्वं ताम्रं त्रिंशत्कर्षं लौहभाजने वह्नौ तुल्यगन्धक-

अथ पञ्चमलौहकल्पः।—

मारितं त्रपु सीसं वा हारिणं शृङ्गमाङ्कोलौ।
कार्पासवासितं तक्रं माहिषञ्च प्रमेहजित्॥२७॥

अथ षष्ठलौहकल्पः।—

नवनवतिस्त्रिफलाया मृतस्य नागस्य शततमो भागः।
दार्व्याङ्कोलीफलत्रयकनकजलप्रस्थपेषितं निखिलम्॥२८॥

अल्पमल्पं दत्त्वा दत्त्वा पचेत्, ततः गृहधूमं दत्त्वा तथैव पचेत्, अथ तत् जलेन प्रवर्धमानेन सह गाढं मर्दयित्वा स्थापयेत्, ततः उपरिस्थस्वच्छजलं विस्राव्य जले तस्मिन् कर्षमात्रं तुत्थादिद्वयं दत्त्वा आतपे शोषयेत्, इत्थं निष्पन्नामिमां तास्रद्रुतिम् आम्यादिभिः सह पिष्ट्वा चतुर्गुणे योजयेत्। अत्राधःस्थितं किट्टञ्च दद्रुकिटिमादिषु लेपयेदिति॥ २३—२६॥

पञ्चमलौहकल्पमाह, मारितमिति।—त्रपु वङ्गम। सीसं वा इत्यत्र वा शब्दश्चार्थे, त्रपु सीसञ्च। आङ्कोलौ अङ्कोलं तस्य बीजम्; रसरत्नाकरे "आकुली" इत्यत्र "अङ्कोलबीजकम्" इति पाठदर्शनात्। क्वचित्तु प्रमेहनाशनयोगान्तरे—"आकुली-मुकुलम्" इति पाठदर्शनात् आम्रमुकुलस्य च मेहनाशित्वश्रुतेः आकुलीशब्देन आम्र-मुकुलग्रहणमपि नासङ्गतमित्यस्मद्गुरवः; तथा च योगरत्नाकरे प्रमेहचिकित्सायाम्-आकुल्यादियोगः,—"आकुलीमुकुलं धात्री-हरिद्रामधुना लिहेत्। विंशतिञ्च प्रमेहाणां हन्ति सद्यो न संशयः॥" इति। "आम्रपुष्पमतीसारकफपित्तप्रमेहघ्नं रक्तदुष्टिहरं शीतं वातलञ्च" इति। कार्पासवासितं कार्पासपुष्पेण कृताधिवासनं, तच्च तक्रमध्ये कार्पासपुष्पं संस्थाप्य कार्य्यम्; "कार्पासवासितम्" इत्यत्र "कार्पासबीजमज्जा" इति पाठान्तरम्; "कार्पासपेषितम्" इति पाठे—कार्पासबीजमज्जा इत्यर्थः। त्रपुादिचतुष्टयं कार्पासवासितमाहिषतक्रेण पिष्ट्वा पिबेदिति। योगोऽयं रसरत्नाकरे "मृगमालारसः" इति नाम्ना पठितः; तथा च—"मारितं त्रपुकं सीसं मृदङ्गं मृगशृङ्गकम्। कार्पासबीजमज्जा च तुल्यमङ्कोलबीजकम्॥ पेषयेन्माहिषीतक्रैः दिनैकं वटकीकृतम्। माषद्वयं सदा खादेत् मृगमाला प्रमेहजित्॥ अनुपानेऽस्य दार्वी-कषायमनुपाययेत्॥" इति॥ २७॥

षष्ठलौहकल्पमाह, नवेति।—शततमो भागः नवनवत्यपेक्षया शतानां पूरणः; तेन च त्रिफलायाः प्रत्येकं त्रयस्त्रिंशद्भागाः नागस्य च एको भागः। कनकः

शतगुलिकाप्रमितं तत् पीतं तक्रेण मेहहरम् ।
पिबतः कषायमभया-दार्व्यक्षसमांशपाठायाः ॥२९॥

अथ सप्तमलोहकल्पः ।—

कृष्णलोहेन योक्तव्यो बालेनोपचितो हि सः ।
कुमारयूनमध्ये तु वरमध्यावरे क्रमात् ॥
एकद्वित्रिगुणात् कालादुपयुक्तं गुणावहम् ॥३०॥

अथ शूले अष्टमलोहकल्पः ।—

एरण्डवह्निशम्बूक-वर्षाभूव्योषसैन्धवम् ।
अन्तर्धूमं विदग्धायश्चूर्णं सोष्णाम्बु शूलजित् ॥३१॥

---

धुस्तूरः ; दार्व्यादीनां जलप्रस्थेन क्वाथप्रस्थेन पेषितं, अर्थात् दार्व्यादिषड्द्रव्यं चतुःप्रस्थजलेन निःक्वाथ्य प्रस्थावशेषं कृत्वा च तेन त्रिफलाभागौ मर्दयेत् । शतगुलिकाप्रमितं वयःकोष्ठाद्यनुसारिणीं मात्रां स्थिरीकृत्य प्रतिदिनमेकैकां गुलिकां तक्रेण खादेत्, एवं शतसङ्ख्यकगुडिकासेवने कृते मेहो नश्यति । अभयेति ।—अक्षः विभीतकः ; अभयादार्व्यक्षैः समः त्रिभिस्तुल्यः अंशो यस्यास्तादृशी पाठा तस्याः, तेन च अभयादीनामेको भागः पाठायाश्चापरः ; औषधसेवनादनु अभयादिकषायं पिबेदित्यर्थः ॥ २८।२९ ॥

सप्तमलोहकल्पमाह, कृष्णेति ।—बालेन मृदुना इत्यर्थः, मृदुपाकेनेति यावत्, कृष्णलोहेन सह उपचितः सम्पन्नः प्रकृष्टगुणः सः नवनवतिरित्यादिनोक्तः नागयोगः योक्तव्यः । "कुमार······गुणावहम्" इत्यत्र "कुमारयूनोर्मध्ये तु वरो मध्योऽवरः क्रमात् । एकद्वित्रिगुणात् कालादुपयुक्तो गुणावहः" इति पाठकल्पना सुगमा ; अत्र तु शब्दार्थौ ; कुमारे यूनि मध्ये मध्यवयसि च पुंसि बालेन कृष्णलोहेन उपचितः सः योक्तव्यः, तथा एकद्वित्रिगुणात् कालात् एकदिनानन्तरं दिनद्वयानन्तरं त्र्यहानन्तरञ्च उपयुक्तः सेवितः गुणावहः, भवेदिति शेषः ; वरो मध्योऽवरः क्रमात् उक्तदिशा एकाहाद्यनन्तरम् उपयुक्तः स क्रमात् वरः मध्यः अवरश्च गुणो भवति, एकाहानन्तरं प्रयोगः वरगुणसम्पन्नः, दिनद्वयानन्तरं प्रयोगः मध्यगुणसम्पन्नः, त्रिदिनानन्तरं प्रयोगस्तु अवरगुणसम्पन्नो भवतीत्यर्थः ॥ ३० ॥

अष्टमलोहकल्पमाह, एरण्डेति ।—"अन्तर्धूमं विदग्धायश्चूर्णम्" इत्यत्र "अन्तर्धूमविदग्धायाश्चूर्णम्" इति तु अपपाठः, लोहयोगाभावे लोहकल्पेति नामवैयर्थ्यात् ;

अथ जीर्णज्वरादौ नवमलौहकल्पः ।—

त्रिफलामृतनिर्गुण्डी-मेघनादपुनर्नवा ।
कासमर्दालिधुस्तूर-वज्रिणीनां रसैरिदम् ॥३२॥
भावितं गुड़मध्वाज्यैर्जलतक्रानुपायिनः ।
स्वल्पक्षीररसाशस्य हन्याज्जीर्णज्वरं क्षयम् ॥
कुष्ठास्यस्रावपाण्डुघ्नः-पक्तिशूलप्लिहामयान् ॥३३॥

अथ क्षयादौ दशमलौहकल्पः ।—

वाकुचीनिम्बपञ्चाङ्गं वेल्लचित्रकवत्सकम् ।
पथ्यानागरशम्पाक-गुड़ूचीकटुकीफलम् ॥३४॥

---

ननु "एरण्डवह्निशम्बूक-वर्षाभूगोक्षुरं समम्। अन्तर्दग्ध्वा पिबेदम्लकषायाभिः शूल-शान्तये॥" इत्येव किञ्चित् परिवर्त्तिततया वङ्गसेनादिना पठितेऽस्मिन् योगे लौहप्रयोगाभावात् "अन्तर्धूमविदग्धायाश्चूर्णम्" इत्येव साधुः इति न वाच्यम्; यतः "व्योषकैस्त्रयम्" इत्यत्रोक्तपाठस्थले वङ्गसेनादौ "गोक्षुरं समम्" इति पाठान्तरदर्शनात् योगान्तरोऽयमिति मन्तव्यम्, किञ्च "अन्तर्धूमविदग्धाया-श्चूर्णम्" इति प्रयोगस्य असाधुत्वात् प्रकरणविरुद्धत्वाच्च प्रकरणसङ्गतम् "अन्तर्धूमं विदग्धायश्चूर्णम्" इत्येव भवितुमर्हति। "अन्तर्धूमविदग्धन्तु" इति क्वाचित्कपाठोऽपि न मनोरमः, लौहयोगाभावे लौहकल्पनिरूपणम् इति संज्ञावैयर्थ्यात्। एरण्डादिकमयश्चूर्णञ्च अन्तर्धूमं दग्ध्वा साम्लाम्बु पिबेत्, तच्च शूलार्त्तादीति निष्कर्षः ॥ ३१ ॥

नवमलौहकल्पमाह, त्रिफलेति।—मेघनादः तण्डुलीयकः। आलिः वृश्चिकपर्णी। वज्रिणी स्नुही। इदम् अयश्चूर्णसहितम् एरण्डादिचूर्णम्। "स्वल्पक्षीररसाशस्य" इत्यत्र "स्वल्पक्षीररसांशस्य" इति पाठः न साधुः। अयश्चूर्णसहितम् एरण्डादिचूर्णं त्रिफलादीनां यथायोग्यं रसेन क्वाथेन वा पृथक् पृथक् सप्तधा भावयित्वा गुडमध्वाज्यैः सह पिबेत्, सजलं तक्रञ्चानुपानं कुर्य्यात्, स्वल्पेन क्षीरेण मांसरसेन वा तदा अश्नीयादिति ॥ ३२।३३ ॥

दशमलौहकल्पमाह, वाकुचीति।—वाकुची सोमराजी। निम्बपञ्चाङ्गं निम्बस्य त्वक्पत्रपुष्पफलमूलरूपम्। वेल्लं विड़ङ्गम्। वत्सकम् इन्द्रयवः। शम्पाकः

खदिरासनसारेण भावितं लोहभस्म च ।
कर्षमात्रं समध्वाज्यं क्षयकुष्ठनिषूदनम् ॥३५॥

अथ विविधरोगे एकादशलोहकल्पः ।—

गुडस्य कुडवे पक्वं लोहभस्म पलोन्मितम् ।
कोलप्रमाणं रोगेषु तैस्तैर्योगैः प्रयोजयेत् ॥३६॥

अथ यक्ष्मादौ द्वादशलोहकल्पः ।—

व्योषादिनवकस्यांशस्त्र्यंशोऽशो लोहभस्मनः ।
अंशोऽश्मजतुनः खण्डस्याष्टौ सर्वं समाक्षिकम् ॥
कान्तपात्रगतं यक्ष्म-ज्वरापस्मारघस्मरम् ॥३७॥

अथ जरादौ त्रयोदश-चतुर्दशलोहकल्पौ ।—

निम्बसारत्रिमधुर-त्रिफलालोहगन्धकम् ।
चूर्णमर्जुनपत्रा वा सभृङ्गत्रिफलायसम् ॥
सेवितं मधुसर्पिर्भ्यां जरावैरूप्यनाशनम् ॥३८॥

---

आरग्वधः । फल मदनफलम् । खदिरासनसारेण खदिरासनयोरष्टमांशक्वाथेन, तत्र असनः स्वनामख्यातः । भावितमिति सप्तधा । खदिरासनक्वाथेन भावितं वाकुच्यादिचूर्णं कर्षं घृतमधुभ्यां लिह्यादिति ॥ ३४-३५ ॥

एकादशलोहकल्पमाह, गुडस्येति ।—तैस्तैर्योगैः तत्तद्रोगनाशकैः द्रव्यैः । गुड-कुडवं यथाविधि पक्त्वा तत्र लोहपलं प्रक्षिप्य च कोलमानां गुडिकां कुर्यात्, ततः तत्तद्रोगनाशनानुपानेन सर्वरोगेषु प्रयोजयेदिति ॥ ३६ ॥

द्वादशलोहकल्पमाह, व्योषेति ।—व्योषादिनवकस्य त्रिकत्रयस्य, "व्योषं शतावरी त्रीणि फलानि द्वे बले तथा" इत्यनेन चक्रदत्तीययक्ष्माधिकारे विन्ध्यवासियोगोक्तस्य वा अंशः मिलित्वैको भागः । खण्डस्य मत्स्यण्डिकायाः अष्टौ इत्यत्र भागाः इति शेषः ; व्योषादिनवद्रव्याणां मिलितानामेको भागः, लोहाश्मजतुनोः प्रत्येकमेको भागः, खण्डस्य चाष्टौ भागाः, सर्वमेतदेकीकृत्य कान्तलोहभाजने मधुना सह सम्मर्द्य च स्थापयेत्, ततः अग्निबलानुसारिणीं मात्रां खादेदिति ॥ ३७ ॥

त्रयोदश-चतुर्दशलोहकल्पद्वयमाह, निम्बेति ।—त्रिमधुरं "घृतं गुडो माक्षिकञ्च विज्ञेयं मधुरत्रयम्" इत्युक्तमधुरत्रयम् । अर्जुनपत्राः अर्जुनस्य कोमलपत्रस्येत्यर्थः । सभृङ्गत्रिफलायसं भृङ्गराजत्रिफलालोहचूर्णसंयुक्तम् । मधुसर्पिर्भ्यामिति पदं चूर्ण-

अथ अम्लपित्तादौ पञ्चदशलौहकल्पः ।—

मधुकं मृतलौहञ्च धात्री च त्रिगुणोत्तरम् ।
रसेन भावितं छिन्नरुहायाः साज्यमाक्षिकम् ॥३९॥
सेवितं भोजनस्याऽऽदौ वातपित्तामयान् जयेत् ।
मध्ये विष्टम्भमन्तेऽम्ल-पित्तं शूलञ्च पक्तिजम् ॥४०॥

अथ ग्रहण्यादौ षोडशलौहकल्पः ।—

भल्लातकसहस्राभ्यां त्रिफलामुस्तचित्रकैः ।
हस्तिपिप्पल्यपामार्ग-सहदेवीकुठेरकैः ॥४१॥
कणामूलामृताचव्यैर्द्रोणेऽपां कुडवोन्मितैः ।
पक्वे पादस्थे लोहस्थे तुलार्द्धं तोल्यालोहतः ॥४२॥
माणिकाञ्च घृतात् पक्त्वा विडङ्गं चित्रकत्वचम् ।
त्रिफला पञ्चलवणं त्र्यूषणञ्च पृथक् पलम् ॥४३॥

---

लिप्तेन सम्बध्यते; एवञ्च निम्बादिगन्धकान्तचूर्णम् अर्जुनपत्रादीनां वा चूर्णं मधुसर्पिर्भ्यां लिह्यादिति ॥ ॥ ३८ ॥

पञ्चदशलौहकल्पमाह, मधुकमिति ।—त्रिगुणोत्तरम् उत्तरोत्तरत्रिगुणम्; ततश्च मधुकस्य एको भागः, लौहस्य भागत्रयं, धात्र्याश्च नवभागाः। छिन्नरुहायाः गुडूच्याः। मध्ये भोजनमध्ये। "विष्टम्भम्" इत्यत्र "प्रविष्टम्" इति पाठस्तु असाधुः, सिद्धयोगे तथा पाठदर्शनात् प्रविष्टमिति पदस्य अर्थसङ्गतिविरहाच्च। अन्ते भोजनान्ते। पक्तिजं शूलं परिणामशूलम्। सिद्धयोगे तु योगोऽयं "धात्री-लौहम्" इत्याख्यया मधुकादीनां त्रिगुणोत्तरकल्पनाकल्पितो दृश्यते; तथा च— "धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य। यष्टीमधुकरजश्च दद्याद्द्विपलं पटे घृष्टम् ॥ अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ॥" इत्यादि। अत्र "अमृताक्वाथेन आमलकीक्वाथेन" इति शिवदासव्याख्या ॥ ३९।४० ॥

षोडशलौहकल्पमाह, भल्लातकेति ।—भल्लातकसहस्राभ्यां द्विसहस्रभल्लातक-गुडकेन। सहदेवी दण्डोत्पला; "सहदेवी" इत्यत्र "दण्डोत्पला" इति सिद्धयोगे पाठः। कुठेरकः तुलसी। माणिकां शरावम्; "माणिकाम्" इत्यत्र "कुडवद्वयम्" इति पाठः सिद्धयोगे दृश्यते; शिवदासस्तु तत्र कुडवस्य द्वैगुण्यं स्वीकृत्य

पलानि शूरणस्याष्टौ वाराह्या वृद्धदारकात् ।
चतुष्पलं पुष्करसस्यार्द्धप्रस्थञ्च निक्षिपेत् ॥४४॥
प्रातर्भोजनकाले वा लीढमेतद्रसायनम् ।
निहन्ति च ग्रहण्यर्शः-शूलगुल्मक्रिमिक्षयान् ॥४५॥

अथ क्षयादौ खण्डखाद्याख्यसप्तदशलौहकल्पः ।—

वासाभार्ग्यमृताऽभीरु-वचाखदिरपुष्करैः ।
मुषलीभिक्षुकोरण्टैः सूर्पे चापाञ्च मुष्टिकैः ॥४६॥
पक्वेऽष्टशिष्टे ताम्रस्थे प्रस्थांशे खण्डसर्पिषी ।
ताप्येन रुक्मलौहस्य हतस्याप्यञ्जलित्रयम् ॥४७॥

कुडवद्वयशब्देन षोडशपलमिति व्याख्याततराम् ; अत्र तु माणिका-ग्रहणात् द्वैगुण्या-भाव एव बोद्धव्यः ; "न द्वैगुण्यं तुलामाने माणिकायां तथैव च । पलाल्लिखितगते माने न द्वैगुण्यं निहिष्यते ॥" इति परिभाषास्मरणात् । कुडवद्वैगुण्यस्य तु सर्वसम्मत-त्वाभावात् अत द्वैगुण्याभावः ग्रन्थकृत्सम्मतः इति बोद्धव्यम् । "पञ्चलवणम्" इत्यत्र सामुद्रोल्लिखितादर्शनात् लवणचतुष्टयं तथा "वाराह्याः" इत्यत्र "तालमूल्या." इति सिद्धयोगसम्मतः पाठः । पुष्करसस्य मधुनः अर्द्धप्रस्थं द्रवद्वैगुण्यात् शरावद्वयम् । भल्लातकादिचव्यान्तमौषधजातं पृथक् पृथक् कुडवमानं जलद्रोणे पक्त्वा पादशेषम् अवतारयेत्, ततः वस्त्रपूतं तं क्वाथं लौहकटाहे तीक्ष्णलौहाज्याभ्यां पचेत्, आसन्न-पाके च विडङ्गादीनां चूर्णं प्रक्षिप्य अवतार्य्य च शीते मधु प्रक्षिपेदिति । योगश्चायं "भल्लातकलौहः" इत्याख्या वर्ग्याश्रिकीर्त्तिते सिद्धयोगे चक्रदत्ते च ॥ ४१—४५ ॥

खण्डखाद्याख्यसप्तदशलौहकल्पमाह, वासेति ।—कल्पोऽयं "खण्डकाद्यं लौहम्" इति नाम्ना सिद्धयोगादौ प्रसिद्धम् । अभीरुः शतावरी । "वचा" इत्यत्र "बला" इति सिद्धयोगे पाठः । मुषली तालमूली । भिक्षुः मुण्डितिका ; "भिक्षुः" इत्यत्र "मुण्डितिका" इति सिद्धयोगे पाठः । कोरण्टं कुरण्टस्य सहचरस्य इदं झिण्टीमूलमित्यर्थः ; "कोरण्टै." इत्यत्र "त्रिफलायास्त्वचः" इति सिद्धयोगे पाठः । सूर्पे चापां जलद्रोणद्वये ; "जलद्रोणे" इति सिद्धयोगोक्तः पाठः साधुः, सूर्पपाठपक्षे द्रवबाहुल्यात् । मुष्टिकैः पलप्रमाणैः, वासादिभिः मुषल्यादिभिश्च सम्बध्यते ; "पञ्चपलानि" इति उक्तग्रन्थे पाठः । अष्टशिष्टे अष्टभागावशिष्टे । ताम्रस्थे ताम्र-

पक्वेऽस्मिन् हृते याते कुस्तुम्बुरु शिलाजतु ।
शृङ्गीविडङ्गत्रिफला-जातीफलकटुत्रिकम् ॥४८॥
चातुर्जातञ्च शुक्त्यंशं प्रस्थार्द्धञ्च मधु क्षिपेत् ।
खण्डखाद्यमिदं लौहं कर्षमात्रं रसायनम् ॥४९॥
क्षीरानुपस्य क्षपयेत् क्षयकासारुचिक्लमान् ।
शीतपित्ताम्लपित्तास्र-वातपित्तास्रकामलाः ॥
कुष्ठमेहप्लीहानाह-कार्श्यं शूलञ्च पक्तिजम् ॥५०॥

पाचयेत् । प्रस्थांशे खण्डसर्पिषी खण्डसर्पिषोः प्रत्येकं प्रस्थः, खण्डस्य षोडश पलानि घृतस्य च द्वात्रिंशत् पलानीति यावत् । तत्त्वचन्द्रिकाकारस्तु "पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम । खण्डतुल्यं घृतं देयं पलषोडशिकं बुधैः ॥" इति चक्रधृतपाठस्य "खण्डतुल्यम् इति छेदः, तेन खण्डस्यापि द्वादशपलानि (लौहमानम्) । केचित्तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति ; तत् न सम्यक्, लौहयोगत्वादेव लौहप्राधान्येन तन्मानापकर्षस्यायुक्तत्वात् ; रक्तपित्तप्रत्यनीकत्वन्तु लौहस्य स्वरूपत एव महाशक्तिकत्वात् विशेषतो रक्तपित्तहरम् ; तत्तु द्रव्यपुटादिभावितत्वेन महावीर्यकृतयोपपन्नं, व्यवहारस्तु लौहसमतयैव" एवं व्याख्या कृतवान् । व्याख्याकुसुमावलीकारस्तु— "रक्तपित्ते मृदुद्रव्यस्य हिततात परैव घृतेन समं सम्बन्धात् घृतवत् खण्डं षोडशपलं ज्ञेयम् । अन्यस्त्वाह—अनन्तरगतविधिपरित्यागे प्रमाणाभावात् लौहे तुल्यं खण्डं द्वादशपलमिति । एवं प्रचारः प्रायेण" इत्याह । ताप्येन स्वर्णमाक्षिकेण हतस्य मारितस्य रुक्मलौहस्य तीक्ष्णलौहस्य, पिष्टस्वर्णमाक्षिकेण लौहपत्रीमालिप्य दग्धस्य वज्रपाण्ड्वादिलौहस्येत्यर्थः, अष्टाञ्जलित्रयं कुडवत्रयं पलद्वादशकमित्यर्थः । कुस्तुम्बुरु धन्याकम् । शुक्त्यंशं पलार्द्धम । चक्रसङ्ग्रहधृतसद्योगपाठे तु—"कुस्तुम्बुरु" इत्यारभ्य "क्षिपेत्" इत्यन्तपाठस्थले—"प्रस्थार्द्धे मधुनो देयं शुभाश्मजतुकस्तथा । शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम् ॥ त्रिफला धान्यकं पत्रं द्वाक्षं मरिचकेशरम् ॥" इति पाठान्तरम् । लौहमिति ।—लेहस्यास्य कर्षमाणता तु पूर्वयुगीयमानवाभिप्रायेणोक्ता, व्यवहारस्तु त्रि चतुः पञ्च वा रक्तिकमारभ्य प्रतिदिन रक्तिद्वयवृद्ध्या आषं यावत् । क्षीरानुपस्य लौहसेवनानन्तरं क्षीरमनुपिबतः ; क्षीरपानञ्च लौहमपेक्ष्य चतुःषष्टिगुणेन कर्त्तव्यं, लौहान्तरे तथा प्रयोगदर्शनात्, उक्तञ्च—"अनुपाने

अथ अष्टादशलोहकल्पार्थं लौहमारणप्रकारः।—

अथोष्णवारिपिष्टेन कान्तलोहं ससिन्धुना।
कफे कुठारच्छिन्नेन पित्ते वाते गलाऽम्बुना ॥५१॥
उभयेन वयःस्तम्भे ताप्येन गलरुक्षु च।
कण्डूं मनोह्वया स्रातो-विबन्धे मरिचाङ्घ्रिणा ॥५२॥
क्षिप्तं पक्काष्टकायन्त्रे द्रावितं जलसन्निभम्।
निषिक्तं त्रिफलाक्काथे पर्पटीभूतमायसे ॥५३॥
सञ्चूर्ण्य तेन क्काथेन पिष्ट्वा स्थाल्यां विपाचितम्।
षोडशाङ्गुलगर्त्तान्तः सम्पुटे चापरीक्षणात् ॥५४॥
आर्द्रकाभीरुमुषली-विदारीभृङ्गहस्तिजैः।
रसैस्तथा मुहुस्ताम्रं धान्याभ्रं काञ्जिके प्लुतम् ॥५५॥
तेन पिष्टं घृतं क्षौद्रे मत्स्याक्षीमेघनादयोः।
जयन्त्यास्तीक्ष्णचाङ्गेर्य्योर्मुषलीमार्गिमत्स्ययोः ॥५६॥

चत्वारिंशद्गुणा प्राहुः सदा बुधाः" इति। एतल्लौहसेवने पथ्यापथ्यविधिरपि सिद्धयोगाद्युक्तः सच तत्रैव द्रष्टव्यः॥ ४६—५०॥

अष्टादशलोहकल्पार्थं लौहमारणप्रकारमाह, अथेति।—ससिन्धुना सिन्दुवारसहितमित्यर्थः। कफ कफरोगे; कफरोगे पतव्यं कान्तलोहम् उष्णोदकपिष्टसिन्दुवारमूलालिप्त "क्षिप्तं पक्काष्टकायन्त्रे द्रावितं जलसन्निभम "इत्युत्तरेणान्वयः। एव पित्ते कुठारच्छिन्नेन, वाते गलाऽम्बुना इत्यादिष्वपि व्याख्येयम्; कुठारच्छिन्नेन कुठारिकया "कन्दगडूच्या" इति कश्चित्। गलाऽम्बुना अलम्बुषाक्काथेन; "अथ……गलाम्बुना" इत्यत्र "अथोष्णवारिपिष्टेन वाते लोहस्य सिन्धुना। कफे कुठारच्छेदेण पित्ते चापि गलाम्बुना" इति क्वचित् पाठः। उभयेन कुठारच्छिन्नेन गलया च। मनोह्वया मनःशिलया। मरिचाङ्घ्रिणा मरिचमूलेन। "आयसे" इत्यत्र "आयसम" इति क्वचित् पाठः। तेन क्काथेन त्रिफलाक्काथेन। आ-परीक्षणात् परीक्षणं यावत्, यावत् वारितरादिरूपमपक्कलक्षणं नोदियात् तावदित्यर्थः; "आ-परीक्षणात्" इत्यत्र "च परीक्षिपेत्" इति क्वचित् पाठः। अभीरुः शतावरी। मुषली तालमूली। विदारी विदारिकन्दः। हस्ती हस्तिकर्णपलाशः, कदलीमूलं वा। तेन काञ्जिकेन। "घृतं क्षौद्रे" इत्यत्र "घृते

वज्रिणीसातलावाप्या-वर्षाभूणां रसेन च।
क्षीरेण च पृथक् कुर्य्यात् पेषणादिक्रियात्रयम्॥
कज्जलाभं ततश्चैतत् यथाक्वाथे विभावयेत्॥५७॥

अथ अष्टादशलोहकल्पे दन्त्यादिगणः।—

दन्तीत्रिवृच्चित्रकहस्तिकर्णी-व्योषाष्टवर्गत्रिफलाविडङ्गम्।
पलाशवीजाम्बुदजीरकैला व्याघ्री च दन्त्यादिरिह प्रदिष्टः॥५८॥

अथ अष्टादशलोहकल्पः।—

पलानि पञ्च कान्तस्य सर्वत्राभ्रकचूर्णयोः।
सार्द्धे द्वे सप्त सार्द्धानि वाते पित्ते पुनः क्रमात्॥५९॥

क्षौद्रे" "घृतक्षौद्रे" इति वा पाठः सङ्गतः। मत्स्याक्षी शालिञ्चः। मेघनादः तण्डुलीयकः। तीक्ष्णः राजिका। चाङ्गेरी अम्ललोणिका। माणिमन्थः सैन्धवम्। वज्रिणी स्नुही। सातला चर्मकषा। वाप्या वाप्यालुकः। पेषणेति।—पेषण-पुटन-मारणरूपकर्मत्रयमित्यर्थः। इयं तालमन्त्र। यथाक्वाथे तत्तद्रोगहरद्रव्यकृते क्वाथे। अयमर्थः,—कफादिजरोगे उष्णाद्यारिपिष्टसिन्दुवारादिमूलेन कान्तपत्र-मालिप्य पक्वेष्टकानिर्मितयन्त्रे निक्षिप्य च द्रावयित्वा जलसन्निभं कुर्य्यात्, ततस्तं लौहद्राव त्रिफलाक्वाथे निक्षिप्य पर्पटीप्रायं कुर्य्यात्; अथ तां पर्पटीं लौहपात्रे चूर्णयित्वा त्रिफलाक्वाथेन पिष्ट्वा च स्थालीपाकं कुर्य्यात्, ततः तत लौहमार्द्रादीनां प्रत्येकरसेन पिष्ट्वा पिष्ट्वा षोडशाङ्गुलगर्त्तमध्ये आ-वारितरं पुटेत्। तथा तास्रं धान्याम्लञ्च पुनः पुनः काञ्जिकेनाप्लाव्य तेनैव काञ्जिकेन पिष्ट्वा संशोष्य च घृतादिभिः पृथक् पृथक् पेषणादिकं कुर्य्यात्, ततस्ते तास्राभ्रे एकत्र मर्दयित्वा तत्तद्रोग-हरद्रव्यक्वाथेन सप्तधा विभाव्य च स्थापयेदिति॥ ५१—५७॥

अष्टादशलोहकल्पे "दन्त्यादिचूर्णमावाप्य" इत्यग्रे वक्ष्यति, अतस्तदेव दन्त्यादिक-माह, दन्तीति।—हस्तिकर्णी हस्तिकर्णपलाशः आमालुकः इति ख्यातः आलुकविशेषो वा। अष्टवर्गः,—"जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिकौ। एकत्र मिलितैरेतैरष्टवर्गः प्रकीर्त्तितः॥" इत्युक्तरूपः। अम्बुदः मुस्ता। व्याघ्री कण्टकारी॥ ५८॥

अष्टादशलोहकल्पमाह, पलानीति।—सर्वत्रेति पदं कान्तस्य इत्यनेन सम्बध्यते, सर्वत्र वाते पित्ते कफे च कान्तस्य पञ्च पलानि। अभ्रकचूर्णयोः अभ्रकतास्रचूर्णयोः

पञ्च पादेन युक्तानि पञ्च पञ्च कफे पुनः ।
तत्र कान्ताभ्रके क्षिप्त्वा त्रिफलाक्वाथमाढकम् ॥६०॥
प्रस्थितानि गुणस्याष्टौ क्वाथस्य पयसस्तथा ।
पलानि षोडशाऽऽज्यस्य सिञ्चेत् पाकवशात् पुनः ॥६१॥
वाताद्यपेक्षया पङ्कोत्कारिकावालुकानिभे ।
अफेने वर्णगन्धाढ्ये कदुष्णे पीतसर्पिषि ॥६२॥

वाते क्रमात् सार्द्धे द्वे, पले इति शेषः, सार्द्धानि सप्त, पलानीति शेषः, वाते सार्द्धपलद्वयमभ्रकं सार्द्धसप्तपलं ताम्रचूर्णञ्च द्वयमेतत् "कज्जलाभम्" इत्यादिना पूर्वोक्तानुसारेण कज्जलीकृत्य वातहरद्रव्यक्वाथेन विभाव्य च कान्तपञ्चपलेन सह मिश्रयेत्। पित्ते पुनः क्रमात् पञ्च अभ्रकस्य पञ्च पलानि, पादेन युक्तानि इत्यत्र पञ्च इति पदमावर्त्त्यं योजनीयम् ; ताम्रस्य च सपाद-पञ्चपलानीत्यर्थः। कफे पुनः अभ्रकताम्रयोः प्रत्येकं पञ्च पञ्च पलानीत्यर्थः। अत्र लौहाभ्रकयोः मात्रानिर्देशार्थमुक्तं श्रीचक्रपाणिना स्वसङ्ग्रहे —"अथवा वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय। लौहचतुर्थांशसम-द्वि त्रि-चतुः-पञ्च-गुणभागम् ॥ प्रक्षिप्याथ: प्राग्वत् पचेदुभाभ्यां भवेद्रसो यावत् ॥" इत्यादिमानानुसारेणात्र लौहादर्द्धं समभागञ्चाभ्रकं ग्राह्यम्। एतस्य विस्तरः तथा क्वाथार्थं त्रिफलाया मानादिकञ्च तत्रैवानुसन्धेयम्। तत्र कान्ताभ्रके मिलितलौहाभ्रकचूर्णे इत्यर्थः ; अत्राभ्रेण सह ताम्रयोगे सत्यपि केवलाभ्रोक्तिः अभ्रस्य प्राधान्यात् ताम्रस्य अभ्रेण सहैक्यभावाच्च इति बोद्धव्यम्। प्रस्थितानीति।—क्वाथस्य इत्यत्र सप्तमीविवक्षायां षष्ठी, तस्मिन् क्वाथे इत्यर्थः, गुणस्य गुणवतः विशुद्धस्येति यावत, पयसः दुग्धस्य अष्टौ, पलानीति परेणान्वयः, प्रस्थितानि प्रस्थापितानि, अवचारितानीत्यर्थः, कुर्य्यादिति शेषः, आज्यस्य घृतस्य च षोडश पलानि सिञ्चेत्। अत्र क्वाथादिदाने शिवदासधृतं भागराजवचनं यथा—"घृतेन लौहमालोड्य क्षीरेण समनन्तरम्। ततः क्वाथेन सयोज्य मन्देऽग्नौ शनकैः पचेत् ॥ ततः सञ्चालयेल्लौहं लौहदर्व्याऽतिदीर्घया ॥" इति। पाकवशात पुनः पाकानुसारेण पुनः वाताद्यपेक्षया वातपित्तकफमपेक्ष्य, पङ्कोत्कारिकावालुकानिभे पङ्कादिसदृशे, तत्र पङ्कनिभे कर्दमतुल्ये सान्द्रे, अभ्यक्तदर्विके इति यावत, तादृशत्वञ्च मृदुपाके सति बोद्धव्यम ; उत्कारिकानिभे उन्दुरमासिकातुल्ये, सुखदुःखस्खलनयोग्ये इति यावत ; तथात्वञ्च मध्यपक्वस्य लक्षणम ; तथा वालुकानिभे वालुकासदृशे, उज्झितदर्विके इत्यर्थः, एतच्च खरपाके सति बोद्धव्यम्।

दन्त्यादिचूर्णमावाप्य स्थापितेनेतरेण वा।
घृतेन पेषितं भाण्डे घृतस्निग्धे निधापयेत्॥६३॥

तन्त्रान्तरे तु वाते मध्यपाकि लौहं प्रयोज्यम इत्युक्तम्; तथा च चक्रपाणिधृत-नागार्जुनवचनं—"मृदुमध्यमखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम्। पित्तसमीरण-श्लेष्मप्रकृतीनां मध्यमस्तु समः॥ मध्यतादर्वि लौहं सुखदुःखसुखखलनयोगि मृदु मध्यम। उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्याः॥ अन्ये विहीनदर्वौप्रलेपमाखुत्कराकृतिं ब्रुवते। मृदु मध्यमईषच्चूर्णं सिकतादृत्रोपमन्तु खरम॥ त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः। प्रकृतिविशेषे सुक्तौ गुणदोषौ जनयतीत्यलम्॥" इति। मृद्वादिपाकलक्षणे शिवदासधृतामोघवचन यथा—"दर्वौमाश्लिष्यते यत्तु खरं सखलति वा न वा। मृदुपाकं विजानीयात् पित्ते तु विहितं सदा॥ सिताप्रख्योपमं यत्तु मूषिकोत्करसन्निभम। तदयः खरपाकं स्यात श्लेष्मण्येव प्रकीर्तितम॥ एकैकगुण-योगित्वान्न तमिच्छन्ति तद्विदः। सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम॥" इति। अफेने इत्यादौ लौहे इति शेषः, पाकवशात् लौहे फेनरहिते सतीत्यर्थः, तत्र पाकांश-प्रदत्तदुग्धादेरुपक्षीणतया भवतीति बोद्धव्यम्। "कादुष्णे" इत्यत्र "कटूष्णे" इति पाठः असाधुः, तन्त्रान्तरे तथाऽर्थकपाठदर्शनात्, तथा च चक्रपाणिसङ्ग्रहे—"विश्राम्य पाकमेवं द्रागवतार्थ्य क्षितौ चषान् कियतः। विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपे-च्चूर्णम्॥" इति। अत्र अवतारणानन्तरं कियत्कालं विश्राम्य त्रिफलादिचूर्णप्रक्षेप-विधानादेव कदुष्णत्वं प्रतीयते, कदुष्णे ईषदुष्णे इत्यर्थः। पीतसर्पिषि पाकाय दत्ते घृते चोपक्षीणे सतीत्यर्थः। दन्त्यादिचूर्णं पूर्वोक्तम्। स्थापितेनेतरेण वा लौह-पाकाय दत्तं घृतं यदि अधिकमुपलभ्यते, तदा तदधिकं घृतं लौहस्य भाविरूक्षता-निवारणार्थं तस्मादाकृष्य पात्रान्तरे स्थापयेत, तेन स्थापितेन, इतरेण वा तादृश-घृताभावे अन्येन वा त्रिफलाक्वाथकल्कसिद्धेन घृतेनेत्यर्थः; एतदर्थं चक्रसङ्ग्रहः,—"यदि तु परिप्लुतिहेतोर्घृतमीक्षेताधिकं ततोऽस्मिन्। भाण्डे निधाय रक्षेन्नाद्युपयोगो ह्यनेन महान्॥ अयसि विरूक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः। एततो गुणोत्तर-मित्यमुना स्नेहनीयं तत्॥ अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति। केवलमपीद-मश्नितं जनयत्ययसो गुणान् कियतः॥" इति। अत्र विस्तरस्तत्रैवानुसन्धेयः। एतस्मिन्नौषधे पङ्कादिनिभे तथा अफेनादिलक्षणलक्षिते च सति दन्त्यादिचूर्णं प्रक्षिप्य घृतस्निग्धे भाण्डे निधापयेत्, कालवशात् तस्मिन्नौषधे रूक्षीभूते पुनः स्नेहनार्थं लौहपाकोच्छ्रितेन घृतेन, तदभावे त्रिफलाघृतेन वा पेषितं कृत्वा पुनर्निधापयेदिति

कुर्य्यात्तत्कल्पनापाको श्लेष्मणीव रसायने ।
स्वस्थः शरन्निदाघाभ्यामन्यथा कृतशोधनः ॥६४॥
घृतमाक्षिकमात्रा वा लौहे लौहेन मर्दितः ।
रसायनं द्वौ दिवसौ द्वे द्वे गुञ्जे ततः परम् ॥६५॥
द्वन्द्ववृद्धा दिने द्वे द्वे परं विंशतिवासरान् ।
प्रातर्विंशतिगुञ्जानां भागौ द्वौ भागमेव च ॥६६॥

निष्कर्षः । कुर्य्यादिति ।—"कुर्य्यात्तत्कल्पनापाकः" इत्यत्र "कार्य्यस्तत्कल्पनापाकः" "कुर्य्यात्तत्कल्पनापाकम्" इति वा पाठः साधुः ; तत्कल्पनापाकः तस्य लौहस्य कल्पना क्रिया:, निष्पत्तिरित्यर्थः, तादृशः पाकः शेषपाक इत्यर्थः, अथवा—कल्पनापाकः पाककल्पना पाकविधिरित्यर्थः ; कल्पना प्रयोगकल्पना तदर्थं पाकः इत्यर्थो वा, श्लेष्मणीव रसायने श्लेष्माण यथा वालुकाभः पाकः कार्य्यः रसायनेऽपि तथा कार्य्य इत्यर्थः । इदानीं रसायने तस्य मात्रादिकमाह, स्वस्थ इति ।—शरन्निदाघाभ्यामन्यथा शरन्निदाघं वर्जयित्वा अन्यस्मिन् ऋतौ । "घृतमाक्षिकमात्रा वा लौहे लौहेन मर्दितः" इत्यत्र "घृतमाक्षिकमात्राभ्यां लौहे लौहेन मर्दितम्" इति पाठः सङ्गतः ; घृतमाक्षिकमात्राभ्याम् अनुरूपघृतमधुभ्याम् ; अत्र च मध्वपेक्षया घृतं किञ्चिदधिकं देयं, तन्त्रान्तरे तथा दर्शनात्, तथा च चक्रदत्ते—"समसस्तूणामलपात्रे लौहे लौहेन मर्दयेत् पुनः । दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम् ॥ अन्यं गृह्णाति यथा मध्वपृथक्त्वेन पङ्कमाविशेत् ॥" इति । लौहे लौहपात्रे लौहेन लौहदण्डेन । रसायनम् इदं कालाभ्रकरसायनं द्वौ दिवसौ द्वे द्वे गुञ्जे, भक्षयेदित्युत्तरेणान्वयः ; प्रथमदिनद्वयं गुञ्जाद्वयमानेन भक्षयेदित्यर्थः, ततः परं द्वन्द्ववृद्धा दिनद्वयं गुञ्जाद्वयमानेन भक्षयित्वा तृतीयदिवसमारभ्य द्वौ द्वौ दिवसौ कृत्वा गुञ्जाद्वयवृद्धा विंशतिदिवसान् यावत् वर्द्धयेत्, प्रथमदिनद्वयं गुञ्जायुगलं, ततो दिनद्वयं रक्तिचतुष्टयं, ततः दिनद्वयं रक्तिषट्कम्, एवं-क्रमेणैकोनविंशदिने विंशतिगुञ्जा पूर्य्यते, एवं विंशदिवसेऽपि ; ततो यावत्कालं तत् भक्षणीयं, तावत् विंशतिगुञ्जाप्रमाणेनैव भोक्तव्यम् । अत्र एकोनविंशद्दिवसे एव विंशतिगुञ्जायां पूर्णायामपि यत् "विंशतिवासरान्" इत्युक्तं, तत् "दिने द्वे द्वे" इति युग्मदिनानुरोधात् । इदानीं विंशतिगुञ्जामितं लौहं किमेकदैव भोक्तव्यम् ? उत विभज्य ? इत्याह, प्रातरिति ।—विंशतिगुञ्जानां द्वौ भागौ त्रिधा विभक्तस्य विंशतिगुञ्जामितस्य लौहस्य भागद्वयं यवचतुष्टयाधिकरक्तित्रयोदशक-

प्राग्भक्तमर्द्धमर्द्धं वा भक्षयेदुक्तकालयोः ।
एवं मात्राविभागेन व्याधिक्षीणोऽपि सर्वदा ॥६७॥
लौहादष्टगुणं क्षीरं धारोष्णं घृतमेव वा ।
वयःस्तम्भेऽनुपातव्यं व्याधौ क्वाथो यथोदितः ॥६८॥
आस्वाद्य चानु मुस्तानां निर्य्यासं दन्तपीड़ितम् ।
मूलानि भक्षयेत्तासामास्यवैरस्यनुत्तये ॥६९॥
क्रूरकोष्ठस्तु दीप्ताग्निरनुलोमयितुं मलान् ।
तप्तं क्षीरं पिबेद्भूयस्ताम्बूलं भक्षयेन्मुहुः ॥७०॥
स्नानमर्दनविष्टम्भि-विदाह्यम्लमजाङ्गलम् ।
सप्तसप्ताहमथवा त्रिःसप्ताहं परित्यजेत् ॥७१॥
शालिमुद्गरसं सर्पिर्वेत्राग्रं वृन्ततोद्भवम् ।
दीर्घं पटोलवार्त्ताकिं तालकं मूलकन्दकम् ॥७२॥
शतावर्य्याः सजीवन्ती-शृङ्गाटसुनिषण्णकम् ।
तण्डुलीयकधान्याकं सराजक्षवकास्तुकम् ॥७३॥

मित्यर्थः, प्रातः, तथा प्राग्भक्तं भाग भोजनात् पूर्व्वमेकभाग यथव्याधिकरीकरक-मित्यर्थः, भक्षयेत्। पक्षान्तरमाह, अर्द्धमिति। —वा अथवा उक्तकालयोः प्रातस्तथा भोजनात् पूर्व्वञ्च अर्द्धमर्द्धं विंशतिगुञ्जामानं द्विधा विभज्य एकैकभागम्। वयःस्तम्भे रसायने इत्यर्थः, लौहादष्टगुणं धारोष्णं घृतमेव वा क्षीरम् अनुपातव्यमिति योज्यम्। व्याधौ यथोदितः तत्तद्रोगाधिकारोक्तः क्वाथः अनुपातव्य इति शेषः। आस्वाद्येति। —लौहभक्षणजनितमुखवैरस्यापनोदनाय दन्तचर्व्वितं मुस्तारसं पीत्वा मुस्तकं भक्षयेत्। चक्रदत्ते तु "कालकामकमसल लक्ष्यं रसं पिबेद्दिने न तु तत" इत्यनेन मुस्तकरसस्यैव पानविधिर्दृश्यते न तु मुस्तकस्य। "क्रूरकोष्ठः······मुहुः" इत्यत्र "क्रूरकोष्ठ सुदीतोऽ-मनुलोमयितुं मलान्। तप्तं क्षीरं पिबेद्भूयो ताम्बूलं भक्षयेन्मुहुः॥" इति पाठान्तरम्। अजाङ्गलमित्यत्र मांसमिति शेष, अजाङ्गलं मांसं धन्वमांसम्। दीर्घं इति पदं पटोल-वार्त्ताकि इत्यस्य विशेषणम्; दीर्घपटोलं पटोलाकारदीर्घफलशाकविशेषः, "धुन्दुल" इति "ढेँड़श" इति वा ख्यातं, दीर्घाकारपटोलं वा, वार्त्ताकमपि दीर्घाकारं ग्राह्यं, न तु वर्त्तुलाद्याकारम्। शतावर्य्या इत्यत्र मूलमिति शेषः। सराजक्षवकास्तुकं राजक्षवः

आङ्गलं शफरा: कृष्ण-मीना रोहितमद्गुरौ ।
द्राक्षादाड़िमखर्जूर-रम्भाकोलञ्च शस्यते ॥७४॥
जीर्णौषधस्तु दीप्तेऽग्नौ प्रात: पित्तात् बुभुक्षित: ।
अर्द्धमात्रं पिबेत् क्षीरं सार्द्धमात्रं कृशो नर: ॥७५॥
दिवसा: सप्त सप्तास्मिन् दिने द्वित्रिगुणा: क्रमात् ।
जघन्यमध्यप्रवर: सेवाकालो विधीयते ॥७६॥
पूर्वक्रियेयं द्विगुणा सोत्तरा नात्र यन्त्रणा ।
यथाकालं मलोत्सर्ग: शरीरोदरलाघवम् ॥७७॥
हृदयोद्गारशुद्धिश्च जीर्णलोहस्य जायते ।
लोहाप्रवृत्तौ सामत्वं लोहकिट्टप्रशान्तये ॥७८॥

राजसर्षप:, "राइ" इति ख्यात, दुग्धिका वा । जीर्णौषध इति ।—"पित्तात्" इत्यत्र "पीतात्" इति पाठ: सङ्गत: ; प्रात: पीतात् औषधानुपानतया प्राक्पीतदुग्ध-सर्पेस्त्येत्यर्थ:, अर्द्धमात्रमित्यत्र वय:स्थार्थौ इति शेष:, वय:स्थार्थौ अर्द्धमात्रं दुग्धं पिबेत् । सार्द्धमात्रं कृशो नर: व्याधिक्षीण नर: औषधानुपानतया पीतक्वाथमात्रा-मपेक्ष्य सार्द्धमात्रं क्षीरं पिबेदित्यर्थ: । दिवसा इति ।—अस्मिन् दिने वर्त्तमानकाले इत्यर्थ:, द्वित्रिगुणा: सप्त सप्त दिवसा: एकोनपञ्चाशद्दिवसा: अष्टनवतिदिवसा: तथा सप्तचत्वारिंशदधिकशतदिवसा: क्रमाज्जघन्यमध्यप्रवर: सेवाकाल: । "दिने द्वित्रिगुणा:" इत्यत्र "एकाद्वित्रिगुणा:" इति क्वचित् पाठ: । पूर्वेति ।—इयं "रसायनं द्वौ दिवसौ" इत्यादिना उक्ता पूर्वक्रिया मुख्यक्रिया । सोत्तरा उत्तरक्रिया, "नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत् । अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥ अत्याश्च दिवा निद्रामहितश्चाशनभुक्ताञ्च । वातकृत: पित्तकृत: सर्वान् कट्वम्लतिक्तकषायान् ॥ तत्क्षणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥" इत्यादिना चक्रपाणिष्टतनागार्जुनोक्ता ; अत्राह शिवदास:,—"उत्तरक्रिया चात्र द्विगुणा कार्य्या ; यदुक्तं पातञ्जले 'इति मुख्यक्रियाया: स्याद्विगुणा चोत्तरक्रिया' इति । उत्तरक्रिया चात्र 'नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत्' इत्यादिना उक्तैव" इति । जीर्णलोहस्य लक्षणमाह, —यथाकालमिति । भुक्तलोहे अजीर्णे लक्षणं चिकित्साञ्चाह, लोहाप्रवृत्ताविति ।—लोहाप्रवृत्तौ लोहाजीर्णे इत्यर्थ:, विधिना लोहभक्षणे कृतेऽपि तदजीर्णवशात् यदि मलप्रवृत्तिर्न भवेत्, जीर्णलोहस्यैव यथाकालं मलोत्सर्गादिदर्शनादित्याशय:, सामत्वम्

उष्णाम्बु सप्तवच्चारं त्रिदिनात्त्रिदिनात् पिबेत् ।
रसेनागस्त्यपत्राणां विडङ्गच्चान्तराऽन्तरा ॥७९॥
क्वाथमश्वत्थपत्राणां प्रसङ्गे छर्दिशूलयोः ।
सामान्यसिद्धिमावाप्य भावनापुटपाचनैः ॥८०॥
यथायोगयुतं पक्वं त्रिफलाक्वाथसर्पिषा ।
साधितं भक्षयेत् कान्तमेकं वा केवलाभ्रकम् ॥८१॥
इह नानुपिबेत् क्षीरं न कुर्य्यात्तेन भोजनम् ।
मुद्गयूषं पिबेत्तोये कोष्णञ्च नियतो भवेत् ॥८२॥

एतल्लोहरसायनाख्यममृतं पक्वं यथोक्तं क्रमात्
भुञ्जानः प्रतिवत्सरं नववपुः साद्रन्तु वर्णेन्द्रियैः ।
दीर्घायुर्नवयौवनोन्नतकुच-प्रौढाङ्गनावल्लभो
माद्यद्दन्तिबलो जराविरहितः पुत्रावृतः स्यान्नरः ॥८३॥

आमदोषत्वं, सामसत्त्वमित्यर्थः, ज्ञातव्यमिति शेषः, अतः लौहकिट्टप्रशान्तये अजीर्णं हि लौहं किट्टं भवति, तेन च शूलादिकमुपजायते, तत्प्रशान्तये। अगस्त्यपत्राणां वकपुष्पपत्राणाम्। चक्रेणापि स्वसङ्ग्रहे उक्तं—"तप्तदुग्धानुपानं प्रायः मारयति वङ्गकोष्ठस्य। अनुपीतमम्बु यद्वा कोमलमथवा नारिकेलस्य॥ यस्य च न तथा भवति सप्तवच्चारं जलं पिबेत् कोष्णम्। कोष्णं त्रिफलाक्वाथं सनाथं वारं ततोऽप्यधिकम्॥" इति। किञ्च—"क्रिमिरिपुचूर्णं लीढ़ं सहितं स्वरसेन वङ्गसेनस्य। अपयत्यचिराच्छियतं लोहाजीर्णोद्भवं शूलम्॥" इति। छर्दिशूलयोः लोहाजीर्णजन्यच्छर्दिशूलयोः। मिलित-कान्ताभ्रकयोगमुक्त्वा इदानीं तयोः पृथक् प्रयोगमाह, सामान्येति।—सामान्यसिद्धिं लौहस्य साधारणसाधनं त्रिफलादिकम् आवाप्य कल्कीकृत्य; यद्वा—आवाप्य जले प्रक्षिप्य, क्वाथयित्वा इत्यर्थः, तेन भावनापुटपाचनैः पक्वं पश्चात् यथायोगयुतं तत्तद्रोगापहद्रव्यक्वाथेन मर्दितं, त्रिफलाक्वाथसर्पिषा साधितम् एकं केवलं कान्तं केवलमभ्रकं वा भक्षयेत। इह अनेन विधिना निष्पादितलौहप्रयोगे। तेन क्षीरेण। मुद्गयूषं पिबेत् क्षीरं नानुपीय मुद्गयूषमनुपिबेदित्यर्थः। तोये तोयकार्य्ये, जलपानादि-कार्य्ये कोष्णं, तोयं व्यवहरेदिति शेषः। नियतः संयतेन्द्रियः। माद्यद्दन्तिबलः माद्यतः मदस्राविणः दन्तिनः गजस्य इव बलं यस्य तथाभूतः प्रभूतबलसम्पन्नः ॥५९—८३॥

अथ सर्वरोगे एकोनविंशलोहकल्पः ।—

अङ्कोल्ललोहमणिटङ्कणमाणिमन्थ-
ताप्याद्रकत्रिकटुतुत्थशिलाजतूनाम् ।
भृङ्गोदकेन वटिकाश्च मसूरमात्रां
खादेज्जराय जरसः सकलामयानाम् ॥८४॥

अथ कुष्ठे विंशलोहकल्पः ।—

अङ्कोल्लवेल्लाभ्रककान्तताप्य-शिलाजतुव्योषफलत्रयाणाम् ।
चूर्णं मुषल्याः समभागमेतत् कुष्ठानि लीढं मधुना धुनोति ॥८५॥

अथ मेदःप्रभृतिषु एकविंशलोहकल्पः ।—

कान्ताभ्रत्रिफलाविडङ्गरजनी-ताप्याब्ददेवद्रुम-
व्योषैलाऽग्निपुनर्नवाङ्घ्रिगिरिजाङ्कोल्लैः समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेत् यथासात्म्यतो
मेदःश्वाससमीरणोल्वणगदेष्वन्येषु वा पूरुषः ॥८६॥

अथ कुष्ठे द्वाविंशलोहकल्पः ।—

व्योषं कणातिलामलस्य कुसुमं सगाङ्गेरमैरेयकं
दोषाशैलुसितात्रिवृत् कृमिहरं भृङ्गाणि भल्लातकम् ।
श्रेष्ठावाकुचिकान्तलोहजरसस्तत् कान्तपात्रे स्थितं
खादेत् कुष्ठहरं रसायनवरं मध्वाज्यसंयोजितम् ॥८७॥

---

एकोनविंशलोहकल्पमाह, अङ्कोल्लेति ।—अङ्कोल्लः अङ्कोटः । मणिः मुक्ता । माणिमन्थं सैन्धवः । ताप्यं स्वर्णमाक्षिकम् । भृङ्गोदकेन भृङ्गराजरसेन ॥ ८४ ॥

विंशलोहकल्पमाह, अङ्कोल्लेति ।—अङ्कोल्लः अङ्कोठः । वेल्लं विडङ्गम् । मुषल्याः तालमूल्याः । अत्र अङ्कोल्लादीनां मुषल्यन्तानां सर्वेषां समभागता ॥ ८५ ॥

एकविंशलोहकल्पमाह, कान्तेति ।—पुनर्नवाङ्घ्रिः पुनर्नवामूलम् । गिरिजः शिलाजतु । समं गुग्गुलुं कान्तादिसर्वचूर्णसमं गुग्गुलुम् । यथासात्म्यतः अग्निबलानुसारेणेत्यर्थः । "यथासात्म्यतः" इत्यत्र "यथाशक्तितः" इति पाठान्तरम् ॥ ८६ ॥

द्वाविंशलोहकल्पमाह, व्योषमिति ।—मैरेयकं झिण्टी । दोषा हरिद्रा । शैलुः बहुवारकः । कृमिहरं विडङ्गम् । भृङ्गं भृङ्गराजः । श्रेष्ठा त्रिफला । कान्तलोहजरसः

अथ सर्वरोगे वर्षोविंशलोहकल्पः।—

मण्डूरत्रिफलामितेतरतिला-जातीविडङ्गाकुली-
वाकुच्यभ्रकक्रान्तगन्धकनिशा-माधूकसारं रजः।
पिष्ट्वा भृङ्गरसेन तस्य वटकान् खादेत् पयःपाचितान्
सर्वव्याधिहरान् रसायनवरान् मृत्योश्च मृत्युप्रदान् ॥८८॥

अथ नेत्ररोगे कान्तनागाख्यचतुर्विंशलोहकल्पः।—

बद्धा न्यस्तमहस्त्रयं कमलिनी-पत्रे सधात्रीरसे
धौतं भृङ्गरसेन चुम्बकरजो-युक्तं द्विभागोत्तरम्।
स्थाल्यां षड्गणरक्तमारिषरसे यद्दारुदर्व्यां धृतौ
सञ्चाल्याम्भसि कल्कशेषितमिदं शीते क्षणाद्गालयेत् ॥८९॥

तस्मादादाय मूषायां स्वल्पायां द्रावयेद्घनम्।
कान्तनागोऽयमुदकेनाञ्जनं नयनामृतम् ॥९०॥

---

कान्तलोहभस्मानि, "कान्तलोहजरसः" इत्यत्र "कान्तलोहरसमः" इति पाठान्तरम्। "कान्तलोहहरजः" इति पाठे तु—हरजः पारदः पारदभस्म इत्यर्थः॥ ८७॥

वर्षोविंशलोहकल्पमाह, मण्डूरेति।—मितेतरतिला कृष्णतिला। जाती जातीफलम्। माधूकसारं मधूकपुष्पसारम्। रजः पर्पटकः। पयःपाचितान् पयसि दुग्धे पाचितान्। मण्डूरादिकं भृङ्गराजरसेन पिष्ट्वा वटकान् कारयेत्, ततस्तान् किञ्चिद्दुग्धेन पक्त्वा खादेत्। मृत्योश्च मृत्युप्रदान् मृत्युवारकानित्यर्थः॥ ८८॥

कान्तनागाख्यं चतुर्विंशलोहकल्पमाह, बद्धेति।—सधात्रीरसे कमलिनीपत्रे बद्धा अहस्त्रयं दिनत्रयं न्यस्तं स्थापितम्, "कान्तनागोऽयम्" इति वक्ष्यमाणवाक्यस्वारस्यात् "अहस्त्रयम्" इत्यत्र "अहिस्त्रयम्" "अहिस्त्वहम्" इति वा पाठः समीचीनतया प्रतिभाति। ततो दिनत्रयानन्तरमुद्धृत्य भृङ्गरसेन धौतं चुम्बकरजोयुक्तं चुम्बकाख्यलोहस्य चूर्णेन भागैकेन युक्तं द्विभागोत्तरं भागद्वयं, प्रकरणाल्लोहमिति शेषः, षड्गुणरक्तमारिषरसे लोहापेक्षया षड्गुणरक्ततण्डुलीयरसे स्थाल्यां धृतं स्थापितम्; "धृतौ" "धृतो" वा इत्यत्र "धृतम्" इति पाठकल्पना समीचीनतया प्रतिभाति; दारुदर्व्यां काष्ठमयदर्व्यां सञ्चाल्य, पचेदिति शेषः, ततः कल्कशेषितं द्रवक्षयात् औषधमात्रावशिष्टमिदं शीते अम्भसि गालयेत् प्रक्षिपेदित्यर्थः। क्षणात् क्षणकालानन्तरं तस्मात् जलात् आदाय स्वल्पमूषायां घनं यथा तथा द्रावयेदिति॥ ८९-९०॥

अथ रसायने पञ्चविंशल्लौहकल्पः ।—

कान्तपात्रे शृतं चौरं रसायनमनुत्तमम् ॥८१॥

अथ मृत्युहारिरसाख्यषड्विंशलौहकल्पः ।—

अयःपत्रं तिलोत्सेधं प्रतप्तं चतुरङ्गुलम् ।

एकविंशतिपर्य्यायं धात्र्या निर्वापयेद्रसे ॥८२॥

ततः शतपलं स्थाल्यां चिप्त्वा धात्रीरसोत्तमम् ।

कृत्वा ततः सुपिहितं भस्मराशौ विनिक्षिपेत् ॥८३॥

मासि मासि समुद्धृत्य लौहदण्डेन घट्टयेत् ।

तस्मिन् विशुष्यति प्राग्वद्रसं धात्र्याः प्रदापयेत् ॥८४॥

द्रवीभवति तत् सर्वं वत्सरात् पत्रमायसम् ।

ततः समन्ततोऽङ्गुष्ठ-पर्वमात्रमुखेन तु ॥८५॥

आयसेन स्रुवेणायः-पात्रे कल्कीकृतं ततः ।

शृतं पृथक् समांशेन सेवेत मधुसर्पिषा ॥८६॥

जीर्णे साज्यं रसचौर-यूषान्यतममिश्रितम् ।

षष्टिकौदनमश्नीयादुपयुञ्ज्येत वत्सरम् ॥८७॥

वर्षमन्यच्च शिष्टाशी यन्त्रितात्मा कुटीं वसेत् ।

---

पञ्चविंशल्लौहकल्पमाह, कान्तेति ।—कान्तपात्रे कान्ताख्यलौहभाजने शृत पक्वम् अद्यावर्त्तितं वा ॥ ८१ ॥

मृत्युहारिरसाख्यं षड्विंशलौहकल्पमाह, अयःपत्रमिति ।—एकविंशतिपर्य्यायं क्रमेणैकविंशतिवारमित्यर्थः । अङ्गुष्ठेति ।—अङ्गुष्ठस्य पर्वमात्रम् अग्रपर्वप्रमाणं मुखं यस्य तादृशेन, आयसेन स्रुवेण लौहस्रुचा, गृहीत्वेति शेषः ; एतेनैवास्य लौहस्य सेवनमात्रा प्रदर्शिता भवति, अङ्गुष्ठाग्रपर्वप्रमाणमुखविशिष्टायां लौहस्रुचि यावन्मात्रं लौहद्रवं परिमातुं शक्नोति तावदेव भक्षणीयमिति ; शृतं वह्निना सन्तप्तं, ततः पृथक् समांशेन मधुसर्पिषा कल्कीकृतं सेवेत, तादृशस्रुवेण द्रुतलौहपत्रं गृहीत्वा अयःपात्रे किञ्चित् सन्तापयेत्, ततः शीतीभूतं तत् मधुसर्पिषा पिष्ट्वा सेवेतेत्यर्थः । उपयुञ्ज्येत वत्सरं यावता लौहपत्रेण आ-संवत्सरं सेवनमर्हति, प्रदर्शितरीत्या तावदेव लौहं द्रावणीयमिति । वर्षमन्यच्च द्वितीयं वर्षं, द्वितीयं वर्षं व्याप्य इत्यर्थः, शिष्टाशः हितभोजी

अगम्यो रुग्जरामृत्यु-शस्त्राग्निविषवारिभिः ॥
जीवेद्वर्षसहस्रं वै सर्वभावेष्वतीन्द्रियः ॥९८॥

अथ सप्तविंशादित्रीहकल्पत्रयम्।—

ताम्ररौप्यसुवर्णानामयमेव पृथग्विधिः।
द्विगुणं तत् गुणोत्कर्षाज्ज्ञानीयादुत्तरोत्तरम् ॥९९॥

अथ अरिष्टलक्षणे विंशलौहकल्पः।—

हेम धात्रीरसं क्षौद्रं गायत्रीरसभावितम्।
लिहन्ननु पिबेत् क्षीरं दृष्टरिष्टोऽपि जीवति ॥१००॥

अथ जरादौ एकविंशलौहकल्पः।—

मधुमागधिकाविडङ्गसार-त्रिफलाहेमघृतं सिताञ्च खादन्।
जरयाऽनवलीढदेहकान्तिः समधातुश्च समाः शतञ्च जीवेत् ॥
॥१०१॥

---

यन्त्रितात्मा संयतः सन् कुटीं गृहविशेषं वसेत् कुटीप्रवेशं कृत्वा तिष्ठेदित्यर्थः, कुटीलक्षणञ्चोक्तं चरकेण—"रसायनानां द्विविधं प्रयोगमृषयो विदुः। कुटीप्रावेशिकञ्चैव वातातपिकमेव च ॥ कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते। नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ॥ निवासे निर्भये शक्ते प्राप्योपकरणे पुरे। दिशि पूर्वोत्तरस्यान्तु सुभूमौ कारयेत् कुटीम् ॥ विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम्। घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥ शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम्। इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥" इति। सर्वभावेष्वतीन्द्रियः सर्वेष्वेव विषयेषु अतीन्द्रियज्ञानसम्पन्नो भवति, अतीन्द्रियमपि विषयं ज्ञातुमर्हतीत्यर्थः ॥ ९२—९८ ॥

सप्तविंशादिलौहकल्पत्रयमाह, ताम्रेति।—अयमेव विधिः लौहवत् विधिः। द्विगुणमिति।—ताम्रापेक्षया रौप्यकल्पः रौप्यापेक्षया च स्वर्णकल्पः द्विगुणगुणसम्पन्नो भवतीत्यर्थः ॥ ९९ ॥

विंशलौहकल्पमाह, हेमेति।—हेम स्वर्णभस्म। गायत्रीरसभावितं खदिररसभावितम्। गायत्रीरसभावितं हेमभस्म धात्रीरसक्षौद्राभ्यां लिह्यादिति ॥ १०० ॥

एकविंशलौहकल्पमाह, मध्विति।—हेम स्वर्णभस्म। समाः शतं शतवर्षम् ॥ १०१ ॥

अथ द्वात्रिंशादिलोहकल्पचतुष्टयम् ।—

आयुष्कामः शङ्खपुष्प्या समेतं
मेधाकामः काञ्चनं सौगन्धम् ।
लक्ष्मीकामः पद्मकिञ्जल्कयुक्तं
खादेत् कामं कामकामो विदार्य्या ॥१०२॥

अथ रसायने षट्त्रिंशल्लोहकल्पः ।—

सपद्मबीजामलकाभयाश्चं सर्पिर्मधुभ्यां कनकं लिहन्तः ।
दीर्घायुषो मन्दजरोपतापाः सरीसृपाणाञ्च भवन्त्यगम्याः ॥१०३॥

अथ मृतलोहानां रसत्वकथनम् ।—

मृतानि लोहानि रसीभवन्ति निघ्नन्ति रोगान् परिशीलितानि ।
क्रियोपचारस्य समग्रयोगात् पुष्यन्ति धातूनतिदीर्घमायुः ॥१०४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
मृतलोहकल्पनिरूपणं नामाष्टविंशतितमोऽध्यायः ॥ २८ ॥

द्वात्रिंशल्लोहकल्पात् पञ्चत्रिंशल्लोहकल्पपर्य्यन्तं कल्पचतुष्टयमाह, आयुरिति ।— काञ्चनमिति पदं योगचतुष्टयेन सम्बध्यते । सौगन्धं स्वनामप्रसिद्धम् । लक्ष्मीकामः श्रीकामः, सौन्दर्य्याभिलाषीत्यर्थः, धनाभिलाषीत्यर्थो वा, धनार्जनसाधकत्वञ्च सुवर्णस्य सपद्म-किञ्जल्कस्य यावज्जीवं स्वास्थ्यानुवर्त्तनद्वारा । पद्मकिञ्जल्कः पद्मकेशरः । कामं यथेष्टम् । कामकामः कामाभिलाषी ॥ १०२ ॥

षट्त्रिंशल्लोहकल्पमाह, सपद्मेति ।—पद्मबीजादयः कनकान्ताः सर्वे तुल्याः । घृतमधुभ्यां लेहः । सरीसृपाणां सर्पादीनाम् ॥ १०३ ॥

मृतलोहानां रसत्वं तथा सामान्यतो गुणाश्चाह, मृतानीति ।—लोहानि स्वर्णादीनि अष्टविधानि । रसीभवन्ति पारदवत् गुणदायीनि भवन्ति, रसायनानि भवन्तीत्यर्थः । परिशीलितानि सततमभ्यस्तानि । उपचारस्य समग्रयोगात् विहित-आहारविहारादेः सम्यक् प्रयोगादित्यर्थः ॥ १०४ ॥

इति रसरत्नसमुच्चयबोधिन्याम् अष्टाविंशतितमोऽध्यायः समाप्तः ॥२८॥

# अथ एकोनविंशत्तमोऽध्यायः।

अथ विषकल्पः।—

अथ विषोत्पत्तौ पौराणिकी कथा।—

ईश्वर उवाच—

शृणु देवि! प्रवक्ष्यामि यतोत्पन्नं महाविषम्।
भेदांस्तस्य वरारोहे! यत्र तत्र सविस्तरम् ॥ १ ॥
देवदैत्योरगाः सिद्धा गन्धर्वा यक्षराक्षसाः।
पिशाचाः किन्नराश्चैव मिलित्वा च वरानने! ॥ २ ॥
एकतो बलिराजश्च ब्रह्माद्याश्च तथैकतः।
मन्थानं मन्दरं कृत्वा नागराजेन वेष्टितम् ॥ ३ ॥
क्षीराब्धिमन्थनं तत्र प्रारब्धं सुरसुन्दरि!।
निर्गतास्तत्र रत्नौघाः कामधेन्वादयः प्रिये! ॥४॥
अमला कमलोत्पन्ना पश्चादुच्चैःश्रवास्ततः।
ऐरावतो महाकायो निर्गतं देवि! चामृतम् ॥५॥
अतीव मन्थनाद्देवि! मन्दराघातवेगतः।
अहिराजश्रमाद्देवि! विषज्वाला विनिर्गता ॥६॥
ततोऽतिघोरा सा ज्वाला निमग्ना क्षीरसागरे।
तया तत्रैव चोत्पन्नं कालकूटं महाविषम् ॥७॥
प्रलयानलसङ्काशं क्रुद्धः काल इवोत्कटः।
तं दृष्ट्वा विबुधाः सर्वे दानवाश्च महाबलाः ॥८॥
विषस्रवदनाः सद्यः प्राप्ताश्चैव मदन्तिकम्।
ततस्तैः प्रार्थ्यमानोऽहमपिबं विषमुत्तमम् ॥९॥

---

युक्तियुक्तं प्रयुक्तस्य विषस्यापि रसायनवत् गुणकारकत्वात्, रसायनावशेषे विष-कल्पमुक्त्वा विषकल्पं विवक्षुः आदौ तस्य प्रथमोत्पत्त्यादिकं श्रीमद्भागवताद्युक्तं विवृणोति, ईश्वर इति।—देवि! इति पार्वत्याः सम्बोधनम्। मन्थानं मन्थनदण्डम्।

अथ स्थावरविषाणां जातिभेदाः ।—

ततोऽवशिष्टमभवन्मूलरूपेण तत् विषम् ।
पत्ररूपेण कुत्रापि मृत्तिकारूपतः क्वचित् ॥१०॥
कुत्रचित्तोयरूपेण धातुरूपेण कुत्रचित् ।
कन्दरूपेण कुत्रापि त्रयोदशविधं विषम् ॥११॥

अथ कन्दविषाणां नामानि ।—

तेषु श्रेष्ठं कन्दविषं त्रयोदशविधं स्मृतम् ।
कर्कोटं कालकूटञ्च वत्सनाभं हलाहलम् ॥१२॥
बालुकं कर्दमञ्चैव मत्तकं मूलकन्तथा ।
सर्षपं शृङ्गिकं देवि ! मुस्तकञ्च महाविषम् ॥
हारिद्रकमिति प्रोक्तं त्रयोदशविधं विषम् ॥१३॥

अथ कर्कोटादिकन्दविषाणां लक्षणम् ।—

कर्कोटं कपिवर्णं स्यात् काकचञ्चुनिभं पुनः ।
कालकूटं ततो ज्ञेयं वत्सनाभन्तु पाण्डुरम् ॥१४॥
भङ्गराकन्दवत् देवि ! नीलवर्णं हलाहलम् ।
बालुकं बालुकाभञ्च कर्दमं कर्दमोपमम् ॥१५॥
मत्तकं श्वेतवर्णं स्याच्छुक्लकन्दन्तु मूलकम् ।
सर्षपं पीतवर्णं स्याच्छृङ्गिकं कृष्णपिङ्गलम् ॥१६॥
मुस्ताभं मुस्तकं प्रोक्तं रक्तवर्णं महाविषम् ।
हारिद्रकं पीतवर्णं विषभेदाः प्रकीर्त्तिताः ॥१७॥

नागार्जुन वासुकिना । तव चौराश्चौ, चोराश्चेत इत्यर्थः । कमलोत्पन्ना लक्ष्मी-नारायणेन । तथा विषज्वालया ॥ १—९ ॥

स्थावरविषाणां जातिभेदानाह, तत इति ।—ततोऽवशिष्टं मत्पानाव-शिष्टम ॥ १०।११॥

त्रयोदशविधकन्दविषाणां नामान्याह, तेष्विति ।—स्पष्टम ॥ १२।१३ ॥

कर्कोटादीनां कन्दविषाणां लक्षणान्याह, कर्कोटमिति ।—भङ्गराकन्दवत् भङ्गुरा घातविधा, सा एव कन्दः तद्वत् घातविषात्दाक्रान्तविशिष्टम् ॥ १४—१७ ॥

अथ श्वेतादिवर्णभेदेन विषाणां जातिभेदः।—

चतुर्द्धा वर्णभेदेन विषं ज्ञेयं मनीषिभिः।
ब्रह्मक्षत्रियविट्शूद्राः श्वेतरक्ताश्च पीतकाः॥
कृष्णवर्णः क्रमाज्ज्ञेयो वर्णानामनुपूर्वशः॥१८॥

अथ वर्णभेदेन विषाणां क्रियाभेदः।—

मारणे कृष्णवर्णं स्याद्रक्तन्तु रसकर्मणि।
पीतवर्णं क्षुद्रकार्य्ये श्वेतवर्णं रसायने॥१९॥

अथ विषामृतयोः तुल्ययोनित्वनिर्देशः।—

क्षीरोदसागरे देवि! मथ्यमाने वरानने!।
उत्पन्नममृतं देवि! तथोत्पन्नं महाविषम्॥२०॥

अथ विषस्य मात्रानिर्देशः।—

आरोटं भक्षयेत् देवि! विषं सर्षपमात्रकम्।
प्रथमे दिवसे पश्चाद्द्वितीयादौ द्विसर्षपम्॥२१॥

श्वेतादिवर्णभेदेन विषाणां जातिभेदानाह, चतुर्द्धेति।—तत्र श्वेतवर्णो ब्राह्मणः, रक्तवर्णः क्षत्रियः, पीतवर्णो वैश्यः, कृष्णवर्णो शूद्रः इति॥ १८॥

वर्णभेदेन कर्मभेदानाह, मारणे इति।—मारणे हननक्रियायां, जीवनविनाशने इत्यर्थः। रसकर्मणि पुष्टिसाधने इत्यर्थः। क्षुद्रकार्य्ये निर्दिष्टकर्मव्यतिरिक्तेतरकार्य्ये, कुष्ठादिव्याधावित्यर्थः। तथा च भावप्रकाशधृततन्त्रान्तरवचनं यथा—"रसायने विषं विप्रं क्षत्रियं देहपुष्टये। वैश्यं कुष्ठविनाशाय शूद्रं दद्यात् वधाय हि॥" इति॥ १९॥

विषामृतयोराकरसाम्यमाह, क्षीरोदेति।—अत्र विषामृतयोरेकत्रोत्पत्तिप्रदर्शनेन एतदुक्तं भवति यत्, अमृतं प्राणप्रदमपि अयथाप्रयोगेण विषवन्मारकं भवति, तथा विषं प्राणहरमपि युक्तियुक्तप्रयोगेण अमृतवत् जीवनकरं भवति इति॥ २०॥

प्रयोगार्थं विषस्य मात्रानियममाह, आरोटमिति।—आरोटं विशुद्धमित्यर्थः। "मूर्च्छितः रसः सम्यगारोटः इति कथ्यते" इत्येकादशाध्याये मूर्च्छितरसार्थे परिभाषितस्यापि आरोटशब्दस्य इह उपचारात् सामान्यतः मूर्च्छितार्थे प्रयोगः।

पञ्चमे दिवसे देवि ! भक्षयेत् सर्षपत्रयम् ।
षट्सप्ताष्टदिनेऽप्येवं नवमे वेदसङ्ख्यया ॥
भक्षयेद्राजिकावृद्ध्या यावद्गुञ्जामितं भवेत् ॥२२॥

अथ प्रयोगकालभेदेन विषस्य क्रियाविशेषः ।—

मासमात्रप्रयोगेण कुष्ठान्यष्ट हरेद्विषम् ।
पुण्डरीकं सविस्फोटं श्वेतमौडुम्बरं तथा ॥२३॥
छिन्नाभिन्नं कपालाख्यं क्लिन्नाङ्गं शवगन्धि च ।
कुष्ठानि गदितान्यष्ट हन्याद्देवि ! महाविषम् ॥२४॥
षण्मासस्य प्रयोगेण कामरूपो भवेन्नरः ।
संवत्सरप्रयोगेण सर्वरोगान् व्यपोहति ॥
द्विवत्सरप्रयोगेण दिव्यदेहो भवेन्नरः ॥२५॥

द्वितीयादौ द्वितीय-तृतीय-चतुर्थदिनेषु । एवं सर्षपवर्द्धनमित्यर्थः । नवमे नवमदिने वेदसङ्ख्यया चतुःसर्षपमानेनेत्यर्थः । राजिकावृद्ध्या सर्षपवृद्ध्या यावत् गुञ्जामितं भवेत् "षड्रजः सर्षपः प्रोक्तः षड्भिर्यव ईरितः । एका गुञ्जा यवैः षड्भिः" इत्येतद्-ग्रन्थोक्तपरिभाषानुसारेण षट्त्रिंशता सर्षपैः गुञ्जादर्शनात् दशमदिवसादारभ्य प्रतिदिनमेकैकसर्षपवृद्ध्या यावत् षट्त्रिंशत् सर्षपं पूर्य्येत, तावत् मात्रावृद्धिं कुर्य्यात्, एवञ्च एकचत्वारिंशद्दिवसेन गुञ्जा परिपूर्णा भवति, ततः गुञ्जामानेनैव षण्मासान् वर्षं वर्षद्वयं वा सेवेत इति ॥ २१।२२ ॥

प्रयोगकालभेदेन विषस्य क्रियाविशेषमाह,—मासेति । कुष्ठान्यष्ट इत्युक्तं, कानि तानि इत्याशङ्कायां तेषां नामान्याह, पुण्डरीकमिति ।—ननु अत्रोक्तं छिन्नाभिन्न-क्लिन्नाङ्ग-शवगन्ध्यादिकं चरकादौ न दृश्यते, अतश्चरकादिविरुद्धमेतत् कथं सङ्गच्छते ? इति चेदुच्यते—कुष्ठं तावदसङ्ख्येयं, कानिचित् चरके, कानिचित् सुश्रुते, कानिचिच्च तन्त्रान्तरेषु पठ्यन्ते, तथा हि, सुश्रुतोक्तमहत्-रकसादिकं न चरके. चरकोक्तं मण्डल-चर्मोत्सक-मसूर.प्रभृतिकं न सुश्रुते, एवञ्च चरकसुश्रुतयोः बहुविधो भेदो दृश्यते, तस्मादयं समाधिरुचितः यत् कुष्ठानामसङ्ख्येयत्वात् तन्त्राणां तन्त्रकर्तॄणामपि बहुत्वाच्च केचित् केचित् कुष्ठप्रकाराः केषुचित् केषुचित् तन्त्रेषु सन्निविष्टाः दृश्यन्ते ; चरकेऽप्युक्तं—"कुष्ठं सप्तविधमष्टादशविधमसङ्ख्येयं वा" इति ॥ २३—२५ ॥

अथ मात्राऽमात्राभेदेन विषामृतयोर्गुणागुणौ।—

मात्रया भक्षितं देवि! विषमप्यमृतायते।
मात्राधिकं वरारोहे! ह्यमृतं वा विषं भवेत्॥२६॥

अथ सात्म्यासात्म्ययोरमृतविषयोः सहसा प्रयोगे दोषः।—

अमृतं सहसा युक्तं शीलितं विषमेव वा।
सात्म्यासात्म्यं विकाराय मृत्यवे च वरानने!॥२७॥

अथ सहसा विषसेवने अष्टौ वेगाः।—

वेगाश्चाष्ट प्रजायन्ते सहसा विषशीलिनः।
प्रथमे त्वग्विकारः स्याद्द्वितीये वेपथुर्भवेत्॥२८॥
दाहो वेगे तृतीये स्याच्चतुर्थे विकृतो भवेत्।
फेनोद्गतिः पञ्चमे स्यात् स्कन्धयोर्भञ्जना ततः॥२९॥
जाड्यता सप्तमे वेगे चाष्टमे मरणं ध्रुवम्।
एवं ज्ञात्वा वरारोहे! प्रतीकारं समाचरेत्॥३०॥

अथ विषसेवने संशोधनाविधि।—

पित्तान्तं वमनं कुर्य्यादामान्तञ्च विरेचनम्॥३१॥

विषामृतयोः मात्राऽमात्राप्रयुक्तयोः गुणागुणावाह, मात्रयेति।—स्पष्टम्॥२६॥

प्रकृत्यैव असात्म्यम् अयथाप्रयुक्तं मारकं तथा प्रकृतिसात्म्यमपि द्रव्यं तथाप्रयुक्तं विकारोत्पादकं भवति इति दर्शयितुमाह, अमृतमिति।—सहसा अविधिनेत्यर्थः। सात्म्यासात्म्यमिति पदं क्रमेण अमृतविषाभ्यां सम्बध्यते, सात्म्यममृतम् असात्म्यं विषमित्यर्थः॥२७॥

विकाराय मृत्यवे च इत्युक्तं, तत्प्रदर्शनाय विषसेवने अष्टौ वेगानाह, वेगा इति।—सहसा विषशीलिनः अविधिना विषसेविनः। त्वग्विकारः त्वचो वैवर्ण्यादिः। "भञ्जना" इत्यत्र पीडा इति शेषः; "भञ्जता" इति पाठान्तरम्। चरकाचार्य्येण "रोमाञ्चोद्गमनकम्प —" इत्यादिना यानि वेगलक्षणानि प्रदर्शितानि तानि दंष्ट्रविषस्य, अत्र तु यानि, तानि उपयुक्तस्य स्थावरस्य लक्षणानि इति न कश्चित् अनयोः विरोधः इति॥२८—३०॥

विषचिकित्सायां प्राक् वमनविरेचनयोः कर्त्तव्यत्वात् तद्विधानमाह, पित्तान्त-

अथ विषघ्नो गणः।—

जातीनीलीश्वरीसिन्धु-काचमाच्यद्रिकर्णिका।
त्रिफला करवीरञ्च कुष्ठं मधुकजीरकम्॥
चोरिवृत्वगेलेति विषघ्नोऽयं गणः स्मृतः॥३२॥

अथ गव्यघृतस्य विषघ्नत्वोक्तिः।—

विषघ्नं गोघृतं देवि! माङ्गल्यं जीवनं स्मृतम्॥३३॥

अथ विषस्य प्रयोगविधिः।—

अश्वगन्धां मगोजिह्वां त्रिशूलीं त्रिफलामपि।
प्रथमं भक्षयित्वा च सेवयेद्गरलं ततः॥३४॥
ब्रह्मचर्य्यं वरारोहे! विषकाले समाचरेत्।
पथ्यं स्वस्थमना भुक्त्वा तदा सिद्धिर्न संशयः॥३५॥

मिति।—पित्तान्तं पित्तदर्शनं यावदित्यर्थः। आमान्तम् आमनिःसरणं यावदित्यर्थः। "धानान्तञ्च विरेचनम्" इत्यत्र "कफान्तञ्च विरेचनम्" इति पाठः बहुषु पुस्तकेषु दृश्यते॥ ३१॥

विषघ्नगणमाह, जातीति।—जाती "चामेली" इति प्रसिद्धवृक्षस्य पत्रम्। नीली शरपुङ्खा नीलवृक्षं वा, उभयोरपि विषनाशकत्वात्। ईश्वरी ईश्वरमूलं वन्ध्या-कर्कोटकी वा, तस्या मूलम्। सिन्धु सैन्धवलवणम्। काचः काचलवणम्; माची काकमाची; "काचमाची" इत्यत्र "काकमाची" इति क्वचित् पाठः। अद्रिकर्णिका गिरिकर्णिका, श्वेतापराजिता इत्यर्थः। चोरिवृत्वक् चोरिवृक्षाणां न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसानां त्वक्। एला स्थूलैला। गणत्वात् अनेन सर्वां क्वाथादिकल्पना कार्य्या॥ ३२॥

गोघृतस्यापि विषनाशकत्वमाह, विषघ्नमिति।—जीवनं जीव्यते अनेन इति जीवनं जीवनप्रदमित्यर्थः॥ ३३॥

विषस्य प्रयोगविधिमाह, अश्वगन्धामिति।—त्रिशूलीं पारदं, पारदभस्म इत्यर्थः। आदौ अश्वगन्धादीनां चूर्णं मिलितमेकैकशो वा युक्त्यनुरूपं भक्षयित्वा ततो विषं भक्षयेत् इति। विषकाले विषप्रयोगकाले स्वस्थमनाः पथ्यं भुक्त्वा ब्रह्मचर्य्यं समाचरेत् इत्यन्वयः॥ ३४।३५॥

अथ विषसेविनः पथ्यापथ्यविधिः।—

गव्ये क्षीरघृते पेये शाल्यन्नमिदमेव च।
शीतलञ्च पिबेत्तोयं पित्तलानि च वर्जयेत् ॥३६॥
जाङ्गलानि च मांसानि छागलोहञ्च मद्गुरान्।
शर्करां माक्षिकं क्षीरं सेवनीयं प्रयत्नतः॥
सेव्यं देवि! सदा पथ्यमपथ्यं दूरतस्त्यजेत् ॥३७॥

अथ प्रयोज्यविषाणि।—

उद्धृतं फलपाकेन नवं स्निग्धं घनं गुरु।
अव्यापन्नं विषहरैरवाताऽऽतपशोषितम् ॥३८॥
रक्तसर्षपतैलेन लिप्ते वाससि धारितम्।
सक्तुकं मुस्तकं शृङ्गी बालुकं सर्षपाह्वयम् ॥३९॥
वत्सनाभञ्च कर्मण्यं कालकूटादिकं ततः।
न जात्वन्यत् प्रयोक्तव्यं—" ॥४०॥

अथ तीक्ष्णविषातियुक्तविषयोश्चिकित्सा।—

"—विषे तीक्ष्णे च चारिते।
अतिमात्रे च कर्मण्ये पेयं घृतमनन्तरम् ॥४१॥

---

"पथ्य भुक्ता" इत्युक्तं, किन्तत् पथ्यं किं वाऽपथ्यमित्याह, गव्ये इति।—छागलोहं छागशोणितम्। "सेव्यम्" इत्यत्र "एकम्" इति पाठे—एकं मुख्यं केवलं वा, क्षीरमेव मुख्यं पथ्यं, केवलं क्षीरमेव पथ्यमिति वा सदा प्रयत्नतः सेवनीयम् इति ॥ ३६।३७॥

ग्राह्यं विषमाह, उद्धृतमिति।—उद्धृतं फलपाकेन आपूर्णवीर्य्यमित्यर्थः। अव्यापन्नं विषहरैः विषनाशकद्रव्यैरनुपहतवीर्य्यम्। अवाताऽऽतपशोषितं वाताऽऽतपादिभिरशोषितम्; तथाविधविषाणां दूषीविषत्वेन परिणमनात्, यदुक्तं—"जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवाताऽऽतपशोषितं वा। स्वभावतो वा गुणविप्रहीणं विषं हि दूषीविषतामुपैति॥" इति। धारितं स्थापितम्। कर्मण्यं कर्मणे प्रयोगकर्मणे हितं, प्रयोज्यमित्यर्थः। ततः अन्यत् प्रोक्तसक्तुकादिभ्यः अन्यत्, तेषामतीव तीक्ष्णवीर्य्यत्वात् ॥ ३८—४० ॥

तीक्ष्णविषे उपयुक्ते सक्तुकादौ च प्रयोज्ये विषे अतिमात्रोपयुक्ते अनन्तरकर्त्तव्यं

सभार्गीदधिधूमोत्थ-सारिवातण्डुलीयकम् ।
आगारधूमसञ्जिष्ठा-यष्ट्याह्वैर्वा समन्वितम् ॥४२॥
लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम् ।
टङ्कणं मेघनादेन मधुना वाऽपि पल्लवान् ॥४३॥

अथ रसायनार्थे विषप्रयोगे विधिः ।—

विषं युञ्जीत नित्यं वै रसायनगुणैषिणः ।
घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः ॥४४॥

अथ विषप्रयोगार्हपुरुषकालयोर्निर्देशः ।—

सात्त्विकस्योदिते भानौ योज्यं शीतवसन्तयोः ।
ग्रीष्मे चाऽऽत्ययिके व्याधौ—" ॥४५॥

माह, विषे तीक्ष्णे चेति ।—तीक्ष्णे निर्दिष्टमत्कुणादिभ्यः अन्यस्मिन् तीव्रे । चारिते अवचारिते, सेविते इत्यर्थः । अतिमात्रे च कर्मणि इत्यत्रापि चारिते इति पदमाकृष्यताम् । धूमोत्थं गृहधूमः, विषहन्तृत्वात्; वज्रक्षाराख्यक्षारविशेषो वा । सभार्ग्यादौ आगारधूमेत्यादौ च योगद्वयेऽपि घृतमिति पदं सम्बन्धनीयम्; भार्ग्यादिचूर्णम् आगारधूमादिचूर्णं वा चतुर्गुणघृतेन आलोड्य पातव्यम् इति । मेघनादेन तण्डुलीयेन, तण्डुलीयरसेनेत्यर्थः, सह टङ्कणं, पिबेदिति शेषः । मधुना वाऽपि पल्लवान् तेजपत्राणि । "पल्लवान्" इत्यत्र "यलवाम" इति क्वचित् पाठः, तथात्वे—मेघनादरसेन मधुना च टङ्कणं लिह्यादित्यर्थः ॥ ४१—४३ ॥

रसायनार्थं विषप्रयोगस्य विधिमाह, विषमिति ।—घृतोपस्कृतदेहस्य घृतसेवनेन संस्कृतदेहस्य, विशुद्धस्य संशोधनशुद्धस्य, रसायनार्थे विषप्रयोगे कर्त्तव्ये आदौ घृतेन संस्निग्ध्य पञ्चकर्मप्रयोगेण संशोध्य च विषं प्रयुञ्ज्यात्, तदा हितभोजी च स्यादिति ॥ ४४ ॥

विषप्रयोगार्हं पुरुषं कालञ्चाह, सात्त्विकस्येति ।—भानौ उदिते प्रभाते । शीतवसन्तयोर्योज्यमित्यस्यापवादमाह, ग्रीष्मे इति ।—ग्रीष्मे चात्ययिके व्याधौ अत्ययजनके व्याधौ ग्रीष्मे च ग्रीष्मेऽपि, योज्यमिति पूर्वेण सम्बन्धः; ग्रीष्मर्तौ विषप्रतीकार्यः व्याधिश्चेत् आत्ययिको भवति, तदा शीतवसन्तयोरनपेक्षयैव सद्य एव विषं दातव्यमिति ॥ ४५ ॥

अथ विषप्रयोगानर्हकालादिनिर्देशः।—

"—न वर्षासु न दुर्दिने।

न क्रोधिनि न पित्तार्त्ते न क्लीवे राजवेश्मनि ॥४६॥

तृष्णाश्रमवमीश्व-व्याध्यन्तरनिपीड़िते।

गर्भिण्यां बालवृद्धेषु न रूक्षेषु न मर्मसु ॥४७॥

अथ विषे निषिद्धद्रव्याणि।—

अभ्यस्तेऽपि विषे यत्नाद्वर्ज्यवस्तु निवर्त्तयेत्।

कट्वम्ललवणं तैलं दिवास्वप्नानलातपान् ॥४८॥

अथ अवस्थाविशेषे विषस्यापकारकत्वनिर्देशः।—

दृग्विभ्रमं कर्णरुजमन्यांश्चानिलजान् गदान्।

विषं रूक्षाग्निनः कुर्य्यान्मृत्युमेव त्वजीर्णिनः ॥४९॥

अथ विषशोधनम्।—

अथ गोमूत्रसंयुक्तमातपे शोषयेत्त्र्यहम्।

विषं तु बृंहणमेतद्धि विषस्याऽऽदौ प्रशस्यते ॥५०॥

विषप्रयोगे निषिद्धं कालं निषिद्धं पुरुषादिकञ्चाह, नेति।—दुर्दिने मेघाऽऽवृतदिवसे। क्लीवस्य अपूर्णधातुत्वेन राजकुलजस्य च अत्यन्तसुकुमारत्वेन विषवीर्य्यासहिष्णुतया तयोर्विषं न दातव्यम्। व्याध्यन्तरनिपीडिते विषसाध्यव्याध्यतिरिक्तव्याधिपीडिते। "रूक्षेषु" इत्यत्र "क्रशेषु" इति पाठान्तरम्। मर्मसु मर्मस्थानोत्पन्नरोगेषु ॥ ४६।४७ ॥

विषप्रयोगे निषिद्धद्रव्याण्याह, अभ्यस्ते इति।—अभ्यस्तेऽपि दीर्घकालसेवनेन सात्म्यीभूतेऽपि। "वर्ज्यवस्तु निवर्त्तयेत्" इत्यत्र "वर्जनीयान् विवर्जयेत्" इति क्वचित् पाठः। कानि च वर्ज्यानि इत्यपेक्षायामाह,—कट्विति ॥ ४८ ॥

रूक्षाग्निनामजीर्णिनाञ्च विषप्रयोगे अत्ययमाह, दृगिति।—दृग्विभ्रमं दृष्टिविपर्य्ययम्, अन्यथाभूतस्य वस्तुनः अन्यथा दर्शनम्। अजीर्णिनः अजीर्णरोगिणः ॥४९॥

विषस्य शुद्धिमाह, अथेति।—बृंहणमेतद्धि एतत् गोमूत्रेणातपे शोषणं विषस्य बृंहणं बलवर्द्धनम्, अशुद्धस्य विषस्य शुद्धिजननात् रोगनाशनादिशक्तिवर्द्धनमित्यर्थः ॥ ५० ॥

अथ नवज्वरे प्रथमविषकल्पः ।—

तत् पिबेन्मस्तुना वात-ज्वरे क्षीरेण पित्तजे ।
शकृन्मूत्रेण कफजे सर्वजे त्रिफलाम्भसा ॥५१॥

अथ जीर्णज्वरे द्वितीयविषकल्पः ।—

रोध्रचन्दनषड्ग्रन्था-शर्कराघृतमाक्षिकैः ।
क्षीरेण च विषं युक्तं जीर्णज्वरहरं परम् ॥५२॥

अथ जीर्णज्वरादौ तृतीयविषकल्पः ।—

निकुम्भकुम्भत्रिफला-सर्पिर्मधुविषैः कृतः ।
निहन्ति मोदको जीर्ण-ज्वरमेहत्वगामयान् ॥५३॥

अथ विषमज्वरे चतुर्थविषकल्पः ।—

शिखिकर्णीरसापितं विषमज्वरजिद्विषम् ॥५४॥

अथ रक्तपित्ते पञ्चमविषकल्पः ।—

विषं यष्ट्याह्वयं रास्ना सेव्यमुत्पलकन्दकम् ।
तण्डुलोदकपीतानि रक्तपित्तस्य भेषजम् ॥५५॥

प्रथमविषकल्पमाह, तदिति ।—शकृन्मूत्रेण गोशकृद्रसेन गोमूत्रेण चेत्यर्थः । "शकृन्मूत्रेण" इत्यत्र "यकृन्मूत्रेण" इति पाठः चिन्त्यः । क्वचित् पुस्तके "अजामूत्रेण" इति पाठो दृश्यते ॥ ५१ ॥

द्वितीयविषकल्पमाह, रोध्रेति ।—षड्ग्रन्था वचा । पूर्वोक्तमानेन विषं गृहीत्वा लोध्रादिचूर्णं घृतमाक्षिकञ्च युक्त्यनुरूपं किञ्चित् किञ्चित् दत्त्वा दुग्धेनालोड्य पेयम् ॥ ५२ ॥

तृतीयविषकल्पमाह, निकुम्भेति ।—निकुम्भकुम्भौ क्षुद्रबृहद्भेदेन दन्तीभेदौ, निकुम्भः दन्ती कुम्भः त्रिवृता इति वा ॥ ५३ ॥

चतुर्थविषकल्पमाह, शिखिकर्णीति ।—शिखिकर्णी अग्निकर्णीनामा वृक्षभेदः; शिखी चित्रकं कर्णी आरग्वधः इति वा ॥ ५४ ॥

पञ्चमविषकल्पमाह, विषमिति ।—सेव्यम् उशीरम् । उत्पलकन्दकं नीलोत्पलकन्दम् । तण्डुलोदकपीतानि इत्यत्र एतानि इति पूरणीयम् ॥ ५५ ॥

अथ श्वासकासे षष्ठविषकल्पः।—

रास्नाविडङ्गत्रिफला-देवदारुकटुत्रयम्।
पद्मकं चौद्रममृता विषञ्च श्वासकासजित्॥५६॥

अथ श्वासहिक्कयोः सप्तमविषकल्प।—

सिता रसविषचीर-प्रवालमधुकान्विता।
श्वासहिक्कापहा लीढा—" ॥५७॥

अथ छर्द्यां अष्टमविषकल्पः।—

"—छर्दिघ्नास्तु विषान्विताः।
चौद्रोशीरमधुचार-रजनीकुटजत्वचः॥५८॥

अथ चये नवमविषकल्पः।—

च्यवनप्राशनोपेतं विषं चपयति चयम्॥५९॥

अथ विषविद्रावणघृताख्यः दशमविषकल्पः।—

विजया पिप्पलीमूलं पिप्पलीद्वयचित्रकैः।
पुष्कराह्वाशटीद्राचा-यमानीचारदीप्यकैः॥६०॥
सितायष्टिद्विबृहती सैन्धवैः पालिकैः पचेत्।
सविषार्द्धपलैः प्रस्थं घृतात्तज्जीर्णभुक् पिबेत्॥६१॥
दुर्नामसेहगुल्मार्म-तिमिरक्रमिपाण्डुकान्।
गलग्रहग्रहोन्माद-कुष्ठानि च नियच्छति॥
विषविद्रावणं नाम घृतं विषरुजं हरेत्॥६२॥

षष्ठविषकल्पमाह, रास्नेति।—स्पष्टम॥ ५६॥

सप्तमविषकल्पमाह, सितेति।—रसः सतो रसः॥ ५७॥

अष्टमविषकल्पमाह, छर्दिघ्ना इति।—मधु यष्टिमधु इत्यर्थः। चारः यवचारः॥ ५८॥

नवमविषकल्पमाह, च्यवनेति।—च्यवनप्राशेन सह विषं मिश्रयित्वा भचयेत् इति॥ ५९॥

विषविद्रावणघृताख्यं दशमविषकल्पमाह, विजयेति।—विजया भङ्गा। पिप्पलीद्वय पिप्पली गजपिप्पली च। "पिप्पलीद्वय" इत्यत्र "रजनीद्वय" इति क्वचित् पाठः।

अथ ग्रहण्याम् एकादशविषकल्पः ।—

मुस्तावत्सकपाठाग्नि-व्योषप्रतिविषाविषम् ।
धातकीमोचनिर्य्यासः चूतास्थि ग्रहणीहरम् ॥६३॥

अथ मूत्रकृच्छ्रे द्वादशविषकल्पः ।—

कृच्छ्रघ्नं विषपथ्याग्नि-दन्तीद्राक्षानिशावृषाः ॥६४॥

अथ उदावर्त्ताश्मर्य्योः त्रयोदशविषकल्पः ।—

शिलाजतु विषं त्र्यूषमुदावर्त्ताश्मरीहरम् ॥६५॥

अथ अश्मर्य्यां चतुर्दशविषकल्पः ।—

गोमूत्रक्षारसिन्धूत्थ-विषपाषाणभेदकम् ।
वज्रवद्दारयत्येतट्टङ्कतः पीतमश्मरीम् ॥६६॥

अथ गुल्मे पञ्चदशविषकल्पः ।—

त्रिफलास्वर्जिकाक्षारैर्विषं गुल्मप्रभेदनम् ॥ ६७॥

अथ शूले षोडशविषकल्पः ।—

पिप्पली पिप्पलीमूलं विषं शूलहरं तथा ॥६८॥

अथ गुल्मे प्लीह्नि सप्तदशाष्टादशविषकल्पौ ।—

विषं द्रवन्ती मधुकं द्राक्षारास्नाशठीकणाः ।
विषं वेल्लमिषिक्षीरं गुल्मप्लीहनिवर्हणम् ॥६९॥

दीप्यकः जीरकः । याष्टः याष्टमधु । द्विबृहती बृहती कण्टकारी च । पालिके प्रत्येकं पलमाने; कल्के. । जीर्णभुक् जीर्णान्नः नरः विषं प्रभातकाले पिबेदित्यर्थः ॥६०—६२॥

एकादशविषकल्पमाह, मुस्तेति ।—वत्सकः इन्द्रयवः । अग्निः चित्रकः । प्रतिविषा अतिविषा । मोचनिर्य्यासः मोचरसः । चूतास्थि आम्रास्थिमज्जा ॥ ६३ ॥

द्वादशविषकल्पमाह, कृच्छ्रघ्नमिति ।—वृषः वासकः ॥ ६४ ॥

त्रयोदशविषकल्पमाह, शिलाजत्विति ।—त्र्यूषं त्रिकटु ॥ ६५ ॥

चतुर्दशविषकल्पमाह, गोमूत्रेति ।—टङ्कतः ऐकध्यम् ॥६६॥

पञ्चदशविषकल्पमाह, त्रिफलेति ।—स्पष्टम् ॥ ६७ ॥

षोडशविषकल्पमाह, पिप्पलीति ।—स्पष्टम् ॥ ६८ ॥

सप्तदशाष्टादशविषकल्पद्वयमाह, विषमिति ।—द्रवन्ती दन्तीभेदः । विषं वेल्लमिति ।—वेल्लं विडङ्गम् । मिषिः मधुरिका । विषादित्रयं क्षीरेण पिबेत् । "विषं

अथ प्लीह्नि एकोनविंशविषकल्पः ।—

प्लीहोदरघ्नं पयसा शताह्वाकृमिजिद्विषम् ॥७०॥

अथ कुष्ठे विंशविषकल्पः ।—

वायसीमूलनिःक्वाथ-पीतं कुष्ठहरं विषम् ॥७१॥

अथ कुष्ठे एकविंशविषकल्पः ।—

पयस्याराजवृक्षत्वक्-वायन्तीवाकुचीबलात् ।
प्लीहघ्नीभकणाभ्याश्च विषं क्वाथेन कुष्ठजित् ॥७२॥

अथ कुष्ठे द्वाविंशविषकल्पः ।—

अवल्गुजैडगजयोर्वीजं क्षारद्वयं विषम् ।
लेपः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः ॥७३॥

अथ विचर्चिकादौ त्रयोविंश-चतुर्विंशविषकल्पौ ।—

चित्रकार्कजटाहस्ति-पिप्पलीवाकुचीविषैः ।
सचन्द्रकैरेडगज-करञ्जफलसैन्धवैः ॥७४॥
सव्योषसर्जिकाक्षार-यवक्षारनिशाद्वयैः ।
अगारधूमसहितैर्वस्तमूत्रेण कल्पितैः ॥७५॥

वेल्लमिषिक्षारम्” इत्यत्र “विषा वेल्लमिपिक्षारम्” इति कस्यचित् पाठे—विषादि-क्षारान्तैरेक एव योगः ॥ ६९ ॥

एकोनविंशविषकल्पमाह, प्लीहोदरघ्नमिति ।—कृमिजित् विडङ्गम् ॥७०॥

विंशविषकल्पमाह, वायसीति ।—वायसीमूलं काकमाचीमूलम् ॥ ७१ ॥

एकविंशविषकल्पमाह, पयस्येति ।—पयस्या क्षीरकाकोली । राजवृक्षत्वक् आरग्वधवल्कलम् । वायन्ती त्रायमाणा । वाकुची सोमराजी । बलं जटामांसी बोला वा । “बलात्” इत्यत्र “बला” इति क्वचित् पाठः । प्लीहघ्नी रोहीतकः । इभकणा गजपिप्पली । पयस्यादीनामिभकणान्तानां क्वाथेन सह विषं कुष्ठजित् भवेत् ॥ ७२ ॥

द्वाविंशविषकल्पमाह, अवल्गुजेति ।—अवल्गुजः सोमराजी, एडगजः चक्रमर्दः, एतयोर्वीजम् ॥ ७३ ॥

त्रयोविंश-चतुर्विंशविषकल्पद्वयमाह, चित्रकेति ।—अर्कजटा अर्कमूलम् । सचन्द्रकैः चन्द्रकं कपिकच्छुबीजं, रक्तदोषहरत्वात्, तेन सह वर्त्तमानैः । फलं त्रिफला;

भल्लातकाग्निशम्याक-विषैर्वा मूत्रपेषितैः ।
लेपो विचर्चिकादद्रु-रसिकाकिटिमापहः ॥७६॥

अथ विचर्चिकादौ पञ्चविंशविषकल्पः ।—

शम्याकपत्रत्वङ्मूलं विषं तक्रञ्च तद्गणम् ॥७७॥

अथ कुष्ठे षड्विंशविषकल्पः ।—

कुष्ठतुम्बुरुबीजानि वाजिगन्धाऽग्निवेतसम् ।
हरिद्रा वायसी रास्ना हरितालं मनःशिला ॥७८॥
पटोलनिम्बपत्राणि कणागन्धकसैन्धवम् ।
विषं दारु शिरीषास्थि तक्र लेपेन कुष्ठजित् ॥७९॥

अथ कुष्ठे विषतैलाख्यः सप्तविंशविषकल्पः ।—

करञ्जकरवीरार्क-मालतीरक्तचन्दनैः ।
आस्फोताकुष्ठमञ्जिष्ठा-सप्तच्छदनिशानतैः ॥८०॥
सिन्धुवारवचाश्वलैर्गवां मूत्रे चतुर्गुणे ।
सिद्धं कुष्ठहरं तैलं दुष्टव्रणविशोधनम् ॥८१॥

---

करञ्जफलमिति केचित् । "निशाद्वयैः" इत्यत्र "निशाह्वयैः" इति क्वचित् पाठः । अश्वमूत्रेण छागमूत्रेण । "कल्पितैः" इत्यत्र "कल्कितैः" इति क्वचित पाठः । चित्रकेत्यादिना कल्पितैरित्यन्तेन एको योगः, भल्लातकादिना च अपरो योगः । अत्र मूत्रपेषितैः अश्वमूत्रपेषितैः, पूर्वयोगदर्शनात् । "रसिका" इत्यत्र "रकसा" इति पाठः समीचीनतया प्रतिभाति ॥ ७४—७६ ॥

पञ्चविंशविषकल्पमाह, शम्याकेति ।—शम्याकः आरग्वधः । तद्गणं विचर्चिकादिनाशनम् ॥ ७७ ॥

षड्विंशविषकल्पमाह, कुष्ठेति ।—शिरीषास्थि शिरीषबीजानि । तक्रेण पेषणं कर्त्तव्यम् ॥ ७८।७९ ॥

सप्तविंशविषकल्पमाह, करञ्जेति ।—मालती जाती । आस्फोता गिरिकर्णिका, "हापरमालो" इति प्रसिद्धम । सप्तच्छदः सप्तपर्णः । नतं तगरपादुका । अश्वलं अश्वेडं, चलयोरभेदात, विषमित्यर्थः । तैलमत्र सार्षपादीनामन्यतमं कुष्ठहितत्वात ; उक्तं हि चरके —"तैलानि सर्षपाणां करञ्जकोषातकोङ्गुदादीनाञ्च । कुष्ठेषु हितान्याहुस्तैलं

अथ कुष्ठे कुष्ठादितैलाख्यः अष्टाविंशविषकल्पः।—

कुष्ठाश्वमारभृङ्गार्क-मूलाश्रुक्क्षीरसैन्धवैः।
तैलं सिद्धं विषावापमभ्यङ्गात् कुष्ठजित् परम् ॥८२॥

अथ कुष्ठादौ चन्दनादितैलाख्यः एकोनत्रिंशविषकल्पः।—

भद्रश्रीदारुमरिच-द्विहरिद्रात्रिवृद्घनैः।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्द्धपलेन च ॥८३॥
प्रास्थिकं माक्रेजक्षीर-गोशकृद्रससंयुतम्।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति॥
पानाद्यैः शोणितं कुष्ठ-दुष्टनाडीव्रणापचीः ॥८४॥

अथ श्वित्रादौ त्रिंशविषकल्पः।— *

विषं भल्लातकोद्दीपि-गुञ्जानिम्बफलैर्जयेत्।
लेपोऽम्लपिष्टैः श्वित्राणि पुण्डरीकञ्च दारुणम् ॥८५॥

---

यत्रापि खदिरस्य॥" इति। केचित् "सामान्यश्रुतौ प्रधानकल्पत्वेन तिलतैलमेव ग्राह्यं, यत्र तु विशेषश्रुतिः तत्रैव सार्षपादिग्रहणम्" इत्याहुः। एवमन्यत्रापि एवं-जातीये ज्ञेयमिति। सिद्धयोगे तु "निशा" इत्यत्र "निशाद्वयं" करञ्जादीनां कल्कानां प्रत्येकमर्द्धपलमानं विषस्य पलमानं तैलस्य च प्रस्थमानमिति विशेषो दृश्यते॥ ८०।८१॥

अष्टाविंशविषकल्पमाह, कुष्ठेति।—अश्वमारः करवीरः। भृङ्गं भृङ्गराजः। विषावापं विषकल्कयुतम्; कुष्ठादीनां विषान्तानां कल्कैः पादिकैः चतुर्गुणजलेन च तैलप्रस्थः पक्तव्यः॥ ८२॥

एकोनत्रिंशविषकल्पमाह, भद्रश्रीति।—भद्रश्रीः श्वेतचन्दनम्। द्विहरिद्रा हरिद्रा दारुहरिद्रा च। पलिकैः प्रत्येकं पलमानैः। भद्रश्र्यादयो विषान्ताः कल्काः, ब्राह्म्यादयः अत्र द्रवाः प्रत्येकं चतुर्गुणाः॥ ८३।८४॥

त्रिंशविषकल्पमाह, विषमिति।—दीपी चित्रकः; "दीपी" इत्यत्र "दन्ती" इति पाठान्तरम्। फलमिति गुञ्जा-निम्बयोः उभयत्रापि सम्बध्यते। अम्लपिष्टैः काञ्जिकपिष्टैः॥ ८५॥

अथ श्वित्रे एकत्रिंशविषकल्पः ।—

ककुभारुष्करद्वीपि-सूक्ष्मापञ्चैलवालुकम् ।
पिष्टं खादिरतोयेन त्रिरात्रमुषितं पिबेत् ॥
श्वित्री विषेण सङ्घृष्टं —" ॥ ८६ ॥

अथ श्वित्रे क्रियान्तरम् ।—

"—तत्तत्स्फोटान् किलासजान् ।
कण्टकेन विभिद्याशु लेपैर्लिम्पेच्च कौष्ठिकैः ॥८७॥

अथ श्वित्रे द्वात्रिंशविषकल्पः ।—

अथवा करवीरार्क-मूलवाकुचिकाविषैः ।
वस्ताम्बुपिष्टैः सद्वीपि-हस्तिपिप्पल्यरुष्करैः ॥८८॥

अथ कालिकाकुष्ठश्वित्रादिनैलाख्यः त्रयस्त्रिंशविषकल्पः ।—

लाक्षासुराह्वमञ्जिष्ठा-कुष्ठपद्मकसारिवाः ।
गुञ्जा सही कुरवको लाङ्गली वज्रकन्दकः ॥८९॥
वाराहीकन्दकास्फोता समाह्वा गिरिकर्णिका ।
अर्काश्वमारयोर्मूलं नागपुष्पं नतं निशा ॥९०॥

एकत्रिंशविषकल्पमाह, ककुभेति ।—ककुभः अर्जुनः । अरुष्करः भल्लातकः । द्वीपी चित्रकः । खादिरतोयेन खदिरक्वाथेन । सङ्घृष्टं संयुक्तमित्यर्थः ; ककुभादिविषान्तद्रव्यजातं खदिरक्वाथोदकेन पिष्टा दिनत्रयं स्थापयेत, तत ऊर्द्धं पिबेत् इति ॥ ८६ ॥

क्रियान्तरमाह, तत्तदिति ।—तत्तत्स्फोटान् किलासजान् किलासयुक्ते अङ्गे समुत्पन्नान् प्रत्येकस्फोटान् । चरकेऽप्युक्तं—"श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात्" इति । लेपैर्लिम्पेच्च कौष्ठिकैः अत्रैव विषकल्पे प्रदिष्टैः कुष्ठनाशनैः लेपैः लिम्पेत् ॥ ८७ ॥

द्वात्रिंशविषकल्पमाह, अथवेति ।—वाकुचिका सोमराजी । वस्ताम्बुपिष्टैः छागमूत्रपिष्टैः । द्वीपी चित्रकः । हस्तिपिप्पली गजपिप्पली । अरुष्करः भल्लातकः ॥ ८८ ॥

त्रयस्त्रिंशविषकल्पमाह, लाक्षेति ।—सुराह्वः देवदारु । सही गान्धारी । कुरवकः रक्तपुष्पा झिण्टी । वज्रकन्दकः मर्कटकन्दाख्यालुकविशेषः । आस्फोता "हापरमाली" इति ख्यातम् । समाह्वा सप्तपर्णः । गिरिकर्णिका श्वेतापराजिता । अश्वमारः

दन्ती विषं हस्तिविषं पिप्पल्यो मरिचानि च।
तैस्तैलं कटुतैलं वा चित्रस्याभ्यञ्जनं पचेत्॥
सवर्णकरणं श्रेष्ठमास्तिकस्य वचो यथा॥९१॥

अथ वाते चतुस्त्रिंशविषकल्पः।—

एरण्डतैलं त्रिफला गोमूत्रं चित्रकं विषम्।
सर्पिषा सहितं पीतं वातार्त्तत्वमपोहति॥९२॥

अथ चर्मदोषे पञ्चत्रिंशविषकल्पः।—

कोरकं चीरनिःक्वाथे लाङ्गलीविषसर्षपैः।
गन्धकाङ्काङ्गमरिचैः सकुष्ठैर्विपाचितम्॥
जयेज्ज्योतिष्मतीतैलमनन्तत्वग्गदानपि॥९३॥

अथ वन्ध्याया षट्त्रिंशविषकल्पः।—

स्वरसं बीजपूरस्य वचाब्राह्मीरसं घृतम्।
वन्ध्या पिबन्ती सविषं सुपुत्रैः परिवार्य्यते॥९४॥

---

करवीरः। नागपुष्पं नागकेशरः। नतं तगरपादुका। निशा हरिद्राद्वयम्। हस्तिविषं गजपुरीषं, पुरीषार्थक-विषशब्दोऽप्यस्तीति मन्तव्यम्। तैः लाक्षादिकल्कैः। तैलं कटुतैलं वा तिलतैलं सार्षपतैलं वा। चित्रस्य श्वित्रस्येत्यर्थः। "चित्रस्य" इत्यत्र "श्वित्रस्य" इति पाठान्तरम्॥८९—९१॥

चतुस्त्रिंशविषकल्पमाह, एरण्डतैलमिति।—एरण्डतैलादिकं सर्वं तुल्यं पानयोग्येन सर्पिषा आलोड्य पिबेदिति। केचित् त्रिफलादीनां कल्केन गोमूत्रेण च एरण्डतैलं पक्वा घृतेन सह पेयमित्याहुः॥९२॥

पञ्चविंशविषकल्पमाह, कोरकमिति।—कोरकं काकोली चोरकं वा। चीरनिः-क्वाथे वल्कलक्वाथे, पञ्चवल्कलक्वाथे इति यावत्। "कोरक चीरनिःक्वाथे" इत्यत्र "कटुकीचित्रनिःक्वाथैः" इति क्वचित् पाठः। अङ्कोलः "धलआँकुडा" इति वङ्गदेशे प्रसिद्धम्। ज्योतिष्मतीतैलं ज्योतिष्मती "लताफटकी" इति भाषा, तस्याः बीजतैलम्। अनन्तत्वग्गदान् अचिकित्स्यत्वग्गतरोगान् श्वित्रकुष्ठादिरोगान् वा। चीरनिःक्वाथे लाङ्गल्यादिकल्कैः विपाचितं कोरकं कल्कस्वरूपं ज्योतिष्मतीतैलञ्च इत्यन्वयः॥९३॥

अथ मूढगर्भे सप्तत्रिंशविषकल्पः ।—

वीरालाङ्गलिकादन्ती-विषपाषाणभेदकैः ।
प्रयोज्यो मूढगर्भाणां प्रलेपो गर्भमोचनः ॥९५॥

अथ बुद्धिवर्द्धने अष्टत्रिंशविषकल्पः ।—

देवदारु विषं सर्पिर्गोमूत्रं कण्टकारिका ।
वचा वाक्स्खलनं हन्ति बुद्धेश्च परिवर्द्धनम् ॥९६॥

अथ तिमिरे एकोनचत्वारिंशविषकल्पः ।—

विषं सर्पिः सिता चौद्रं तिमिरापहमञ्जनम् ॥९७॥

अथ तिमिरे चत्वारिंशविषकल्पः ।—

विषञ्चैकमजाचीर कल्कितं घृतधूपितम् ॥९८॥

अथ तिमिरे एकचत्वारिंशविषकल्पः ।—

विषं धात्रीफलरसैरसकृत् परिभावितम् ।
अञ्जनं शङ्खसहितं प्रगाढ़ं तिमिरं जयेत् ॥९९॥

---

षट्त्रिंशविषकल्पमाह, स्वरमामिति ।—वचाविषयोश्चूर्णं ब्राह्मीमातुलुङ्गयोः रसेन सघृतेन पिबन्ती वन्ध्या इत्येवं योजनीयम् ॥ ९४ ॥

सप्तत्रिंशविषकल्पमाह, वीरेति ।—वीरा पृश्निपर्णी ॥ ९५ ॥

अष्टात्रिंशविषकल्पमाह, देवदार्विति ।—देवदार्वादिकं तुल्यं सर्पिर्गोमूत्राभ्यामवलेह्यम् । गोमूत्रचतुर्गुणेन देवदार्वादिकल्केन सर्पिः पक्तव्यं वा ॥९६॥

एकोनचत्वारिंशविषकल्पमाह, विषमिति ।—विषचूर्णं घृतादिभिः मर्दयित्वा अञ्जनं कार्य्यम् ॥ ९७ ॥

चत्वारिंशविषकल्पमाह, विषञ्चैकमिति ।—छागदुग्धेन विषं पिष्ट्वा स्थापयेत्, ततः निर्धूमाङ्गाराग्नौ किञ्चित् घृतप्रक्षेपात् सञ्जातेन धूमेन तं विषकल्कं धूपयित्वा तेन अञ्जनं दद्यादिति ॥ ९८ ॥

एकचत्वारिंशविषकल्पमाह, विषमिति ।—असकृत् सप्तधा इत्यर्थः । शङ्खसहितं शङ्खनाभिसहितम् ॥ ९९ ॥

अथ काचे द्वाचत्वारिंशविषकल्पः।—

विषमिन्द्रायुधं स्तन्यैर्घृष्टं काचजिदञ्जनम् ॥१००॥

अथ काचे त्रिचत्वारिंशविषकल्पः।—

वीजपूररसैर्घृष्टं विषं तद्वत् सितान्वितम् ॥१०१॥

अथ काचे चतुश्चत्वारिंशविषकल्पः।—

विषं मागधिका द्वे च निशि काचघ्नमञ्जनम् ॥१०२॥

अथ शुक्रार्मे पञ्चचत्वारिंशविषकल्पः।—

शुक्रार्मजित् विषं कृष्णा-युक्तं गोमूत्रभावितम् ॥ १०३॥

अथ शुक्रादौ षट्चत्वारिंशविषकल्पः।—

समुद्रफेनस्फटिका-कुरुविन्दरसाञ्जनम्।

कूर्मपृष्ठञ्च तुल्यानि तेभ्योऽर्द्धांशमनःशिला ॥१०४॥

अर्द्धमानानि मरिच-सैन्धवायोरजांसि च।

अधो यथोत्तरं दद्यादयसा च समं विषम् ॥१०५॥

रसक्रियेयं मधुना शुक्रपिल्लार्मकाचनुत्।

अभोज्यां शीततोयेन सिञ्चन्नेत्रे विषाञ्जिते ॥१०६॥

द्वाचत्वारिंशविषकल्पमाह, विषमिति।—इन्द्रायुध वज्र, हीरकभस्म इति यावत। स्तन्यः नारीक्षीरैः॥ १०० ॥

त्रिचत्वारिंशविषकल्पमाह, वीजपूरेति।—तद्वत् काचजिदित्यर्थः। सितान्वितं शर्करामिश्रितम् ॥ १०१ ॥

चतुश्चत्वारिंशविषकल्पमाह, विषमिति।—मागधिका पिप्पली। अत्रापि वीजपूर-रसेन वर्षणं कार्य्यम। निशि रात्रावेव अञ्जनं कर्त्तव्यमित्यर्थः; "निशि" इत्यत्र "निशा" इति क्वचित् पाठः॥ १०२ ॥

पञ्चचत्वारिंशविषकल्पमाह, शुक्रेति।—कृष्णा पिप्पली। गोमूत्रभावितं गोमूत्रे सप्ताहं भावितमित्यर्थः॥ १०३ ॥

षट्चत्वारिंशविषकल्पमाह, समुद्रफेनेति।—स्फुटिका स्फटिकारिका। कुरुविन्दः पद्मरागमणिः मुस्तकं वा। तेभ्योऽर्द्धांशमनःशिला मिलितसमुद्रफेनादिचूर्णेभ्यो मनः-शिलाया अर्द्धांशः। अर्द्धमानानीति।—प्रत्यासत्त्या मनःशिलातः मरिचादीनाम् उत्तरोत्तरम् अर्द्धमानत्वं, तेन च मनःशिलाऽर्द्धं मरिचं, मरिचार्द्धं सैन्धवः, सैन्धवार्द्ध-मयोरजः इति क्रमः ज्ञेयः। रसक्रियेयं मधुना "एतत् सर्वं चूर्णं प्रचुरतरमधुना

अथ शुक्रादौ सूर्य्यप्रभावर्त्त्याख्यः सप्तचत्वारिंशद्विषकल्पः ।—

रक्तचन्दनमञ्जिष्ठा-तिन्तिड़ीफलसक्तुकैः ।
अभयालोध्रकतक-निशाशङ्खकणोषणैः ॥१०७॥
मनःशिलाकरञ्जाक्ष-बीजोग्राफेनसैन्धवैः ।
अजाक्षीरैः समांशैर्वर्त्तयो विहिता हिताः ॥
शुक्रार्म्ममांसपिल्लेषु ग्रन्थिगण्डार्बुदेषु च ॥१०८॥

अथ पिल्ले अष्टचत्वारिंशद्विषकल्पः ।—

रसोनकन्दमरिच-विषसर्षपसैन्धवैः ।
पिल्लेचूर्णहितं कार्य्यं सुरसारसपेषितैः ॥
पूरयेत् सर्पिषा चानु सर्पिरेव च पाययेत् ॥१०९॥

अथ नक्तान्ध्ये एकोनपञ्चाशत्तमविषकल्पः ।—

मधुकसारमधुक-विषक्षीरजलैर्घृतम् ।
पक्वं सन्तर्पणं श्रेष्ठं नक्तान्ध्ये त्वचिरोत्थिते ॥११०॥

---

समालोड्य वंशनालिकायां स्थाप्यम्, एतत् रसाकर्षणविधानं वदन्ति" इति तत्त्वचन्द्रिकायां शिवदासः ॥ १०४—१०६ ॥

सप्तचत्वारिंशद्विषकल्पमाह, रक्तचन्दनेति ।—"तिन्तिड़ी" इत्यत्र "तिन्तिणी" इति पाठान्तरम् । सक्तुकः स्वनामप्रसिद्धः । "अभया" इत्यत्र "पथ्या" इति क्वचित् पाठः । शङ्खः शङ्खनाभिः । अक्षबीजं विभीतकमज्जा । उग्रा वचा । फेनः समुद्रफेनः ॥ १०७।१०८ ॥

अष्टचत्वारिंशद्विषकल्पमाह, रसोनेति ।—पिल्लेचूर्णहितं पिल्लयुक्तयोरक्ष्णोः हितं कार्य्यमित्यत्र अञ्जनमिति शेषः । सुरसारसपेषितैः तुलसीपत्ररसमर्दितैः । पूरयेदिति ।—अञ्जनानन्तरं सर्पिषा नेत्रपूरणं कुर्य्यादित्यर्थः ॥ १०९ ॥

एकोनपञ्चाशत्तमविषकल्पमाह, मधुकेति ।—सन्तर्पणं नेत्रतर्पणमित्यर्थः, पक्वस्नेहेन नेत्रपूरणमिति यावत् । तस्य विधिः वाग्भटे यथा—"निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः । काले साधारणे प्रातः सायं वोत्तानशायिनः ॥ यवमाषमयीं पालीं नेत्रकोषाद् बहिः समाम् । द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ॥ सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् । नक्तान्ध्य-वाततिमिर-कृच्छ्रबोधादिके वसाम् ॥ आ-पक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः । मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ॥ ह्रस्वो

अथ नक्तान्ध्ये पञ्चाशत्तमविषकल्पः।—

अञ्जनं नरपित्तेन रोचनामधुशृङ्गिभिः॥१११॥

अथ कर्णशूले एकपञ्चाशत्तमविषकल्पः।—

स्वर्जिकाशुक्तमभ्युद्धृत्य शुक्तशुक्तं वर विषम्।
कर्णयोः पूरणं तीव्र कर्णशूलनिवर्हणम्॥११२॥

अथ शिरःशूले द्विपञ्चाशत्तमविषकल्पः।—

नस्यं शिरोरुक्शमनं प्रत्यक्पुष्पीसिताविषम्॥११३॥

अथ शिरःशूले त्रिपञ्चाशत्तमविषकल्पः।—

अथवा नतयष्ट्याह्व-शर्करा विषसंयुता॥११४॥

च क्रमशो व्याधौ शतं त्रीणि च पञ्च च। शतानि सप्त चाष्टौ च दश मन्ये दशानिलं॥ पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत्। कृत्वाऽपाके ततो द्वारं स्नेहं पाते तु गालयेत॥ पिबेच्च धूमं नेत्रे व्योम रूपश्च भास्वरम। इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे॥ स्वस्थे च द्व्यन्तरं दद्याद्वा-त्र्यहेरिति योजयेत्॥" इति। अत्र मधुक-सारादीनां कल्कः स्नेहपादिकः, क्षीरं स्नेहसमं जलञ्च चतुर्गुणम॥ ११०॥

पञ्चाशत्तमविषकल्पमाह, अञ्जनमिति।—अञ्जनमित्यत्र नक्तान्ध्ये इति शेषः। रोचना गोरोचना। शृङ्गी विषकल्पत्वात् तदाख्यकन्दविषभेदः। शृङ्गीरोचने नरपित्तेन पिष्ट्वा मधुना अञ्जनं कर्त्तव्यमित्यर्थः। "रोचनामधुशृङ्गिभिः" इत्यत्र "पिप्पली मधुसर्पिषा" इति क्वचित् पाठः॥ १११॥

एकपञ्चाशत्तमविषकल्पमाह, स्वर्जिकेति।—शुक्लशुक्तं श्वेतलोध्रं श्वेतैरण्डं वा, उभयोरपि कर्णहितत्वात्। वरं कुङ्कुमम्। "शुक्तशुक्ताम्बरम" इति पाठे—शुक्तं श्वेतलोध्रं श्वेतैरण्डं वा, शुक्ता क्षीरशुक्ता, शुक्तभूमिकुष्माण्ड इति यावत्, अम्बरम् अभ्रम इत्यर्थः। "शुक्तशुक्तम" इत्यत्र "शुक्तयुक्तम" इति क्वचित् पाठः, तत्र— शुक्तः सन्धानविशेषः। एवं जलेन पिष्ट्वा तेनैवालोड्य च कर्णे पूरणं कर्त्तव्यम् इति॥ ११२॥

द्विपञ्चाशत्तमविषकल्पमाह, नस्यमिति।—प्रत्यक्पुष्पी अपामार्गः, तस्या बीजम॥ ११३॥

त्रिपञ्चाशत्तमविषकल्पमाह, अथवेति।—नतं तगरपादुका; "नत" इत्यत्र "कत" "घृत" इति पाठान्तरद्वयम्; तत्र—कतः कतकफलम्॥ ११४॥

अथ पूतिनस्ये चतुःपञ्चाशत्तमविषकल्पः ।—

शुण्ठी पथ्या विषं पाठा त्रायन्ती पूतिनामजित् ॥११५॥

अथ मुखरोगे प्रपौण्डरीकादितैलाख्यः पञ्चपञ्चाशत्तमविषकल्पः ।—

प्रपौण्डरीकमञ्जिष्ठा-विषतिन्दुसमुद्भवैः ।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान् ॥११६॥

अथ मुखरोगे षट्पञ्चाशत्तमविषकल्पः ।—

एलाखदिरकक्कोल-जातीकर्पूरचन्दनैः ।
बोलाब्दत्वालैर्द्विगुण-विषैः साराम्बुपेषितैः ॥
समूत्रा वटिकाः क्लृप्ता धृता घ्नन्ति मुखामयान् ॥११७॥

अथ पलितादौ सप्तपञ्चाशत्तमविषकल्पः ।—

कटुतैलविषं नस्यं पलितारुंषिकापहम् ॥११८॥

अथ खलतौ अष्टपञ्चाशत्तमविषकल्पः ।—

स्नुह्यर्कक्षीरभृङ्गाम्बु-गोमूत्रहलिनीविषैः ।
गुञ्जाविशालामरिचैः कटुतैलं विपाचितम् ॥
खलतिं शमयति—" ॥११९॥

---

चतुःपञ्चाशत्तमविषकल्पमाह, शुण्ठीति ।—अत्र शुण्ठ्यादीनां चूर्णं नस्यविधया प्रयोज्यमिति ॥ ११५ ॥

पञ्चपञ्चाशत्तमविषकल्पमाह, प्रपौण्डरीकेति ।—प्रपौण्डरीकं पुण्डरिकाष्ठम् । विषतिन्दु विषं तिन्दु च इति व्यस्तपदं, न तु विषतिन्दु इति समस्तपदं, विषकल्पत्वात् । तिन्दु तिन्दुकम् । समुद्भवैरित्यत्र कल्कैः इति शेषः ॥ ११६ ॥

षट्पञ्चाशत्तमविषकल्पमाह, एलेति ।—जाती जातीफलम् । साराम्बुपेषितैः खदिरक्वाथपिष्टैः । समूत्राः गोमूत्रपिष्टाः ; आदौ खदिरक्वाथेन पिष्टा पश्चात् गोमूत्रेण पेषणं कार्यमित्यर्थः । क्लृप्ताः कल्पिताः । "क्लृप्ताः" इत्यत्र "कृताः" इति पाठान्तरम् । धृताः इत्यत्र मुखे इति शेषः ॥ ११७ ॥

सप्तपञ्चाशत्तमविषकल्पमाह, कट्विति ।—सुगमम् ॥ ११८ ॥

अष्टपञ्चाशत्तमविषकल्पमाह, स्नुहीति ।—स्नुह्यर्कक्षीरं स्नुहीक्षीरम् अर्कक्षीरञ्च ।

अथ दिग्धाहते एकोनषष्टितमविषकल्पः।—

"—अम्लपिष्टमष्टगुणं विषात्।
सिन्धूत्थकार्पासफलं पिचितं सह सर्पिषा॥
क्षीरेणाऽऽज्येन वा लेपाद्विषदिग्धायुधव्रणजित्॥१२०॥

अथ दुष्टव्रणे षष्टितमविषकल्पः।—

विषं रसाञ्जनं भार्गी वृश्चिकाली महासहा।
सवेदने सपाके च व्रणे दुष्टे प्रलेपनम्॥१२१॥

अथ अपच्यां कृतमालादिघृताख्यः एकषष्टितमविषकल्पः।—

कृतमालार्कपूतीक-वत्सकातिविषाविषम्।
सिद्धं यदिङ्गुदक्वाथैः सर्पिस्तदपचीहरम्॥१२२॥

अथ अपचीघ्नतैलाख्यः द्विषष्टितमविषकल्पः।—

काकादनीमागधिका-नलिकातुण्डिकाफलैः।
जीमूतबीजकर्कोट-विशालाकृतवेधनैः॥१२३॥

---

हलिनी लाङ्गली, विषलाङ्गलिया इति यावत्। अथ भृङ्गाम्बुगोमूत्राभ्यां चतुर्गुणाभ्यां द्रवाभ्यां कुष्ठार्कादीनां कल्केन च तैलं पक्तव्यम्॥ ११९॥

एकोनषष्टितमविषकल्पमाह, अम्लपिष्टमिति।—विषादष्टगुणं सिन्धूत्थकार्पासफलं विषस्यैको भागः, सिन्धूत्थकार्पासयोश्च मिलित्वा अष्टगुणमित्यर्थः, अन्ये तु—अष्टगुणं विषादित्यस्य विषभागमपेक्ष्याष्टगुणं विषमेवाष्टगुणमित्यर्थः; एवञ्च सिन्धूत्थकार्पासफलयोरेकैकभागः विषस्य चाष्टभाग इत्याहुः। विषादित्रयं काञ्जिकेन पिष्ट्वा घृतेन आजक्षीरेण वा लिम्पेत्। विषदिग्धायुधव्रणजित् विषलिप्तास्त्रादिक्षतनाशन-मित्यर्थः॥ १२०॥

षष्टितमविषकल्पमाह, विषमिति।—वृश्चिकाली "बिछुटी" इति ख्यातम्। महासहा माषपर्णी॥ १२१॥

एकषष्टितमविषकल्पमाह, कृतमालेति।—कृतमालः आरग्वधः, अस्य त्वक्। पूतीकः नाटाकरञ्जः। वत्सकः इन्द्रयवः। कृतमालादीनां कल्कः इङ्गुदीक्वाथ-श्चतुर्गुणः॥ १२२॥

द्विषष्टितमविषकल्पमाह, काकादनीति।—काकादनी गुञ्जा। नलिका

पाठान्वितैः पलांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥
तज्जयेदपचीं घोरां नावनाभ्यङ्गपानतः ॥१२४॥

अथ अपच्यादौ विषष्टितमविषकल्पः ।—

गुञ्जाटङ्कणशिग्रुमूलरजनी-शम्पाकभल्लातकाः
स्नुह्यर्काग्निकरञ्जसैन्धववचा-कुष्ठाभयालाङ्गलीः ।
वर्षाभूशठभूशिरीषवरण-व्योषाश्वमारा विषं
गोमूत्रं शमयेद्विलिप्तमपची-ग्रन्थ्यर्बुदश्लीपदाम् ॥१२५॥

अथ विषे मन्त्रादिक्रियावैफल्ये प्रतीकारः ।—

विषे प्रतिविषं युञ्ज्यान्मन्त्रतन्त्रैरसिध्यति ।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे ॥१२६॥

अथ सर्पदष्टे चतुःषष्टितमविषकल्पः ।—

युञ्ज्यान्मूलविषं सर्प-दष्टानां पानलेपयोः ॥१२७॥

---

"नालका" इति ख्यातम् । तुण्डिकाफलं कार्पासीफलम् ; बिम्बीफलमित्यन्ये । जीमूतबीजं घोषकबीजम् । कर्कोटः "कांक्रोल" इति ख्यातम् । कृतवेधनं कोषातकीभेदः ॥ १२३।१२४ ॥

त्रिषष्टितमविषकल्पमाह, गुञ्जेति ।—अग्निः चित्रकः । लाङ्गली "ईशलाङ्गला" इति ख्यातम् । शठः धुस्तूरः ; "शठ" इत्यत्र "शठि" इति पाठान्तरम् । भूः मही, मांसरोहीत्यर्थः । वरणः वरुणः । अश्वमारः करवीरः ॥ १२५ ॥

मन्त्रौषधादिभिः असिध्यतो विषस्य विषप्रतीकार्य्यतया तत्प्रयोगस्य कालमाह, विषे इति ।—प्रतिविषं विपरीतविषं, स्थावरविषे जङ्गमविषं जङ्गमविषे च स्थावरविषमित्यर्थः । अतीते इति ।—अष्टविधेषु विषवेगेषु मध्ये फेनोद्गमलक्षणकपञ्चमवेगप्रकाशानन्तरं लालास्रावलक्षणकसप्तमवेगातिक्रमात् प्रागेव इत्यर्थः, अष्टमे वेगे मरणदर्शनात् ; तेन च स्कन्धभङ्गलक्षणके षष्ठे वेगे सप्तमे च वेगे प्रतिविषं युञ्ज्यादित्यर्थः ॥ १२६ ॥

चतुःषष्टितमविषकल्पमाह, युञ्ज्यादिति ।—मूलविषं क्रौतकाश्वमारगुञ्जादिकम् ॥ १२७ ॥

अथ सर्पविषे मूलविषस्य मात्रा ।—

चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमा यवैः ।
मात्रां विषस्य मूलस्य प्रयुञ्जीत च सर्वदा ॥१२८॥

अथ कीटविषे मूलविषस्य मात्रा ।—

दष्टस्य द्वौ यवौ कीटैः—"

अथ वृश्चिकविषे मूलविषस्य मात्रा ।—

"—तिलमात्रन्तु वृश्चिकैः ॥१२९॥

अथ लूताविषे पञ्चषष्टितमविषकल्पः ।—

नैव त्वङ्मांसकस्थे पाने तु लूतादष्टस्य नेष्यते ।
अथवा लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितम् ॥१३०॥

अथ अलर्कविषे षट्षष्टितमविषकल्पः ।—

क्षीरक्षौद्रघृतैर्युक्तं पीतं हन्ति विषं विषम् ॥१३१॥

अथ अलर्कविषे सप्तषष्टितमविषकल्पः ।—

ससिन्दुवारतगरं मृतसञ्जीवनं विषम् ॥१३२॥

अथ आखुविषे अष्टषष्टितमविषकल्पः ।—

शिरीषकुसुमं पत्रं विषमाखुविषापहम् ॥१३३॥

---

कया मात्रया तत् मूलविषं योज्यम् इत्याह, चतुर्भिरिति ।—विषस्य मूलस्य मूलविषस्य ॥ १२८ ॥

कीटविषे मूलविषस्य मात्रामाह, दष्टस्येति ।—स्पष्टम् । वृश्चिकविषे मूलविषस्य मात्रामाह, तिलेति ।—स्पष्टम् ॥ १२९ ॥

पञ्चषष्टितमविषकल्पमाह, नैवेति ।—नैव त्वङ्मांसकस्थे अरक्तगते, लूताविषे रक्तधातुमप्राप्ते सतीत्यर्थः, पाने पानविषयो नेष्यते, विषमिति शेषः । तत्र किं कार्य्यमित्यत आह, अथवेति ।—अथवा मूलविषभेदेन इत्यर्थः । ज्ञात्वा सुनिश्चितं लूताविषमेव इति निश्चितत्वेन ज्ञात्वा इत्यर्थः ॥ १३० ॥

षट्षष्टितमविषकल्पमाह, क्षीरेति ।—सुगमम् ॥ १३१ ॥

सप्तषष्टितमविषकल्पमाह, सेति ।—सिन्दुवारः निर्गुण्डी ॥ १३२ ॥

अष्टषष्टितमविषकल्पमाह, शिरीषेति ।—पत्रमिति शिरीषस्यैव ॥ १३३ ॥

अथ सर्वविषे एकोनसप्ततितमविषकल्पः ।—

देवदारु नतं मांसी द्रामिलो वाकुची विषम् ।
कुष्ठञ्च पानलेपाभ्यां समस्तविषनाशनम् ॥ १३४ ॥

अथ संज्ञाजनने सप्ततितमविषकल्पः ।—

मनःशिलाऽञ्जनाऽलैला-मिन्दुवारामराह्वयम् ।
सरक्तं कुङ्कुमविषं ध्मातं निःसंज्ञबोधनम् ॥ १३५ ॥

अथ विषजदाहे एकसप्ततितमविषकल्पः ।—

दाहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्युतः ॥ १३६ ॥

अथ दुःसाध्यरोगे द्वासप्ततितमविषकल्पः ।—

अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ।
प्रत्यहं विषकन्दस्य त्रियवं यवमेव वा ॥
शुद्धस्य राजिकावृद्ध्या वर्षं भुक्त्वा जयेद्गदान् ॥ १३७ ॥

एकोनसप्ततितमविषकल्पमाह, देवदार्विति ।—नतं तगरपादुका । द्रामिलौ निर्विषौ ॥ १३४ ॥

सप्ततितमविषकल्पमाह, मनःशिलेति ।—अञ्जनं रसाञ्जनम् । आलं हरितालम् । अमराह्वयं देवदारु । रक्तं रक्तचन्दनम् । ध्मातं प्रधमनविधया प्रदत्तनस्यम् । निःसंज्ञबोधनं निःसंज्ञस्य विषवेगेन हृतचेतनस्य बोधनं संज्ञाजननम् ॥ १३५ ॥

एकसप्ततितमविषकल्पमाह, दाहे इति ।—अत्र विषस्य ग्रहणाभावेऽपि प्रकरण-वशात् तथा सक्तुक्षीरघृतैर्युतः लेपः इत्यत्र 'कस्य लेपः ?' इत्याशंसायाः पूरकपदा-भावाच्च लेप इत्यत्र विषस्येति शेषो बोध्यः ॥ १३६ ॥

द्वासप्ततितमविषकल्पमाह, अन्येष्विति ।—शेषोपायपरिक्षये सर्वस्मिन्नेव उपाये निष्फले सतीत्यर्थः । शुद्धस्य वमनादिना शोधिताशयस्येत्यर्थः, राजिकावृद्ध्या सर्षप-वृद्ध्या, प्रथमदिनमेकसर्षपमारभ्य प्रतिदिनमेकैकसर्षपवृद्ध्या यवं यवत्रयं वा यावत् विषं भक्षयेत्, ततो वर्षं यावत् तथैव मात्रया भक्षयेत्; यद्वा—त्रियवं यवं वा आरभ्य प्रतिदिनं सर्षपवृद्ध्या वर्षं यावत् भक्षयेदिति । अत्र त्रियवं यवमेव वा इति विकल्पनिर्देशस्तु द्वियवमात्राया अपि उपलक्षणं बोद्धव्यम्, एवञ्च उत्तममध्यमाधम-मात्रामपेक्ष्य त्रिद्व्येकयवमात्रया प्रयोगः कार्य्य इति ॥ १३७ ॥

अथ रसायने त्रिसप्ततितमविषकल्पः ।—

वचागन्धकसिन्धूत्थ-त्रायमाणाम्लवेतसम् ।
व्योषाग्नित्रैलपाठाम्ल-कर्णीकारिकणाविषम् ॥१३८॥
चाङ्गेरीनागदमनी-वायसीत्रिफलारसैः ।
भावितं मधुसर्पिर्भ्यां भक्षितं स्याद्रसायनम् ॥१३९॥

अथ रसायने चतुःसप्ततितमविषकल्पः ।—

विषशुल्वरसव्योष गन्धकानां पलं पलम् ।
पलद्वयं हरीतक्याश्चित्रकस्य पलत्रयम् ॥१४०॥
कौन्तीमुस्ताचतुर्जातं कर्षांशञ्च विचूर्णितम् ।
त्रिगुणश्च गुड़ः कार्य्या वटिका माषसम्मिता ॥
भक्षयेत्तां जराग्रस्तो महारोगैश्च पीड़ितः ॥१४१॥

अथ जयागुड़िकाख्यः पञ्चसप्ततितमादि-चतुर्दशाधिकशततमान्तविषकल्पः ।—

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
मुस्ता विड़ङ्गं मूत्रेण पिष्टमाजेन पिण्डितम् ॥१४२॥
नावनाञ्जनपानेषु गोमूत्रासृग्रसाञ्जनैः ।
जयेत् प्रयुक्तं विषम-ज्वरान् सघृतसाधितम् (७५) ॥१४३॥

---

त्रिसप्ततितमविषकल्पमाह, वचेति ।—अम्लः अम्लवेतसः, एवञ्च अम्लवेतसस्य भागद्वयं ज्ञेयम्; "अम्ल" इत्यत्र "अब्द" इति पाठः सङ्गतः । कर्णी आरग्वधः; "कर्णी" इत्यत्र "किणिहि" इति पाठे—किणिह मुरावीजम् । करिकणा गजपिप्पली । "कर्णीकारिकणाविषम्" इत्यत्र "कराटकारि कणा विषम्" इति पाठान्तरम् । वायसी काकमाची; वचादि विषान्तं द्रव्यजातं चाङ्गेर्य्यादीनां प्रत्येकं रसैः समधा भावयेदिति ॥ १३८।१३९ ॥

चतुःसप्ततितमविषकल्पमाह, विषेति ।—कौन्ती रेणुकम् । चतुर्जातं त्वगेलापत्रकेशरम् । त्रिगुण इति कर्षभागापेक्षया ज्ञेयः ॥ १४० १४१ ॥

पञ्चसप्ततितमविषकल्पमारभ्य चतुर्दशाधिकशततमपर्य्यन्तं विषकल्पमाह, हरिद्रेति ।—आजेन मूत्रेण इति सम्बन्धः । अत्र अनुक्तमपि विषं प्रकरणानुरोधात् हरिद्रादिद्रव्याणाञ्च एकभागसमं ग्राह्यम् । तत्रोक्तजयावटिकया सह अस्याः

सर्वजं समधु-व्योषं (७६) गवां मूत्रेण सूतकम् (७७)।
चन्दनस्य कषायेण (७८) रक्तपित्तं वृषस्य वा (७९) ॥१४४॥
क्षयं चोराश्वगन्धाभ्यां (८०) कासश्वासं समाक्षिकम् (८१)।
तक्रेण ग्रहणीरोगं (८२) कृच्छ्रं तण्डुलवारिणा (८३) ॥१४५॥
प्रमेहं मधुना(८४) गुल्मं शूलञ्च गुडवारिणा (८५)।
पाण्डुशोफं गवां क्षीरेणाभया त्रैफलेन वा(८६।८७) ॥१४६॥
गवां मूत्रेण कुष्ठानि(८८) क्षौद्रेणोडुम्बराह्वयम् (८९)।
तक्रेण युक्तश्चाऽऽलेपाद्दद्रुपामाविचर्चिकाः (९०) ॥१४७॥
पीतमुस्ताभया वायुं (९१) तुलस्याऽऽलेपनाद्व्रणान् (९२)।
समूत्रं विस्मृतिं नस्येन(९३) अञ्जनेन दृगामयान् (९४) ॥१४८॥

दृश्यत: अनुपानतश्च प्रायश: सादृश्यं विद्यते, केवलं शुण्ठ्या अत्र न्यूनता, तत्र च शुण्ठीभावो दृश्यते; तथा च—"विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम्। विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम्॥ चणकाभा वटी कार्या स्याज्जया योगवाहिका॥" इति। भावनेत्यादौ सघृतमाषितमित्यन्तेन वाक्यशेषः; असृक् कुङ्कुमम्, पिण्डितं हरिद्रादिकं सघृतमाषित घृतेन सह मर्दितं गोमूत्रादिभिरनुरूपैः सह भावनादिविधौ प्रयुक्तं विषमज्वरान् जयेत्; विषमज्वरे घृतेन सहैव रसेन्द्रसारे प्रयोगदर्शनात्; तथा च—"जयन्ती वा जया वाऽथ विषमज्वरनुत् घृतैः" इति। "सघृतमाषितम्" इत्यत्र "सघृतमानिलम्" इति क्वचित पाठः, तत्र—हरिद्रादिपिण्डं सघृतम् आनिलमनिलज्वरं जयेदित्यर्थः। सर्वजमित्यत्र ज्वरमिति शेषः, समधुव्योषं सर्वजं ज्वरं जयेदिति। रसेन्द्रे तु "सर्वज्वरं मधुव्योषैः" इति पाठः। सूतकं सूतिकातङ्कम्; "सूतकम्" इत्यत्र "शीतकम्" इति पाठे—शीतज्वरमित्यर्थः। वृषस्य वासकस्य कषायेणेति योजनीयम्। कृच्छ्रं मूत्रकृच्छ्रम्। प्रमेहं मधुनेति।—रसेन्द्रसारे प्रमेहरोगे मधुना सह पानानन्तरं लोध्रादिक्वाथानुपानं कर्त्तव्यमिति विधिः; तथा च—"जयन्ती वा जया वाऽथ मधुना मेहजित् भवेत्। लोध्रमुस्ताभया-तुल्यं कट्फलस्य जलैः सह॥ क्वाथयित्वा पिबेच्चानु मधुना सर्वमेहजित॥" इति। गुडवारिणा गुडमिश्रितोदकेन। रसेन्द्रसारे तु उष्णजलालोडितगुडेन पानविधिः; तथा च—"जयन्तीं वा जयां वाऽथ गुडैः कोष्णजलैः पिबेत्। त्रिदोषोत्थं हरेत गुल्मम्" इति। कुष्ठानि सर्वकुष्ठानीत्यविशेषवचनम्; उडुम्बराह्वयमिति विशेषवचनम्,

स्यन्दाधिमन्थौ सस्तन्यम् (९५) अर्मकोपं सशोणितम् (९६)।
सकासमर्दं काचादीन् (९७) सभृङ्गोदं निशान्धताम् (९८)॥१४९॥
रम्भाकन्दाम्भसा पुष्पं (९९) पिल्लं ताम्रमधूत्कटम् (१००)।
सतूलमार्त्तिं दन्तानां गण्डूषेण (१०१) विलेपनात्॥१५०॥
सगोमूत्रं शिरःशूलं (१०२) सक्षौद्राम्लं क्षतव्रणान् (१०३)।
भगन्दरापचीग्रन्थीन् सक्षौद्रं (१०४) सगुडं व्रणान् (१०५)॥१५१॥
नारिकेलाम्भसा लिङ्ग-विकारान् (१०६) सेवनात् पुनः।
प्रदरं भृङ्गसारेण (१०७) नागपुष्पस्य सर्पिषा (१०८)॥१५२॥
रम्भाकन्दाम्बुसर्पिर्भ्यां पीतं लिप्तमहेर्विषम् (१०९)।
शीतकनरमूत्राभ्यामथाऽऽखोः (११०) वृश्चिकस्य तु॥१५३॥

---

औदुम्बराऽऽख्यं कुष्ठमित्यर्थः। तुलस्याऽऽलेपनात् ग्रहान् तुलसीपत्ररसेन घृष्टा प्रलेपनात् पूतनादिबालग्रहान् देवादिग्रहान् वा जयेत; ग्रहान् अङ्गग्रहानित्यर्थो वा। समूत्रं सगोमूत्रं नस्येन विस्मृतिं मूढभावं, मूर्च्छोन्मादापस्मारादिकमिति यावत्। अञ्जनेन दृगामयान् इत्यत्रापि समूत्रमिति योजनीयम्। स्यन्दादिपिल्लान्ता नेत्ररोगविशेषाः। अर्मकोपम अर्माख्यनेत्रकोपम्। सशोणितं सकुङ्कुमं, कुङ्कुमेन कुङ्कुमोदकेन वा सह मर्दितमित्यर्थः। ताम्रमधूत्कटं ताम्रचूर्णमधुप्रगाढम्। सतूलमिति।—तूला रक्तकार्पासी नीली वा; पारीश इति कश्चित्, तया सह घृष्टमित्यर्थः, गण्डूषेण दन्तानामार्त्तिं जयेत। "सतूलम" इत्यत्र "समूलम" इति पाठे—जयेदिति क्रियाया विशेषणं, समूलं यथा तथा इत्यर्थः। विलेपनादिति पदं शिरःशूलमित्यादिलिङ्गविकारान् इत्यन्तेन सम्बध्यते। सक्षौद्राम्लं क्षौद्रञ्च अम्लञ्च अम्लकाञ्जिकञ्च ताभ्यां सह लेपविधया प्रयुक्तं क्षतव्रणान् शस्त्रक्षतजनितव्रणान्। भगन्दरेति।—रसेन्द्रसारे भगन्दररोगे गुग्गुलुना सह अस्य प्रयोगविधिः; तथा च—"अग्रन्तो वा जया हन्ति गुग्गुलुना सर्वं भगन्दरम्" इति। लिङ्गविकारान् उपदंशादीन्। सेवनादिति पदं प्रदरमित्यादिना योजनीयम्। भृङ्गसारेण भृङ्गराजरसेन, नागपुष्पस्य सर्पिषा नागकेशरकल्कसाधितेन घृतेन, भृङ्गराजरसेन नागकेशरघृतेन वा सेवनात् प्रदरं जयेत्। शीतक नरमूत्राभ्यामित्यत्रापि पीतं लिप्तमिति योजनीयम्; शीतक-नरमूत्राभ्यां पीतं लिप्तम् आखोर्विषं जयेदित्यर्थः।

मार्कण्डवीरं विलेपेन (१११) लूतानान्तु जलौदनम् (११२)।
शतपत्ररसाज्याभ्यां विषं सर्वञ्च सर्वथा (११३) ॥१५४॥
भस्मसूतं गुड़क्षौद्र-घृतैः सह निषेवितम् (११४)।
जरां जयेदतो नाम्ना गुड़िकेयं जयोदिता ॥१५५॥

अथ जयन्तीवटिकाख्यः पञ्चदशाधिकशततमविषकल्पः।—

वचाऽश्वगन्धामरिचोपकुल्या-तालीशमुस्तापिचुमर्दपाठाः।
विषञ्च तेषां वटिका जयन्त्यः फले प्रयोगे च जयासमानाः ॥१५६॥

अथ जयावटिकाख्यः षोडशाधिकशततमविषकल्पः।—

वासाऽमृताखदिरनिम्बविड़ङ्गपथ्या-
क्वाथे विषत्रिकटुचित्रकलोहतिक्ताः।
आवाप्य माषतुलिता वटिका प्रणीता
क्षौद्रान्विता क्षपयति क्षयकुष्ठजातम् ॥१५७॥

अथ रसायने सप्तदशाधिकशततमविषकल्पः।—

कान्ताभ्रकशिलाधातु-विषसूतकमाक्षिकम्।
शीलितं मधुसर्पिर्भ्यां व्याधिवार्द्धकमृत्युजित् ॥१५८॥

वृश्चिकस्य तु मार्कण्डवीरं विलेपेन। जलौदनं जलसिक्तौदनेन सह इत्यर्थः। "जलौदनम्" इत्यत्र "विषं जयेत्" इति क्वचित् पाठः। शतपत्रं कमलम्। सर्वथा पानालेपनाभ्यामित्यर्थः। भस्मसूतमिति।—गुडादिभिः सह जयागुडिका तथा भस्मसूतञ्च निषेवितं जरां जयेदिति। जयोदिता जया इति नाम्ना संज्ञितेत्यर्थः॥ १४२—१५५ ॥

पञ्चदशाधिकशततमविषकल्पमाह, वचेति।—अत्रापि छागमूत्रेण मर्दनं कर्त्तव्यं, रसेन्द्रसारसंवादात्। अत्र "मुस्ता" इति पदं रसेन्द्रसारपाठादधिकमिति ज्ञातव्यम्। फले प्रयोगे च जयासमानाः प्रयुक्ता इमाः वटिकाः फलदाने जयासमानाः जया-गुडिकाया गुणवत् गुणप्रदाः भवन्तीत्यर्थः॥ १५६ ॥

षोडशाधिकशततमविषकल्पमाह, वासेति।—तिक्ता कटुकी। आवाप्य प्रक्षिप्य, पिष्ट्वा इत्यर्थः। वासादीनां क्वाथेन विषादिकं मर्दयेदिति॥ १५७ ॥

सप्तदशाधिकशततमविषकल्पमाह, कान्तेति।—शिलाधातुः शिलाजतु। माक्षिकं स्वर्णमाक्षिकम्॥ १५८ ॥

अथ वाजीकरणे अष्टादशाधिकशततमविषकल्पः।—

नष्टशुक्रः पयोद्राक्षा-कपिकच्छुमहाविषम्।
शीलयेन्मधुसर्पिर्भ्यां सखर्जूरं सयष्टिकम् ॥१५९॥

अथ विषसेवनस्य फलम्।—

शास्त्रप्रयुक्ताद्विषतो गराद्वा लूताभुजङ्गाखुविषाज्जरायाः।
अकालमृत्युग्रहपाप्मनोऽपि विषाशिनो नास्ति भयं नरस्य।
॥१६०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
विषकल्पो नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

# अथ त्रिंशत्तमोऽध्यायः।

अथ रसकल्पः।—

अथ मृतसूताध्यायः।—

अथ रसजारणम्।—

पीतासवाम्लखल्वात् सत्त्वं कान्तं वा तीक्ष्णमेव वा।
चतुःषष्टितमांशेन प्रमितं चिप्तमल्पशः ॥१॥

---

अष्टादशाधिकशततमविषकल्पमाह, नष्टशुक्र इति।—महाविषं रक्तवर्णविष-भेदः। शीलयेत् दीर्घकालमभ्यसेदित्यर्थः ॥ १५९ ॥

विषप्रयोगस्य फलमाह, शस्त्रप्रयुक्तादिति।—स्पष्टम् ॥ १६० ॥

इति रसरत्नसमुच्चयबोधिन्याम् एकोनविंशत्तमोऽध्यायः।

---

अथ "लोहं मृतं कान्तविषं सूतश्चेति निगद्यते" इत्युद्देशानुसारात् लोहविषयोः कल्पमुक्त्वा अवशिष्टं चरमाध्यायं रसकल्पं विवक्षुरादौ रसजारणमाह, पीतेति।—पीतासवाम्लखल्वात् सत्त्वं पीतः भावनाभिः शोषितः आसवाम्लः अम्लीभूतमद्यान-विशेषः, काञ्जिकाख्यो वा येन तादृशात् खल्वात् अश्मात् खल्वम्। चतुःषष्टितमांशेन

तप्तखल्वेऽम्लयोगेन श्लक्ष्णवस्त्रां विमर्दनात् ।
भूर्जे क्षाराम्ललवण-स्नुह्यर्कक्षीरलेपिते ॥२॥
बद्धं वस्त्रावृते स्विन्नमम्ले समरसे रसम् ।
धौतमुष्णारनालेन शुष्कमङ्गुलिमर्दितम् ॥३॥
पचेत् कच्छपयन्त्रस्थमष्टमांशविडावृतम् ।
स्वप्रमाणो रसस्तिष्ठेज्जीर्णो ग्रासे त्वजीर्य्यति ॥४॥
पातयेदामवाम्लेन मर्दयेत् स्वेदयेच्च तम् ।
जारणे जारणे वह्निं ग्रासञ्च परिवर्द्धयेत् ॥
द्विगुणं योजयेदेवं सत्त्वमभ्रकसम्भवम् ॥५॥

अथ रसजारणे निषिद्धद्रव्याणि ।—

पूतीलोहं विषं मूत्रं रसकं गन्धकत्रयम् ।
न युञ्ज्याज्जारणे सूतस्तैर्जीर्णैः स्फोटकुष्ठकृत् ॥६॥

---

इति रसभागमपेक्ष्य इत्यर्थः। तप्तखल्वे "अजाशकृत्" इत्यादिना प्रागुक्ते। समरसे समजले इत्यर्थः। कच्छपयन्त्रस्थं—"जलपूर्णपात्रमध्ये दत्त्वा घटखर्परं सुविस्तीर्णम्" इत्यादिना नवमाध्यायोक्तयन्त्रविशेषसंस्थम्। अष्टमांशविडावृतं रसापेक्षया अष्टमांशेन विडेन "गुञ्जासैन्धवयोः" इत्यादिना वक्ष्यमाणेन ग्राससाधनेन द्रव्यविशेषेण आवृतम्। स्वप्रमाण इति।—एवं पक्वः सूतः जीर्णः सन् स्वप्रमाण एव तिष्ठेत्, न तु क्षीयमाणो भवेदित्यर्थः। ग्रासे अभ्रादिसत्त्वे अजीर्य्यति अक्षीयमाणे सतीत्यर्थः, पातयेत ऊर्द्ध्वं पातयेत। अयमर्थः.—आमवाम्लमर्दिताभ्रसत्त्वं तीक्ष्णलोहं कान्तलोहं वा रसापेक्षया चतुःषष्ट्यंशम् अल्पशः तप्तखल्वस्थे रसे क्षिपेत, ततः काञ्जिकेन सुश्लक्ष्णं मर्दयित्वा क्षारादिलिप्ते भूर्जपत्रे संस्थाप्य च वस्त्रेण बद्धा समजलेन काञ्जिकेन दोलायन्त्रे पचेत्; ततः उद्धृत्य उष्णारनालेन प्रक्षाल्य च शोषयेत्। अथ अङ्गुलीभिरभिमर्दितस्य तस्य औषधस्य उपर्य्यधः रसापेक्षया अष्टमांशविडं संस्थाप्य कच्छपयन्त्रेण पचेत्; एवं यदि रसः स्वप्रमाण एव तिष्ठेत, तदा सुजीर्णः ग्रासाभ्रादिकः सर्वकर्मक्षमश्च सञ्जातः इति जानीयात्। यदि स्वप्रमाणापेक्षया अधिको भवेत, तदा ग्रासमजीर्णं रसञ्चापि असम्यक् जीर्णं ज्ञात्वा पुनरूर्द्धपातनादिकं कर्म कुर्य्यात्; प्रतिवारं जारणाकाले ग्रासं वह्निञ्च द्विगुणं वर्द्धयेदिति ॥ १—५ ॥

जारणे निषिद्धद्रव्याण्याह, पूतीति।—पूतीलोहं नागं वङ्गञ्च। मूत्रं गोमूत्रम्।

अथ वडवानलो विड़ः।—

गुञ्जासैन्धवयोश्चूर्णं देवदालीदलद्रवैः।
टङ्कणं किंशुकरसैर्जम्बीराम्लेन चूलिकाम् ॥७॥
मूलकक्षारगोमूत्र-प्रसादेन च गन्धकम्।
स्वर्जिकाभूखगव्योम शिग्रुमूलरसेन च ॥८॥
अतशी भावयेत् सर्वं विड़ोऽयं वड़वानलः।
एवमग्निसहो—" ॥९॥

अथ मतान्तरे रसजारणम्।—

—"लोह-संयुक्तः केवलोऽथ वा।
नियामकौषधसिताङ्कोलमूलरसादिभिः ॥१०॥
वैक्रान्तप्रमुखैर्वाऽपि रसेन्द्रः सह मर्दितः।

---

रसकं खर्परम्। गन्धकवयं प्रागुक्तं रक्तपीतश्वेतभेदेन त्रिविधगन्धकम्; केचित्तु गन्धकत्रयशब्देन शिलातालगन्धकं गृह्णन्ति। तैर्जीर्णैः स्फोटकुष्ठकृत् जीर्णैः तैः पूतीलोहादिभिः सह अवस्थितः सूतः स्फोटकुष्ठकृत्, भवेदिति शेषः। "जीर्णैः" इत्यत्र "जीर्णाः" इति पाठः सङ्गतः ॥ ६ ॥

रसजारणे वड़वानलाख्यं विड़माह, गुञ्जेति।—देवदालीदलद्रवैः घोषकपत्ररसैः। चूलिकां लवणविशेषं, नरसारमिति यावत्। मूलकेति।—गोमूत्रगालितमूलकक्षारस्य प्रसादभागेन। रसेन्द्रचिन्तामणौ तु—"मूलकार्द्रकवह्नीनां क्षारं गोमूत्रगालितम्। वस्त्रपूतं द्रवं ग्राह्यं गन्धकं तेन भावयेत् ॥" इति पाठः। भूः मृत् सौराष्ट्रमृत्तिका इत्यर्थः। खगः स्वर्णमाक्षिकं रसाञ्जनं वा। व्योम अभ्रम्; "व्योम" इत्यत्र "व्योष" इति क्वचित् पाठः। अतशः शतं वारान्। वडवानलः वडवानलाख्य इत्यर्थः। एवम् उक्तप्रकारेण विड़जारितः रसः अग्निसहः, भवेदिति शेषः ॥ ७—९ ॥

रसभक्षप्रकारमाह, लोहेति।—अथ लोहसंयुक्तः केवलो वा रसेन्द्रः, नियामकौषधं "कर्कोटीफणिनेत्राभ्याम्" इत्यादिना एकादशाध्यायोक्तः रसचाञ्चल्यनिवारकः द्रव्यगणविशेषः, तथा सिताङ्कोलमूलं शुभ्राङ्कोठमूलञ्च, तेषां रसादिभिः; आदिपदेनात्र क्वाथकल्कादीनां ग्रहणम्; सह मर्दितः, अथवा वैक्रान्तप्रमुखैः वैक्रान्त-

यन्त्रस्थः क्रमवृद्धेन वह्निनोर्द्ध्वेन पाचितः ॥
मृतोऽधराग्निना तस्थौऽप्यच्छोणो नोर्द्ध्वमाश्रयेत् ॥११॥

अथ द्विविधं रसमारणम्।—

अथापामार्गतैलेन तथा पुष्करतण्डुलैः।
अथवा मलपूत्तीर-भावितः श्वेतहिङ्गुना ॥
मर्दितः पुटपाकेन भस्मतां प्रतिपद्यते ॥१२॥

अथ रसमारणे प्रकारान्तरम्।—

गोमूत्रद्रोणपुष्पाभ्यां पाकाद्वा कान्तभाजने ॥१३॥

अथ प्रकारान्तरम्।—

कङ्गणीकृष्णधुस्तूर-तैलाभ्यां वा विमर्दितः ॥१४॥

---

सूर्यकान्तहीरकादिभिः चतुर्थाध्यायोक्तैर्मणिभिः सह मर्दितः, क्रमवृद्धेन मन्दमध्य-खरादिक्रमेण ऊर्द्ध्वेन वह्निना उपरिष्टात् दत्तेन अग्निना इत्यर्थः, यन्त्रस्थः पाचितः, यन्त्रमध्ये पूर्वोक्तविधया मर्दितं रसं संस्थाप्य दत्त्वा च मुखावरणं भस्मन्तः किञ्चित् प्रोथयित्वा ऊर्द्ध्वं पुटं दद्यादित्यर्थः। मृत इत्यादि।—उक्तप्रकारेण मृतो रसः अधराग्निना यन्त्रनिम्नभागे प्रदत्तेन अग्निनाऽपि अक्षीणः उड्डयनसामर्थ्याभावात् अरस एव, तिष्ठेदिति शेषः; न ऊर्द्ध्वमाश्रयेत् पक्षच्छेदात् अग्निसन्तापेनापि नोर्द्ध्वम् उड्डयेत इत्यर्थः ॥ १०·११ ॥

द्विविधं रसमारणमाह, अथेति।—अथ एवं पाकानन्तरम्। पुष्करतण्डुलैः पुष्करबीजैः पद्मबीजैर्वा, पुष्करबीजक्वाथैः, पद्मबीजक्वाथैर्वा इत्यर्थः। अपामार्गतैल-पुष्करबीजक्वाथाभ्यां भावितः; अथवा मलपूक्षीरभावितः काकोडुम्बरक्षीरेण सप्ताहं भावितः, श्वेतहिङ्गुना मर्दितः, भावनाऽनन्तरमिति शेषः ॥ १२ ॥

रसमारणे प्रकारान्तरमाह, गोमूत्रेति।—गोमूत्रद्रोणपुष्पाभ्यां सह मर्दयित्वा कान्तभाजने पाकाद्वा भस्मतां प्रतिपद्यते इति पूर्वोक्तेनान्वयः। द्रोणपुष्पशब्देनात्र द्रोणपुष्परसो ग्राह्यः ॥१३॥

प्रकारान्तरमाह, कङ्गणीति।—कङ्गणीशब्देन तद्बीजतैलं ग्राह्यम्। रसः कङ्गणीकृष्णधुस्तूरतैलाभ्यां सह विमर्दितः कान्तभाजने पाकात् भस्मतां प्रतिपद्यते इत्यन्वयः ॥ १४ ॥

अथ प्रकारान्तरम्।—

मृणालतन्तुवर्त्तिस्थः पीनगन्धर्वतैलयुक्।
ज्वलितो याममात्रं वा मृतवैक्रान्तसंयुतः॥१५॥

अथ प्रकारान्तरम्।—

वन्ध्याऽमृताकन्दगतः पचनाद्भूधरेऽथवा॥१६॥

अथ प्रकारान्तरम्।—

चपलोपलनिर्गुण्डी-रसाभ्यां रसकेन वा॥१७॥

अथ प्रकारान्तरम्।—

वाराहीरसयुक्तेन चक्रमर्दरसेन वा॥१८॥

अथ प्रकारान्तरम्।—

गन्धपाषाणयुक्तेन बद्धं वा वाससा रसम्।
पचेत् गन्धकतैलेन यावदाखोटबन्धनम्॥१९॥

---

प्रकारान्तरमाह: मृणालेति।—पीनगन्धर्वतैलयुक् स्थूलैरण्डतैलसंयुक्तः, स्थूलैरण्डतैलेन सह रसं मर्दयित्वा वैक्रान्तभस्मना सह सम्मिश्य च तेन मृणालतन्तुमालिप्य याममात्रं प्रज्वालयेत्, एवं भस्मतां प्रतिपद्यते॥ १५॥

प्रकारान्तरमाह, वन्ध्येति।—वन्ध्या वन्ध्याकर्कोटकी अमृता कन्दगुडूची, तयोः कन्दगतः कन्दान्तःस्थितः भूधरे भूधरयन्त्रे पचनात् भस्मतां प्रतिपद्यते इति॥ १६॥

प्रकारान्तरमाह, चपलेति।—चपलोपलः द्वितीयाध्यायोक्तः महारसविशेषः। रसकः खर्परः; चपलरसकाभ्यां समाभ्यां तुल्यो रसेन्द्रः निर्गुण्डीरसेन सह मर्दितः भूधरे पचनात् भस्मता प्रतिपद्यते॥ १७॥

प्रकारान्तरमाह, वाराहीति।—अथवा वाराहीरसयुक्तेन चक्रमर्दरसेन मर्दितः भूधरे पचनादित्याद्यन्वयः॥ १८॥

प्रकारान्तरमाह, गन्धेति।—अथवा गन्धपाषाणयुक्तेन गन्धकयुक्तेन वाससा वस्त्रेण बद्धं रसं, रसं गन्धकञ्च वस्त्रमध्ये संस्थाप्य बद्धा च इत्यर्थः, आखोटबन्धनं यावत यावता कालेन आखोटबन्धनं—"बन्धो यः खोटतां यातो ध्मातो ध्मातः क्षयं व्रजेत। खोटबद्धः स विज्ञेयः शीघ्रं सर्वगदापहः॥" इत्येकादशाध्यायोक्तलक्षणक-बन्धविशेषम्; "खोटकं स्वर्णमन्तुल्यं समावर्त्तञ्च कारयेत्। कुक्कुटाण्डनिभं सूतं पटुभेदि भवेत् यदा॥ आवर्जितं पुनस्तद्वत् खोटबद्धरसाकृति॥" इति रसेन्द्र-

गन्धाश्मपिष्टं द्विगुण-गन्धं वा कान्तसम्पुटे ।
गन्धकाद्वा तृतीयांशं कान्तपर्पटमिश्रितम् ॥
मूलिकामर्दितं लोह-पर्पटान्तर्गतं धमेत् ॥२०॥

अथ प्रकारान्तरम् ।—

यद्वा गन्धकपादेन मर्दितं मूलिकारसैः ।
लोहसम्पुटमध्यस्थमङ्गारैर्ध्मातमुत्खनेत् ॥
रोगोक्तयोगयुक्तोऽयं तत्तद्रोगहरो भवेत् ॥२१॥

अथ ज्वरे प्रथमरसकल्पः ।—

समस्तपर्पटक्वाथो भस्मसूतो हरेज्ज्वरम् ॥२२॥

अथ त्रिदोषज्वरे द्वितीयरसकल्पः ।—

दशमूलकषायेण पिप्पल्या च समस्तजम् ॥२३॥

चिन्तामण्युक्तस्वचणकबन्ध इव बन्धनमिति वा, प्राप्नुयादिति शेषः; रसेन्द्रचिन्तामणौ खोटप्रकार उक्तः, यथा—"दरदगुटिकाश्चन्द्रक्षौद्रैर्निरन्तरभावितामरविकनकैः । चिन्तागन्धाश्मना सह भूरिशो रचय सिकतायन्त्रे पाकम् ॥ मुहुर्मुहुरित्यसौ हुतभुजि वसन् वर्धमानं (?) कथञ्चन मुञ्चति ॥ सिद्धमतस्खोटाः" इति । तावत् गन्धकतैलेन पचेत् । ततः गन्धाश्मपिष्टं तुल्यगन्धकेन सह पिष्टम्, अथवा द्विगुणगन्धं रसापेक्षया द्विगुणगन्धकेन सह पिष्टम्, अथवा गन्धकात् तृतीयांशं गन्धकभागमपेक्ष्य तृतीयसंशं रसं, त्रिगुणगन्धकं रसमित्यर्थः, कान्तपर्पटमिश्रितं पर्पटाकारकान्तलोहपत्रमिश्रितं मूलिकाभिः सर्पाक्षीशङ्खिनीत्यादिना उक्तानां रसमारकद्रव्याणां मूलरसैः मर्दितं लोहपर्पटान्तर्गतं पर्पटाकारलोहपत्रमध्यगतं कृत्वा कान्तसम्पुटे कान्तलोहनिर्मितपुट-मध्ये धमेत अङ्गारैः पचेदित्यर्थः ॥ १९।२० ॥

प्रकारान्तरमाह, यद्वेति ।—कान्तपर्पटमिश्रितमिति पदमत्रापि योजनीयम्; अथवा गन्धकपादेन पादमितगन्धकेन सह कान्तपर्पटमिश्रितं रसं मूलिकारसैः रस-मारकद्रव्याणां मूलरसैः मर्दितं लोहसम्पुटमध्यस्थं कान्तसम्पुटे अङ्गारैर्ध्मातम् उत्खनेत् भस्मीकुर्यादित्यर्थः ॥ २१ ॥

प्रथमरसकल्पमाह, समस्तेति ।—स्पष्टम् ॥२२ ॥

द्वितीयरसकल्पमाह, दशमूलेति ।—पिप्पल्या पिप्पलीचूर्णेन । समस्तजं त्रिदोषजं ज्वरमित्यर्थः, हरेदिति पूर्वोक्तेन सम्बन्धः ॥ २३ ॥

अथ रक्तपित्ते तृतीय-चतुर्थरसकल्पौ।—

माक्षिकाभयया वासा-पिप्पल्या वाऽस्रपित्तनुत् ॥२४॥

अथ कासे पञ्चमरसकल्पः।—

कण्टकारीकषायेण पिप्पल्या च स कासजित् ॥२५॥

अथ क्षये षष्ठ-सप्तमरसकल्पौ।—

अजायाः क्षीरसिद्धेन कषाययुक्तेन सर्पिषा।
त्रिफलागन्धकव्योष-गुडैर्वा क्षपयेत् क्षयम् ॥२६॥

अथ क्षयादौ अष्टमरसकल्पः।—

अथ लोहमयीं मूषामायामे द्वादशाङ्गुलाम्।
मर्दितं हेमवाराही-गृहकन्यारसै रसम् ॥२७॥
रसोनपिण्डे दधतीं लोहमय्या सुरन्ध्रया।
निर्गुण्डीपत्रनिर्य्यास-पीतपादसुगन्धया ॥२८॥
गर्भमूषिकया युक्तां सचक्रां सपिधानकाम्।
लम्बितां जलपात्रस्थ-खर्परद्वारि पाचयेत् ॥२९॥

---

तृतीय-चतुर्थरसकल्पद्वयमाह, माक्षिकेति।—अस्रपित्तनुत् रक्तपित्तहरः। रसः इति कर्त्तृपदं सर्वस्मिन्नेव कल्पे योजनीयम् ॥ २४ ॥

पञ्चमरसकल्पमाह, कण्टकारीति।—स्पष्टम ॥ २५ ॥

षष्ठ-सप्तमरसकल्पद्वयमाह, अजाया इति।—पिप्पलीकल्कपादेन चतुर्गुणच्छाग-क्षीरेण च पक्वघृतेन, अथवा त्रिफलादिभिः सह भक्षितो रसः क्षयं क्षपयेत ॥ २६ ॥

अष्टमरसकल्पमाह, अथेति।—हेम धुस्तूरः, वाराही वाराहीकन्दः, गृहकन्या घृतकुमारिका; हेमादिरसैर्मर्दितं तथा रसोनपिण्डे रसोनपिण्डान्तः स्थापितं रसं दधतीं मूषामित्यन्वयः कार्य्यः। सुरन्ध्रया सु शोभनं मानानुरूपमित्यर्थः, रन्ध्रं यस्यां तया रन्ध्रयुक्तया इत्यर्थः, गर्भमूषिकया इत्यस्य विशेषणमेतत्; "सुरन्ध्रया" इत्यत्र "सरन्ध्रया" इति पाठान्तरम्। निर्गुण्डीति।—निर्गुण्डीपत्रनिर्य्यासः पीतो येन तादृशः निर्गुण्डीपत्ररसभावित इत्यर्थः, पादः रसापेक्षया चतुर्थांशः, सुगन्धः यस्यां तथाभूतया; "पादसुगन्धया" इत्यत्र "पादांशगन्धया" इति पाठान्तरम्; गर्भमूषिकया मूषा एव मूषिका, गर्भे या मूषिका तया क्षुद्रमूषान्तरवत्यात्यर्थ-

ऊर्ध्वं वनोत्पलैश्चित्रैरङ्गारैः खादिरैरधः ।
एवमष्टगुणे जीर्णे गन्धके क्षयकुष्ठजित् ॥३०॥

अथ हिक्कायां नवमरसकल्पः ।—

हिक्कां निहन्ति रुचक-बीजपूराम्लमर्दितैः ॥३१॥

अथ छर्दिदाहयोः दशमैकादशरसकल्पौ ।—

छर्दिदाहौ मधुसिता-लाजामुद्गसिताम्बुभिः ॥३२॥

अथ अर्शःसु द्वादशरसकल्पः ।—

अर्शांसि तैलसिन्धूत्थ-पुटपाचितशूरणैः ॥३३॥

---

स्वल्पमूषयेत्यर्थः । सचक्रां मुखसञ्चालनार्थं चक्रचतुष्टयसमन्विताम् । सपिधानकां साच्छादनाम् । तलपात्रस्यार्द्धपरिहारि लम्बितां सजलकुम्भाद्युपरि स्थापितस्य मृत्पात्रविशेषस्य, "तावीया" "थाट्" इति प्रसिद्धस्य अपूपादिपाकार्थं सभाकार-लौहमयपात्रविशेषस्य वा मध्यस्थकृतरन्ध्रे लम्बमानामित्यर्थः । वनोत्पलैः आरण्यगोमयैः । चित्रैः अद्भुतैः, अद्भुतत्वञ्च ऊर्द्धाधो द्विविधाग्निना पाकात् इति बोध्यम् । अयमर्थः,—द्वादशाङ्गुलविस्तारां चक्रसमन्वितां सपिधानां लौहमयीं मूषामेकां कृत्वा तत्र हेमादिरसमर्दितं रसोनपिण्डान्तःस्थं रसं संस्थापयेत् । अपराञ्चैकां निर्गुण्डीपत्ररसभावितेन रसपादिकेन गन्धकेन पूर्णां लौहनिर्मितां सच्छिद्रां स्वल्पाकारां मूषां स्थूलमूषागर्भे संस्थाप्य मूषामुखमावृत्य च सजलकुम्भाद्युपरि स्थापितस्य मृत्पात्रविशेषस्य लौहपात्रविशेषस्य वा मध्यभागस्थितकृतरन्ध्रे स्थूलमूषां तां लम्बितां कुर्य्यात्, अथ यन्त्रस्य ऊर्द्धदेशे आरण्यगोमयम् अधश्च खादिराङ्गारं प्रज्वाल्य पचेत्, जीर्णे च तस्मिन् गन्धके पुनः रसपादं गन्धकं स्वल्पमूषायां दत्त्वा पूर्ववत् पचेत्, एवं यावता रसापेक्षया अष्टगुणगन्धको जीर्णो भवेत्, तावत् पुनः पुनः (द्वात्रिंशद्वारं) कुर्य्यादिति ॥ २७—३० ॥

नवमरसकल्पमाह, हिक्कामिति ।—रुचकं सौवर्चलम् ; उक्तञ्च चक्रदत्ते—"मधु-सौवर्चलोपेतं मातुलुङ्गरसं पिबेत्" इति ॥ ३१ ॥

दशमैकादशरसकल्पद्वयमाह, छर्दिरिति ।—मधुसितालाजामुद्गेन भृष्टमुद्गक्वाथे मध्वादिकं प्रक्षिप्य तेन ; तथा च चक्रसङ्ग्रहे—"कषायो भृष्टमुद्गस्य सलाजमधुशर्करः । छर्द्यतीसारहृद्दाह-ज्वरघ्नः सम्प्रकाशितः ॥" इति । सिताम्बुभिः शर्करोदकेन वा रसभस्म छर्दिदाहौ शमयेदित्यर्थः ॥ ३२ ॥

द्वादशरसकल्पमाह, अर्शांसीति ।—स्पष्टम् । चक्रसङ्ग्रहेऽप्युक्तं—"शाखितं शूरणं

अथ अतीसारे त्रयोदशादिरसकल्पत्रयम् ।—

त्वक्पल्लवैः कषायाणां शृतेनोदश्विदम्भसा ।
क्षीरिण्या वाऽप्यतीसारं—"

अथ विसूच्यां षोडशरसकल्पः ।—

"—विसूचीं कणाहिङ्गुना ॥३४॥

अथ अजीर्णे सप्तदशरसकल्पः ।—

अजीर्णं काञ्जिकैरण्ड-क्वाथपथ्यावलेहतः ॥३५॥

अथ प्रवाहिकायाम् अष्टादशैकोनविंशरसकल्पौ ।—

कषायपल्लवैः पक्वं बालविल्वं सनागरम् ।
सगुडं सरसं हन्ति विम्बिसीं दारुणामपि ॥
विल्वकर्कटिकागर्भं मसूरक्वथिताम्बु वा ॥३६॥

*

कल्कं पक्वाऽग्नौ पुटपाकवत् । अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥" इति । अत्रापि रसभस्म इति कर्त्तृपदं बोद्धव्यम् ॥ ३३ ॥

त्रयोदशादिपञ्चदशान्तरसकल्पत्रयमाह, त्वगिति ।—कषायाणां न्यग्रोधादीनां क्षीरिवृक्षाणामित्यर्थः, कषायरसवद्वृक्षाणामित्यर्थो वा, त्वक्पल्लवैः शृतेन क्वथितेन क्वाथेन, वा अथवा उदश्विदम्भसा उदश्वित् "दध्यम्भसी यदि समे तदुदश्विदाहुः—" इति राजनिघण्टौः अर्द्धजलं तक्रं तदम्भसा तद्द्रवेण उदश्विद्द्रवेणेत्यर्थः ; क्षीरिणी "क्षीरुइ" इति ख्याता, तस्याः स्वरसेन क्वाथेन वा रसभस्म अतीसारं निहन्तीति योजनीयम् । षोडशरसकल्पमाह, विसूचीमिति ।—स्पष्टम् ॥ ३४ ॥

सप्तदशरसकल्पमाह, अजीर्णमिति ।—एरण्डक्वाथः एरण्डमूलक्वाथः ॥ ३५ ॥

अष्टादशैकोनविंशरसकल्पद्वयमाह, कषायेति ।—कषायपल्लवैः कषायाणां जम्बू-दाडिमादीनां पल्लवैः पत्रैः ; यदुक्तं चक्रसङ्ग्रहे—"जम्बूदाडिमशृङ्गाट-पाठाकञ्चट-पल्लवैः । पक्वं पर्य्युषितं बाल-विल्वं सगुडनागरम् ॥" इति । सरसं रसभस्मसहितम् । विम्बिसीं प्रवाहिकाम् । विल्वेति ।—सरसं विल्वकर्कटिकागर्भं मसूरक्वथिताम्बु वा विम्बिसीं हन्ति इत्यन्वयः । विल्वं विल्वशलाटुः कर्कटिका एर्वारुफलत्वक्, तस्या एव द्रव्यगुणे अतीसारहन्तृत्वदर्शनात् ; एतद्द्वयं गर्भे यस्य तादृशं मसूरक्वथिताम्बु, विल्व-कर्कटिकयोः कल्कसाधितेन मसूरक्वाथेन सह रसभस्मसेवनं कुर्य्यात् ॥ ३६ ॥

अथ मूत्रकृच्छ्रे विंशरसकल्पः।—

कृच्छ्रं मूतरसः क्षीर-चोरिणीचुरमाक्षिकैः ॥३७॥

अथ मेहेषु एकविंशरसकल्पः।—

पारदभस्मशिलाजतुकृष्णा-लोहमलत्रिफलाकुलिबीजम्।
तार्क्ष्यनिशारजकोपलकान्त-व्योषरजः खपुरश्च कपित्थात् ॥३८॥
सर्वमिदं परिचूर्ण्य समांशं भावितभृङ्गरसं दिवसादौ।
विंशतिवारमिदं मधुलीढं विंशतिमेहहरं हरिदिष्टम् ॥३९॥

अथ प्लीहादौ द्वाविंश-त्रयोविंशरसकल्पौ।—

न्यग्रोधाद्यसनाद्यैर्वा क्वाथयुक्तो मृतो रसः।
पथ्यालशुनगोमूत्रैः प्लीहगुल्मनिबर्हणः ॥४०॥

अथ पक्तिशूले चतुर्विंशरसकल्पः।—

कलाययूषशम्बूक-क्षाराभ्यां पक्तिशूलनुत् ॥४१॥

अथ आमशूले पञ्चविंशरसकल्पः।—

सव्योषवर्णातिलक्वाथेनाऽऽमशूलस्य नाशनः ॥४२॥

विंशरसकल्पमाह, कृच्छ्रमिति।—चोरिणी "चोरक" इति भाषा। इक्षुरः कोकिलाक्षः, "कुलिखाडा" इति भाषा; क्षीरादिभिः सह मृतरसः कृच्छ्रं मूत्रकृच्छ्रं हन्ति। "क्षीरचोरिणीक्षुरमाक्षिकैः" इत्यत्र "क्षीरगोक्षुरचोरमाक्षिकैः" इति क्वचित पाठः ॥ ३७ ॥

एकविंशरसकल्पमाह, पारदेति।—कल्पोऽयं सप्तदशाध्याये मेहहरनामा पठितः, व्याख्या तत्रैव द्रष्टव्या ॥ ३८-३९ ॥

द्वाविंश त्रयोविंशरसकल्पद्वयमाह, न्यग्रोधादीति।—न्यग्रोधाद्यसनादेः "न्यग्रोध-पिप्पल—" इत्यादिना "असनतिनिशभूर्ज—" इत्यादिना च वाग्भटोक्तेः; न्यग्रोधादीनाम असनादीनां वा क्वाथेन मृतरसं मर्दयित्वा पश्चात रसोनगोमूत्रैः सह पिबेत; "पथ्यालशुन" इत्यत्र "पथ्यालशुन" इति पाठान्तरम ॥ ४० ॥

चतुर्विंशरसकल्पमाह, कलायेति।—कलायः वर्त्तुलकलायः। पक्तिशूलनुत् परिणामशूलहृत ॥ ४१ ॥

पञ्चविंशरसकल्पमाह, सेति।—सुगमम् ॥ ४२ ॥

अथ उदरे षड्विंशरसकल्पः।—

नवनीतसुधाक्षार-भाविताभययोदरे ॥४३॥

अथ कामलायां सप्तविंशरसकल्पः।—

स हितः सहितो यष्टी-वारिणा कामलामये ॥४४॥

अथ पाण्डादौ अष्टाविंशरसकल्पः।—

फलत्रिकादिक्वाथेन पाण्डुशोफे सकामले ॥४५॥

अथ शोथे एकोनत्रिंशरसकल्पः।—

शोफे सविश्वभूनिम्ब-क्वाथगोमूत्रसंयुतः।
निम्बामलककङ्कुष्ठैः प्रशस्तः स मृतो रसः ॥४६॥

अथ कुष्ठे त्रिंशैकत्रिंशरसकल्पौ।—

रसोनराजिकावह्नि-नीलिमार्कवपल्लवैः।
तुल्यं भल्लातकं छित्त्वा क्षीरे तैलं विपाचितम् ॥४७॥
भूशिरीषसुपर्णाख्योः पञ्चाङ्गं माक्षिकं घृतम्।
रसश्च लीढ्वा कुष्ठार्त्तो लिम्पेत्त्रिकटुना तनुम् ॥
रसगन्धकपिष्ट्या वा कटुतैलाभियुक्तया ॥४८॥

षड्विंशरसकल्पमाह, नवनीतेति।—सुधाक्षारः स्नुहीमञ्जकतक्षारः, तद्भाविता-भयया स्नुहीक्षारोदकभावितहरीतक्या उदरे उदररोगे ॥ ४३ ॥

सप्तविंशरसकल्पमाह, स इति।—सः मृतो रसः ॥ ४४ ॥

अष्टाविंशरसकल्पमाह, फलेति।—फलत्रिकादिक्वाथेन "फलत्रिकामृतावासा-तिक्ताभूनिम्बनिम्बजः। क्वाथः क्षौद्रयुतो हन्यात पाण्डुरोगं सकामलम् ॥" इत्युक्त-द्रव्याणां निर्य्यूहेण ॥ ४५ ॥

एकोनत्रिंशरसकल्पमाह, शोफे इति।—निम्बामलककङ्कुष्ठैः तुल्यैः सह मर्दितो मृतो रसः सविश्वभूनिम्बक्वाथगोमूत्राभ्यां संयुतः शोफे प्रशस्तः इत्यन्वयः ॥४६॥

त्रिंशैकत्रिंशरसकल्पद्वयमाह, रसोनेति।—नीली नीलवृक्षः मार्कवपल्लवः भृङ्ग-राजदलम। तुल्यं भल्लातकं रसोनादीनां मिलितानां समं भल्लातकमित्यर्थः, छित्त्वा खण्डशः दत्त्वा इत्यर्थः, क्षीरे चतुर्गुणे दुग्धे; रसोनादिभल्लातकान्तानां पादिककल्केन चतुर्गुणदुग्धेन च तैलं पक्तव्यम्। भूशिरीषः शिरीषः, सुपर्णाख्यो नागकेशरः, अनयोः

अथ कुष्ठे द्वात्रिंश त्रयस्त्रिंशरसकल्पौ ।—

कर्पूरमूलीसहनिम्बतैल-पातालमूलीरसभावितेन ।
रसेन लिह्यात् सकलं हठं वा विचूर्णितं पुष्परसं स कुष्ठी ॥४९॥

अथ कुष्ठे चतुस्त्रिंशरसकल्पः ।—

फेनिलफलाहिदर्वी-कन्दरसं खादतोऽनुदिनम् ।
फेनिलमूलोद्वर्त्तनमाचरतोऽपि च कुतः कुष्ठम् ॥५०॥

अथ किलासे पञ्चत्रिंशरसकल्पः ।—

चित्रकवानरिवायसीतुण्डी-वाकुचिका द्विगुणाः परिपीताः ।
मूत्रयुता मृतसूतसमेतास्तक्रभुजः शमयन्ति किलासम् ॥५१॥

---

पञ्चाङ्गं पत्रपुष्पत्वक्मूलफलरूपम । रसं मृतं रसम् ; तैलादिकं सर्वमेकीकृत्य कुष्ठी लिह्यात् । लिम्पेदिति ।—रसभस्मसेवनानन्तरं विकटचूर्णेन सकटुतैलेन रसगन्धक-कल्केन वा सकटुतैलेन स्वदेहं लिम्पेदिति ॥ ४७।४८ ॥

द्वात्रिंश-त्रयस्त्रिंशरसकल्पद्वयमाह, कर्पूरमूलीति ।—कर्पूरमूली कर्पूरवृक्षस्य ह्रस्व-मूलम ; "कर्पूरमूली" इत्यत्र "कर्पूरवल्ली" इति पाठे—कर्पूरलता इत्यर्थः । सह: सहचरः स्वर्णजीरो वा चनधो. रसः । पातालमूली पातालवासिनी ताम्बूलदल-मित्यर्थः । रसेन मृतरसेनेत्यर्थः । सकलं रोहिषतृणम् । हठं जलकुम्भिकाम् । "सकलं हठम्" इत्यत्र "समुवर्णकम" इति क्वचित् पाठः । पुष्परसं मधु । कर्पूरमूल्यादि-भावितो रसः सकलचूर्णं पुष्परसश्च एतत् सर्वम एकीकृत्य लिह्यात् अथवा प्रोक्तरसः हठचूर्णं पुष्परसश्च सर्वम् एकीकृत्य लिह्यादिति ॥ ४९ ॥

चतुस्त्रिंशरसकल्पमाह, फेनिलेति ।—फेनिलफलं रीठाकरञ्जः । अहिः सूढी, दर्वी गोजी तयोः कन्द मूलम् । रस मृतरसम् । अनुदिनं प्रतिदिनम । फेनिल-फलादिचूर्णं रसञ्च एकीकृत्य उपयुक्तानुपानेन खादेत्, फेनिलमूलकल्केन उद्वर्त्तनञ्च कुर्य्यादिति ॥ ५० ॥

पञ्चत्रिंशरसकल्पमाह, चित्रकेति ।—वानरी शूकशिम्बिः । वायसी काकमाची । तुण्डी आरण्यबिम्बिका । "वायसतुण्डी" इति पाठे—काकतुण्डी "केंचोयांठुटी" इति भाषा । द्विगुणा इति ।—मृतसूतापेक्षया चित्रकादिचूर्णानां मिलितानां द्वैगुण्यमित्यर्थः ॥ ५१ ॥

अथ श्वित्रे षट्त्रिंशत्तमकल्पः ।—

द्रुतगगनमरीची वाकुचीतालपत्री
सलिलरिपुनकुल्यौ कृष्णाशुशठी सभृङ्गम् ।
मरिचमसितसोमश्वित्रकाङ्कोलवीजं
वरतिलशशिलेखे त्वक् च शाखोटकस्य ॥५२॥

फलत्रयञ्च तत् सर्वं मृतसूतसमन्वितम् ।
क्षीरान्नवर्त्तनो जग्ध्वा श्वित्रमाशु निवर्त्तयेत् ॥५३॥

अथ क्रिमौ सप्तत्रिंशत्तमकल्पः ।—

सनिम्बपल्लवक्षौद्रः क्रिमीन् हन्ति मृतो रसः ॥५४॥

अथ वातरोगे अष्टत्रिंशत्तमकल्पः ।—

पीतो लशुनसिद्धेन तैलेनानिलजान् गदान् ॥५५॥

अथ गृध्रस्याम एकोनचत्वारिंशत्तमकल्पः ।—

विश्वैरण्डमृतक्षीर-सहितो गृध्रसीं जयेत् ॥५६॥

अथ वातरक्ते चत्वारिंशत्तमकल्पः ।—

गुडाभयागुडूच्यम्बु-युक्तः पवनशोणितम् ॥५७॥

---

षट्त्रिंशत्तमकल्पमाह, द्रुतेति ।—द्रुतगगनम् अभ्रसत्त्वम् । मरीचिः श्वेतमरकतः, वाकुची सोमराजी । तालपत्री तालमूली । सलिलरिपुः अनलः, भल्लातकमित्यर्थः ; इज्जल इति कश्चित् । नकुली शङ्खपुष्पी जटामांसी वा, उभयोरपि कुष्ठहितत्वात् । कृष्णं कृष्णागुरु । सभृङ्गमित्यस्य मरिचमित्यनेनान्वयः, भृङ्गं भृङ्गराजः । असितः धवः । सोमः कर्पूरः । वरतिलः कृष्णतिलः । शशिलेखा गुडूची । क्षीरान्नवर्त्तनः क्षीरान्नभुक् ॥ ५२।५३ ॥

सप्तत्रिंशत्तमकल्पमाह, सनिम्बेति ।—स्पष्टम् ॥ ५४ ॥

अष्टत्रिंशत्तमकल्पमाह, पीत इति ।—लशुनसिद्धेन रसोनकल्केन चतुर्गुणजलेन च पक्वतैलेनेत्यर्थः ; तैले रसोनं भृष्टा तेन तैलेनेत्यर्थो वा ॥ ५५ ॥

एकोनचत्वारिंशत्तमकल्पमाह, विश्वेति ।—विश्वा शुण्ठी ॥ ५६ ॥

चत्वारिंशत्तमकल्पमाह, गुडेति ।—अभयागुडूच्योः क्वाथे गुडं प्रक्षिप्य तेन सह सेवितं रसभस्म वातरक्तं हन्यात् ॥ ५७ ॥

अथ स्थौल्ये एकचत्वारिंशरसकल्पः ।—

त्रिकटुत्रिफलावेल्लैः समांशो गुग्गुलुर्जयेत् ।
वातारितैलसंयुक्तः स्थौल्यं भस्मरसान्वितः ॥५८॥

अथ स्थौल्ये द्वाचत्वारिंशरसकल्पः ।—

मधूदकाभ्यां युक्तो वा—"

अथ कार्श्ये त्रिचत्वारिंशरसकल्पः ।—

"—कार्श्यन्तु शर्करान्वितः ॥५९॥

अथ अपस्मारादौ चतुश्चत्वारिंशरसकल्पः ।—

हिङ्गुसौवर्चलव्योष-मूत्रसिद्धेन सर्पिषा ।
रसो हन्यादपस्मारमुन्मादञ्च—" ॥६०॥

अथ अपस्मारादौ पञ्चचत्वारिंशरसकल्पः ।—

"—तथाऽञ्जनात् ।
मधूककुनटीतार्क्ष्य-पारावतमलैर्युतः ॥६१॥

---

एकचत्वारिंशरसकल्पमाह, त्रिकट्विति ।—वेल्लं विडङ्गम् । अत्र त्रिकट्वादीनामेको भागः गुग्गुलोश्चापरः । वातारितैलम् एरण्डतैलं, तच्च मर्दनयोग्यम् । त्रिकट्वादियुक्तः वातारितैलसंयुक्तः भस्मरसान्वितश्च गुग्गुलुः स्थौल्यं जयेदिति ॥ ५८ ॥

द्वाचत्वारिंशरसकल्पमाह, मध्विति ।—अथवा मधूदकाभ्यां युक्तो भस्मरसान्वितः गुग्गुलुः स्थौल्यं जयेदित्यन्वयः । त्रिचत्वारिंशरसकल्पमाह, कार्श्यमिति ।—शर्करान्वितः भस्मरसान्वितश्च गुग्गुलुः कार्श्यं जयेदिति ॥ ५९ ॥

चतुश्चत्वारिंशरसकल्पमाह, हिङ्ग्विति ।—अत्र हिङ्गुप्रभृतीनां पञ्चानां प्रत्येकं पलद्वयं कल्कः गोमूत्रञ्च चतुर्गुणम् ; यदाह चक्रपाणिः,—"हिङ्गुसौवर्चलव्योषै-र्द्विपलांशैर्घृताढकम् । चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥" इति । हिङ्ग्वादि-सिद्धेन घृतेन सेवितं रसभस्म उन्मादापस्मारं हन्यादिति ॥ ६० ॥

पञ्चचत्वारिंशरसकल्पमाह, तथेति ।—मधूकं "महुया" इति ख्यातम् । कुनटी मनःशिला । तार्क्ष्यं रसाञ्जनम् । पारावतमलं कपोतविट् । मधूकचूर्णादिसहित-रसभस्मकृता अञ्जनवर्त्तिः प्रयुक्ता उन्मादापस्मारं हन्यादिति । चक्रदत्ते मधूकादिरहित-

अथ पञ्चाशति षट्चत्वारिंशरसकल्पः।—

धान्याम्लपिष्टाष्टमपिप्पलीकान् कार्पासबीजान् करमर्दनेन।
आदाय तैलं मृतसूतयुक्तमाद्या प्रयुञ्जीत विशीर्णरोगिणि॥६२॥

अथ नेत्ररोगे सप्तचत्वारिंशरसकल्पः।—

बर्बूरनिम्बाकिसलाऽऽजपुरीषधूमैः
कासेक्षुराश्मवनितास्तनजेन घृष्टम्।
भल्लातधूपितरसाञ्जनमञ्जयित्वा
साभ्यञ्जनस्नपनमाद्या रुजं निहन्ति॥६३॥

कुनट्यादिभिः अञ्जनविधिर्दृश्यते; तथा च—"मनोह्वा तार्क्ष्यजश्चैव शकृत् पारावतस्य च। अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥" इति॥६१॥

षट्चत्वारिंशरसकल्पमाह, धान्याम्लेति।—धान्याम्लपिष्टा अष्टमी अष्टमांशा पिप्पली यत्र तादृशान्, एवञ्च कार्पासबीजानां सप्त भागाः पिप्पल्याश्च अष्टमो भागः। करमर्दनेन पाणिभ्यां मर्दयित्वेत्यर्थः। "करमर्दनेन" इत्यत्र "करमर्दकेन" इति पाठे—करञ्जफलेनेत्यर्थः। विशीर्णरोगिणि पञ्चशाताख्ये नेत्ररोगे। काञ्जिकेन पिप्पली पिष्टा तेन सह पिष्टकार्पासबीजं मिश्रीकुर्य्यात्, ततः काञ्जिकेनैव तदालोड्य पाणिना मर्दयित्वा च तैलं गृह्णीयादिति॥६२॥

सप्तचत्वारिंशरसकल्पमाह, बर्बूरेति।—बर्बूरः बब्बील "बावला" इति भाषा, तथा निम्बः तयोः किसलः किसलयः। धूमः शिलाजः। कासः काशतृणः; "काम" इत्यत्र "कांस्य" इति क्वचित् पाठः। इक्षुरः कोकिलाक्षः; कासेक्षुरः इत्येकपदत्वे काशतृणमित्यर्थः। अश्म स्वर्णमाक्षिकः। वनितास्तनजेन नारीपयसा। भल्लातधूपितरसाञ्जनम् इत्यत्र रसाञ्जनशब्देन मृतरसकृतमञ्जनं बोध्यं, न तु रसाञ्जनं, रसकल्पत्वात्; अञ्जयित्वा सचयित्वा। साभ्यञ्जनस्नपनम् अभ्यञ्जनम् अभ्यङ्गः स्नपनं स्नानं तैलाभ्यङ्गपूर्वकस्नानमित्यर्थः। अयमत्र कल्पः,—मृतं सूतं स्वर्णमाक्षिकं शिलारसञ्च बर्बूरनिम्बकिसलयरसेन अजापुरीषक्वाथेन कासेक्षुरयोः क्वाथेन नारीस्तन्येन च घृष्ट्वा भल्लातकधूमेन धूपयेत्, ततः तेनाञ्जयित्वा तैलाभ्यङ्गपूर्वकं स्नायादिति। "धूमैः" इत्यत्र "धूपैः" इति पाठे—बर्बूरादीनां धूपैः धूपितरसाञ्जनं तथा भल्लातधूपितरसाञ्जनमिति योजनीयम्॥६३॥

अथ तिमिरे अष्टचत्वारिंशरसकल्पः।—

महाभेरीमूलं तुरगपृथुकाब्धोधिकुवलं
रसो जम्बीराम्ले जयति तिमिरं काचमपि च ॥६४॥

अथ अर्शसि एकोनपञ्चाशत्तमरसकल्पः।—

उपात्तं जीमूताद्रविजधरपर्णाम्बुमृदितात्
रसस्तैलं लेपादिह विविधजाद्यञ्च गुदजान् ॥६५॥

अथ केशकृष्णीकरणे महानीलतैलाख्यपञ्चाशत्तमरसकल्पः।—

वटप्ररोहैः पिण्डीत-मूलत्वक्कृष्णसैर्य्यकैः।
केतकीस्तननिर्य्यास-शकलीत्रिफलार्जुनैः ॥६६॥
पृथक् दशपलैः सार्द्धं चतुर्द्रोणेष्वपां पचेत्।
अष्टभागावशिष्टेऽस्मिन् भृङ्गस्वरसपेषिते ॥६७॥

अष्टचत्वारिंशरसकल्पमाह, महेति।—महाभेरी वचाविशेष तस्या मूलम्। तुरगः अश्वगन्धा। पृथुका हिङ्गुपर्णी। अब्धोधिः टेशाल्लप्रभिद्धः; "अब्धोधि" इत्यत्र "अम्बुधि" इति कल्पना सुगमार्था; अम्बुधिः समुद्रफेनः; चक्षुष्यत्वात्। कुवलं नीलोत्पलम्; चक्षुष्यत्वात्। रसः सूतरसः। जम्बीराम्ले इत्यत्र घृष्ट इति शेषः ॥ ६४ ॥

एकोनपञ्चाशत्तमरसकल्पमाह, उपात्तमिति।—जीमूतात घोषकबीजात् इत्यर्थः, रविजधरपर्णाम्बुमृदितात रविजः अर्काङ्कुरः, धरपर्णं गिरिपत्र गिरिनिम्बः इत्यर्थः, तयोरम्बु रसः ताभ्यां मृदितात् जीमूतात् तैलं तथा रस इत्यन्वयः कार्य्यः। रविजः अर्कक्षीरं धरः कार्पासमूलं पर्णं ताम्बूलम् इति कश्चित्; "पर्णाम्बु" इत्यत्र "पर्णम्बु" इति पाठे—रविजः जलम् "आदित्याज्जायते वृष्टिः" इति स्मरणात्, तस्य धरः मेघः, मुस्तकमित्यर्थः, पर्णी सप्तपर्णः तयोरम्बु। गुदजानित्यस्य जयति इति पूर्व्वोक्तेनान्वयः ॥ ६५ ॥

पञ्चाशत्तमरसकल्पमाह, वटेति।—वटप्ररोहं वटावरोहम्। पिण्डीतकः मदनफलं, तद्वृक्षस्य मूलत्वक्। कृष्णसैर्य्यकः कृष्णपुष्प झिण्टीविशेषः, नीलझिण्टीति यावत्। केतकीस्तननिर्य्यासः केतकीस्तनः केतकीवृक्षस्य स्तनाकारः अंशविशेषः तस्य निर्य्यासः त्वक् क्षीरं वा; "निर्य्यास" इत्यत्र "भल्लातः" इति क्वचित पाठः। शकली शकलम् आमलकं फलत्वेन अस्यास्तीति शकली आमलकपत्रम्। "भृङ्गस्वरसपेषिते" इत्यत्र

त्रिफलानीलीयष्टिचूर्णैः पृथक् द्विपलिकैर्युतम्।
तैलाढकं समक्षीरं पक्वा मृतरसान्वितम् ॥६८॥
महानीलं समुद्गस्थं मण्डलं धान्यमध्यगम्।
अभ्यङ्गविधियोगेन केशानां रञ्जनं परम् ॥६९॥

अथ व्रणे एकपञ्चाशत्तमरसकल्पः।—

त्रिफलापटोलमूलव्योषगुडूचीविडङ्गबीजानि।
समगुग्गुलानि मारितरसमिलितानि व्रणघ्नानि ॥७०॥

अथ ग्रन्थौ द्विपञ्चाशत्तमरसकल्पः।—

ग्रन्थीन् विलेपयेत्तेषां लेपात्—"

अथ मसूरिकायां त्रिपञ्चाशत्तमरसकल्पः।—

"—मूलरसान्वितम्।
नारिकेलोदकं तद्वत् पीतं हन्ति मसूरिकाः ॥७१॥

---

विशेष्यपदाभावात् "भृङ्गस्वरसपोषिते" इति पाठकल्पनं समीचीनम्; तथात्वे—भृङ्गस्वरसेन भृङ्गराजरसेन पोषिते संयोजनात् वर्द्धिते अस्मिन् काले इत्यर्थः। त्रिफलानीलीयष्टिचूर्णानां प्रत्येकं द्विपलानां कल्कः। महानीलं केशानां कार्ष्ण्यातिशय्यसम्पादनात् महानीलमित्याख्यं तैलं समुद्गस्थं सम्पुटस्थं मण्डलम् अष्टचत्वारिंशत् दिनानि व्याप्य धान्यमध्यगं धान्यराशिमध्यस्थम् ॥ ६६—६९ ॥

एकपञ्चाशत्तमरसकल्पमाह, त्रिफलेति।—समगुग्गुलानि त्रिफलादिमिलितचूर्णसमगुग्गुलभागयुक्तानीत्यर्थः। भक्षणविधया प्रयोज्योऽयं कल्पः॥ ७० ॥

द्वापञ्चाशत्तमरसकल्पमाह, ग्रन्थीनिति।—तेषां त्रिफलादीनां मारितरसान्तानां लेपात् ग्रन्थीन् विलेपयेत् लिप्तान् सञ्चितानिव विलीनान् कुर्य्यादित्यर्थः, शरीरेण सह एकीभूतान् कुर्य्यादिति फलितं, भिषक् इति शेषः। "विलेपयेत्" इत्यत्र "विलोपयेत्" इति कल्पना साध्वी। "विनाशयेत्" इति क्वचित् पाठः। त्रिपञ्चाशत्तमरसकल्पमाह, मूलेति।—मूलरसान्वितम् इति पदं नारिकेलोदकमित्यनेन सम्बध्यते; मूलरसान्वितं मोरटान्वितम् इक्षुमूलरसान्वितमित्यर्थः, इक्षुमूलस्य भावप्रकाशे मसूरिकाहरत्वदर्शनात् तथा द्रव्यगुणे "रक्तकृन्मूत्रपित्तानां नाशनः" "रक्तास्रपित्तश्रमशमनपटुः" इत्यादिगुणदर्शनाच्च। तद्वत् रसभस्मवत् मृतरसः इक्षुमूलरस-नारिकेलोदकाभ्यां पीतः मसूरिकाः हन्ति ॥ ७१ ॥

अथ श्विवादौ चतुःपञ्चाशत्तमरसकल्पः ।—

मञ्जिष्ठा शबरोद्भवं तुवरिका लाक्षा हरिद्राद्वयं
नेपाली हरितालकुङ्कुमगदा गोरोचना गैरिकम् ।
पत्रं पाण्डु वटस्य चन्दनयुगं कालेयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केशरम् ॥७२॥
सिक्थं तुत्थं लोहकिट्टं वसाज्यमाजं क्षीरं क्षीरवृक्षाम्बु चाग्नौ ।
सिद्धं सिध्मव्यङ्गनील्यादिनाशि वक्त्रच्छायामैन्दवीमाशु धत्ते ॥७३॥

अथ अस्थिस्रावे पञ्चपञ्चाशत्तमरसकल्पः ।—

कार्पासपल्लवानन्ता-रसतैलयुतो हितः ।
अस्थिस्रावे मृतरसो—" ॥७४॥

---

चतुःपञ्चाशत्तमरसकल्पमाह, मञ्जिष्ठेति ।—शबरोद्भवं शावरलोध्रं श्वेतलोध्रमित्यर्थः । तुवरिका सौराष्ट्रमृत्तिका । नेपाली मनःशिला । गदा पाटलत्वचः । वटस्य पाण्डुपत्रं पाकगतपत्रम् । चन्दनयुग श्वेतरक्तभेदेन चन्दनद्वयम् । कालेयकं अगुरु ; "कालीयकम" इति वाग्भटपाठे—कालीयकाष्ठमित्यर्थ. । पारदं मृतपारदमित्यर्थः । पत्तङ्गं "बकमकाष्ठ" इति लोके । कनकत्वचं चाम्पेयत्वचम् । सिक्थं मधूच्छिष्टम् । वसाज्यमाज क्षीरमित्यत्र वसाज्ये अपि आजे एव ग्राह्ये. क्षीरमाजमेवार्थात् । क्षीरवृक्षाम्बु उडुम्बरत्वक्क्वाथम । अत्र वसाज्ये स्नेहः, मञ्जिष्ठादीनां कल्कः, आजक्षीरं स्नेहसमं. क्षीरवृक्षाम्बु च स्नेहचतुर्गुणं, सर्वं यथायथ पक्तव्यम् । "सिक्थम्" इत्यारभ्य "धत्ते" इत्यन्तस्थाने वाग्भटे—"सिक्थं तुल्यं पद्मकाह्वं वसाज्यं मज्जा क्षीरं क्षीरिवृक्षाम्बु चाग्नौ । सिद्धं सिद्धं व्यङ्गनील्यादिनाशि वक्त्रे च्छायामैन्दवीमाशु धत्ते ॥" इति पाठान्तरम ; वाग्भटोक्तं "पद्मकाह्वम" इत्यत्र "पद्मकाद्यः" इति पाठे –पद्मकाद्यः "पद्मकपुण्ड्रौ वृद्धितुगर्द्धयः शृङ्ग्यमृता दशजीवनसंज्ञाः" इत्युक्तगणः । अत्र वसाज्यमज्जानः स्नेहाः, क्षीरं गव्यं स्नेहसमं, क्षीरिवृक्षाम्बु क्षीरिपञ्चकस्य क्वाथ. । द्वितीयं सिद्धं सिद्धफलम ॥ ७२।७३ ॥

पञ्चपञ्चाशत्तमरसकल्पमाह, कार्पासेति ।—अनन्ता अनन्तमूलम् । कार्पासपत्रानन्तमूलयोः स्वरसः तिलतैलं मृतरसश्च सर्वमेतत् एकीकृत्य लेपविधया प्रयोजयेदिति ॥ ७४ ॥

अथ विषे षट्पञ्चाशत्तमादिरसकल्पषट्कम्।—

"—विषे स्थावरजङ्गमे।

तण्डुलीयकमूलेन वीरामूलेन वा युतः॥

तण्डुलोदकसम्मिश्रः पाननावनलेपने॥७५॥

अथ विषे द्विषष्टितमरसकल्पः।—

सुरभिमूत्ररसभावितकर्पूरसमन्वितो मृतः सूतः।

स्थावरजङ्गमकृत्रिमविषजित्रूत्रामितो दष्टा॥७६॥

अथ सर्पविषे त्रिषष्टितमरसकल्पः।—

यक्षाक्षफेनिलरसोनकटुत्वयोग्रा-

राजी-वराङ्घ्रिवकुलं लकुचाम्बुपिष्टम्।

छायाविशोषितमिदं नरवारिघृष्टं

सर्पापहं सरसमञ्जनतस्त्रिवारान्॥७७॥

अथ सर्पविषे चतुःषष्टितमरसकल्पः।—

पिशाचः पञ्चवर्णस्य बीजं मूलं पुनर्नवात्।

देवदाल्याः फलं मूलं मूलञ्च विषपर्णतः॥

पेषितं नरमूत्रेण सर्वथाऽहिविषापहम्॥७८॥

षट्पञ्चाशत्तमादि-एकषष्टितमान्तरसकल्पषट्कमाह, विषे इति।—तण्डुलीयक-मूलेन स्वल्पमारिषमूलेन। वीरा चीरकाकोली, तण्डुलीयमूलचूर्णयुतः वीरामूल-चूर्णयुतो वा मृतरसः तण्डुलोदकेन पानादिषु प्रयुक्तः स्थावरजङ्गमविषं हन्यात्॥७५॥

द्विषष्टितमरसकल्पमाह, सुरभीति।—गोमूत्ररसेन सप्तवारभावितकर्पूरयुक्तः। सेव्ययोगोऽयम॥ ७६॥

त्रिषष्टितमरसकल्पमाह, यक्षेति।—यक्षः वटवृक्षः। अक्षः विभीतकः। फेनिलः "रीठा" इति ख्यातम्। उग्रा वचा। राजी रक्तसर्षपः। वरा श्वेतापराजिता, विषघ्नीत्वात; तस्या अङ्घ्रिः मूलम्। नरवारिघृष्टं नृमूत्रापिष्टम्। सरसं मृतरस-सहितम॥ ७७॥

चतुःषष्टितमरसकल्पमाह, पिशाच इति।—पिशाचः शाखोटकः, तस्य त्वक्; "पिशाचः" इत्यत्र "पिशाचा" इति पाठान्तरम; "सर्पिषा" इति क्वचित पाठः। पञ्चवर्णस्य धुस्तूरस्य। विषपर्णतः देवताडात मूलं घोषकमूलमित्यर्थः। योगेऽस्मिन् अनुक्तोऽपि प्राकरणिकत्वात् रसभागः प्रदातव्यः। अनेनापि नेत्राञ्जनं कर्त्तव्यम्॥७८॥

अथ उन्दुरुविषे पञ्चषष्टितमरसकल्पः ।—

कपित्थपञ्चकं नीरं रसञ्चाऽऽखुविषापहम् ॥७९॥

अथ वृश्चिकविषे षट्षष्टितमादिरसकल्पचतुष्टयम् ।—

कांस्ये ताम्बूल्या नागरं पिष्टमद्भिः
एवं शैरीषं पिप्पली छागदुग्धैः ।
एवं कार्पासात् सर्पिषा वाऽपि लेपात्
सूतेनोपेतं वृश्चिकानां विषघ्नम् ॥८०॥

अथ विषदिग्धव्रणे सप्ततितमादिरसकल्पद्वयम् ।—

भावितं चणकाम्लेन वस्त्रमम्लेन मर्दयेत् ।
तेन वाकुचिचक्राह्व-कार्पासागस्तिपल्लवान् ॥८१॥
एकस्य लकुचस्याम्ले स्वरसेन रसेन यः ।
प्रक्षालितः प्रयात्येव विषदिग्धव्रणः शमम् ॥८२॥

---

पञ्चषष्टितमरसकल्पमाह, कपित्थेति ।—कपित्थपञ्चकं कपित्थस्य पत्रपुष्पफल-मूलत्वगात्मकपञ्चाङ्गम् । नीरं बालकम् । रसं मृतपारदं, भक्षयेदिति शेषः, तद्भक्षणम् आखुविषापहमिति योजनीयम् ॥ ७९ ॥

षट्षष्टितमरसकल्पादिकोनसप्ततितमरसकल्पमाह, कांस्ये इति ।—कांस्ये कांस्य-भाजने । ताम्बूल्या ताम्बूलीरसेन । अद्भिरित्यस्य एवं शैरीषमित्यनेन सम्बन्धः । कल्पचतुष्टयेऽपि "सूतेनोपेतम्" इति पदं योजनीयम् ॥ ८० ॥

सप्ततितमैकसप्ततितमरसकल्पद्वयमाह, भावितमिति ।—चणकाम्लेन वस्त्र वस्त्र-खण्डमित्यर्थः, भावितं, कुर्य्यादिति शेषः, "भावितं चणकाम्लेन वस्त्रमम्लेन मर्दयेत्" इत्यत्र "भावितश्चणकाम्लेन रसः खल्ले विमर्दयेत्" इति क्वचित् पाठः । ततः तेन वस्त्रेण, वाकुच्यादिपल्लवान्, अन्तरितान् कृत्वा इति शेषः, अम्लेन काञ्जिकेन मर्दयेत् । चक्राह्वः चक्रमर्दः । अथवा अम्ले काञ्जिके, पिष्टस्येति शेषः, एकस्य केवलस्य लकुचस्य स्वरसेन । कल्पद्वयमेतत्, उभयत्रापि रसेन इति सम्बन्धनीयम्; तथा च—चणकाम्लभावितवस्त्रान्तरितानां वाकुच्यादिपल्लवानामम्लपिष्टानां स्वरसेन रस-युक्तेन, तथा अम्लपिष्टस्य केवललकुचस्य स्वरसेन रसयुक्तेन वा यः विषदिग्धव्रणः प्रक्षालितः, भवतीति शेषः, सः शमं प्रयात्येव इति ॥ ८१।८२ ॥

अथ रसायने द्विसप्ततितमरसकल्पः ।—

रसायनोक्तविधिना शुद्धो लब्धबलः पुनः ।
प्रातः प्रातः कणापथ्या-विश्वसैन्धवचित्रकम् ॥८३॥
पीत्वा संरक्षणायाग्नेरीषदुष्णेन वारिणा ।
भृङ्गामलकनिर्य्यासे भावितं व्योमकान्तयोः ॥८४॥
भस्मायःसम्पुटे धान्ये स्थापितं मधुसर्पिषा ।
खादेन्निशि कणापथ्यां मासमेकं तथा पुनः ॥८५॥

अथ रसायने त्रिसप्ततितमरसकल्पः ।—

पातनाभस्म वा युक्तमथ सूतस्य भस्मना ।
जीर्णाल्पहेम्नः षण्मासाच्छतावर्य्या रसेन च ॥८६॥

द्विसप्ततितमरसकल्पमाह, रसायनेति ।—रसायनोक्तविधिना शुद्धः पञ्चकर्मसंशुद्धः लब्धबलः पुनः शोधनानन्तरं संसर्जनादिक्रमेण यदा जातबलो भवेत् तदा इत्यर्थः; "पुनः" इत्यत्र "पुमान्" इति क्वचित् पाठः। धान्ये धान्यराशिमध्ये मासमेकं स्थापितमित्यन्वयः; अत्रापि व्योमकान्ताभ्यां सह अनुक्तस्यापि रसस्य भागो देयः, प्राकरणिकत्वात् इति ज्ञातव्यम्; यदि वा—"मृतानि लोहानि रसीभवन्ति" इति वचनेन रसोल्लेखाभावेऽपि व्योमकान्तयोर्भस्मयोगात् अस्य रसकल्पत्वं न विरुद्धमिति ज्ञातव्यम्; किं वा "सूतस्य पातनाभस्म वा" इति वक्ष्यमाणेनान्वयः कार्य्यः। प्रातः कणादिचूर्णमग्निबलानुरूपमुष्णोदकेन पीत्वा भृङ्गराजामलककाथभावितं लौहपात्रे स्थितं लौहाभ्रयोः भस्म मासमेकं धान्यराशिमध्ये स्थितं रसभस्मसहितं मधुघृताभ्यां खादेत्, ततो निशि पुनरुष्णवारिणा कणापथ्याचूर्णं पिबेदिति ॥ ८३—८५ ॥

त्रिसप्ततितमरसकल्पमाह पातनेति ।—अथवा जीर्णाल्पहेम्नः जीर्णं शोधितमित्यर्थः, अल्पं स्वाभाविकमात्रापेक्षया न्यूनं, यवमानमिति यावत्, "द्वौ यवौ तत्र हेम्नस्तु" इति वचनेन यवद्वयस्य पूर्णमानत्वात्; हेम्नः तस्य भस्मना युक्तम; "जीर्णाल्पहेम्नः" इत्यत्र "जीर्णाभ्रहेम्नः" तथा "जीर्णाल्पहेम" इति च पाठान्तरद्वयम्; सूतस्य पातनाभस्म ऊर्द्धपातनाद्युपायेन शोधनपूर्वकं भस्म; "पातनाभस्म वा" इत्यत्र "पातनाभस्मना" "सूताभस्मना" इति क्वचित् पाठः ॥ ८६ ॥

अथ रसायने चतुःसप्ततितमरसकल्पः।—

त्रिफलां मधुसर्पिर्भ्यां खादिरासनभाविताम्।
मृतहेमरसोपेतां भक्षयेद्भक्षयेज्जराम् ॥८७॥

अथ रसायने पञ्चसप्ततितमरसकल्पः।—

गन्धकेन हतं सूतं कान्तं धात्रीरसेन च।
त्रिफलासहितं खादेज्जीवेदाचन्द्रतारकम् ॥८८॥

अथ रसायने षट्सप्ततितमरसकल्पः।—

चित्रकं त्रिफला भृङ्गा हरिद्राऽञ्जनपत्रिका।
रसास्त्रिमधुरश्चापि जरावैरूप्यनाशनः ॥८९॥

अथ रसायने सप्तसप्ततितमाद्यशीतितमान्तरसकल्पः।—

रसौषधीनां रसभावितानां सितायुतैः क्षीरमधूदकाज्यैः ॥९०॥

अथ रसायने एकाशीतितमरसकल्पः।—

जरां रसो हन्ति च कान्तपात्रे क्षीरं मृतं काञ्चनपादपिष्ट्या ॥९१॥

चतुःसप्ततितमरसकल्पमाह, त्रिफलामिति।—मृतहेमरसोपेतां खदिरासन-भावितां त्रिफलां मधुसर्पिर्भ्यां भक्षयेत् इत्यन्वयः। अभ्यासात् जरां भक्षयेत् इति वाक्यं द्विसप्ततितमादिकल्पत्रयेऽपि योजनीयम् ॥ ८७ ॥

पञ्चसप्ततितमरसकल्पमाह, गन्धकेनेति।—त्रिफलाचूर्णधात्रीरसाभ्यां सह रस-लोहयोः भक्षणं कार्यम् ॥ ८८ ॥

षट्सप्ततितमरसकल्पमाह, चित्रकमिति।—अञ्जनं रसाञ्जनम्। पत्रिका जातीकोषः। त्रिमधुरः घृतमधुगुडरूपमधुरत्रयम्; चित्रकादिरसान्तं सर्वं त्रिमधुरेणाव-लेह्यम् ॥ ८९ ॥

सप्तसप्ततितमादिरसकल्पचतुष्टयमाह, रसौषधीनामिति।—रसभावितानां विदार्यामलकादीनां रसायनद्रव्यसमूहानां सर्पाक्ष्यादीनां रसमारकद्रव्यसमूहानां वा रसेन भावितानां, रसौषधीनां पारदसंयुक्तौषधानाम्; सितायुतैरिति पदं क्षीरादिभिः प्रत्येकेन संयोजनीयम; तथा च—सिताक्षीराभ्यां सितामधुभ्यां सितो-दकाभ्यां सिताज्याभ्यां वा सह इत्यर्थः, प्रयोग इति शेषः, जरां हन्ति इति परेणान्वयः। कल्पचतुष्टयमेतत् ॥ ९० ॥

एकाशीतितमरसकल्पमाह, जरामिति।—रसः मृतरसः। कान्तपात्रे काञ्चनपाद-

अथ रसायने वज्रभस्मरसाख्यः द्व्यशीतितमरसकल्पः ।—

क्षेत्रीकरणमित्युक्तं वज्रभस्मसमं रसम् ।
हंसपादीरसैर्घृष्टं विपचेत्तत् पुटानले ॥८२॥
तुल्यमन्यं रसं तेन पूर्ववन्मर्दितं पचेत् ।
यावच्छक्यं चतुर्थांश-मानेन रसभस्मना ॥८३॥
अम्लपिष्टेन सौवर्णं पत्रमालिप्य मारयेत् ।
राजिकाद्यार्द्रमारभ्य यावन्माषं विवर्द्धितः ॥८४॥

पिष्ट्वा काञ्चनपादस्य पादमितकाञ्चनस्य; पादमितत्वञ्चात्र चौरापेक्षया बोद्धव्यं, विद्धा चक्रिकया । मृतरसः कान्तपात्रे काञ्चनचक्रिकया घृतक्षीरेणालोड्य पेयः इति ॥ ८१ ॥

द्व्यशीतितमरसकल्पमाह, क्षेत्रीकरणमिति ।—क्षेत्रीकरणं देहस्य रसवीर्य्यसहन-क्षमीकरणमित्यर्थः, वज्रभस्मरससेवने देहः रसवीर्य्यसहनक्षमो भवतीत्याशयः । रसेन्द्रचिन्तामणौ क्षेत्रीकरणमुक्तं, तद्यथा—"स्निग्धं स्विन्नं विरिक्तं यद्वीकृतं सिद्धभेषजैः । एतत् क्षेत्रं समासेन रसवीर्यार्पणक्षमम् ॥ स्निग्धं प्रातस्त्रिदिनं घृततैलवसापानेन । विरिक्तमिच्छाभेदिना वान्तं वचादिरसेन ॥ पलाशबीजं विडङ्गं गुडगोदकभक्षणात् कीटघातनम् । नीरुजं संवत्सरमयनं वा परिशालितैः ॥ शृङ्गाराभ्र-लक्ष्मीविलासादिरसप्रधानप्रयोगैः । इति शुद्धो जातबलः शाल्योदन-जाङ्गलादिमुद्गरसैः ॥ क्षेत्रीकृतनिजदेहः कुर्वीत रसायनं मतिमान् । अकृते क्षेत्री-करणे रसायनं यो नरः प्रयुञ्जीत ॥ तस्य जायते न रसः सर्वाङ्गदोषकृत भवति । घनसत्त्वपादशेषोऽर्द्धकान्तभागश्च तीक्ष्णसमजीर्णः ॥ क्षेत्रीकरणाय रसः प्रयुज्यते भूयः आरोग्याय ॥" इति । अस्यैव एकादशेऽप्युक्तं यथा—"सुशोधितरसः सम्यगारोट इति कथ्यते । स क्षेत्रकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ॥" इति । तत् वज्रभस्मसमं रसम् । तुल्यमिति ।—तेन पूर्वोक्तरसभस्मना तुल्यम् अन्यं रसं पारदं, पूर्ववत् मर्दितं हंसपादीरसैर्घृष्टं यावच्छक्यं यावन्तं पुटं दातुं शक्नुयात् तावत् पचेत्, पुटानले इति शेषः; यद्वा—अन्यं रसं महारसोपरसादिकं यावच्छक्यं यावत्कालं पुटं दातुं शक्नुयात् तावत्कालं पूर्ववत् मर्दितं पचेत् । चतुर्थांशमानेन इति पदं सौवर्णपत्रापेक्षया बोध्यम् । रसभस्मना पूर्वोक्तदिशा भस्मीकृतेन रसेन; "रसभस्मना" इत्यत्र "अनेन भस्मना" इति क्वचित् पाठः । राजिकाऽर्द्धार्द्धं राजिकायाः सर्षपस्य अर्द्धस्य अर्द्धं

चित्रकार्द्रकसिन्धूत्थ-तीक्ष्णासौवर्चलैः सह ।
सेवितः पलपर्यन्तं रसोऽयं वज्रपञ्जरः ॥
शरण्यः परिभूतानां व्याधिवार्द्धकमृत्युभिः ॥९५॥

अथ रसायने पञ्चामृतरसाख्यः व्याधीतिमरसकल्पः ।—

हेममाक्षिककान्ताभ्र-वज्रभस्म प्रवेशयेत् ।
रसे सहेम्नि सप्ताहं मूलिकारसमर्दिताम् ॥९६॥
तां पिष्टिं यन्त्रयोगेन पचेत् पञ्चामृताह्वयः ।
रसोऽयं मधुसर्पिर्भ्यां युक्तः पूर्वाधिको गुणैः ॥९७॥

अथ रसप्रयोगे उपचारविधिः ।—

घनसारचतुर्जात-कक्कोलं कटुकीफलम् ।
फलं ताम्बूलवल्लीनां रसस्याऽऽक्रमणं परम् ॥९८॥

काञ्जिकापादमित्यर्थः । विवर्द्धितः प्रतिदिनं काञ्जिकापादक्रमेण वर्द्धित इत्यर्थः । तीक्ष्णा वचा । पलपर्य्यन्तं काञ्जिकापादमारभ्य प्रतिदिनं पादवृद्धिक्रमेण माषं यावत् वर्द्धयेत्, एवं यावत्कालसेवनेन मिलित्वा पलमानं पूर्य्यते तावत् सेवेत । अयमर्थः,—आदौ वज्रभस्मना तुल्यं रसं हंसपादीरसैः पुटपाकं कुर्य्यात्, ततः तेन रसभस्मना सह समपरिमितमन्यं रसं पूर्ववत् पचेत्, ततः स्वर्णपत्रापेक्षया चतुर्थांशेन चक्र-पिष्टेन तेनैव रसभस्मना सह मारितं सुवर्णभस्म चित्रकादिभिः सह यथोक्तमानेन प्रयोजयेदिति निष्कर्षः ॥ ९२—९५॥

व्याधीतिमरसकल्पमाह, हेममाक्षिकेति ।—हेममाक्षिकं स्वर्णमाक्षिकम् । स्वर्णमाक्षिकभस्मादिकं सहेम्नि रसे पूर्वप्रदर्शितविधिना रसभस्मान्तस्वर्णपत्रकृतभस्मनि प्रवेशयेत् मिश्रयेदित्यर्थः । सप्ताहं मूलिकारसमर्दितां सर्पाक्ष्यादीनां रसमूलिकानां रसेन सप्ताहं मर्दितां तां पिष्टिं हेममाक्षिकादिकृतां चक्रिकाम् । पूर्वाधिकः वज्रपञ्जरोक्तगुणादप्यधिकः ॥ ९६।९७ ॥

रससेवायाम् उपचारविधिमाह, घनसारेति ।—घनसारः कर्पूरः । कटुकीफलं लताकस्तूरीबीजम्; "कटुकीफलम्" इत्यत्र "कटुकं फलम्" इति पाठे—कटुकं त्रिकटुकं फलं त्रिफला जातीफलं वा । फलं ताम्बूलवल्लीनां गुवाकफलमित्यर्थः; "फलं ताम्बूलवल्लीनाम्" इत्यत्र "फलं ताम्बूलवल्ली च" इति पाठकल्पना सुगमा; तत्पक्षे—फलं जातीफलम् । ताम्बूलवल्ली पर्णलता । रसस्य परम् आक्रमणं

भुञ्जीत शालिगोधूम-यवषष्टिकजाङ्गलम्।
मुद्गयूषं गवां क्षीरं मस्तु स्नायात् सुखाम्भसा॥
रूपयौवनसम्पन्नामनुरूपां प्रियां भजेत्॥९९॥

अथ रससेवने अपथ्यानि।—

अभ्यङ्गं कटुतैलेन काञ्जीतैलं सुरां दधि।
कालिङ्गकारवेल्लाम्ल-लशुनासुरिमूलकम्॥१००॥
द्विदलं विल्ववार्त्ताकं छत्राकं काकमाचिकाम्।
सङ्गमं मर्द्दनं रात्रौ जागरं स्वपनं दिवा॥१०१॥
अत्यम्लतिक्तलवणं स्वादूष्णं शिशिरौषधम्।
शोकवातातपक्रोध-चिन्ताश्च परिवर्जयेत्॥
साहसं रसलोहानां मारकञ्च विशेषतः॥१०२॥

अथ निषिद्धद्रव्यव्यवहारे दोषः।—

सेवया परिहार्य्याणां रसस्याजरणा भवेत्।
शूलो नाभितले जाड्यं निद्रालस्यं ज्वरस्तमः॥
अङ्गभङ्गोऽरुचिर्दाहः—" ॥१०३॥

---

सम्प्रत्यर्थं, रससेवने एतेषां सेवनं रसवीर्य्यस्य शीघ्र सर्वदेहे विक्षेपकारणमित्यर्थः। सुखाम्भसा ईषदुष्णोदकेन। मुद्गयूषः अखण्डितमुद्गकृतयूष इति बोध्यं, परत्र द्विदलनिषेधात्॥ ९८।९९॥

अपथ्यमाह, अभ्यङ्गमिति।—काञ्जीतैलं काञ्जिकविशेषः। कालिङ्गं "तरमुज" इति ख्यातम्। आसुरिः राजिका। द्विदलमिति मुद्गादन्यत् मसूरादिकमित्यर्थः, विदलीकृतमुद्गादिकमित्यर्थो वा। छत्राकं भूच्छत्राकं. खेदजः शाकविशेषः इति यावत्। रसलोहानां मारकं रसमारकद्रव्यगणं लौहमारकद्रव्यगणञ्च विशेषतः वर्जयेत्॥ १००—१०२॥

निषिद्धसेवने दोषानाह, सेवयेति।—अजरणा जरणाभावः, सेविती रसो न जीर्य्यतीत्यर्थः॥ १०३॥

अथ निषिद्धद्रव्यव्यवहारजदोषे प्रतीकार: ।—

"—पिबेत्तत्र दिनत्रयम् ।
सौवर्चलं सगोमूत्रं कर्कोटीमूलवारिणा ॥
मातुलुङ्गस्य वाऽम्लेन माणिमन्थं सनागरम् ॥१०४॥

अथ नागवङ्गयुक्तरससेवने प्रतीकार: ।—

नागवङ्गयुत: सूत: प्रमादाद्भक्षितो यदि ।
सैन्धवं कारवेल्लस्य कन्दं मूत्रै: पिबेद्गवाम् ॥१०५॥
कर्कोटीगरुडीपथ्या-शरपुङ्खैर्विपाचितै: ।
अष्टभागावशिष्टं वा गोमूत्रं सैन्धवान्वितम् ॥१०६॥
यत् चेतीकरणं पूर्वं वेधकञ्च रसं तत: ।
सेवेत तस्य सिद्धि: स्यादन्यथा मरणं ध्रुवम् ॥१०७॥

अथ रसायने मृतसञ्जीवन्याख्य: चतुरशीतितमरसकल्प: ।—

कान्ताभ्रताप्यसत्त्वानां वज्रहेम्नो रसस्य च ।
सप्ताहमम्लपिष्टानां गोलके लेपितेऽन्वहम् ॥१०८॥
गोजिह्वावायसीपथ्या-निर्गुण्डीमधुसैन्धवम् ।
स्विन्ने भूधरयन्त्रस्थे पश्चात् कठिनतां गते ॥१०९॥

निषिद्धद्रव्यसेवनजदोषे प्रतिकारमाह, पिबेदिति ।—माणिमन्थं सैन्धवम् ॥१०४॥

अशुद्धपारदसेवने प्रतीकारमाह, नागेति ।—नागवङ्गयुत: सम्यक्शोधनाभावात् अनपगतनैसर्गिकनागवङ्गदोष: । मूत्रैरिति पदं कर्कोट्यादिविपाचितैरित्यन्तश्लोकार्द्धमान्वीयते । गरुडी गुडूची । विपाचितैरिति पदं विभक्तिविपर्य्यासेन विपाचितमिति पठित्वा अष्टभागावशिष्टं गोमूत्रमित्यनेन सम्बन्धनीयम् । "विपाचितै:" इत्यत्र "विपाचितम्" इति क्वचित् पाठ: । तत: नागवङ्गदोषयुक्तरससेवनजनितदोषशोधनाय सैन्धवादियोगद्वयान्यतरयोगसेवनानन्तरं यत् यं चेतीकरणं चेतीकरणयोग्यं सम्यक्शोधितमित्यर्थ:, वेधकं वेधाख्यसंस्कारसंस्कृतञ्च रसं पूर्वम्, उक्तमिति शेष:, तं सेवेत इत्यन्वय: ॥ १०५—१०७ ॥

चतुरशीतितमरसकल्पमाह, कान्तेति ।—सप्ताहम् अम्लपिष्टानां काञ्जिकपिष्टानां कान्तादीनां गोलके, तथा अन्वहं प्रतिदिनं, सप्ताहमित्यर्थ:, गोजिह्वादिरसं मधुसैन्धवञ्च, दत्त्वा दत्त्वा इति शेष:, लेपिते, भूधरयन्त्रस्थे स्विन्ने कठिनतां गते भूधर-

यवचिञ्चापलाशाक्ष-राजिकार्पासतण्डुलैः ।
आवर्त्तितान्तर्लिप्तायां मूषायां खदिराग्निना ॥११०॥
टङ्कणं श्वेतकाचञ्च दत्त्वा दत्त्वा विशोषिते ।
मूषायां विड्योगेन समांशं हेम जारयेत् ॥१११॥
संवत्सरं मुखधृता मृतसञ्जीवनी मता ।
गुटिका शुक्रस्तम्भं कुरुते हरते च जरामरणम् ॥११२॥

अथ वाजीकरणे मदनवर्द्धनाख्यः पञ्चाशीतितमरसकल्पः ।—

समचीर्णजीर्णहेममाक्षिकयोगेन मारितो तुल्यः ।
घृतमधुशतावरीरसदुग्धयुतो मदनवर्द्धनः सूतः ॥११३॥

अथ वाजीकरणे षडशीतितमरसकल्पः ।—

लोहितागस्त्यसारेण कृष्णरम्भाफलद्रुतम् ।
रसञ्च घनसारञ्च पीत्वा स्त्रीषु वृषायते ॥११४॥

---

यन्त्रस्थे तस्मिन् गोलके स्विन्ने पक्के कठिनतां गते च स्वेदादेव काठिन्यं प्राप्ते सति, पश्चात् पश्चादूर्ध्वं, यवचिञ्चा चोरिणी, अक्षः विभीतकः, राजी राजिका, कार्पासं कार्पासबीजं, तण्डुलं तण्डुलीयशाकं तैः, आवर्त्तितान्तर्लिप्तायां मर्दितयवचिञ्चादिभिः लिप्तोदरायां मूषायां, संस्थाप्येति शेषः, टङ्कणं तथा श्वेतकाचं सौरकं शुभ्रकाचचूर्णं वा, दत्त्वा दत्त्वा किञ्चित् किञ्चित् प्रक्षिप्य, खदिराग्निना खदिरकाष्ठाङ्गारेण विशोषिते मूषायां पूर्वोक्तायामेव विड्योगेन रससारकाविडसहकारेण समांशं गोलकतुल्यं हेम स्वर्णं जारयेत्, अनन्तरं गुटिकाकारं कृत्वा व्यापयेद्रोति। "गुटिका शुक्रस्तम्भं कुरुते हरते च जरामरणम्" इति पाठस्य भग्नवृत्तादिदोषदुष्टत्वात् "स्तम्भाति गुटिका शुक्रं हरते मरणं जराम्" इति पाठकल्पनं सङ्गतम् ॥ १०८—११२ ॥

पञ्चाशीतितमरसकल्पमाह, समेति ।—समः तुल्यः सूततुल्य इत्यर्थः, चीर्णः सञ्चितः, गृहीतः इत्यर्थः, जीर्णश्च जारितश्च यः हेममाक्षिकः तद्योगेन मारितः सूतः इत्यन्वयः ॥ ११३ ॥

षडशीतितमरसकल्पमाह, लोहितेति ।—लोहितागस्त्यसारेण रक्तवकपुष्पस्वरसेन । कृष्णरम्भाफलद्रुतं कृष्णवर्णकदलीफलनिर्य्यासम् । घनसारं कर्पूरम् । कृष्णरम्भादिद्रव्यं समभागं रक्तागस्त्यरसेन पिबेदिति ॥ ११४ ॥

अथ रसायने सन्दिहानान् प्रति उक्तिः ।—

युगस्वभावात् यदि चौषधीनां क्रियासु शक्तिः परिकल्पतेऽल्पा ।
आयुर्बलादिष्वपि सा तथेति तस्मान्निषेव्याणि रसायनानि ॥११५॥
न चौषधीनामपि सर्वथैव प्रभावहानिः परिकल्पनीया ।
फलं प्रयात्यूर्द्धमधस्त्रिवृच्च प्रत्यक्षतः कस्य न सिद्धमेतत्? ॥११६॥

अथ औषधानां गुणदोषवत्त्वे प्रयोक्तुः ज्ञत्वाज्ञत्वयोः हेतुता ।—

अदेशकालोपहितानि सात्म्यान्यत्युष्णतीक्ष्णानि यथौषधानि ।
नाशं नयन्ते सहसैव देहं सम्यक् प्रवृत्तानि यथैव वृद्धिम् ॥११७॥
जित्वा तस्मादिन्द्रियादिप्रदुष्टान् कालोपेतः श्रद्धाना यथावत् ।
आयुष्यं प्रातिजसं यद्विप्रवृद्धैर्वीर्य्योपेतं शीलयेदौषधं तत् ॥११८॥

अथ आचाररसायनम् ।—

शास्त्रानुसारिणी चर्य्या चित्तज्ञाः पार्श्ववर्त्तिनः ।
बुद्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥११९॥

---

ये खलु विज्ञम्मन्याः सततमेवं ब्रुवते यत् इदानीमोषधयः अल्पवीर्य्याः सञ्जाताः न ताभिः किञ्चित् फलं लभ्यते, सुतरां प्रयोगस्तासां निष्फलः, तान् प्रत्याह, युगस्वभावादिति ।—आयुर्बलादिष्वपि इत्यत्र आदिपदेन अग्निप्रभृतीनां ग्रहणं, सा तथा शक्तिरल्पा जाता ; अल्पायुष्कादिके पुंसि अल्पशक्तिकमेवौषधं प्रयोज्यं, न महावीर्य्यं सोढ़ुमशक्यत्वात् । फलं मदनफलम् ऊर्द्धं प्रयाति वामयतीत्यर्थः ॥ ११५।११६ ॥

औषधानां फलप्रदत्वे प्रयोक्तुः विमृश्यकारितायाः हेतुतामाह, अदेशेति ।—अदेशकालोपहितानि तत्तदौषधप्रयोगानर्हे देशे काले च प्रयुक्तानीत्यर्थः, मिथ्योपयुक्तानीति यावत् । सात्म्यानि प्रकृतिसुखावहान्यपीत्यर्थः । सम्यक् प्रवृत्तानि देशकालादिकं विभज्य यथायथं प्रयुक्तानि । "यथैव" इत्यत्र "तथैव" इति पाठकल्पना साधीयसी । इन्द्रियादिप्रदुष्टान् कामक्रोधादीन् मानसदोषानित्यर्थः । कालोपेतः अनतीतौषधप्रयोगकालः ॥ ११७।११८ ॥

इदानीमाचाररसायनमाह, शास्त्रेति ।—शास्त्रानुसारिणी चर्य्या शास्त्रविहिताचारानुष्ठानम् । चित्तज्ञाः इङ्गितज्ञाः पार्श्ववर्त्तिनः सहचराः, तुल्यशीलाः सखाय इत्यर्थः । अर्थेषु इन्द्रियार्थेषु अस्खलिता अप्रमत्ता, न विपर्य्यस्ता बुद्धिः, रूपादिषु

दानं शीलं दया सत्यं ब्रह्मचर्य्यं कृतज्ञता ।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः ॥१२०॥

अथ आयुर्वेदोपदेशस्य अवश्यपालनीयत्वोक्तिः ।—

एतदागमसिद्धत्वात् प्रत्यक्षफलदर्शनात् ।
मन्त्रवत् सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन ॥१२१॥

अथ कुवैद्यानां वर्जनीयत्वोक्तिः ।—

लोभयन्त्यातुरं मूर्खा विचित्रैः कर्मकौशलैः ।
तेभ्यो रक्षेत् सदाऽऽत्मानमात्मा यस्मात् सुदुर्लभः ॥१२२॥
ते घुणाक्षरवत् कञ्चिदुत्थाप्य नियतायुषम् ।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम् ॥१२३॥
अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
तान् वर्जयेद्भिषक्पाशान् पाशान् वैवस्वतानिव ॥१२४॥

---

अनासक्तत्वात् जितेन्द्रियत्वम् इत्यर्थः । परिपूर्णं रसायनं रसायनयोगसेवनमन्तरेणापि एतत् सर्वं रसायनफलप्रदं भवेदित्यर्थः । मैत्री सर्वभूतेषु मित्रबुद्धिः । गणः एष दानादिसमूहः, पुण्यायुर्वृद्धिकृत्, अत एव रसायनानि दानादिसम्पन्नाः पुरुषाः नित्यमेव रसायनफलमजरत्वादिकं समश्नुवन्ति इत्यर्थः ॥११९।१२०॥

आयुर्वेदोपदेशस्य रसायनस्य च अवश्यकरणीयत्वमाह, एतदिति ।—एतत् आयुर्वेदानुशासनं रसायनं वा । न मीमांस्यं कथञ्चन युक्त्यादिप्रदर्शनपुरःसरं समूलकत्वामूलकत्वे विश्वसनीयत्वाविश्वसनीयत्वे च न स्थापनीये इत्यर्थः ; उक्तञ्च—"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥" इति ॥ १२१ ॥

कुवैद्यानां दोषं वर्जनीयत्वञ्चाह, लोभयन्तीति ।—मूर्खाः वैद्याभिमानिनः अज्ञाः इत्यर्थः, भिषक्छद्मचरा इति यावत् । विचित्रैः अद्भुतैः मोहजनकैरित्यर्थः, कर्मकौशलैः चिकित्साकर्मसु आत्मनो नैपुण्यख्यापनैरित्यर्थः । ते मूर्खवैद्याः घुणाक्षरवत् घुणाक्षरन्यायेन घुणाख्यकाष्ठकीटोत्कीर्णाक्षरवत्, नियतायुषम् आयुष्मन्तं कञ्चित् आतुरम् उत्थाप्य रोगादुत्थाप्य वैद्याभिमानेन अहं सुवैद्यः अमुकममुकरोगादुद्धारयामासमिति गर्वेण । शास्त्रमात्रपरायणान् शास्त्रनिविष्टवर्णसीमामात्रधारणशीलान्, किन्तु अज्ञातशास्त्रसद्भावान् अज्ञातः शास्त्राणाम् आयुर्वेदादितन्त्राणां, सद्भावः प्रकृताभिप्रायः, निगूढार्थः इति यावत्, यैस्तान् शास्त्रमर्मानभिज्ञान्, भिषक्पाशान् कुत्सितो भिषक्

अथ शास्त्रज्ञवैद्यस्य साफल्योक्तिः ।—

**प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः ।**
**ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥१२५॥**

भिषक्पाशः तान् कुवैद्यान् वैवस्वतान् पाशान् यमपाशानिव, जीविताकर्षकत्वात् । चरकेणाप्युक्तं—"श्रुतदृष्टक्रियाकाल-मात्राज्ञानबहिष्कृताः । वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि ॥ वृत्तिहेतोर्भिषङ्मान पूर्णान् मूर्खविशारदान् । वर्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥ ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः । जितहस्ता जितात्मानः तेभ्यो नित्यकृतं नमः ॥" इति । अन्यच्च—"वरमात्मा हुतोऽज्ञेन न चिकित्सा प्रवर्त्तिता । पाणिचाराद्यथाऽचक्षुरज्ञानाद्भीतभीतवत् । नौर्मारुतवशेवाज्ञो भिषक् चरति कर्मसु ॥ यदृच्छया समापन्नमुत्तार्य नियतायुषम् । भिषङ्मानी निहन्त्याशु शतान्यनियतायुषाम ॥" इति ॥१२२—१२४ ॥

अधिगतशास्त्रार्थस्य धीमतो भिषजः चिकित्सिते साफल्यं दर्शयति, प्रदीपभूतमिति ।—शास्त्रं शास्त्राभ्यासः, प्रदीपभूतं प्रदीपस्वरूपम्, अज्ञानतमोनाशकत्वात् । विपुला महती, ऊहापोहवती, मतिः बुद्धिः दर्शनं नेत्रभूतम् । सुयुक्ताभ्यां शोभनं यथा तथा मिलिताभ्यां ताभ्यां शास्त्रमतिभ्यां, न केवलं शास्त्रं न वा केवलां मतिं, किन्तु शास्त्रमात्ममतिञ्च उभयमेव प्रमाणीकृत्य इत्यर्थः : दीपाभावे चक्षुष्मतोऽपि यथा ज्ञानं न सम्भवति, यथा च दीपसत्त्वेऽपि चक्षुर्विहीनस्य न ज्ञानं जायते, किन्तु दीपचक्षुषोरुभयोरेव युगपत्प्रवृत्तौ ज्ञानं भवति, एवमनधीतायुर्वेदः विपुलमतिरपि अथवा अधीतायुर्वेदोऽपि मूढधीश्चेत् न सुचिकित्सां कर्त्तुमर्हति, किन्तु ऊहापोहपूर्वकं शास्त्रमाश्रित्य चिकित्सन् चिकित्सां कुर्वन् नापराध्यति आतुरेषु न प्रमाद्यति, साध्यरोगिणमवश्यमेव रोगेभ्यः प्रमोचयतीत्यर्थः । चरकेणाप्युक्तं—"तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने । भिषक् चतुष्टये युक्तः प्राणाभिसर उच्यते ॥ हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ॥ शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये । पात्रापेक्षीण्यतः प्रज्ञां चिकित्सार्थं विशोधयेत् ॥ विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया । यस्यैते षड्गुणास्तस्य न साध्यमतिवर्त्तते ॥ विद्या मतिः कर्मदृष्टिरभ्यासः सिद्धिराश्रयः । वैद्यशब्दाभिनिष्पत्तावलमेकैकमप्यदः ॥ यस्य त्वेते गुणाः सर्वे सन्ति विद्यादयः शुभाः । स वैद्यशब्दं सद्भूतमर्हन् प्राणिसुखप्रदः ॥ शास्त्रं ज्योतिःप्रकाशार्थं दर्शनं बुद्धिरात्मनः । ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥" इति ॥ १२५ ॥

अथ चिकित्सायाः त्रिवर्गसाधकत्वोक्तिः।—

क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचित् यशः।
क्वचिदभ्यासयोगश्च चिकित्सा नास्ति निष्फला ॥१२६॥

अथ कुवैद्यस्य निरयभाक्त्वोक्तिः।—

ये क्रियां विक्रियां कुर्वन्त्युपेक्षन्ते स्खलन्ति वा।
खादन्ति ते परप्राणान् निजानि सुकृतानि च ॥१२७॥

अथ यावच्छ्वासं चिकित्सायाः कर्त्तव्यत्वोक्तिः।—

यावदुच्छ्वसिति प्राणी यावद्भेषजमत्ति च।
तावच्चिकित्सा कर्त्तव्या दैवस्य कुटिला गतिः ॥१२८॥

अथ वैद्यातुरयोरन्योऽन्यकर्त्तव्यनिर्देशः।—

अनाथान् रोगिणो वैद्यः पुत्त्रवत् समुपाचरेत्।
प्राणाचार्य्यश्च पितृवत् सम्पूज्यः शक्तिभक्तितः ॥१२९॥

अथ वैद्यानां सुलभाजीवत्वनिर्देशः।—

न प्राणिरहितो देशो न च प्राणी निरामयः।
तस्मात् सर्वत्र भिषजां कल्पिता एव वृत्तयः ॥१३०॥

---

चिकित्सायास्त्रिवर्गसाधकत्वमाह, क्वचिदिति।—सुगमम् ॥ १२६ ॥

कुवैद्यस्य निरयभाक्त्वमाह, ये इति।—क्रिया चिकित्साकर्म, विक्रियां विपरीतां दूषितामित्यर्थः, अज्ञानादिति शेषः। उपेक्षन्ते, क्रियाकालमातुरं वा इति शेषः, अत्रापि अज्ञानादिति शेषो बोध्यः, एवमुत्तरत्रापि। स्खलन्ति प्रमाद्यन्ति, चिकित्सायामिति शेषः ॥ १२७ ॥

यावच्छ्वासं चिकित्सायाः करणीयत्वमाह, यावदिति।—स्पष्टम् ॥ १२८ ॥

वैद्यातुरयोरन्योऽन्यकर्त्तव्यमाह, अनाथानिति।—प्राणाचार्य्यः प्राणानां गच्छतां हितोपदेशादिना रक्षणात् आचार्य्य इव आचार्य्यः, "शीलवान् मतिमान् युक्तः विजातिः शास्त्रपारगः" इत्येवं-लक्षणकः भिषगित्यर्थः। यदुक्तं चरके—"शीलवान् मतिमान् युक्तः विजातिः शास्त्रपारगः। प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्य्यः स हि स्मृतः ॥" इति। शक्तिभक्तितः शक्तिं भक्तिञ्चानतिक्रम्य, भक्तिपूर्वकं यथाशक्ति इत्यर्थः ॥ १२९ ॥

वैद्यानां सुलभाजीवत्वमाह, नेति।—सुगमम् ॥ १३० ॥

अथ पुरावृत्तवर्णनद्वारा वैद्यस्य सर्वपूज्यत्वनिर्देशः।—

यज्ञस्य च शिरश्छिन्नमश्विभ्यां सन्धितं पुरा।
पातिता दशनाः पूष्णो भगस्य च विलोचने ॥१३१॥
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः।
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः॥
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा ॥१३२॥
एभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥१३३॥
सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते।
अश्विभ्यां सहितः सोमं प्रायः पिबति वासवः ॥१३४॥
अश्विभ्यां कल्पितो भागो यज्ञेषु च महर्षिभिः।
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ॥१३५॥
वैद्यावित्यश्विनौ देवौ पूज्येते विबुधैरपि।
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः ॥१३६॥
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नाऽऽत्मशक्तितः? ॥१३७॥

---

पुरावृत्तोद्घाटनपुरःसरं वैद्यानां पूज्यत्वमाह, यज्ञस्येति।—यज्ञस्य हि शिरश्छिन्नं पुरा दक्षयज्ञकाले नन्दीकेश्वरेण यज्ञस्य मस्तकं त्रुटितमिति वार्त्ता। सन्धितं संयोजितम्। पूष्णः पूषाख्याऽऽदित्यभेदस्य दशनाः दन्ताः पातिता भग्नीकृताः; वीरभद्रेणेति शेषः। भगस्य तदाख्याऽऽदित्यभेदस्य; उभयत्रापि "अश्विभ्यां सन्धितं पुरा" इति वाक्यं विभक्तिविपरिणामेन "अश्विभ्यां सन्धिताः सन्धिते" इति कृत्वा योजनीयम्। ताभ्याम् अश्विभ्याम्। भिषगुत्तमौ अश्विनौ। सौत्रामण्यां सुत्रामा इन्द्रो देवता अस्य इति सौत्रामणी तस्यां तदाख्ययागभेदे। भगवान् जिष्णुः। मोदते सोमरसादिपानेन नन्दति। सोमं सोमरसम्। "प्रायः" इत्यत्र "प्रातः" इति चरकसम्मतः पाठः; तथा च चरके—"प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते" इति। सुतराम् आतिशय्येन, अन्यदेवापेक्षया इत्यर्थः; तथा च चरकः,—"इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः। स्तूयन्ते वेदवाक्येषु न तथाऽन्या हि देवताः॥" इति। वैद्यौ

अथ उपसंहारः।—

रसरत्नसमुच्चयो मयेत्थं रचितः साधु नितान्तमाद्रियन्ताम्।
सुधियो यदि विद्यतेऽत्र दोषः क्वचिदर्हन्ति ममाप्यलं विसोढुम्॥
१२८॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये
रसकल्पो नाम त्रिंशत्तमोऽध्यायः॥ ३०॥

---

चिकित्सकौ इति इति कृत्वा, इति हेतोरित्यर्थः। आदृतैः सर्वलोकपूजितैरित्यर्थः, आदरणीयैरित्यर्थौ वा। दुःखप्रायैः दुःखबहुलैः, व्याध्यादियुक्तत्वात्, अत एव सुखार्थिभिः सुखकामैः, दुःखहानाभिलाषिभिरित्यर्थः। आत्मशक्तितः सामर्थ्यानुसारेण, "आतिशक्तितः" इति चरके पाठः; किं पूज्या न स्युः? इति काकुः, अपि तु पूज्या एवेत्यर्थः॥ १२१—१२७॥

उपसंहरति, रसेति।—साधु सम्यक् यथा तथेति रचित इत्यस्य विशेषणम्। अलम् अत्यर्थम्। विसोढुं चन्तुम॥ १२८॥

इति रसरत्नसमुच्चयबोधिन्यां त्रिंशत्तमोऽध्यायः समाप्तः॥ ३०॥

